श्रीः ।

श्रीमदमरसिंहविरचितो

# नामलिङ्गानुशासनाभिधः

# अमरकोषः ।

महामहोपाध्यायपण्डित-श्रीशिवदत्तात्मज-विष्णु-
दत्तशर्मसंगृहीतया नामचन्द्रिकाख्यया व्याख्यया
विभूषितः, सटीक 'त्रिकाण्डशेष-हारावली-
द्विरूपकोषद्वय-एकाक्षरकोश' इति
कोषपञ्चकसमेतः ।

महामहोपाध्याय पं० श्रीशिवदत्तशास्त्रिमहोदयै-
र्मुहुस्संशोध्य टिप्पण्यादिभिर्योजितोऽप्य-
न्यैर्महानुभविविद्वन्महानुभावैर्बहुशः
संशोधितः ।

स चायम्

खेमराज-श्रीकृष्णदासेन

मुम्बय्याम्

स्वीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालये
मुद्रयित्वा प्राकाश्यं नीतः ।

संवत् १९८६, शके १८५१.



## म० म० पं० श्रीशिवदत्तशर्मणां संक्षिप्तपरिचयः ।

बदरीलालतनयो गोदादेव्यास्तु गर्भजः। शिवदत्तो दाधिमथस्त्यक्त्वास्मांस्त्रिदिवं गतः ॥ १ ॥
श्रीमज्जयपुराधीशविद्यानिलयरक्षिताः । विद्याः सर्वा अधीत्यैव वाचस्पतिसमप्रभः ॥ २ ॥
शब्दशास्त्रे प्रगल्भत्वं प्रातिनिध्यं च पाणिनेः। अनल्पकल्पनाजालैरभजद्गुरुसन्निधौ॥ ३ ॥
प्रसारं तत्र विद्यानां कृत्वा लब्ध्वा च गौरवम् । दुर्गाप्रसादसविधे काव्यमालाप्रकाशकः ॥४॥
स्वातन्त्र्यं तत्र लब्ध्वा यो ग्रन्थोद्धारमथाकरोत्। वेङ्कटेश्वरयन्त्रेऽपि रङ्गनाथस्य सम्मतः ॥ ५ ॥
टिप्पणीर्ग्रन्थरत्नेषु चक्रे भावपरिप्लुताः । ज्यौतिषेऽपि दृढज्ञानाच्चन्द्रसूर्योपरागयोः ॥ ६ ॥
कृत्वा च गणनां धीमानर्वाचीनविधानतः । राज्ञे माधवसिंहाय दर्शयामास दानिने ॥ ७ ॥
काशिकाटिप्पणीकर्ता भाष्यभाषणनागराट् । लवपुरे प्राच्यविद्याप्रधानाध्यापकोऽभवत्॥८॥
द्वात्रिंशद्वर्षपर्यन्तं बालांश्चक्रे सुपण्डितान् । ततः स सुयशः प्राप्य जराजीर्णकलेवरम् ॥ ९ ॥
मार्गकृष्णचतुर्दश्यां देवनद्यास्तटे शुभे। काश्यां त्यक्त्वा शाश्वतं तच्छिवसायुज्यमाप्तवान् १०

# प्रस्तावना ।

इह खलु तत्तद्भाषासु आविविक्षूणां विशेषेण तत्राधिकारमिच्छतां चोभयविधानामपि विनेयानां विदुषां च तत्तद्भाषाकोशः कियत्साहाय्यमाचरतीति नायमर्थः परोक्षः कस्याप्यक्षरजुषः । विशेषेण कोशा उपयुज्यन्ते संस्कृतभाषायाम्, संस्कृते हि तादृक् शब्दबाहुल्यं, यस्य व्यवहारानुसारी शक्तिग्रहो बहुभिरपि पुरुषायुषैरुपयुज्यमानैर्न संभवकोटिमाटीकेत । तस्मात्संस्कृतमधिजिगांसूनां संस्कृतविदुषां च पदे पदे कोशस्यावश्यकता जागर्ति, कोशबलविरहिता राजान इव विद्वांसोऽपि न विजयश्रियमधिगन्तुमलंभवेयुः । तत एव कोशस्य संस्कृतपाठचपद्धतावारम्भादेव सर्वत्र प्रचारः समुपलभ्यते । कोशेष्वपि च बहुतरशब्दसंग्राहकतया, संक्षिप्तबह्वर्थपद्यानिबद्धतया, निबन्धनपरिपाटीसौष्ठवेन, नामलिङ्गोभयानुशासनसंग्रहेण चामरसिंहरचितस्यामरकोशस्यैव सर्वत्र पठनपाठनप्रकार इत्यपि न तिरोहितम् । द्वित्रदिनान्यपि संस्कृतभाषा येन सेविता, सोऽपि मन्ये नामरकोशनाम्नाऽपरिचितः स्यात् । तेन विभिन्नाभिः पद्धतिभिर्विभिन्नेषु यन्त्रालयेषु प्रत्यब्दं शतशोऽभिनवानि संस्करणान्यमरकोशस्य यत् प्रकाश्यन्ते न तच्चित्रम् । संस्कृतभाषानिबद्धस्य कस्याप्यन्यस्य पुस्तकस्यैतावान् प्रचारः स्यादिति संदिग्धमेव ।

टीका अप्यस्य ग्रन्थस्य बह्व्यः समुपलभ्यन्ते । परं ग्रन्थविस्तरेण प्रचुरमूल्यप्राप्यतया बहुतरव्याकरणांशजटिलतया च न ता दरिद्रप्रायाणामनधिगतव्याकरणानां च विनेयानामुपकाराय संपद्यन्त इति विद्यार्थिजनोचितटीकानिबन्धनायाहं प्रावर्तिषि । यैर्निबद्धाः संपादिताश्च सर्वशास्त्रेष्वेव मुख्या ग्रन्थाः संस्कृतवाङ्मये सर्वेषामालम्बनभूताः, तेषां जगत्प्रसिद्धवैदुष्यवैभवानां परमपूज्यपितृपादानां महामहोपाध्यायश्रीशिवदत्तशास्त्रिमहानुभावानामाज्ञैव मेऽत्र प्रवृत्तौ मुख्यं बीजम् । तैरेव च संशोध्य बहुत्र सुटिप्पण्यादिभिः संयोज्य च परिष्कृतिं नीतोऽयं मम बालस्य परिश्रमः । इह नामचन्द्रिकाभिधायां व्याख्यायां रामाश्रमीत्यभिधया प्रथिता व्याख्यासुधाभिधा भानुजीदीक्षितविरचिता व्याख्यैव प्राधान्येन मयोपजीविता । प्रतिशब्दव्युत्पत्तिप्रदर्शनं तु तट्टीकान्तर्भूतं प्रारम्भे छात्राणां न तथोपयोगमावहतीति नात्र तत्संगृहीतम् । कोशव्युत्पत्तिवर्द्धनायात्र कोशान्तरसंवादा व्याख्यान्तरेभ्यः कोशान्तरेभ्यश्च बाहुल्येन संगृहीताः, येन कोशान्तरगतो विशेषोऽपि विनेयानां सुग्रहो भवेत् ।

विद्यार्थिजनोपयोगायैव चात्र सरलतासंपादने महान् प्रयत्नः कृतः । शब्दान् पृथक् पृथग् विभज्य तत्रैकादिसंख्यां च समायोज्यादर्शतल इव नामान्यत्र समुद्भासितानि ।

त्रिकाण्डशेषश्चापि परमोपयोगीत्यन्ते तथाविधः सटीक एव संनिवेशितः । ततः परं हारावल्यपि नामविभागप्रदर्शनपुरःसरमायोजिता । द्विरूपकोशद्वयैकाक्षरकोशा अपि च्छात्राणां व्युत्पत्तौ बहुतरं प्रयोजका इति तेऽप्यन्ते संगृहीताः । पुस्तकेनानेन कोशाध्येतॄणां कोशपाठकानां च यद्युपकारः स्यात्, तर्हि श्रमो मे फलेग्रहिः संपद्येत ।

अस्मिन्नेवाब्देऽस्मान् विलपतः परित्यज्य स्वःप्रयातानां तातपादानां चरणयोः कृतिरियं सश्रद्धं मयोपायनीक्रियते । अनुगृह्णन्तु परमेशितुः सायुज्यमुपगतास्त एवेमां लोकोपकृतिसंपादनायेति ।

ग्रन्थकर्तुरमरसिंहस्य देशकालजात्यादिविषये बह्वी विप्रतिपत्तिरद्यापि विदुषां प्रसरतीति विस्तरभिया तद्विचारोऽत्र भूमिकायामुपेक्षितः ।

सटीकस्यास्य प्रबन्धजातस्य प्रकाशनादिविषयकाः शाश्वतिकाः सर्वेऽधिकाराः श्रीवेङ्कटेश्वराध्यक्षेभ्य एव समर्पिताः सन्ति ।

विदुषां प्रणयाभिलाषी—

श्रीविष्णुदत्तशर्मा दाधिमथः ।



॥ श्रीदधिमथी जयति ॥

# श्रीमदमरसिंहविरचितो
## नामलिङ्गानुशासनाभिधः—
# अमरकोषः—

दाधिमथकुदालपण्डितविष्णुदत्तशर्मसंगृहीतया नामचन्द्रिकाख्यया व्याख्यया विभूषितः प्रारभ्यते ।

यत्क्षेत्रेजाता जगतीतले जना गच्छन्त्यमी दाधिमथाख्यया प्रथाम् ॥
देवैः स्तुता श्रीदधिमथ्यसंशयं सोपासकानां विजयं सदा क्रियात् ॥ १ ॥
वाराणसीयतु सदा जयपत्तनं मे विद्याविलासिभिरिदं सुमनीषिवर्यैः ॥
श्रीरामसिंहनृपमालिक इत्यवेत्य विद्यालतामवपदाहतधीरवीरः ॥ २ ॥
उप्तां तु तां समवलोक्य निजेन पित्रा विद्यालतां नृपतिमाधवसिंहवीरः ॥
संजीवनादिपरिरक्षणदत्तचित्तः संवर्धयत्यनिशमात्मयशोभिवृद्ध्यै ॥ ३ ॥
अर्जुनयशसो जिष्णोः क्षितिपतितिलकस्य यस्य धात्रैव ॥
रचितो नन्दकिशोरो नन्दकिशोरोपमः सचिवः ॥ ४ ॥
धन्वदेशे ख्यातमस्ति डीडवाणाख्यपत्तनम् । तत्तु हित्वा दाधिमथो विप्रः कुद्दालगोत्रजः ॥ ५ ॥
वंशीधरसुतो राधाकृष्णभक्तः सतां मतः । राधाकृष्णः सूर्यमल्लवासुदेवान्वितो ययौ ॥ ६ ॥
सुप्रसिद्धे जयपुरे दूणीनगरपालकम् । गोगावतं शंभुसिंहं पुत्रदर्शनलालसम् ॥ ७ ॥
पुत्रार्थं प्रार्थितस्तेन सुतं साहिबरामकम् । प्रेषयामास च प्रीतो दूणीं प्रार्थितसिद्धये ॥ ८ ॥
पुत्रेष्टिसंजातसुतः प्रहृष्टो दूणीशगोगावतशंभुसिंहः ॥
यस्मै ददौ गेहसमन्वितं सद्ग्रामत्रयाधिष्ठितभूमिभागम् ॥ ९ ॥
सानन्दरामस्तनयो बभूव साहेबरामस्य सुधीवरस्य ॥
अनन्तपादार्चनलब्धकीर्तिरनन्तविद्वत्कुलपूजिताङ्घ्रिः ॥ १० ॥

---

१ "दधिमथ्याः परं क्षेत्रं पुष्करादष्टयोजनम्" इत्युक्तेः पुष्कराद् द्वात्रिंशत्क्रोशान्तरे कौबेर्यां वर्तते ॥ २ दाधिमथशब्दस्यैव प्राकृतं नाम "दाहिमह" इति प्रसिद्धम् ॥ एतन्नाम संस्कृतमपि शत्रुचेतोदाहिमहत्वेन ॥ ३ जन इति कर्तृपदमध्याहार्यम् । तथा च "जनो लोकः सदा मे जयपत्तनं पण्डितभूयस्त्वेन वाराणसीतुल्यमाचरतु" इत्यवायनकर्म ॥ ४ संजीवनं मासिकवृत्तिदानं जलं च । संजीवनः पाठशालाध्यक्षश्च ॥ ५ नन्दकिशोरसिंहो गौडक्षत्रियः पितृपूज्यपादरामकृष्णभक्तानुनयो जयपुरमहाराजप्रधानमन्त्री ॥ ६ 'समानौ मरुधन्वानौ' इत्यमरः ॥ ७ 'सानन्दरामः' इत्यत्र 'सोऽचि लोपे चेत्—' इति सुलोपे 'स आनन्दरामः' इति च्छेदः । अयं च 'अणदराम' इति नाम्ना प्रसिद्ध आसीत् ॥

---

१ अस्मिन् क्षेत्रे १४४ ग्रामा आसन् । तन्मूलकत्वेनैव 'कुदाल-सोटवाल-गोठड़ावाल-' इत्यादयो दाधिमथावान्तरभेदाः । एतत्क्षेत्रजाताः सर्वेऽपि वर्णा 'दाहिमह—दाहिमा—दाइमा—दायमा' इति शब्दैः प्रसिद्धाः समुपलभ्यन्ते ॥

यत्कनिष्ठः सतां मान्यो युवा भ्रातृसमन्वितः । **युगलकिशोर**नामा मित्त्रोद्वाहे बहिर्गतः ॥ ११ ॥
सितौदनमभुक्त्वैव निरपत्यो दिवं गतः । यत्तृप्त्यै नः कुलेऽद्यापि भोज्यते हि सितौदनम् ॥ १२ ॥
**व्रजै**[1]**निधिपूजानिरतश्छोटेलालः** सुधीः सुतस्तस्य । विदुषः **सदासुखा**ख्यात्तथा **मनीराम**तोऽवरजः ॥ १३ ॥
जातस्तस्मात्सुधीः पुत्रो **भक्तादेव्याः** सुगर्भजः । प्रथमो **बदरी**[2]**नाथः** सुमनोवृन्दवन्दितः ॥ १४ ॥
**द्विसंधानस्य** टीकाकृद् गूढशास्त्ररहस्यवित् । पितृभक्तः सतां सेव्यः संततिभ्रातृवत्सलः ॥ १५ ॥
परो **रामकुमारा**ख्यो विद्वान्व्युत्पत्तिनिश्चलः । अनेकनगरग्रामपाठशालासु पाठकः ॥ १६ ॥
प्रथमस्य तु पत्न्यौ द्वे प्रभूते भर्तृदैवते । पूर्वा **गोदा**भिधा यस्याः कुक्षितः प्रबभूव यः ॥ १७ ॥
**शिवदत्ता**भिधो धीमान् महाभाष्यादि[3]शोधकः । सार्वभौमाल्लब्धपदैः[4] पाठशा[5]लासुपाठकः ॥ १८ ॥
**गोविन्दी**नामिकाऽन्या तु यस्यां जातः सुतोऽपरः । **गोविन्ददत्त**नामा यः काव्योपाध्यायशब्दभाक् ॥ १९ ॥
**लक्ष्मीनारा**[6]**यण**गिरेर्लाडामेनासुगर्भतः । **नानू**मेनाकभगिनी **पार्वती** या सुताऽजनि ॥ २० ॥
**शिवदत्ता**र्धदेहा सा विख्याता शास्त्रलोकयोः । विप्रान्पतिं भोजयित्वा सूर्यं[7] दृष्ट्वैव चाश्नती ॥ २१ ॥
तत्सुकुक्षिप्रभूतेन **विष्णुर्दत्तेन**[8] रच्यते । भवे[9]**दत्ता**नुजेनेयमामरे **नामचन्द्रिका** ॥ २२ ॥

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः । सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥ १ ॥**
**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः । संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥**
**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् । स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥**
**भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः । कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥**

इह खलु श्रीमान**मरसिंह**श्चिकीर्षितस्य **नामलिङ्गानुशासन**नामककोषस्य निष्प्रत्यूहपरिसमाप्तिकामनया कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थप्रारम्भे निबध्नाति—**यस्येति** ॥ 'भो अन्तेवासिनः ! युष्माभिः' इत्यध्याहार्यम् । **अगाध**स्यापारस्य **ज्ञानदयासिंधो**र्मोक्षधीकृपासागरस्य **यस्य अनघा** निर्दोषा **गुणाः** क्षमादयः सन्ति सोऽ**क्षयो** अविनाशी **धीरा** ज्ञानप्रदो विभुः परमेश्वरः **श्रिये** संपत्तये **अमृताय** मुक्तये च सेव्यताम् ॥ १ ॥ स्वकीयचिकीर्षितस्य प्रामाणिकत्वं लघुभूतत्वेनावश्यपठनीयत्वं च द्योतयन्नाह—**समाहृत्येति** ॥ **अन्यतन्त्राणि** अन्येषां तन्त्राणि प्राचीनशास्त्रान्तराणि **समाहृत्य** एकत्र संचित्य **संक्षिप्तै**र्विस्तरशून्यैः **प्रतिसंस्कृतैः** संस्कृतपर्यायैः **संपूर्णं** न्यूनताविकलं नाम्नां लिङ्गानां चानुशासनम् **उच्यते** । प्राचीनकोषेषु कुत्रचित् नाम्नामेवानुशासनम्, क्वचिल्लिङ्गानामेवानुशासनमिति न्यूनता, अत्र तूभयोरपि सहैव निर्देशान्न न्यूनतेति भावः ॥ २ ॥ अथ स्वकीयशास्त्रे लिङ्गज्ञानोपयोगिनीं परिभाषामाह—**प्रायश इति त्रिभिः** ॥ **रूपभेदेन** यथा—'आदितेया दिविषदः' इति प्रकरणे आदितेयाः इत्याकृत्या पुंस्त्वमादितेयशब्दस्य निश्चीयते । तत्साहचर्यात्तु 'दिविषद्'शब्दस्यापि पुंस्त्वं निश्चीयते । यथा वा रूपभेदेन 'दैवतानि' इत्यत्र दैवतशब्दस्य नपुंसकत्वम्, 'पुंसि वा' इति विशेषविधेः पुंस्त्वमपि निश्चीयते । अप्रसिद्धत्वादिकं स्वस्वपरिचयानुसारित्वादाग्रहग्रहदूषितमेवेति बोध्यम् ॥ आत्मभूशब्दसाहचर्याद् 'ब्रह्मन्' शब्दस्य पुंस्त्वं निश्चीयते इति न सम्यक्, अत्रापि स्त्रीत्वस्य संभवेन पुंस्त्वानिश्चयात् ॥ ३ ॥ **भेदेति** ॥ अनुक्ता[10]नां भिन्नलिङ्गानां भेदाख्यानाय 'देवतादैवतामराः'

---

१ **व्रजनिधिरिति** पूर्वतनजयपुरमहाराज—प्रतापसिंहसंस्थापितविष्णुमूर्तेर्नाम ॥ **तस्य** अणदरामस्य ॥ २ **'बदरीलाल'** इति नाम्नाऽस्य प्रसिद्धिरासीत् ॥ ३ आदिना सिद्धान्तकौमुदी—तत्त्वबोधिनी—लघुकौमुदी—वैयासिकन्यायमाला—जैमिनीयन्यायमाला—पालकाप्य—नैषधीयचारित—निर्णयसिन्ध्वादयो गृह्यन्ते ॥ ४ महामहोपाध्यायपदं सार्वभौमाद्भारतेश्वराल्लब्धं येनेत्यर्थः ॥ ५ जयपुरीयसंस्कृतपाठशालायामध्यापको भूत्वा लवपुरीयप्राच्यविद्यालये संस्कृतश्रेणौ प्रथमाध्यापकः ( Head Pandit Oriental College LAHORE ) संप्रति वर्तते ॥ ६ हिमवतो मेनकागर्भतो मेनाकभगिनी अर्धनारीश्वरक्रीडायां शिवाय दत्तोऽर्धदेहो यया तादृशी पार्वतीव लक्ष्मीनारायणत्रिपाठितो लाडादेवीगर्भतो नानूलालभगिनी शिवदत्तधर्मपत्नी पार्वतीनामिकाऽऽसीदित्यर्थः ॥ ७ भोजयित्वापि सूर्यनारायणादर्शने भोजनमकुर्वती, अर्थादुपवासमेव कुर्वती ॥ ८ रेवारीनामकनगरीयपाठशाला ( Govt. High School REWARI ) ध्यापकेन लब्धशास्त्रिडिप्लोमापदकेन ॥ ९ लब्धशास्त्रिडिप्लोमापदकस्य अजयमेरुनगरीयप्रधानपाठशाला ( Govt. Callage AJMER ) ध्यापकस्यानुजेन ॥ १० अनुक्तानामिति । स्वस्वपर्यायेष्वित्यादिः ॥

त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति । निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥५॥
स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥६॥
अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः । सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥
आदितेया दिविषदो लेखा अदितिनन्दनाः । आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ८
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः । वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥९॥
आदित्यविश्ववसवस्तुषिताभास्वरानिलाः । महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥

इत्येवं द्वन्द्वो न कृतः । 'ओकः सद्माश्रयश्चौकाः' इत्यत्र 'मातापितरौ पितरौ' इत्यादावेकशेषो न कृतः ॥ 'खं नभः श्रावणो नभाः' इत्येकशेषाभावोदाहरणं त्वयुक्तमेव, 'नभोऽन्तरिक्षं गगनम्' इत्यत्रान्तरिक्षपर्याये साहचर्यान्नपुंसकत्वस्य 'नभाः श्रावणिकश्च सः' इत्यत्र श्रावणपर्याये रूपभेदेन पुंस्त्वस्योक्तत्वेनानुक्तत्वाभावात् ॥ समानलिङ्गेषु तु क्वचित् कृतौ यथा, 'स्वर्गनाकत्रिदिवत्रिदशालयाः', 'पादा रश्म्यङ्घ्रितुर्यांशाः' । क्वचित्तु न कृतः । यथा—पयः क्षीरं पयोऽम्बु च' इति ॥ एतेन समानलिङ्गानां तु कृतावेवेति परास्तम् ॥ * संकरो नाम भिन्नलिङ्गानां मिश्रतारूपः क्रमादृते क्रमं विना नैव कृतः—'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यस्य स्थाने 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति स्तुतिनुत्योर्मध्ये भिन्नलिङ्गयोः स्तोत्रस्तवयोरुपादानरूपं मिश्रणं न कृतम् ॥ ४ ॥ त्रिलिङ्ग्यामिति ॥ 'त्रिषु' इति पदसत्त्वे संनिहितं लिङ्गत्रयेऽप्युदाहार्यम् । 'द्वयोः' इति सत्त्वे संनिहितं पुंसि स्त्रियां चोदाहार्यम्, न क्लीबे ॥ यस्य लिङ्गस्य निषेधः क्रियते यथा 'वज्रमस्त्री' इति स्त्रीलिङ्गप्रतिषेधेन वज्रशब्दस्य पुंसि क्लीबे च प्रयोगो, न स्त्रियाम् ॥ त्वन्तं तुशब्दान्तम्, अथशब्दादि च पदं पूर्वेण न योजनीयम्, किंतूत्तरेणैव । यथा 'व्यवधा पुंसि त्वन्तर्धिः' इत्यत्र त्वन्तं 'पुंसि' इति पदमुत्तरेण 'अन्तर्धि' शब्देनैवान्वेति । एवम् 'अनुक्रोशोऽप्यथो हसः' इत्यत्र हसशब्दस्याथादित्वेन नानुक्रोशपर्यायतेति दिक् ॥ ५ ॥ स्वरिति ॥ संज्ञाशब्देषु रूढेरवश्याङ्गीकारेण 'रूढिर्योगापहारिणी' इति सिद्धान्ते व्युत्पत्तिर्नावश्यकी ॥ स्वरादि (१।१।३७) पाठादव्ययत्वम् ॥ "स्वः प्रेत्य व्योम्नि नाके च" (१) ॥ स्वर्गः (२) ॥ "नाकस्तु त्रिदिवेऽम्बरे" (३) ॥ "त्रिदिवं तु खे । स्वर्गे च त्रिदिवा नद्याम्" इति दर्शनात् क्लीबेऽपि (४) ॥ त्रिदशालयः (५) ॥ सुरलोकः (६) ॥ सुरसद्मादीनामप्युपलक्षणमेतत् ॥ एवं यौगिकेषु सर्वत्रोह्येयम् ॥ द्यौः गोवत् ॥ "द्यौस्तु स्वर्गविहायसोः" (७) ॥ द्यौः, दिवौ, दिवः, द्युभ्याम्, "द्यौः स्वर्गनभसोः" । "द्यौः स्त्री स्वर्गे च गगने दिवं क्लीबं तयोः स्मृतम्" (८) ॥ त्रिविष्टपम् (९) ॥ नव नामानि स्वर्गस्य ॥ ६ ॥ अमरा इति ॥ "अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे । स्त्री गुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु" (१) ॥ "निर्जरः स्यात्पुमान्देवे जरात्यक्ते च वाच्यवत् । निर्जरा तु गुडूच्यां च ताल्पर्ण्यामपि स्त्रियाम्" (२) ॥ "देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये । देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि" (३) ॥ त्रिदशाः (४) ॥ "विबुधो ज्ञे सुरे" (५) ॥ "सुरा चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्" (६) ॥ "सुपर्वा ना शरे वंशे पर्वधूमसुरेषु च" (७) ॥ "सुमनाः पुष्पमालत्योः स्त्रियां, ना धीरदेवयोः" (८) ॥ त्रिदिवेशाः (९) ॥ "स्याद्दिवौका दिवोकाश्च देवे चापीह पक्षिणि" इति रन्तिदेवः ॥ "दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके" ॥ (१०) ॥ ७ ॥ आदितेयाः (११) ॥ दिविषदः ॥ 'द्युसदः' अपि ॥ "मनःसु येन द्युसदां न्यधीयत" इति माघः (१२) ॥ "लेखो लेख्ये सुरे लेखा लिपिराजिकयोर्मता" (१३) ॥ अदितिनन्दनाः (१४) ॥ "आदित्यो भास्करे देवे" (१५) ॥ ऋभवः ॥ 'ऋभुवः' अपि—इत्यन्ये (१६) ॥ अस्वप्नाः (१७) ॥ अमर्त्याः (१८) ॥ अमृतान्धसः (१९) ॥ ८ ॥ बर्हिर्मुखाः (२०) ॥ क्रतुभुजः (२१) ॥ गीर्वाणाः ॥ गीर्वाणा अपि (२२) ॥ दानवारयः (२३) ॥ "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" (२४) ॥ दैवतानि रूपभेदात् क्लीबत्वम् । विशेषविधिः पुंस्त्वमपि (२५) ॥ देवताः स्त्रियाम् (२६) ॥ षड्विंशतिर्नामानि देवसामान्यस्य ॥ ९ ॥ ॥ आदित्यादयः प्रत्येकं गणदेवताः समुदायचारिण्यो देवताः ॥ "आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः । वसवश्चाष्ट संख्याताः षट्त्रिंशत्तुषिता

---

* एवं च 'समानलिङ्गानामेव स्वस्वपर्यायेषूक्तानामेव कृतः' इति पारिसंख्यफलितरूपेणैव व्याख्यानमवसेयम् ।

यत्कनिष्ठः सतां मान्यो युवा भ्रातृसमन्वितः । **युगलकिशोर**नामा मित्त्रोद्वाहे बहिर्गतः ॥ ११ ॥
सितौदनमभुक्त्वैव निरपत्यो दिवं गतः । यत्तृप्त्यै नः कुलेऽद्यापि भोज्यते हि सितौदनम् ॥ १२ ॥
**ब्रजनिधि**पूजानिरत**श्छोटेलाल:** सुधीः सुतस्तस्य । विदुषः **सदासुखा**ख्यात्तथा **मनीराम**तोऽवरजः ॥१३॥
जातस्तस्मात्सुधीः पुत्रो **भक्ता**देव्याः सुगर्भजः । प्रथमो **बदरीनाथः**[2] सुमनोवृन्दवन्दितः ॥ १४ ॥
**द्विसंधानस्य** टीकाकृद् गूढशास्त्ररहस्यवित् । पितृभक्तः सतां सेव्यः संततिभ्रातृवत्सलः ॥ १५ ॥
परो **रामकुमारा**ख्यो विद्वान्व्युत्पत्तिनिश्चलः । अनेकनगरग्रामपाठशालासु पाठकः ॥ १६ ॥
प्रथमस्य तु पत्न्यौ द्वे प्रभूते भर्तृदैवते । पूर्वा **गोदा**भिधा यस्याः कुक्षितः प्रबभूव यः ॥ १७ ॥
**शिवदत्ता**भिधो धीमान् महाभाष्यादिशोधकः[3] । सार्वभौमाल्लब्धपदैः[4] पाठशौलासुपाठकः ॥ १८ ॥
**गोविन्दी**नामिकाऽन्या तु यस्यां जातः सुतोऽपरः । **गोविन्ददत्त**नामा यः काव्योपाध्यायशब्दभाक् ॥ १९ ॥
**लक्ष्मीनारायण**[6]गिरेर्लाडामेनासुगर्भतः । **नानू**मेनाकभगिनी **पार्वती** या सुताऽजनि ॥ २० ॥
**शिवदत्तार्ध**देहा सा विख्याता शास्त्रलोकयोः । विप्रान्पातिं भोजयित्वा सूर्यं दृष्ट्वैव चाश्नती ॥ २१ ॥
तत्सुकुक्षिप्रभूतेन **विष्णुदत्तेन** रच्यते । **भवदत्तानुजे**नेयमामरे **नामचन्द्रिका** ॥ २२ ॥

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः । सेव्यतामक्षयो धीराः स श्रिये चामृताय च॥१॥**
**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः । संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥**
**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् । स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥ ३ ॥**
**भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः । कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥४॥**

इह खलु श्रीमानमरसिंहश्चिकीर्षितस्य **नामलिङ्गानुशासन**नामककोषस्य निष्प्रत्यूहपरिसमाप्तिकामनया कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थप्रारम्भे निबध्नाति-**यस्येति** ॥ 'भो अन्तेवासिनः ! युष्माभिः' इत्यध्याहार्यम् । **अगाधस्या**पारस्य **ज्ञानदयासिंधो**र्मोक्षधीकृपासागरस्य **यस्य अनघा** निर्दोषा **गुणाः** क्षमादयः सन्ति सो**ऽक्षयो** अविनाशी **धीरा** ज्ञानप्रदो विभुः परमेश्वरः **श्रिये** संपत्तये **अमृताय** मुक्तये च सेव्यताम् ॥ १ ॥ स्वकीयचिकीर्षितस्य प्रामाणिकत्वं लघुभूतत्वेनावश्यपठनीयत्वं च द्योतयन्नाह-**समाहृत्येति** ॥ **अन्यतन्त्राणि** अन्येषां तन्त्राणि प्राचीनशास्त्रान्तराणि **समाहृत्य** एकत्र संचित्य **संक्षिप्तै**र्विस्तरशून्यैः **प्रतिसंस्कृतैः** संस्कृतपर्यायैः **संपूर्ण** न्यूनताविकलं नाम्नां लिङ्गानां चानुशासनम् **उच्यते** । प्राचीनकोषेषु कुत्रचित् नाम्नामेवानुशासनम्, क्वचिल्लिङ्गानामेवानुशासनमिति न्यूनता, अत्र तूभयोरपि सहैव निर्देशान्न न्यूनतेति भावः ॥ २ ॥ अथ स्वकीयशास्त्रे लिङ्गज्ञानोपयोगिनीं परिभाषामाह-**प्रायश इति त्रिभिः** ॥ **रूपभेदेन** यथा-'आदितेया दिविषदः' इति प्रकरणे आदितेयाः इत्याकृत्या पुंस्त्वमादितेयशब्दस्य निश्चीयते । तत्साहचर्यात्तु 'दिविषद्'शब्दस्यापि पुंस्त्वं निश्चीयते । यथा वा रूपभेदेन 'दैवतानि' इत्यत्र दैवतशब्दस्य नपुंसकत्वम्, 'पुंसि वा' इति विशेषविधेः पुंस्त्वमपि निश्चीयते । अप्रसिद्धत्वादिकं स्वस्वपरिचयानुसारित्वादाग्रहग्रहदूषितमेवेति बोध्यम् ॥ आत्मभूशब्दसाहचर्याद् 'ब्रह्मन्' शब्दस्य पुंस्त्वं निश्चीयते इति न सम्यक्, अत्रापि क्लीत्वस्य संभवेन पुंस्त्वानिश्चयात् ॥ ३ ॥ **भेदेति** ॥ अनुक्तानां भिन्नलिङ्गानां भेदाख्यानाय 'देवतादैवतामराः'

---

१ **ब्रजनिधिरिति** पूर्वतनजयपुरमहाराज-प्रतापसिंहसंस्थापितविष्णुमूर्तेर्नाम ॥ **तस्य** अणदरामस्य ॥ २ **'बदरीलाल'** इति नाम्नाऽस्य प्रसिद्धिरासीत् ॥ ३ आदिना सिद्धान्तकौमुदी-तत्त्वबोधिनी-लघुकौमुदी-वैयासिकन्यायमाला-जैमिनीयन्यायमाला-पालकाप्य-नैषधीयचरित-निर्णयसिन्ध्वादयो गृह्यन्ते ॥ ४ महामहोपाध्यायपदं सार्वभौमाद्भारतेश्वराल्लब्धं येनेत्यर्थः ॥ ५ जयपुरीयसंस्कृतपाठशालायामध्यापको भूत्वा लवपुरीयप्राच्यविद्यालये संस्कृतश्रेणौ प्रथमाध्यापकः ( Head Pandit Oriental College LAHORE ) संप्रति वर्तते ॥ ६ हिमवतो मेनकागर्भतो मेनाकभगिनी अर्धनारीश्वरक्रीडायां शिवाय दत्तोऽर्धदेहो यया तादृशी पार्वतीव लक्ष्मीनारायणत्रिपाठितो लाडादेवीगर्भतो नानूलालभगिनी शिवदत्तधर्मपत्नी पार्वतीनामिकाऽऽसीदित्यर्थः ॥ ७ भोजयित्वापि सूर्यनारायणादर्शने भोजनमकुर्वती, अर्थादुपवासमेव कुर्वती ॥ ८ रेवारीनामकनगरीयपाठशाला ( Govt. High School REWARI ) ध्यापकेन लब्धशास्त्रिडिप्लोमापदकेन ॥ ९ लब्धशास्त्रिडिप्लोमापदकस्य अजयमेरुनगरीयप्रधानपाठशाला ( Govt. Callage AJMER ) ध्यापकस्यानुजेन ॥ १० अनुक्तानामिति । स्वस्वपर्यायेष्वित्यादिः ॥

**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति । निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥५॥**
**स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥६॥**
**अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः । सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥**
**आदितेया दिविषदो लेखा अदितिनन्दनाः । आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ८**
**बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः । वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥९॥**
**आदित्यविश्ववसवस्तुषिताभास्वरानिलाः । महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥**

इत्येवं द्वन्द्वो न कृतः । 'ओकः सद्माश्रयश्चौकाः' इत्यत्र 'मातापितरौ पितरौ' इत्यादावविवेकशेषो न कृतः ॥ 'खं **नभः** श्रावणो **नभाः**' इत्येकशेषाभावोदाहरणं त्वयुक्तमेव, ' नभोऽन्तरिक्षं गगनम् ' इत्यत्रान्तरिक्षपर्याये साहचर्यान्नपुंसकत्वस्य 'नभाः श्रावणिकश्च सः' इत्यत्र श्रावणपर्याये रूपभेदेन पुंस्त्वस्योक्तत्वेनानुक्तत्वाभावात् ॥ समानलिङ्गेषु तु क्वचित् कृतौ यथा, 'स्वर्गनाकत्रिदिवत्रिदशालयाः', 'पादा रश्म्यङ्घ्रितुर्यांशाः' । क्वचित्तु न कृतः । यथा—**पयः** क्षीरं पयोऽम्बु च' इति ॥ एतेन समानलिङ्गानां तु कृतावेवेति परास्तम् ॥ * **संकरो** नाम भिन्नलिङ्गानां मिश्रतारूपः क्रमादृते क्रमं विना नैव कृतः—'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यस्य स्थाने 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति स्तुतिनुत्योर्मध्ये भिन्नलिङ्गयोः स्तोत्रस्तवयोरुपादानरूपं मिश्रणं न कृतम् ॥ ४ ॥ **त्रिलिङ्ग्यामिति** ॥ **'त्रिषु'** इति पदसत्त्वे संनिहितं लिङ्गत्रयेऽप्युदाहार्यम् । **'द्वयोः'** इति सत्त्वे संनिहितं पुंसि स्त्रियां चोदाहार्यम्, न क्लीबे ॥ यस्य लिङ्गस्य निषेधः क्रियते यथा 'वज्रमस्त्री' इति स्त्रीलिङ्गप्रतिषेधेन वज्रशब्दस्य पुंसि क्लीबे च प्रयोगो, न स्त्रियाम् ॥ त्वन्तं तुशब्दान्तम्, **अथ**शब्दादि च पदं **पूर्वेण** न योजनीयम्, किंतूत्तरेणैव । यथा '**व्यवधा पुंसि** त्वन्तर्धिः' इत्यत्र त्वन्तं 'पुंसि' इति पदमुत्तरेण 'अन्तर्धि' शब्देनैवान्वेति । एवम् 'अनुक्रोशोऽप्यथो हसः' इत्यत्र हसशब्दस्याथादित्वेन नानुक्रोशपर्यायतेति दिक् ॥ ५ ॥ **स्वरिति** ॥ संज्ञाशब्देषु रूढेरवश्याङ्गीकारेण 'रूढिर्योगापहारिणी' इति सिद्धान्ते व्युत्पत्तिर्नावश्यकी ॥ स्वरादि (१।१।३७) पाठादव्ययत्वम् ॥ **"स्वः प्रेत्य व्योम्नि नाके च"** ( १ ) ॥ स्वर्गः ( २ ) ॥ **"नाकस्तु** त्रिदिवेऽम्बरे" ( ३ ) ॥ " **त्रिदिवं** तु खे । स्वर्गे च **त्रिदिवा** नद्याम् " इति दर्शनात् क्लीबेऽपि ( ४ ) ॥ त्रिदशालयः ( ५ ) ॥ सुरलोकः ( ६ ) ॥ सुरसद्मादीनामप्युपलक्षणमेतत् ॥ एवं यौगिकेषु सर्वत्रोन्नेयम् ॥ द्यौः गोवत् ॥ "द्यौस्तु स्वर्गविहायसोः" ( ७ ) ॥ द्यौः, दिवौ, दिवः, द्युभ्याम्, **"द्यौः** स्वर्गनभसोः" । **"द्यौः** स्त्री स्वर्गे च गगने **दिवं** क्लीबं तयोः स्मृतम्" ( ८ ) ॥ त्रिविष्टपम् ( ९ ) ॥ **नव नामानि स्वर्गस्य** ॥ ६ ॥ **अमरा** इति ॥ " **अमर**स्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे । स्त्री गुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु " ( १ ) ॥ **"निर्जरः** स्यात्पुमान्देवे जरात्यक्ते च वाच्यवत् । **निर्जरा** तु गुडूच्यां च ताल्पण्यामपि स्त्रियाम्" ( २ ) ॥ " **देवः** सुरे घने राज्ञि **देव**माख्यातमिन्द्रिये । **देवी** कृताभिषेकायां तेजनीस्पृक्कयोरपि " ( ३ ) ॥ त्रिदशाः ( ४ ) ॥ " **विबुधो** ज्ञे सुरे " ( ५ ) ॥ " **सुरा** चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात् " ( ६ ) ॥ "**सुपर्वा** ना शरे वंशे पर्वधूमसुरेषु च " ( ७ ) ॥ " **सुमनाः** पुष्पमालत्योः स्त्रियां, ना धीरदेवयोः " ( ८ ) ॥ त्रिदिवेशाः ( ९ ) ॥ **"स्याद्दिवौका दिवोकाश्च** देवे चापीह पक्षिणि" इति रन्तिदेवः ॥ **"दिवोकाश्च दिवौकाश्च** पुंसि देवे च चातके " ॥ (१०) ॥ ७ ॥ आदितेयाः ( ११ ) ॥ दिविषदः ॥ ' द्युसदः ' अपि ॥ " मनःसु येन द्युसदां न्यधीयत " इति माघः ( १२ ) ॥ " **लेखो** लेख्ये सुरे **लेखा** लिपिराजिकयोर्मता " ( १३ ) ॥ अदितिनन्दनाः ( १४ ) ॥ "**आदित्यो** भास्करे देवे" ( १५ ) ॥ ऋभवः ॥ 'ऋभुवः' अपि—इत्यन्ये ( १६ ) ॥ अस्वप्नाः ( १७ ) ॥ अमर्त्याः ( १८ ) ॥ अमृतान्धसः ( १९ ) ॥ ८ ॥ बर्हिर्मुखाः ( २० ) ॥ क्रतुभुजः ( २१ ) ॥ गीर्वाणाः ॥ गीर्वाणा अपि ( २२ ) ॥ दानवारयः ( २३ ) ॥ "**वृन्दारकः** सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" ( २४ ) ॥ दैवतानि रूपभेदात् क्लीबत्वम् । विशेषविधेः पुंस्त्वमपि ( २५ ) ॥ देवताः स्त्रियाम् ( २६ ) ॥ षड्विंशतिर्नामानि **देवसामान्यस्य** ॥ ९ ॥ ॥ आदित्यादयः प्रत्येकं गणदेवताः समुदायचारिण्यो देवताः ॥ "**आदित्या** द्वादश प्रोक्ता **विश्वे देवा** दश स्मृताः । **वसव**श्चाष्ट संख्याताः षट्त्रिंशत्तुषित

---

* एवं च 'समानलिङ्गानामेव स्वस्वपर्यायेषूक्तानामेव कृतः' इति परिसंख्याफलितरूपेणैव व्याख्यानमवसेयम् ।

विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिंनराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११॥
असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः । शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥
सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः । समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥ १३ ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः । मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिस्तु यः ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः । गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः॥ १५॥
ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः । हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ॥ १६ ॥
धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः । स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः १७॥
विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः । दामोदरो हृषीकेशः केशवो माधवः स्वभूः १८॥

मताः ॥ आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः ॥ महाराजिकनामानो द्वे शते विंशतिस्तथा ॥ साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः॥" 'माहाराजिक' इति पाठोपि ॥१०॥ ॥ अमी विद्याधरादयो दश देवा योनिर्येषां ते देवयोनयो देवांशका इत्यर्थः ॥ ११ ॥ ॥ असुरा इति ॥ "असुरः सूर्यदैत्ययोः ॥ असुरा रजनीवास्योः" 'आसुराश्च' ( १ ) ॥ "दैत्योऽसुरे मुरायां तु दैत्या चण्डौषधावपि" ( २ ) ॥ दैतेयाः ( ३ ) ॥ दनुजाः ( ४ )॥ इन्द्रारयः ( ५ ) ॥ दानवाः ( ६ ) ॥ शुक्रशिष्याः ( ७ )॥ दितिसुताः ( ८ )॥ पूर्वदेवाः ( ९ )॥ सुरद्विषः ( १० ) ॥ यद्यपि पातालवासित्वेन पातालवर्गे वक्तुं युक्ताः, तथापि देवविरोधित्वेन बुद्ध्युपारोहादिहैवोक्ताः ॥ दश नामान्यसुराणाम् ॥ १२ ॥ ॥ "सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शंकरेऽपि च ॥" ( १ )॥ सुगतः ( २ ) ॥ बुद्धः ॥ 'बुधः' अपि "सर्वज्ञः सुगतो बुधः" इति व्याडिः ( ३ )॥ धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्" ( ४ ) ॥ तथागतः ( ५ ) ॥ समन्तभद्रः ( ६ ) ॥ भगवान ( ७ ) ॥ मारजित् ( ८ ) ॥ लोकजित् ( ९ ) ॥ "जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु ॥" ( १० )॥ १३ ॥ ॥ दिव्यं चक्षुः श्रोत्रम्, परचित्तज्ञानम्, पूर्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्गमनम्, कायव्यूहसिद्धिश्चेति षट् अभितो ज्ञायमानानि यस्य स 'षडभिज्ञः' षट्सु दानशीलक्षान्तिवीर्यध्यानप्रज्ञासु अभिज्ञा आद्यं ज्ञानमस्येति वा ( ११ )॥ "दानं शीलं क्षमा वीर्यं ध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै" इति दश बलान्यस्य 'दशबलः' ( १२ ) ॥ अद्वयवादी ( १३ )॥ "विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" ( १४ ) ॥ मुनीन्द्रः ( १५ ) ॥ श्रीघनः ( १६ ) ॥ "शास्ता समन्तभद्रे ना शासके पुनरन्यवत्" ( १७ ) ॥ "मुनिर्वाचंयमेऽर्हति । प्रियालागस्तिपालाशे" ( १८ ) ॥ अष्टादश नामानि बुद्धस्य ॥ ॥ शाक्येत्यादि ॥ शाक्यमुनिः ( १ ) ॥ १४ ॥ शाक्यसिंहः ॥ भीमवत् 'शाक्यः' अपि ( २ ) ॥ सर्वार्थसिद्धः ॥ 'सिद्धार्थः' अपि ॥ "सिद्धार्थौ बुद्धसर्षपौ" इति शाश्वतः ( ३ ) ॥ शौद्धोदनिः ( ४ ) ॥ "गौतमो गणभृद्भेदे शाक्यसिंहर्षिभेदयोः । गौतम्युमायां रोचन्याम्" ( ५ ) ॥ अर्कबन्धुः ( ६ ) ॥ मायादेवीसुतः ( ७ ) ॥ यद्यपि वेदविरुद्धार्थानुष्ठातृत्वाज्जिनशाक्यौ नरकवर्गे वक्तुमुचितौ । तथापि देवविरोधित्वेन बुद्ध्युपारोहादत्रैवोक्तौ ॥ सप्तशाक्यस्य ॥ १५ ॥ ॥ ब्रह्मेत्यादि ॥ "ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे चाध्यात्मज्ञानयोस्तथा" ( १ ) ॥ "आत्मभूर्ना विधौ कामे" ( २ )॥ सुरज्येष्ठः ॥ ( ३ ) ॥ परमेष्ठी ( ४ ) ॥ "पितामहः पद्मयोनौ जनके जनकस्य च" ( ५ ) ॥ हिरण्यगर्भः ( ६ ) ॥ लोकेशः ( ७ ) ॥ स्वयंभूः ( ८ ) ॥ चतुराननः ( ९ ) ॥ १६ ॥ "धाता वेधसि पालके" ॥ ( १० )॥ अब्जयोनिः ( ११ ) ॥ द्रुहिणः ॥ 'द्रुघणः' द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे" ( १२ )॥ विरिञ्चिः ॥ 'विरञ्चिः' अपि ॥ 'विरिञ्चः' अपि ( १३ ) ॥ कमलासनः ( १४ ) ॥ स्रष्टा ( १५ )॥ "प्रजापतिर्ना दक्षादौ महीपाले विधातरि" ॥ "प्रजापतिर्ब्रह्मराजोर्जामातरि दिवाकरे । वह्नौ त्वष्टरि दक्षादौ ॥" ( १६ )॥ "वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि" ( १७ ) ॥ "विधाता द्रुहिणे कामे" ( १८ ) ॥ विश्वसृड् ( १९ )॥ "विधिर्ब्रह्मविधानयोः । विधिर्वाक्ये च दैवे च प्रकारे कालकल्पयोः" ( २० ) ॥ विंशतिर्नामानि ब्रह्मणः ॥ १७ ॥ ॥ विष्णुरित्यादि ॥ विष्णुः ( १ ) ॥ "नारायणस्तु केशवे । नारायणी

दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः। पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः । पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः। वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१॥
विश्वंभरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः। वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२ ॥
बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः। रेवतीरमणो रामः कामपालो हलायुधः॥ २३ ॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली। संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः॥
मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः। कंदर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥२५॥

शतावर्युमा श्रीः" ॥ **'नरायणः'** अपि ( २ )॥ "**कृष्णः** सत्यवतीपुत्रे वायसे केशवेऽर्जुने। **कृष्णा** स्याद् द्रौपदी नीली पिप्पलीद्राक्षयोरपि मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः" ( ३ ) ॥ "**वैकुण्ठो** वासवे विष्णौ" ॥ ( ४ )॥ विष्टरश्रवाः ( ५ ) ॥ दामोदरः ( ६ ) ॥ हृषीकेशः ( ७ ) ॥ "**केशवो**ऽजे च पुंनागे पुंसि, केशवति त्रिषु" ( ८ )॥ "**माधवो**ऽजे मधौ राधे माधवे ना, स्त्रियां मिसौ, । मधुशर्करावासन्तीकुट्टनीमदिरासु च" ( ९ )॥ "**स्वभूर्ना** ब्रह्मणि हरौ" ( १० ) ॥ १८ ॥ "**दैत्यारिः** पुंसि सामान्यदेवे च गरुडध्वजे" ( ११ ) ॥ पुण्डरीकाक्षः ( १२ ) ॥ "**गोविन्दो** वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ" ( १३ ) ॥ गरुडध्वजः ( १४ )॥ "**पीताम्बरस्तु** शैलूषे पुंसि कैटभसूदने" ( १५ )॥ "**अच्युतस्तु** हरौ पुंसि त्रिषु स्थिते" ( १६ )॥ शार्ङ्गी ( १७ )॥ "**विष्वक्सेना** फलिन्यां स्यात् **विष्वक्सेनो** जनार्दने" ( १८ )॥ जनार्दनः ॥ ( १९ )॥ १९ ॥ उपेन्द्रः ( २० )॥ इन्द्रावरजः ( २१ )॥ चक्रपाणिः (२२) ॥ चतुर्भुजः (२३) ॥ पद्मनाभः ( २४ )॥ मधुरिपुः (२५) ॥ वासुदेवः (२६) ॥ त्रिविक्रमः (२७) ॥२०॥ देवकीनन्दनः॥ **'दैवकीनन्दनः'** अपि ( २८ )॥ शौरिः ॥ **'सौरिः'** अपि ( २९ )॥ "**श्रीपतिर्विष्णुभूपयोः**" ( ३० ) ॥ पुरुषोत्तमः ( ३१ )॥ "**वनमाली** तु गोविन्दे वाराह्यां **वनमालिनी**" ( ३२ ) ॥ बलिध्वंसी (३३)॥ कंसारातिः ( ३४ )॥ अधोक्षजः॥ ( ३५ )॥ २१ ॥ "**विश्वंभरो**ऽच्युते शक्रे पुंसि, **विश्वंभरा** भुवि" ( ३६ ) ॥ कैटभजित् ( ३७ )॥ "**विधुश्चन्द्रे**ऽच्युते" ( ३८ )॥ श्रीवत्सलाञ्छनः ॥ **'श्रीवत्सः'** अपि ( ३९ ) ॥ **ऊनचत्वारिंशन्नामानि विष्णोः** ॥ ॥ **वसुदेव इत्यादि** ॥ वसुदेवः ( १ )॥ आनकदुन्दुभिः वसुदेवजन्मनि देवैरानकदुन्दुभिवादनात्॥ ( २ ) ॥ विष्णुनामसु कृष्णनामोपगमात्कृष्णस्यैव विष्णुत्वमभिप्रैति ग्रन्थकृत् ॥ अवतारान्तराणां तु तदंशत्वात्तन्नामानि नोक्तानि॥ "**एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्**" इति वदतो व्यासस्याप्ययमाशयो लभ्यते॥ **द्वे कृष्णपितुः** ॥ २२ ॥ ॥ **बलभद्र इत्यादि** ॥ "**बलभद्रा** त्रायमाणाकुमार्योः, पुंसि सीरिणि" "**बलभद्रस्त्वनन्ते** बलशालिनि" ( १ ) ॥ प्रलम्बघ्नः ( २ ) ॥ "**बलदेवो** बले वाते त्रायमाणौषधौ स्त्रियाम्" ( ३ )॥ अच्युताग्रजः ( ४ ) ॥ रेवतीरमणः ( ५ ) ॥ "**रामा** योषा हिङ्गुनद्योः क्लीवं वास्तुककुष्ठयोः ॥ ना राघवे च वरुणे रैणुकेये हलायुधे ॥ हये च पशुभेदे च, त्रिषु चारौ सितेऽसिते" ( ६ )॥ कामपालः ( ७ )॥ हलायुधः ( ८ ) ॥ २३ ॥ "**नीलाम्बरो** रौहिणेये कोणपे च शनैश्चरे" ( ९ )॥ "**रौहिणेयो**ऽन्यवद्वत्से ना बुधे च हलायुधे" ( १० )॥ "**तालाङ्कः** करपत्रे स्याच्छाकभेदेऽच्युताग्रजे। महालक्षणसंपन्नपुरुषे पुस्तके हरे" ( ११ ) ॥ मुसली ॥ मूर्धन्यमध्योऽपीत्येके ( १२ )॥ "**हली** कृषकसीरिणोः" ( १३ ) ॥ संकर्षणः ॥ ( १४ )॥ सीरपाणिः ( १५ )॥ कालिन्दीभेदनः ( १६ )॥ "**बलं** गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान्हलायुधे दैत्यप्रभेदे वायसेऽपि च" ( १७ ) ॥ **सप्तदश नामानि बलभद्रस्य** ॥ २४ ॥ ॥ **मदन इत्यादि** ॥ "**मदनः** सिक्थके स्मरे । राढे वसन्ते धत्तूरे" ( १ )॥ "**मन्मथः** कामचिन्तायां कपित्थे कुसुमायुधे" ( २ )॥ "**मारो**ऽनङ्गे मृतौ विघ्ने **मारी** चण्ड्यां जनक्षये" ( ३ ) ॥ प्रद्युम्नः ( ४ ) ॥ मीनकेतनः ( ५ ) ॥ कंदर्पः ( ६ ) ॥ दर्पकः ( ७ )॥ "**अनङ्गो** मदनेऽनङ्गमाकाशमनसोरपि" ( ८ ) ॥ "**कामः** स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" ( ९ ) ॥ "उन्मादनस्तापनश्च

**सम्बरारिर्मनसिजः कुसुमेषुरनन्यजः । पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥ ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः । लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥२७॥ शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः । कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः २८ गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः । नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥ शंभुरीशः पशुपतिः शिवः शूली महेश्वरः । ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ॥ ३० ॥**

शोषणः स्तम्भनस्तथा । संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः" ॥ पञ्चशरः ( १० ) ॥ स्मरः ( ११ ) ॥ ॥ २५ ॥ ॥ संवरारिः ॥ "क्लीवं तु **संवरं** नीवौ बौद्धव्रतविशेषयोः । विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्य च" इति दन्त्यादौ रभसः ॥ "**शंबरं** सलिले पुंसि मृगदैत्यविशेषयोः" इति तालव्यादौ मेदिनीकारात् तालव्यादिरपि ॥ ( १२ ) ॥ मनसिजः ॥ लुकि तु "**मनोजः**" ( १३ ) ॥ कुसुमेषुः ( १४ ) ॥ अनन्यजः ( १५ ) ॥ पुष्पधन्वा ॥ '**पुष्पधनुः**' अपि ( १६ ) ॥ रतिपतिः ( १७ ) ॥ मकरध्वजः ( १८ ) ॥ आत्मभूः ॥ ( १९ ) ॥२६॥ ब्रह्मसूः ( २० ) ॥ विश्वकेतुः " पताकायां द्युतौ **केतुर्ग्रहोत्पातादिलक्ष्मसु** " इति रभसः ॥ "खड्गायुधोऽनिरुद्धः स्यात्तथा चैवर्श्यकेतनः" इत्युक्तेः '**ऋश्यकेतुः**' अपि । ऋश्यो मृगविशेषः । "**एणः कुरङ्गमो रिश्यः स्यादृश्यश्चारुलोचनः**" इति पुरुषोत्तमात् ( २१ ) ॥ "**आत्मभूर्ब्रह्मसूः कामः**" इत्यमरमालादर्शनादिदं द्वयं कामस्य ॥ "अनिरुद्धो विश्वकेतुर्ब्रह्मसूरप्युषापतिः" इति । "ब्रह्मसूस्त्वनिरुद्धः स्यात्" इति च बृहदमरशब्दार्णवाभ्याम्, "ब्रह्मसूर्विश्वकेतुश्च **विश्वक्सेनात्मजात्मजः**" इति भागुरेश्च ब्रह्मस्वादिचतुष्टयमनिरुद्धस्येत्यन्ये ॥ **एकविंशतिः कामस्य** ॥ ॥ **अनिरुद्ध इत्यादि** ॥ अनिरुद्धः ॥ ( १ ) ॥ उषापतिः ॥ "**ऊषा** बाणस्य पुत्री स्यादनिरुद्धगृहिण्युषा" इत्यजयात् '**ऊषापतिः**' दीर्घादिरपि ॥ (२) ॥ **द्वे अनिरुद्धस्य** ॥ ॥ **लक्ष्मीरित्यादि**॥ "**लक्ष्मीः** संपत्तिशोभयोः । ऋद्ध्यौषधौ च पद्मायां वृद्धिनामौषधेऽपि च" ( १ ) ॥ पद्मालया ( २ ) ॥ "**पद्मो**ऽस्त्री पद्मके व्यूहे निधिसंख्यान्तरेऽम्बुजे । ना नागे स्त्री फञ्जिकाश्रीचारटीपन्नगीषु च" ( ३ ) ॥ "**कमलं** सलिले ताम्रे जलजे क्लोम्नि भूषणे । मृगभेदे तु **कमलः**, **कमला** श्रीवरस्त्रियोः" ( ४ )॥ सरस्वतीधीत्रिवर्गसंपद्विभूतिशोभासु । उपकरणवेशरचनाविधानेषु च **श्री**रिति प्रथिता" इति व्याडिः ॥ श्रीलक्ष्मीशब्दौ ( ग० ४ । ३ । ४५ ) इति ङीषन्तावपीति मैत्रेयः ( ५ ) ॥ हरिप्रिया ( ६ ) ॥ **षड् नामानि लक्ष्म्याः** ॥ २७ ॥ ॥ **शङ्ख इति** ॥ "**पाञ्चजन्यः** पोटगले विष्णुशङ्खे हुताशने" ॥ **एकं विष्णुशङ्खस्य** ॥ ॥ **चक्रमिति** ॥ "**सुदर्शनो** हरेश्चक्रे मेरुजम्बुद्रुमे पुमान् । न द्वयोः शक्रनगरे आज्ञौषधिभिदोः स्त्रियाम्" ॥ "सुदर्शनोऽस्त्रियां चक्रे" इति नामनिधानात् क्लीबेऽपि ( १ ) ॥ **एकं विष्णुचक्रस्य** ॥ ॥ **कौमोदकीति** ॥ कौमोदकी ॥ **कौमोदकी** इति तु स्वामी ( १ ) ॥ **एकं विष्णुगदायाः** ॥ ॥ **खड्ग इति** ॥ "**नन्दको** हरिखड्गे च हर्षके कुलपालके" ॥ ( १ ) ॥ **एकं विष्णोः खड्गस्य** ॥ ॥ **कौस्तुभ इति** ॥ कौस्तुभः ( १ ) ॥ 'लक्ष्मीपतेः' इति एतत्पर्यन्तं संबध्यते ॥ **एकं विष्णोर्मणेः** ॥ २८ ॥ ॥ **गरुत्मानिति** ॥ गरुत्मान् ( १ ) ॥ गरुडः ( २ ) ॥ तार्क्ष्यः ॥ बहुत्वे तार्क्ष्याः ॥ गर्गादित्वात् ( ४ । १ । १०५ ) यञि बहुत्वे तृक्षाः इत्यन्ये । **तार्क्ष्यस्तु** स्यन्दने वाहे गरुडे गरुडाग्रजे । अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यं तु रसाञ्जने ॥ अहौ च" ॥ ( ३ ) ॥ **वैनतेयस्तु** गरुडे स्यात्प्रभाकरसारथौ" ॥ ( ४ ) ॥ खगेश्वरः ( ५ ) ॥ नागान्तकः ( ६ ) ॥ विष्णुरथः ( ७ ) ॥ "**सुपर्णः** स्वर्णचूडे च गरुडे कृतमालके ॥ **सुपर्णा** कमलिन्यां च वैनतेयस्य मातरि" ( ८ ) ॥ पन्नगाशनः ( ९ ) ॥ **नव नामानि गरुडस्य** ॥ २९ ॥ ॥ **शंभुरित्यादि** ॥ "**शंभुर्ब्रह्मार्हतोः** शिवे" ( १ ) ॥ "**ईशः** स्वामिनि रुद्रे च स्यादीशा हलदण्डके" ( २ ) ॥ "**पशुपतिः** पिनाकिनि हुताशने" ॥ ( ३ ) ॥ "**शिवो** मोक्षे महादेवे कीलकग्रहयोगयोः । बालके गुग्गुलौ वेदे पुण्डरीकद्रुमेऽपि च । सुखे क्षेमे जले क्लीबम् " ( ४ ) ॥ "**शूली** स्याच्छंकरे पुंसि शूलरोगिणि वाच्यवत् ।" ( ५ ) ॥ **महेश्वरो** महादेवे कथितोऽधीश्वरेऽपि च ( ६ ) ॥ "**ईश्वरो** मन्मथे शंभौ नाढ्ये स्वामिनि वाच्यवत् । **ईश्वरी चेश्वरोमायाम्**" ( ७ ) ॥ शर्वः ॥ '**सर्वः**' अपि । "**सर्वस्तु शर्वो भगवान् शंभुः कालंजरः शिवः** " इति नामनिधानात् ॥ " **कालंजरो** योगिचक्रे मेलके भैरवे गिरौ " ( ८ ) ॥ " **ईशानं** ज्योतिषि क्लीबं पुंलिङ्गः स्यात्त्रिलोचने " ( ९ ) ॥ शंकरः ( १० ) ॥ चन्द्रशेखरः ( ११ ) ॥ ३० ॥ ॥

भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः। मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः॥३१॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्। वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥३२॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः। हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः। व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः॥३४॥
कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः। प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः॥
विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा। उमा कात्यायनी गौरी काली हैमवतीश्वरा ॥ ३६ ॥

भूतेशः ( १२ ) ॥ खण्डपरशुः ॥ 'खण्डपर्शुः' अपि ॥ "खण्डपर्शुः पर्शुरामे शंकरे चूर्णलेपिनि। खण्डामलकभैषज्ये सिंहिकातनयेऽपि च" इति विश्वात् ( १३ ) ॥ "गिरीशोऽद्रिपतौ वाचस्पतिशंकरयोः पुमान्" ( १४ ) ॥ गिरिशः( १५ ) ॥ मृडः ( १६ ) मृत्युंजयः ( १७ ) ॥ कृत्तिवासाः ( १८ ) ॥ पिनाकी (१९) ॥ प्रमथाधिपः ॥ ( २० ) ॥ ३१ ॥ " उग्रः क्षत्रियतः शूद्रां सूनावुत्कटरुद्रयोः। उग्रा वचाछिक्किकयोः " ( २१ ) ॥ कपर्दी ( २२ ) ॥ "श्रीकण्ठः कुरुजाङ्गले। शंकरे च" ( २३ ) ॥ शितिकण्ठः ( २४ ) ॥ कपालभृत् ( २५ ) ॥ वामदेवः ॥ "वामं धने, हरे पुंसि कामदेवे पयोधरे" ( २६ ) ॥ महादेवः ( २७ ) ॥ विरूपाक्षः ( २८ ) ॥ त्रिलोचनः ( २९ ) ॥ ३२ ॥ कृशानुरेताः ( ३० ) ॥ सर्वज्ञः ( ३१ ) ॥ धूर्जटिः। " ॥ "जटिर्जटा" इति द्विरूपकोशः ॥ ( ३२ ) ॥ नीललोहितः ॥ ( ३३ ) ॥ "हरो नाशकरुद्रयोः। वैश्वानरेऽपि च" ॥ 'हीरः' अपि। "हीरः कपर्दी शमिरः" इति संसारावर्तात्। "हीरो वज्रे हरे सर्पे हीरा पिपीलिकाश्रियोः" ( ३४ ) ॥ स्मरहरः ( ३५ ) ॥ भर्गः ॥ "भर्ग्यः" इत्यपि ( ३६ ) ॥ त्र्यम्बकः ॥ ( ३७ ) ॥ त्रिपुरान्तकः ( ३८ ) ॥ ३३ ॥ गङ्गाधरः ( ३९ ) ॥ अन्धकरिपुः ( ४० ) ॥ क्रतुध्वंसी ( ४१ ) ॥ वृषध्वजः ( ४२ ) ॥ व्योमकेशः ( ४३ ) ॥ "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" ( ४४ ) ॥ "भीमोऽम्लवेतसे घोरे शंभौ मध्यमपाण्डवे" ( ४५ ) ॥ "स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे" ( ४६ ) ॥ रुद्रः ( ४७ ) ॥ उमापतिः (४८) ॥ अष्टचत्वारिंशन्नामानिशंभोः ॥ ३४ ॥ कपर्द इति ॥ "कपर्दः पार्वतीभर्तुर्जटाजूटे वराटके" ॥ अर्शआद्यजन्तः शिवेऽपि ( १ ) ॥ जटानां जूटो बन्धः ॥ शिव जटाबन्धस्यैकम् ॥ पिनाक इति ॥ "पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः" ( १ ) ॥ अजगवम् ॥ "स्थाणोर्धनुराजगवम्" इत्यमरमाला च ॥ "अजकावम्" अपि। "धनुस्त्वजगवं युग्ममजकावमजीजकम्" इति शब्दार्णवात् ॥ "अजकवम्" अपि ( २ ) ॥ शिवधनुषो द्वे ॥ प्रमथा इति ॥ प्रमथाः ( १ ) ॥ पारिषदाः ॥ 'पारिषद्याः' अपि पार्षद-पार्षद्यावपि ॥ "भूताः शिवस्य पार्षद्याः पार्षदाः" इति संसारावर्तात् ( २ ) ॥ द्वे शिवानुचराणाम् ॥ ॥ ब्राह्मीति ॥ मातरः ( १ ) ॥ "ब्राह्मी तु भारती। शाकभेदः पङ्कगण्डी हञ्जिका सोमवल्लरी। ब्रह्मशक्तिः" ॥ "ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौमारीत्यपि चामुण्डा चर्चिकेत्यष्ट मातरः" ॥ "ब्राह्म्याद्या मातरः स्मृताः" इति भागुरिः ॥ "ब्रह्माण्याद्यास्तु" इति पाठे "ब्रह्माण्याद्याः स्मृताः सप्त देवतामातरो बुधैः" इति हलायुधः ॥ स हि "कौबेरीत्यपि कौमारी सप्तैव मातरः स्मृताः" इति पठति ॥ ब्रह्मादिशक्तिदेवतानामेकैकम् ॥ ३५ ॥ ॥ विभूतिरित्यादि ॥ "भूतिर्भस्मनि संपत्तौ हस्तिशृङ्गारयोः स्त्रियाम्। मांसपाकविशेषोत्पातयोरपि" ॥ ( २ ) ॥ विभूतिरिति कथनमन्यप्रादिनिवृत्त्यर्थम् ( १ ) ॥ ऐश्वर्यम् ( ३ ) ॥ "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशिता वशिता चैव तथा कामावशायिता॥" ॥ ( कामावसायिता ) कश्चिन्मन्यते ॥ अणुताद्यष्टविधप्रभावस्य नामत्रयम् ॥ ॥ उमेत्यादि ॥ "उमा गौर्यां हरिद्रायां कीर्तिकान्त्यतसीषु च" ( १ ) ॥ "कात्यायनो वररुचौ कात्यायनी तु पार्वती। काषायवस्त्रविधवार्धवृद्धमहिलापि च" ( २ ) ॥ "गौरी त्वसंजातरजःकन्याशंकरभार्ययोः। रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषेऽपि यादसांपतियोषिति" ॥ ( ३ ) ॥ "काली गौर्यां क्षीरकीटे कालिकामातृभेदयोः। नव्यमेघौघपरिवादयोः" ॥ 'काला' अपि "उमा कात्यायनी दुर्गा काली हैमवतीश्वरी। काला कालंजरी गौरा" इति वाचस्पतिः ( ४ ) ॥ हैमवत्यभयास्वर्णक्षीर्योः

शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला । अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ३७
विनायको विघ्नराजद्वैमातुरगणाधिपाः । अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥
कार्तिकेयो महासेनः शरजन्मा षडाननः । पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः । षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥४०॥
इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः । वृद्धश्रवाः सुनासीरः पुरुहूतः पुरंदरः ॥ ४१ ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः । सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः । जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥

श्वेतयचोमयोः" ( ५ ) ॥ " **ईश्वरः** शंकरेऽधीशे तत्पत्न्यामीश्वरीश्वरा " इति वोपालितः ( ६ ) ॥ ३६ ॥ "**शिवं** भद्रे **शिवः** शंभुः **शिवा** गौरी **शिवा**ऽभया" इति शाश्वतः ॥ पुंयोगे तु **शिवी** ( ७ ) ॥ भवानी ॥ ( ८ ) ॥ रुद्राणी ( ९ ) ॥ शर्वाणी ( १० ) ॥ सर्वमङ्गला ॥ '**मङ्गला**' इत्यपि । "**मङ्गला** सितदूर्वा-यामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे पुंसि सर्वार्थदक्षिणे" ( ११ ) ॥ अपर्णा ( १२ ) ॥ पार्वती ॥ ( १३ ) ॥ "**दुर्ग** कोटे दुर्गमे स्याद् **दुर्गा** तु नीलिकोमयोः" इति हेमचन्द्रः ( १४ ) ॥ मृडानी ( १५ ) ॥ चण्डिका ॥ " **चण्डी** " इत्यपि । " **चण्डी** कात्यायनीदेव्यां हिंस्रकोपनयोषितोः" ( १६ ) ॥ "**अम्बिका** पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि ( १७ ) ॥ **सप्तदश नामानि पार्वत्याः** ॥ ३७ ॥ ॥ **विनायकेत्यादि** ॥ "**विनायकस्तु** हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" ( १ ) ॥ विघ्नराजः ( २ ) ॥ दुर्गाचामुण्डाभ्यां पालितत्वात् । गजमुखतया हस्तिन्या अपत्यत्वात् । गङ्गाया अपत्यत्वाद्वा ॥ "**द्वैमातुरो** जरासंधवारणाननयोः पुमान्" ( ३ ) ॥ गणाधिपः ( ४ ) ॥ एकदन्तः ( ५ ) ॥ "**हेरम्बः** शौर्यगर्विते । महिषे विघ्नराजे च" ( ६ ) ॥ **लम्बोदरः** स्यादाध्माने प्रमथानां च नायके" ( ७ ) ॥ गजाननः ( ८ ) ॥ **अष्टौ गणेशस्य** ॥ ३८ ॥ ॥ **कार्तिकेय इत्यादि** ॥ कार्तिकेयः (१) ॥ "**महासेनो** महासैन्ये स्कन्देऽपि" ( २ ) ॥ शरजन्मा ( ३ ) ॥ षडाननः ( ४ ) ॥ पार्वतीनन्दनः ( ५ ) ॥ स्कन्दः ( ६ ) ॥ "**सेनानीः** स्यात्पुमान्कार्तिकेये सेनापतौ पुमान्" ( ७ ) ॥ अग्निभूः ( ८ ) ॥ " **गुहः** षाण्मातुरे **गुहा** । सिंहपुच्छ्यां च गर्ते च पर्वतादेश्च कंदरे " ( ९ ) ॥ ३९ ॥ बाहुलेयः ( १० ) ॥ तारकजित् ( ११ ) ॥ " **विशाखो** याचके स्कन्दे **विशाखा** भे कठिल्लके " ॥ ( १२ ) ॥ शिखिवाहनः ( १३ ) ॥ षाण्मातुरः ( १४ ) ॥ शक्तिधरः ( १५ ) ॥ "**कुमारः** स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने " ( १६ ) ॥ क्रौञ्चदारणः ॥ " कैलासे धनदावासे **क्रौञ्चः कौञ्चो**ऽभिधीयते" इति बृहद्धारावली ॥ अतः '**कौञ्चदारणः**' अपि ( १७ ) ॥ **सप्तदश कार्तिकेयस्य** ॥४०॥ ॥ **इन्द्र इत्यादि** ॥ "**इन्द्रः** शक्रादित्यभेदयोगभेदान्तरात्मसु । **इन्द्रः** फणिज्जकेऽस्त्री स्यात्" ( १ ) ॥ मरुत्वान् ( २ ) ॥ मघवा ॥ त्रादेशपक्षे तु '**मघवान्**' इत्यपि बोध्यम् ॥ " हविर्जक्षिति निशङ्को मखेषु मघवानसौ" इति भट्टिः ( ३ ) ॥ बिडौजाः–सान्तः ॥ विट्सु प्रजासु मनुष्येषु वा ओजोऽस्येति '**विडोजाः**' इति केचित् ( ४ ) ॥ पाकशासनः ( ५ ) ॥ वृद्धश्रवाः ( ६ ) ॥ सुनासीरः–द्विदन्त्यः ॥ शु इत्यव्ययस्य पूजार्थकत्वात् **शुनासीरः** तालव्यादिरपि ॥ " शुनाशीरशीतशिवशंखाः " इति तालव्यादावूष्म-विवेकः ॥ '**शुनाशीरः**' द्वितालव्योऽपि ( ७ ) ॥ पुरुहूतः ( ८ ) ॥ पुरंदरः ( ९ ) ॥ ४१ ॥ " **जिष्णुर्ना** वासवेऽर्जुने । जित्वरे वाच्यवत् " " विष्णावर्के वसुष्वपि" ( १० ) ॥ लेखर्षभः ( ११ ) ॥ " **शक्रः** पुमान्देवराजे कुटजार्जुनभूरुहोः ( १२ ) ॥ शतमन्युः ( १३ ) ॥ दिवस्पतिः ( १४ ) ॥ सुत्रामा ॥ सु उद् इत्युपसर्गद्वयप्रयोगे तु '**सूत्रामा**' दीर्घादिरपि ( १५ ) ॥ गोत्रभिद् ( १६ ) ॥ "**वज्री** तु बुद्धे देवाधिपे पुमान्" ( १७ ) ॥ वासवः ( १८ ) ॥ वृत्रहा ( :१९ ) ॥ ४२ ॥ "**वृषा** तु वासवे । वृषभे तुरगे पुंसि" ( २० ) ॥ वास्तोष्पतिः ( २१ ) ॥ सुरपतिः ( २२ ) ॥ बलारातिः ( २३ ) ॥ शचीपतिः ॥ ( २४ ) ॥ जम्भभेदी ( २५ ) ॥ हरिहयः । "त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु । हरिः स वर्णतोऽश्वस्तु पीतकौशेयसप्रभः" इति शालिहोत्रम् ( २६ ) ॥ स्वाराड्–जान्तः ( २७ ) ॥ नमुचिसूदनः ( २८ ) ॥४३॥

**संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः । आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥४४॥**
**पुलोमजा शचीन्द्राणी नगरी त्वमरावती । हय उच्चैःश्रवाः सूतो मातलिर्नन्दनं वनम् ॥४५॥**
**स्यात्प्रासादो वैजयन्तो जयन्तः पाकशासनिः । ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४६ ॥**
**ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः । शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥४७**
**व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः । स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ॥४८॥**
**मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका । मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥**
**पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५० ॥**

संक्रन्दनः ( २९ ) ॥ दुश्च्यवनः ( ३० ) ॥ तुराषाड् । तुरासाहौ ( ३१ ) ॥ मेघवाहनः ( ३२ ) ॥ आखण्डलः ॥ ( ३३ ) ॥ सहस्राक्षः ( ३४ ) ॥ "**ऋभुक्षः** स्वर्गवज्रयोः" इति विश्वः ॥ 'ऋभुक्षाः' पथिवत् (३५)॥ **पञ्चत्रिंशदिन्द्रस्य** ॥ ॥ तस्येन्द्रस्य प्रिया तु ॥ ४४ ॥ **पुलोमजेत्यादि** ॥ पुलोमजा ॥ '**पौलोमी**' अपि ( १ ) ॥ "शचीन्द्राण्यां शतावर्यां तथा स्त्रीकरणान्तरे" । " अथ शची स्यादिन्द्राणी **शतावरी । चारुधारा महेन्द्राणी शक्राणी जयवादिनी**" इति रभसः ॥ '**सची**' दन्त्यादिरपि ( २ ) ॥ "**इन्द्राणी** शच्यां निर्गुण्ड्यां स्त्रीकरणेऽपि" ( ३ ) ॥ **त्रीणीन्द्रपत्न्याः** ॥ ॥ **नगरी त्विति** ॥ अमरावती ( १ ) ॥ **एकम् इन्द्रपुरस्य** ॥ ॥ **हय इति** ॥ उच्चैःश्रवाः । उच्चैःश्रवसौ । सान्तः ( १ ) ॥ **एकम् इन्द्राश्वस्य** ॥ ॥ **सूत इति** ॥ मातलिः ( १ ) ॥ **एकम् इन्द्रसारथेः** ॥ ॥ **नन्दनमिति** ॥ "अथ **नन्दनम्** । इन्द्रोद्याने, **नन्दनस्तु** तनये हर्षकारिणि" इति हैमः ॥ ( १ ) ॥ **एकम् इन्द्रवनस्य** ॥ ४५ ॥ ॥ **स्यादिति** ॥' **वैजयन्तो** महेन्द्रस्य ध्वजप्रासादयोः पुमान् । **वैजयन्ती** पताकायां जयन्तीपादपे स्त्रियाम् " ( १ ) ॥ **इन्द्रगृहस्यैकम्** ॥ ॥ **जयन्त इति** ॥ "**जयन्तावैन्द्रिगिरिशौ जयन्त्युमापताकयोः** । जीवन्त्यां सिंहपुच्छ्यां च इन्द्रपुत्र्यां च" ( १ ) ॥ पाकशासनिः (२) ॥ **द्वे इन्द्रपुत्रस्य**॥ **ऐरावत इति** ॥ "**ऐरावतोऽ**भ्रमातङ्गे नारङ्गे लकुचद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् । नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने" ( १ ) ॥ अभ्रमातङ्गः ( २ ) ॥ ऐरावणः ( ३ ) ॥ अभ्रमुवल्लभः ( ४ ) ॥ **चत्वारीन्द्रहस्तिनः** ॥ ४६ ॥ ॥ **ह्रादिनीत्यादि** ॥ "**ह्रादिनी** वज्रविद्युतोः" ( १ ) ॥ अस्त्री इति पूर्वोत्तराभ्यामन्वेति । संनिधानाविशेषात् ॥ "अस्त्रियौ वज्रकुलिशौ" इति संसारावर्ताच्च॥ "वज्रो स्त्री" इतिवक्ष्यमाणं त्वस्यैवानुवादः॥ "**वज्रं** स्याद्बालके धात्र्यां क्लीबं योगान्तरे पुमान् । **वज्रा** स्नुह्यां गुडूच्यां च **वज्री** स्नुह्यन्तरे स्मृता ॥ दम्भोलौ हीरकेऽप्यस्त्री"(२)॥ "**कुलिशो** न स्त्रियां प्रोक्तो दम्भोलौ, ना झषान्तरे"(३)॥ भिदुरम्॥ '**भिदिरम्**' इत्यपि(४)॥ पविः। पवी ॥ इदन्तः (५) ॥ शतकोटिः (६) ॥ "**स्वरुः** पुमान् यूपखण्डे भिदुरेऽप्यध्वरे शरे"॥ '**स्वरुः**' सान्तोऽपि (७) ॥ 'शंवः' दन्त्योष्ठ्यान्तः ॥ **शम्बः** पवर्गतृतीयान्तोपि ॥ "**शम्बः** स्यान्मुसलाग्रस्थलोहमण्डलके पवौ । शुभान्विते त्रिषु" ॥ '**सम्बः**' दन्त्यादिरपि ॥ " तालव्या अपि दन्त्याश्च **सम्बसूकरपांसवः** " इत्यूष्मविवेकः ( ८ ) ॥ दम्भोलिः ( ९ ) ॥ अशनिः ( १० ) ॥ **दश वज्रस्य** ॥ ४७ ॥ ॥ **व्योमयानमित्यादि** ॥ व्योमयानम् ( १ ) ॥ " **विमानो** व्योमयाने च सप्तभूमिगृहेऽपि च । घोटके यानमात्रे च पुंनपुंसकयोर्मतः " ( २ ) ॥ **द्वे देवरथस्य** ॥ **नारदाद्या इति** ॥ नारदः । आद्येन **तुम्बुरुभरतपर्वतदेवलादयः** । सुरर्षयः (१) ॥ **एकं नारदादीनाम्** ॥ ॥ **स्यादिति** ॥ 'सुधर्मा' सुधर्मे,—सुधर्माणौ ( १ ) ॥ देवसभा (२) ॥ **द्वे देवसभायाः** ॥ ॥ **पीयूषमिति** ॥ "**स्यात्पेयुषं** च **पीयूषं** नवक्षीरेऽमृतेऽपि च" इति हारावली ॥ "**पीयूषं** सप्तदिवसावधिक्षीरे तथाऽमृते" ( १ ) ॥ " **अमृतं** यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः"॥ ( २ ) ॥ "**सुधा** गङ्गेष्टिकास्नुह्योर्मूर्वालेपामृतेषु च" ( ३ ) ॥ **त्रीण्यमृतस्य** ॥ ४८ ॥ ॥ **मन्दाकिनीत्यादि** ॥ मन्दाकिनी ( १ ) ॥ वियद्गङ्गा ( २ ) ॥ स्वर्णदी ( ३ ) ॥ सुरदीर्घिका ॥ ( ४ ) ॥ **चत्वारि देवगङ्गायाः** ॥ ॥ **मेरुरित्यादि** ॥ मेरुः (१) ॥ 'सुमेरुः'इत्युपसर्गान्तरनिवृत्त्यर्थमुक्तम् ॥ ( २ ) ॥ हेमाद्रिः ( ३ ) ॥ रत्नसानुः ( ४ ) ॥ सुरालयः ( ५ ) ॥ **पञ्च मेरोः** ॥ ४९ ॥ ॥ **पञ्चेति** ॥ एते पञ्च देववृक्षाः पारिभद्रेऽर्कपर्णे च **मन्दारो** हस्तिधूर्तयोः ( १ ) ॥ " **पारिजातस्तु** मन्दारे पारिभद्रे सुरद्रुमे "

**सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ । नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥५१॥**
**स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः । हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥५२॥**
**अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः । कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥**
**बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः । आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ५४॥**
**रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः । हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ॥ ५५ ॥**

पारिजातकः ( १ ) ॥ "संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे" (१)॥ "हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुंकुमयोरपि" ( १ ) ॥ **पञ्चानां देववृक्षाणामेकैकम्** ॥ ५० ॥ ॥ **सनत्कुमार इत्यादि** ॥ सनत्कुमारः ॥ '**सनात्कुमारः**' अपि । यद्वा "**हंसगो द्रुहिणः सनत्**" इति ब्रह्मपर्यायैरभसः । दन्त्यादिः ( १ ) ॥ वैधात्रः (२) ॥ वैद्यसंहिताप्रणेतृत्वात्स्वर्वैद्यपर्यायसंनिधौ कथनम् ॥ **द्वे ब्रह्मपुत्रस्य** ॥ ॥**स्वर्वैद्यावित्यादि** ॥ स्वर्वैद्यौ ( १ ) ॥ अश्विनीसुतौ ( २ ) ॥ नासत्यौ ( ३ ) ॥ अश्विनौ ( ४ ) ॥ "दस्रः खरेऽश्विनीसुते" ( ५ ) ॥ आश्विनेयौ ( ६ ) ॥ तावुभाविति द्वित्वाविष्टत्वादेकवचनाभावः—इति स्वामी ॥ अयं च प्रायोवादः । "देव्यां तस्यामजायेतां नासत्यो दस्र एव च" इति मार्कण्डेयात् ॥ 'नासत्यौ' इति 'दस्रौ' इति चैकवाचकस्योभयोः प्रयोगो गौणः ॥ **षडश्विनोः** ॥५१॥ ॥ **स्त्रियामिति** ॥ अप्सरसः ॥ बहुषु इति प्रायोवादः । "अनचि च" ( ८।४।४७ ) इति सूत्रे 'अप्सराः' इति भाष्यप्रयोगात् ॥ "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि" इति शब्दार्णवाच्च (१) ॥ स्वर्वेश्याः (२) ॥ उर्वशी । मुखशब्देनाद्यर्थेन **रम्भा-मेनका-घृताची-तिलोत्तमादीनां** ग्रहणम् ॥ **द्वे उर्वश्यादीनाम्** ॥ ॥ **हाहेति** ॥ अव्युत्पत्तिपक्षे "आतो धातोः" ( ६ । ४ । १४० ) इत्यस्याप्राप्तेः शसि हाहान्, "ओः सुपि" (६।४।८३) इत्यस्याप्राप्तेर्हूहून् इत्यादि ॥ हाहाः सान्तोऽपि ॥ "**गन्धर्वो** वीतिहाहसोः" इति संसारावर्तात् ॥ "**गन्धर्वो** हाहसि प्रोक्तः" इति रत्नकोषाच्च ॥ भोजस्तु हाहाहूहूशब्दयोरव्ययत्वमाह ॥ 'हहाः' इत्यादिह्रस्वः 'हुहुः' इत्युभयह्रस्वश्च ॥ "**हंसो हहाहुहू** च द्वौ **वृषणश्वश्च तुम्बुरुः**" इति शब्दार्णवात् ॥ "गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू" इति व्यासोक्तेश्च ॥ "**गन्धर्वस्तु** नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरंगमे ॥ अन्तराभवदेहे च" ॥ '**गान्धर्वः**' दीर्घादिरप्ययम् ॥ "अपि **गन्धर्वगान्धर्वदिव्यगायनगातवः**" इति शब्दार्णवात् (१)॥ आद्येन **तुम्बुरु–विश्वावसु–चित्ररथादीनां** संग्रहः ॥ **देवगायकानामेकम्** ॥५२॥ ॥ **अग्निरित्यादि** ॥ "**अग्निर्वैश्वानरेऽपि** स्याच्चित्रकाख्योषधौ पुमान्" (१)॥ विदादित्वात् (४।१।१०४) अञ् । वैश्वानरः वैश्वानरौ । बहुत्वे च "यञञोश्च" ( २ । ४ । ६४ ) इति लुक् विश्वानराः ( २ ) ॥ "**वह्निर्वैश्वानरेऽपि** स्याच्चित्रकाख्यौषधे पुमान्" ( ३ ) ॥ "**वीतिहोत्रोऽनलेऽर्के** च" ( ४ ) ॥ "**धनंजयः** सर्पभेदे ककुभे देहमारुते । पार्थेऽग्नौ" ( ५ ) ॥ कुपीटस्य जलस्य योनिः कृपीटयोनिः । "**कृपीटमुदरे जले**" इति रत्नकोषात् "अग्नेरापः" इति श्रुतेः ॥ कृपीटं योनिरस्येति वा "अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम्" इति मनुः ( ६ ) ॥ ज्वलनः ( ७ ) ॥ जातवेदाः । जातवेदसौ (८) ॥ तनूनपात् । तनूनपातौ तनूनपातः ॥ 'तनूनपातमसपस्य निंसाते' इति मन्त्रः ॥ शत्रन्ते 'उगिदचाम्' (७।१।७०) इति नुमि तनूनपान्, तनूनपान्तौ, तनूनपान्तः इति वा ॥ तन्वा ऊनं कृशं पाति तनूनपं घृतादि, तदत्ति । 'अदोऽनन्ने'(३।२।६८) इति विट् । तनूनपादौ । तनूनपाद इति वा (९)॥५३॥ ॥'बर्हिः' सान्तः पुंलिङ्गोऽयम् । 'बर्हिरुक्तो **बृहद्भानुः**' इत्यमरमालापुंस्काण्डे पाठात् (१०) ॥ "**शुक्रो वैश्वानरो बर्हिर्बर्हिःशुष्मा तनूनपात्**" इति शब्दार्णवात् ॥ '**बर्हिःशुष्मा**' इति व्यस्तं समस्तं नाम इति कश्चित् ॥ तत्र समस्तपक्षे बर्हिः कुशः शुष्मा बलमस्येति विग्रहः ॥ **बर्हिः** सान्तः "**बर्हिः** पुंसि हुताशने । न स्त्री कुशे" ॥ बर्हिरिदन्तः । 'शुष्मा' इति नान्तः पृथग्—इत्यन्ये ॥ "**शुष्मः**" अदन्तोऽपि (११) ॥ "**कृष्णवर्त्मा** विधुंतुदे । दुराचारे हुताशे च" (१२) ॥ शोचिष्केशः (१३) ॥ "उषः प्रभाते संध्यायाम्" इति विश्वः । उषर्बुधः (१४) ॥ "**आश्रयाशः** पुमान्वह्नौ त्रिषु चाश्रयनाशके" ॥ "**आशयाशः**" इति पाठान्तरम् ( १५ ) ॥ बृहद्भानुः (१६)॥ कृशानुः (१७) ॥ "**पावकोऽग्नौ** सदाचारे वह्निमन्थे च चित्रके । भल्लातके विडङ्गे च शोधयितृनरेऽपि च" (१८) ॥ "**अनलो** वसुभेदेऽग्नौ" ॥ "**अनलोऽनिले** वसुदेवे वसौ वह्नौ" ( १९ ) ॥ ५४ ॥ रोहिताश्वः । "वरुणस्त्वसितानश्वान्कुबेरः कुमुदोपमान् । हुताशनः

**सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः । शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ॥ ५६ ॥**
**वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् । त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ ॥**
**धर्मराजः पितृपतिः समवर्ती परेतराट् । कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥ ५८ ॥**
**कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः । राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ५९॥**
**रात्रिचरो रात्रिचरः कर्बुरो निकषात्मजः । यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥**

किंशुकाभान्वायुर्वभूंस्तथावृणोत्'' इति शालिहोत्रात् ॥ **''रोहिताश्वश्चित्रभानौ** हरिश्चन्द्रनृपात्मजे'' ( २० )॥ वायुसखः ॥ वायुः सखास्येति **वायुसखा** च । अस्मिन्पक्षे टजभावात् ''अनङ् सौ'' ( ७ । १ ।९३ ) इत्यनङ् ( २१ ) ॥ शिखावान् ॥ **'शिखी'** अपि ॥ **''शिखी** वह्नौ वलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः'' ( २२ ) ॥ आशुशुक्षणिः ( २३ ) ॥ सान्तः **''हिरण्यरेताः** पुंसि स्याद्दिवाकरहविर्भुजोः'' ( २४ ) ॥ हुतभुग् जान्तः ( २५ ) ॥ **''दहनश्चित्रके** भल्लातकेऽग्नौ दुष्टचेष्टिते'' ( २६ ) ॥ हव्यवाहनः ( २७ ) ॥ ५५ ॥ ॥ काली-कराली-मनोजवा-सुलोहिता-सुधूम्रवर्णा–स्फुलिङ्गिनी विश्वदासाख्याः सप्त वह्नेर्जिह्वाः ॥ **''सप्तार्चिः** पावके पुंसि क्रूरचक्षुषि च त्रिषु'' ( २८ ) ॥ दमुनाः । दमुनसौ ॥ दीर्घमध्योऽपि **''दमूना दमुनाः प्राचीनबर्हिषौ''** इति नामनिधानात् ( २९ ) ॥ **''शुक्रः** स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्'' ( ३० ) ॥ **''चित्रभानुः** पुमान्वैश्वानरे चाहस्करेऽपि च'' ( ३१ ) ॥ **''विभावसुस्तु** भास्करे । हुताशने हारभेदे चन्द्रे'' ( ३२ ) ॥ '' **शुचिर्ग्रीष्माग्निशृङ्गा-**रेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु'' ( ३३ ) ॥ अप्पित्तम् रूपभेदात् क्लीबम् ( ३४ ) ॥ **चतुस्त्रिंशदग्नेः** ॥ ॥ **और्व इति** ॥ उर्वस्य मुनेरपत्यम् । विदाद्यञ् (४।१।१०४) *और्वः, और्वौ। बहुत्वे ''यञञोश्च''* ( २ । ४ । ६४ ) इति लुकि उर्वाः–इति मुकुटः ( १ ) ॥ '' **वाडवं** करणे स्त्रीणां घोटकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले'' ( २ ) ॥ वडवानलः ( ३ ) ॥ **त्रीणि वाडवाग्नेः** ॥ ५६ ॥ ॥ **वह्नेरिति** ॥ 'वह्नेः' इति प्रायोवादः । '' **हेतिः** स्यादायुधज्वालासूर्यतेजःसु योषिति '' इति दर्शनात् ॥ ज्वालः ॥ स्त्रियां टाप् ( ४ । १ । ४ ) ज्वाला ( १ ) ॥ कीलः ॥ स्त्रियां टाप् **''कीलो**ऽग्नितेजसि । कूर्परस्तम्भयोः शङ्कौ **कीला** रतहतावपि '' ( २ ) ॥ 'आर्चिः' सान्तः ॥ इदन्तोऽपि । ''अग्नेर्भ्राजन्ते अर्चयः'' इति श्रुतेः ॥ ''स्त्रियाम्'' इति आर्चिरादिभिः संबध्यते ॥ तत्रार्चिषः ''ज्वालाभासोर्न पुं-**स्यर्चिः''** इति क्लीबत्वमपि वक्ष्यते ॥ **''आर्चिर्मयूखशिखयोः''** ( ३ ) ॥ **''हेति**र्ज्वालास्त्रसूर्यांशुषु'' ( ४ ) ॥ **''शिखा** ज्वाला बर्हिचूडालाङ्गलक्यग्रमात्रके'' ( ५ ) ॥ **पञ्च ज्वालायाः** ॥ ॥ **त्रिष्विति** ॥ स्फुलिङ्गः ॥ स्फुलिङ्गा जातावपि अजादित्वाट्टाप् ( १ ) ॥ अग्निकणः ( २ ) ॥ **द्वे अग्निकणस्य** ॥ ॥ **संताप इत्यादि** ॥ संतापः ( १ ) ॥ संज्वरः ( २ ) ॥ समौ समानार्थौ समलिङ्गौ ॥ **द्वे संतापस्य** ॥ ५७ ॥ ॥**धर्मराज इत्यादि** ॥ धर्मराजः ( १ ) ॥ पितृपतिः ( २ ) ॥ समवर्ती ( ३ ) ॥ परेतराट्, जान्तः ( ४ ) ॥ **''कृतान्तो** यमसिद्धान्तदैवाकुशलकर्मसु'' ( ५ ) ॥ यमुनाभ्राता ( ६ ) ॥ **''शमनं** शान्तिवधयोः । **शमनः** श्राद्धदैवते'' ( ७ ) ॥ यमराट्, जान्तः ( ८ ) ॥ **''यमो** दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च'' इति विश्वः ( ९ ) ॥ ५८ ॥ **''कालो** मृत्यौ महाकाले समये यमकृष्णयोः'' ( १० ) ॥ दण्डधरः ॥ **'दण्डधारः'** अपि । **''दण्डधारो** यमे राज्ञि'' ( ११ ) ॥ श्राद्धदेवः ( १२ ) ॥ वैवस्वतः ( १३ ) ॥ अन्तकः ( १४ ) ॥ **यमस्य चतुर्दश** ॥ ॥ **राक्षस इत्यादि** ॥ **''राक्षसो** यातुधाने स्याच्चण्डायां **राक्षसी** स्मृता'' ( १ ) ॥ कौणपः । ( २ ) ॥ दकारान्तः '' **क्रव्यान्मांसाशिरक्षसोः** '' ( ३ ) ॥ क्रव्यादः ( ४ ) ॥ **अस्रपः** ॥ '' **अस्रपा** तु जलौकायां डाकिन्यां राक्षसे तु ना '' ॥ **अश्रपः** तालव्यशवानपि ( ५ ) ॥ आशरः ॥ **'आशिरः'**इत्यपि पाठः ॥ **''आशिरो हनुषः शङ्कुः** क्रव्यादोऽस्रप आशरः'' इति संसारावर्तः ॥ **''आशिरो**ऽर्के राक्षसेऽग्नौ'' ( ६ ) ॥ ५९ ॥ ॥ रात्रिचरः ( ७ ) ॥ रात्रिचरः (८) ॥ **''कर्बुरं** सलिले हेम्नि **कर्बुरः** पाप-रक्षसोः । **कर्बुरा** कृष्णवृन्तायां शबले पुनरन्यवत्'' ॥ **'कर्बरः'** इति पाठान्तरम् । ''नैर्ऋतः **कर्बरः** क्रव्यात् कर्बुरो यातुरक्षसी'' इति शब्दार्णवः । ( ९ ) ॥ निकषात्मजः । मूर्धन्यः षः ( १० ) ॥ 'यातुधानः' ।

**प्रचेता वरुणः पाशी यादसांपतिरप्पतिः । श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥**
**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः । समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥**
**नभस्वद्वातपवनपवमानप्रभञ्जनाः । प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३ ॥**
**शरीरस्था इमे रंहस्तरसी तु रयः स्यदः । जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥**
**सत्वरं चपलं तूर्णमविलम्बितमाशु च । सततानारताश्रान्तसंततविरतानिशम् ॥ ६५ ॥**

अन्तस्थादिः ॥ **जातुधानः** 'चवर्गादिरपि' ( ११ ) ॥ "अथ **पुण्यजनो** यक्षे राक्षसे सज्जनेऽपि च" ॥ ( १२ ) ॥ नैर्ऋतः ( १३ ) ॥ 'यातु' क्लीबं भिन्नलिङ्गानां द्वन्द्वाकरणप्रतिज्ञानात् ( १४ ) ॥ 'रक्षः' सान्तम् रूपभेदेन क्लीबम् (१५)॥ **पञ्चदश राक्षसस्य** ॥६०॥ ॥ **प्रचेता इत्यादि**॥ सकारान्तः "**प्रचेताः** पाशिनि मुनौ ना, प्रकृष्टहृदि त्रिषु" ( १ ) ॥ "**वरुणस्त**रुभेदेऽप्सु प्रतीचीपतिसूर्ययोः ॥" '**वरणः**' अपि । "वरं वृणन्ति तं देवा वरदश्च वरार्थिनाम् । धातुर्वै वरणे प्रोक्तस्तस्मात्स **वरणः** स्मृतः" इति साम्बपुराणम् ( २ ) ॥ इन्नन्तः "**पाशी** पाशधरेऽप्पतौ" इति विश्वः (३) ॥ "**यादसांपति**रम्भोधौ पश्चिमाशापतावपि" ॥ लुकि तु "**यादःपतिः**" अपि । ( ४ ) ॥ **अप्पतिः**॥ '**अपांपतिः**' अपि (५)॥ **पञ्च वरुणस्य** ॥ ॥ **श्वसन इत्यादि** ॥ "**श्वसनं** श्वसिते पुंसि मारुते मदनद्रुमे" ( १ ) ॥ "**स्पर्शनो** मारुते स्पर्शदानयोः **स्पर्शनं** मतम्" इति विश्वः ( २ ) ॥ वायुः ( ३ ) ॥ मातरिश्वा ( ४ ) ॥ "**सदागति**र्नाकवातनिर्वाणेषु सदीश्वरे" ( ५ ) ॥ ६१ ॥ ॥ पृषदश्वः ( ६ ) ॥ गन्धवहः ( ७ ) ॥ "**गन्धवाहो** मृगेऽनिले । **गन्धवाहा** तु नासायाम्" ( ८ ) ॥ "**अनिलो** वसुवातयोः" ( ९ ) ॥ "**आशुगो**ऽर्के शरे वायौ" ( १० ) ॥ समीरः ( ११ ) ॥ मारुतः ( १२ ) ॥ "**मरुद्देवे** समीरे ना ग्रन्थिपर्णे नपुंसकम्" ॥ **मरुतशब्दो**ऽपि बोध्यः । "**मरुतः** स्पर्शनः **प्राणः** समीरो मारुतो मरुत्" इति विक्रमादित्यकोशात् ॥ "मारुतः श्वसनः **प्राणः** समीरो **मरुतो जगत्**" इति संसारावर्ताच्च ( १३ ) ॥ "**जगत्** स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु" इति रुद्रकोषः ॥ "**जगदाख्या** स्मृता वाते विष्टपे जङ्गमेऽपि च । **जगती** भुवने ख्याता छन्दोभेदे जलेऽपि च" इति विश्वः॥ क्विपि मलोपे तुकि जगत् , जगतौ ॥ अतिप्रत्यये शतृवत्त्वेन नुमि जगन् जगन्तौ ॥ एकत्वे तु जगत्प्राणः (१४)॥ "**समीरणः** स्यात्पवने पथिके च फणिज्जके" ( १५ ) ॥ ६२ ॥ नभस्वान् ( १६ ) ॥ वातः ॥ '**वातिः**' अपि ॥ "वायु**र्मरुद्वाऽऽ**श्वसनः पवनो मरुतोऽनिलः । नभस्वान् **क्षिपणुर्वातिः शुषिणो नघटो वहः**" इति साहसाङ्कः ( १७ ) ॥ "**पवनं** कुम्भकारस्य पाकस्थाने नपुंसकम् । निष्पावमरुतोः पुंसि" ( १८ ) ॥ पवमानः ( १९ ) ॥ प्रभञ्जनः ( २० ) ॥ **विंशतिर्वातस्य** ॥ ॥ **प्राण इति** ॥ इमे प्राणादयः शरीरस्था वायवः ॥ तत्र "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥ अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् । भाषणादिनिमेषादितद्व्यापाराः क्रमादमी ॥" **प्राणो** हृन्मारुते बोले काव्यजीवेऽनिले बले । पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु" ( १ ) ॥ "**अपानं** तु गुदे क्लीबं पंसि स्यात्तस्य मारुते"(१)॥"**उदानो**ऽप्युदरावर्ते वायुभेदे भुजंगमे"(१)॥ "**समानं** सत्समैकेषु त्रिषु ना नाभिमारुते"(१)॥ **प्रत्येकं देहस्थपञ्चवायूनाम्**॥६३॥ ॥ **रंह इत्यादि** ॥ 'रंहः' सान्तं क्लीबं द्वन्द्वघटकत्वात् ( १ ) ॥ 'तरः' सान्तं क्लीबम् ( २ ) ॥ 'रयः' पुमान् अदन्तः ( ३ ) ॥ "स्यदोऽप्यकारान्तः पुमान् ( ४ ) ॥ चवर्गादिरदन्तः "**जवो** वेगवति त्रिषु । पुंलिङ्गस्तु भवेद्वेगे चौण्ड्रपुष्पे **जवा** स्मृता" ( ५ ) ॥ **पञ्च वेगस्य** ॥ ॥ **अथेति** ॥ रंहआदयः सवेगगतिवचनाः । शीघ्रादयस्तु धर्मवचना एव ॥ अतएव 'शीघ्रं पचति, इति प्रयोगः । न तु 'जवं पचति' इति—इति वदन्ति ॥ वस्तुतस्तु रंहःप्रभृतयो वेगाख्यगुणपराः शीघ्रादयस्तु कालाल्पत्वपराः—इति ॥ "**शीघ्रं** नलदे चक्राङ्गे क्लीबं द्रुतगतौ त्रिषु" ( १ ) ॥ "**त्वरितं** वेगतद्वतोः" ( २ ) ॥ "**लघुर**गुरौ च मनोज्ञे निस्सारे वाच्यवत्क्लीबम् । शीघ्रे च कृष्णागुरुणि स्पृक्कानामौषधौ तु स्त्री ॥ '**रघु**' इत्यपि । "वरुणस्य रघु स्यदः" इति प्रयोगात् ( ३ ) ॥ क्षिप्रम् ( ४ ) ॥ "**अरमङ्गे** रथाङ्गस्य शीघ्रशीघ्रगयोरपि" इति शाश्वतः ॥ '**अलम्**' इत्यव्ययस्य "वालमूल—" । वा० ८ । २ । १८ । इत्यादिना रेफपक्षे तु '**अरम्**' इत्यव्ययमपि ( ५ ) ॥ "अथ **द्रुतं** त्रिषु । शीघ्रे विलीने विद्राणे" ॥ ( ६ ) ॥ ६४ ॥ ॥ सत्वरम् (७) ॥ "**चपलः** पारदे मीने चोरके प्रस्तरान्तरे । **चपला** कमलाविद्युत्पुंश्चली-

नित्यानवरताजस्रमप्यथातिशयो भरः । अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च । क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ॥ ६७ ॥
कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः । मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः । यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ६९ ॥
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः । कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ ७० ॥
स्यात्किंनरः किंपुरुषस्तुरंगवदनो मयुः । निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः ॥ ७१ ॥
इति स्वर्गवर्गः ॥ १ ॥

पिप्पलीषु च ॥ नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले" ( ८ ) ॥ तूर्णम् ॥ ( ९ ) ॥ अविलम्बितम् ॥ ( १० ) ॥ "आशुस्तु व्रीहिशीघ्रयोः" ( ११ ) ॥ एकादश शीघ्रस्य ॥ ॥ सततेत्यादि ॥ सततम् ( १ ) ॥ अनारतम् ( २ ) ॥ अश्रान्तम् ( ३ ) ॥ संततम् ( ४ ) ॥ अविरतम् ॥ ( ५ ) ॥ अनिशम् ( ६ ) ॥ ६५ ॥ "नित्यं स्यात्संततेऽपि च । शाश्वते त्रिषु" ( ७ ) ॥ अनवरतम् ( ८ ) ॥ अजस्रम् ॥ सततम्—अजस्रम्—शब्दावव्ययावपि नित्यपर्यायौ स्तः । "शश्वदभीक्ष्णं नित्यं सदा सततमजस्रमिति सातत्ये" इत्यव्ययप्रकरणे आपिशलेः ( ९ ) ॥ नव निरन्तरस्य ॥ ॥ अथेति ॥ सततं क्रियान्तरैरव्यवधानम् । अतिशयस्तु पौनःपुन्यम्, इति भेदः ॥ अतिशयः पुमानदन्तः ( १ ) ॥ भरः ( २ ) ॥ अतिवेलं क्लीबं द्वन्द्वान्तर्गतत्वात् ( ३ ) ॥ भृशम् ( ४ ) ॥ अत्यर्थम् ( ५ ) ॥ अतिमात्रम् ॥ ( ६ ) ॥ उद्गाढम् ॥ ( ७ ) ॥ निर्भरम् ( ८ ) ॥ ६६ ॥ तीव्रं दन्त्योष्ठ्यवत् ( ९ ) ॥ एकान्तम् ( १० ) ॥ नितान्तम् ॥ ( ११ ) ॥ गाढम् ॥ ( १२ ) ॥ "बाढं भृशप्रतिज्ञयोः" ( १३ ) ॥ "दृढः स्थूले भृशे शक्ते" ॥ ( १४ ) ॥ चतुर्दशातिशयस्य ॥ ॥ क्लीब इति ॥ शीघ्रादिदृढपर्यन्तं क्रियाविशेषणत्वादद्रव्ये वर्तमानं क्लीबे स्यात् । यथा शीघ्रं जुहोति, सततं भुङ्क्ते ॥ एषां मध्ये यत् सत्त्वगामि द्रव्यगामि तत् त्रिषु वाच्यलिङ्गम् इत्यर्थः । शीघ्रा जरा, शीघ्रो मृत्युः, शीघ्रं वयः, इत्यादि ॥ अतिशयभरयोरसत्त्ववचनत्वेऽपि पुंस्त्वमेव । पुंलिङ्गेन निर्देशात् । "गाढैकान्तानितान्तानि पुमानतिशयो भरः" इति रभसाच्च ॥ 'अतिशयं पचति' इति प्रयोगस्तु क्रियाविशेषणत्वात्कर्मत्वेन द्वितीयया । क्लीबता तु न, नियतलिङ्गत्वात् ॥ शीघ्रादीनामनियतलिङ्गानां हि क्रियाविशेषणत्वे क्लीबता, न तु नियतलिङ्गानाम् ॥ क्वचिद् 'भेद्यगामि' इति पाठः, तस्य विशेष्यगामीत्यर्थः ॥६७॥ ॥कुबेर इत्यादि ॥ "कुत्सायां क्विति शब्दोऽयं शरीरं बेरमुच्यते । कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कितः॥" इति वायुपुराणम् ( १ ) ॥ त्र्यम्बकसखः ( २ ) ॥ यक्षराट् जकारान्तः ( ३ ) ॥ गुह्यकेश्वरः ( ४ ) ॥ मनुष्यधर्मा नकारान्तः ( ५ ) ॥ धनदः ( ६ ) ॥ राजराजः ( ७ ) ॥ धनाधिपः (८) ॥ ६८ ॥ ॥ किंनरेशः ( ९ ) ॥ वैश्रवणः ( १० ) ॥ पौलस्त्यः, बहुत्वे पुलस्तयः ( ११ ) ॥ नरवाहनः ॥ ( १२ ) ॥ यक्षः (१३) ॥ सासूयं गौरीनिरीक्षणे वामे चक्षुषि नष्टे रुद्रानुनयात्पिङ्गतामगात् । अत एकं पिङ्गमस्य एकपिङ्गः ॥ ( १४ ) ॥ ऐडविडः ॥ डलयोरेकत्वस्मरणाद् 'ऐलविलः' अपि ( १५ ) ॥ श्रीदः ( १६ ) ॥ पुण्यजनेश्वरः ( १७ ) ॥ सप्तदश कुबेरस्य ॥६९॥ ॥अस्येति ॥ चैत्ररथम् ( १ ) ॥ एकं कुबेराक्रीडस्य ॥ ॥ पुत्रस्त्विति ॥ नलकूबरः ( १ ) ॥ एकं कुबेरपुत्रस्य ॥ ॥ कैलास इति ॥ कैलासः ॥ ( १ ) ॥ एकं कुबेरस्थानस्य ॥ ॥ अलकेति ॥ "अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले" ( १ ) ॥ एकं कुबेरपुर्याः ॥ ॥ विमानमिति ॥ "विमानं तु पुष्पकोऽस्त्री नगरी त्वलका प्रभा" इति शब्दार्णवात् पुंस्त्वमपि ॥ "पुष्पकं रीतिपुष्पे च विमाने धनदस्य च । नेत्ररोगे तथा रत्नकंकणे च रसाञ्जने ॥ लोहकांस्ये मृदङ्गारशकट्यां च नपुंसकम्" (१) ॥ एकं कुबेरविमानस्य ॥७०॥ ॥ स्यादिति॥ किंनरः ( १ ) ॥ "अश्व किंपुरुषो लोकभेदकिंनरयोः पुमान्" ( २ ) ॥ तुरंगवदनः ( ३ ) ॥ "मयुर्मृगाश्वमुखयोः" ( ४ ) ॥ चत्वारि किंनरस्य ॥ ॥ निधिरिति ॥ निधिः ( १ ) ॥ ना पुमान् । मध्यमणिन्यायेनोभाभ्यामन्वेति ॥ शेवधिः ( २ ) ॥ द्वे सामान्यनिधेः ॥ ॥ भेदा इति ॥ पद्मः ( १ ) ॥ "शङ्खः कम्बौ निधेर्भेदे स्यान्नख्यामलिकास्थनि । वलये दिनभागे च नागभेदे" ॥ ( १ ) ॥ "पद्मोऽस्त्रियां महापद्मः शङ्खो मकर—कच्छपौ । मुकुन्द—कुन्द—नीलाश्च खर्वश्च निधयो नव" इति शब्दार्णवः ॥ निधिविशेषस्य प्रत्येकम् ॥ ७१ ॥ ॥ इति स्वर्गवर्गविवरणम् ॥ ॥

**द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥**
**वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ॥**

इति व्योमवर्गः ॥ २ ॥

**दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः । प्राच्यपाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः॥१॥**
**उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे । इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत्॥२॥**
**कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् । ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥**

**द्योदिवाविति** ॥ गोशब्दवदोकारान्तो द्योशब्दो वकारान्तो दिव्शब्दश्च स्त्रीलिङ्गे विशेषविधानात् ( १ ) (२) ॥ "**अभ्रं** मेघे च गगने धातुभेदे च काञ्चने" (३)॥ नान्तं क्लीबम् । "**व्योम** वारिणि चाकाशे भास्करस्यार्चनाश्रये" ( ४ ) ॥ "**पुष्करं** गगनपद्मवारिषु" ॥ "**पुष्करं** द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे" ( ५ ) ॥ "**अम्बरं** न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः" ( ६ ) ॥ सान्तम् "**नभः** क्लीबं व्योम्नि पुमान् घने । घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे" ॥ "**नभो** व्योम्नि **नभा** मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च **नभाः** स्मृतः" इति विश्वः ॥ '**नभसम्**'अदन्तमपि । नभसः पुंसि—इत्युणादिवृत्तौ॥ "**नभसस्तु** नदीपतौ । गगने प्रावृषि" ( ७ ) ॥ अन्तरीक्षम् ॥ "**अन्तरिक्षम्**" इति ह्रस्वमध्योपि ( ८ ) ॥ गगनम् ॥ ( ९ ) ॥ "**अनन्तः** केशवे शेषे पुमाननवधौ त्रिषु । **अनन्ता** च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि" ( १० ) ॥ सुरवर्त्म नान्तम् ॥ ( ११ ) ॥ "**खं** स्वः संविदि व्योमनीन्द्रिये । शून्ये बिन्दौ मुखे **खस्तु** सूर्ये" इति हैमः ( १२ ) ॥१॥ ॥ वियत् तकारान्तं क्लीबं साहचर्यात् ॥ "**विष्णुपदं** नभोऽब्जयोः । **विष्णुपदस्तु** क्षीरोदे **विष्णुपदी** सुरापगा ॥ संक्रान्तिद्वारिका चापि" ( १४ ) ॥ आकाशं क्लीबं द्वन्द्वान्ते रूपभेदात् ( १५ ) ॥ विहायः सान्तं क्लीबम् ॥ ( १६ ) ॥ 'वा तु पुंसि—'इति तुशब्दादुत्तरान्वयि ॥ तेन आकाशः, विहायाश्च ॥ "विदुर्विहायसं व्योम पक्षिणश्च विहायसः" इति शाश्वतः ॥ "**विहायाः** शकुनौ पुंसि गगने पुंनपुंसकम्" ॥ **षोडशाकाशस्य** ॥ ॥ ॥

॥ इति व्योमवर्गविवरणम् ॥

---

**दिश इति** ॥ 'दिशः' शकारान्तबहुवचनान्तप्रयोगः ॥ भागुरिमतेन टापि **दिशाः**॥"दिक् तु स्त्रियां **दिशा** दान्ती ककुब् देववधूः पविः" इति शब्दार्णवः ( १ ) ॥ भकारान्तः "**ककुप्** स्त्रियां प्रवेणीदिक्शोभासु चम्पकस्रजि" ॥ ( २ ) ॥ "**काष्ठा** दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्" ॥ ( ३ ) ॥ **आशा** तृष्णादिशोः स्त्रियाम्" ( ४ ) ॥ "**हरिद्दिशि** स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे" ( ५ ) ॥ ता इत्यनेन स्त्रीत्वं व्यनक्ति ॥ दिशां बहुत्वाद्बहुवचनम् ॥ **पञ्च दिशः** ॥ **प्राच्येति** ॥ प्राची ( १ ) ॥ अपाची ॥ अवाची—इत्यपपाठ एव । अवपूर्वस्याञ्चतेरधोमुखीभावे वृत्तेः ॥ स्वामी त्ववशब्दस्य मध्यार्थतामाह ( १ ) ॥ प्रतीची ( १ ) ॥ पूर्वदक्षिणेत्यत्र "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" (वा० ५ ! ३ । २८ ) ॥१॥ "**उत्तरा** दिग्विशेषे च स्नुषायामर्जुनस्य च" ( १ ) ॥ प्रत्येकं द्वे द्वे **चतसृणाम्** ॥ **दिश्यमिति** ॥ दिश्यम् ( १ ) ॥ **एकं दिग्भवस्य** ॥ ॥ **इन्द्र इति** ॥ एवं च प्राच्यादीनामैन्द्रीत्यादिनामानि इन्द्रादीनां प्राचीपतिरित्यादीनि नामानीति भावः ॥ **दिक्पतीनामेकैकम्** ॥ **ऐरावत इत्यादि** ॥ "**पुण्डरीकं** सिताम्बुजे । सितच्छत्रे भेषजे च **पुण्डरीकोऽ**ग्निदिग्गजे । सहकारे गणधरे राजिलाहौ गजज्वरे । कोषकारान्तरे व्याघ्रे" ( १ ) ॥ "**वामनोऽ**प्यतिखर्वे च त्रिषु पुंसि तु दिग्गजे । हरावङ्कोटवृक्षे" ( १ ) ॥ "**कुमुदं** कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे" ॥ ( १ ) ॥ "**अञ्जनं** कज्जले चाक्तौ[2] सौवीरे च रसाञ्जने । पुंसि ज्येष्ठादिग्गजयो**रञ्जना** वानरीभिदि । **अञ्जनी**

---

१—अभ्रशब्दे बसंयुक्तोऽपि भकार इति मुकुटः ॥ २ अक्तौ अञ्जनक्रियायाम् ॥

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः। करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात्॥४॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती। क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्॥५॥
अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम्। अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः॥६॥
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत्। घनजीमूतमुदिरजलमुग्धूमयोनयः॥७॥
कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम्। स्तनितं गर्जितं मेघनिर्घोषे रसितादि च॥८॥
शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा। तडित्सौदामनीविद्युच्चञ्चलाचपला अपि॥९॥

लेप्यनार्यां च" (१) ॥ ३ ॥ "पुष्पदन्तस्तु दिग्नागभेदे विद्याधरान्तरे" (१) ॥ "सार्वभौमस्तु दिग्गजे चक्रवर्तिनि" (१) ॥ "सुप्रतीको दिग्गिभे, शोभनावयवे त्रिषु" (१) ॥ **दिग्गजानामेकैकम्** ॥ ॥ **करिण्य इति** ॥ अभ्रमुः स्त्री द्वन्द्वनिर्देशात् (१) ॥ "कपिला रेणुकायां च शिंशपागोविशेषयोः। पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ॥ नानले वासुदेवे च मुनिभेदे च कुक्कुरे" (१) ॥ "पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके। निधिभेदे कपावग्नौ पुंसि स्यात्कपिलेऽन्यवत् ॥ स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च। नाडीभेदे कर्णिकायाम्" (१) ॥ "अनुपमस्तु भवेदयम्। उपमारहितेऽनुपमेस्याम्" (१)[1] ॥ ४ ॥ ॥ ताम्रकर्णी (१) ॥ "शुभ्रदन्ती सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति" ॥ "शुभदन्ती" इति वा पाठः (१) ॥ अङ्गना (१) ॥ अञ्जनावती (१) ॥ **क्रमेणैरावतादीनां हस्तिनीनामेकैकम्** ॥ ॥ **क्लीबेति** ॥ क्लीबाव्ययमिति कर्मधारयोऽव्ययीभावत्वसूचनार्थः ॥ "अव्ययीभावश्च—" (१।१।४१, २।४।१८।) इति सूत्राभ्यां क्लीबत्वाव्ययत्वयोर्विधानात् (१) ॥ विदिक्, शान्ता ॥ सैव प्रदिक् ॥ "यान्यासामन्तरालानि प्रदिशो विदिशश्च ताः" इत्यमरमाला (२) ॥ **द्वे अग्न्यादिकोणस्य** ॥५॥ ॥ **अभ्यन्तरमिति** ॥ अभ्यन्तरम् (१) ॥ अन्तरालम् (२) ॥ **द्वे मध्यमात्रस्य** ॥ ॥**चक्रेति** ॥ "चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डले" (१) ॥ "मण्डलं देशबिम्बयोः। भुजंगभेदे परिधौ शुनि द्वादशराजके। संघाते.कुष्ठभेदे च" (२) ॥ **द्वे मण्डलाकारेण परिणतसमूहस्य** ॥ ॥ **अभ्रमित्यादि** ॥ "अभ्रं मेघे च गगने धातुभेदे च काञ्चने" (१) ॥ "मेघो मुस्ताजलदयोः पुमान्" (२) ॥ वारिवाहः (३) ॥ स्तनयित्नुः (४) ॥ "वलाहको गिरौ मेघे दैत्यनागप्रभेदयोः" (५) ॥६॥ ॥ "धाराधरोऽसिमेघयोः" (६)॥ 'जलधरः' तोयधरादीनामप्युपलक्षणम् ॥ "तोयधरो मुस्तामुनिपण्णौषधीघने" (७) ॥ तडित्वान् (८) ॥ 'वारिदः' जलदतोयदादीनामप्युपलक्षणम्। "जलदो मुस्तके मेघे" ॥ "तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्" (९) ॥ अम्बुभृत् (१०) ॥ "घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे ॥ त्रिषु सान्द्रे दृढे" (११) ॥ "जीमूतो वासवेऽम्बुदे। घोषकेऽद्रौ भृतिकरे" (१२) ॥ "मुदिरः कामुके मेघे" (१३)॥ जलमुक् चान्तः (१४) ॥ धूमयोनिः (१५) ॥ यद्यपि शब्दार्णवे "मेघास्तु त्रिविधास्तत्र वह्निजा धूमयोनयः। निःश्वासजास्तु जीमूतास्ते ज्ञेया जीवरूपिणः ॥ यज्ञजास्तु घना घोराः पुष्करावर्तकादयः" इति विशेषपरत्वमुक्तम्, तथाप्यन्यत्रापि वृत्तिर्न विरुद्धा ॥ **पञ्चदश मेघस्य** ॥ ७ ॥ ॥ **कादम्बिनीति** ॥ कादम्बिनी (१) ॥ मेघमाला (२) ॥ **द्वे मेघपङ्क्तेः** ॥ **त्रिष्विति** ॥ अभ्रियम् ॥ स्त्रियामभ्रिया (१) ॥ **एकं मेघभवस्य** ॥ ॥ **स्तनितमिति** ॥ स्तानितम् (१) ॥ गर्जितम् (२) ॥ मेघनिर्घोषः (३) ॥ रसितम् ॥ आदिना **ध्वनित—ह्राद—रासा—ऽऽदयः** (४)॥ **चत्वारि मेघध्वनेः** ॥८॥ ॥ **शंपेति** ॥ शंपा (१)॥ "शतह्रदा स्त्रियां वज्रे सौदामन्यां च कीर्तिता" (२)॥ "ह्रादिनी वज्रतडितोः" (३)॥ ऐरावती (४)॥ क्षणप्रभा॥ (५)॥ तडित् ॥ डलयोरेकत्वात् **'तलित्'** अपि। "दूरेचित्सं तलिदिवातिरोचसे" इति मन्त्रः (६) ॥ **'सौदामिनी'** इत्यपपाठः ॥ "सौदामन्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम्" (७) ॥ "विद्युत् तडिति संध्यायां स्त्रियां त्रिषु तु निष्प्रभे" (८) ॥ "चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलश्चपलेऽनिले" (९) ॥ "चपला कमलाविद्युत्पुं-

---

[1] मूले तु अनुपमा च पिङ्गला चेति द्वन्द्वेऽल्पाच्तरत्वात पिङ्गलायाः पूर्वनिपातोऽङ्गीकरणीयः। तथा च वामनस्य करिणी अनुपमा बोध्या ॥ गजनामनिर्देशे वा **'कुमुदाञ्जनवामनाः'** इति हलायुधोक्तक्रमो भवेत् ॥

स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः । इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् ॥ १० ॥
वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ । धारासंपात आसारः शीकरोऽम्बुकणाः स्मृताः ॥११॥
वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् । अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च । हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः। अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः १४
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः । कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु १५॥

श्रलीपिप्पलीषु च । नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले" ( १० ) ॥ **दश विद्युतः** ॥ ९ ॥ ॥ **स्फूर्जथु-रिति** ॥ स्फूर्जथुः । ( १ ) ॥ वज्रनिर्घोषोऽशनिशब्दः ॥ '**वज्रनिष्पेषे**' इति पाठे निष्पेषशब्दस्तद्गुल्यशब्दपरः ॥ संघट्टमात्रपरः-इत्यन्ये॥ **एकं वज्रध्वनेः॥ मेघेति॥** ॥मेघज्योतिः (१)॥इरंमदः(२)॥ मेघेत्युपलक्षणम् । तेन वाडवोऽपि ॥ अत एव "मेघाग्न्यादिरिरंमदः" इति शब्दार्णवः ॥ **द्वे वज्राग्नेः॥** ॥ **इन्द्रेति** ॥ इन्द्रायुधम् (१)॥ शक्रधनुः ( २ ) ॥ **द्वे इन्द्रधनुषः** ॥ ॥ **तदिति** ॥ तदिन्द्रधनुरुत्पातादिना ऋजु अवक्रं सद्रोहितं स्यात् ॥ "**रोहितं** रुधिरे धीर ऋजुशक्रशरासने । **रोहितो** मीनमृगयोर्भेदे रोहितकद्रुमे" इति विश्वः(१)॥ **एकम् ऋजोरिन्द्रधनुषः॥** १०॥ **वृष्टिरिति** ॥ वृष्टिः ( १ ) ॥ वर्षम् ॥ वर्षणमपि ॥ " अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति **वर्षणम्** " इति शब्दार्णवः॥ "**वर्षस्तु** समाद्वीपांशवृष्टिषु । वर्षवरेऽपि **वर्षास्तु** प्रावृषि" इति हैमः (२)॥ **द्वे वृष्टेः** ॥ ॥ **तद्विघात इति** ॥ तस्या वृष्टेर्विघाते द्वौ । अवग्राहः ( १ ) ॥ "**अवग्रहस्तु** ज्ञानभेदे गजालिके । प्रतिबन्धे वृष्टिरोधे" ( २ )॥ **द्वे वृष्टिविघातस्य** ॥ ॥ **धारेति** ॥ धारासंपातः ( १ ) ॥ "**आसारः** स्यात्प्रसरणे वेगवर्षे सुहृद्बले" इति विश्वः । ( २ ) ॥ **द्वे महावृष्टेः** ॥ ॥ **शीकर इति** ॥ **स्मृता** वायुना इतस्ततः प्रेरिता अम्बुकणाः शीकरः तालव्यादिः । "शम्बशीकरपांशवः" इति तालव्यप्रकरणे ऊष्मविवेकात् । "**शीकरं** सरले वातस्रुताम्बुकणयोः पुमान्" ॥ '**सीकरः**' दन्त्यादिरयम् इति धनपालादयः ( १ ) ॥ **एकं वातप्रक्षिप्तजलकणस्य** ॥ ११ ॥ ॥ **वर्षोपल इति** ॥ वर्षोपलः ( १ ) ॥ "वर्षोपलस्तु **करका करकोऽपि** च दृश्यते" ॥ "**करकस्तु** पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ"(२)॥ **द्वे वर्षोपलस्य 'ओला' इति ख्यातस्य** ॥ ॥ **मेघेति** ॥ मेघच्छन्ने मेघान्धकारिते । अह्नीति रात्रेरप्युपलक्षणम् । रात्रावपि दुर्दिनम् । "**दुर्दिनं** जलदध्वान्तम्" इति रत्नकोषः ॥ "**वार्दलं** दुर्दिने मेघे" इति ॥ **एकं मेघान्धकारितस्य** ॥ ॥ **अन्तर्धेति** ॥ अन्तर्धा स्त्रियाम् ( १ ) ॥ व्यवधा स्त्रियाम् ( २ ) ॥ अन्तर्धिः पुंसि विशेषविधेः ( ३ ) ॥ अपवारणम् ( ४ ) ॥ १२ ॥ अपिधानं क्लीबं द्वन्द्वनिर्देशात् ( ५ ) ॥ तिरोधानं क्लीबं द्वन्द्वनिर्देशात् ( ६ ) ॥ पिधानं क्लीबं द्वन्द्वनिर्देशात् (७)॥ आच्छादनम्॥ '**छदनम्**' अपि (८) ॥ **अष्टावन्तर्धानस्य** ॥ ॥ **हिमांशुरित्यादि** ॥ हिमांशुः ( १ ) ॥ चन्द्रमाः सान्तः पुंसि, साहचर्यात् ॥ "**मास्**-शब्दः केवलोऽपीह संमतो बहुदृश्वनाम्"-इत्युत्पलिनी ॥ "**माश्चन्दमासयोः** पुमान्" ( २ ) ॥ "**चन्द्रोऽम्बुकाम्ययोः** । स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये मेचकेऽपि च" इति हैमः ॥ रेफशून्योऽपि ॥ " हिमांशुश्चन्द्रमाश्चन्द्रः **शशी चन्दो हिमद्युतिः**" इति शब्दार्णवात् ( ३ ) ॥ इन्दुः ( ४ ) ॥ कुमुदबान्धवः ॥ ( ५ ) ॥ १३ ॥ "**विधुः** शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" इति विश्वः ( ६ ) ॥ सुधांशुः (७) ॥ शुभ्रांशुः ( ८ ) ॥ ओषधीशः ( ९ ) ॥ निशापतिः ( १० ) ॥ "**अब्जोऽस्त्री** शङ्खे ना निचुले धन्वन्तरौ हिमकिरणे । क्लीबं पद्मे" इति मेदिनी ( ११ ) ॥ "**जैवातृकः** पुमान् सोमे कृपकायुष्मतोस्त्रिषु" ( १२ ) ॥ "**सोमस्त्वो**षधीतद्रसेन्दुषु । दिव्यौषध्यां घनसारे समीरे पितृदैवते ॥ वसुप्रभेदे सलिले वानरे किंनरेश्वरे ॥" इति हैमः ॥ **सोमा** नकारान्तोऽपि ( १३ ) ॥ ग्लौः ( १४ ) ॥ मृगाङ्कः ( १५ ) ॥ कलानिधिः (१६) ॥ १४ ॥ "**द्विजराजः** शशधरे सुपर्णेऽनन्तभोगिनि" इति विश्वः (१७) ॥ शशधरः (१८) ॥नक्षत्रेशः (१९) ॥ क्षपाकरः॥ (२०)॥ **विंशतिश्चन्द्रस्य**॥ ॥**कलेति** ॥ चन्द्रस्य षोडशो भागः॥"**कलं** त्वजीर्णरेतसोः । अव्यक्तमधुरध्वाने **कला** स्यादंशशिल्पयोः । कलने मूलैर्वृद्धौ षोडशांशे विधोरपि" इति हैमः॥ **एकं चन्द्रषोडशांशस्य**॥ ॥ **बिम्ब इति** ॥ "**बिम्बं** तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले" इति ( पवर्गमध्ये ) हैमः ( १ ) ॥ "**स्यान्मण्डलं** द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजंगभेदे शुनि मण्डलः स्यात्" इति विश्वः ॥ स्त्रियां

भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके। चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता १६
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्।सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः १७
अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं महिका चाथ हिमानी हिमसंहतिः॥१८॥
शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः।तुषारः शीतलः शीतो हिमः सप्तान्यालिङ्गकाः १९
ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसंभवः । मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥२०॥
नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्। दाक्षायण्योऽश्विनीत्यादि ताराअश्वयुगाश्विनी २१

मण्डली ॥ ( २ ) ॥ द्वे रविचन्द्रमण्डलस्य ॥ १५ ॥ भित्तम् ॥ १ ॥ शकलमिति ॥ "शकलं त्वचि खण्डे च रागवस्तुनि वल्कले । " इति विश्वः ॥ ( २ ) ॥ "खण्डोऽर्धं ऐक्षवे । मणिदोषे च" इति हैमः । "खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः । खण्डः पानान्तरे भेदे" ( ३ ) अर्धः विशेष्यनिघ्नः ( ४ ) चत्वारि खण्डमात्रस्य ॥अर्धमिति ॥ समप्रविभागकोऽर्धशब्दः क्लीबमेव (१) ॥ चान्द्रिकेति ॥ "चन्द्रिका चन्द्रिमा चार्वी" इति शब्दार्णवः ( १ ) ॥ "कौमुदः स्यात्कार्त्तिकके चन्द्रिकायां तु कौमुदी" ( २ ) "ज्योत्स्ना चन्द्रातपेऽपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता" ( ३ ) त्रीणि ज्योत्स्नायाः ॥ प्रसाद इति ॥ "प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे" इति हैमः ( १ ) ॥ प्रसन्नता ॥ ( २ ) ॥ द्वयं नैर्मल्यस्य ॥ १६ ॥ कलङ्कोऽङ्केति ॥" कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" ( १ ) ॥ "अङ्को भूषारूपकलक्ष्मसु । चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः" ( २ ) ॥ "लाञ्छनं लक्ष्मसंज्ञयोः " इति हैमः ( ३ ) ॥ "चिह्नं लक्ष्मपताकयोः" इति मेदिनी ( ४ ) ॥ "लक्ष्म प्रधानचिह्नयोः" ॥ ५ ॥ "लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् " ॥ " ज्योतिष्मत्यां च सारस्यां स्त्री, क्लीबे नामचिह्नयोः । स्याद्यक्षे लक्ष्मणः पुंसि सौमित्रौ श्रीमति त्रिषु" इति रभसात् ॥ ६ ॥ षट् चिह्नस्य ॥ सुषमेति ॥ "सुषमं रुचिरे समे । सुषमा तु स्यात्परमशोभायां कालभिद्यपि" ॥ ( १ ) ॥ उत्कृष्टशोभाया एकम् ॥शोभेति । "शोभा कान्तीच्छयोर्मता" ॥ शुम्भापि बोध्या ॥ (१) ॥ " कान्तिः शोभेच्छयोः स्त्रियाम्" ॥(२)॥द्युतिस्तु शोभादीधित्योः"॥द्युती च॥द्युत्तिः॥(३)॥"छविस्तु रुचिशोभयोः" ॥ (४)चत्वारि शोभायाः॥१७॥अवश्याय इति॥"अवश्यायो" हिमे दर्पे"॥(१)॥(२)नीहारः"तुषारो हिमदेशयोः । शीकरे हिमभेदे च"॥(३)॥तुहिनम्॥(४)॥ हिममिति । "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गं स्यात्" ॥(५)॥प्रालेयम्॥ (६) ॥ महिका ॥ " मिहिका" इति वा पाठः ॥ ( ७) ॥ धूमिका धूममहिषी च बोध्या ॥ सप्त हिमस्य ॥ अथेति ॥ हिमसंहतिः ॥ ( २ ) ॥ महद्धिमम् । " हिमारण्ययोर्महत्त्वे' ( वा० ४।१।४९) इति ङीषानुकौ ॥ हिमानी( १ ) ॥ द्वे हिमसमूहस्य ॥१८॥ शीतामिति॥ गुणे स्पर्शविशेषे शीतम् ॥ " शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना" एकं शीतगुणस्य ॥ तद्वादिति ॥ सुषीमादयः सप्त तु तद्वाञ्शीतगुणवानर्थो येषां ते तद्वदर्थाः । ते च अन्यलिङ्गका विशेष्यलिङ्गाः ॥ "सुषीमः शीतले चारौ त्रिषु, ना पन्नगान्तरे" ॥ ( १ ) ॥ "शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु" ॥ ( २ )॥ "जडो मूर्खे हिमाघाते जडा स्याच्याछूकशिम्बिका"॥(३)॥"शीतलं पुष्पकाशीशे शैलजे मलयोद्भवे । पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिङ्गकम्"॥(५॥शीतः॥(६)॥सप्त शीतलद्रव्यस्य ॥१९॥ ध्रुव इति ॥ "ध्रुवः शङ्खे हरौ विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि ध्रुवं खेऽजस्रतर्कयोः । स्त्री मूर्वाड्योः शालपर्ण्यां गीतिस्रुग्भेदयोस्त्रिषु । स्थिरे नित्ये निश्चिते च ध्रुवं क्लीबं प्रकीर्तितम्" ॥ ( १ ) ॥ ( २ ) ॥ द्वे ध्रुवस्य ॥ अगस्त्य इति ॥ "अगस्त्यः स्यात्कुम्भयोनौ वङ्गसेनतरावपि" ॥ "अथागस्त्यः कुम्भयोनिरगास्तिः कलशीसुतः" इति शब्दार्णवः ॥ ( १ ) ॥ कुम्भसंभवः ॥ ( २ ) ॥ मैत्रावरुणिः ॥ वारुणिरपि । "मित्रावरुणयोः सूनुरौर्वशेयश्च वारुणिः" इति व्याडिः ॥ अणपि दृश्यते । "और्वशेयागस्त्यमैत्रावरुणास्त्वाग्निमारुताः" इति नामानिधानात् ॥ ( ३ ) ॥ त्रीण्यगस्त्यस्य ॥ अस्यैवेति ॥ अस्यैव पत्नी 'लोपामुद्रा' ॥( १ )॥ एकम् अगस्त्यपत्न्याः ॥ २० ॥ नक्षत्रमिति ॥ ( १ ) ॥ "ऋक्षस्तु स्यान्नक्षत्राच्छभल्लयोः । महीधरविशेषे च

**राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठयासमा धनिष्ठा स्युः प्रोष्ठपदा भद्रपदाः स्त्रियः२२**
**मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी । इन्वकास्तच्छिरोदेशे तारका निवसन्ति याः ॥२३॥**
**बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः । जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः २४**
**शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः । अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः२५**

शोणके लक्ष्यवेधने'' इति हैमः ॥ ( २ ) ॥ ''भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद्भृगुनन्दने । भवने च तथा भः स्यात् भ्रमरो भः प्रकीर्तितः'' इत्येकाक्षरः ॥ ( ३ ) ॥ तारा ॥ तारोऽपि ॥ ''नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इत्यपि'' इति व्याडिः ॥''तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम् ॥ स्त्री बुद्धदेवताभेदे वालिगीर्पतिभार्ययोः । त्रिलिङ्गोऽत्युच्चशब्दे च'' ॥(४) ॥ ''नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च'' इति शाश्वतः॥''तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि। कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु''॥(५)॥उडु रूपभेदात्क्लीबम्। विशेषविधेः स्त्रियां तु उडुः उडू, उडव इत्यादि धेनुवत्॥षड् नक्षत्रसामान्यस्य। **दाक्षायण्य इति** । अश्विन्याद्याः सप्तविंशतितारका दाक्षायण्य उच्यन्ते ॥ ''दाक्षायणी त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम्''॥एकमश्विन्यादिभानाम्॥**अश्विन्यादितारणामेकम्** ॥ **अश्वयुगिति**॥अश्वयुग् जान्ता स्त्रीसाहचर्यात् ॥ ( १ ) अश्विनी ॥ (२) ॥ **द्वे अश्विन्याः** ॥ २१ ॥ **राधेति** ॥ ''राधा विद्युद्विशाखयोः । विष्णुक्रान्तामलक्योश्च गोपीवैश्यविशेषयोः'' इति हैमः ॥ ( १ ) ॥ ''विशाखो याचके स्कन्धे विशाखाभे कठिल्लके'' इति हैमः ॥ ( २ ) ॥ **द्वे विशाखायाः** ॥ **पुष्ये त्विति** ॥ ''पुष्यः कलियुगे स्मृतः । मासनक्षत्रयोर्भेदे'' ॥ ( १ ) ॥ सिध्यः ॥ २ ॥ ''तिष्यो नक्षत्रभेदे स्यात्कलौ धात्र्यां च योषिति'' ॥ **त्रीणि पुष्यस्य** ॥ **श्रविष्ठयेति** । श्रविष्ठा ॥ १ ॥ धनिष्ठा ॥ २ ॥ सा श्रवित्यष्ठया समेत्यन्वयः ॥ **द्वे धनिष्ठायाः** ॥ **स्युरिति** ॥प्रोष्ठपदाः(१) भद्रपदाः (२) द्वे(२) **पूर्वभद्रपदोत्तरभद्रपदानाम्**॥२२॥**मृगेति**॥ मृगशीर्षं रूपभेदात् क्लीबम् ॥ ( १ ) ॥ मृगशिरोऽस्य सान्तं क्लीबे साहचर्यात् । बोपालितः स्त्रीत्वमप्याह ॥ मृगोऽपि ॥ ''मृगशीर्षं हस्तिजातौ मृगः पशुकुरङ्गयोः'' इति व्याडिः ॥ ( २ ) ॥ आग्रहायणी ॥ ३ ॥ **त्रीणि मृगशिरसः** ॥ **इन्वका इति** ॥ इन्वकाः ॥ ''इल्वलाः'' इति पाठे **इल्वलास्तारकाभेदेऽपील्वलो** मत्स्यदैत्ययोः'' ॥ ( १ ) ॥ **मृगशीर्षशिरोदेशस्थानां पञ्चानां** ''**स्वल्पतारकाणामेकम्** ॥ २३ ॥ **बृहस्पतिरित्यादि** ॥ बृहस्पतिः । ''बृहतांपतिः'' इत्यपि ॥ ( १ ) ॥ सुराचार्यः ॥ ( २ ) ॥ गीर्पतिः॥ ॥ गीःपतिः ॥ गीष्पतिः ॥ ( ३ ) ''धिषणस्त्रिदशाचार्ये धिषणा तु धियां मता'' ॥ ( ४ ) ॥ ''गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुर्जरे चापि'' इति हैमः ॥ ( ५ ) ॥ ''जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि'' इति हैमः ॥ ( ६ ) ॥ आङ्गिरसः, आङ्गिरसौ, अङ्गिरसः ॥ ( ७ ) ॥ वाचस्पतिः 'वाक्पतिः' अपि ॥ ( ८ ) ॥ चित्रशिखण्डिजः ॥( ९ ) **नव बृहस्पतेः** ॥ २४ ॥ **शुक्र इति** ॥ शुक्रः ॥ ( १ )॥ दैत्यगुरुः ॥ ( २ )॥ '' काव्यं ग्रन्थे पुमाञ्शुक्रे काव्या स्यात्पूतनाधियोः '' ॥ ( ३) ॥ उशना सान्तः । सौ त्वनङ् । उशना उशनसौ उशनसः ॥ ( ४ ) ॥ भार्गवः । बहुत्वे तु भृगवः ॥ ''भार्गवः

१—लिङ्गज्ञानं तेषामन्यतोऽवधार्यम् । तथा च तन्त्रान्तरे—''हस्तस्वातिश्रवणा अक्लीबे, मृगशिरो न पुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ, मूलं त्वस्त्री, स्त्रियः शेषाः'' इति ॥ वचनज्ञानं कर्मप्रदीपानुसारेण-तथाहि-''आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च । आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात्सदा । द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ॥'' इति ॥ एवं चाद्याश्वतस्रः स्त्रियां बहुत्वे । मृगशिरोऽस्त्रियामेकत्वे,आर्द्रा स्त्र्येकत्वे, पुनर्वसु पुष्यौ पुंस्येकत्वे, आश्लेषाद्ये स्त्रीबहुत्वे, फल्गुन्यौ स्त्रीद्वित्वे, हस्तो मिथुनैकत्वे, चित्रा स्त्र्येकत्वे, स्वातिर्मिथुनैकत्वे, विशाखाद्ये स्त्रीबहुत्वे, ज्येष्ठा स्त्र्येकत्वे, मूलमस्त्रियामेकत्वे, आषाढाद्वये स्त्रीबहुत्वे, श्रवणो मिथुनैकत्वे, धनिष्ठाद्ये स्त्रीबहुत्वे, भाद्रपदाद्वयं स्त्रीद्वित्वे,रेवती स्त्र्येकत्वे इति निष्कर्षः॥ मुकुटस्तु अश्विनीभरणीरोहिणीमृगशिरआर्द्रापुष्याश्लेषाहस्तचित्रास्वात्यनुराधाज्येष्ठामूलाषाढाश्रवणधनिष्ठाशतभिषग्रेवतीनामेकवचनान्तत्वम् पुनर्वसुफल्गुनीविशाखाभाद्रपदानां द्विवचनान्तत्वम्, कृत्तिकामघयोर्बहुवचनान्तत्वमाह—तन्नोक्तार्षवाक्यविरोधः स्पष्ट एव ॥ अस्य कात्यायनवाक्यस्य होममात्रविषयत्वम् जुहुयात्यदोपादानात् कल्पनीयम् ॥

**रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ । तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः॥२६**
**सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः। राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ २७ ॥**
**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः । भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥**
**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः । विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥**
**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः । विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥**

परशुरामे सुधन्वनि मतङ्गजे । दैत्याचार्ये भार्गवी तु कृष्णदूर्वोमयोः स्त्रियाम् ” ॥ ( ५ ) ॥ “ कविर्वाल्मीकिशुक्रयोः । सूरौ काव्यकरे पुंसि खलीने स्यात्तु योषिति ” ॥ ( ६ ) ॥ षट् शुक्रस्य ॥ अङ्गारक इति ॥ “अङ्गारकः कुजेऽपि स्यादुल्मुकांशे कुरुण्टके । भवेदङ्गारिका चेक्षुकाण्डे किंशुककोरके” ॥ ( १ ) ॥ “कुजा भवान्यां वृक्षे तु कुजो नरकभौमयोः ॥ २ ॥ “भौमो मङ्गलदैत्ययोः ” इति हैमः ॥ ( ३ ) ॥ लोहिताङ्गः ॥ ( ४ ) ॥ महीसुतः ॥ ( ५ ) ॥ पञ्च मङ्गलस्य ॥ २५ ॥ रौहिणेय इति ॥ “रौहिणेयो भवेद्वत्से रेवतीरमणे बुधे ” इति विश्वः ॥ ( १ ) ॥ “बुधः सौम्ये कवौ” ॥ ( २ ) ॥ “सौम्यः सोमात्मजेऽतुग्रे मनोज्ञे सोमदैवते । सौम्याः पुनर्मृगशिरःशिरःस्थाः पञ्च तारकाः” ॥ ( ३ ) ॥ त्रीणि बुधस्य ॥ समाविति ॥ सौरिः पुमान् द्वन्द्वान्तर्गतत्वात् ॥ सौरः अपि ॥ ( १ ) ॥ शनैश्चरः ॥ “शनिसौरिशनैश्चराः” इति रभसाच्छनिरपि ॥ शनैश्चरे ‘मन्दः’ इति वाचस्पतिः ॥( २ ) ॥ द्वे शनेः ॥ तम इति ॥ तमः सान्तं क्लीबं रूपभेदात् ॥ अदन्तः पुँल्लिङ्गोऽपि ॥ “ स्वर्भानुस्तु तमो राहुः ” इति पुंस्काण्डे रत्नकोषामरमालयोर्दर्शनात् ॥ ( १ ) ॥ राहुः ॥ ( २ ) ॥ स्वर्भानुः ॥ ३ ॥ सैंहिकेयः ॥ ( ४ ) ॥ विधुतुदः ॥ ( ५ ) ॥ पञ्च राहोः ॥ २६ ॥ केतुः ॥ “केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि” ॥ ( १ ) ॥ शिखी ॥ “शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे चाश्वे शिखावत्यन्यलिङ्गकः” इति स्वामी ॥ ( २ ) द्वे केतोः ॥ सप्तेति ॥ “मरीचिरङ्गिरा आत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ” ॥ चित्रशिखण्डिनः ( १ ) ॥ सप्तर्षीणामेकम् ॥ राशीनामिति ॥ “ लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु ” ॥ एकम् राश्युदयस्य ॥ ते त्विति ॥ ते राशयः । मेषवृषौ आदी येषां ते[१] ॥ प्रत्येकमेकम् ॥ २७ ॥ सूरेति ॥ दन्त्यादिः सूरः ॥ “ शूरश्चारुभटे सूर्ये ” इति विश्वः ॥ “सुभटे शूरः सूर्ये च दन्त्योऽपि ” इत्यूष्मविवेकः ॥ ( १ ) ॥ “ सूर्योऽर्कपर्णे तपने स्त्री तद्भार्यौषधीभिदोः ” ॥ ( २ ) ॥ नान्तः “अर्यमा पितृदैवते । तरणौ सूर्यभक्तायाम् ” ॥ ( ३ ) “ आदित्यस्त्रिदशार्कयोः ” ॥ ( ४ ) ॥ द्वादशात्मा नान्तः पुमान् ॥ ( ५ ) ॥ दिवाकरः ॥ ( ६ ) ॥ “ भास्करो वह्निसूर्ययोः ” ॥ ( ७ ) ॥ अहस्करः ॥ ( ८ ) ब्रध्नः ॥ ( ९ ) प्रभाकरः ( १० ) बिभाकरः ( ११ ) ॥ २८ ॥ “ भास्वान्दीप्ते रवौ ” ॥ ( १२ ) ॥ विवस्वान्विबुधे सूर्ये तन्नगर्यां विवस्वती” ॥ ( १३ ) ॥ सप्ताश्वः ॥ ( १४ ) ॥ हरिदश्वः ॥ ( १५ ) ॥ उष्णरश्मिः पुमान् ॥ ( १६ ) ॥ विकर्तनः ॥ ( १७ ) ॥ “अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये बिडौजसि” ॥ ( १८ ) ॥ “ परा मार्ताण्डमास्यत् ” । “ पुनर्मार्ताण्डमाभरत् ” इत्यादिमन्त्राद्दीर्घोऽपि ॥ “अथ मार्तण्डमार्ताण्डौ ” इति नामनिधानाच्छब्दार्णवाच्च ॥ “मार्तण्डः क्रोडसूर्ययोः” ॥ ( १९ ) ॥ “ मिहिरः सूर्यबुद्धयोः ” ॥ ( २० ) ॥ “ अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ अरुणातिविषाश्यामामाञ्जिष्ठात्रिवृतासु च ” ॥ ( २१ ) ॥ पूषा पूषणौ पूषणः ॥ ( २२ ) ॥ २९ ॥ द्युमणिः ॥ ( २३ ) ॥ “ तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्” ॥ ( २४ ) ॥ “ मित्त्रं सुहृदि न द्वयोः । सूर्ये पुंसि ” ॥ ( २५ ) ॥ “ चित्रभानुः पुमान्वैश्वानरे चाहस्करेऽपि च ” ॥ ( २६ ) ॥ “ विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः ” ॥ ( २७ ) ॥ “ विभावसुः पुमान्सूर्ये

१—ते राशयः “मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके । तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकौ ” इति स्वाम्युक्ता ज्ञेयाः ॥

**भानुर्हंसः सहस्रांशुस्तपनः सविता रविः। माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ३१॥**
**सूर्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः । परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥ ३२ ॥**
**किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः।भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ३३**
**स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः।रोचिःशोचिरुभे क्लीबे प्रकाशो द्योत आतपः ३४**

हारभेदे च पावके" ॥ ( २८ ) ॥ ग्रहपतिः ॥ ( २९ ) ॥ त्विषांपतिः ॥ ( ३० ) ॥ अहर्पतिः ॥ ( ३१ ) ॥ ३० ॥ "भानुरंशौ रवौ दिने" ॥ ( ३२ ) ॥ "हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मनि मत्सरे[1] ॥ योगिभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरंगमप्रभेदे च" ॥ ( ३३ ) ॥ सहस्रांशुः ॥ ( ३४ ) ॥ "तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे" ॥ तापनोऽपि "तपनस्तापनो रविः" इति संसारावर्तात् ॥ ( ३५ ) ॥ सविता ॥ ( ३६ ) ॥ रविः ॥ ( ३७ ) ॥ चण्डांशुः, अपि ॥ "चण्डांशोः पारिपार्श्विकाः" इति वक्ष्यमाणत्वात् ॥ सप्तत्रिंशत् सूर्यस्य ॥ माठर इति ॥ "माठरो व्यासविप्रयोः । सूर्यानुगे" ( १ ) ॥ पिङ्गलः ॥ ( १ ) ॥ "दण्डः सैन्ये दमे यमे । मानव्यूहप्रभेदेष्वश्वेऽर्कानुचरे मथि । प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः" ॥ ( १ ) ॥ सूर्यपार्श्वस्थानां माठरादित्रयाणामेकैकम्[2] ॥ ३१ ॥ सूर्येति ॥ सूर्यसूतः ॥ ( १ ) ॥ अरुणः ॥ ( २ ) ॥ अविद्यमानावूरू यस्य अनूरुः ॥( ३ ) ॥ काश्यपिः पुमान् साहचर्यात् ॥ ( ४ ) ॥ गरुडाग्रजः ॥ ( ५ ) ॥ पञ्च सूर्यसारथेः ॥ परिवेष इति ॥ "परिवेषः स्यात्परिधौ परिवेषणे" इति मूर्धन्यान्ते रुद्रः ॥ "वेष्टने परिवेशः स्याद्भानोः सविधमण्डले" इति तालव्यान्ते रभसः ॥ ( १ ) ॥ पुमान् "परिधिर्यज्ञियतरोः शाखायामुपसूर्यके" ( २ ) ॥ उपसूर्यकं क्लीबं द्वन्द्वनिर्देशात् ॥ ( ३ ) ॥ मण्डलम् ॥ ( ४ ) ॥ "मण्डलं परिवेशश्च परिधिश्चोपसूर्यकम्" इति भागुरिः ॥ चत्वारि चन्द्रसूर्ययोरुत्पातादिजातमण्डलस्य ॥ ३२ ॥ किरण इति ॥ किरणः ( १ ) ॥ "उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः" ॥ (२) ॥ "मयूखः किरणेऽपि च । ज्वालायामपि शोभायाम्" ॥ ( ३ ) "अंशुर्लेशे[3] रवौ रश्मौ" इति विश्वः ॥ "अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ" ॥ ( ४ )॥ "गभस्तिः किरणे सूर्ये ना स्वाहायां तु योषिति" ॥ ( ५ ) ॥ "घृणिः पुनः । अंशुज्वालातरङ्गेषु" ॥ ( ६ ) ॥ धृष्णिः॥ 'वृष्णिः' क्वचित्‌ ॥ 'पृश्निः' इत्येके पेठुः ॥ ( ७ ) ॥ भानुः ॥ ( ८ ) ॥ "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" ॥ ( ९ ) ॥ स्त्रीपुंसाधिकारे—"त्रुटिमसिमरीचयः" इति लिङ्गानुशासनम् ॥ "द्वयोर्मरीचिः किरणो भानुरुस्रः करः पदम्" इति शब्दार्णवः ॥ "मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्" ( १० ) ॥ काकाक्षिगोलकन्यायेन 'दीधितिः' इत्यत्र स्त्रियामिति संबध्यते । उत्तरत्रापि ॥ ( ११ ) ॥ एकादश किरणानाम् ॥ ३३ ॥ स्युरिति ॥ प्रभा ॥ ( १ ) ॥ चान्ता "रुक् शोभाकिरणेच्छासु" ॥ (२) ॥ "रुचिर्दीप्तौ च शोभायामभिष्वङ्गाभिलाषयोः" ॥ (३) ॥ "त्विट् शोभायां जिगीषायां व्यवसाये रुचौ गिरि" ॥(४)॥ टाबन्तः "भा भुव्यलंकृतौ दीप्तौ स्त्रियां भाः किरणे द्युतौ" इति नानार्थरत्नमाला॥ भाः । विश्वपावत् ( ५ ) ॥ भाः, भासौ "भाः प्रभावे मयूखे च" ॥ ( ६ ) "छविः शोभारुचो योषित्" ॥ ( ७ ) ॥ द्युतिः ॥ ( ८ ) ॥ दीप्तिः ॥ ( ९ ) ॥ रोचिः सान्तं क्लीबम् ( १० ) ॥ शोचिः सान्तं क्लीबं विशेषविधेः ॥ ( ११ ) ॥ एकादश प्रभायाः ॥ प्रकाश इति ॥ "प्रकाशः स्फुटहासयोः । उद्द्योतेऽतिप्रसिद्धे च" ॥ ( १ ) ॥ द्योतः ( २ ) ॥ आतपः ॥ ( ३ ) ॥ त्रीण्यातपस्य ॥३४॥

---

१–मत्सरो द्वेषः । तत्र यथा "मुनौ विहंसे सरसीव शुष्के" इत्यनेकार्थकैरवाकरकौमुदी ॥ २—इन्द्रादयो ह्यष्टादश नामान्तरेणार्कपरिचारकाः ॥ यत्सारम् । तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः । यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया । एवमन्ये गुहहरराहुस्वरादयः ॥ तेषु प्राधान्यात्त्रय एवोक्ताः । इति स्वामिमुकुटौ ॥ ३—तालव्यान्तः "अथोडुबन्धुश्च भयंकरे करे महौषधीनष्टकरांशुभे शुभे" इति जानकीहरणे यमकादिति मुकुटः ॥

कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति । तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ।३५

इति दिग्वर्गः ॥ ३ ॥

---

कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः । प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः १॥
घस्रो दिनाहनी, वा तु क्लीबे दिवसवासरौ । प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥
प्रभातं च दिनान्ते तु सायः सन्ध्या पितृप्रसूः । प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी ॥३॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा । विभावरीतमस्विन्यौ रजनी यामिनी तमी ४॥

कोष्णमिति ॥ कोष्णम् ॥ ( १ ) ॥ कवोष्णम् ॥ ( २ ) ॥ मन्दोष्णम् ॥ ( ३ ) कदुष्णम् ॥ ( ४ ) एते गुणे क्लीबाः ॥ गुणिनि विशेष्यनिघ्नाः ॥ चत्वारीषदुष्णस्य ॥ तिग्ममिति ॥ तिग्मम् ॥ ( १ ) ॥ "तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्ककें । क्लीबं यवाग्रके पुंसि तिग्मार्थत्यागिनोस्त्रिषु" ॥ (२) "खरं स्यात्तीक्ष्णघर्मयोः । गर्दभेऽस्त्री देवताडे" ॥ ( ३ ) ॥ तद्वत्-'गुणे क्लीबम्, तद्वति त्रिषु' इत्यर्थः ॥ त्रीण्युष्णस्य ॥ तीक्ष्णोऽसिः इत्यादावुपचारात्प्रयोगः ॥ मृगेति ॥ मृगतृष्णा ॥ ( १ ) ॥ मरीचिका ( २ ) ॥ द्वे मृगतृष्णायाः ॥ ३५ ॥

इति दिग्वर्गविवरणम् ॥

---

काल इति ॥ "कालो मृत्यौ महाकाले समये यमकृष्णयोः"॥(१)॥"दिष्टं दैवे पुमान्काले"॥( २ ) ॥ अनेहा सान्तः सौ अनङ्। अनेहसौ अनेहसः॥(३)॥"समयः शपथे भाषासंपदोः कालसंविदोः। सिद्धान्ताचारसंकेतानियमावसरेषु च ॥ क्रियाकारे निदेशे च" ॥(४) ॥ चत्वारि सामान्यकालस्य ॥अथेति ॥ पक्षतिः ॥ "पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथौ" ङीबन्तापि पक्षती ॥ ( १ ) ॥ दान्ता "प्रतिपत्स्त्री तिथौ मतौ"॥ ( २ ) ॥ द्वे प्रतिपत्तिथेः ॥ इमे द्वे पक्षतिप्रतिपदौ स्त्रीत्वे स्त्रीलिङ्गे ॥ तदाद्या इति ॥ सा प्रतिपद् आद्या यासां ताः ॥ तिथयः ( १ ) द्वयोरित्यत्र श्रुतत्वात्तिथिशब्द एव संबध्यते ॥ एकं सामान्यतिथेः ॥ १ ॥ घस्र इति ॥ "घस्रस्तु दिवसे हिंस्रे" ( १ ) ॥ दिनं क्लीबमेव ॥ ( २ ) ॥ अहः क्लीबे नान्तम् ॥ ( ३ ) ॥ दिवसः, दिवसौ । दिवसम्, दिवसे ॥ ( ४ ) ॥ "वासरस्तु पुमान्नागप्रभेददिनयोरपि" वासरं क्लीबमपि ( ५ ) पञ्च दिनस्य ॥ प्रत्यूष इति ॥ "प्रत्यूषोऽहर्मुखे वसौ" ॥ ( १ ) ॥ अहर्मुखम् ॥ ( २ ) "कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक् श्रुतिवर्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ॥ उपायवचनेऽपि स्यात्त्रिषु मद्ये तु योषिति" कल्यमपि ॥ ( ३ ) ॥ अन्योपसर्गनिवृत्तये प्रातिः ॥ "उषः प्रत्युषसि क्लीबं पितृप्रस्वां च योषिति" ॥ ( ४ ) ॥ ( ५ ) ॥ प्रभातम् ॥ ( ६ ) षट् प्रभातस्य ॥ दिनेति ॥ दिनस्यान्तः ॥ "सायः काण्डे दिनान्ते च" ॥ मान्तमव्ययं त्वव्ययवर्गे वक्ष्यति ॥ ( १ ) ॥ एकं दिनान्तस्य ॥ संध्येति ॥ "संध्या पितृप्रसूनद्यन्तरयोर्युगसंधिषु" ॥ निर्यकारोऽपि "संध्या पितृप्रसूः संधा" इति शब्दार्णवः( १)॥पितृप्रसूः(२)द्वे संध्यायाः ।।प्राह्णेति ॥अहःशब्दस्तदवयवे॥प्राह्णः(१)॥अपराह्णः॥ (१॥) मध्याह्नः ॥(१)॥ पाक्षिकी क्लीबता, पक्षे त्रिसंध्यी ॥( १ )॥ एकं दिनाद्यन्तमध्यानाम् ॥ अथेति ॥"शर्वरी यामिनीस्त्रियोः" ॥ प्रज्ञाद्यणि शार्वर्यपि ॥ "शर्वरी शार्वरी शर्या" इति शब्दार्णवः ॥ ( १ ) ॥ ३ ॥ "निशा दारुहरिद्रायां स्यात्त्रियामाहरिद्रयोः" इति विश्वः॥ "निशीथिनी निशा निट् च श्यामतुङ्गी तमा तमी" इति नामानिधानात् 'निट्' पृषोदरादित्वात् ( ६।३।१०९ ) शान्तापि ॥ ( २ ) ॥ निशीथिनी ॥ ( ३) रात्रिः स्त्री साहचर्यात् ॥ "कृदिकारात्—" ( ग० ४।१।४५ ) इति ङीषि रात्रीत्यपि ॥

---

१–दन्त्यमध्यः "रविर्मिनाग्दर्शितवासरः सरः" इति जानकीहरणम् "बद्धो वासरसङ्ग" इति भट्टिभाषासमावेशः–इति मुकुटः ॥ २–दीर्घमध्यः "प्रत्यूषस्फुटितकमलामोदमैत्रीकषायः" इति माघः–इति मुकुटः ॥ ३–"संध्योज्ज्वलितः" इति वासवदत्ता इति मुकुटः ॥

तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता।आगामिवर्तमानाहयुक्तायां निशि पक्षिणी५॥
गणरात्रं निशा बह्वचः प्रदोषो रजनीमुखम् । अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ॥६॥
स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् । पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ॥७॥
कलाहीने सानुमतिः पूर्णे राका निशाकरे। अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥८॥
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः। उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि च९॥

" रात्री रात्रिस्तमस्विनी " इति शब्दार्णवः ( ४ ) त्रियामा ( ५ ) " क्षणदो गणके, रात्रौ क्षणदा, क्षणदं जले " ॥ ( ६ ) क्षपा ॥ ( ७ ) ॥"विभावरी निशारात्र्योः कुट्टन्यां चक्रयोषिति । विवादे वस्त्रकुट्यां च" ॥ ( ८ ) ॥ तमस्विनी ॥ ( ९ ) ॥ " रजनी नीलिनीरात्रिहरिद्राजतुकासु च " ॥ ङीषभावे रजनिरपि ॥ ( १० ) ॥ यामिनी ॥ (११) ॥ तमी ॥ पक्षे तमिः ॥ पचाद्यचि'तमा'अपि ॥ (१२) द्वादश रात्रेः ॥४॥ तमिस्रेति ॥"तमिस्रं तिमिरे कोपे पुंसि स्त्री तु तमस्ततौ । कृष्णपक्षनिशायां च"॥( १ ) ॥ " तामसी निशि दुर्गायां तामसो भुजगे खले"॥ ( २ ) ॥ द्वे अत्यन्धकाररात्रेः ॥ ज्यौत्स्नीति ॥ " ज्यौत्स्नी पटोलिकायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियाम्" ॥(१) एकं ज्योत्स्नावद्रात्रेः॥ आगामीति ॥"पक्षिणी पूर्णिमायां स्याद्विहग्यां शाकिनीभिदि । आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम् " ॥ ( १ ) एकं दिनद्वयमध्यगतरात्रेः ॥ ५ ॥ गणेति ॥ "भवति नपुंसकयोगः संख्यापूर्वस्य रात्रशब्दस्य" इति वररुचिवचनाच्च ॥ "रात्रं प्राक् संख्ययान्वितम्" इति वक्ष्यमाणत्वाच्च ॥ गणरात्रम् ॥ ( १ ) एकं रात्रिसमूहस्य ॥ प्रदोष इति ॥ " प्रदोषः कालदोषयोः" ॥ 'दोषा' इत्यव्ययमप्यस्ति । "नक्तं दोषा च रजनौ" इति वक्ष्यते ॥ ( १ ) ॥ रजनीमुखम् ॥ ( २ ) ॥ द्वे रात्रिप्रारम्भस्य ॥ अर्धेति ॥ अर्धरात्रः( १ ) ॥ "निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके" ॥ ( २ ) ॥ द्वाविति । समावित्याकृष्यते ॥ द्वेरात्रिमध्यस्य ॥ द्वाविति ॥ "यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः" ॥ ( १ ) ॥ प्रहरः ॥ ( २ ) ॥ द्वे प्रहरस्य ॥ ६ ॥ स इति ॥ प्रतिपत्पञ्चदश्योर्यदन्तरम् स संधिः स एव पर्व, अपि ॥ "प्रतिपत्पञ्चदश्योस्तु संधिः पर्व प्रदिक् ककुप्" इति दुर्गः ॥ 'संधिमभितो यजेत' इत्यादौ प्रसिद्धः स एव ॥ "पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि"॥ ॥ ( १ ) ॥ 'पर्वसंधिः' इत्येकं नाम, इति पाञ्चः ॥ एकं प्रतिपत्पञ्चदशान्तरगतपर्वसन्धेः ॥ पक्षेति॥ द्वे पञ्चदश्यौ पूर्णिमामावास्ये पक्षान्तौ ॥ ( १ ) ॥ एकम् ॥ पौर्णेति ॥ "पौर्णमासः पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ" ॥ ( १ ) ॥ ( २ ) ॥ द्वे पूर्णिमायाः ॥ ७ ॥ कलेति ॥ सा पूर्णिमा उदयकाले प्रतिपद्योगात्कलाहीने चन्द्रे ॥ "अथानुमतिरूनेन्दुपूर्णिमानुज्ञयोरपि" ॥ (१ ) ॥ एकम् कलाहीनचन्द्रयुतपूर्णिमायाः ॥ पूर्ण इति ॥ चन्द्रे पूर्णे तु । "राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथौ" ॥ ( १ ) ॥ एकं पूर्वकलेन्दुयुतपूर्णिमायाः ॥ अमेति ॥ अमावास्या ॥ ( १ ) ॥ अमावस्या ॥ नामैकदेशे नामग्रहणात्'अमा' अपि॥अमावसी॥अमावासी॥अमामासी॥अमामसी॥"दर्शोऽमाऽमावसी च स्यात्"इति रभसः॥ "अप्यमावस्यमावासी चामामास्यप्यमामसी"इतिशब्दार्णवः॥(२)॥"पक्षान्तेऽब्धौ दर्शने च दर्शःसूर्येन्दुसंगमे" ॥ ( ३ ) ॥सूर्येन्दुसंगमः ॥ (४)॥ चत्वारि दर्शस्य॥८॥सेति॥दृष्टचन्द्रा[३] सा अमा सिनीवाली॥"सिनीवाली तु दृष्टेन्दुकलामादुर्गयोः स्त्रियाम्" ॥ एकं दृष्टचन्द्रामायाः ॥ सेति ॥ उदये अमायोगान्नष्टचन्द्रकला सा अमा कुहूः ॥ मृगय्वादित्वाद्ध्रस्वोऽपीत्यन्ये । "धेनूरुरज्जुकुहुसरयुतनुकरेणवः स्त्रियाम्" इति विन्ध्यवासी ॥"कुहूः स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः" ॥ एकमदृष्टचन्द्रामावास्यायाः ॥ उपराग इति ॥ "उपरागस्तु पुंसि

---

१-खगे ॥ २—ह्रस्वाप्राप्त्या न रूपसिद्धिः ॥ ३—दृष्टचन्द्रेति । सूर्योदये चतुर्दशीसत्त्वे तदुत्तरममाप्रारम्भे चन्द्रदर्शनयोग्यतेति केचित्।।वस्तुतस्तु प्रत्युषसि चतुर्दश्यभावेऽप्यमाप्रारम्भे चन्द्रशरस्यांशपञ्चकात्मकरणोत्तरत्वे दर्शनं चन्द्रस्य भवत्येवेति व्यक्तं सिद्धान्तविदाम् ॥

**सोपप्लवोपरक्तौ द्वौ अग्न्युत्पात उपाहितः। एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ १०॥**
**अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला। तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ११**
**ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च। पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ १२ ॥**
**द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥ अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः १३**
**समरात्रिन्दिवे काले विषुवद्विषुवं च तत्। मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥१४॥**

स्याद्राहुग्रासेऽर्कचन्द्रयोः। दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते'' ॥ (१) ॥ "ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः'' ॥ (२) ॥ द्वे ग्रहणस्य ॥ राह्विति ॥ "उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि'' ॥ (१) ॥९॥ "उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः'' ॥ (२) ॥ इमौ द्वौ राहुणा ग्रस्ते चन्द्रे सूर्ये च ॥ अग्न्युत्पात इति ॥ "उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु'' ॥ (१) ॥ द्वे आकाशादिष्वग्निविकारस्य ॥ एकयेति॥ पुष्पवन्तौ एकयोक्त्या साधारणवचनेन ॥ प्रत्येकं 'पुष्पवान्' इति न प्रयोक्तव्यमिति भावः ॥ अकारान्तोऽपि पुष्पवन्तशब्दः ॥ "रविशशिनौ पुष्पवन्ताख्यौ'' इति नाममाला ॥ पुष्पवन्ताभ्याम्[3]। पुष्पवन्तयोः। इत्यादि ॥ "पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ'' । "पुष्पदन्तौ च चन्द्रार्कावेकोक्त्या'' इति हैमतः "पुष्पदन्तौ[4]'' अपि बोध्यौ ॥ एकं सूर्याचन्द्रमसोर्युगपदुक्तेः ॥ १० ॥ अष्टादशेति ॥ "क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्'' इत्यादिशास्त्रसिद्धा निमेषाः। तेऽष्टादश काष्ठा ॥ "काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्याद्दिशि स्थानमात्रे च काष्ठमाख्यातमिन्द्रिये'' इति विश्वः ॥ एकमष्टादशनिमेषसंख्यायाः ॥ त्रिंशदिति ॥ ताः काष्ठाः त्रिंशत् कला ॥ "कला स्यात्कालशिल्पयोः'' ॥ एकं त्रिंशतः काष्ठानाम् ॥ ता इति ॥ ताः कलाः ॥ "क्षणः पर्वोत्सवेऽपि स्यात्तथा मानेऽप्यनेहसः'' ॥ एकं त्रिंशतः कलानाम् ॥ ते त्विति ॥ ते तु क्षणाः द्वादश ॥ मुहूर्तः ॥ एकं द्वादशक्षणानाम् ॥ ११ ॥ ते त्विति ॥ ते तु मूहूर्ताः ॥ अहोरात्रः ॥ एकं त्रिंशतो मुहूर्तानाम् ॥ पक्ष इति ॥ तेऽहोरात्राः ॥ "पक्षो मासार्धके गेहे पार्श्वसाध्यविशेषयोः। केशादेः परतो वृन्दे बले सखिसहाययोः ॥ चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः'' ॥ एकं पञ्चदशाहोरात्रस्य ॥ पक्षाविति ॥ चैत्रशुक्लप्रतिपदि सृष्ट्यारम्भेण ॥ शुक्लपक्षः पूर्वसंज्ञः ॥ (१) ॥ कृष्णपक्षोऽपरसंज्ञः ॥ (१) ॥ क्रमेणैकैकम् ॥ मास इति ॥ तौ पक्षौ ॥ मासः एकं पक्षद्वयस्य ॥ १२ ॥ द्वाविति ॥ "ऋतुः स्त्रीकुसुमे मासि वसन्तादीषुधारयोः'' ॥ मार्गादीनां युगैर्हेमन्तादीनृतून् वक्ष्यति ॥ तदेकदेशमयनपरिच्छेदार्थमनुवदति द्वौ द्वाविति ॥ ॥ एकं मासद्वयस्य ॥ तैरिति ॥ "अयनं पथि मेहेऽर्कस्योदग्दक्षिणतो गतौ'' ॥ एकमृतुत्रयस्य ॥ अयने इति ॥ अयने तु द्वे । अर्कस्योत्तरा गतिः दक्षिणा च ॥ उत्तरदक्षिणाख्ये द्वे अयने तु वत्सरः—इति वक्तव्ये 'अर्कस्य' इति ग्रहणं चान्द्रत्वव्यावृत्त्यर्थम् ॥ पक्षादिकं तु चान्द्रमुक्तम्। अयनं तु न चान्द्रम्। किं तु सौरमेव॥ अयनद्वयस्यैकैकम् ॥ वत्सर इति ॥ वत्सरः ॥ (१) ॥ एकमयनद्वयस्य ॥ १३ ॥ समेति ॥ तुलामेषावच्छिन्ने ॥ विषुवत् क्लीबम्॥ "विषुवान् समरात्रिवासरः'' इति पुंस्काण्डे बोपालितः विषुवान्॥(१)॥विषुणोऽपि। (२) ॥ द्वे समरात्रिन्दिवकालस्य ॥ मार्गेति ॥ मार्गशीर्षः। "सास्मिन्पौर्णमासी'' (४।२।२१) इत्यण् ॥ (१) ॥ सान्तः "सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः'' ॥ पचाद्यजन्तोऽपि ।

---

१–"देवताद्वन्द्वे च'' (६।३।२६) इति नानङ्। तत्र "आनङृतो द्वन्द्वे'' (६।३।२५) इत्यतो द्वन्द्वग्रहणेऽनुवर्तमाने पुनर्द्वन्द्वग्रहणेन वेदलोकसहचरितद्वन्द्वस्य ग्रहणात्। अस्य तु द्वन्द्वस्यातथात्वात् ॥ अत एव "रविचन्द्रावपि नोपलक्षितौ'' इति घटखर्परः—इति मुकुटः ॥ २––हैममेदिन्योरपि–'अनुग्रह' इति पाठो दृश्यते ॥ व्याख्यातं चानेकार्थकैरवाकरकौमुद्याम् "अनुग्रहे प्रसादे ग्रहशब्दः सत्यभामायां भामाशब्दवत्'' इति ॥ ३—"प्राक्प्रत्यक् धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्'' इत्याश्चर्यमञ्जर्यामदन्तत्वदर्शनात्—इति मुकुटः ॥ ४–अनेकार्थकैरवाकरकौमुद्यां व्याख्यातं च । पुष्पे इव पुष्पे, दन्ताविव दन्तौ, पुष्पे च ते दन्तौ च पुष्पदन्तौ॥ यथा, च । "विश्वस्यास्य विलोचने निरयतो यत्पुष्पदन्तौ तमः,, इति ॥

**पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने । स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः १५**
**वैशाखे माधवो राधो ज्यैष्ठे शुक्रः शुचिस्त्वयम् । आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः १६**
**स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः । स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु कार्तिके १७**
**बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् । वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः १८**

"मार्गं सहः सहाः" इति शब्दार्णवः ॥ ( २ ) ॥ एकदेशप्रयोगात् मृगोऽपि ॥ "मृगशिरा मृगः" इति रुद्रकोषः ॥ तद्युक्ता पौर्णमासी मार्गी । सास्मिन्नस्ति ॥ "मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि" ॥ (३) ॥ आग्रहायणिकः ॥ "आग्रहायणः" अपीति पुरुषोत्तमः ॥ ( ४ ) ॥ चत्वारि मार्गशीर्षमासस्य ॥ १४ ॥ पौष इति ॥ "पौषो मासप्रभेदे स्यात्पौषं तु महयुद्धयोः" ॥ ( १ ) ॥ तैषः ॥ ( २ ) ॥ सहस्यः । ॥ ( ३ ) ॥ त्रीणि पौषमासस्य ॥ ( तपा इति ॥ ) सान्तः "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः" ॥ ( १ ) ॥ माघः ॥ ( २ ) ॥ द्वे माघमासस्य ॥ अथेति ॥ "फल्गुनस्त्वर्जुने मासे नक्षत्रे फल्गुनी स्मृता" इति गोवर्धनानन्दः ॥ "फाल्गुनस्त्वर्जुने मासे फाल्गुनी चास्य पूर्णिमा" इति धरणिः ॥ "फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे । तपस्यसंज्ञमासे तत्पूर्णिमायां तु फाल्गुनी" ॥ ( १ ) ॥ "तपस्यः फाल्गुने मासे तपस्या नियमस्थितौ" ॥ ( २ ) ॥ फाल्गुनिकः त्रीणि फाल्गुनमासस्य ॥ ( ३ ) स्यादिति ॥ "चैत्रं मृते देवकुले ना भूभृन्मासभेदयोः" ॥ १ ॥ चैत्रिकः ॥ २ ॥ "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" ॥ ३ ॥ त्रीणि चैत्रमासस्य ॥१५॥ वैशाख इति ॥ "वैशाखः स्थानके मासे मन्थानेऽपि" ॥ ( १ ) माधवः ॥ ( २ ) ॥ राधः ॥ ( ३ ) ॥ त्रीणि वैशाखमासस्य ॥ ज्येष्ठ इति ॥ ज्यैष्ठः ॥ ज्येष्ठोऽपि ॥ "ज्येष्ठो मासि च वृद्धे च ज्येष्ठा च गृहगोधिका" इति त्रिकाण्डशेषः ॥ "ज्येष्ठः स्यादग्रजे श्रेष्ठ मासभेदातिवृद्धयोः । ज्येष्ठा भे गृहगोधिकायाम्" ॥ ( १ ) "शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्" ॥ ( २ ) ॥ द्वे ज्येष्ठमासस्य ॥ शुचिरिति ॥ अयमिति शुचेः पुंस्त्वाभिव्यक्त्यर्थम् ॥ शुचिः ॥(१)॥ "आषाढो व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम्" "स्यादाषाढे त्वषाढकः" इति शब्दार्णवः ॥ द्वे आषाढमासस्य ॥ श्रावण इति ॥ "श्रावणो मासि पाखण्डे दध्याल्यां श्रावणा मता" इति हैमः ॥ ( १ ) ॥ "नभः क्लीबं व्योम्नि पुमान्घने । घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे" ( २ ) श्रावणिकः ॥ ( ३ ) ॥ त्रीणि श्रावणमासस्य ॥१६॥ स्युरिति ॥ नभस्यः ॥ ( १ ) ॥ प्रौष्ठपदः ॥(२)॥ भाद्रः ॥ ( ३ ) ॥ भाद्रपदः ॥ (४) ॥ चत्वारि भाद्रपदमासस्य ॥ स्यादिति ॥ आश्विनः ॥(१) ॥ इषः ॥(२) आश्वयुजः, अश्वयुजोऽपि ॥ "आश्विनोऽश्वयुजश्चेषः" इत्यत्यमरमाला । त्रीणि आश्विनमासस्य ॥ स्यादिति ॥ कार्तिकः ॥ ( १ ) ॥ १७ ॥ बाहुलः ॥ ( २ ) ॥ "ऊर्जः कार्तिके बले" इति हैमः ॥ ( ३ ) ॥ कार्तिकिकः ॥ ( ४ ) ॥ चत्वारि कार्तिकमासस्य ॥ हेमन्त इति ॥ हेमन्तः ॥ "हेमा" ॥ अपि । "सर्वत्राण् च-" ( ४ । ३ । २२ ) इति सूत्रे यद्भाष्यम् "हेमन्तस्य तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरस्य सत्त्वात्" इति ॥ ( १ ) ॥ मार्गपौषाभ्यां निष्पन्नस्य ऋतोरेकम् ॥ शिशिर इति ॥ "शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्" इति विश्वः ॥ (१) ॥ एकं माघफाल्गुनाभ्यामृतोः ॥ वसन्त इति ॥ वसन्तः ॥ ( १ ) ॥ पुष्पसमयः ॥ ( २ ) ॥ "सुरभिर्हेम्नि चम्पके । जातीफले मातृभेदे रम्ये चैत्रवसन्तयोः । सुगन्धौ गवि शल्लक्याम्" इति हैमः ॥( ३ ) ॥ त्रीणि चैत्रवैशाखाभ्यामृतोः ॥ ग्रीष्म इति ॥ "ग्रीष्म ऊष्मर्तुभेदयोः" ॥ ( १ ) ॥ ऊष्माणस्तु निदाघोष्णग्रीष्माः शषसहा अपि" अदन्तोऽपि "ऊष्मो घर्मेऽश्रुणि तथा । ज्येष्ठे ऊष्मा स्त्रियां त्विषि" इति बोपालितः ॥ स्वार्थिके कनि ऊष्मकः ॥(२)॥ "निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि" ॥ ( ३ ) ॥ उष्णोपगमः ॥ ( ४ ) "उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः" ॥ (५) ऊष्मागमोऽत्र ॥ ऊष्मा अपि ॥ "ऊष्मातपनिदाघयोः" इति नान्ते बोपालितः ॥ (६) ॥ तपः

---

१—मूर्धन्यान्तः "ष्वनिमिषे निमिषे क्षणमग्रतः" इति माघयमकात्—इति मुकुटः ॥ २ मेदिन्यामयं पाठः ॥

निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः। स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् १९
षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्।संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री, शरत्समाः२०
मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् २१॥
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि॥२२ ॥

पुमानदन्तः ॥ ( ७ ) ॥ सप्त ज्येष्ठाषाढाभ्यामृतोः ॥१८॥ स्त्रियामिति ॥ प्रावृट् ॥ टापि प्रावृषा ॥ (१)॥ वर्षाः भूम्नि, बहुत्वे ॥ तेन नित्यबहुवचनान्तः ॥ ( २ ) ॥ वर्षर्तोर्द्वे श्रावणभाद्राभ्यामृतोः ॥ अथेति ॥ " शरत् स्त्री वत्सरेऽप्यृतौ " ॥ भागुरिमते टापि शरदा च ॥ "शरद्भवेच्छरदया प्रावृट् प्रावृषया सह" इति विश्वः ॥ (१) एकमाश्विनकार्तिकाभ्यामृतोः॥१९॥ षडिति ॥ अमी हेमन्तादयः॥ ऋतुः पुंसि विशेषविधानात् ॥ ( १ ) ॥ हेमन्तादीनां षण्णामेकम्॥संवत्सर इति ॥ संवत्सरः ॥ ( १ ) ॥ वत्सरः ॥ ( २ ) " अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् " ॥ ( ३ ) ॥ 'हायनः स्त्री' इति पाठे शरदा सम्बन्धः॥"हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः "॥ (४) शरद् दान्ता स्त्री ॥ प्रज्ञाद्यणि ( ५ । ४ । ३८ ) ॥ शारदोऽपि॥ " समा योषिति, शारदः " इति रत्नकोषः ॥ ( ५ ) ॥ समाः स्त्रियष्टाबन्ताः ॥ बहुवचननिर्देशात्प्रायेणायं बहुवचनान्तः इति ध्वनयति ॥ क्वचिद्वचनान्तरमपि । "समां समां विजायते " ( ५ । २ । १२ ) इति सूत्रात् ॥ " समायां समायाम् ॥" इति तत्र भाष्याच्च ॥ समान्ति सह वर्तन्ते ऋतवोऽस्यामिति वा । 'मा माने' (अ० प० अ० ) । " आतश्चोपसर्गे " ( ३ । ३ । १०६ ) इत्यङ् ॥ "समांसमाम् " ( ५ । २ । १२) इति निर्देशान्मलोपः ॥ " समा संवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु समं स्यादभिधेयवत् " ॥ ५ ॥ षट् संवत्सरस्य ॥ २० ॥ मासेनेति ॥ नृणां मासेन पैत्रोऽहोरात्रः । तत्र कृष्णपक्षो दिनम् । शुक्लपक्षो रात्रिः ॥ वर्षेणेति ॥ नृणां वर्षेण दैवतोऽहोरात्रः । तत्रोत्तरायणं दिनम् । दक्षिणायनं रात्रिः ॥ दैव इति ॥ देवानां युगसहस्रद्वयेन ब्राह्मोऽहोरात्रः ॥ दैवैः षष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यं वर्षम् । तैर्द्वादशभिः सहस्रैर्मानुषं चतुर्युगम् । तच्च देवानामेकं युगम् । तत्सहस्रं ब्रह्मणो दिनम् । भूतानां स्थितिकालः । तावत्येव रात्रिः प्रलयकालः ॥ कल्पाविति ॥ ये दैवे युगसहस्रे तौ"कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने " ॥ ( १ ) ॥ एकं ब्रह्मणो दिनस्य ॥ २१ ॥ मन्वन्तरमिति ॥ 'मनोरन्तरमवकाशः' इति विग्रहः ॥ एकाधिका सप्ततिः । सा च किंचिदधिकेति बोध्यम्॥ एकं मन्वन्तरस्य॥

---

१--"ननु द्वे अयने वत्सरः, इत्युक्तम् । तत्रैव वत्सरपर्याया वक्तुमुचिताः । सत्यम् । पूर्वमयनद्वयपुरस्कारेणोक्तम् । तेन माघादिः सौरो वत्सरः,अत्र तु हेमन्तादिपुरस्कारेण मार्गादिश्चान्द्रः संवत्सरः इति न पौनरुक्त्यम्। लोकैस्तु'द्वादशमासाः संवत्सरः' इति मासपुरस्कारेणैव प्रयुज्यते-" इति पीयूषव्याख्या ॥--२ मनवो ब्रह्मसुताश्चतुर्दशैव । तथा च विष्णुपुराणे--"मनुः स्वायंभुवो नाम मनुः स्वारोचिषस्तथा । औत्तमिस्तामसिश्चैव रैवतश्चाक्षुषस्तथा ॥ एते तु मनवोऽतीताः सप्तमस्तु रवेः सुतः । वैवस्वतोऽयं यस्यैतत् सप्तमो वर्तते युगम्॥ सावर्णिर्दक्षसावर्णो ब्रह्मसावर्ण इत्यपि । धर्मसावर्णरुद्रस्तु सावर्णो रौच्यभौत्यव्रत ॥"इति ॥ मन्वन्तरमानानयनं नामनिधानेसर्वज्ञश्रीनारायणचरणाः "दैविकानां युगानां तु सहस्रं ब्रह्मणो दिनम् । मन्वन्तरं तथैवैकं तस्य भागश्चतुर्दश ॥" इत्यनेन स्फुटमेवोक्तवन्तः । तथा चैकस्य मन्वन्तरस्य३०८५७१४२८ वर्षाणि, ६ मासाः, २५ दिनानि, ४२ घटिकाः, साग्राण्येकपञ्चाशत् पलानि भवन्तीति -मुकुटाशयः ॥३--इदं च मनूक्तमपि निशीथतो दिनान्तरप्रवृत्तिमते । वस्तुतस्तु कृष्णाष्टम्यर्धे सूर्योदयः, अमान्ते मध्याह्नः, शुक्लाष्टम्यर्धे सूर्यास्तः, पूर्णिमान्ते निशीथः पितॄणां भवति ॥ ४--इदमपि तथैव । देवानां सूर्योदयो मेषविषुवे, मध्याह्नो मिथुनान्ते, सूर्यास्तस्तुलाविषुवे, निशीथो धनुरन्ते भवति ॥ ५--"कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिनमुच्यते ॥" इति विष्णुपुराणतो युगानां नामानि ज्ञेयानि ॥ तन्मानं च मनुनेत्थमभिहितम्--"चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् । तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु । एकापायेन वर्तन्ते सहस्राणि शतानि च । एतद्द्वादशसाहस्रं देवानां युगमुच्यते । दैविकानां युगानां तु सहस्रं परिसंख्यया ॥ ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ।" इति ॥ अस्य निष्कृष्टोऽर्थस्तु "कृतयुगमानं दैववर्षैः४८००वर्षदिन३६० गुणितं जातं मानुषवर्षमानम् १७२८०००,। त्रेता दिव्यैर्वर्षैः ३६०० मानुषैः १२९६००० । द्वापरं दिव्यैः २४००, मानुषैः ८६४००० । कलिर्दिव्यैः १२०० मानुषैः ४३२००० चतुर्युगं दिव्यैः १२०००मानुषैः४३२०००० । ब्रह्मदिनं दिव्यैः१२०००००० मानुषैः ४३२००००००० इत्थमवसेयः ॥

**अस्त्री पङ्कं,पुमान्पाप्मा पापं किल्बिषकल्मषम् । कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम् ॥२३॥
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः । मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः ॥ २४ ॥
स्यादानन्दथुरानन्दः शर्मशातसुखानि च । श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्२५॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् । शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च॥२६॥
मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥२७॥**

संवर्त इति ॥ "संवर्तः प्रलयेऽक्षद्रौ " इति हैमः ॥ ( १ ) ॥ "प्रलयो मृतौ । संहारे नष्टचेष्टत्वे" इति हैमः॥ ( २ ) ॥ "कल्पो विकल्पे कल्पद्रौ संवर्ते ब्रह्मवासरे । शास्त्रे न्याये विधौ" इति हेमचन्द्रः ॥ ( ३ ) ॥ "क्षयो गेहे च कल्पान्तेऽपचये रुजि " इति हैमः ॥ ( ४ ) ॥ "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने"इति शाश्वतः कल्पान्तः ॥ ( ५ )॥ पञ्च प्रलयस्य ॥२२॥अस्त्रीति ॥"पङ्कोऽघे कर्दमे" इति हैमः॥स्त्रीलिङ्गस्य निषेधात्पुंसि क्लीबे च (१)॥ पाप्मा पुमान् विशेषविधेः ॥ (२) पापं क्लीबं स्वरूपभेदात् ॥"किल्बिषं पापरोगयोः। अपराधेऽपि" क्लीबं द्वन्द्वान्तर्गतत्वात् ॥ ( ४ ) " कल्मषं किल्बिषे क्लीबं पुंसि स्यान्नरकान्तरे" ॥ ( ५ ) "कलुषं वाविले पापे " ॥ ( ६ ) ॥ "वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु" ॥ ( ७ ) ॥ सकारान्तं क्लीबम् " एनः पापापराधयोः " ॥ ( ८ ) ॥ "अघं दुःखे व्यसनैनसोः " इति हैमः ॥ ( ९ ) ॥ अंहः सकारान्तं क्लीबम् " अङ्घः इति केचित्पठन्ति ॥ ( १० ) ॥ इणो भावे क्तः ( ३ । ३ । ११४ ) । दुरितम् ॥ ( ११ ) ॥ दुष्कृतम् ॥ ( १२ ) द्वादश पापस्य ॥ २३ ॥ स्यादिति ॥"धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे " ॥ ( १ ) ॥ "पुण्यं तु सुन्दरे । सुकृते पावने धर्मे " ॥ ( २ ) ॥ "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् " ॥ (३) ॥"सुकृतं तु शुभे पुण्ये क्लीबं सुविहिते त्रिषु ॥ ( ४ ) ॥ "वृषो गव्याखुधर्मयोः । पुंराशिभेदयोः शृङ्ग्यां वासके शुक्लेऽपि च॥ श्रेष्ठे स्यादुत्तरस्थश्च " इति हैमः ॥ (५) पञ्च धर्मस्य ॥ मुदिति ॥ मुद् दकारान्ता स्त्री साहचर्यात् ॥ (१) प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् " ॥ ( २ ) ॥ "प्रमदः संमदे मत्ते स्त्रियामुन्मदयोषिति" ॥ ( ३ ) ॥ हर्षः ॥ (४) ॥ प्रमोदः ॥ ( ५ ) ॥ "आमोदो गन्धहर्षयोः"॥ ( ६ ) ॥ संमदः ॥ ( ७ ) ॥ २४ ॥ आनन्दथुः पुंसि साहचर्यात् ॥ ( ८ ) ॥ आनन्दः ॥ ( ९ ) ॥ शर्म नकारान्तं क्लीबं द्वन्द्वान्तर्गतत्वात् ॥ ( १० ) ॥ शातं क्लीबं द्वन्द्वान्तर्गतत्वात् 'सातम्' दन्त्यादि च ॥ ( ११ ) ॥ " सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः " ॥ ( १२ ) ॥ द्वादश सुखस्य ॥ ( श्वःश्रेयसमिति ॥ " श्वःश्रेयसं तु कल्याणे परमात्मनि शर्मणि " ॥ श्वोवसीयसमपि बोध्यम् ॥ ( १ ) ॥ " शिवं तु मोक्षे क्षेमे सुखे जले । शिवो योगान्तरे वेदे गुग्गुलौ बालके हरे ॥ पुण्डरीके द्रुमे कीले" ॥ ( २ ) ॥ "भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके ॥ करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः ॥ काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि ॥ त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे" ॥ "भन्दं कल्याणे सौख्ये च " ॥ ( ३ ) ॥ "कल्याणं हेम्नि मङ्गले " ( ४ ) " मङ्गलं पुनः । कल्याणे, मङ्गलो भौमे मङ्गला श्वेतदूर्विका" ॥ ( ५ ) ॥ "शुभो योगे शुभं भद्रे " ॥ ( ६ ) ॥ ॥ २५ ॥ भावुकम् ॥ ( ७ ) ॥ भविकम् ॥ ( ८ ) ॥ 'भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु । कर्मरङ्गतरौ पुंसि स्त्रियां करिकणामेयोः ॥ क्लीबमस्थनि" ॥ ( ९ ) ॥ "कुशलं[2] क्षेमपुण्ययोः । पर्याप्तौ कुशलोऽभिज्ञे " ॥ ( १० ) ॥ क्षेमम् ॥ अस्त्रियामिति क्षेममात्रान्वायि " क्षेमस्तु मङ्गले । लब्धसंरक्षणे मोक्षे क्षेमोमाधनहर्यपि " ॥ (११) ॥ "शस्तं क्षेमे प्रशस्ते च " ॥ ( १२ )॥ द्वादश कल्याणमात्रस्य ॥ अथेति ॥ पापपुण्यशब्दौ सुखादि च शस्तान्तं शब्दजातं द्रव्ये वर्तमानं त्रिषु बोध्यम् । तत्र स्त्रियां कल्याणी । अन्ये टाबन्ताः ॥ २६ ॥ मतल्लिकेति ॥ मताल्लिकादयो नियतलिङ्गाः मताल्लिका ॥ (१)

---

१-तथा च देवीशतके अनुलोमप्रतिलोमयमकम् "सातं वर्माननस्थारहसिहरिहरस्थाननर्मावतंसा" इति-इति मुकुटः॥

२--कुशलं तालव्यमध्यम् । "कुशलवर्धितः" इति विदग्धमुखमण्डनम् । "कुशलवयोरूपोच्छ्रायः" इति वासवदत्ताश्लेषः ॥ 'कुष निष्कर्षे' इत्यतो मूर्धन्यमध्योऽपि, इत्यलंकारोऽमूलः--इति मुकुटः ॥ पीयूषकृता तु कुषलं मूर्धन्यमध्यमपि--इत्युक्तम् ॥

**दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः।हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ॥२८॥**
**क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम्।विशेषः कालिकोऽवस्था गुणाःसत्त्वं रजस्तमः२९**
**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः। प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥**
**जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता।चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः३१॥**

इति कालवर्गः ॥ ४ ॥

॥ मचर्चिका ॥ ( २ ) ॥ " प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः" इति विश्वः ॥ ( ३ ) "उद्घो हस्तपुटे वह्नौ श्लाघायां देहजानिले " इति हैमः ॥ ( ४ ) ॥ तल्लजः ॥ ( ५ ) ॥ प्रकाण्डः पुंस्यपि ॥ " अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयोः" मतल्लिकादीनां रूढिशब्दत्वात् " प्रशंसावचनैश्च (२।१।६६) इति समासः ॥ कृष्णसर्पवाप्यश्वादिवदेते नित्यसमासाः ॥ उद्धस्त्वसमस्तोऽपीति स्वाम्यादयः ॥ **पञ्च प्रशस्तस्य** ॥ **अय इति** ॥ अयः पुंस्यकारान्तः ॥ (१) ॥ ॥ **एकं शुभावहविधेः** ॥ २७ ॥ **दैवमिति** दैवम् ॥ ( १ ) ॥ दिष्टम् ॥ "भाग्यैकदेशयोर्भागः" इति रुद्रः ॥ " **भागधेयं** मतं भाग्ये भागप्रत्याययोः पुमान्" ॥ (३) ॥ "**भाग्यं** कर्म शुभाशुभम् " ॥ (४) ॥ " **नियतिर्नियमे दैवे**" इति विश्वः ॥ ( ५ ) ॥ "विधिर्ब्रह्मविधानयोः । विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः" ॥ ( ६ ) ॥ **षट् प्राक्तनशुभाशुभकर्मणः** ॥ **हेतुरिति** हेतुः पुमान् विशेषविधेः ॥ ( १ ) ॥ "**कारणं** घातने हेतौ करणे, **कारणा** पुनः । यातना कार्मणं मन्त्रादियोगे कर्मकारके" इति हैमः ॥ (२) ॥ " **बीजं** तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" इति हैमः ॥ (३) ॥ **त्रीणि कारणस्य** ॥ **निदानमिति** ॥ "**निदानं** कारणे शुद्धौ तपसः फलयाचने । वत्सदाम्न्यवसाने च " ॥ ( १ ) ॥ आदिकारणम् ॥ (२) ॥ **द्वे मुख्यकारणस्य** ॥ २८ ॥ **क्षेत्रज्ञ इति** ॥ "क्षेत्रज्ञावात्मनिपुणौ " इति हैमः ॥ (१) ॥ "**आत्मा** चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोः ॥ स्वभावे" ॥ (२) ॥ पुरुषः ॥ 'पूरुषः अपि ॥"**पुरुषस्त्वात्मनि** नरे पुंनागे च " इति हैमः॥ (३) ॥ **त्रीण्यात्मनः** ॥ **प्रधानमिति** ॥ "**प्रधानं** प्रकृतौ बुद्धावुत्तमे परमात्मनि । महामात्रे " इति हैमः ॥ ( १ ) ॥ "**प्रकृतिर्गुणसाम्ये** स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे " (२) ॥ **द्वे मायायाः**॥ **विशेष इति**॥कालकृतो धर्मो यौवनादिविशेषोऽवस्था॥ (१)॥**एकं कालकृतविशेषस्य** ॥ **गुणा इति** ॥ "**सत्त्वं** द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु" ॥ (१) ॥ सकारान्तं क्लीबं "**रजो** रेणुपरागयोः । स्त्रीपुष्पे गुणभेदे च " ॥ ( १ ) ॥ तमः सकारान्तं क्लीबं 'रजस्तमौ अदन्तपुँल्लिङ्गावपि ॥ "पुष्पे वेशे गुणे चैव **रजोऽयं** रजसा सह" इत्युत्पलिनी । "**रजोऽयं** रजसा सार्धं स्त्रीपुष्पगुणधूलिषु " इत्यजयः ॥ ( १ ) ॥ **त्रयाणामप्येकैकम्** ॥ २९ ॥ **जनुरिति** ॥ जनुः सकारान्तं क्लीबं द्वन्द्वान्तर्गतत्वात् ॥ ( १ ) ॥ " **जननी** तु दयामात्रोर्**जननं** वंशजन्मनोः " ॥ ( २ ) ॥ जन्म नकारान्तं क्लीबम् ॥ **जन्म**शब्दोऽदन्तः पुँल्लिङ्गः ॥ '**क्लीबोऽपि**' इत्युज्ज्वलदत्तः ॥ ( ३ ) ॥ जनिः स्त्रियामिकारान्ता ॥ ( ४ ) ॥ उत्पत्तिः ॥ (५) ॥ उद्भवः ॥ ( ६ ) ॥ **षट् जननस्य** ॥ **प्राणीति** ॥ प्राणी पुंसि नकारान्तः ॥ ( १ ) ॥ "**चेतनः** स्यात्सहृदयप्राणिनोश्चे**तना** तु धीः " ॥ ( २ ) ॥ इन्नन्तो जन्मी पुंसि ॥ ( ३ ) ॥ जन्तुः पुंसि द्वन्द्वान्तर्गतत्वात् ॥ ( ४ ) ॥ "**जन्युः** स्याज्जन्तुमात्रे च पावके परमेष्ठिनि " ॥ ( ५ ) ॥ शरीरी पुंसीनन्तः ॥ ( ६ ) ॥ **षट् प्राणिनः** ॥ ३० ॥ **जातिरिति** ॥"**जातिः** सामान्यगोत्रयोः । मालत्यामामलक्यां च चुल्लयां कम्पिल्लजन्मनोः ॥ जातीफले छन्दसि च" इति हैमः ॥ ( १ ) " जातं व्यक्तौघजन्मसु । क्लीबं त्रिलिङ्गमुत्पन्ने" ॥ ( २ ) ॥ सामान्यम् ॥ (३ ) ॥ **त्रीणि सामान्यस्य** ॥ **व्यक्तिरिति** ॥ व्यक्तिः ॥ (१) ॥ पृथगात्मता ॥ (२) ॥ **द्वे** ॥ **चित्तमिति** ॥ चित्तम् ॥ ( १ ) चेतः सकारान्तं क्लीबम् ॥ (२) ॥ " **हृदयं** वक्षसि स्वान्ते वुक्कायाम् "( ३ ) "**स्वान्तं** चेतसि गह्वरे"

---

१--इदं तु न प्रकृतोपयोगि ॥२--"सत्यं वदन्ति ते कस्मादसत्यं नीरजस्तमा."इति प्रयोगात्-इति मुकुटबुधमनोहरे ॥ ३--"किमथ जनिना जन्तोः " इत्यादि प्रयोगदर्शनात्पुंस्त्वमपि--इति मुकुटपीयूषौ ॥ ४--हैमे तु 'जात्योघ' इति पठितम् । जातिः सामान्यम् । तत्र यथा "रत्नं सुजातं कनकावदातम्" इत्यनेकार्थकैरवाकरकौमुदी ॥

**बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥१॥ धीर्धारणावती मेधा संकल्पः कर्म मानसम्। चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा॥२ अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः।सन्देहद्वापरौ चाथ समौ निर्णयनिश्चयौ ॥३॥ मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम्।समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः॥४ संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥ मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः।मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६॥**

॥ ( ४ )॥ दकारान्तम् " हृत् क्लीबं बुक्काचित्तयोः" ॥ ( ५ ) ॥ "मानसं स्वान्तसरसोः" ॥ ( ६ ) ॥ "मनश्चित्ते मनीषायाम्" ॥ अर्धर्चादिः ( २।४।३१ ) अयम्—इत्येके । तदा 'मनाः' इत्यपि ॥ (७) ॥ सप्त मनसः ॥ ३१ ॥

॥ इति कालवर्गविवरणम् ॥

---

बुद्धिरिति ॥ बुद्धिः स्त्रियां साहचर्यात् ॥ ( १ ) ॥ मनीषा टाबन्ता ॥ ( २ ) ॥ धिषणा ॥ ( ३ ) ॥ "धीर्ज्ञाने ज्ञानभेदेऽपि" स्त्रियां साहचर्यात् ॥ ( ४ ) ॥ " प्रज्ञस्तु पण्डिते वाच्ये लिङ्गे बुद्धौ तु योषिति " ॥ श्रद्धापि ॥ "प्रज्ञा श्रद्धा धरा ज्ञप्तिः पण्डा संवेदनं विदा " इति शब्दार्णवात् ॥ (५) ॥ शेमुषी ॥ ( ६ ) ॥ " मतिर्बुद्धीच्छयोः स्त्रियाम्" ॥ (७) ॥ प्रेक्षा ॥ (८) ॥ "उपलब्धिर्मतौ प्राप्तौ" ॥ (९) ॥ चित् तान्ता स्त्री द्वन्द्वघटकत्वात् ॥ ( १० ) ॥ "संवित् संभाषणे ज्ञाने संग्रामे नाम्नि तोषणे। क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि" ॥ दान्ता स्त्रियाम् द्वन्द्वघटकत्वात् ( ११ ) ॥ प्रतिपद् दान्ता स्त्री द्वन्द्वघटकत्वात् ॥ ( १२ ) ॥ ज्ञप्तिः स्त्रियां द्वन्द्वघटकत्वात् ॥ ( १३ ) "चेतना संविदि स्त्रियाम् ॥ वाच्यवत्प्राणयुक्ते" ॥ ( १४ ) ॥ चतुर्दश बुद्धेः ॥ १ ॥ धीरिति ॥ धारणाशक्तियुक्ता धीः ॥ " मेधा बुद्धौ, क्रतौ पुमान् " ॥ ( १ ) ॥ ॥ एकं धारणावद्बुद्धेः ॥ संकल्प इति ॥ इदमहं कुर्यामिति मनसः कर्म व्यापारः ॥ "संकल्पः" ॥ ( १ ) ॥ एकम् मनोव्यापारस्य ॥ चित्तेति ॥ चित्तस्य मनस आभोगस्तदेकप्रवणता पूर्णता वा ॥ "आभोगो वारुणच्छत्रे पूर्णतायत्नयोरपि " ॥ चित्ताभोगः ॥ ( १ ) ॥ मनस्कारः ॥ ( २ ) ॥ द्वे मनसः सुखादौ तत्परत्वस्य ॥ चर्चेति ॥ "चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि " ॥ ( १ ) ॥ " संख्यैकादौ विचारे च" ॥ ( २ ) ॥ विचारणा ॥ ( ३ ) त्रीणि विचारणस्य ॥ २ ॥ अध्याहार इति ॥ अध्याहारः ॥ ( १ ) ॥ "तर्को वितर्के काङ्क्षायामूहकर्मविशेषयोः " इति हैमः ॥ (२ ) ॥ ऊहः ॥ ( ३ ) ॥ त्रीणि तर्कस्य ॥ विचिकित्सेति ॥ विचिकित्सा ॥ ( १ ) ॥ संशयः ॥ ( २ ) ॥ संदेहः पुमान् द्वन्द्वघटत्वात् ॥ ( ३ ) ॥ "द्वापरं संशये युगे" ॥ ( ४ ) ॥ चत्वारि विरुद्धानेककोटयवगाहिज्ञानस्य ॥ अथेति ॥ निर्णयः पुमान् द्वन्द्वघटकत्वात् ॥ ( १ ) निश्चयः ॥ ( २ ) ॥ द्वे निर्णयस्य ॥ ३ ॥ मिथ्येति ॥ मिथ्यादृष्टिः ॥ ( १ ) ॥ नास्तिकता ॥ २ ॥ द्वे परलोको नास्तीत्यादिबुद्धेः ॥ व्यापाद इति ॥ व्यापादः ॥ ( १ ) ॥ द्रोहचिन्तनम् ॥ ( २ ) ॥ द्वे द्रोहचिन्तनस्य ॥ समाविति ॥ सिद्धान्तः पुंसि द्वन्द्वघटकत्वात् ॥ ( १ ) ॥ राद्धान्तः ॥(२)॥ द्वे सिद्धान्तस्य ॥ भ्रान्तिरिति॥"भ्रान्तिरनवस्थितौ ॥ मिथ्यामतौ च भ्रमणे " ॥ ( १ ) ॥ मिथ्यामतिः ॥ ( २ ) ॥ "भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि" ॥ ( ३ ) ॥ त्रीण्यतस्मिंस्तज्ज्ञानस्य ॥ ४ ॥ संविदिति ॥ संविद् स्त्रियां दकारान्ता ॥(१)॥ आगूः स्त्रियां वधूवत् ॥ 'आगवम्, आगवः' इति खलपूवदपि ॥ आगूः 'आगुरौ' आगुरः, इति धूर्वदपि ॥ ( २ ) ॥ प्रतिज्ञानम् ॥ ( ३ ) ॥ "नियमो यन्त्रणायां च प्रतिज्ञानिश्चयव्रते" ॥ ( ४ ) ॥ "आश्रवोऽङ्गीकृतौ क्लेशे नान्यवद्वचनस्थिते" ॥ ( ५ ) ॥ संश्रवः ॥ ( ६ ) ॥ अङ्गीकारः ॥ (७) ॥ "अभ्युपगमस्तु पुंसि स्वीकारे निकटगमने च" ॥ ( ८ ) ॥ प्रतिश्रवः ॥ ( ९ ) ॥ "समाधिर्ना समर्थने । ध्याने वैरस्यनियमे काव्यस्य च गुणान्तरे" ॥ ( १० ) ॥ दशाङ्गीकारस्य ॥ ५ ॥ मोक्षे इति ॥ मोक्षफलिका धीर्ज्ञानम् ॥ ( १ ) एकं मोक्षोपयोगिबुद्धेः ॥ अन्यत्रेति ॥ अन्यफलिका शिल्पे

**मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् । रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥७॥ गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् । कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम् ॥८॥ तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः । तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥९॥**

शास्त्रे च या धीः सा विज्ञानम् ॥ "विज्ञानं कार्मणे ज्ञाने" इति हैमः ॥ ( १ ) ॥ एकं शिल्पादिविषयकबुद्धेः ॥ **मुक्तिरिति** ॥ "मुक्तिर्मोचनमोक्षयोः" इति हैमः ॥ ( १ ) ॥ कैवल्यं क्लीबे द्वन्द्वघटकत्वात् ॥ ( २ ) ॥ "निर्वाणं मोक्षनिर्वृत्योर्विध्याते करिमज्जने" इति हैमः ॥ (३) ॥ "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते तु वाच्यवत्" ॥ ( ४ ) ॥ "निःश्रेयसं तु कल्याणमोक्षयोः शंकरे पुमान्" ॥ ( ५ ) ॥ "अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" ॥ ( ६ ) ॥ "मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ" इति हैमः ॥ ( ७ ) "अपवर्गस्त्यागमोक्षयोः । क्रियावसाने साकल्ये" इति हैमः ॥ ( ८ ) ॥ **अष्टौ मोक्षस्य** ॥ **अथेति** ॥ अज्ञानम् ॥ ( १ ) ॥ अविद्या ॥ ( २ ) ॥ अहंमतिः ॥ ( ३ ) ॥ **त्रीण्यविद्यायाः** ॥ **रूपमिति** ॥ "रूपं तु श्लोकशब्दयोः । पशावाकाशे सौन्दर्ये, नाणके नाटकादिके ॥ ग्रन्थावृत्तौ स्वभावे च" इति हैमः ॥ ( १ ) ॥ **शब्दोऽक्षरे** यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ" इति हैमः ॥ ( १ ) ॥ "गन्धः संबन्धलेशयोः । गन्धकामोदगर्वेषु" इति हैमः ॥ ( १ ) ॥ "रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान्" इति हैमः ॥ ( १ ) "स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि" इति हैमः ॥ ( २ ) ॥ "विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयोः । शब्दादौ जनपदे च" इति हैमः ॥ ( १ ) ॥ गोचरः ॥ ( २ ) ॥ अर्थः ॥ ( ३ ) ॥ पञ्चानामपि प्रत्येकं त्रीणि ॥ **हृषीकमिति** ॥ हृषीकम् ॥ ( १ ) ॥ "विषयी विषयासक्ते वाच्यवत्, क्लीबमिन्द्रिये । पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च" ॥ ( २ ) ॥ "इन्द्रियं तु चक्षुरादिषु रेतसि" इति हैमः ॥ **त्रीणीन्द्रियाणाम्** ॥ **कर्मेति** ॥ कर्मसाधकमिन्द्रियं कर्मेन्द्रियमुच्यते ॥ ( १ ) ॥ "पायूपस्थे पाणिपादौ वाक्चेतीन्द्रियसंग्रहः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः" इति कामन्दकीये ॥ एकं गुह्यादीन्द्रियस्य ॥ **मन इति** ॥ धीसाधनमिन्द्रियं धीन्द्रियम् ॥(१)॥ "मनः कर्णौ तथा नेत्रं रसना च त्वचा सह । नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते" ॥ एकम् ॥ ॥ ८ ॥ **तुवर इति** ॥ "तुवरस्तु कषाये स्यात्काक्ष्याढक्योस्तुवर्यपि" ॥ दीर्घादिरपि । "नरेऽश्मश्रुणि शृङ्गाभ्यां रहिते गवि तूवरः । काले प्राप्ते कषाये च रसे पुंव्यञ्जने च्युते" इत्युत्पलिनी ॥ "नापि कषायस्तुवरः" इति बोपालितः ॥ "पुंसि कषायस्तुवरम्" इति क्लीबकाण्डे रत्नकोषः ॥ ( १ ) ॥ "कषायः सुरभौ रसे । रागवस्तुनि निर्यासे क्रोधादिषु विलेपने" इति हैमः ॥ ( २ ) अस्त्रीत्युभयान्वयि । उक्तकोषाभ्याम् ॥ "कुवरस्तु कषायोऽस्त्री" इत्येके पठन्ति ॥ **द्वे कषायरसस्य** ॥ **मधुर इति** ॥ "मधुरं विषे । मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि । मधुरा मथुरापुर्यां यष्टीमेदामधूलिषु । मधुकुक्कुटिकायां च मिश्रेयाशतपुष्पयोः" इति हैमः ॥ ( १ ) **एकं मधुरस्य** ॥ **लवण इति** ॥ "लवणो राक्षसे रसे । अस्थिभेदे लवणा त्विट्" इति हैमः ॥ ( १ ) ॥ **एकं लवणस्य** ॥ **कटुरिति** ॥ कटुकार्ये मत्सरे च दूषणे च कटू रसे । तिक्ते प्रियंगुसुरभि कटुका राजिकास्वपि" इति हैमः ॥ ( १ ) ॥ **एकं कटोः** ॥ **तिक्त इति** ॥ "तिक्तस्तु सुरभौ रसे । तिक्ता तु कटुरोहिण्यां तिक्तं पर्पटकौषधे" इति हैमः ॥ ( १ ) ॥ **एकं तिक्तस्य** ॥ **अम्ल इति** ॥ **अम्लोऽपि** "अम्लो रसेऽम्लवेतसे । अम्ली चाङ्गेर्याम्" इति हैमः ॥ ( १ ) ॥ **एकम्** ॥ **रसा इति** ॥ तुवरादयः षट् रसशब्दवाच्याः तत्र तुवरकषाययोरस्त्रीत्वस्योक्तत्वादितरेषां लिङ्गनिर्णयमाह—"पुंसि" इति ॥ 'गुणमात्रे वर्तमाना मधुरादयः पञ्च पुंसि' इत्यर्थः ॥ **तद्वत्स्विति** । अमी षट् । षण्णामपि वाचकास्तुवरादयः सप्तापि गुणिनि त्रिलिङ्गा इत्यर्थः । कटुशब्दात्स्त्रियाम् "वोतो गुण—" (४।१।४४) इति वा ङीष् ॥९॥

---

१—मेदिन्यामेवोपलभ्यते॥ २—वर्गाक्षराणि कादयो मावसानाः पञ्चविंशतिः । "ते वर्गाः पञ्च पञ्च" इति कातन्त्रसूत्रात् ॥ ३—अत्र दीर्घे त्वार्याभङ्गः स्यात्-इति मुकुटः ॥ ४ अस्थिभेदो भालकर्णान्तरास्थि । तत्र यथा प्रयोगः । "शृणाति लवणाघातः" इत्यनेकार्थकैरवाकरकौमुदी ॥

विमर्दोत्थे परिमलो गन्धे जनमनोहरे । आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात्॥१०॥
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः॥इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ ११ ॥
पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः॥१२॥
अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः । हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः॥१३॥
कृष्णे नीलासितश्यामकालश्यामलमेचकाः।पीतो गौरो हरिद्राभः पालाशो हरितो हरित्१४॥

**विमर्दोत्थ** इति ॥ सुरतादिविमर्दोत्थे माल्यादिगन्धे, घर्षणसमुद्भवे चन्दने, च जनानां मनोहरे ॥ परिमलः। "स्यात्परिमलो विमर्दातिमनोहरगन्धयोश्चापि ॥ सुरतोपमर्दविकसच्छरीरसङ्गादिसौरभे पुंसि" ॥ ( १ ) ॥ एकं **विमर्दोत्थगन्धस्य** ॥**आमोद** इति॥**स परिमलोऽतिनिर्हारी** अत्यन्तमनोहरश्चेत् ।"**आमोदो** गन्धहर्षयोः" ॥(१)॥ एकं **नितान्तमनोहरगन्धस्य** ॥ **वाच्येति** ॥ आगुणात्" **गुणे शुक्लादयः पुंसि**" इत्यतः प्राक् अतः परं "वाच्यलिङ्गता" इत्यधिक्रियते ॥ १० ॥ **समाकर्षीति** ॥ समाकर्षी समाकर्षिणौ पुंसीनन्तः ॥(१)॥ निर्हारी, निर्हारिणौ पुंसीनन्तः ॥ ( २ )॥ द्वे **दूरगामिगन्धस्य** ॥**सुरभिरिति** ॥ सुरभिः ॥ ( १ ) ॥ घ्राणतर्पणः"**इष्टगन्धः** सुगन्धौ स्यात्त्रिषु क्लीबं तु वालुके"॥(३)॥"**सुगन्धिः** स्यादिष्टगन्धे त्रिषु क्षीरे नपुंसकम् " ॥(३)॥ **चत्वारीष्टगन्धस्य**॥**अमोदीति** ॥ अमोदी॥(१)॥मुखवासनः॥(२)॥द्वे **मुखवासनगुटिकादेः**॥११॥ **पूतीति** पूतिगन्धिः ॥ (१ )॥ दुर्गन्धः ॥ ( २ ) ॥ द्वे **दुर्गन्धस्य** ॥ **विस्रमिति** ॥ [३]वयोरभेदः ॥ ( १ ) ॥ आमगन्धि ह्रस्वेकारान्तम् ॥(२)॥ द्वे **अपक्वमांसादिगन्धस्य** ॥ शब्दार्णवे तु "कस्तूरिकायामामोदः कर्पूरे मुखवासनः । वकुले स्यात्परिमलश्चम्पके सुरभिस्तथा" इति॥**शुक्लेति** ॥" **शुक्लो** योगान्तरे सिते । नपुंसकं तु रजते" ॥ ( १ ) ॥ "**शुभ्रं** दीप्तेऽभ्रके सिते" इति हैमः ॥ ( २ ) ॥ शुचिः ॥ ( ३) ॥ "**श्वेतो**[३] द्वीपाद्रिभेदयोः । श्वेता वराटिकाकाष्ठपाटलाशाङ्खिनीषु च । क्लीबं रूप्येऽन्यवच्छुक्ले"॥ ( ४ )॥ "**विशदः**[४] पाण्डरे व्यक्ते" इति हैमः ॥ ( ५ ) ॥ श्वेतः ॥ ( ६ ) पाण्डरः॥७॥॥१२॥"**अवदात** तु विमले मनोज्ञे सितपीतयोः" इति हैमः ॥ ( ८ ) ॥ "सितस्त्ववसिते बद्धे वर्णे **सिता** तु शर्करा" इति हमैः ॥ ( ९ ) ॥ "**गौरः** श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि । विशदे **गौरं** तु श्वेतसर्षपे पद्मकेसरे" इति हैमः ॥ ( १० ) ॥ वलक्षः ॥ ( ११ ) ॥ "अथ **धवलो** महोक्षे सुन्दरे सिते । **धवली** गौः" इति हैमः ॥ ( १२ ) ॥ "**अर्जुनः** ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे **स्यादर्जुनी** गवि" ॥ ( १३ ) ॥ **त्रयोदश शुक्लवर्णस्य** ॥ शब्दार्णवे तु "श्वेतस्तु समपीतोऽसौ रक्तेतरजपारुचिः । वलक्षस्तु सितश्यावः कदलीकुसुमोपमः । **अर्जुनस्तु** सितः कृष्णलेशवान्कुमुदच्छविः" इत्युक्तम् ॥ शुद्धशब्दोऽप्यत्र । तथा च धरणिः—"**शुद्धः** शुक्ले च पूते च केवले च प्रयुज्यते" इति ॥ **हरिण इति** ॥ "**हरिणौ** पाण्डुसारङ्गौ **हरिणी** चारुयोषिति । सुवर्णप्रतिमायां च हरितावृत्तभेदयोः" इति हैमः ॥ ( १ ) ॥ "**पाण्डुरो** वर्णतद्वतोः । **पाण्डुरं** तु मरुबके" इति हैमः ॥ ( २ ) ॥ "**पाण्डुस्तु** पीतभागार्धः केतकीधूलिसंनिभः" इति शब्दार्णवः ॥ "**पाण्डुः** कुन्तीपतौ सिते" इति हैमः ॥ ( ३ ) ॥ **त्रीणि पीतसंवलितशुक्लस्य** ॥ **ईषदिति** ॥ "**धूसरी** किंनरीभेदे, ना खरे, त्रिषु पाण्डुरे" ॥ "**धूसरस्तु** सितः पीतलेशवान्बकुलच्छविः " इति शब्दार्णवः ॥ ( १ ) ॥ **एकमीषत्पाण्डोः** ॥ १३ ॥ **कृष्ण इति** ॥ "**कृष्णः** काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ । **कृष्णा** तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि । कृष्णं तु **मरिचे** लोहे" इति हैमः ॥ ( १ ) ॥ "**नीलो** वर्णे मणौ शैले निधिवानरभेदयोः । **नील्योषध्यां लाञ्छने** च" इति हैमः ॥ ( २ ) ॥ असितः

१—केचित्तु मत्वर्थीयेन्यन्तं पठित्वा कर्मधारयादिनिं व्याचक्षते । तन्न । "कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिरेवेष्टो लाघवात्" इति कात्यायनोक्तेः ॥ अपरे तु लाघवमनादृत्य मत्वर्थीयमिच्छन्ति ॥ "विसकिसलयच्छेदपाथेयवन्तः" इतिवत् । प्रयोगश्च "यद्दुर्गन्धि मदाविलं मलशतैर्यत्पूतिनाडीमयम्" इति शृङ्गारप्रकाशे ॥ इति बुधमनोहरायाम् ॥ २—विस्रं दन्त्योष्ठ्यादि । "विस्रजम्बालशेषम्" इति दमयन्तीश्लेषात् ॥ ३—तालव्यशः "श्वेतो धावति" इति महाभाष्यश्लेषात् ॥ ४—तालव्यशः "विशदाविशदामत्तसारसं सारसं जलं" इति दण्डियमकात्॥ ५—दन्त्यादिः "विकसितं सितम्" इति कीचकवधयमकात् ॥

**रोहितो लोहितो रक्तः शोणः कोकनदच्छविः। अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः १५
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते। कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ १६
चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥ १७ ॥**

॥ ( ३ )॥ "श्यामोऽम्बुदे शितौ। हरिते प्रयागवटे कोकिले वृद्धदारुके। श्यामं सैन्धवे मरिचे श्यामा सोमलतानिशो:" इति हैमः ॥ ( ४ ) ॥ "कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः। मरणानेहसोः काली कालिकाक्षीरकीटयोः। मातृभेदोमयोर्नव्यमेघौघपरिवादयोः। काला कृष्णात्रिवृन्नील्योर्जुग्याम्" इति हैमः ॥ ( ५ ) ॥ "श्यामलः पिप्पले श्यामे" इति हैमः ॥ ( ६ ) ॥ "मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके" इति हैमः ॥ ( ७ ) ॥ सप्त कृष्णस्य ॥ शब्दार्णवे तु "मेचकः कृष्णनीलः स्यादतसीपुष्पसंनिभः" इत्युक्तम् ॥ पीत इति ॥"पीतं पाने हरिद्रायां स्त्रियां गौरेऽभिधेयवत्" ॥ (१) ॥(२)॥हरिद्राभः ॥ (३) ॥ त्रीणि पीतस्य॥पालाश इति ॥ पालाशः ॥ "पत्रं पलाशं ना रक्षःशटीहरितकिंशुके" इति रुद्राद्रूस्वादिरपि। "पलाशः किंशुकेऽस्त्रपे। हरिते पलाशं पत्रे" इति हैमः ॥ ( १ ) ॥ "हरिता स्त्री च दूर्वायां हारिद्वर्णयुतेन्यवत्" ॥ ( २ ) ॥ "हरिर्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः। अस्त्रियां स्याच्तृणे च" ॥ ( ३ ) ॥ त्रीणि हरितवर्णस्य ॥ १४ ॥ रोहित इति ॥ रोहितः ॥ ( १ ) ॥"लोहितो मङ्गले नदे। वर्णभेदे लोहितं तु कुङ्कुमे रक्तचन्दने। गोशीर्षे रुधिरे युद्धे" इति हैमः ॥ ( २ ) ॥ "रक्तं नील्यादिरञ्जिते। कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे" इति हैमः ॥ ( ३ ) ॥ त्रीणि रक्तवर्णस्य ॥ शोण इति ॥ "शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान्। त्रिषु कोकनदच्छाये" ॥ ( १ ) ॥ कोकनदतुल्यरक्तवर्णस्यैकम् ॥ अव्यक्तेति ॥ अव्यक्तो रागो यस्य। किंचिल्लोहितः ॥ "अरुणः कृष्णलोहितः" इत्यमरमाला ॥ "अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु। अरुणाऽतिविषा श्यामामञ्जिष्ठात्रिवृतासु च" ॥ ( १ ) ॥ एकमव्यक्तरक्तवर्णस्य ॥ श्वेतेति ॥ "पाटलं तु कुङ्कुमश्वेतरक्तयोः। पाटलः स्यादाशुव्रीहौ पाटला पाटलिद्रुमे" इति हैमः ॥ ( १ ) ॥ एकं श्वेतरक्तस्य ॥ १५ ॥ श्याव इति॥ श्यावः ॥ ( १ ) ॥ "कपिशस्त्रिषु श्यामे स्त्री माधव्यां सिह्लके पुमान्" ॥ ( २ ) ॥ कृष्णपीतस्य द्वे ॥ धूम्रेति ॥ धूम्रः ॥ ( १ ) ॥ धूमलः ॥ ( २ ) ॥ द्वे कृष्णमिश्रलोहितस्य ॥ कडार इति ॥ "कडारः पिङ्गले दासे" ॥ ( १ ) ॥ "पुण्डरीककरिण्यां तु शिंशिपागोविशेषयोः। स्त्री रेणुकायां कपिला वर्णे ना कुक्कुरे मुनौ। अनले वासुदेवे च कपिलः परिकीर्तितः" ॥ ( २ ) ॥ "पिङ्गा गोरोचनाहिङ्गुनाडिकाचण्डिकासु च। पिङ्गी शम्यां पिशङ्गे ना बालके तु नपुंसकम्" ॥ ( ३ ) ॥ पिशङ्गः ॥ ( ४ ) ॥ "कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम्" ॥ ( ५ ) ॥ "पिङ्गलः कपिले बभ्रौ रुद्रेऽर्कपारिपार्श्विके। कपौ मुनौ निधेर्भेदे पिङ्गला कुमुदस्त्रियाम्" ॥ ( ६ ) ॥ षट् कपिलस्य ॥ १६ ॥ शब्दार्णवे तु "सितपीतहरिद्रक्तः कडारस्तृणवह्निवत्। अयं तूद्रिक्तपीताङ्गः कपिलो गोविभूषणः। हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत्। पिशङ्गस्त्वसितविशात् पिङ्गो दीपशिखादिषु। पिङ्गलस्तु परच्छायः पिङ्गे शुक्लाङ्गखण्डवत्" इति ॥ चित्रमिति ॥ "चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि। तद्युक्तयोस्त्वन्यलिङ्गम्" ॥ नामलिङ्गानुशासनेतु नानार्थपुंस्काण्डेऽयं पठितः। तदनुरोधेनेहापि "चित्रकिर्मीर–" इति समस्तं केचित्पठन्ति ॥ ( १ ) ॥ "किर्मीरो ना नागरङ्गे कर्बुरे राक्षसान्तरे" ॥ ( २ ) ॥ "कल्माषः कर्बुरे कृष्णे" इति मूर्धन्यान्ते रभसः ॥ "कल्माषो राक्षसे कृष्णे शबलेऽपि" इति हैमः ॥ ( ३ ) ॥ शबलः ॥ ( ४ ) ॥ "एतः कर्बुर आगते" ॥ ( ५ ) ॥ "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुन-

---

१—तालव्यमध्यः। तथा च माघे "परिपाकपिशङ्गलतारजसारोधश्चकास्ति कपिशं गलता" इति–इति मुकुटः ॥
२—तालव्यान्तः "राजन्कपिशताकीर्णे।" इति द्विसंधानश्लेषात् "कपिशितं पिशितं मदनाम्निना" इति माघात् ॥
३—"एकं चेत्तत्कथं चित्रं चित्रं चेदेकता कुतः" इति धर्मकीर्तिप्रयोगश्चोपलभ्यते। इति मुकुटबुधमनोहरे ॥

**ब्राह्मी तु भारती भाषा गीर्वाग्वाणिः सरस्वती । व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥१॥ अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः॥तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता**

रन्यवत्" ॥ ( ६ ) ॥ **षड् नानावर्णस्य** ॥ **गुण इति** ॥ यद्यपि 'शुक्लं रूपम्' इत्यादौ विशेष्यनिघ्नतै-वेष्यते । तथापि विशेष्यानुपादाने प्राप्तस्य "सामान्ये नपुंसकम्" इत्यस्यापवादोऽयम् ॥ पटस्य शुक्ल इत्यादि बोध्यम् ॥ अपवादान्तरमाह--गुणीति ॥ विशेष्यानुपादाने यदेव यल्लिङ्गं प्रतिपिपादयिषितम्, तल्लिङ्गा इत्यर्थाः ॥ यथा शुक्लम्, शुक्लः, शुक्ला, इत्यादि ॥

॥ इति धीवर्गविवरणम् ॥

---

**ब्राह्मीत्यादि** ॥ "**ब्राह्मी** तु भारती । शाकभेदः पङ्कगण्डी हञ्जिका सोमवल्ल्यपि । ब्रह्मशक्तिः" इति हैमः ॥ ( १ ) ॥ "अथ **भारती** । वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः" ॥ ( २ ) ॥ भाषा ॥ ( ३ ) ॥ "**गीः** स्त्री भाषा-सरस्वत्योः" ॥ भागुरिमते गिरापि ॥ "**ब्राह्मणी वचनं** वाचा जल्पितं गदितं **गिरा**" इति शब्दार्णवः ॥ ( ४ ) ॥ साहचर्यात् स्त्रियाम् "**वाग्वाचे** भारत्यां वचने स्त्रियौ" साहचर्यात् स्त्रियाम् "**वाणिरम्बुदे** । व्यूतौ मूल्ये सरस्वत्याम् इति" हैमः ॥ "**वाणिः** स्याद्दूतिभारत्योर्वाणि-र्मूल्ये वलाहके" इति विश्वः ॥ (कृदिकारात्) ( ग० ४ । १ । ४५ । ) इति ङीषि चापि वाणी ॥ ( ६ ) ॥ "**सरस्वती** सरिद्भिदि । वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि" इति हैमः ॥ ( ७ ) ॥ **सप्ताधिष्ठातृदेवतायाः** ॥ **व्याहार इति** ॥ व्याहारः पुंसि रूपभेदात् ॥ ( १ ) ॥ उक्तिः स्त्रियाम् ॥ ( २ ) ॥ लपितम् ॥ ( ३ ) ॥ भाषितम् ॥ ( ४ ) ॥ वचनम् ॥ ( ५ ) ॥ वचः सकारान्तं क्लीबे ॥ ( ६ ) ॥ **षट् भाषणस्य** ॥ १ ॥ केचित्तु 'ब्राह्मया द्यास्त्रयोदश वचनस्य पर्यायाः' इत्याहुः ॥ **अपभ्रंश इति** ॥ "**अपभ्रंशस्तु** पतने भाषाभेदापशब्दयोः" ॥ ( १ ) ॥ ( २ ) ॥ **द्वे व्याकरणानिष्पन्नस्य गावीत्यादेः** ॥ **शास्त्र इति** ॥ शास्त्रे व्याकरणादौ यो वाचकः साधुः स शब्दः स एव निरुपपदेन शब्दशब्देन व्यवह्रियते ॥ **एकम्** ॥ **तिङ्ङिति** ॥ तिङन्तानां चयः "पचति पश्य" "पचति भवति" पाको भवतीत्यर्थः ॥ सुबन्तानां चयः । 'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि ॥ 'भवति' इत्यध्याहारस्य भाष्यकारमते आवश्यकत्वाभावात्स

---

१--"ब्राह्मी गौर्भारती" इति क्वचित्पाठः-इति बुधमनोहरा ॥ २--"समानायामर्थावगतौ शब्देन चापशब्देन च शास्त्रेण धर्मनियमः क्रियते 'शब्देनैवार्थोऽभिधेयो नापशब्देन'इति" इति भाष्यादावुक्तस्य शब्दशब्दस्य शक्तिग्राहकोऽयं कोष इति दर्शयितुं शास्त्र इत्युपात्तम् । एवं च 'वाचकत्वाविशेषे ऽपि नियमः पुण्यपापयोः इति'हरिवाक्यानुसारेण पुण्यजनकशब्दस्तु शास्त्रसिद्ध एवेति दर्शितम् ॥ ३-- " **मेण्ठे** स्वर्द्विरदाधिरोहिणि, वशं याते **सुबन्धौ** विधेः शान्ते हन्त च **भारवौ** विघटिते **बाणे** विषादस्पृशः । वाग्देव्या विरमन्तु मन्तुविधु राद्राग्दष्टयश्चेष्टते । शिष्टः कश्चन स प्रसादयति तां यद्वाणिसद्वाणिनी" ॥२।५३श्रीकण्ठचरिताद्रस्वान्तो वाणिशब्दः ॥ ४--"बलीवर्दपङ्क्तिरिव समाधुर्या वाणी मनो हरति" इति दमयन्तीश्लेषाद्दीर्घान्तोऽपि वाणीशब्दः ॥ ५ परे तु रूपभेदसाहचर्याभ्यां पुंसि । अतएव"भाग्यं स्त्री नियतिर्विधिः" "श्रुतिः स्त्री वेदः" इत्यत्र स्त्रीत्वनिश्चायको विशेषविधिः संगच्छते इति वदन्ति ॥ ६--इदं च "अनभिहिते" ( २।३।१ ) इति सूत्रव्याख्यावसरे "नीलमिदं, न तु रक्तम्" इत्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽस्तिक्रियाया अनावश्यकत्वात् " इति मनोरमायां भाष्यभ्रान्त्या । भाष्ये तु प्रत्युत " तिङ्समानाधिकरणे प्रथमा" इत्युक्त्वा 'वृक्षः' इत्यादौ तिङोऽप्रयोगे प्रथमासिद्धयर्थम् "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति वृक्षः प्लक्षः 'अस्ति' इति गम्यते" इत्येवोक्तम् । अध्याहारं विना तत्र प्रथमैव न स्यात् । "शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" इति विभूतिपादीये योगसूत्रे भाष्यकृच्छ्रीवेदव्यासोऽपि "सर्वपदेषु चास्ति वाक्यशक्तिः । 'वृक्षः' इत्युक्ते 'अस्ति' इति गम्यते । न सत्तां पदार्थो व्यभिचरति" । इत्युक्तवान् ॥ तस्मात् क्रियाध्याहार आवश्यक एव । 'त्रयः कालाः' इत्यत्रापि 'सन्ति' इत्येवाध्याहार्यम्। इति"अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्" इति कैवल्यपादीययोगसूत्रभाष्ये व्यक्तम् । अत एव बुधमनोहराख्यव्याख्यायामपि "तिङ्सुबन्तचयः 'चैत्रः पचति' इत्यादिः । 'पाको भवति' इत्याद्यर्थके 'पचति भवति' इत्यादावव्याप्तेराह—**क्रिया वेति** । 'कारकविशिष्टक्रियावोधकं शब्दजातं वाक्यम्' इत्यर्थः । विस्तरोऽन्यत्र । कियारहिते तदध्याहार आवश्यकः" इत्युक्तम्॥

**श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः।स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥**
**शिक्षेत्यादि श्रुतेरङ्गमोङ्कारप्रणवौ समौ । इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥**
**आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः।आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ५॥**

वाक्यम् ॥ **क्रियेत्यादि** ॥ वाशब्दः समुच्चये । 'कारकान्वितक्रियाबोधकम् 'घटमानय' इत्यादि तिङ्सुप्चयात्मकमपि वाक्यम् 'इत्यर्थः ॥ केचित्तु—भाष्यकारमतेन प्रथमः पक्षः, "एकतिङ् वाक्यम्" ( वा० २।१।१ ) इति वार्तिकाभिप्रायेणापरः—इत्याहुः ॥ यत्तु—पूर्वं शब्दात्मकस्य वाक्यस्य लक्षणम् । 'क्रिया–' इत्यादि त्वर्थात्मकस्य—इत्याहुः ॥ तत्तु "वचोऽशब्दसंज्ञायाम्" ( ७।३।६७ ) इति कुत्वनिषेधकस्याननुगुणम् ॥ वाक्यम् शब्दसंज्ञायाम् ॥ अन्यत्र तु वाच्यम् ॥ "**वाच्यं** तु कुत्सिते हीने वचनार्हे च वाच्यवत्" **एकम्** ॥२॥ **श्रुतिरिति** ॥ " श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्" ॥ ( १ ) "**वेदः** श्रुतौ च वित्तौ च"॥ ( २ ) "**आम्नायः** कुल आगमे" इति हैमः ॥ ( ३ ) ॥ त्रयी ॥ ( ४ ) ॥ **चत्वारि वेदस्य** ॥ **धर्म इति** ॥ तेन वेदेन विधीयते । यज्ञादिः ॥ एतेन—वेदविहितत्वधर्मत्वम्, वेदश्च धर्मे प्रमाणम्—इत्युक्तम् । धर्मः । ( १ ) ॥ **एकं वेदविहितकर्मणः** । **स्त्रियामिति** ॥ ऋक् चकारान्ता स्त्री ॥ ( १ ) ॥ "**साम** क्लीबमुपायस्य भेदे वेदान्तरेऽपि च" ( १)॥ **यजुः** क्लीबं सकारान्तम् ॥ ( १ ) ॥ **वेदानां प्रत्येकमेकैकम्** ॥ **इतीति** ॥ इति एते त्रयो वेदास्त्रयी ॥ " **त्रयी** त्रिवेद्यां त्रितये पुरन्ध्र्यां सुमतावपि " इति हैमः ॥ ( १ ) ॥ **वेदत्रयसंघातस्यैकम्** ॥ ३ ॥ **शिक्षेति** ॥ श्रुतेर्वेदस्य शिक्षेत्याद्यङ्गम् ॥ "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः। छन्दोविचित्तिरित्येतैः षडङ्गो वेद उच्यते" ॥ **ओंकारेति** ॥ ओंकारः पुंसि द्वन्द्वघटकत्वात् ॥ (१) ॥ प्रणवः ( २ ) ॥ **द्वे** ॥ **इतीति** ॥ इतिहासः ॥ ( १ ) ॥ पुरावृत्तम् ॥ ( २ ) ॥ **पूर्वचरितप्रतिपादकग्रन्थस्य द्वे**॥ **उदात्तेति** ॥ "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः" ॥ "**स्वरो** नासासमीरे स्यान्मध्यमादित्रिकस्वरे । उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्" इति विश्वमेदिन्यौ॥ ( १ ) ॥ "**उदात्तो** दातृमहतोर्हृद्ये च स्वरभिद्यपि" इति हैमः ॥ **एकमुदात्तादि त्रितयस्य** ॥ ४ ॥ **आन्वीक्षिकीति** ॥ आन्वीक्षिकी ॥ ( १ ) ॥ दण्डनीतिः । आन्वीक्षिकीसाहचर्यात्स्त्रीत्वम् ॥ ( २ ) ॥ एतौ द्वौ क्रमात्तर्कविद्यायां न्यायरूपायाम्, अर्थशास्त्रे च वर्तेते ॥ अर्थस्य भूम्यादेः शास्त्रम् ॥ **एकैकम्** ॥ **आख्येति** ॥ आख्यायिका ॥ ( १ ) ॥ **एकं ज्ञातसत्यार्थभूतायाः कथायाः** ॥ **पुराणमिति** ॥ **पुराणं** "पञ्चलक्षणे । पॅणे पुंसि, त्रिषु प्रत्ने" ॥ ( १ ) ॥ "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम्" ॥ क्वचिदिह "वंश्यानुचरितं चैव" इति तृतीयपादे पाठान्तरम् ॥ **एकं सर्गादिपञ्चलक्षणयुतग्रन्थ-**

---

१"अत्र वाशब्दश्चेदर्थे । 'बोध्या' इति शेषः । 'कारकान्विताक्रियाबोधकसुप्तिङन्तचयः इत्यर्थः । सुप् च तिङ् च सुप्तिङ् । सुब्विशिष्टं तिङ् सुप्तिङ् । तयोरेकशेषेऽन्तशब्देन समासः ॥ तेन सुबन्तचय-तिङन्तचय-सुप्तिङन्तचयानां त्रयाणामपि लाभः । तत्र सुबन्तचयः–'चैत्रेण शयितव्यम्' इति । तिङन्तचयः–'पचति भवति, इत्यादिः । अन्त्यः–'चैत्रः पचतिः इत्यादिः 'क्रिया वा' इत्यनेन निरर्थकपदसमुदायव्यावृत्तिः । सुप्तिङन्तचयपदेन केवलस्य पचति इत्यादेर्व्यावृत्तिः तस्यापि कर्त्रादिविशिष्टक्रियाबोधकत्वात्" इति मञ्जूषोक्तदिशा एकमेव वाक्यलक्षणमिदम् ॥ अत एव समर्थ( २।१।१) सूत्रभाष्ये वार्तिककृतापि"आख्यातं सविशेषणं वाक्यम्"इति वाक्यलक्षणमुक्तम्॥असत्त्वभावप्रत्ययान्तानामप्याख्यातत्वमेव॥अत एव हेमचन्द्रेणापि नाममालायाम्"साविशेषणमाख्यातं वाक्यम्"इत्येकमेव वाक्यलक्षणमुक्त्वा "प्रयुज्यमानमप्रयुज्यमानं वाख्यातं प्रत्युज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते । यथा 'धर्मो वो रक्षतु' । अप्रयुज्यमानमाख्यातं यथा 'शीलं ते स्वम्' ।अत्र 'अस्ति' इति गम्यते । अप्रयुज्यमानविशेषणं यथा–'प्रविश' । अत्र 'गृहम्' इति गम्यते । अनयोरर्थात्प्रकरणाद्वा आख्यातादेरवगमादप्रयोगः । 'आख्यातम्' इत्यत्र चैकत्वस्य विवक्षितत्वात् 'ओदनं पच तव भविष्यति' इत्यादौ वाक्यभेदः"इति स्वयमेवाभिधानचिन्तामणौ व्याख्यातम् इति दिक् २—स्मृत्युक्तोऽपि वैदिक एव, वेदमूलकत्वात्स्मृतीनाम् इति क्षीरस्वामी ॥३–आथर्वणस्तु त्र्यनुवाद एवेति स्वामी॥पद्यात्मकेष्वृक्त्वस्य गीत्यात्मके सामत्वस्य शेषे गद्यात्मके यजुष्ट्वस्य जैमिनिनोक्तत्वाच्चतुर्थप्रकारस्यासम्भवात्॥४–मन्त्रब्राह्मणयोरुभयोर्वेदत्ववत् निघण्टुनिरुक्तयोरुभयोर्वेदाङ्गत्वं बोध्यम् ॥५–हैमकोशे तु षोडशपणस्य पुराणसंज्ञाभिहिता । यदाह–"षोडशपणः पुराणः पणो भवेत्ककिणीचतुष्केण—इति इत्यनेकार्थकैरवाकरकौमुदी ॥

प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका । स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ६ ॥
समस्या तु समासार्था किंवदन्ती जनश्रुतिः । वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ॥७॥
आख्याह्वे अभिधानं च नामधेयं च नाम च । हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ ८ ॥
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् । उपोद्घात उदाहारः शपनं शपथः पुमान् ॥९॥
प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे । मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम् ॥
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः । यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ११

विशेषस्य ॥ ५ ॥ प्रबन्धेति ॥ प्रबन्धस्य कल्पना रचना स्तोकसत्या ॥ कथा कादम्बर्यादिः ॥ ( १ ) ॥ एकं प्रबन्धरचनायाः ॥ प्रवेति ॥ प्रवह्लिका "व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यार्थसंबन्धः कथ्यते सा प्रहेलिका" ॥ "प्रहेलिका प्रवह्ली च प्रश्नदूती विपादिका" इत्युत्पलिनी ॥ द्वे दुर्विज्ञानार्थस्य प्रश्नस्य ॥ स्मृतिरिति ॥ "स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम्" ॥ ( १ ) ॥ धर्मबोधार्थं रचिता संहिता । एकं मन्वादिरचितधर्मशास्त्रस्य ॥ समेति ॥ समाहृतिः ॥ (१) ॥ "विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः । निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः" ॥ "संग्रहो बृहदुद्रङ्गे मुष्टिसंक्षेपयोरपि" इति मेदिनी ॥ ( २ ) ॥ द्वे संगृहीतानेकग्रन्थसारस्य ॥ ६ ॥ समेति ॥ समस्या ॥ ( १ ) ॥ समासाऽर्था पूरणसाकाङ्क्षा । कविशक्ति-परीक्षार्थमपूर्णतयैव पठ्यमाना ॥ यथा "शतचन्द्रं नभस्तलम्" इति । तत्र "दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन" इत्यादिना सा पूर्यते ॥ "असमासार्था" इति पाठे तु "अपरिपूरणार्था" इत्यर्थः ॥(२)॥ द्वे ॥ किंवदन्तीति ॥ किंवदन्ती ॥ ( १ ) ॥ जनश्रुतिः ॥ ( २ ) ॥ द्वे लोकप्रवादस्य ॥ वार्तेति ॥ "वार्ता वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबम्" ॥ ( १ ) ॥ "प्रवृत्तिर्वृत्तवृत्तान्तप्रवाहेषु प्रवर्त्तने" "वृत्तान्तस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोः" इति हैमः ॥ ( ३ ) ॥ "उदन्तः साधुवार्तयोः" ॥ ( ४ ) ॥ चत्वारि वृत्तान्तस्य ॥ अथेति ॥ आह्वयः ॥( १ ) ७ ॥ आख्या ॥ ( २ ) ॥ आह्वा ॥ ( ३ ) ॥ अभि-धानम् ॥ ( ४ ) ॥ नामधेयम् ॥ ( ५ ) ॥ नाम नान्तं क्लीबम् ॥ ( ६ ) ॥ षट् नाम्नः ॥ हूतिरिति ॥ हूतिः । स्त्री ॥ ( १ ) आकारणा स्त्री ॥ ( २ ) ॥ आह्वानम् ॥ ( ३ ) ॥ त्रीण्याह्वानस्य ॥ संहूतीरीति ॥ बहुकर्तृका चेत् संहूतिः ॥ एकम् बहूनामाहूतेः ॥ ८ ॥ विवाद इति ॥ विवादः ॥ ( १ ) ॥ "वि नाना-र्थेऽव संदेहे हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहार इति स्मृतः" इति कात्यायनः ॥ "व्यवहारः स्थितौ पणे । द्रुमेदे" इति हैमः ॥ ( २ ) ॥ द्वे ऋणादिन्यायस्य ॥ उपेति उपन्यासः ॥ (१) ॥ वाङ्मुखम् ॥ ( २ ) ॥ द्वे वचनोपक्रमस्य ॥ उपोद्घात इति ॥ उपोद्घातः ॥ ( १ ) ॥ उदाहारः ॥ ( २ ) द्वे वक्ष्यमा-णोपयोग्यर्थवर्णनस्य ॥ प्रकृतोपपादकस्य दृष्टान्तादेरित्यन्ये ॥ शपनमिति ॥ शपनम् ॥ (१) ॥ "शपथः कार आक्रोशे शपने च सुतादिभिः" इति हैमः ॥ ( २ ) ॥ द्वे सुतस्पर्शादिना शपथकरणस्य ॥ ९ ॥ प्रश्न इति ॥ प्रश्नः ॥ ( १ ) ॥ अनुयोगः ॥ ( २ ) ॥ पृच्छा ॥ ( ३ ) ॥ त्रीणि प्रश्नस्य ॥ प्रतीति ॥ प्रतिवाक्यम् ॥ ( १ ) "उत्तरं प्रवणोर्ध्वयोः । उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे" ॥ (२) ॥ द्वे उत्तरस्य ॥ मिथ्येति ॥ मिथ्याभियोगः ॥ (१) ॥ अभ्याख्यानम् ॥ द्वे "शतं मे धारयसि" इत्यादिमिथ्याविवादस्य ॥ अथेति ॥ मिथ्याभिशंसनम् ॥ ( १ ) ॥ अभिशापः ॥ ( २ ) ॥ द्वे मिथ्यारोपस्य सुरापानादिविषयस्य ॥ ॥ १० ॥ प्रणाद इति ॥ "प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये" ॥ "अनुरागकृते शब्दे प्रणादः सीत्कृतं नृणाम्" इति शब्दार्णवः ॥ ( १ ) ॥ एकं प्रीतिविशेषजनितमुखकण्ठादिशब्दस्य ॥ यश इत्यादि ॥ यशः सकारान्तं क्लीबम् ॥ ( १ ) ॥ "कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च" ॥ ( २ ) ॥ समज्ञा ॥ 'समाज्ञा' इत्यपि ॥ 'समज्या' इत्यपि ॥ ( ३ ) ॥ त्रीणि यशसः ॥ स्तव इत्यादि ॥ स्तवः ॥ ( १ ) ॥

---

१-हैमे तु "संग्रहो बृहदुद्धारे महसंक्षेपयोरपि" इत्युपलभ्यते । संचयेऽपीति मङ्खः । इत्यनेकार्थकैरवाकरकौमुदी ।

**आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा। काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः॥१२॥
अवर्णाक्षेपनिर्वादपरीवादापवादवत्। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३॥
पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः। यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्॥१४॥
तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति। स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः॥१५॥
अनुलापो मुहुर्भाषा विलापः परिदेवनम्। विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः॥१६ ॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः। संदेशवाग्वाचिकं स्याद् वाग्भेदास्तु त्रिषूत्तरे॥१७॥**

स्तोत्रम् ॥ ( २ ) ॥ स्तुतिः ॥ ( ३ ) ॥ नुतिः ॥ ( ४ ) ॥ चत्वारि स्तुतेः ॥ ११ ॥ आम्रेडितमिति ॥ 'सर्पः सर्पः' इति यथा द्विस्त्रिरुक्तं यत् तद् 'आम्रेडितम्' ॥ (१) ॥ एकमसकृदुक्तेः ॥ उच्चैर्घुष्टमित्यादि ॥ उच्चैर्घुष्टम् ॥ ( १ ) ॥ घोषणा ॥ ( २ ) ॥ उच्चैःशब्दनस्य द्वे ॥ काकुरिति ॥ आदिना कामक्रोधादेर्ग्रहः ॥ काकुः॥ ( १ ) ॥ एकं शोकत्रासादिजनितशब्दविकृतेः॥अवर्णेत्यादि ॥ यथा अवर्णादयो निन्दायाम्, तथोपक्रोशादयोऽपीत्यर्थः ॥ "वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने" ॥ तद्विरुद्धोऽवर्णः ॥ ( १ ) ॥ 'आक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृतः' ॥ ( २ ) ॥ "निर्वादः स्याल्लोकवादपरिनिष्ठितवादयोः"[1] ॥ ( ३ ) ॥ "परिवादोऽपवादे स्याद्वीणावादनवस्तुनि" ॥ ( ४ ) ॥ "अपवादस्तु[2] निन्दायामाज्ञाविश्रम्भयोरपि" ॥ ( ५ ) ॥ उपक्रोशः ॥ ( ६ ) ॥ जुगुप्सा ॥ ( ७ ) ॥ कुत्सा ॥ ( ८ ) ॥ "निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति" ॥ ( ९ ) ॥ गर्हणम् ॥ ( १० ) ॥ दश निन्दायाः ॥१३॥ पारुष्यमित्यादि ॥ "पारुष्यं परुषत्वे च दुर्वाक्ये पुंसि गीर्पतौ" ॥ ( १ ) ॥ अतिवादः ॥ ( २ ) ॥ द्वे अप्रियवचसः ॥ भर्त्सनमित्यादि ॥ भर्त्सनम् ॥ ( १ ) ॥ अपकारगीः ॥ ( २ ) ॥ द्वे 'चौरोऽसि घातयिष्यामि त्वाम्, इत्याद्यपकारार्थवाक्यस्य ॥ य इति ॥ उपालम्भो द्वेधा । गुणाविष्करणपूर्वको निन्दापूर्वकश्च ॥ आद्यो यथा "महाकुलीनस्य तव किमुचितमिदम्" ॥ द्वितीयस्तु "बन्धकीसुतस्य तवोचितमेवेदम्" इति ॥ तत्र यो द्वितीयः स परिभाषणम् ॥ "परिभाषणं सनिन्दोपालम्भे नियमेऽपि च" ॥ 'परिभाषा' अपि ॥ "परिभाषाश्च ततो भविष्यन्ति" इति "हेतुमति च" ( ३।१।२६ ) इति सूत्रे भाष्यात् ॥ ( १ ) ॥ एकं निन्दासहकृतोपालम्भस्य ॥ १४ ॥ तत्रेति ॥ आक्षारणा ॥ 'आक्षारणम्' अपि ॥ "क्षरणाक्षारणाक्रोशाः साभिशापाभिमैथुनाः" इति दुर्गः ॥ क्लीबमपि ॥ "नीचैमाक्षारणं[3] यः स आक्रोशो मैथुनं प्रति" इति शब्दार्णवः ॥ ( १ ) ॥ परस्त्रीनिमित्तं पुंसः, परपुरुषनिमित्तं स्त्रियाश्चाक्रोशनस्यैकम् ॥ स्यादिति ॥ आभाषणम् ॥ ( १ ) ॥ आलापः ॥ ( २ ) ॥ संभाषणस्य द्वे ॥ प्रलाप इति ॥ प्रलापः ॥ ( १ ) ॥ प्रयोजनशून्यस्योन्मत्तादिवचनस्यैकम् ॥ १५ ॥ अनुलाप इत्यादि ॥ अनुलापः ॥ ( १ ) ॥ मुहुर्भाषा ॥ ॥ ( २ ) ॥ द्वे वारंवारं भाषणस्य ॥ विलाप इत्यादि ॥ विलापः ॥ ( १ ) ॥ परिदेवनम् ॥ 'परिदेवना' अपि ॥ ( २ ) ॥ द्वे अनुशोचनोक्तेः ॥ विप्रलाप इत्यादि ॥ विरुद्धः प्रलापः ॥ "विप्रलापो विरुद्धोक्तावनर्थकवचस्यपि" इति हैमः ॥ ( १ ) ॥ विरोधोक्तिः ॥ ( २ ) ॥ द्वे अन्योन्यविरुद्धवचनस्य ॥ संलाप इति ॥संलापः॥( १ ) ॥मिथोऽन्योन्यं प्रति भाषणम् ॥ आलापस्त्वेकेनापि क्रियते ॥ एकं परस्परभाषणस्य ॥ १६ ॥ सुप्रेत्यादि ॥ सुप्रलापः ॥ ( १ ) ॥ सुवचनम् ॥ ( २ ) ॥ द्वे शोभनवचनस्य॥अपलाप इति ॥ "अपलापः प्रेम्ण्यपह्नवे" ॥ ( १ ) ॥ "निह्नवः स्यादविश्वासेऽपलापे निकृतावपि" ॥ ( २ ) ॥ द्वे धार्यमाणे 'न धारयामि' इत्याद्युक्तेः ॥ संदेशेति ॥ संदेशवाक् ॥ ( १ ) ॥ वाचिकम् ॥ ( २ ) ॥ द्वे संदेशवचनस्य ॥ वाग्भेदा इति ॥ उत्तरे वक्ष्यमाणा वाग्भेदा रुशत्यादयः सम्यगन्ता विशेष्यनिघ्नास्त्रि-

---

१---लोकवादोऽपवादः। तत्र यथा "खलनिर्वादकथायां वदिता यत्खलजनोऽपि स्यात्" ॥ परिनिष्ठितवादस्त्यक्तवादः। तत्र यथा "निर्वादा वादिनः कृताः" ॥ २---मेदिनीहैमयोस्तु "अववादः" इति दृश्यते । व्याख्यातमुदाहृतं च तदेवानेकार्थकैरवाकरकौमुद्याम् ॥ ३---'नीचम्' इति पुंविहीनस्य संज्ञा--इति मुकुटः ॥

रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका। अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम् १८॥
निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये । सत्येऽथ संकुलक्लिष्टे परस्परपराहते ॥ १९ ॥
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् । अम्बूकृतं सनिष्ठेवमबद्धं स्यादनर्थकम् ॥ २० ॥
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् । "सोल्लुण्ठनं तु सोत्प्रासं मणितं रतिकूजितम् ।"
अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ॥ २१ ॥
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति । शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥

लिङ्गाः ॥ १७ ॥ रुशतीति ॥ रुशती हिंसा । रुशञ् शब्दः । रुशद्वचनम् ॥ मुकुटस्तु 'उषती' इति पाठमाह ॥ ॥ ( १ ) ॥ एकमशुभवचनस्य ॥ स्यादिति ॥ कल्या ॥ 'काल्या' अपि—इति स्वामी ॥ ( १ ) ॥ एकं शुभवचसः॥ अत्यर्थेति ॥ "सान्त्वं सामनि दाक्षिण्ये" ॥ ( १ ) ॥ एकं नितान्तमधुरवाण्याः ॥ संगतमिति ॥ संगतम् ॥ ( १ ) ॥ हृदयंगमम् ॥ ( २ ) ॥ द्वे युक्त्या मिलितस्य वचनस्य ॥ १८ ॥ निष्ठुरमिति॥ निष्ठुरम्॥(१)॥"परुषं कर्बुरे रूक्षे स्य.न्निष्ठुरवचस्यपि" इति हैमः॥(२)॥ द्वे कर्कशवचनस्य॥ ग्राम्यमिति ॥ "ग्राम्यं स्त्रीकरणे क्लीबेऽश्लीलप्राकृतयोस्त्रिषु" ॥ ( १ ) ॥ ॥ अश्लीलम् ॥ ( २ ) ॥ द्वे भण्डादिवचनस्य ॥सूनृतमिति॥ प्रियं यत्सत्यम् तस्मिन् । "सूनृतं मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि " ॥ (१) ॥ एकं यथार्थोक्ते ॥ अथेति ॥ "संकुलं त्रिषु विस्पष्टवाचि व्याप्ते" ॥ ( १ ) ॥ क्लिष्टम् ॥ ( २ ) ॥ परस्परपराहतम् ॥ ( ३ ) ॥ 'माता मे वन्ध्या' इतिवद्विरुद्धार्थस्य वचनस्य त्रीणि ॥ १९ ॥ लुप्तेति ॥ लुप्तो वर्णः पदं वा यत्र पदे वाक्ये वा तत् " ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते " ॥ (१) ॥ अशक्त्यादिनासंपूर्णोच्चारितस्यैकम् ॥ निरस्तमिति ॥ त्वरितमुदितम् ॥ "निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते प्रतिहते च" इति हैमः ॥ ( १ ) ॥ एकं शीघ्रोच्चारितस्य वचसः ॥ अम्बूकृतमिति ॥ सह निष्ठेवेन श्लेष्मकणादिनिर्गमेनेति सनिष्ठेवम् 'सनिष्ठीवम्' इति पाठे तु पृषोदरादित्वात् ( ६।३।१०९) ईकारः ॥ अम्बूकृतम् ॥ ( १ ) ॥ एकं श्लेष्मनिर्गमसहितवचनस्य ॥ अबद्धमिति ॥ अनर्थकं जरद्गवादिवाक्यम् अबद्धम् ॥ "अबध्यं स्याद् " इति पाठ इति कौमुदी ॥ "अबध्यमवधार्हे स्यादनर्थकवचस्यपि" इति 'हैममेदिन्योः' दर्शनात् ॥ एकं समुदायार्थशून्यस्य वचनस्य ॥ २० ॥ अनक्षरमिति ॥ अनक्षरम् ॥ ( १ ) अवाच्यम् ॥ २ ॥ द्वे निन्दावचनस्य ॥ आहतमिति ॥ "आहतं गुणिते चापि ताडिते च मृषार्थके । स्यात्पुरातनवस्त्रेऽपि नववस्त्रे वितानके" ॥ ( १ ) ॥ "एष वन्ध्यासुतो याति" इत्यादिवचनस्यैकम् ॥ सोल्लुण्ठनमिति ॥ सोल्लुण्ठनम् ॥ ( १ ) ॥ सोत्प्रासम् ॥ (२) ॥ द्वे सोपहासस्य॥ मणितमिति॥ मणितम् ॥ ( १ ) रतिकूजितम् ॥ ( २ ) द्वे रतिकूजितस्य ॥ अथेति ॥ "म्लिष्टं त्रिष्वव्यक्तवाचि म्लाने" ॥ (१) ॥ अविस्पष्टम् ॥ ( २ ) ॥ द्वे अप्रकटवचनस्य ॥ वितथमिति॥ वितथम् ॥ (१) ॥ "अनृतं कृषावसत्येऽपि" ॥ ( २ ) ॥ द्वे असत्यवचसः ॥ २१ ॥ सत्यमित्यादि ॥ "सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति" ॥ ( १ ) ॥ तथ्यम् ॥ ( २ ) ॥ "ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः" ॥ (३ ) सम्यक् क्लीबे, सम्यङ् पुंसि । स्त्रियां समीची ॥ ( ४ ) ॥ चत्वारि सत्यवचसः ॥ अमूनीति ॥ अमूनि ' सत्यादीनि-उपचारात्तद्वति वर्त्तमानानि त्रिषु ॥ "त्रिषूत्तरे" ' प्रागुक्तेन ' इत्यनेन वाग्विशेषपराणां त्रिलिङ्गत्वमुक्तम् ॥

---

१—पीयूषव्याख्यायामपि 'उषती' इति पाठं प्रदर्श्य 'रुशती' इत्येके—इत्युक्तम् ॥ २—"दिष्ट्या रमसे सामनि परमे वचसां त्वं सुजनो हि वदति मित्र परमेव च सान्त्वम्" इति शिवभद्रे यमकादन्त्यादिः ॥ ३—"अपरुषा दायादा वाग्विभवश्च" इति दमयन्तीश्लेषात्, "अपि सपत्नजनेन च तेन वागपरुषा परुषाक्षरमीरिता" इति यमकाच्च मूर्धन्यवान् ॥ ४—कर्बुरवर्णे यथा "विरक्तसंध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते" इत्यनेकार्थकैरवाकरकौमुदी ॥ ५-"असूनृतं दधदपि सूनृतभाषी" इति वासवदत्ताविरुद्धालंकारदन्त्यश्लेषाद्दीर्घान्त्यदन्त्यादि----इति मुकुटः ॥ —६ "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः" इति मुकुटः ॥ ७—म्लाने विच्छाये यथा "म्लिष्टं चित्रमामित्रवासभवने वक्ति त्वदीयं यशः" अनेकार्थकैरवाकरकौमुदी ॥

**स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः । आरवारावसंरावविरावा अथ मर्मरः ॥ २३ ॥**
**स्वनिते वस्त्रपर्णानां भूषणानां च शिञ्जितम् ।निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि२४॥**
**वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः। कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् २५॥**
**स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ।**

इति शब्दादिवर्गः ॥ ६ ॥

---

**निषादर्षभगान्धारषड्जमध्यमधैवताः।पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥**

अनेन तु वक्तृपराणाम्—इति विशेषः ॥ **शब्द इति** ॥ शब्दः ॥ ( १ ) ॥ निनादः ॥ ( २ ) ॥ निनदः ॥ ( ३ ) ॥ ध्वनिः ॥ ( ४ ) ॥ ध्वानः ॥ ( ५ ) ॥ रवः ॥ ( ६ ) ॥ स्वनः ॥ (७ ) ॥ २२ ॥ स्वानः ॥ ( ८ )॥ निर्घोषः ॥ ( ९ ) ॥ निर्ह्रादः ॥ ( १० ) ॥ नादः ॥ ( ११ ) ॥ निस्वानः ॥ ( १२ )॥ निस्वनः॥ ( १३ )॥ आरवः ॥ ( १४ ) ॥ आरावः ॥ ( १५ ) ॥ संरावः ॥ ( १६ ) विरावः ॥ ( १७) ॥ **सप्तदश शब्दस्य** ॥ अथेति ॥ वस्त्राणां पर्णानां च स्वनिते मर्मरः **"मर्मरो** वस्त्रभेदे च शुष्कपर्णध्वनौ तथा । पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि " ॥ ( १ ) ॥ **एकं वस्त्रपर्णध्वनेः** ॥ २३ ॥ **भूषणानामिति** ॥ भूषणानां ध्वनौ । शिञ्जितम् ॥ **'शिञ्जा'** अपि—इति स्वामी ॥ ( १ ) **निक्वाण इति** ॥ निक्वाणः ॥ ( १)॥ निक्वणः ॥ ( २ ) ॥ क्वाणः ॥ ( ३ ) ॥ क्वणः ॥ ( ४ ) ॥ क्वणनम् ॥ ( ५ ). **प्रादेरिति** । प्रक्वाणः ॥ ( ६ ) ॥ प्रक्वणः ॥ ( ७ ) उपसर्गात् ॥ आदिशब्दादुपक्वणादयः ॥ **वीणाक्वणनस्येमे** ॥ **कोलाहल इति**॥ कोलाहलः ॥ ( १ ) ॥ **"कलकल** उक्तः कोलाहले तथा सर्जनिर्यासे" ॥ ( २ ) ॥ **द्वे बहुभिः कृतस्य शब्दस्य** ॥ **तिरश्चामिति** ॥ तिरश्चां यद्रुतम् तद्वाशितम् । **"वासिता** करिणीनार्योर्वासितं सुरभीकृते । ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते" इति विश्वकोषादिदर्शनेन तुदन्त्यवानपि ॥ ( १ ) ॥ **एकं पाक्षिशब्दस्य** ॥ २५ ॥ **स्त्रीति** ॥ प्रतिश्रुतम् ॥ ( १ ) ॥ प्रतिध्वानः ॥ ( २ ) ॥ **द्वे प्रतिध्वनेः** ॥ **गीतमिति** ॥ " **गीतं** शब्दितगानयोः " इति हैमः ॥ ( १) गानम् ॥ ( २ ) ॥ **द्वे गीतस्य** ॥

इति शब्दादिवर्गविवरणम् ॥

---

**निषादेति** ॥"**निषादः** स्वरभेदेऽपि चण्डाले धीवरान्तरे "॥ ( १ ) ॥ **ऋषभ** स्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क्वाचिन्मता" "आदिजिनेऽपि" ॥ ( १ ) ॥ " **गान्धारो** रागसिन्दूरस्वरेषु नीवृदन्तरे" इति हैमः ॥ ( १ )॥ " नासाकण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः " ॥ ( १ ) ॥ "तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः । नाभिं प्राप्तो महानादो मध्यस्थस्तेन **मध्यमः** " ॥ " **मध्यमो** मध्यजे स्वरे । देहमध्ये मध्यदेशे **मध्यमा** कर्णिकाङ्गुलिः।राका[2] रजस्वला चापि" इति हैमः॥ **"मध्यमो** मध्यजेऽन्यवत् ॥ पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा" । ( १ ) ॥ धैवतः ॥ ( १ ) "वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्धसु । विचरन्पञ्चमस्थानप्राप्त्या **पञ्चम** उच्यते" ॥ ' **पञ्चमो** रागभेदे स्यात्स्वरभेदे. च, **पञ्चमी** । पाण्डवानां च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु ॥ "**पञ्चमो** रुचिरे दक्षे"॥(१)॥अमी सप्त स्वरास्तन्त्रीतः कण्ठाच्चोच्चरन्ति॥"दारवी गात्रवीणा च द्वे वीणे स्वरधारिके"इति वचनात् ॥ वंशमुरजादयस्तु अनुकरणमात्रोपयोगिन इति भावः॥नारदः—"षड्जं रौति मयूरस्तु गावोनर्दन्ति चर्षभम्। अजाविकौ च **गान्धारं** क्रौञ्चो नदति **मध्यमम्** ॥ पुष्पसाधारणे काले कोकिलो रौति **पञ्चमम्** । अश्वस्तु **धैवतं** रौति

---

१—"वाग्भेदास्तु त्रिषूत्तरे"इत्यस्यावधिर्दर्शितः इति मुकुटः॥ २-राका पूर्णिमा। तथा"अमृतममृतराशिर्मध्यरात्रेः"इति॥

**काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥२॥**
**समन्वितलयस्त्वेकतालो वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी॥३॥**
**ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकं तु शुषिरं कांस्यतालादिकं घनम् ॥४॥**
**चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम्। मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ५॥**
**स्याद्यशःपटहो ढक्का भेर्यामानकदुन्दुभी। आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ६**

निषादं रौति कुञ्जरः" इति ॥ **स्वराणां पृथक्पृथगेकैकम्** ॥१॥ **काकलीति** ॥ काकली ॥ काकलिरपि॥ अत एव "साधूदितं काकलिभिः कुलीनैः" इत्यभिनन्दप्रयोगः संगच्छते ॥ ( १ ) **एकं सूक्ष्मध्वनेः** ॥ **ध्वनाविति** ॥ मधुरः श्रुतिसुखः। स चासावस्फुटोऽव्यक्ताक्षरश्च। तादृशे ध्वनौ कलः। "कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोः। कलं शुक्रे त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ" ॥ ( १ ) ॥ **एकं मधुरध्वनेः**॥ **मन्द्र इति** ॥ गम्भीरे मेघादिध्वनौ "मन्द्रः॥(१)॥ **एकं गभीरध्वनेः**॥**तार इति**॥तारः ॥१॥ **एकमुच्चैरुच्चरितस्य** ॥ **त्रय इति** ॥ त्रयः कलमन्द्रताराः त्रिषु विशेष्यनिघ्नाः ॥ २ ॥ **समन्वितेति** ॥ सम्यगन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र सः एकतालः ॥ (१)॥ **एकं गीतवाद्यलयसाम्यस्य** ॥ **वीणेति**॥ "वीणा विद्युति वल्लक्याम्"॥(१)॥वल्लकी ॥ (२) ॥ "**विपञ्ची** केलिवीणयोः" ॥(३)॥ **त्रीणि वीणायाः** ॥ **सेति** ॥ सैव सप्तभिस्तन्त्रीभिरुपलक्षिता ॥ परिवादिनी ॥ (१) ॥ **एकं तन्त्रीसप्तकोपलक्षितवीणायाः**॥३॥ **ततमिति** ॥ वीणादि यद्वाद्यं वादनीयम्। तत्ततम् ॥ आदिना सैरन्ध्रीरावणहस्तकिंनरादि॥"अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात्पुँल्लिङ्गस्तु सदागतौ" ॥ ( १ ) ॥ **एकं वीणादिवाद्यस्य** ॥ **आनद्धमिति** ॥ आदिपदात्पटहादि॥ "**आनद्धं** मुरजादौ च क्लीबं स्यात्संदिते त्रिषु॥(१)॥**एकं मुरजादेः**॥**वंशेति**॥वंशो वेणुः॥ आदिपदात्काहलादि ॥ "**शुषिरं** वंशादिवाद्ये विवरेऽपि नपुंसकम्। **शुषिरो** न स्त्रियां गर्ते, वह्नौ, रन्ध्रान्विते त्रिषु" ॥ "सूर्यं तु सुषिरामिव" ( पस्पशाह्निकभाष्यस्थश्रुतौ ) इति प्रयोगात् '**शुषिरम्**' दन्त्यो[३]ऽपि ॥(१)॥ **एकं वंशवाद्यस्य**॥ **कांस्येति**॥ कांस्यमयस्तालः कांस्यतालः। आदिना घण्टादि॥"**घनः** सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे। संघे मुस्ते घनं मध्यनृत्तवाद्यप्रभेदयोः"इति हैमः॥(१)॥ **एकं कांस्यतालादेः**॥४॥**चतुरिति** ॥ इदं ततादि चतुर्विधं वाद्यादित्रिकनामकम् ॥ वाद्यम्॥(१) ॥ वादित्रम्॥(२)॥आतोद्यम् ॥ (३) ॥ **त्रीणि ततादिचतुष्टयस्य** ॥ **मृदङ्गा इति** ॥ "**मृदङ्गो** घोषवाद्ययोः" इति हैमः ॥ ( १ ) ॥ मुरजः ॥ ( २ ) ॥ **द्वे मृदङ्गस्य** ॥ **भेदा इति** ॥ तेषां भेदास्तु त्रयः ॥ अङ्क्यः ॥ (१) ॥ आलिङ्ग्यः ॥( १)॥ ऊर्ध्वकः। तदुक्तम्—"हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः। **आलिङ्ग्य**श्चैव गोपुच्छो मध्यदक्षिणवामगाः" इति ॥ ऊर्ध्व[४]शब्दं निर्वकारमपि केचित्पठन्ति॥(१) ॥ **प्रत्येकमेकैकम्** ॥५॥ **स्यादिति** ॥ **यशःपटहः**॥(१)॥ ढक्का ॥(२)॥ **द्वे यशःपटहस्य** ॥ **भेर्यामिति** ॥ भेरी ॥ "**भेरिः**" अपि॥( १)॥ "**आनकः** पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे"॥ (२)॥ "**दुन्दुभि**स्तु भेर्यां दितिसुते विषे। अक्षबिन्दुत्रिकद्वन्द्वे"॥(३)॥त्रीणि॥ स्वामी तु "**भेरी स्त्री दुन्दुभिः पुमान्**" इति पठति" **द्वे भेर्याः**॥ **आनक इति** ॥ आनकः॥(१)॥"**पटहो** ना समारम्भे आनके पुंनपुंसकम्"॥ अस्त्रीति पूर्वान्वयि। "उपवासं गृहं देहं लोहं **पटह**मित्यपि"इति पुंनपुंसकाधिकारे चन्द्रगोम्युक्तेः॥**द्वे पटहस्य**॥**कोण इति**॥ वीणादि वाद्यते येन धनुराद्याकृतिना स कोणः। "द्वयोस्तु **कोणो** वीणादेर्वादनं **सारिका** च सा" इति शब्दार्णवः ॥ "**कोणो** वाद्यप्रभेदे स्याद्वीणादीनां च वादने। एकदेशे गृहादीनामस्रौ च लगुडेऽपि च"इति मेदिनी॥ "**कोणो** वीणादिवादने। लगुडेऽस्त्री लोहिताङ्गे" इति हैमः ॥ ( १ ) ॥ **एकं वीणादिवादनस्य** ॥ ६ ॥

---

१—**मद्रो**ऽपि इति स्वामी ॥२—क्वचिन्मेदिनीपुस्तके तु "मूषिके ना स्त्रियां नाल्पौषधौ रन्ध्रान्विते त्रिषु" इति पाठ उपलभ्यते॥ ३—दन्त्यादिरप्ययं शब्दः "विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यौ तालव्यौ" इत्यूष्मविवेकात्॥ ४—"कुर्वतीरुपलैस्तुङ्गैर्भुवनं नीचमूर्ध्वजैः। तस्या वनालीरन्वेति चित्रा नागचमूर्ध्वजैः" इति कीचकवधयमकाद्वकारवानूर्ध्वशब्दः ॥ ५—"रवः प्रगल्भाहतभेरिसंभवः प्रकाशयामास समन्ततस्ततः" इति कुमारदासः ॥ इति मुकुटः ॥

वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः।कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम्॥७॥
वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः । मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ॥ ८॥
विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्।तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्॥ ९॥
ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् १० ॥
भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः।स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥११॥
भगिनीपतिरावुत्त भवो विद्वानथावुकः । जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥

वीणेति वीणादण्डः ॥ (१)॥ "प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे" इति हैमः॥(२) द्वे वीणादण्डस्य ॥ ककुभ इति । " ककुभो रागभेदेऽपि वीणाङ्केऽर्जुनपादपे"॥(१)॥"प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ "॥(२) ॥ द्वे वीणादण्डाधःस्थितशब्दगाम्भीर्यार्थचर्मावनद्धदारुमयभाण्डस्य ॥ वीणाप्रान्तस्थवक्रकाष्ठविशेषस्येत्यन्ये ॥ कोलम्बक इति॥अस्या वीणायाः कायः अलाबुदण्डककुभसमुदायस्तन्त्रीरहितः कोलम्बकः॥(१)॥एकं तन्त्रीहीन-वीणायाः॥उपनाह इति ॥"उपनाहो व्रणालेपपिण्डे वीणानिबन्धने"॥(१)॥ निबन्धनम्॥(२)॥द्वे यत्र तन्त्र्यो निबध्यन्ते तस्योर्ध्वभागस्य॥७॥वाद्येति॥डमरुः॥(१)॥मड्डुः॥(१)॥डिण्डिमः॥(१)॥"झर्झरः स्यात्कलियुगे वाद्यभाण्डे नदान्तरे ॥ झर्झरी झलरी च द्वे केशचक्रे तु वाद्यके"॥(१)॥ मर्दलः॥(१)॥ पणवः॥ ( १ )॥ अन्ये गोमुखहुडुकादयः ॥ "गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने ""हुडुकं मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि " ॥ वाद्यविशेषाणां पृथक्पृथगेकैकम्॥नर्तकीति॥"नर्तकः केलके[1] पोटगलवारणयोर्नटे। नर्तकी लासिकायां च करेण्वामपि योषिति " ॥ ( १ ) ॥ अनयोः क्रियोपाधिकतया वाच्यलिङ्गत्वात्पुंस्त्वनिर्देशस्यौत्सर्गिकत्वात् "नर्तको लासकः समौ" इति वक्तव्ये स्त्रीनिर्देशो ङीष्टापोर्विवेकार्थः॥"लासकौ केकिनर्तकौ" इति हैमः॥(२)॥ द्वे नर्तक्याः॥८॥ विलम्बितमिति ॥ विलम्बितम् ॥(१) ॥ " द्रुतं त्रिषु । शीघ्रे विलीने विद्राणे"॥ ( १ )॥ "मध्यं वैलग्ने[2] न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु " ॥ ( १ )॥ एषु यथाक्रमं तत्त्वादित्रयम् ॥ "तत्त्वं परात्मनि । वाद्यभेदे स्वरूपे च " इति हैमः ॥ ( १ ) ॥"ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः " ॥ ( २ ) ॥ " संघे मुस्ते घनं मध्यनृत्तवाद्यप्रभेदयोः " इति हैमः ॥ ( ३) ॥ विलम्बितद्रुतमध्यानां नृत्यगीतवाद्यानां तत्त्वादिक्रमेणैकैकम् ॥ ताल इति॥"तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करास्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटौषधौ।क्लीबं तु हरिताले स्यात्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ कालस्य क्रियया आवापनिष्क्रमादिकया मानं परिच्छेदनम् ॥ एकं तालस्य ॥ लय इति ॥ गीतवाद्यपादादिन्यासानां क्रियाकालयोः साम्यं लयः ॥"लयस्तूर्यत्रयीसाम्ये संश्लेषणविलासयोः[3]" इति हैमः ॥ ( १ ) ॥ एकं साम्यस्य ॥ अथेति ॥ अस्त्रियाम् ॥९॥ ताण्डवम्, इत्यन्वयः ॥ "ताण्डवं तृणभिन्नाट्यभेदयोः " इति हैममेदिन्यौ ॥ ( १ ) ॥ नटनम् ॥ (२) ॥"नाट्यं तौर्यत्रिके लास्ये " ॥(३) ॥"लास्यं तौर्यत्रिके मतम् । नित्ये च" इति विश्वः ॥(४) ॥ नृत्यम् ॥(५)॥ नृत्तम् अपि॥नर्तनम्॥( ६ ) षट् नृत्यस्य तौर्येति ॥ नृत्यगीतवाद्यं तौर्यत्रिकम् ॥ ( १ ) ॥ इदमेव नृत्यादित्रयं नाट्यमपि॥(२) ॥ द्वे नाट्यस्य॥ भ्रकुंस इति ॥ यः पुरुषः स्त्रीवेषधारी नृत्यति तस्मिन् भ्रकुंसादित्रयम् ॥ "भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्च भृकुंसवत् " इति शब्दार्णवः ॥ ( ३ ) ॥ त्रीणि स्त्रीवेषधारिपुरुषस्य ॥ नाट्योक्ताविति ॥ "नाट्योक्तौ"इत्यधिकारः प्रागङ्गहारात्॥गणिकेति॥'गणिका अज्जका ज्ञेया '॥ "गणिका यूथीवैश्येभतिकारीषु ना तु दैवज्ञे" ॥ अज्जुका ॥ ( १ ) ॥ एकं नाट्योक्तौ गणिकायाः ॥ भगिनीति ॥ आवुत्तः ॥ ॥ ( १ ) ॥ भगिन्याः पतिः ॥ एकं भगिनीपतेः ॥ भाव इति ॥ "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु । रत्यादौ च" ॥ ( १ ) ॥ एकं नाट्योक्तौ

१—क्रीडके, इति व्याख्यातमनेकार्थकैरवाकरकौमुद्याम् ॥२—वलग्ने कायमध्यभागे यथा "ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम्" इत्यनेकार्थकैरवाकरकौमुदी ॥ ३ -विलासे यथा "किसलयैः सलयैरिव पाणिभिः" इत्यनेकार्थकैरवाकरकौमुदी ॥

**राजा भट्टारको देवस्तत्सुता भर्तृदारिका । देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १३ ॥**
**अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः । अम्बा माताथ बाला स्याद्वासूरार्यस्तु मारिषः १४**
**अत्तिका भगिनी ज्येष्ठा निष्ठा निर्वहणे समे ।हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति १५॥**
**अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ।निर्वृत्ते त्वङ्गसत्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके १६**

विदुषः ॥ **अथेति** ॥ आवुकः ॥ ( १ ) ॥ "जनकः पितृभूपयोः" ॥ एकं नाट्योक्तौ जनकस्य ॥ **युवराज इति** ॥ युवराजः ॥ "कुमारोऽश्वानुचारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे । कुमारं जात्यकनके **कुमारी** त्वपराजिता । नदीभिद्रामतरुणी कन्यका नवमाल्युमा । जम्बूद्वीपविभागश्च" इति हैमः ॥ ( १ ) ॥ भर्तृदारकः ॥ ( २ ) ॥ **द्वे युवराजस्य** ॥१२ ॥ **राजेति** ॥ "भट्टारको नृपे नाट्यवाचा, देवे तपोधने" इति मेदिनी ॥ ( १ ) ॥ "देवं हृषीके देवस्तु नृपतौ तोयदे सुरे" इति हैमः ॥ ( २ ) **द्वे राज्ञः**॥ **तत्सुतेति** ॥ भर्तृदारिका ॥ ( १ ) ॥ **एकं राजसुतायाः** ॥ **देवीति** ॥ "देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि" इति हेमचन्द्रः ॥ ( १ ) ॥ **बद्धपट्टाया राज्ञ्या एकम्** ॥ **इतरास्विति** ॥ "**भट्टिनी** द्विजभार्यायां नाट्योक्त्या राजयोषिति" ॥ (१) ॥ **एकमितरराज्ञ्याः** ॥ १३ ॥ अत्र विशेषः शब्दार्णवे "गणिकानुचरैरज्जुकेति नाम्ना नृपेण सा । युवराजस्तु सर्वेण **कुमारो भर्तृदारकः** । **भट्टारको** वा **देवो** वा वाच्यो भृत्यजनेन सः । ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च । वयस्य राजन्निति वा विदूषक इमं वदेत् । अभिषिक्ता तु राज्ञासौ **देवी**त्यन्या तु **भोगिनी** । **भट्टिनी**त्यपरैरन्या नीचैर्गौस्वामिनीति सा " इति ॥ **अब्रह्मण्यमिति** "ब्रह्मण्यं स्याद्ब्रह्मसाधुब्रह्मदारुशनैश्चरे" ॥ अब्रह्मण्यम् ॥ ॥ ( १ ) ॥ **एकमवध्यब्राह्मणादेर्दोषोक्तेः** ॥ **राजेति** ॥ राष्ट्रियः ॥(१)॥**एकं राजपत्नीभ्रातुः** ॥**अम्बेति** ॥ अम्बा ॥ (१) ॥ "**नाट्योक्तौ**" इत्यधिकारस्य प्रायिकत्वादम्बादीनां केषांचिदन्यात्रापि प्रयोगः ॥ **एकं मातुः**॥ **अथेति** ॥ बाला कुमारी 'वासूः' ॥ ( १ ) **एकं कुमार्याः** ॥ **आर्य इति** ॥ "कर्तव्यमाचरन्काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु **आर्य** इति स्मृतः" इति वशिष्ठः ॥ "**आर्यौ** सज्जनसौविदौ" ॥ "**मारिषः** शाकभिद्यार्ये नाट्योक्तौ पुंसि भाषितः" इति मूर्धन्यान्ते रभसः ॥ **मार्षश्च** ॥ "आर्ये मारिषमार्षकौ" इति शब्दार्णवात् ॥ "**मारिषः** शाकभिद्यार्ये नाट्योक्त्या पुंसि योषिति । दक्षाम्बायाम् " ॥( १ ) ॥**एकं मान्यस्य** ॥ १४ ॥ **अत्तिकेति** ॥ "अत्तिका चान्तिका तथा " द्विरूपकोशादन्तिकापि ॥ "**अन्तिकं** निकटे वाच्यलिङ्गं स्त्री सातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कीर्त्यतेऽन्तिका"॥(१)॥ **एकं ज्येष्ठभगिन्याः**॥ **निष्ठेति** ॥ "**निष्ठो**त्कर्षव्यवस्थयोः । क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते" ॥ ( १ ) ॥ निर्वहणम् । मुख—प्रतिमुख—गर्व—विमर्श—निर्वहणाख्याः पञ्च नाटके संधयः । तत्र पञ्चमस्य संधेर्द्वे ॥ प्रस्तुतकथासमापनस्येत्यन्ये ॥ "निर्वहणं तु निष्ठा स्त्री संहारश्च समापने" इति शब्दार्णवः ॥ **समे इति** । समानार्थे, न तु समानलिङ्गे । शब्दार्णवे लिङ्गभेददर्शनात् ॥ निष्ठा निर्वहणे वर्तते, इति योजना ॥ **हण्ड इति** ॥ नीचां प्रत्याह्वानं हण्डे । चेटीं प्रति हञ्जे ॥ सखीं प्रति हला **त्रीण्यव्ययानि** ॥ हलाशब्दष्टाबन्तोऽपि सखीपर्यायः "बाला वासूः सखी हला" इति स्त्रीकाण्डे बोपालितात् ॥ १५ ॥ **अङ्गेति** ॥ अङ्गहारः॥(१)॥अङ्गविक्षेपः । "अङ्गहारस्त्वङ्गहारिः" इति शब्दार्णवः ॥ **द्वे नृत्यविशेषस्य** ॥ **व्यञ्जकेति**॥ व्यञ्जकः ॥ ( १ )॥ अभिनयः ॥ वाचिकाङ्गिकाहार्यसात्त्विकभेदाचतुर्विधः ॥ ( २ ) ॥ **द्वे मनोगतभावाभिव्यञ्जकस्य** ॥ **निर्वृत्ते इति** ॥ आङ्गिकं भ्रूविक्षेपादि ॥ ( १ ) ॥ सात्त्विकं स्तम्भादि ॥ "स्तम्भः

---

१—"तातेनाम्ब विहीनोऽस्मि" "बालभावेऽहमम्बया" इत्यादावनाट्योक्तावप्यम्बाशब्दप्रयोगः । "तत्र मातः किमसदृशं करणं वचस्ते" इति वेणीसंहारादौ नाट्योक्तावपि मात्रादीनां प्रयोगः ॥ तस्मादम्बादीनां नाट्ये प्रायशः प्रयोगाद्विधिरयम् । अज्जकादीनां त्वन्यत्राप्रयोगान्नियमः । एतदेवाह शब्दार्णवकारः"अथैषां रूपकाराणामुक्तिर्विक्ष्याम्यशेषतः । कासुचिन्नियमस्तत्र विधिरेव च कासुचित्" इति-इति मुकुटः ॥ २—सौविदे यथा"अन्तःपुरं समर्यादमार्यैरेव हि कार्यते" इत्यनेकार्थकैरवाकरकौमुदी ॥ ३-दक्षस्य मुनेरम्बा जननी, इत्यनेकार्थकैरवाकरकौमुदी ॥

**शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः । बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः॥१७॥ उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा । कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः॥१८॥ हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् । विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्॥१९ दारुणं भीषणं भीष्मं भीमं घोरं भयानकम् । भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २० ॥**

स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका गुणाः'' ॥ ( १ ) ॥ क्रमेणैकैकम् ॥ १६ ॥ **शृङ्गारेति** ॥ शृङ्गारादयोऽष्टौ रसाः ॥ चशब्दाच्छान्तोऽपि नवमः । वात्सल्यं दशमः ॥ ''रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसना पाठा शल्लकी कङ्गुभूमिषु'' इति विश्वमेदिन्यौ ॥ **रसनामानि** ॥ **शृङ्गार इति** ॥ ''शृङ्गारो गजमण्डने । सुरते रसभेदे च शृङ्गारं नागसंभवे । चूर्णे लवङ्गपुष्पे च'' इति हैमः ॥ ( १ ) ॥ ''शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि । शृङ्गारे च'' इति हेमचन्द्रः ॥ (२) ॥ ''उज्ज्वलस्तु विकासिनि । शृङ्गारे विशदे दीप्तेऽपि'' इति हैमः ॥ ( ३ ) ॥ **त्रीणि शृङ्गारस्य** ॥१७॥ **उत्साहेति** ॥ उत्साहवर्धनः ॥ ( १ ) ॥ ''वीरो जिने भटे श्रेष्ठे **वीरं** शृङ्ग्यां नतेऽपि च । **वीरा** गम्भारिकारम्भातामलक्यैलवालुषु । मदिराक्षीरकाकोलीकाष्ठोदुम्बरिकासु च । पतिपुत्रवतीक्षीराविदारीदुग्धिकास्वपि'' इति हेमचन्द्रः ॥ ( २ ) ॥ **द्वे वीररसस्य** ॥ **कारुण्यमिति** ॥ कारुण्यम् ॥ ( १ ) ॥ ''**करुणो** रसवृक्षयोः । **करुणा** तु कृपायां स्यात्'' इति हैमः ॥ ( २ ) ॥ ''**घृणा** तु स्याज्जुगुप्सायां करुणायाम्'' इति हैमः ॥ ( ३ ) ॥ ''**कृपो** द्रोणश्यालके स्याद्द्रोणपत्न्यां **कृपी** स्मृता । **कृपा** दयायाम्'' ॥ ( ४ )॥ दया ॥ ( ५ ) ॥ अनुकम्पा ॥ ( ६ ) ॥ अनुक्रोशः ॥ ( ७ ) ॥ **सप्त करुणारसस्य** ॥ **अथविति** ॥ हसः ॥ ( १ ) ॥१८॥ हासः ॥ ( २ ) ॥ हास्यम् ॥ हासिकाऽपि ॥ '' तत्र हासो हसो हास्यं **घर्घरं हासिका** स्त्रियाम्'' इति शब्दार्णवः ॥ ( ३ ) ॥ **त्रीणि हास्यरसस्य** ॥ **बीभत्समिति** ॥ ''**बीभत्सो** नार्जुने, क्रूरघृणात्मविकृते त्रिषु'' ''विष्ठाकामज उद्वेगी क्षोभणो रुधिरादिजः । बीभत्सो द्विविधः'' ॥ ( १ ) ॥ ''**विकृतं** त्रिषु बीभत्से रोगितेऽसंस्कृतेऽपि च'' इति विश्वः ॥ वैकृतोऽपि ॥ ''विकृतो **वैकृतः**'' इति शब्दार्णवात् ॥ ''**विकृतं** त्रिषु बीभत्से रोगितेऽसंस्कृतेऽपि च'' इति विश्वः ॥ बीभत्सादिद्वयं तद्वति त्रिलिङ्गम् ॥ ( २ ) ॥ **द्वे बीभत्सस्य** ॥ **विस्मय इति** ॥ ''**विस्मयोऽद्भुतदर्पयोः**'' इति हैमः ॥ ( १ ) ॥ अद्भुतम् ॥ ( २ ) आश्चर्यम् ॥ ( ३ ) ॥ ''**चित्रं** खे तिलकेऽद्भुते । आलेख्ये कर्बुरे **चित्रा** त्वाखुपर्णीसुभद्रयोः । गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः'' इति हेमचन्द्रः ॥ ( ४ ) ॥ **चत्वार्यद्भुतस्य** ॥ **अथेति** ॥ ''**भैरवः** पुंसि शंकरे, भीषणे त्रिषु रागभेदे च'' ॥ ( १ ) ॥ १९ ॥ ''**दारुणो** रसभेदे ना त्रिषु तु स्याद्भयावहे'' इति विश्वमेदिन्यौ ॥ ( २ ) ॥ ''**भीषणं** रसे शल्लक्यां, ना गाढे दारुणे त्रिषु'' ॥ ( ३ ) ॥ ''**भीष्मो** रुद्रे च गाङ्गेये राक्षसे च भयङ्करे'' इति हैमः ॥ ( ४ ) ॥ ''**भीमो**

---

१—शान्तस्यालौकिकत्वेन, वत्सलस्य पुत्रादिस्नेहरूपत्वाद्रत्यात्मकत्वेन, न निर्दिष्टौ—इति स्वामिमुकुटौ ॥ **रसा इति ।** तत्र 'विभावैरनुभावैश्च युक्तो वा व्यभिचारिभिः । आस्वाद्यत्वात्प्रधानत्वात्स्थाय्येव तु रसो भवेत्' इत्युक्तेः रत्यादिः स्थायीभाव एव सामाजिकैश्चर्व्यमाणो रसपदव्यपदेश्यो भवति । तत्र रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसंचारितः शृङ्गारः । १ । उत्साहस्थायिभावको द्विषद्द्विजनादीनालम्बनकोऽपकारगुणापदुद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षावेगचिन्तादिसंचारितो वीरः । २ । शोकस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसंचारितः करुणः । ३ । विस्मयस्थायिको विस्मयजनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकितताद्यनुभावितो हर्षादिसंचारितोऽद्भुतः । ४ । हासस्थायिभावको विकृतकृदालम्बनको वैकृताद्युद्दीपितो गल्लफुल्लनाद्यनुभावितः श्रमादिसंचारितो हास्यः ।५। भयस्थायिभावको विकटाद्यालम्बनकस्ताद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसंचारितो भयानकः । ६। जुगुप्सास्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसंचारितो बीभत्सः । ७ । क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसंचारितो रौद्रः । ८ । इति तत्तल्लक्षणं बोध्यम् ॥

**चतुर्दश दरत्रासौ भीतिर्भीः साध्वसं भयम्। विकारो मानसो भावोऽनुभावो भावबोधकः २१**
**गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः। अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥**
**रीढावमाननावज्ञाऽवहेलनमसूर्क्षणम्। मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ २३ ॥**
**क्षान्तिस्तितिक्षाऽभिध्या तु परस्य विषये स्पृहा।अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि २४**

वृकोदरो घोरे शंकरेऽप्यम्लवेतसे'' इति हैमः ॥ ( ५ ) ॥ "घोरो हरे दारुणे च'' इति हैमः ॥ ( ६ ) ॥ "भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे'' ॥ ( ७ ) ॥ भयंकरम् ॥ ( ८ ) ॥ "प्रतिभयं भये भीष्मे'' इति हैमः ॥ ( ९ ) ॥ **नव भयानकरसस्य** ॥ भेदेन कीर्तनं त्वेषां धर्ममात्रपरत्वात्। भैरवादयस्तु धर्मे धर्मिणि च वर्तन्ते इति भेदः ॥ **रौद्रमिति** ॥ "रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्याम्'' इति हैमः ॥ ( १ ) ॥ "उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि, त्रिपूत्कटे । स्त्री वचाक्षुद्रयोः'' ॥ ( २ ) ॥ **द्वे उग्ररसस्य** ॥ **अमीति** ॥ अमी अद्भुताद्याश्चतुर्दश तद्वति त्रिषु ॥ २० ॥ स्त्रियां रौद्री भैरवी ॥ **दरेति** ॥ "दरः स्याद्भयगर्तयोः । दरी तु कन्दरे'' इति हैमः ॥ ( १ ) ॥ "त्रासो भये मणेर्दोषे'' इति हैमः ॥ ( २ ) ॥ "भीतिर्भये स्त्रियाम् भीतं भये भीतियुते त्रिषु'' ॥ ( ३ ) ॥ भीः ॥ ( ४ ) ॥ "साध्वसम्''॥ ( ५ ) ॥ "भयं भीतौ भयंकरे । कुब्जकपुष्पे'' इति हैमः ॥ भियाऽपि ॥ "स्यादर्तनमृतीया च गर्हा, चाथ भयं भिया । त्रासोत्राखौ दरो भीतमातङ्को भीश्च साध्वसम्'' इति शब्दार्णवात् ॥ "आशङ्का साध्वसं दरः । भिया च'' इति हैमाच्च ॥ ( ६ ) ॥ **षड्भयस्य** ॥ **विकार इति** ॥ मनोविकारो रत्यादिर्भावः । "भावोऽभिप्रायवस्तुनोः'' इति हैमः ॥ ( १ ) ॥ **एकं मनोविकारस्य** ॥ **अन्विति** ॥ भावस्य सूचको गुणक्रियादिः "अनुभावः प्रभावे स्यान्निश्चये भावसूचने'' इति मेदिनी ॥ ( १ ) ॥ **एकं रत्यादिसूचकरोमाञ्चादेः** ॥ २१ ॥ **गर्व इति** ॥ गर्वः ॥ ( १ ) ॥ "अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः'' ॥ ( २ ) ॥ अहंकारः ॥ ( ३ ) ॥ **त्रीणि गर्वस्य** ॥ **मान इति** ॥ "मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे'' इति हैमः ॥ ( १ ) ॥ चित्तसमुन्नतिः ॥ **द्वे अतियोग्यमपि प्रति चित्तोत्कर्षप्रत्ययस्य** ॥ गर्वादयः पञ्चापि पर्याया इति तु युक्तम् ॥ **अनादर इति** ॥ अनादरः ॥ ( १ ) ॥ परिभवः ॥ परापूर्वकादपि भुवोऽपि पराभवः ॥ "पराभवस्तिरस्कारे नाशे '' इति हैमः ॥ "व्रजन्ति ते मूढधियः पराभवम्'' इति प्रयोगश्च ॥ ( २ ) ॥ परीभावः ॥ ( ३ ) ॥ तिरस्क्रिया ॥२२॥ ( ४ ) ॥ रीढा ॥ ( ५ ॥ अवमानना ॥ ( ६ ) ॥ अवज्ञा ॥ ( ७ ) ॥ अवहेलनम् ॥ ( ८ ) ॥ असूर्क्षणं सरेफम् । "नर्तुं सूर्क्षेत्'' । "तत्तत्र सूर्क्ष्यम् '' तैत्तिरीयब्राह्मणे इति दर्शनात् ॥ ( ९ ) ॥ **नव परिभवस्य** ॥ **मन्दाक्षमिति** ॥ मन्दाक्षम् ॥ ( १ ) ॥ ह्रीः ॥ ( २ ) ॥ "त्रपा लज्जाकुलटयोः'' इति हैमः ॥ ३ ॥ व्रीडा ॥ 'व्रीडः' अपि ॥ "गण्डूषगर्जभुजजागरहारकीलज्वालाजटारभसवर्तकगर्धश्रद्धाः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठवाणकरकाश्च समामयाश्च'' इति स्त्रीपुंल्लिङ्गकथने रभसः ॥ व्रीडोऽक्लीबे त्रपा लज्जा इति च तेनोक्तम् ॥ ( ४ ) ॥ लज्जा ( ५ )॥ **पञ्च लज्जायाः** ॥ **सेति** ॥ सा लज्जा अन्यतश्चेत् अपत्रपा ॥ अयं ह्रीमात्रेऽपि ॥ "ह्रीर्लज्जापत्रपा व्रीडा'' इति रत्नकोषात् ॥ (१) ॥ **एकं पित्रादेः पुरतो जातलज्जायाः** ॥ २३ ॥ **क्षान्तिरिति** ॥ क्षान्तिः ॥ क्षमा च ॥ तदुक्तम् "अधितः क्षाम्यतेः क्षान्तिः बितस्तु क्षमतेः क्षमा'' इति ॥ "क्षमः शक्ते हिते युक्ते क्षमावति । क्षमा क्षान्तौ क्षितौ'' इति हैमः ॥ ( १ ) ॥ तितिक्षा ॥ ( २ ) ॥ **द्वे क्षमायाः** ॥ **अभिध्येति** ॥ अभिध्या ॥ १ ॥ परस्य विषये चौर्यादिना स्पृहा ॥ 'परस्वविषयस्पृहा'' इति पाठे परस्वे विषयेण चौर्यादिना लिप्सा--इति मुकुटः ॥ वस्तुतस्तु--परस्वविषयविषयिणीच्छेत्यर्थः ॥ **एकम्** ॥ **अक्षान्तिरिति** ॥ अक्षान्तिः ॥ अक्षमा च ॥ ( १ ) ॥ 'ईर्ष्या' ॥ ( २ ) ॥ **द्वे परोत्कर्षासहिष्णुत्वस्य** ॥ **असूयेति** ॥ "असूया त्वभ्यसूया च'' इति शब्दार्णवः ॥ ( १ ) ॥ २४ ॥ अर्थदानादिषु गुणेषु दम्भकत्वादिरूपदोषारोपणस्यैकम् ॥

---

१--**असुक्षण**मिति पाठे असूनामुक्षणं तापो यतः इति बोध्यम्॥ न विद्यते शोभनः क्षणो यस्मात् '**असुक्षणम्**' ह्रस्वमध्यमपीति क्वचित् ॥ 'सुर्क्ष अनादरे' ह्रस्वोकारकः । तस्मात्संपूर्वाल्ल्युटि संसूर्क्षणम् । "**संसूर्क्षण**मनादरे'' इति क्वचिदन्तरेऽपीति धातुप्रदीपः ॥ एवं चाकारादित्वमिह प्रामादिकमित्याहुः इत्यपि सुकुटबुधमनोहरे ॥

वैरं विरोधो विद्वेषोमन्युशोकौ तु शुक् स्त्रियाम्।पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥२५॥
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ। शुचौ तु चरिते शीलमु उन्मादश्चित्तविभ्रमः ॥२६॥
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्।इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः २७
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः।उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा २८
स्याच्चिन्तास्मृतिराध्यानमुत्कण्ठोत्कलिके समे । उत्साहोऽध्यवसायःस्यात्सवीर्यमतिशक्तिभाक्

वैरमिति।। वैरम्।।(१)।।विरोधः।।( २ )।। विद्वेषः ।। ( ३ ) ।। त्रीणि वैरस्य ।। मन्य्विति ।।"मन्युर्दैन्ये क्रतौ क्रुधि" इति हैमः ।। ( १ ) ।। शोकः ।। ( २ ) ।। शुक्चान्ता ।। ( ३ ) ।। त्रीणि शोकस्य ।। पश्चादिति । पश्चात्तापः ।। ( १ ) ।। अनुतापः ।। ( २ ) ।। "विप्रतीसार उद्दिष्टः कौकृत्येऽनुशये रुषि" इति मेदिनी ।। पक्षे ह्रस्वतृतीयोऽपि ।। "विप्रतिसारस्त्वनुशये रुषि । कौकृत्ये" इति हैमः ।। ( ३ ) ।। त्रीणि किंचित्कृकृत्वा पश्चात्तापस्य ।। २५ ।। कोपेति ।। कोपः ।। ( १ ) ।। क्रोधः ।। ( २ ) ।। अमर्षः ।। ( ३ ) ।। रोषः।। ( ४ ) ।। "प्रतिघौ रुट्प्रतीघातौ" इति हैमः ।। (५ ) ।।रुट् षान्ता।।टापि भागुरिमतेनरुषा ।। (६) ।। क्रुध्।।टापि क्रुधा।।(७)।।"भामः क्रोधे रवौ दीप्तौ" सप्त कोपस्य।।शुचाविति ।। 'शुचौ' इति भाषितपुंस्कत्वात्पुंविद्भावः ( ७ । १ । ७४ ) ।। "शीलं स्वभावे सद्वृत्ते" इति विश्वः ।। चरित्रमात्रेऽपि शीलम् ।।"निष्ठा च शीलं चारित्रं चरित्रं चरितं तथा" इति रत्नकोषात् ।। (१ ) ।।एकं शुद्धचरितस्य ।।उन्माद इति ।।उन्मादः(१) ।। चित्तविभ्रमः ।। ( २ ) ।। द्वे उन्मादस्य ।। २६ ।। प्रेमेति ।। " प्रेमाऽस्त्री स्नेहनर्मरोगः" ।। ( १ ) ।। प्रियता ।। ( २ ) ।। हार्दम् ।। ( ३ ) ।। प्रेमं नान्तं क्लीबम् ।। ( ४ ) ।। "स्नेहः प्रेम्णि घृतादिके" ।। (५) ।। पञ्च स्नेहस्य ।। अथेति ।। "दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे " अयमिच्छामात्रवाच्यपि गर्भिणीच्छायां विशेषेण प्रयुज्यते ।। ( १ ) ।। इच्छा ।। ( २ ) ।। काङ्क्षा ।। ( ३ ) ।। 'स्पृहा' ।। ( ४ ) ।। "ईहोद्यमवाञ्छयोः" ।। ( ५ ) ।। "तृट् लिप्सायामुदन्यायां स्मरपुत्र्यामपि स्त्रियाम् " टाबन्तापि भागुरिमते ।। "तृर्षा लिप्सातृषोः स्त्रियाम्' इति मेदिनी ।। ( ६ ) ।। वाञ्छा ।। ( ७ ) ।। लिप्सा ।।८।। मनोरथः ।।( ९ ) ।।२७।। "कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" ।। ( १० ) ।। अभिलाषः ।। ( ११ ) ।। "तर्षो लिप्सातृषोः स्त्रियाम् ।। ( १२ ) ।। द्वादशेच्छायाः ।। स इति ।। स तर्षो महांश्चेत् । लालसा ।। घाञि तु लालसः । स्त्रीनिर्देश आबन्ततासूचनार्थः ।। "लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः" । इति विश्वमेदिन्यौ ।। ( १ ) ।। एकम् तृषाधिक्यस्य ।। उपाधिरिति ।।"उपाधिस्तु धर्मध्याने विशेषणे । कुटुम्बव्यापृते छद्मनि" इति हैमः ।। ( १ ) ।। धर्मचिन्ता ।। ( २ ) ।। द्वे धर्मविचारस्य ।। पुंसीति ।। "आधिर्मनोऽर्तौ व्यसनेऽधिष्ठाने बन्धकाशयोः" ।। ( १ ) ।। एकं मनःपीडायाः ।। २८ ।। स्यादिति ।। चिन्ता ।। ( १ ) ।। "स्मृतिः स्मरणधीच्छासु शास्त्रे" इति हैमः ।। ( २ ) ।। आध्यानम् ।। ( ३ ) ।। त्रीणि

---

१—अमर्षो ह्रस्वादिः । २—दैन्ये यथा—"तीव्राभिषङ्गप्रभवेण मन्युना" । क्रोधे यथा—"मन्युना तेन मन्येऽहं वने वसति केसरी" इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—"प्रापि चेतसि सविप्रतिसारे" इति माघः ॥"किमप्यमर्षोऽनुनये भृशायते "इति भारविः ।"वधूरमर्षात्"इति माघः ॥ "अन्येषामपि" ( ६।३।१३७ ) इति दीर्घत्वे 'दीर्घादिरपि इति हट्टचन्द्रः । "निरुद्योगं निरामर्षं निर्वीर्यमरिनन्दनम्" इति विशाखः इति मुकुटबुधमनोहरे ॥ ४—नर्मणि यथा—"विधत्ते मत्तेयं निधुवनविधो प्रेमकलहम्" इत्यनेकार्थकैरवाकरकौमुदी । मेदिन्यां तु 'हर्षयोः' इत्युपलभ्यते अत्र तु 'मर्मणोः' इति लिखितमासीत् ॥ ५—"प्रेम पश्यति भयान्यपदेऽपि" इति भारविः इति मुकुटबुधमनोहरे ॥ ६—"तृषापि न कृशा मम" इति प्रयोग इति मुकुटबुधमनोहरे ॥ ७—धर्मध्याने यथा "विनोपाधिं शास्त्रं तृणतुषबुसप्रख्यमधुना" ॥ विशेषणे यथा "नह्युपाधेरुपाधिर्भवति" ॥ कुटुम्बव्यापृते यथा "उपाधिं बाधन्ते विविधविधिभिर्बान्धवजनाः" ॥ छद्मनि यथा "चिद्रूपानन्दमयो निःशेषोपाधिवर्जितः शुद्धः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ८—बन्धको यदधमर्णेनोत्तमर्णस्य भूम्याद्यायत्तं क्रियते। तत्र यथा "न भोक्तव्यो बलादाधिः" ॥ आशायां यथा "धनाधिना धावति जीवलोकः" ॥ इत्यनेकार्थकैरवाकरकौमुदी ॥

**कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे । कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥३०॥ कौतूहलं कौतुकं च कुतुकं च कुतूहलम् । स्त्रीणां विलासविव्वोकविभ्रमा ललितं तथा ॥३१॥ हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः। द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च ३२**

स्मरणस्य ॥ उत्कण्ठेति ॥ उत्कण्ठा ॥ ( १ ) ॥ "उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि" ॥ ( २ ) ॥ स्त्रीत्वेनापि साम्यम् ॥ द्वे कामादिजस्मृतेः ॥ "चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्, अभिध्या तूभयोरपि" इति शब्दार्णवः ॥ उत्साह इति ॥ "उत्साहस्तूद्यमे सूत्रे" ॥ (१)॥ अध्यवसायः ॥ ( २ ) ॥ द्वे उत्साहस्य ॥ स इति ॥ स उत्साहः अतिशक्तिभाक् ॥ "वीर्यं तेजःप्रभावयोः । शुक्रे शक्तौ च" ॥ "अतिशयशक्तिर्वीर्या" इति त्वमरमालायां स्त्रीत्वम् ॥ ( १ ) ॥ एकमतिशयिताध्यवसायस्य ॥ २९ ॥ कपट इति ॥ कपटः ॥ ( १ ) ॥ "व्याजः शाठ्येऽपदेशे च" इति विश्वः ॥ ( २ ) ॥ "दम्भः कल्के कैतवे च" इति हेमचन्द्रः ॥ ( ३ ) ॥ "उपधिर्व्याजचक्रयोः" ॥ ( ४ ) ॥ "छद्म शाठ्येऽपदेशे घातिकर्मणि" ॥ ( ५ ) ॥ "कैतवं द्यूतदम्भयोः" इति हैमः ॥ ( ६ ) ॥ कुसृतिः ॥ ( ७ ) ॥ "निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्" इति विश्वमेदिन्यौ ॥ ( ८ ) ॥ ॥ शाठ्यम् ॥ ( ९ ) ॥ नव कपटस्य॥ प्रमाद इति॥प्रमादः॥(१)॥ अनवधानता ॥(२)॥ द्वे अविसृष्टकृत्यस्य ॥ ३० ॥ कौतूहलमिति ॥ कौतूहलम् ॥ ( १ ) ॥ "कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च" ॥ ( २ ) ॥ कुतुकम् ॥ ( ३ ) ॥ "कुतूहलं कौतुके स्यात्प्रशस्तेऽपि च दृश्यते" ॥ ( ४ ) ॥ चत्वारि कुतुकस्य ॥ स्त्रीणामिति ॥ शृङ्गाराद्यादेः, भावान्मनोविकाराच्च जाताः स्त्रीणां क्रियाश्चेष्टा अलंकाराख्या विलासादिका 'हाव' शब्दवाच्याः ॥ ॥ ( १ ) ॥ "विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु" ॥ "विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्" ॥ ( १ ) ॥ "विव्वोकोऽभिमतप्राप्तावपि गर्वादनादरः" ॥ ( १ ) ॥ "चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः" ॥ अथ विभ्रमः । "शोभायां संशये हावे" इति हैमः ॥ "विभ्रमो भ्रान्तिहावयोः" ॥ ( १ ) ॥ "अनाचार्योपदिष्टं स्याल्लैलितं रतिचेष्टितम्" ॥ "ललितमीप्सिते । लडिते हावभेदे स्यात्" ॥ ( १ ) ॥ ३१ ॥ "स्याद्भावसूचको हावो हेलाऽस्यैवानुभावनम्" ॥ "प्रौढेच्छा सुरते हेला" इति वा ॥ "हेला स्त्रियामवज्ञायां विलासे वरयोषिताम्" ॥ ( १ ) ॥ "प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः" ॥ "लीला केलिर्विलासश्च शृङ्गारभावजा क्रिया" ॥ ( १ ) ॥ इतिशब्दात्प्रकारार्थादन्येऽपि ज्ञेयाः ॥ "लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् । मोट्टायितं कुट्टमितं विव्वोको ललितं तथा। विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः" इति नाटकरत्नकोशः ॥ "मण्डनानादरन्यासो विच्छित्ती रूपदर्पतः" ॥ "विच्छित्तिः स्यादङ्गरागे हावविच्छेदयोरपि" ॥(१)॥"हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम्"॥स्वामी तु किलिकिञ्चितम्—इति पाठं मन्यते। यदाह 'किलीति कण्ठकूजितम्' वा ॥ यथा "किलिकिलारावः" इति

---

१—तत्र प्रियसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कारमुखविकूनं स विलासः ॥ २—अभिमतप्राप्तावपि गर्वादनादरः, सापराधस्य स्रक्चन्दनादिना संयमनं ताडनं च विव्वोकः॥ ३—मदरागहर्षजनितो विपर्यासो विभ्रमः । यथा अनिमित्तमासनादुत्थायान्यत्र गमनम्, प्रियारब्धकथामाक्षिप्य सख्या सहालापनम्, मुधैव रुषितक्रोधौ, पुष्पादीनां याच्ञा सहसैव तत्परित्यागः, वस्त्राभरणमाल्यानामकारणतः खण्डनम्, मननं च इति ॥ योषितां यौवनजो विकारो विभ्रमः इत्येके ॥ ४—सुकुमारविधानेन भ्रूनेत्रादिक्रियासचिवकरचरणाङ्गन्यासो **ललितम्** । यथा—चरणनिपातझणज्झणन्नूपुरमसृणसंचरणरेखाविशेषास्थितत्रिवलिभङ्गसंस्थानसमुल्लासितभुजम्, उरःस्थलप्रसारणाद्द्विगुणपृथुकृतं स्तनस्तबकम्, स्कन्धासक्तैककुण्डलम्,उल्लसितभ्रूसाचीकृतविलोलितम् इति। प्रियं प्रति भावाविष्कृतं **ललित**मित्यन्ये ॥ ५—सुरते प्रौढेच्छा **हेला** ॥ ६—अलब्धप्रियसमागमया स्वचित्तविनोदार्थं प्रियस्य या वेषगतिदृष्टिहसितभणितैरनुकृतिः क्रियते सा **लीला** ॥ ७–आभरणविलेपनादीनां कुतश्चित्प्रियापराधादीर्ष्ययानादरेण त्यक्तानां सखीनां प्रयत्नाद्धारणं **विच्छित्तिः** ॥ प्रियेण दत्तं प्रीतिनिबन्धनं स्वल्पमपि भूषणं **विच्छित्ति**रित्यन्ये॥ ८—इष्टजनदर्शनवशात् शुष्करुदितहसितत्रासितक्रोधश्रमाभिलापानां संकरीकरणं **किलकिञ्चितम्** ॥

**व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम्।घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ३३**
**अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ।स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम् ३४**
**मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम्। क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम्॥३५॥**
**विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे।स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि॥३६॥**

॥ (१)॥ "मोट्टायितं प्रियं स्मृत्वा साङ्गभङ्गविजृम्भणम्" ॥ (१)॥ "दुःखोपचारः सौख्येऽपि हर्षात्कुट्टमितं मतम्" ॥ (१) ॥ "वक्तव्याभाषणं व्याजाद्विहृतं दर्शितेङ्गितम्" (१) ॥ **षट् स्त्रीणां शृङ्गारभावोत्पन्नचेष्टाविशेषस्य॥ द्रवेति** ॥ "द्रवो विद्रवनर्मणोः । प्राद्रवे रसगत्योश्च" इति हैमः ॥ (१) ॥ **केली** इति स्त्रियामपि ॥ "केलीषु तद्गानगुणान्निपीय" इति नैषधात् ॥ इति मुकुटः ॥ (२)॥ परीहासः॥ (३) ॥"**क्रीडा** केलिप्रकारे स्यात्खेलावज्ञानयोरपि" 'इति विश्वमेदिन्यौ'॥(४)॥खेला मुकुटस्तु 'खेला' इत्यस्य स्थाने 'लील.' इति पठाति॥(५)॥नर्म नान्तं क्लीबम् ॥ (६)॥ **षट् क्रीडायाः ॥३२॥ व्याज इति** ॥ व्याजः (१)॥"**अपदेशः** पुमाँल्लक्ष्ये निमित्तव्याजयोरपि" (२) "**लक्ष्यं** स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्" इति मेदिनी ॥ घञन्तोऽपि ॥ "सख्यायां च न ना लक्षं क्लीबं व्याजशरव्ययोः" इति मूर्धन्यान्ते रभसात् ॥ ( ३ ) ॥ **त्रीणि स्वरूपाच्छादनस्य** ॥ **क्रीडेति** ॥ क्रीडा ॥ ( १ ) ॥ खेला ॥ ( २ ) ॥ कूर्दनम् ॥ ( ३ ) ॥ **त्रीणि कन्दुकादिक्रीडनस्य ॥ घर्म इति** ॥ "घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि"॥ (१) ॥ निदाघः ॥ (२)॥ "**स्वेदो** घर्मे स्वेदने च" इति हैमः ॥ (३) ॥ **त्रीणि प्रस्वेदहेतोस्तापस्य** ॥–अङ्गजलस्य––इति मुकुटः ॥ **प्रलय इति** ॥ "**प्रलयो** मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्" ॥ (१ ) ॥ नष्टचेष्टता (२ )॥ **द्वे सात्त्विकभावस्य मूर्च्छापरपर्यायस्य ।** हर्षशोकादिभिः सकलचेष्टानाशस्येत्यर्थः ॥ ३३ ॥ **अवेति** ॥ अवहित्था ॥ (१ ) ॥ आकारगुप्तिः ॥ (२ )॥ ॥ **द्वे आकारगोपनस्य॥ समाविति** ॥ संवेगः॥(१)॥"**सम्भ्रमः** साध्वसेऽपि स्यात्संवेगादरयोरपि" ॥(२)॥ **द्वे हर्षादिना कर्मसु त्वरणस्य** ॥ **स्यादिति** ॥ उत्प्रासेनाधिक्येन क्षेपणेन वा सहितः सोत्प्रासः "स्यादाच्छुरितकं हासनखराघातभेदयोः" ॥(१)॥ **एकं परस्यामर्षजनकहासस्य** ॥ **स इति** ॥ स हासो मनागल्पः॥ "ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानां **स्मितं** भवेत्"॥(१)॥**एकमीषद्धासस्य** ॥ ३४ ॥ **मध्यम इति** ॥ स हासो मध्यमो महत्त्वाल्पत्वहीनः "आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा । प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः"॥(१)॥ **एकं मध्यमहासस्य** ॥ **रोमाञ्च इति**॥रोमाञ्चः॥(१)॥ रोमहर्षणम् (२) पुलक-कण्टक-रोमविक्रिया--रोमोद्गमाश्चात्रैव ॥ "**पुलको** गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे । असुराज्यां मणिदोषे चषके तालके कृमौ" ॥ "**कण्टकः** क्षुद्रवैरिणि । वेणौ द्रुमाङ्गे रोमाञ्चे" । "पुलकः पुनः । रोमाञ्चकण्टकौ रामविक्रिया रोमहर्षणम् । **रोमोद्गम उद्धर्षणमुल्लसनक**मित्यपि" इति हैमात्॥ '**द्वे रोमाञ्चस्य** ॥ **क्रन्दितमिति** "अथ **क्रन्दित**माह्वाने रुदिते च नपुंसकम् " ॥ (१) रुदितम् ॥ ( २ ) ॥ "**क्रुष्टं** रोदनरावयोः" ॥ (३ ) ॥ **त्रीणि रोदनस्य** ॥ **जृम्भ इति** ॥ "**जृम्भा** विकासजृम्भणयोस्त्रिषु" ॥ घञन्तस्यैव क्लीबत्वमपि । "लिङ्गशेषाविधिर्व्यापी विशेषैर्यद्यबाधितः" इति वक्ष्यमाणत्वात् ॥ (१)॥ जृम्भणम्॥(२)॥ **द्वे मुखादिविकासस्य**॥३५॥ **विप्रेति** ॥ विप्रलम्भः ॥ (१) ॥ विसंवादः ॥ (२) ॥ **द्वे अङ्गीकृतासंपादनस्य** ॥ **रिङ्गणमिति** ॥ रिङ्गणम्

---

१—व्याजोऽत्र स्वरूपाच्छादनम् । यथा "ध्यानव्याजमुपेत्य चिन्तयासि काम्" इति । पूर्वोक्तो व्याजः परद्रोहफलः॥ तथा च पञ्चिकायाम्—"कपटार्थो व्याजः परद्रोहफलः, अपदेशार्थस्त्वन्यदुद्दिश्यान्यार्थमनुष्ठानम् । यथा जलक्रीडामपदिश्यान्यार्थं याति" इति--इति मुकुटः ॥ २—प्रियकथासु साङ्गभङ्गजृम्भणं कर्णकण्डूयनं **मोट्टायितम्** ॥ ३—सुरतेषु गाढपरिपीडने केशस्तनादिग्रहणे च हर्षात्सुखेऽपिं दुःखाविक्रिया, दुःखेऽपि सुखाविक्रिया **कुट्टमितम्**॥४—अवसरागतं वचनं व्याजादिना हृतं **विहृतम्** —इति मुकुटः ॥ ५—विद्रवे पलायने यथा "द्रवन् द्रविडराजोऽपि शिश्रिये त्वरया द्रुतम्" ॥ प्राद्रवे प्रस्रवणे यथा "जात्येन चन्द्रमणिनेव महीधरस्य संचार्यते द्रवमयो मनसो विकारः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ६—अवज्ञाने अनादरे यथा "तस्य द्वयमपि क्रीडा क्रीडादालितदन्तिनः"इत्यनेकार्थकैरवाकरकौमुदी ॥ ७—परिहासस्य-इति बुधमनोहरा॥८—"अवहित्थमथोग्रता" इति भरतोक्तेः क्लीबमपि––इति मुकुटपीयूषबुधमनोहराः॥

तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्।अदृष्टिः स्यादसौम्येऽक्षिण संसिद्धिप्रकृतीत्विमे ३७
स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः । कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

इति नाट्यवर्गः ॥ ७ ॥

---

अधोभुवनपातालबलिसद्मरसातलम् । नागलोकोऽथ कुहरं शुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः । गर्तावटौ भुवि श्वभ्रे सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥
अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः ॥ ३ ॥

॥ रिङ्खणम् अपि ॥ (१) ॥ स्खलनम् ॥(२)॥ द्वे धर्मादेश्चलनस्य-इति स्वामी, बालानां हस्तपादगमनस्य इत्यन्ये, पिच्छिलादौ पतनस्य इत्यपरे ॥ स्यादिति ॥ निद्रा ॥ (१) ॥ "शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" ॥ (२) ॥ "स्वापः शयननिद्रयोः । स्पर्शाज्ञतायामज्ञाने" ॥ ( ३ ) ॥ "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" ॥ ( ४ ) ॥ "संवेशः स्वापस्त्रीरतबन्धयोः" ॥ ( ५ ) ॥ "सुप्तिः" अप्यत्र "सुप्तिः स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम्" इति मेदिनीतः ॥ पञ्च निद्रायाः ॥ ३६ ॥ तन्द्रीति ॥ तन्द्रिः "तन्द्री निद्राप्रमीलयोः" णिजभावे 'तन्द्रा' इत्यपि ॥(१)॥ प्रमीला॥(२)॥ द्वे अत्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्य ॥ भ्रकुटिरिति ॥ भ्रकुटिः ॥ (१) ॥ भ्रुकुटिः ॥ (२) भ्रूकुटिः भृकुटी इत्यपि ॥ (३) ॥ त्रीणि क्रोधादिना ललाटसंकोचनस्य ॥ अदृष्टिरिति ॥ अदृष्टिः ॥ (१) ॥ असौम्येऽसुन्दरे ॥एकं क्रूराया दृष्टेः॥ संसिद्धीति ॥ "संसिद्धिः प्रकृतौ सिद्धौ मदोग्रायामपि स्त्रियाम्" (१) ॥ प्रकृतिः ॥ (२) ॥ इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्तम् ॥ ३७ ॥ स्वरूपम् ॥ ( ३ ) ॥ स्वभावः ॥ ( ४ ) ॥ "निसर्गः सृष्टौ स्वभावे च" इति हैमः ॥ ( ५ ) ॥ पञ्च स्वभावस्य ॥ अथेति ॥ वेपथुः ॥ ( १ ) ॥ कम्पः ॥ ( २ ) ॥ द्वे कम्पस्य ॥ अथेति ॥ "क्षणः कालविशेषे स्यात्पर्वण्यवसरे मदे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः" इति हैमः ॥ ( १ ) ॥ उद्धर्षः ॥(२)॥ "मही नद्यन्तरे भूमौ मह उद्धवतेजसोः" ॥ (३)॥ "उद्धवो यादवाग्निदि महे च क्रतुपावके" ॥( ४ ) "उत्सवो मह उत्सेके इच्छाप्रसरकोपयोः" ॥ (५) ॥ पञ्च नामान्युत्सवस्य ॥ ३८ ॥
इतोति ॥ स्वर्गप्रधानो वर्गः॥ एतत्पर्यन्तं स्वर्गसंगतार्थनिरूपणात् ॥

## इति स्वर्गवर्गः ।

इति नाट्यवर्गविवरणम् ॥

---

अध इति ॥ अधोभुवनम् ॥ ( १ )॥"पातालं वडवानले । रसातले च" इति हैमः ॥(२)॥ बलिसद्म नान्तं क्लीबं द्वन्द्वघटकत्वात् ॥ ( ३ ) ॥ रसातलम् ॥ ( ४ ) ॥ नागलोकः ॥ ( ५ ) ॥ अधोलोक-फणिभुवनादयः अप्यत्र ॥ पञ्च अधोलोकस्य ॥ अथेति ॥ "कुहरं गह्वरे छिद्रे क्लीबं, नागान्तरे पुमान्" ॥ ( १ ) ॥ "शुषिरं वंशादिवाद्ये विवरेऽपि नपुंसकम्" ॥ ( २ ) ॥ "विवरं दूषणे गर्ते" ॥(३)॥ "बिलं छिद्रे गुहायां च पुमानुच्चैःश्रवोहये" ॥ ( ४ ) ॥ १ ॥ "छिद्रं विवररन्ध्रवत् । गर्ते दोषे" इति हैमः ॥ ( ५ ) ॥ निर्व्यथनम् ॥ ( ६ ) ॥ "रोकं क्रयणभेदे ना विविले चले । रोकोंऽशो" इति हेमचन्द्रः ॥ ( ७) ॥ "रन्ध्रं तु दूषणे छिद्रे" इति विश्वमेदिन्यौ ॥ ( ८ ) ॥ श्वभ्रम् ॥ तालव्यादि ॥ ( ९ ) ॥ "वपा विवरमेदसोः" ॥ ( १० ) ॥ "शुषिः शोषे बिले स्त्री स्यात्" इति मेदिनी ॥ 'सुषिः' ॥ "विवराभिधायिनि शुषिरादौ शास्त्रेषु दन्त्यतालव्यौ" इत्यूष्मविवेकः ॥ ( ११ ) ॥ एकादश बिलस्य ॥ गर्तेति ॥ "गर्तोऽवटे कुकुन्दरे । त्रिगर्तांशे" इति हैमः ॥ स्त्रियां गर्ताऽपि "शरट-कुसर-गर्त-शृङ्गाः" इति स्त्रीपुंसप्रकरणे रभसात् ॥ ( १ ) ॥ अवटः[1] ॥ "अवटः कूपबिलयोर्गर्ते कुहकजीविनि"[2] इति हैमः ॥ इदन्तोऽपि ॥ "दर्भेऽपि पवित्रमवटिरवटेऽपि" इति हलायुधः ॥ ( २) ॥ द्वे रन्ध्रमात्रस्य ॥ सरन्ध्र इति ॥ शुषिरम् ॥(१) ॥ एकं भूरन्ध्रस्य ॥(२)॥ अन्धेति ॥ अन्धकारः ॥ ( १ )॥ ध्वान्तम् ॥ ( २ ) ॥ "तमिस्रं तिमिरे कोपे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां

---

१—"विवराभिधायिनि-" इत्यूष्मविवेकतो दन्त्यादित्वे तु 'सुष्ठु अभ्रम्' इति विग्रहः इति पञ्चिकाशयः-इति मुकुटपीयूषबुधमनोहराशयः ॥—२कुहकमिन्द्रजालम् ॥

विष्वक् संतमसं नागाः काद्रवेयास्तदीश्वरः।शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ॥ ४ ॥
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ। अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ ५ ॥
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः।सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ ६ ॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः। कुंडली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥७॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः। उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥

च" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ "तिमिरं ध्वान्ते नेत्रामयान्तरे" ॥ ( ४ ) ॥ "तमो ध्वान्ते गुणे शोके क्लीबं, वा ना विधुंतुदे" इति मेदिनी ॥ तमसमपि ॥ "तमसं तु निशाचर्म" इति त्रिकाण्डशेषात् ॥ स्त्रियां तु तमसा नदीविशेषे ॥ ( ५ ) ॥ पञ्चान्धकारस्य ॥ ध्वान्त इति ॥ अन्धतमसम् ॥ ( १ ) ॥ एकं घनान्धकारस्य ॥ क्षिण इति ॥ क्षीणे तु ध्वान्ते॥ अवतमसम्॥(१)॥ एकं क्षीणान्धकारस्य॥ तम इति ॥ विष्वक् सर्वतः तमः ॥ ३ ॥ संतमसम् ॥ ( १ ) ॥ एकं व्यापकतमसः ॥ नागा इति ॥ "नागो मतंङ्गजे सर्पे पुंनागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे स्यादुत्तरास्थितः। नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे" इति हैमः ॥ ( १ ) ॥ काद्रवेयः ॥ ( २ ) ॥ सर्पेभ्योऽन्ये देवयोनयोऽमी द्वे फणालाङ्गूलवतो नराकारसर्पस्य ॥ तदीति ॥ तेषामीश्वरः ॥ "शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि॥ च। शेषा निर्माल्यदाने स्यात्" इति हैमः ॥ ( १ ) ॥ "अनन्तः केशवे शेषे पुमान्, निरवधौ त्रिषु" ॥ द्वे नागस्वामिनः ॥ वासुकिरिति ॥ वासुकिः ॥ ( १ ) ॥ सर्पराजः ॥ ( २ ) ॥ [१]द्वे पन्नगराजस्य ॥ अथेति ॥ गोनसः ॥ "गोनसी मण्डली बोडः" इति तु विक्रमादित्यः ॥(१)॥ ४ ॥ तिलित्सः ॥ ( २ ) ॥ द्वे सर्पविशेषस्य ॥ अजेति ॥ "अजगरः स्मृतः। सर्पभेदेऽपि कवचे बुधैः" ॥ ( १ ) ॥ शयुः ( २ ) ॥ "वाहसोऽजगरे वारिनिर्याणसुनिषण्णयोः" इति हैमः ॥ ( ३ ) ॥ त्रीणि अजगरसर्पस्य ॥ अलेति ॥ अलगर्दः ॥ "अलगर्धः" इति तु मुकुटः॥ ( १ ) ॥ जलव्यालः ॥ ( २ ) ॥ द्वे जलव्यालस्य॥ समाविति ॥ राजिलः ॥ ( १ ) ॥ डुण्डुभः ॥ ( २ ) ॥ द्वे निर्विषस्य द्विमुखस्य सर्पस्य॥५॥मालिवति ॥ "मालुधानश्चित्रसर्पे महापद्मे च दृश्यते" इत्युत्पलिनी ॥ "मालुधानो मातुलाहौ मालुधानी लतान्तरे" इति विश्वः ॥ ( १ ) ॥ मातुलाहिः ॥ ( २ ) ॥ द्वे चित्रसर्पस्य ॥ निर्मुक्त इति ॥ निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि" ॥ ( १ ) ॥ मुक्तकञ्चुकः ॥ ( २ ) ॥ द्वे मुक्तत्वचः सर्पस्य ॥ सर्प इति ॥ सर्पः स्त्रियाम् ॥ जातित्वान्ङीष् सर्पी ॥ ( १ ) ॥ "पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्" ॥ ( २ ) ॥ भुजगः ॥ ( ३ ) ॥ "भुजंगः सर्पखिड्गयोः" इति हैमः ॥ ( ४ ) ॥ "अहिर्वृत्रासुरे सर्पे पुंसि" ॥(५)॥ भुजंगमः ॥ ( ६ ) ॥ ६ ॥ "आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति" ॥ आशीविषः ॥ ( ७ ) ॥ विषधरः ॥ ( ८ ) ॥ "चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि" इति हैमः ( ९ ) ॥ "व्याडो हिंस्रपशौ सर्पे" ॥ डलयोरेकत्वस्मरणात् व्यालोऽपि ॥ "व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोः" इति विश्वमेदिन्यौ ॥ ( १० ) सरीसृपो द्विदन्त्यः ॥ "संसार–सारस–सरीसृप–सस्य–सास्नाः" इति द्विदन्त्ये ऊष्मविवेकः ॥ (११)॥"कुण्डली वरुणे सर्पे मयूरे कुण्डलान्विते"॥(१२)॥"पादानामपि विशेषे द्वे शते द्वे च विंशती"इत्यागमः ॥ गूढपाद् दकारान्तः ॥ (१३) ॥ चक्षुःश्रवाः सान्तः ॥ अत एव 'गोकर्णः' अपि ॥ "गोकर्णः प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयोः" ॥ ( १४ ) ॥ काकोदरः ॥ ( १५ ) ॥ फणी नकारान्तः ॥ ( १६ ) ॥ ७ ॥ दर्वीकरः ॥ ( १७ ) ॥ दीर्घपृष्ठः ॥ ( १८ ) ॥ "दन्दशूकस्तु पुँल्लिङ्गो राक्षसे च सरीसृपे" ॥ ( १९ ) ॥ "बिलेशयो मूषिकेऽहौ" इति हैमः ॥ ( २० ) ॥

---

१—इह यद्यपि शेषवासुक्योर्भेदः। तथापि गतानुगतिकतया कवयोऽभेदेन प्रयुञ्जते यथा "स्वमिव भुजंगविशेषं व्युपधाय स्वपिति यो भुजं गवि शेषम्" इति वृन्दावने ॥ "वलयायितशेषशायिनः सखितामादित पीतवाससः" इति नैषधे ॥ इति मुकुटः ॥ २—लक्ष्यं च। "किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते" इति स्वामी ॥

**त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः।समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम्९ पुंसि क्लीबे च काकोलकालकूटहलाहलाः।सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥ दारदो वत्सनाभश्च विषभेदा अमी नव। विषवैद्यो जाङ्गुलिको व्यालग्राह्याहितुण्डिकः११॥**

इति पातालभोगिवर्गः ॥ ८ ॥

**स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्। तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥**

उरगः ॥ ( २१ ) ॥ पन्नगश्चौषधीभेदे तथैव पवनाशने " ॥( २२ ) ॥ " भोगी भुजङ्गमेऽपि स्याद्ग्रामपात्रे नृपे पुमान्। विहाय महिषीमन्यराजयोषिति भोगिनी " ॥ ( २३ ) ॥ " जिह्मगोऽही च मन्दगे " इति विश्वः ॥ ( २४ ) ॥ पवनाशनः ॥ ( २५ ) ॥ पञ्चविंशतिः सर्पस्य ॥ ८ ॥ त्रिष्विति ॥ आहेयम् ॥ (१) ॥ आदिना कञ्चुकादि ॥ एकं सर्पशरीरावस्थितास्थिविषादिकस्य ॥ स्फटायामिति ॥ स्फटा ॥ 'फटा' इति क्वचित्पाठः। "फटा तु कितके फणे" ॥ ( १ ) ॥ फणा ॥(२ ) ॥ 'द्वयोः' इत्यनेन 'स्फटा' अपि संबध्यते— इति स्वामी॥ द्वे फणायाः ॥ समाविति॥"कञ्चुको वारवाणे स्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च, चोलके ॥"कञ्चुक्यौषधिभेदे च" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ " निर्मोको मोचने व्योम्नि संनाहे सर्पकञ्चुके " ॥ ( २ )॥ द्वे सर्पत्वचः ॥क्ष्वेड इति ॥ "क्ष्वेडो ध्वनौ कर्णामये विषे। क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति। लोहितार्कपर्णफले घोषपुष्पे नपुंसकम्। दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः ॥ (१) ॥ "गरलं पन्नगविषे तृणपूलकमानयोः" इति हैमः ॥ (२) ॥ " गरले विषमम्भसि च, स्त्रियामतिविषायाम् " इत्यूष्मविवेकान्मूर्धन्यान्तम् ॥—'पुंसि क्लीबे च' इति विषेणापि सम्बध्यते—इति केचित् ॥ ( ३ ) ॥ त्रीणि विषस्य ॥ ९ ॥ पुंसीति ॥ "काकोलो नरकान्तरे, । ना कुलाले द्रोणकाके, विषभेदे च न स्त्रियाम् " ॥ ( १) ॥ कालकूटः ॥( १ ) ॥ "हालाहलं हालहलं वदन्त्यपि हलाहलम् " इति द्विरूपकोषः । " हलाहलस्तु हयलालोरगे विषे । ज्येष्ठयां च"। इति हैमः ॥ (१) ॥ एते त्रयः क्लीबपुंसोः॥'सौराष्ट्रिकः' इति स्वामी।'सारोष्ट्रिकः' इति पाठः—इति मुकुटः॥(१)॥ शौक्तिकेयः ॥ ( १ ) ॥"ब्रह्मपुत्रः क्ष्वेडभेदे नदभेदे च पुंस्ययम् "॥ (१ )॥ प्रदीपनः ॥ ( १ ) ॥ १० ॥ "दारदो विषभेदे स्यात्पारदे हिङ्गुले पुमान् " ॥( १ ) ॥ वत्सनाभः ॥(१)॥ स्थावरविषभेदानां प्रत्येकम् ॥ विषेति ॥ विद्यामधीते वेत्ति वा। "तदधीते तद्वेद" ( ४।२।५९ ) इत्यण् ॥ विषवैद्यः॥ (१) ॥ जाङ्गुलिकः ॥ " परीक्षितं समश्नीयाज्जाङ्गुलीभिर्भिषग्वृतः " ॥ (२) ॥ द्वे गारुडितस्य ॥ व्यालेति ॥ व्यालग्राही नकारान्तः॥ व्यालग्राहोऽपि ॥ आहितुण्डिकः॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावे 'अहितुण्डिकः' अपि ॥ व्यालग्राहोऽहितुण्डिकः ॥ इत्यमरमाला ॥ (२) ॥ द्वे सर्पग्राहिणः ॥ ११ ॥

॥ इति पातालभोगिवर्गविवरणम् ॥

---

स्यादिति ॥ नारकः॥(१)॥ "नरकः पुंसि निरयदेवारातिप्रभेदयोः " इति विश्वमेदिन्यौ ॥ ( २ ) ॥ निरयः ॥ ( ३ ) ॥ दुष्टा गतिः ॥ "दुर्गतिः । नरके निःस्वतायां च " इति हैमः ॥ (४) ॥ चत्वारि पापाचरणजन्यदुर्गतेः ॥ तदिति ॥ तस्य नरकस्य भेदाः "तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे"॥(१)॥"वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखेऽपि च" इति विश्वः । नास्ति वीचिः सुखमत्र ॥ " अवीचिस्त्वतरङ्गे नरकान्तरे"

---

१—'द्वयोर्वर्तमानायां स्फटायां फणापि द्वयोः' इति केचित्। नैषा ग्रन्थकृद्रीतिः—इति पीयूषम् ॥ २—यथा "स्निग्धं भवत्यमृततुल्यमहो कलत्रं हालाहलं विषमिवापगुणं तदेव" यथा "कामसपायि मयेन्द्रियकुण्डैर्यथापि दुष्कृतहालहलौघः" यथा वा "मधु तिष्ठति वाचि योषितां हृदये हालहलं महाविषम्" इति स्वामी ॥ "कस्य सद्यो हलाहलः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—अत्र तु "दारिद्र्ये नरके चापि लिखितमासीत्। परंतु हैमे नोपलभ्यते ॥ ४—अतरङ्गे कल्लोलरहिते यथा "अवीचिर्निर्वाते सरससरसीवेयमबला" इत्यादौ वाच्यलिङ्गः ॥ इत्यनेकार्थकैरवाकरकौमुदी ॥ नरके तु तपनसाहचर्यात्पुँल्लिङ्गः "अवीचिं गाहन्ते हुतवहशिखापूरितमपि" इति शिल्पलेखः —इति सर्वधरः स्वामी पञ्जिका च—इति मुकुटः ॥

संहारः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः। प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः॥ विष्टिराजूः कारणा तु यातना तीव्रवेदना। पीडाबाधाव्यथा दुःखमामनस्यं प्रसूतिजम् ॥३॥ स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ॥

इति नरकवर्गः ॥ ९ ॥

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः। उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ १ ॥ रत्नाकरो जलनिधिर्यादःपतिरपांपतिः । तस्य प्रभेदाः क्षीरोदो लवणोदस्तथाऽपरे॥ २ ॥

इति हैमः ॥(१) ॥ महारौरवः ॥ (१) ॥ "रौरवो नरके घोरे" इति [1]मेदिनी ॥ ( १ ) ॥ १ ॥ सम्यग् हारोऽत्र॥ संहारः ॥(१)॥ कालसूत्रम्॥(१)॥आद्यशब्देन तामिस्रान्धतामिस्रासिपत्रवनादयः॥ नरकभेदानां पृथक् पृथक्॥सत्त्वा इति॥ नरकस्थाःसत्त्वा जन्तवः ॥नारकाः ॥(१)॥ "प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः"॥ ( २ ) ॥ द्वे[2] नरकस्थप्राणिनाम् ॥ वैतेति ॥ "नारका जन्तवः प्रेता नदी वैतरणी स्मृता" इति त्रिकाण्डशेषः "वैतरणी नद्यां प्रेतानां, यातुमातरि" ॥ (१) ॥ एकं यममार्गभवाया नद्याः ॥ स्यादिति ॥ अलक्ष्मीः॥(१)॥ "निर्ऋतिः[3] स्यादलक्ष्म्यां स्त्री, दिशां पालान्तरे पुमान्" ॥ ( २ ) ॥ द्वे अलक्ष्म्याः ॥२॥ विष्टिरिति "विष्टिः कर्मकरे मूल्ये भद्राजूप्रेषणेषु च" इति हैमः ॥(१)॥"आजूवेतनयोर्विष्टिः[4] कर्मकृत्कर्मणोरपि" इति शाश्वतः—इति स्वामी ॥ (२)॥ द्वे स्त्रियौ[5] ॥ द्वे [6]निर्मूल्यकर्मकरणे। इति मुकुटः, नरके हठात्प्रक्षेपस्येति स्वामी, भद्राख्यकरणस्येत्यन्ये ॥ कारणेति ॥ "कारणं करणे हेतुवधयोश्च नपुंसकम् । स्त्री यातनायां च" ॥ ( १ ) ॥ यातना ॥ (२) ॥ तीव्रवेदना ॥(३)॥ त्रीणि तीव्रदुःखस्य ॥ नरकरुज इति स्वामी ॥ पीडेति ॥ "पीडाऽर्तिमर्दनोत्तंसकृपासु सरलद्रुमे" इति हैमः ॥(१) ॥ "बाधा दुःखे निषेधे च" इति मेदिनी ॥ "आबाधा" इति वा छेदः ॥ "आबाधा वेदना दुःखम्" इति हलायुधः ॥ ( २ ) ॥ व्यथा ॥ ( ३ ) ॥ ॥(३)॥दुःखम्॥(४)॥"प्रसूतिजममानस्यं कृच्छ्रं कष्टं कलाकलम्" इति वाचस्पतिः ॥अमनसो भाव आमनस्यम् ॥ ( ५ ) ॥ "दुःखप्रसूतिजे क्लीबे पीडा बाधा च वेदना" इति माला ॥( ६ )॥ ३ ॥ "कष्टं तु गहने कृच्छ्रे" ॥ ( ७ ) ॥ "कृच्छ्रं[6]मंहसि । कष्टे सान्तपने" इति हैमः ॥ ( ८ ) ॥ "आभीलं भीषणं कृच्छ्रेऽपि" इति हैमः ॥(९) ॥ त्रीणि शरीरपीडायाः ॥ नवापि दुःखस्य—इत्येके ॥ त्रिष्विति ॥ एषां[7] मध्ये यद्भेद्यगामि द्रव्यगामि तत्त्रिषु ॥

इति नरकवर्गविवरणम् ।

---

समुद्र इति ॥ समुद्रः ॥ ( १ ) ॥ "अब्धिर्ना सरसि वारिधौ" ॥ ( २ ) ॥ "अकूपारः कूर्मराजसमुद्रयोः" ॥ ( ३ ) ॥ "पारावारः पयोराशौ पारावारं तटद्वये" ॥ [8]पारापारः पवर्गादिमध्यः— इति कश्चित् ॥ ( ४ ) ॥ सरित्पतिः॥(५)॥उदन्वान्॥( ६ )॥ ( ७ ) ॥ सिन्धुर्वमथुदेशाब्धिनदे ना, सरिति स्त्रियाम् "इति विश्वमेदिन्यौ॥ (८) ॥ "सरो नीरे तडागे च" इति रुद्रः ॥ "सरस्वांस्तु नदे वार्धौ ना,ऽन्यवद्रसिके, स्त्रियाम् । वाणी स्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि ॥ ( ९ ) ॥ ॥ ( १० ) ॥ ( ११ ) ॥ १ ॥ ॥ ( १२ ) ॥ ( १३ ) ॥ ( १४ ) ॥ ( १५ ) ॥ पञ्चदश समुद्रस्य ॥ तस्येति ॥ क्षीरोदः । लवणोदः । एवं इक्षुरसोदः,सुरोदः, दधिमण्डोदः, स्वादूदः,घृतोदः॥समुद्रविशेषाणां पृथक् पृथगेकैकम् ॥ आप इति ॥

---

१—हैमे तु "भीषणे नरकान्तरे" इत्युपलभ्यते ॥ २—मुकुटोक्तम् 'एकम्' इत्येवोचितम् ॥ ३—निरुपद्रवे च वाच्यलिङ्गो यथा "निर्ऋतिर्धर्मकर्मठः" इति हैमानेकार्थकैरवाकरकौमुद्यौ ॥ ४—विष्टिः कर्मकरे तु वाच्यलिङ्गो यथा "विशन्तु विष्टयः सर्वे रुद्रा इव महौजसः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—"हठादभृतिकः क्लेशो विष्टिराजूश्च कीर्त्यते" इति कोषान्तरादिति मुकुटबुधमनोहरे ॥ ६—अंहसि पापे यथा "कृतलानि कृच्छ्राणि रविर्लुनातु" इत्यनेकार्थकैरवाकरकौमुदी॥ इह त्वम्भसीति लिखितमासीत् ॥ ७—एषां दुःखादीनाम्—इति स्वामी ॥ ८—तथा च हरिप्रबोधे संदष्टयमकम्— "सतमाः सतमालतया पारापारास्तः सदारोदारः । लोकालोकानुकृतिः सद्यः स ह्ययमनभ्रकूटैः कूटैः" इति मुकुटबुधमनोहरे ॥

**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥**
**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् । अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशंवरम् ॥ ४ ॥**
**मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् । भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥**

'कबन्धमुदकमापो नीरन्नार्वारिनारम् '॥ (१)॥ वार् क्लीबमुक्तसंसारावर्तात् ॥ ( २) ॥ ''वारि ह्रीवेरनीरयोः । वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि''॥(३)॥''सरिलं सलिरं सलिलम्'' इति वाचस्पतिः ॥(४)॥ ''कमला श्रीर्जलं पद्मं कमलं कमलो मृगः''इति धरणिदर्शनात्'कमलम्' इत्येकं नाम॥ ''कमलं क्लोम्नि भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे । कमला श्रीवरनार्योः'' इति हेमचन्द्रः ॥ ( ५ ) ॥ ''जलं गोकलले नीरे ह्रीवेरेऽप्यन्यवज्जडे'' इति मेदिनी ॥ ( ६ ) ॥ ''पयः क्षीरे च नीरे च'' इति हैमः ॥ ( ७ ) ॥ ''कीलालं रुधिरे तोये'' इति हैमः ॥ ( ८ ) ॥ ''अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः ॥ अमृता मागधीपथ्यागुडूच्यामलकीषु च'' ॥ ( ९ ) ॥ ''जीवनं वर्तने नीरप्राणधारणयोरपि । जीवनी जीवना चापि जीवन्तीभेदयोः क्रमात्'' ॥ ( १० ) ॥ ''भुवनं विष्टपेऽपि स्यात्सलिले गगने जले'' ॥ ( ११ ) ॥ ''वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने'' इति हैमः ॥ ( १२ ) ॥ ॥३॥''कबन्धं सलिले रुण्डे''इति शाश्वतादिदमेकं नाम॥''कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे । क्लीबं जले, पुंस्युदरे राहुरक्षोविशेषयोः''॥(१३)॥उदकम्॥(१४)॥पाथः॥(१५)॥''पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । ओषधीद्वीपविहगतीर्थराजोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च'' ॥ ( १६ ) ॥ ''सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणोः पुमान् । नपुंसकं तु पानीये सुरवर्त्मन्यपि स्मृतम्'' ॥ ( १७ ) ॥ अम्भः । ॥ ( १८ ) ॥ अर्णः ॥ ( १९ ) ॥ तोयम् ॥ ( २० ) ॥ '' पानीयं पेयजलयोः '' इति हैमः ॥ ( २१ ) ॥ ''नीरन्नार्वारिनारम्'' इति संसारावर्तसंमते 'नार' इति पाठे नरस्येदम् । ''आपो वै नरसूनवः'' इति स्मृतेः ॥ ''नारस्तर्णकनीरयोः '' इति मेदिनी ॥ ( २२ ) ॥ ''क्षीरं पानीयदुग्धयोः'' इति हैमः ॥ ( २३ ) ॥ अम्बु ॥ ( २४ ) ॥ दन्त्यादिस्तालव्यादिश्च ॥ ''शंवरं सलिले पुंसि मृगदैत्यविशेषयोः । शंवरी चाखुपर्ण्यां स्यात्'' इति विश्वः ॥ ( २५ ) ॥ ४ ॥ ''मेघपुष्पं पिण्डाभ्राम्बुनादेये ना हरेर्हये'' ॥ ( २६ ) ॥ ''पुंल्लिङ्गः स्याद् घनरसः सान्द्रनिर्यासनीरयोः'' इति रभसः ॥ ''नारं घनरसः पुमान्'' इति शब्दार्णवः ॥ ''अप्स्वपि शंव ( शम्ब ) रपिप्पलकुशकमलकाण्डाविषवनपयांसि । घनरसमम्बु क्षीरं घृतममृतं जीवनं भुवनम्'' इति रत्नकोषात् क्लीबमपि ॥ ( २७ ) ॥ दकशब्दोऽप्यत्र ॥ ''प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च'' इति हलायुधात् ॥ सप्तविंशतिर्जलस्य ॥ त्रिष्विति ॥ आप्यम् ॥ स्त्रियाम् आप्या ॥ ( १ ) ॥ अम्मयम् । स्त्रियामम्मयी ॥ ( २ ) ॥ द्वे जलविकारस्य ॥ भङ्ग इति ॥ ''भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः ( भङ्गा शणे )'' इति हैमः ॥ ( १ ) ॥ तरङ्गः ॥ ( २ ) ॥ ''वा स्त्रियाम् '' इति काकाक्षिगोलकन्यायेनोर्मिवीचिभ्यां संबध्यते ॥ ''पुँल्लिङ्गस्त्रीलिङ्गयोर्वीचिमणियष्टिमुष्टयः'' । ''अशनित्रुटिशमिपाटलिशाल्मलितरणिश्रेण्यूर्मयः'' । ''ऊर्मिः

---

१--प्रयोगश्च ''वारि पतन्ति नदन्ति मयूराः'' इति पूर्वघटकर्परः ॥ पूर्वसाहचर्यात्स्त्रीत्वं वारः इति तु कालिङ्गः ॥ पूर्वोत्तरसाहचर्यात् स्त्रीक्लीबयोर्वार् इति तु पञ्जिका इति मुकुटः ॥ २--प्रवासे यथा ''आहूतस्याभिषेकाय विसृष्टस्य वनाय च'' इत्यनेकार्थकैरवाकरकौमुदी । अत्र तु 'प्रवाहे' इति लिखितमासीत् ॥ ३--''समरसरसि नृत्यत्कबन्धे'' इति वासवदत्तायाम् ''चलितोद्धतकबन्धसंपदः '' इति माघे च प्रयोगात्--इति मुकुटः ॥ ४--''उदकशब्दसमानार्थ उदशब्दो विद्यते तथा च 'प्रसन्नोदम् 'इत्यसंज्ञायामप्युदशब्दः प्रयुज्यते'' इति ( ६।३।५७ सूत्रे) कैयटः--इति मुकुटः॥ ५--एतदुत्तरम् ''आप्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ । इज्यादानेऽध्वरेऽर्चायां संगमेऽस्त्री गुरौ त्रिषु'' इति लिखितमस्ति । परंतु पूर्वार्धे आप्यस्य स्थाने आस्यशब्दस्यैव हैमविश्वमेदिनीषूपलम्भात् स्वयमपि आस्यशब्दव्याख्यायामस्यैव कोशस्यास्यशब्दघटितस्यैवोपन्यस्तत्वाच्च आस्यशब्दस्यैव तदर्थकत्वस्यानुभवसिद्धत्वाच्च न प्रकृतोपयुक्तम् ॥ उत्तरार्धस्य इज्याशब्दार्थबोधकत्वान्न प्रकृतोपयोगि ॥

**महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः।पृषन्तिबिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः॥६॥**
**चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः। कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७॥**
**पारावारे परार्वाची तीरे पात्रं तदन्तरम्। द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८॥**
**तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्। निषद्वरस्तु जम्बालः पंकोऽस्त्री शादकर्दमौ ॥९॥**
**जलोच्छ्वासाःपरीवाहाः कूपकास्तु विदारकाः।नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः१०**

पीडाजवोत्कण्ठाभङ्गप्राकाशवीचिषु । वस्त्रसंकोचलेखायाम्'' इति हैमः ॥ ( ३ ) ॥ 'वीचिर्नित्यं स्त्री' इति स्वामी ॥ ''वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः'' ॥ ( ४ ) ॥ चत्वारि तरङ्गाणाम्॥अथेति ॥ ॥ ५ ॥ उल्लोलः॥( १ )॥ कल्लोलः ॥ ( २ ) ॥ द्वे महातरङ्गस्य ॥ स्यादिति ॥ '' आवर्तश्चिन्तने वारिभ्रमे चावर्तने पुमान् ॥ ( १ ) ॥ जलानां भ्रमणस्यैकम् ॥ पृषन्तीति ॥ ''पृषन्मृगे पुमान्, बिन्दौ न द्वयोः, पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ'' ॥ ( १ ) ॥ ''बिन्दुर्दन्तक्षतान्तरे । भ्रुवोर्मध्ये रूपकाव्यक्तौ च पृषते पुमान् । वेदितर्यन्यलिङ्गः स्यात्'' ॥ ( २ ) ॥ ''पृषतस्तु मृगे बिन्दौ खरोहिते । श्वेतबिन्दुयुतेऽपि स्यात्'' इति हैमः ॥ ( ३ ) ॥ विप्रुट् ॥(४)॥ चत्वारि जलकणस्य ॥ ६ ॥ चक्राणीति ॥ ''चक्रं पुटभेदे चक्रः कुटिले क्रूरभौमयोः'' इति हैमः ॥ ''चक्रः शनैश्चरे पुंसि, पुटभेदे नपुंसकम् । त्रिषु क्रूरे कुटिले'' ॥ स्वामी तु—चक्राकारेण यान्त्यधः—इति विग्रहन् चवर्गादित्वं मन्यते ॥ ''चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि'' इति चादौ मेदिनी ॥ ( १ ) ॥ ''पुटभेदस्तु नगरातोद्ययोस्तटिनीमुखे'' इति हैमः ॥ ( २ ) ॥ द्वे चक्राकारेण जलानामधोयानस्य ॥ भ्रमा इति ॥ ''भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि'' ॥ ( १ ) ॥ जलनिर्गमः ॥ ( २ ) ॥ द्वे जलनिःसरणजालकस्य ॥ नद्यादौ अधःस्थजलस्योर्ध्वनिःसरणस्येत्यन्ये ॥ स्वामी तु—चत्वार्येकार्थानि—इत्याह ॥ कूलमिति ॥ ''कूलं तटे सैन्यपृष्ठे तडागस्तूभयोरपि'' इति हैमः॥(१)॥ रोधः॥अदन्तोऽपि॥''रोधः प्रोक्तश्च रोधसि'' इति संसारावर्तात् ॥(२)॥''तीरो वङ्गे तीरं पुनस्तटे'' इति हैमः ॥ ( ३ ) ॥ प्रतीरम् ॥ ( ४ ) ॥ तटम् ॥ ( ५ ) ॥ पञ्च तीरस्य ॥ ७ ॥ पारेति ॥ ''पारं प्रान्ते परतटे'' इति हैमः ॥ ( १ ) ॥ अवारम् ॥ ( १ ) ॥ परतीरावरतीरयोरेकैकम् ॥ पात्रमिति ॥ तयोः पारावारयोरन्तरं मध्यम् ॥ ''पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि'' इति हैमः ॥ ( १ ) ॥ एकं पारावारमध्यस्य ॥ द्वीप इति ॥ द्वीपः ॥ काकाक्षिवत् 'अस्त्रियाम्' इत्युभाभ्यां संबध्यते ॥ ( १ ) ॥ अन्तरीपम् ॥ ( २ ) ॥ द्वे जलमध्यस्थस्थानस्य ॥ ८ ॥ तोय इति ॥ तोयोत्थितं यत्तोयक्रमेणोत्थं तत्पुलिनम् । त्रिकाण्डशेषे तु ''पुलिनं द्वीपमुच्यते'' इत्यभिहितम् ॥ ( १ ) ॥ एकं जलादाचिरनिर्गततटस्य ॥ सैकतमिति ॥ सैकतम् ॥ ( १ ) ॥ सिकतामयम् ॥(२)॥ द्वे वालुकामयतटस्य ॥ निषेति ॥ ''निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी'' इति विश्वः ॥ ( १ ) ॥ ''जम्बालः शैवले पङ्के'' ॥ ( २ ) ॥ ''पङ्कोऽस्त्री कर्दमे पापे'' इति मेदिनी ॥ ( ३ ) ॥ ''शादः कर्दमशष्पयोः'' इति हैमः ॥ ( ४ ) कर्दमः ॥ ( ५ ) ॥ पञ्च पङ्कस्य ॥ ९ ॥ जलोच्छ्वासा इति ॥ जलोच्छ्वासः ॥ ( १ ) ॥ ''परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि'' ॥ ( २ ) ॥ द्वे प्रवृद्धजलस्य निर्गममार्गस्य ॥ समधिकजलस्य सर्वतो वहनस्य वा ॥ कूपका इति ॥ ''कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे । उदपाने चितायां च कूपिकाम्भोगतोपले'' ॥ ( १ ) ॥ विदारकः

१—''पृषन्तिबिन्दुपृषताः'' इति त्रिभिर्द्वन्द्व इत्यन्ये ॥ तथा च ''पयःपृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैः'' इति जाम्बवतीविजयवाक्यम्—इति मुकुटपीयूषबुधमनोहराः ॥ २—भङ्गो विच्छित्तिः इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—जलनिःसरणजालके यथा माघे ''भ्रमागतैरम्बुभिरम्बुराशिः'' इति—मुकुटः ॥ ४—दीर्घेकारादि ''समुद्रतीराजितसर्वलोका सेनापगां व्याप्तवती बलेन'' इति द्विसंधानश्लेषात् ॥ ५—एतदग्रे ''जगलो मदनद्रुमे । मेदके पिष्टमद्ये च पुंसि धूर्तेऽभिधेयवत्'' इति लिखितमासीत् ॥ तत्तु जगलशब्दार्थबोधकतया न प्रकृतोपयुक्तम् ॥ ६—विश्वमेदिनीपुस्तके तु 'च्युतायाम्' इत्युपलभ्यते ॥

**उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः।आतरस्तरपण्यं स्याद् द्रोणी काष्ठाम्बुवाहिनी ११**
**सांयात्रिकः पोतवणिक् कर्णधारस्तु नाविकः। नियामकाः पोतवाहाः कूपको गुणवृक्षकः॥१२॥**
**नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः।अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम्॥१३॥**
**क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु।त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः१४**
**निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये । अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ॥ १५ ॥**

॥ ( २ ) ॥ द्वे शुष्कनद्यादौ कृतगर्तस्य ॥ नाव्यमिति ॥ नाव्यम् ॥ ( १ ) ॥ एकं नौतरणयोग्यजलस्य ॥ स्त्रियामिति ॥ नौः ॥ ( १ ) ॥ "तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः । यष्टावब्धौ" इति हैमः ॥(२)॥"तरिर्दशायां वेडायां वस्त्रादीनां च पेटके" इति हैमः॥(३)॥ त्रीणि नौकायाः ॥१०॥उडुपमिति ॥ "उडुपश्चन्द्रभेलयोः' इति धरणिः ॥ (१) ॥ " प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि" इति हैमः ॥ ( २ ) ॥ " पोतृप्लवकयोः कोलः कोलं तु बदरीफलम्" इति शाश्वतः । "कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ । कोलं तु बदरे कोला पिप्पल्यां चव्यभेषजे" इति हैमः ॥ (३) ॥ त्रीणि तृणादिनिर्मिततरणसाधनस्य ॥ स्रोत इति ॥ यत्स्वतोऽम्बुसरणं तत्स्रोतः ॥ स्रोतो दन्त्यादिः । " स्रोतः सद्यः सकलसलिलम्" इति दन्त्यादिपूष्मविवेकात् ।[1] "स्रोतोम्बुवेग इन्द्रिये" ॥ (१) ॥ एकमकृत्रिमजलवहनस्य ॥ आतर इति ॥"आतरस्तरपण्यं स्यादनुत्तरम् " इति बोपालितः ॥ ( १ ) ॥ तरस्य पण्यम् तरपण्यम् ॥ ( २ ) ॥ द्वे नद्यादितरणे देयमूल्यस्य ॥ द्रोणीति ॥ 'द्रोणि[2]: काष्ठाम्बुसेचनी द्रुणिश्च' इति रूपरत्नाकरात् द्रुणिरपि । ङीपि द्रुणी ॥ "द्रुण्यम्बुद्रोणिकच्छप्योः" इति मेदिनी ॥ " द्रोणी[3] काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते" ॥ ( १ ) ॥ पुनः पुनरम्बु वहति । "बहुलमाभीक्ष्ण्ये" ( ३।२।८१ ) इति णिनिः ॥ (२) ॥ द्वे काष्ठपाषाणकृतनौकाकाराम्बुसेचन्याः ॥ ११ ॥ सांयेति ॥ समुदितानां गमनं द्वीपान्तरगमनं[4] वा संयात्रा । सा प्रयोजनमस्य इति सांयात्रिकः ॥ (१) ॥ पोतेनोपलक्षितो वणिक् इति पोतवणिक् ॥ (२) ॥ द्वे वहित्रगामिनो वणिजः ॥ कर्णेति ॥ कर्णधारः ॥ (१) ॥ नाविकः ॥ (२) ॥ द्वे नाविकस्य (मल्लाह) इति ख्यातस्य ॥ नौपृष्ठदण्डधारकस्य-इत्यन्ये ॥ नियेति॥ "नियामकः पोतवाहे कर्मधारे नियन्तरि " ॥ ( १ ) ॥ पोतवाहः ॥ ( २ ) ॥ द्वे वहित्रवाहकस्य ॥ कूपेति ॥ कूपकः ॥ (१) ॥ गुणवृक्षकः ॥ (२) ॥ द्वे नौमध्यस्थरज्जुबन्धनकाष्ठस्य ॥ नौबन्धनकीलकस्येत्यन्ये ॥ १२॥ नौकेति॥ नौकादण्डः॥(१)॥ बाहुलकाद् गुणे क्षेपणिः[5] ॥ "क्षेपणं प्रेरणे, नौकादण्डजालभिदोः स्त्रियाम् ॥ ( २ ) ॥ द्वे नौकापार्श्वद्वयबद्धचालनकाष्ठस्य ॥ अरित्रमिति ॥ अरित्रम् (१) केनिपातकः ॥( २ ) ॥ द्वे नौपृष्ठस्थचालनकाष्ठस्य ॥ अभ्रिरिति ॥ अभ्रिः ' अभ्रीत्यपि' ॥ (१) ॥ काष्ठकुद्दालः ॥(२)॥ द्वे पोतादेर्मलापनयनार्थं काष्ठादिरचितकुद्दालस्य ॥ सेकेति॥ सेकपात्रम् ॥ (१)॥ "सेचनं रक्षणे सेके नौकायाः सेकभाजने" इति विश्वमेदिन्यौ ॥(२)॥ द्वे नौस्थजलनिःसारणपात्रस्य ॥ १३ ॥ क्लीब इति॥ अर्धनावम् ॥ (१) ॥ एकं नावोऽर्धभागस्य ॥ अतीतेति ॥ अतीतनौकम् ॥ (१) ॥ अतिनु ॥ (२) ॥ द्वे नौकामतिक्रान्तजलादेः ॥ त्रिष्विति ॥ अगाधमभिव्याप्य त्रिषु ॥ प्रसन्न इति ॥ प्रसन्नः " प्रसन्ना स्त्री सुरायां स्यादच्छसंतुष्टयोस्त्रिषु ॥ (१) ॥ "अच्छो भल्लूके स्फाटिकेऽमलेऽच्छाऽभिमुखेऽव्ययम् " इति हैमः ॥ (२) ॥ द्वे निर्मलस्य ॥ कलुष इति ॥ कलुषः । " कलुषं त्वाविले पापे" इति विश्वः ॥ (१) ॥ अनच्छः ॥ ( २ ) ॥ आविलः ॥ (३) ॥ त्रीणि मलिनजलस्य ॥ १४ ॥ निम्नमिति ॥ निम्नम् ॥(१)॥ गभीरम् ॥ (२) ॥ गम्भीरम् ॥ (३) ॥ त्रीणि गम्भीरस्य ॥ उत्तानामीति ॥

---

१—मुकुटबुधमनोहरयोस्तु " **आतारानुत्तरा**वप्यत्र" इत्युक्त्वा दीर्घमध्यमेवेदमुदाहृतम् ॥ २—"मरकतमणिद्रोणिसरला" इति पूर्वकविप्रयोगः—इति मुकुटबुधमनोहरे ॥ ३–"द्रोणीभिरम्भासि चरन्ति महार्णवस्य"इत्यनेकार्थकैरवाकरकौमुदी ॥ ४—"संपूर्वस्य यातेर्द्वीपान्तरगमने वृत्तिः" इति चाणक्यटीकेति कलिङ्गः—इति मुकुटः ॥ ५—"आतिदेशिककार्यस्यानित्यत्वाद्गुणाभावाभावे क्षेपणिः ॥ "कृदिकारात्" ( ग० ४।१।४५ ) इति ङीषि क्षेपणी च" इति माधवी—इति मुकुटः ॥

**आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम्।मत्स्याधानी कुवेणी स्याद् बलिशं मत्स्यवेधनम् ॥
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।विसारः शकुली चाथ गडकः शकुलार्भकः१७॥
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ।नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ॥१८ ॥
क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः।रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः॥१९॥
तिमिंगिलादयश्चाथ यादांसि जलजन्तवः । तद्भेदाः शिशुमारोद्रशंकवो मकरादयः ॥ २० ॥**

"उत्तानमगभीरे स्यादूर्ध्वास्यशायिते त्रिषु"॥ एकं तद्विपर्ययस्य गम्भीरविपर्ययस्य ॥ अगाधमिति॥ अगाधम् ॥ (१) ॥ " अगाधमतलस्पर्शे त्रिषु, श्वभ्रे नपुंसकम्" (२) ॥ द्वे अतिनिम्नस्य ॥ कैवर्त इति ॥ कैवर्तः ॥ ( १ ) ॥ " शालो झषे, धीवर एव दाशः " इति शभेदात्तालव्यान्तः ॥ "कैवर्तभृत्ययोर्दासो दासी बाणा च चेटिका" इति रुद्राद्दन्त्यान्तः ॥ "दासो भृत्ये च शूद्रे च ज्ञानेऽर्थिनि च धीवरे " ॥ (२) ॥ ( ३ ) ॥ त्रीणि धीवरस्य ॥ १५ ॥ आनाय इति ॥ आनायः ॥ (१) ॥ "जालं वृन्दगवाक्षयोः । क्षारकानायदम्भेषु, नीपे ना, स्त्री तु घोषके" इति रभसः ॥ ( २ ) ॥ द्वे जालस्य ॥ शणेति ॥ शणसूत्रम् ( १ ) ॥ पवित्रकम् ॥ (२) ॥ द्वे शणसूत्रजालस्य ॥ मत्स्येति ॥ मत्स्याधानी ॥ ( १ ) ॥ कुवेणी ॥ ( २ ) द्वे मत्स्यस्थापनपात्रस्य ॥ बलिशमिति ॥ बलिशम् ॥ डलयोरैक्याद् 'बडिशम् ' अपि । स्त्रियां बाडिशापचये तु बडिशी ॥ (१)॥ मत्स्यवेधनम् ॥(२)॥ द्वे मत्स्यवेधनस्य ॥१६॥ पृथ्विवति ॥ पृथुरोमा ॥(१)॥ "झषा नागबलायां स्त्री तापमत्स्याटवीषु ना "॥ ( २ ) ॥ मत्स्यः ॥ (३) ॥ " मनो राश्यन्तरे झषे " ॥ ( ४ ) वैसारिणः ॥ ॥ ( ५ )॥ " अण्डजा मृगनाभौ, ना सरटेऽहौ खगे झषे" इति मेदिनी[2] ॥ ( ६ ) ॥ विसारः ॥ ( ७ ) ॥ "शकुलं वल्कलेऽर्थे च " इति तालव्यादावजयः ॥ ( ८ ) ॥ अष्टौ मत्स्यसामान्यस्य ॥ अथेति ॥ "गडो मीनान्तराययोः" ॥ (१) ॥ शकुलोऽत्र मत्स्यमात्रे[3], इति स्वामी । तस्यार्भकः ॥ (२ ) ॥ द्वे गडकस्य ॥ १७ ॥ सहेति ॥ सहस्रदंष्ट्रः ॥ ( १ ) " पाठीनो गुग्गुलद्रुमे । पाठके मीनभेदे च " इति हैमः । द्वे वदालकस्य ॥ उलूपीति ॥ उलूपी ॥ ( १ ) " शिशुकः शिशुमारे स्याद्बालकोलूपिनोरपि" ॥ (२) ॥ द्वे 'शोंशु' इति ख्यातमत्स्यविशेषस्य ॥ नलेति ॥ " तलमीनः" इति केचित्पठन्ति ॥ (१) ॥ "नलमीनश्चिलिचिमो बृहन्मीनोऽब्धिजास्तिमिः " इति रत्नमाला ॥ " लक्षणा सारसी क्रौञ्ची नलमीनश्चिलीचिमिः " इति बोपालिताच्चतुरिकारवान्मध्यदीर्घ इदन्तोऽपि ॥ ( २ ) ॥ द्वे नलवनचारिणो मत्स्यविशेषस्य ॥ प्रोष्ठीति ॥प्रोष्ठी ॥(१) ॥ शफरी॥(२)॥ द्वे मत्स्यविशेषस्य॥१८॥ क्षुद्रेति ॥ क्षुद्रादण्डाज्जाता मत्स्याः—क्षुद्राण्डमत्स्याः । तेषां संघातः ॥ (१) ॥ पोताधानम् ॥ ( २ ) ॥ द्वे अण्डादचिरनिर्गतमत्स्यसंघस्य ॥ अथविति ॥ अथो झषविशेषा उच्यन्ते ॥ " रोहितं कुंकुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे लोहितकद्रुमे" ॥ ( १ ) ॥ मुद्गुरः ॥ ( १ ) " शालो झषे धीवर एव दाशः" इत्यूष्मभेदात्तालव्यादिः ॥ " कैवर्त्त इव बद्धराजीवोत्पलसालो वसन्तकालः " इति वासवदत्ताश्लेषाद्दन्त्यादिश्च ॥ कैवर्तपक्षे सालो मत्स्यभेदः । वसन्तपक्षे सालं पुष्पम् । सालं पुष्पे क्लीबं वृक्षे तु पुमान् ॥ " पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः " इति रभसे तु दन्त्यादिः ॥ " शालो हाले मत्स्यभेदे शालौकस्तत्प्रदेशयोः " इति हैमः ॥ ( १ ) ॥ "अथ राजीवो मीनसारङ्गभेदयोः । राजीवमब्जे" इति हैमः ॥ शकुलः ( १ ) ॥ तिमिः ॥ ( १ ) ॥ १९ ॥ तिमिंगिलः ॥ ( १ ) ॥ आदिशब्दात् तिमिंगिलगिलनन्दीवर्तादयः ॥ मत्स्यविशेषाणां पृथगेकैकम् ॥ अथेति ॥ यादः ॥ ( १ ) ॥ जलजन्तुः ॥ ( २ ) ॥ द्वे जलचर-

---

१—विश्वकोशे तु " **अण्डजः** कृकलासे स्यात्खगे मीने भुजंगमे । कस्तूर्यामण्डजा प्रोक्ता " इत्युपलभ्यते ॥ २—हैमे तु "सहस्रदंष्ट्रे वादालः, पाठीने चित्रवल्लिकः, शकुले स्यात्कलकः" इति विशेषमत्स्यत्वेनोक्तः॥ ३—वस्तुतस्तु "गडकः शकुलार्भकः । क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः । सहस्रदंष्ट्रः पाठीन" इति श्लोकः ॥ ४—"रोहितो मद्गुरः" इति पाठः—इति पीयूषम् ॥

**स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ।ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ॥२१॥**
**गण्डूपदः किंचुलको निहाका गोधिका समे। रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः२२**
**मुक्तास्फोटः स्त्रियां शुक्तिः शंखः स्यात्कम्बुरस्त्रियौ।क्षुद्रशंखाः शंकनकाःशम्बूका जलशुक्तयः२३**
**भके मण्डूकवर्षाभूशालूरप्लवदर्दुराः । शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः २४**

प्राणिनः ॥ तद्भेदा इति ॥ तेषां जलजन्तूनां भेदा उच्यन्ते ॥ " शिशुमारोऽम्बुसंभूतजन्तौ तारात्मकाच्युते" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ उद्रः ॥ ( १ ) ॥ "शङ्कुः पत्त्रशिराजाले संख्याकीलकशंभुषु । यादोऽस्त्र-भेदयोर्मेढ्रे ". इति हैमः ॥ ( १ ) ॥ "मकरो निधौ । नक्रे राशिविशेषे च" इति हैमः ॥(१)॥ आदिना ग्राहकुम्भीरादयः ॥ जलजन्तुविशेषाणां पृथक्पृथक् ॥ २० ॥ स्यादिति ॥ कुलीरः ॥ ( १ ) ॥ "कर्कटः । कुलीरे करणे स्त्रीणां राशौ खगे" इति हैमः ॥ ( २ )॥ द्वे कुलीरस्य ॥ कूर्म इति ॥ कूर्मः ॥ कुत्सित ऊर्मिर्यस्य "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः" इति रभसः ॥(१)॥"कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् " ॥ ( २ ) ॥ "कच्छपी वल्लकीभेदे डुलौ क्षुद्रगदान्तरे । पुंसि निध्यन्तरे कूर्मे मल्लबन्धान्तरेऽपि च" इति विश्वमेदिन्यौ ॥ ( ३ ) त्रीणि कूर्मस्य ।।ग्राह इति।।" ग्राहो ग्रहे जल-चरे" इति हैमः ॥ ( १ ) ॥ "अवहारस्तु युद्धादिविश्रान्तौ ग्राहचौरयोः । निमन्त्रणोपनेतव्ये[2]" इति हैमः ॥ ( २ )॥ द्वे ग्राहस्य ॥ नक्र इति ॥ "नक्रं नासाग्रदारुणोः । नक्रो यादसि" इति हैमः[3]॥ ॥ ( १ ) ॥ कुम्भीरः ॥ ( २ ) ॥ द्वे नक्रस्य ॥ अथेति ॥ महीलता ॥ ( १ ) ॥ २१ ॥ गण्डू-पदः ॥ ( २ ) ॥ (३) ॥ त्रीणि 'केचुवा' इति ख्यातस्य ॥ निहाकेति ॥ निहाका ॥ (१)गोधिका॥ "गोधा तलनिहाकयोः" ॥ ( २ ) ॥ द्वे 'गोह' इति ख्यातायाः ॥ रक्तपेति ॥ "रक्तपी स्या-ज्जलौकायां डाकिन्यां, ना तु राक्षसे" ॥ ( १ ) ॥ जलौका ॥ ( २ ) ॥ सान्तोऽपि ॥ जलोरगी जलोका तु जलौका च जलौकसि॥ " इति संसारावर्ताद्बहुवचनं प्रायिकम्॥"जलौकापि जलोका स्याज्जलूका जलजन्तुका" इति तारपालः ॥ (३) ॥ त्रीणि ( जोक ) इति ख्यातस्य ॥ २२ ॥ मुक्तेति ॥ मुक्तास्फोटः ॥ ( १ ) ॥ "शुक्तिः कपालशकले शङ्खे शङ्खनकेऽपि च । नख्यश्चावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम्" ॥ ( २ ) ॥ द्वे शुक्तेः ॥ शङ्ख इति ॥ "शङ्खः कम्बौ न योषित्, ना भालास्थिनिधिभिन्नखे" ॥(१)॥ "कम्बुर्वलयशङ्खयोः । गजे शम्बूके कर्चूरे ग्रीवायामलिकेऽपि च" इति हैमः ॥ ( २ ) ॥ एतौ पुंन-पुंसके ॥ द्वे शङ्खस्य ॥ क्षुद्रेति ॥ क्षुद्रशङ्खाः ॥ ( १ ) ॥--शङ्खस्य नखा इव ( शङ्खनखाः )-- इति तु मुकुटः ॥ शङ्खनकाः--इत्यन्ये ॥ ( २ ) ॥ द्वे लघुशङ्खस्य ॥ शम्बूका इति ॥ "शम्बूकपि-ण्याकमधूकफेनः" इत्यमरमालायां पुँल्लिङ्गः ॥ "शम्बूको[4] गजकुम्भान्ते घोषे स्याच्छूद्रतापसे । जलजन्तुवि-शेषे च शम्बूका न नपुंसके" इति मेदिनेर्द्विलिङ्गता ॥ "शम्बूकः शम्बुकश्चैव पूर्वः कान्तस्तु सर्वदा। ककारेण विना शेषो(शम्बुः) दृश्यते ग्रन्थविस्तरे" इत्युत्पलिनी ॥(१)जलशुक्तिः ॥(२)॥ द्वे सर्वजलशुक्तिकानाम् ॥२३॥भेके इति ॥ 'भेको[5] मण्डूकमेघयोः'॥ (१) ॥ "मण्डूकी मण्डूकपर्ण्यां मण्डूको भेकशोणयोः" इति हैमः ॥ ( २ ) ॥ "वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान्" इति विश्वमेदिन्यौ ॥ (३)॥ शालूरः ॥"परिसरकृकलासस्वेदसालूर-" इत्यूष्मविवेकाद्दन्त्यादिरपि ॥ ( ४ ) ॥"प्लवः प्लक्षे प्लुतौ कपौ। शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः ॥ क्रमनिम्नमहीभागे कुलके जलवायसे । कैवर्तीमुस्तके गन्ध-तृणेऽपि स्यान्नपुंसकम् " ॥ ( ५ ) ॥ "दर्दुरस्तोयदे[6] भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरी चण्डिकायां स्याद्

---

१—"जलौकसेनेव रक्ताकृष्टिनिपुणेन वेश्याजनेन"इति वासवदत्तायाम् ॥'जलं च तदोकश्चेति जलौकः। ततोऽर्श-आद्यचि ( ५।२।१२७ ) एकवचनमदन्तत्वं चोपपाद्यम्—इति मुकुटबुधमनोहरे ॥ २—निमन्त्रणोपने-तव्यम्–शर्करादिस्वादूकृतं भक्ष्यम् ॥ तत्र यथा " एतस्मिन् विषयावहारविषमे संसारवारांनिधौ " इत्य-नेकार्थकैरवाकरकौमुदी ॥ ३—अस्याग्रे "नक्रः कुम्भीरके पुंसि नक्रं तर्णकनरियोः" इति लिखितमस्ति ॥ परंतु मेदिन्य द्वितीयचरणे नीरशब्दस्यार्थबोधकताया बोधनेन प्रक्षिप्तप्रायम् ॥ ४—दैत्यविशेषेऽपि यथा "ब्रूत ब्रूत भटाः क स क्वां स नरः शम्बूकजीवाहरः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—भीरौ च यथा "भेकाः केकारवैः पान्थाः" इत्यनेकार्थ-कैरवाकरकौमुदी ॥ ६—इतः पूर्वम्--"दुर्दरः पर्वते पुंसि त्रिष्वीषाद्भिन्नभोजने" इत्यपि लिखितमस्ति ॥ परंतु मेदिनी-हैमयोरुकारमध्यस्यैव पाठेन समानानुपूर्वीकत्वे पर्वतार्थकतापौनरुक्त्यस्यापि संभवेन न प्रकृतोपयोगि ॥

**मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ।जलाशया जलाधारास्तत्रागाधजलो ह्रदः ॥२५॥**
**आहावस्तु निपानं स्यादुपकूपजलाशये । पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥२६॥**
**नेमिस्त्रिकाऽस्य वीनाहो मुखबन्धनमस्य यत्।पुष्करिण्यां तु खातं स्यादखातं देवखातकम् २७॥**
**पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः।वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका॥२८॥**

ग्रामजाले नपुंसककम् ” ॥ ( ६ ) ॥ षट् ‘मेंडक’ इति ख्यातस्य ॥ **शिलीति** ॥ “शिलमुञ्छे स्याद् गण्डूपद्यां **शिली** मता । स्तम्भशीर्षे **शिलाशिल्यौ**, **शिला** तु प्रस्तरे मता । तथा मनःशिलायां च द्वाराधःस्थितदारुणि ” ॥ ( १ ) ॥ गण्डूपदी ( २ ) ॥ **द्वे किंचुलकभार्यायाः--इति स्वामी** ॥ **द्वे क्षुद्रकिंचुलकजातेः** ॥ **भेकीति** ॥ भेकी ॥ ( १ ) ॥ “भेक्यां पुनर्नवायां स्त्री **वर्षाभूर्दर्दुरे** पुमान्” इति यादवः ॥ वर्षाभ्वी ॥ ( २ ) ॥ **द्वे मण्डूक्याः** ॥ **क्षुद्रमण्डूकस्येत्यन्ये** ॥ **कमठीति** ॥ कमठी ॥ ॥ ( १ ) ॥ “**डुलिः** स्त्रियाम् । कमठ्यां, ना[1] मुनौ” ॥ (२) ॥ **द्वे कच्छप्याः॥२४॥मद्गुरस्येति॥** मद्गुरी’ इत्यपि ॥ “भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु । शिली गण्डूपदस्यापि दुलिः स्यात्कमठस्य तु” इत्यमरमाला ॥ “**शृङ्गी** स्वर्णमीनविशेषयोः । विषायामृषभौषध्याम्” ॥ ( १ ) **एकं मद्गुरस्त्रियाः** ॥ **दुर्नामेति** ॥ “**दुर्नाम** क्लीबमर्शसि । स्यादीर्घकोषिकायां स्त्री” ॥ ( १ ) दीर्घकोशिका ॥ मूर्धन्यषान्ता च ॥ “तालव्या मूर्धन्याश्चैते शटी च परिवेशः । विश्वक्सेनो भ्रेशः प्रतिष्कशः कोशविशदौ च” इत्यूष्मविवेकः ॥ ( २ ) ॥ **द्वे ‘झिनाञ्जी’ इति ख्यातायाः** ॥ **जलेति** ॥ **जलाशयो** जलाधारे स्यादुशीरे पुंनपुंसकम्[2] ” ॥ ( १ ) ॥ जलाधारः ॥ ( २ ) ॥ **द्वे जलाशयस्य** ॥ **तत्रेति** ॥ तत्र तेषु मध्ये ॥ अगाधं जलं यत्र स जलाशयः॥ ह्रदः ॥ (१) ॥ **एकमगाधजलकूपस्य** ॥ **आहाव इति** ॥ आहावः ॥ ( १ ) ॥ निपानम् ॥ ( २ ) ॥ **द्वे कूपसमीपरचितजलाधारस्य ॥२५॥ पुंसीति** ॥ अन्धुः ॥ ( १ ) ॥ प्रहिः ॥ ( २ ) ॥ “ **कूपः** कूपक[3]मृन्माने गर्तान्धुगुणवृक्षके ” ॥ ( ३ ) ॥ उदपानम् ॥ ( ४ ) ॥ तु--स्थाने च उचितः ॥ **चत्वारि कूपस्य।।२६।।नेमिरिति**।।अस्य कूपस्य।।“**नेमिर्ना** तिनिशे, कूपत्रिकाचक्रान्तयोः स्त्रियाम् ” ॥ ( १) ॥ “ **त्रिका** कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये[4]” इति विश्वमेदिन्यौ ॥ ( २ ) ॥ **द्वे कूपस्यान्तरे रज्ज्वादिधारणार्थदारुयन्त्रस्य** ॥ **वीनाह इति** ॥ वीनाहः ॥ ॥ ( १ ) ॥ **कूपमुखे इष्टकादिभिर्बद्धस्यैकम्** ॥ **पुष्केति** ॥ “**पुष्करिणी** नद्यां सरोजिन्यां जलाशये” ॥ ( १ ) ॥ खातम् ॥ ( २ ) ॥ **द्वे समचतुरस्रखातस्य** ॥ **अखातमिति** ॥ अखातम् ॥ (१) ॥ देवखातकम् ॥ (२)॥ “**अखातो** देवखातः स्यात् ” इति पुंस्काण्डेऽमरदत्तात् पुंस्यपि॥**द्वे अकृत्रिमजलाशयस्य** ॥ **देवद्वारस्थजलाशयस्येत्यन्ये**।।२७।।**पद्माकर इति** ॥ पद्माकरः ॥ ( १ ) ॥ ‘‘**तडागस्तु** जलाधारविशेषे यन्त्रकूपके[5]” इति मेदिनी ॥ **‘तटाकः’ ‘तटागः’** इत्येके ॥ ( २ ) ॥ **द्वे सपद्मागाधजलाशयस्य** ॥ **कासार इति** ॥ कासारः ॥ ( १ ) ॥ सरसी ॥ ( २ ) ॥ “**सरो** नीरतडागयोः ” ॥ (३)॥ “**सरसी** विश्वकासारे” ॥ ( २ ) ॥ **त्रीणि कृत्रिमपद्माकरस्य** ॥ **पञ्चापि सरोमात्रस्येत्यन्ये** ॥ **वेशन्त इति** ॥ वेशन्तः ॥ ( १ ) ॥ “**वेशन्तः** पल्वलोऽस्त्री” इति वाचस्पतिः ॥ ( २ ) ॥ अल्पसरः ॥ ( ३ ) ॥ **त्रीणि वर्षाकालभवक्षुद्रजलाशयस्य** ॥ **वापीति** ॥ वापी ॥ “वाप्यां वापिरपि स्मृता” इति द्विरूपकोशः ॥

---

१--‘क्रीडने’ इति लिखितमस्ति । परंत्वेतदानुपूर्वीघटितमेदिन्यां विश्वे च “ मुनौ ” इत्येवोपलब्धम् ॥
२--अत्र तु ‘ अन्यलिङ्गकम् ’ इति लिखितमासीत् । परं तु मूलमेदिनीदृष्टं हैमविश्वानुगुणं गृहीतम् ॥
३--मृन्माने काचभाण्डे यथा “कूपेषु रूपे क्षिप गन्धतैलम् ” इत्यनेकार्थकैरवाकरकौमुदी ॥ ४--त्रये यथा “ तत्रापि त्रिकदर्शनम् ” इत्यनेकार्थकैरवाकरकौमुदी ॥ ५-विश्वे तु “कटकेऽपि च” इति दृश्यते ॥ मेदिनीमूलपुस्तके तु “यन्त्रकूटके” इत्युपलभ्यते ॥

**खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम्।स्यादालवालमावालमावापोऽथ नदी सरित्॥ २९॥**
**तरंगिणी शैवलिनी तटिनी ह्रदिनी धुनी।स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा॥ ३०॥**
**गंगा विष्णुपदी जह्नुतनया सुरनिम्नगा। भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥३१॥**
**कालिन्दी सूर्यतनया यमुना शमनस्वसा। रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२॥**
**करतोया सदानीरा बाहुदा सैतवाहिनी।शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ३३॥**
**शोणो हिरण्यबाहुः स्यात्कुल्याऽल्पा कृत्रिमा सरित्।शरावती वेत्रवती चान्द्रभागा सरस्वती ३४**

॥ ( १ ) ॥ दीर्घिका ॥ ( २ ) ॥ **द्वे वापिकायाः** ॥ २८ ॥ **खेयमिति** ॥ "ई च खनः" ( ३ । १।१११ ) इति खेयम् ॥ ( १ ) ॥ परिखा ॥ ( २ ) ॥ **द्वे दुर्गादि परितः खातस्य** ॥ **आधार इति** ॥ "आधारश्चाधिकरणेऽप्यालवालेऽम्बुधारणे" ॥ ( १ ) ॥ **एकं 'बांध' इति ख्यातस्य** ॥ **स्यादिति** ॥ आलवालम् ( अलवालमित्यपि ) ॥ ( १ ) ॥ आवालम् ॥ ( २ ) ॥ "आवापो[2] भाण्डपचने परिक्षेपालवालयोः" ॥ ( ३ ) ॥ **त्रीणि वृक्षमूलकृतजलाधारस्य** ॥ **अथेति** ॥ "**नदी** सरिति, शोणादौ ना" ॥ ( १ ) ॥ सरित् ॥ ( २ ) ॥ ॥ २९ ॥ तरङ्गिणी ॥ ( ३ ) ॥ शैवलिनी ॥ ( ४ ) ॥ तटिनी ॥ ( ५ ) ॥ ह्रदिनी ॥ "**ह्लादिनी**" इत्यन्ये ॥ ( ६ ) ॥ धुनी ॥ ( ७ ) ॥ स्रोतस्वती "**स्रोतस्विनी**" इत्यपि ॥ ( ८ ) ॥ द्वीपवती ॥ ( ९ ) ॥ स्रवन्ती ॥ ( १० ) ॥ निम्नगा ॥ ( ११ ) ॥ "विद्यादगारमागार**मपगामा**पगामपि" इति द्विरूपकोशः ॥ ॥ ( १२ ) ॥ **द्वादश नद्याः** ॥ ३० ॥ **गङ्गेति** ॥ गङ्गा ॥ ( १ ) ॥ "**विष्णुपदं** नभोऽब्जयोः । **विष्णुपद**स्तु क्षीरोदे **विष्णुपदी** सुरापगा। संक्रान्तिर्द्वारिका चापि" इति हैमः ॥ ( २ ) ॥ जह्नुतनया ॥ ( ३ ) ॥ सुरनिम्नगा ॥ ( ४ ) ॥ भागीरथी ॥ ( ५ ) ॥ त्रिपथगा[3] ॥ ( ६ ) ॥ "**त्रिस्रोता** जह्नुकन्यायां स्रोतस्वत्यन्तरे स्त्रियाम्" ॥ ( ७ ) ॥ भीष्मसूः ॥ ( ८ ) ॥ **अष्टौ भगीरथानीतगङ्गाख्यसरितः** ॥ ३१ ॥ **कालिन्दीति** ॥ कालिन्दी ॥ ( १ ) ॥ सूर्यतनया ॥ ( २ ) ॥ यमुना ॥ ( ३ ) ॥ शमनस्वसा ॥ ( ४ ) ॥ **चत्वारि यमुनाख्यसरितः** ॥ **रेवेति** ॥ रेवा ॥ ( १ ) ॥ "**नर्मदः** केलिसचिवे **नर्मदा** सरिदन्तरे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ सोमोद्भवा ॥ ( ३ ) ॥ मेकलै[4]कन्यका ॥ ( ४ ) ॥ चत्वारि नर्मदानद्याः॥ ( ३२ ) ॥ **करेति** ॥ करतोया ॥ ॥ ( १ ) ॥ सदानीरा ॥ "प्रथमं कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" इति स्मृतेः ॥ ( २ ) ॥ **द्वे करतोयायाः** ॥ **बाहुदेति** ॥ बाहुदा ॥ ( १ ) ॥ सैतवाहिनी ॥ ( २ ) ॥ **द्वे कार्तवीर्यावतारितनद्याः** ॥ **शतेति** ॥ शतद्रुः ॥ ( १ ) ॥ शु पूजितं तुदति । 'तुद व्यथने' ( तु० उ० अ० ) "इमं मे गङ्गे यमुने सरस्वति शुतुद्रि" इति हि श्रुतिः ॥ **शतुद्रिः** ॥ ( २ ) **द्वे तदाख्यनदस्य** ॥ **विपाशेति** ॥ विपाशा ॥ ( १ ) ॥ विपाट् ॥ ( २ ) ॥ **द्वे ( व्यासा ) इतिख्यातनद्याः** ॥ ३३ ॥ **शोण इति** ॥ "**शोणः** कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये" ॥ ( १ ) ॥ हिरण्यबाहुः । अदन्तः (**हिरण्यवाहः**) ॥(२)॥ **द्वे नरविशेषस्य**॥ **कुल्येति** ॥ "**कुल्या** नदी **कुल्यम**स्थि **कुल्या** वारिप्रणालिका" इति धरणेर्नदीमात्रेऽपि ॥ "कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । **कुल्या** पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ ॥ कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान्" ॥ ( १ ) ॥ **एकं कृत्रिमस्वल्पनद्याः** ॥ **शरावतीति** ॥ शरावती ॥ ( १ ) ॥ वेत्रवती ॥ ( १ ) ॥ "**तापी तु तपती सैत्या, चान्द्रभागी तु चन्द्रिका । चान्द्रभागा शारदा तु** कश्मीरेषु सरस्वती" इति शब्दार्णवः ॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ "**चन्द्रभागा[5] चान्द्रभागा[6]**

---

१—"इहैव जम्बूतरुमालवालवत्परीयुषोच्चैर्भरतेऽब्धिना वृते" इति प्रयोगाद्दीर्घादिः ॥ २—भाण्डपचनमापाकस्थानम् तत्र यथा "आवापधूमपरिधूसरमन्तरिक्षम्" अरिचिन्तायामपि यथा "परं प्रत्यावापः फलति कृतसेकस्तरुरिव"॥ वलयेऽपि यथा "प्रकोष्ठः शुशुभे तस्या गतोऽप्यावापशून्यताम्"–इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—तथा च भारते "क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता"—इति मुकुटः ॥ ४—खमध्योऽपि । तथा च महाकविप्रयोगः–"यन्मेखला भवति मेखलशैलपुत्री"–इति पञ्जिकासर्वधरादयः—इति मुकुटः ॥ ५—"पशुपतिजटाबन्ध इव चन्द्रभागालंकृतो देशः" इति दमयन्तीश्लेषः ६—पक्षे टाप्—इति मुकुटः ॥

कावेरा सरितोऽन्याश्च संभेदः सिंधुसंगमः।द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ॥३५॥
देविकायां सरय्वां च भवे दाविकसारवौ । सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम् ॥ ३६॥
स्यादुत्पलं कुवलयम्[1] अथ नीलाम्बुजन्म च । इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥ ३७ ॥
शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका।जलनीली तु शेवालं शैवलोऽथ कुमुद्वती॥३८॥
कुमुदिन्यां नलिन्यां[2] तु विसिनीपद्मिनीमुखाः। वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ३९॥

चान्द्रभागी च सा मता । चन्द्रभागी च सैवोक्ता'' इति द्विरूपकोषः॥(१)॥ सरस्वती ''सरस्वांस्तु नदे वार्धौ ना, ऽन्यवद्रसिके, स्त्रियाम् । वाणी-स्त्रीरत्न-वाग्देवी-गो-नदीषु नदीभिदि ॥ मनुपत्न्यामपि'' ॥ ( १ ) ॥ ३४ ॥ ''कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः'' ॥ ( १ ) ॥ नदीविशेषाणां पृथक् पृथक् ॥ सरित इति ॥ अन्याः कौशिकी–गण्डकी-चर्मण्वती-गोदावर्यादयः ॥ सभिति ॥ '' संभेदः स्फुटने सङ्गे'' ॥ ( १ ) ॥ सिन्ध्वोः संगमः ॥ एकं नद्यादिसंगमस्य ॥ द्वयोरिति ॥ प्रणाली ॥ ( १ ) ॥ कृत्रिमजलनिःसरणमार्गस्यैकम् ॥ त्रिष्विति ॥ ३५ ॥ देविकायां नद्याम् ॥ दाविकम् ॥ ( १ ) ॥ सारवम् ॥ ( १ ) ॥ क्रमेणैकैकम् ॥ सौगन्धिकमिति ॥ ''सौगन्धिकं तु कह्लारे पद्मरागे च कर्तृणे । पुँल्लिङ्गो गन्धपाषाणे सुगन्धव्यवहारिणि '' ॥ ( १ ) ॥ कह्लारम् ॥ ( २ ) ॥ द्वे शुक्लकह्लारस्य ॥ 'मुण्डी' इति ख्यातस्य—इत्यन्ये ॥ हल्लकमिति ॥ हल्लकम् ॥ ( १ ) ॥ रक्तसंध्यकम् ॥ ( २ ) ॥ द्वे रक्तकह्लारस्य, रक्तवर्णत्रिकालविकासिपुष्पस्य वा ॥ ३६ ॥ स्यादिति ॥ उत्पलम् ॥ ( १ ) ॥ कुवलयम् ॥ '' कुवलं तूत्पलं कुवम्'' इति त्रिकाण्डशेषः ॥ तत्र कौवलते । ''कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले'' ॥ ( २ ) ॥ द्वे कमलकुमुदादीनां सामान्येन[3] ॥ अत एव ''इन्दीवरे मांसशून्ये उत्पलं कुष्ठभूरुहे'' इति रभसः, ''श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्'' इति नाममाला च ॥ अथेति ॥ नीलं च तदम्बुजन्म च नीलाम्बुजन्म ॥ ( १ ) ॥ ''इन्दीवरं कुवलये शतावर्यां च योषिति'' ॥ ''कुवलयं स्यादिन्दीवारमित्यपि'' व्याडेरिन्दीवारमपि ॥ ( २ ) ॥ द्वे नीलोत्पलस्य ॥ सिते इति ॥ ''कुमुदं कैरवे रक्तपद्मे, स्त्री कुम्भिकौषधौ । गम्भार्यां, पुंसि दिङ्नागे नागशाखामृगान्तरे'' ॥ ( क्रिपि–३।३।१७८ ) कुमुद् ॥ ''कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकम्'' इति मेदिनी ॥ ( १ ) ॥ केरवस्य हंसस्येदं प्रियम् ॥ ''कैरवं चन्द्रकान्तं गर्दभं कुमुदं कुमुदे'' इति माधवः ॥ ''कैरवः कितवे रिपौ । नपुंसकं च कुमुदे, चन्द्रिकायां तु कैरवी'' ॥ ''चन्द्रकान्तं तु कैरवे । चन्द्रकान्तो रत्नभेदे '' ॥ ( २ ) ॥ ( २ ) ॥ द्वे शुक्लोत्पलस्य ॥ ३७ ॥ शालूकमिति ॥ एषां सौगन्धिकादीनां कन्दो मूलम् ॥ शालूकम् ॥ ( १ ) ॥ एकं कमलकन्दस्य ॥ वारीति ॥ वारिपर्णी ॥ ॥ ( १ ) ॥ कुम्भिका ॥(२)॥ द्वे जलकुंभिकायाः॥ जलेति॥ जलनीली॥(१) ॥ शैवलेश्चैव शेवालम्॥(२)॥ शेवालः शैवलो जलनीलिका''—इति वाचस्पतिः ॥ ( ३ ) ॥ त्रीणि शैवालस्य ॥ अथेति ॥ ''कुमुद्वती कैरविण्यां दयितायां कुशस्य च '' ॥(१)॥ ३८ ॥ कुमुदिनी ॥ (२) ॥ द्वे कुमुदयुक्तदेशस्य ॥ कुमुदलताया इत्यन्ये ॥ नलिन्यामिति ॥ ''नलः पोटगले राशि पितृदेवे कपीश्वरे । नली मनःशिलायां तु नलिनेऽपि नलं

---

१—कुवलयं चन्द्रविकासि, पद्मं तु सूर्यविकासि, इत्यनयोर्भेदः ॥''इन्दोरस्य च मण्डलं कुवलयालंकारकारि ध्रुवम्'' इति लक्ष्यसंवादोऽपि—इति बुधमनोहरौ ॥ २–इतःप्रभृति सूर्यविकासिनामानि ॥ ''निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् '' '' तीव्रतपनतापप्रियाम्भोजिनी न सहते स्तोकमप्यमृतमुचो रुचश्चन्द्रस्य,'' ''चन्द्रं गता पद्मगुणान्न भुंक्ते पद्माश्रिता चान्द्रमसीमभिख्याम् '' इत्यादिमहाकविवर्णनात् ॥ ३—नन्वेवं कथमुत्पलमित्युक्ते नीलोत्पलादिष्वेव बुद्धिर्जायते न पद्मादौ इति चेत् उच्यते । यथा सामान्येऽपि धान्यार्थे 'धान्यम्' इत्युक्ते कलमादिष्वेव बुद्धिर्भवति, न मुद्गादौ, एवमिहाप्यदोष इति सर्वधरादयः–इति मुकुटः ॥ ४—'गन्धकान्तम्'—इति लिखितम् ॥ ५–''सकलशोकलशेवलमालिका'' इति कथिताभ्युदयात् इति मुकुटः ॥

**सहस्रपत्रं कमलं शतपत्रं कुशेशयम् । पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥**
**विसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ ४१ ॥**
**रक्तोत्पलं[1] कोकनदं नालो नालमथास्त्रियाम्।मृणालं विसमब्जादिकदम्बे षण्डमास्त्रियाम्॥४२॥**

मतम्'' इति विश्वः ॥ "**नलिनी**[3] पुनः । पद्माकरे गङ्गाब्जिन्योः '' इति हैमः ॥ ( १ ) ॥ विसिनी ॥ ( २ ) ॥ एवं पद्मिनी ॥ मुखशब्दादाद्यर्थात् मृणालिनी कमलिनीपुटकिनीत्यादयः ॥ "**पद्मिनी** पद्मसंघाते स्त्रीविशेषे सरोऽम्बुजे'' इति मेदिनी ॥ "**पद्मिनी** योषिदन्तरे । अब्जेऽब्जिन्यां सरस्यां च'' इति हैमः ॥ ( ३ ) ॥ **त्रीणि पद्मसंघातस्य**[3] ॥ **कमलिन्या इत्यन्ये** ॥ **वेति**॥"**पद्मो**ऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचार्वाटीपन्नगीषु च'' ॥ ( १ ) ॥"**नलिनं** नलिकातोयाम्बुजेषु'' ॥(२)॥ अरविन्दम् ॥ ( ३ )॥ महोत्पलम् । "**उत्पलं** कुष्ठभूरुहे । इन्दीवरे मांसशून्ये'' इति हैमः ॥ ( ४ ) ॥ ३९ ॥ सहस्रपत्रम् ॥ ( ५ ) ॥ "**कमलं** क्लोम्नि[4] भेषजे । पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे । **कमला** श्रीवरनार्योः'' इति हैमः ॥ ( ६ ) ॥ "**शतपत्रः** शिखण्डिनि । दार्वाघाटे सारसे च कमले तु नपुंसकम्'' इति विश्वमेदिन्यौ ॥ ( ७ ) ॥ कुशेशयम् ॥ ( ८ ) ॥ पङ्केरुहम् ॥ ( ९ ) ॥ "**तामरसं**[5] पद्म ताम्रकाञ्चनयोरपि'' ॥ ( १० ) ॥ "**सारसं** सरसीरुहे । **सारसः** पुष्कराख्येन्द्वोः[6] '' इति हैमः ॥ ॥ ( ११ ) ॥ सरसीरुहम्[7] ॥ ( १२ ) ॥ ४० ॥ विसप्रसूनम् ॥ ( १३ ) ॥ "**राजीवं** नलिने, ना तु भेदे हरिणमीनयोः'' ॥ ( १४ ) ॥ "**पुष्करं** द्वीपतीर्थाहिखगरागौषधान्तरे । तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे'' इति हैमः ॥ ( १५ ) ॥ अम्भोरुहम् ॥ ( १६ ) ॥ **षोडश पद्मसामान्यस्य** ॥ **पुण्डेति**॥ "**पुण्डरीकं** सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोषकारान्तरेऽपि च'' ॥ ( १ ) ॥ सिताम्भोजम् ॥ ( २ ) ॥ **द्वे श्वेतकमलस्य** ॥ **अथेति** ॥ रक्तसरोरुहम् ॥ ( १ ) ॥ ४१ ॥ रक्तोत्पलम् ॥ ( २ ) ॥ " अथ **कोकनदं** रक्तकुमुदे रक्तपङ्कजे '' इति मेदिनी ॥ ( ३ ) ॥ **त्रीणि रक्तकमलस्य** ॥ **नालेति** ॥ " **नालं** [8] न ना पद्मदण्डे **नाली** शाककलम्बके'' ॥ (१) ॥ ( २ ) ॥ **द्वे उत्पलादिदण्डस्य** ॥ **अथेति** ॥ "**मृणालं** नलदे क्लीबं, पुंनपुंसकयोर्विसे[9]'' इति मेदिनी ॥ ( १ ) ॥ "मृणाले तु विसं[10] **विशम्**'' इति द्विरूपकोशः ॥ ( २ ) ॥ **द्वे अब्जादीनां मूलस्य** ॥ **अब्जेति** ॥ "**षण्डः** स्मृतो बलीवर्दे[11] षण्डं तु कानने भवेत्'' इति मूर्धन्यादावजयः ॥ " **षण्डं** पद्मादिसंघाते न स्त्री स्याद्, गोपतौ पुमान्'' ॥ "तालव्यो मूर्धन्योऽब्जादिकदम्बे **शण्डशब्दो**ऽयम् । मूर्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्टः'' इत्यूष्मविवेकः ॥ "मकुरमुकुरौ दर्पणे, **षण्डः** समूहे, दारदोऽम्बुधौ'' इति सारस्वतकोशः ॥ ( १ ) ॥ **एकमब्जा-**

---

१-"काश्चिद्राक्षसप्रमदा इव रक्तोत्पलाकृष्टिव्यसनिन्यः'' इति दमयन्तीश्लेषः ॥ २--इतः पूर्वं "नलिकातोयाम्बुजेषु'' इति लिखितमासीत् । परंतु तस्य नलिनशब्दार्थताया हैमादिषूपलम्भेन नलिनशब्दार्थ एव निवेशितम् ॥ ३-तथा च "सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नाम्'' इत्यादयश्च प्रयोगाः-इति मुकुटः ॥ ४-क्लोम हृदयस्य दक्षिणपार्श्वे उदर्यो जलाधारः-इत्यनेकार्थकैरवाकरकौमुदी ॥ व्योम्नि इति लिखितमासीत् ॥ ५--"दुर्जन इव सतामरसः'' इति वासवदत्तायां वसन्तवर्णनम्-इति मुकुटः ॥ ६-इन्दौ चन्द्रे यथा"सिञ्चतीवसुधासारैः सारसः सारसैः करैः''इत्यनेकार्थकैरवाकरकौमुदी ॥ ७--सरसि रोहति । "तत्पुरुषे कृति'' ( ६।३।१४ ) इत्यलुकि ह्रस्वेकारोऽपि ॥ तथा च भारविः ॥ "अयमच्युतस्य वचनैः सरसिरुहजन्मनः'' इति-इति मुकुटः ॥८-नाला-इत्यपि दृश्यते, ॥ ९-क्वचिन्मेदिनीपुस्तके तु "स्त्रीनपुंसकयोः इत्युपलभ्यते । एवं चोक्तराजशेखरोक्तिरप्यनुकूलैव ॥ १०-विसं दन्त्यान्तम् । तथा च "हंसपङ्क्तिरिव विसंवादिनी'' इति वासवदत्ता इति मुकुटः ॥ "मुनय इव विसा धारा जलपक्षिणः'' इति दमयन्ती ॥ ११-बलीवर्द उत्सृष्टवृषः । तत्र यथा "चौरैरपहृते षण्डे पृष्ठतः कोऽनुधावति'' । कानने यथा "कुमुदकमलषण्डे तुल्यरूपामवस्थाम्'' इत्यनेकार्थकैरवाकरकौमुदी ।

**करहाटः शिफाकन्दः किंजल्कः केसरोऽस्त्रियाम्।संवर्तिका नवदलं बीजकोषो वराटकः॥४३॥**

इति वारिवर्गः ॥ १० ॥

---

दीनां समूहस्य ॥ ४२ ॥ करेति ॥ "करहाटः पद्मकन्दे देशद्रुमविशेषयोः" इति हैमः ॥ ( १ ) ॥ शिफा मूलतरप्ररोहः तत्सहितः कन्दो मूलम् ॥ "शिफा" इति "कन्दम्" इति च पृथक् नामनी इत्यन्ये ॥ ( २ ) ॥ द्वे पद्मकन्दस्य ॥ किंजल्क इति ॥ किंजल्कः ॥ (१) ॥ "केसरं हिङ्गुनि क्लीबं, किंजल्के न स्त्रियां, पुमान् । सिंहच्छटायां पुंनागे बकुले नागकेसरे ॥(२)॥ द्वे पद्मकेसरस्य॥समिति॥"संवर्तिर्नवपत्रिका"इति बोपालितः॥ ततः स्वार्थे कन् ( ५।३।७५ ) संवर्तिका ॥ ( १ ) ॥ नवदलम् ॥ ( २ ) ॥ द्वे पद्मादीनां नवपत्रस्य ॥ बीजेति ॥ बीजकोषः तालव्यान्तोऽपि ॥ ( १ ) ॥ "वराटकः पद्मबीजकोशे रज्जौ कपर्दके" ॥[४]॥ ( २ )॥ द्वे पद्मबीजस्य[१]॥ ४३ ॥

इति वारिवर्गविवरणम् ॥

उक्तान्वर्गान् संगृह्णाति—

**उक्तं स्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम्।पातालभोगिनरकं वारि चैषां च संगतम्॥४४॥**

**इत्यमरसिंहकृतौ नामलिंगानुशासने । स्वर्[२]ादिकाण्डः प्रथमः साङ्ग एव समार्थितः ॥ ४५ ॥**

उक्तमिति ॥ अत्रैकादश वर्गाः ॥

इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजविष्णुदत्तविरचितायाममरटीकायां नामचान्द्रिकायां प्रथमकाण्डः संपूर्णतामगात् ॥

---

१–पुष्प—॥ २—अत एव " करहाटः शिफा च स्यात् कन्दे सलिलजन्मनाम्" इति हैमनाममालायामुक्तम् ॥ ३–आदिशब्देन पातालस्य ग्रहणम्—इति मुकुटः ॥ अत्रायं भावः । अस्मिन्काण्डे द्वावेव मुख्यवर्गौ स्वर्गः पातालश्च। तत्र नाट्यवर्गपर्यन्तं स्वर्गसाधारणपदार्थानां निरूपणात्स्वर्गवर्गत्वम् । तदुत्तरं पातालसंगतार्थनिरूपणात्पातालवर्गत्वम् ॥ अत एवाग्निपुराणे प्रथमकाण्डे एतानेव पदार्थानुक्त्वा उपसंहृतम् "स्वर्गपातालवर्गाद्या उक्ताः" इति ॥ तत्राद्यशब्देनावान्तरवर्ग-ग्रहणम्–इत्यपि मुकुटे व्यक्तम् ॥ ४—भोगिवर्गस्य सार्थक्यमभिप्रेत्यैतत् ।



॥ श्रीः ॥

# श्रीमदमरसिंहविरचितः

# अमरकोषः ।

## नामचन्द्रिकाख्यया व्याख्यया समेतः ।



### द्वितीयं काण्डम् ।

**वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः । नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥**
**भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा । धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः॥२॥**
**सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा । गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥**
**मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका।उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका४**

**वर्गा इति** ॥ इह द्वितीयकाण्डे । वर्गाः । उक्ता वदितुमारब्धाः । कीदृशाः, साङ्गोपाङ्गैः, पृथिव्यादिभिरुपलक्षिताः ॥ अत्राङ्गानि मृदादीनि । उपाङ्गानि, खिलादीनि । आपणादीनि, विपण्यादीनि । शिलादीनि, मनःशिलादीनि । वृक्षादीनि, पुष्पादीनि ॥ मृगशब्द आरण्यपशुमात्रपरः । "आरण्याः पशवो मृगाः" इति स्मृतेः ॥ आदिशब्देन पक्षिकीटादीनां ग्रहणम् ॥ तस्य चाङ्गोपाङ्गानि पक्षिपक्षादीनि ॥ यद्वा--मृगानत्तुं शीलं यस्य स मृगादी सिंहः ॥ १॥ भूरिति ॥ "भूः स्थानमात्रे कथिता धरण्यामपि योषिति"॥(१)॥"भूमिः क्षितौ स्थानमात्रे" इति हैमः ॥ ( २ ) ॥ "अचलस्तु गिरिकीलयोः । अचला भुवि" इति हैमः ॥ ( ३ ) ॥ "अनन्तः केशवे शेषे पुमान्, अनवधौ त्रिषु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि" ॥ ( ४ ) ॥ "रसा तु रसनापाठासल्लकीक्षितिकङ्गुषु" ॥ ( ५ ) ॥ "विश्वंभरोऽच्युते शक्रे पुंसि, विश्वंभरा भुवि" ॥ ( ६ ) ॥ "स्थिरा भूशालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु" ॥ ( ७ ) ॥ "धरः कूर्माधिपे गिरौ । कर्पासतूलेऽथ धरा मेदोभूमिजरायुषु" इति हैमः ॥ ( ८ ) ॥ धरित्री ॥ ( ९ ) ॥ "धरणोऽहिपतौ लोके स्तने धान्ये दिवाकरे । धरणं धारणे मानविशेषे धरणी भुवि" इति हैमः॥ ( १० ) क्षोणी ॥ (११)॥ "ज्या मौर्वी ज्या वसुंधरा" इति शाश्वतः ॥ "ज्या तु मातरि" इति हैमः ॥ ( १२ ) ॥ "काश्यप[1] उक्तो मुनिमृगयोर्भेदे च काश्यपी क्ष्मायाम्" इति मेदिनी" ॥(१३)॥" क्षितिर्गेहे भुवि क्षये" इति हैमः ॥(१४)॥ ॥ २ ॥ "सर्वसहः सहिष्णौ स्यात्सर्वसहा पुनः क्षितौ" ॥ ( १५ ) ॥ वसुमती ॥ ( १६ ) ॥ वसुधा ॥ ( १७ ) ॥ उर्वी ॥ ( १८ ) ॥ वसुंधरा ॥ ( १९ ) ॥ गोत्रा ॥ ( २० ) ॥ कुः ॥ ( २१ ) ॥ "पृथिवी पृथवी पृथ्वी" इति शब्दार्णवः ॥ ( २२ ) ॥ "पृथ्वी भूमौ महत्यां च त्वक्पत्त्यां कृष्णजीरके" ॥ ( २३ ) ॥ क्ष्मा ॥ ( २४ ) ॥ अवनिः ॥ ( २५ ) ॥ मेदिनी ॥ ( २६ ) ॥ "मही नद्यन्तरे भूमौ मह उद्धवतेजसोः" इति हैमः ॥ ( २७ ) ॥ **सप्तविंशतिः पृथ्वीनामधेयानि** ॥ ३ ॥ **मृदिति** ॥ मृत् ॥ ( १ ) ॥ स्वार्थे "मृदस्तिकन्" ॥ ( ५ । ४ । ३९ ) मृत्तिका ॥ ( २ ) ॥ **द्वे मृदः** ॥ **प्रशस्तेति** ॥ मृत्सा ॥ ( १ ) ॥ मृत्स्ना ॥ ( २ ) ॥ **द्वे प्रशस्तमृदः** ॥ **उर्वरेति** ॥ "उर्वरा तु भूमात्रे सर्वसस्याढ्यभुव्यपि" इति हैमः ॥ ( १ ) ॥ सर्वाणि च तानि सस्यानि च । तैराढ्या मृत्॥ **एकं सर्वसस्यसम्पादकभूम्याः** ॥ **स्यादिति** ॥ "ऊषः क्षारमृदि प्रोक्तः प्रभातेऽपि पुमानयम् । तत्संध्यायां च रन्ध्रे च चन्दनाद्रौ श्रवो विले ।"

---

१—विश्वकोषे तु "**काश्यपः** स्यान्मुनौ मीनभेदे भूमौ तु **काश्यपी**" इति पाठ उपलभ्यते ॥

ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली । समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥५॥
त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् । लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः॥६॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः।प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः
आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः । नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ ८ ॥
त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि । कुमुद्वान् कुमुदप्राये वेतस्वान्बहुवेतसे ॥ ९ ॥

इति मेदिनी ॥ ( १ ) ॥ क्षारमृत्तिका ॥ ( २ ) ॥ द्वे क्षारमृदः ॥ ४ ॥ ऊषेति ॥ ऊषवान् ॥ ( १ )॥ ऊषरः ॥ ( २ ) ॥ द्वे क्षारमृत्तिकावत्प्रदेशस्य ॥ स्थलमिति ॥ स्थलम् ॥ ( १ ) ॥ स्थली अकृत्रिमा ॥ कृत्रिमा स्थला ॥ स्थलं तूभयसाधारणम्॥(२)॥ द्वे स्थलस्य॥ समानाविति॥"मरुर्ना गिरिधन्वनोः" ॥ ( १ ) ॥ "धन्वा तु मरुदेशे ना, क्लीबं चापे स्थलेऽपि च" ॥ ( २ ) ॥ द्वे निर्जलदेशस्य ॥ द्वे इति ॥ "खिलमप्रहते क्लीबं सारसंक्षिप्तवेधसोः"[1] ॥ ( १ ) ॥ अप्रहतम् ॥ ( २ ) ॥ समे समानार्थे ॥ द्वे हलाद्यकृष्टस्य ॥ ५ ॥ त्रिषु लिङ्गत्रये । स्त्रियां खिला, अप्रहता ॥ अथो इति ॥ "जगती[2] भुवने क्ष्मायां छन्दोभेदे जनेऽपि च" ॥ ( १ ) ॥ "लोको विश्वे जने" इति हैमः ॥ ( २ ) ॥ विष्टपम् ॥ ( ३ ) ॥ "भुवनं पिष्टपेऽपि स्यात्सलिले गगने जले" ॥ ( ४ ) ॥ "जगत् स्याद्विष्टपे क्लीबं, वायौ ना, जङ्गमे त्रिषु" ॥ ( ५ ) ॥ "एकं महाभूतं पृथ्वी, पञ्चमहाभूतेन्द्रियविषयात्मकं तु जगत्" इति पृथ्वीजगतोर्भेदः ॥ पञ्च जगतः ॥ लोक इति ॥ अयं जम्बूद्वीपनवमांशः ॥ "महर्षिव्यासरचिते जम्बूद्वीपे च भारतम्" इति रभसः ॥ ( १ ) ॥ "पुंनपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु" इति रुद्रः ॥ "वर्षं स्थानं विदुः प्राज्ञा इमं लोकं च भारतम्" इति भारविः[3] ॥ "उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र संततिः" ॥ "वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु" ॥ शरेति ॥ शरावत्या नद्या अवधेः मर्यादायाः[4] ॥६॥ प्राचा सहितो दक्षिणो देशः ॥ प्राच्यः ॥(१)॥ एकं प्राच्यदेशस्य॥उदीच्य इति ॥ तत एवावधेः । पश्चिमेन सहित उत्तरो देशः॥उदीच्यः ॥ (१) ॥ एकमुदीच्यदेशस्य॥प्रत्यन्त इति ॥ प्रत्यन्तः ॥ ( १ ) ॥ म्लेच्छदेशः ॥ ( २ ) ॥ "चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परम्" ॥ द्वे शिष्टाचाररहितखशादिदेशस्य ॥ मध्येति ॥ मध्यदेशः ॥ ( १ ) ॥ मध्यमः ॥ ( २ ) ॥ "हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः" ( २ । २१ ) इति मनुः ॥ विनशनं कुरुक्षेत्रम् ॥ द्वे मध्यदेशस्य ॥ ७ ॥ आर्येति ॥ आर्यावर्तः ॥ (१ )॥ पुण्यभूमिः ॥ ( २ ) ॥ "आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः" ( २।२२ ) इति मनुः ॥ हिमप्रधानोऽगः—हिमागः ॥ 'हिमालयोः' इति पाठे तु हिमेन अल्यते । द्वे विन्ध्यहिमागमध्यदेशस्य ॥ नीवृदिति ॥ नीवृत् ॥ ( १ ) ॥ "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ द्वे जननिवासस्थानस्य ॥ देशेति ॥ देशः ॥ ( १ ) ॥ "विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयोः । शब्दादौ जनपदे च" इति हैमः ॥ ( २ ) ॥ उपवर्तनम् ॥ ( ३ ) ॥ त्रीणि स्थानमात्रस्य ॥ ८ ॥ त्रिष्विति ॥ गोष्ठशब्दमभिव्याप्य ॥ नडेति ॥

---

१—वेधसि विष्णौ यथा हरिवंशस्य 'खिलस्य विष्णोरिषवो गुणा यत्र' इति व्युत्पत्त्या 'खिलेषु' इति संज्ञा ॥ २–इतः पूर्वम् जगत्स्यादिति लिखितमासीत् । तदत्रैव जगच्छब्दव्याख्याने लिखितम् ॥ ३–मुकुटे तु एतदग्रे–अत एव सामान्यविशेषभावाज्जम्बूद्वीपे तदेकदेशे च भारतप्रयोगः । प्रकरणादिभिस्तु तदवगमः । यथा "एष दूरगुरुभारभारतं वर्षमद्य मम वर्तते वशः" इति माघः ॥ तथा "एतेन भारतमिला वृतवद्विभाति" इति च । अन्यान्यपि वर्षाणि । यथा "स्याद्भारतं किंपुरुषं हरिवर्षं च दक्षिणाः । रम्यं हिरण्मयकुरू सुमेरोरुत्तरास्त्रयः । भद्राश्व–केतुमालौ तु द्वौ वर्षौ पूर्वपश्चिमौ । इलावृतं तु मध्यस्थं सुमेरुर्यत्र तिष्ठति" इति वाचस्पतिः—इत्यप्युक्तम् ॥ ४–यदाह "प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा । विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती"–इति क्षीरस्वामी ॥

**शाद्वलः शादहरिते सजम्बाले तु पङ्किलः । जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ॥१०॥**
**स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥**
**देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥१२॥**
**सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् । गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥१३॥**
**पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् । वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ॥ १४ ॥**
**अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः । सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥१५॥**

नडाः प्राया यत्र ॥ नड्वान् ॥ ( १ ) ॥ नड्वलः ॥ ( २ ) ॥ द्वे नडाधिकदेशस्य ॥ कुमुद्वानिति ॥ कुमुद्वान् ॥ ( १ ) ॥ कुमुदानि प्रायाण्यत्र ॥ एकं कुमुदबाहुल्यदेशस्य ॥ वेतेति ॥ वेतस्वान् ॥ ( १ ) ॥ बहवो वेतसा यत्र ॥ एकं बहुवेतसदेशे ॥ ९ ॥ शाद्वल इति ॥ शादो बालतृणमस्मिन् । शाद्वलः ॥ ( १ ) ॥ शादैर्बालतृणैर्हरितः ॥ एकं नवतृणप्रचुरस्य ॥ सजम्बेति ॥ जम्बालेन पङ्केन सह सजम्बालः ॥ ( १ ) ॥ पङ्किलः ॥ ( २ ) ॥ द्वे सकर्दमस्य ॥ जलेति ॥ जलप्रायम् ॥ ( १ ) "अनूपो महिषे नाम्बुप्रायदेशे तु वाच्यवत्" इति मेदिनी ॥ ( २ ) ॥ "तथाविधो जलप्रायः । कच्छमनूपम्" इति बोपालितः ॥ "कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च । कच्छास्तु देशे, कच्छा स्यात्परिधानापराञ्चले[1] । चीर्यां[2] वाराह्याम्[3]" इति हैमः ॥ 'त्रिषु' इत्यस्य बाधनार्थं 'पुंसि' इति ॥ ( ३ ) ॥ त्रीणि जलाधिकदेशस्य ॥ १० ॥ स्त्रीति ॥ "शर्करा खण्डविकृतौ कर्परांशे[4] रुगन्तरे । उपलायाम्" इति हैमः ॥ शर्करा ( अश्मप्राया मृत् ) अस्त्यत्र ॥ ( १ ) ॥ शर्करिलः ॥ ( २ ) ॥ "शार्करः स्याद्दुग्धफेने शर्करान्वितदेशयोः" इति मेदिनी ॥ ( ३ ) ॥ शर्करावान् ॥ ( ४ ) ॥ चत्वार्यश्मप्रायमृदधिकस्य ॥ देशे इति ॥ आदिमौ शर्कराशर्करिलौ देशे एव । नान्यत्र ॥ 'शार्करः शर्करावान्' इतीमौ तु देशादेशयोः ॥ एवमिति ॥ एवं 'सिकतां' 'सिकतिलः' इतीमौ देश एव । 'सैकतः' 'सिकतावान्' इति तु देशादेशयोः ॥ केचित्तु सिकताशर्कराशब्दौ बहुवचनान्तावाहतुः ॥ ( ४ ) ॥ चत्वारि वालुकाबहुलदेशस्य ॥ ११ ॥ देश इति ॥ नद्यम्बुभिर्वृष्ट्यम्बुभिश्च संपन्नैर्धान्यैः पालितः ॥ नदीमातृकः ॥ ( १ ) ॥ देवमातृकः ॥ "देवो मेघे सुरे राज्ञि" ॥ (१) ॥ क्रमेण एकैकम् ॥ १२ ॥ सुराज्ञीति ॥ शोभनो राजा यत्र ॥–राजन्वान् ॥ ( १ ) ॥ एकं स्वधर्मपरराजयुक्तदेशस्य ॥ तत इति ॥ अन्यत्र राजमात्रयुक्तदेशे राजवान् ॥ एकं कुराजदेशस्य ॥ गोष्ठमिति ॥ गावस्तिष्ठन्ति यत्र ॥ "गोष्ठं गोस्थानके, गोष्ठी सभासंलापयोः स्त्रियाम्" ॥(१)॥ गोस्थानकम् ॥ (२) ॥ द्वे गवां स्थानस्य ॥ तत्त्विति ॥ पूर्वं भूतं गोष्ठम् । गौष्ठीनम् ॥ (१) ॥ एकं भूतपूर्वगोष्ठस्य ॥१३॥ पर्यन्तेति ॥ पर्यन्तभूः ॥(१)॥ "परिसरः प्रान्तभू—देवयोर्मृतौ" ॥ ( २ ) ॥ द्वे नद्यादिसमीपभूमेः ॥ सेतुरिति ॥ स्त्रियां वर्तमानायाम् आलौ सेतुः ( पुमान् ) ॥ ( १ ) ॥ आलिः ॥ ( २ ) ॥ द्वे सेतोः "पुल" इति ख्यातस्य ॥ वामेति ॥ वामलूरः ॥ ( १ ) ॥ "नाकुर्मुन्यन्तरे पृथ्वीधरवल्मीकयोः पुमान्" ॥ ( २ ) ॥ "व (ब) ल्मीको[5] नाकुवाल्मीक्यो रोगभेदे" ॥ ( ३ ) ॥ त्रीणि पिपीलिकादिनिष्कासितमृत्पुञ्जस्य ॥ १४ ॥ अयनमिति ॥ "अयनं पथि गेहेऽर्कस्योदग्दक्षिणतो गतौ" इति हैमः ॥ ( १ ) ॥ वर्त्म ॥ ( २ ) ॥ "मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि" इति हैमः ॥ ( ३ ) ॥ "अध्वा ना पथि संस्थाने सास्रवस्कन्ध[6]-

---

१–परिधानापराञ्चले । यथा "प्रलम्बकच्छाः किल दाक्षिणात्याः" ॥ २–चीरी पक्षिविशेषः ॥ ३–वाराही–वराक्रान्ता ओषधी ॥ इत्यनेकार्थकैरवाकरकौमुदी ॥ ४—कर्परांशो मृत्कपालखण्डम्, उपला अश्मरूपा मृत्, तयोर्यथा "नगतरुशिखरामर्दी सशर्करो मारुतश्चण्डः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—वाल्मीकौ प्राचेतसे यथा "पीयूषमेव नालीकं वल्मीकस्य कवेर्गिरः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ६—आस्रवः कर्मबन्धहेतुक्रिया हिंसादिः, तेन सह वर्तते यः स्कन्धः शरीरभावापन्नो रूपरसादिसमूहः सः सास्रवस्कन्ध इत्यनेकार्थकैरवाकरकौमुदी ॥

अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि।व्यध्वो दुरध्वो विपथः कदध्वा कापथःसमाः१६
अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे।प्रान्तरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ॥१७॥
गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् । घण्टापथः संसरणं तत्पुरस्योपनिष्करम्१८

इति भूमिवर्गः ॥ १ ॥

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् । स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥१॥
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः । आपणस्तु निषद्यायां विपणिः पण्यवीथिका॥२॥

कालयोः" ॥ (४) ॥ पन्थाः ॥ 'पथः' इत्यदन्तोऽपि ॥ "वाटः पथश्च मार्गश्च" इति त्रिकाण्डशेषः ॥ (५)॥ पदवी ॥ (६) ॥ "सृतिर्गतौ पथि" इति हैमः ॥ (७) ॥ "सरणिः श्रेणिवर्त्मनोः" इति दन्त्यादौ रभसः ॥ "शरणिः पथि चावलौ" इति तालव्यादावजयात्तालव्यादिरपि ॥ (८) ॥ "पद्धतिः पथि पङ्क्तौ च" इति हैमः ॥ (९) ॥ पद्या ॥ (१०) ॥ "वर्तनी पथि । वर्तने तर्कुपिण्डे च" इति हैमः ॥ 'चात् (२।१०६ उणादिसूत्रे) मुट्' इत्येके । तत्र वर्त्मनिः ॥ (११) ॥ "एकपदं तत्काले नपुंसकं, वर्त्मनि स्त्री स्यात्" ॥ (१२) ॥ द्वादश मार्गस्य॥१५॥ अतीति ॥ स्वती पूजायाम् । अतिपन्थाः ॥ (१) ॥ सुपन्थाः ॥ (२) सत्पथः ॥ (३) ॥ त्रीणि शोभनमार्गस्य ॥ व्यध्व इति ॥ व्यध्वः ॥ (१) ॥ दुरध्वः ॥ (२) ॥ विपथः ॥ (३) ॥ कदध्वा (नान्तः) ॥ (४) ॥ "कापथः कुत्सितपथे उशीरे क्लीबमिष्यते" ॥ कुत्सितार्थकुशब्दस्य पथशब्देन समासे कुपथः, अपि ॥ (५) ॥ पञ्च कुमार्गस्य ॥ १६ ॥ अपन्था इति ॥ अपन्थाः ॥ (१) ॥ अपथम् ॥ (२) ॥ द्वे मार्गाभावस्य ॥ शृङ्गेति ॥ "शृङ्गाटकं भवेद्द्वारि कण्टके च चतुष्पथे" ॥ (१) ॥ "चतुष्पथं चतुर्मार्गसंगमे, ब्राह्मणे तु ना" ॥ (२) ॥ द्वे चतुर्मार्गस्य ॥ प्रान्तरमिति ॥ "प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च" ॥ (१) ॥ दूरश्चासौ शून्यश्च ॥ एकं दूरशून्यछायाजलाभावमार्गस्य॥कान्तारमिति॥कान्तारम्॥(१)॥ एकं दुर्गमवर्त्मनः ॥१७॥गव्यूतिरिति॥"धन्वन्तरसहस्रं तु क्रोशः,क्रोशद्वयं पुनः । गव्यूतं स्त्री तु गव्यूतिर्गोरुतं गोमतं च तत्" इति वाचस्पतिः ॥ "धनुर्हस्तचतुष्टयम्" । द्वाभ्यां धनुःसहस्राभ्यां गव्यूतिः पुंसि भाषितः" इति शब्दार्णवः ॥ (१) ॥ क्रोशयुगम् ॥ (२) ॥ द्वे क्रोशद्वयपरिमिताध्वनः ॥ नल्व इति ॥ किष्कूनां (णां) हस्तानां चतुःशतम्॥नल्वः॥कात्यस्तु[1]"नल्वं हस्तशतम्" इत्याह॥एकं चतुःशतहस्तपरिमितस्य॥ घण्टेति॥ घण्टापथः ॥(१)॥ संसरणम् ॥ (२) ॥ "दश धन्वन्तरो राजमार्गो घण्टापथः स्मृतः" इति चाणक्यः ॥ द्वे राजमार्गस्य ॥ तदिति ॥ तत् संसरणं पुरस्य चेद्भवति तदा ॥ उपनिष्किरन्ति निःसरन्ति सैन्यान्यत्र । उपनिष्करम् ॥ (१) ॥ एकं पुरमार्गस्य ॥ १८ ॥

इति भूमिवर्गविवरणम् ॥

---

पूरिति ॥ "पूः शरीरे पत्तने च" ॥ (१) ॥ पुरी ॥ (२) ॥ नगरी ॥ (३) ॥ पत्तनम् "पट्टनं पुटभेदनम्" इति वाचस्पतिः ॥ (४) ॥ पुटभेदनम् ॥ (५) ॥ स्थानीयम् ॥ (६) ॥ "निगमाः पूर्वदिग्वेदनिश्चयाध्ववणिक्पथाः" इति हैमः ॥ (७) ॥ सप्त नगरस्य ॥ अन्यदिति ॥ मूलनगरं राजधानी । ततोऽन्यत् यत्तु पुरम् ॥१॥ शाखानगरम् ॥(१) ॥ एकं शाखानगरस्य॥ वेश इति ॥ "नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च" इति तालव्यान्ते रभसः ॥ "गृहमात्रे गणिकायाः सद्मानि वेशो भवेत्तु तालव्यः । तालव्यो मूर्धन्योऽलंकरणे कथित आचार्यैः" इत्यूष्मविवेकः ॥ (१) ॥ वेश्याजनस्य समाश्रयो वासस्थानम् इति वेश्याजनसमाश्रयः ॥ (२) ॥ द्वे वेश्यानिवासस्य ॥ आपण इति ॥ आपणः ॥ (१) ॥ निषद्या ॥ (२) ॥

---

१–भट्टक्षीरस्वामी तु "नल्वं विंशहस्तशतम्" इति दर्शितवान् । मुकुटस्तु "नल्वो विंशं हस्तशतम्" इति दर्शितवान् ॥

**रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः सालःप्राचीनं प्रान्ततो वृतिः३**
**भित्तिः स्त्री कुडयमेडूकं यदन्तर्न्यस्तकीकसम् । गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥४॥**
**निशान्तवस्त्यसदनं भवनागारमन्दिरम् । गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः॥५॥**
**वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् । चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम्६**

द्वे हट्टस्य ॥ विपणिरिति ॥ विपणिः ॥ (१) ॥ पण्यवीथिका ॥ ( २ ) ॥ द्वे हट्टशून्यविक्रयस्थानस्य ॥ हट्टमार्गस्य, इति स्वामी ॥ "आपणः पण्यवीथी च द्वयं 'वीथीति' संज्ञितम्" इति शाश्वतः ॥ "आपणः पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम्" इति रभसः ॥ २ ॥ रथ्येति ॥ "रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे" इति हैमः ॥ ( १ ) ॥ प्रतोली ॥ ( २ ) ॥ "विशिखाः खनित्रिकायां रथ्यायां विशिखः शरे" इति हैमः ॥ ( ३ ) ॥ त्रीणि ग्राममध्यमार्गस्य ॥ स्यादिति ॥ चयः ॥ ( १ ) ॥ "वप्रश्चावरणे वृन्दे प्राकारे मूलबन्धने" इति धरणिः ॥ "वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" इति मेदिनी ॥ ( २ ) ॥ द्वे प्राकाराधारस्य ॥ प्राकार इति ॥ प्राकारः ॥ ( १ ) ॥ "वरणो वरणद्रुमे । प्राकारे, वरणं वृत्याम्" इति हैमः ॥ ( २ ) ॥ "सालो वरणसर्जयोः" इति रभसः ॥ "ताल्व्यो नृपझषयोः शालो, वृक्षे वृतौ द्रुमभेदे च । ताल्व्यदन्त्य उक्तस्तथा स्त्रियां वृक्षशाखायाम्" इत्यूष्मविवेकः ॥ तत्र 'शल गतौ' ( भ्वा० प० से० ) धातुर्बोध्यः ॥ ( ३ ) ॥ त्रीणि प्राकारस्य ॥ प्राचीनमिति॥ प्राचीनम्॥"प्राचीरम्"॥(१)॥एकं ग्रामादेरन्ते कण्टकादिवेष्टनस्य ॥ ३ ॥ भित्तिरिति ॥ "भित्तिः कुड्ये प्रभेदे च" इति हैमः ॥ ( १ ) ॥ "कुडयं भित्तौ विलेपने" इति मेदिनी॥(२)॥ द्वे भित्तेः॥ एडूकमिति ॥ "भवेदेडोकमेडूकमेडुकं च"इति द्विरूपकोशः ॥ ( १ ) एकमस्थ्यादिमयकुडयस्य ॥ गृहमिति ॥ "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी ॥ ( १ ) ॥ "गेहमस्त्री, शालासभे स्त्रियाम्" इति वाचस्पतिः ॥ ( २ ) ॥ "अवसितमृद्धे ज्ञातेऽप्य-वसानगते च वाच्यलिङ्गं स्यात्" ॥ ( ३ ) ॥ वेश्म ॥ ( ४ ) ॥ "सद्म स्यान्मंदिरे नीरे" इति मेदिनी ॥ ( ५ ) ॥ निकेतनम् ॥ ( ६ ) ॥ ४ ॥ "निशान्तं सदनं वस्त्यमगारं मन्दिरं पुरम्" इति वाचस्पतिः ॥ "निशान्तं त्रिषु शान्ते स्यात्क्लीबं तु भवनोषसोः" इति मेदिनी॥(७)॥ वस्त्यम् ॥ "कुलोदवसितं पस्त्यम्" इति वाचस्पतिः॥(८)॥ "सदनं मन्दिरे तोये" ॥ स्वार्थण्यन्ताद्युचि सादनमपि॥"सदनं सादनम्"इति द्विरूपकोशः ॥(९)॥" भवनं सदने भावे" इति हैमः॥(१०)"विद्यादगारमागारमपगामापगामपि[६]" इति द्विरूपकोशः ॥ ॥ ( ११ ) " मन्दिरो मकरावासे मन्दिरं नगरे गृहे" इति हैमः ॥ ( १२ ) गृहशब्दो भूम्न्येव पुंसि गृहाः ॥ ( १३ ) ॥ " निकायः सद्मसंघयोः । परमात्मनि लक्षे च" इति हैमः ॥ ( १४ ) " निलयोऽस्तमये ग्रहे । गोपनस्य प्रदेशेऽपि " इति हैमः ॥ ( १५ ) ॥ एवम् आलयः ॥ ( १६ ) ॥ ५ ॥ " वासो वेश्म-न्यवस्थाने वासा स्यादाटरूषके " इति हैमः ॥ ( १७ ) ॥ " कुटः कोटे शिलाकुट्टे घटे गेहे कुटी सुरा । चित्रगुच्छा कुम्भदासी" इति हैमः " कुटः कोटे पुमानस्त्री घटे, स्त्री पुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां तु सुरायां चित्रगुच्छके" इति मेदिनी ॥ ( १८ ) ॥ "शालो हाले मत्स्यभेदे शालौकस्तत्प्रदेशयोः । स्कन्धशा-खायाम्" इति हैमः ॥ ( १९ ) ॥ " सभा द्यूतसमूहयोः । गोष्ठ्यां सभ्येषु शालायाम् " इति हैमः॥(२०)॥ विंशतिर्गृहस्य ॥ संजेति ॥ संजवनम् ॥ ( १ ) चतुःशालम् ॥ ऐकमन्योन्याभिमुखशालाचतुष्टय-

१—कौ द्योतते इति डप्रकरणे"अन्यत्रापि"इति डः इति सोमनन्दी। एतेन दकारोऽत्र, न डकारः इति स्वामी—इति मुकुटः॥२–मुकुटस्तु'–चत्वार्येव हट्टस्य इत्यन्ये । "पर्यापतत्क्रयिकलोकमगण्यपण्यपूर्णापणं विपणिना विपणिं विभेजुः" इति माघे।'विपणिर्हट्टः'इति वल्लभेन व्याख्यातम्। अत एव प्रयोगाद्विपणेः पुंस्त्वमपि–इति सर्वधरः–इत्यप्याह॥अत एव हैममे-दिन्योः "विपणिः पण्यवीथ्यां च भवेदापणपण्ययोः" इत्युपलभ्यते ॥ ३—केचित्तु ' विपण्यादीन्पञ्चैकार्थानाहुः। तथा च कौटिल्यः "विशिखायां सौवर्णिकप्रचारः" इति तु भट्टक्षीरस्वामीति मुकुटः ॥ ४—मुकुटपुस्तकयोस्तु 'चयः' इत्युपल-भ्यते ॥ ५—अत एव हैमनाममालायाम् " सभोदवसितं कुलम् " इत्यत्र कुलशब्द उपलभ्यते ॥ "दिव्यदेवकुलालंकृता स्वर्गा इव मार्गाः" इति दमयन्तीश्लेषश्च ॥ कुत्रचित् ' नल ' इति लिखितमासीत् ॥ ६—इदं तु न प्रकृतोपयोगि ॥ ७—एकयकारवान् । अत एवानेकार्थकैरवाकरकौमुद्यां घञन्तत्वेनैव व्याख्यातः । युक्तं चैतत् । ण्यदन्तस्य निवासार्थे एव निपातितत्वात् । घञन्तस्यैव तु संघाद्यर्थकता संभवति ॥ निकाय्यः ॥ ८–हैम-सटीकपुस्तके तु नोपलभ्यते ॥ ९–द्वे इति मुकुटः ॥

**चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा । आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥७॥**
**मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् । गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥**
**वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥९॥**
**सौधोऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥**
**विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् । स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥**
**शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् । प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥**
**गृहावग्रहणी देहल्यङ्गनं चत्वराजिरे । अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥ १३ ॥**

गृहस्य ॥ मुनीनामिति ॥ पर्णशाला ॥ ( १ ) उटजः " उटजस्तृणपर्णादिः " इति देशीकोशः ॥ उटाज्जायते ॥ ॥ ( २ ) ॥ द्वे मुनीनां गृहस्य ॥ ६ ॥ चैत्यमिति ॥ " चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे " इति रुद्रः ॥ ( १ ) आयतनम् ॥ (२) ॥ द्वे यज्ञस्थानस्य ॥ उद्देश्यवृक्षस्य इत्यन्ये ॥ वाजीति ॥ वाजिशाला ॥ ( १ ) ॥ " मन्दुरा वाजिशालायां शयनीयार्थवस्तुनि " ॥ ( २ ) द्वे अश्वशालायाः ॥ आवेशनमिति ॥ "आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ शिल्पिशाला ॥ शिल्पस्य शाला, इति तु स्वामी ॥ ( २ ) द्वे शिल्पशालायाः प्रपेति ॥ प्रपा ॥ ( १ ) पानीयशालिका ॥ ( २ ) ॥ द्वे पान्थजनजलपान-शालायाः ॥ ७ ॥ मठ इति ॥ मठः ॥ ( १ ) ॥ छात्रोऽन्तेवासी आदिर्येषां परिव्राजक--क्षपणकादीनां तेषां निलयः ॥ " बौद्धानां तु विहारोऽस्त्री " ॥ एकं बटुदेवादि मन्दिरस्य ॥ गञ्जेति ॥ "गञ्जा खनौ सुरा-गृहे । "गञ्जः स्यात्पुंसि रुढायां भाण्डागारे तु न स्त्रियाम्" इति विश्वमेदिन्यौ ॥ ( १ ) मदिरागृहम् ॥ ॥ ( २ ) ॥ द्वे मद्यसन्धानगृहस्य ॥ गर्भेति ॥ गर्भागारम् ॥ ( १ ) ॥ वासगृहम् ॥ ( २ ) ॥ द्वे गृहमध्य-भागस्य ॥ अरिष्टमिति ॥ "अरिष्टो लशुने निम्बे फेनिले काक-कङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च " इति विश्वमेदिन्यौ ॥ ( १ ) सूतिकागृहम् ॥ ( २ ) ॥ द्वे प्रसूतिसदनस्य ॥ चत्वारः पर्यायाः, इत्यन्ये ॥ ८ ॥ वातेति ॥ वातायनम् ॥ ( १ ) ॥ गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ" ॥ ( २) ॥ द्वे जालकस्य ॥ अथेति ॥ मण्डपः ॥ ( १ ) ॥ जनाश्रयः ॥ ( २ ) द्वे जनसमुदाय-समाश्रयस्य ॥ हर्म्येति ॥ हर्म्यम् ॥ ( १ ) ॥ आदिना स्वस्तिकादि ॥ एकं धनिनां वासस्य ॥ प्रासेति ॥ देवानां भूभुजां च गृहम् ॥ प्रासादः ॥ ( १ ) ॥ एकं देवराजानां गृहस्य ॥ ९ ॥ सौध इति ॥ " सुधा स्त्री लेपने मूर्व्यां स्नुहिगङ्गेष्टिकामृते" ॥ सुधालेपोऽस्यास्ति सौधः ॥ ( १ ) राजसदनम् ॥ ( २ ) द्वे राज-सदनस्य ॥ उपेति ॥ "उपकार्या राजसद्मन्युपकारोचितेऽन्यवत्" ॥ ( १ ) " उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये " ॥ " उपकार्युपकारिका" इति द्विरूपकोशदर्शनादुपकार्यपि ॥ द्वे राजगृहसामान्यस्य ॥ स्वस्तिक इत्यादि ॥ " स्वस्तिको मङ्गलद्रव्ये चतुष्क-गृहभेदयोः" ॥ ( १ ) ॥ सर्वतोभद्रः ॥ ( १ ) ॥ "नन्द्यावर्तः पुमान्वेश्मप्रभेदे भगवद्द्रुमे " ॥ ( १ ) ॥ १० ॥ विच्छन्दकः ॥ 'विच्छर्दकः ' इति पाठः इति स्वामी ॥ ॥ (१) आदिना रुचक-वर्धमानादिपरिग्रहः । ईश्वरगृहविशेषाणां पृथगेकैकम् ॥ स्त्र्येति ॥ स्त्रीणामगारम् ॥ अन्तरभ्यन्तरे पुरं गृहम् अंतःपुरम् ॥ ( १ ) ॥ अवरोधनम् ॥ ( २ ) ॥ ११ ॥ शुद्धान्तः ॥ ॥ ( ३ ) ॥ " अवरोधस्तिरोधाने राजदारेषु तद्गृहे " ॥ ( ४ ) ॥ ॥ चत्वारि राज्ञां महि-ष्यादिनिवासस्य ॥ स्यादिति ॥ अट्टः ॥ ( १ ) ॥ क्षौमम् ॥ ( २ ) ॥ द्वे हर्म्याद्युपरिगृहस्य ॥ प्रघा-णेति ॥ प्रघाणः ॥ ( १ ) ॥ " प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे " इति हैमः ॥ ( २ ) ॥ अलिन्दः " गृहैकदेशे आलिन्दः प्रघाणः प्रघणस्तथा " इत्यमरमाला ॥ " अलिन्दस्त्वर्वैलपाविण्डिका" इति सुभूतिः ॥ ॥ ( ३ ) ॥ त्रीणि द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कस्य ॥ १२ ॥ गृहेति ॥ गृहमवगृह्यतेऽनया गृहावग्रहणी

---

१—ह्रस्वोकारादिः । तथा च रघुः "सौधजालमुटजेषु विस्मृतम्" इति-इति मुकुटः ॥ २—" विभाषा सेना—" ( २।४।२५ ) इति क्लीबतायां "शिल्पिशालम्" अपि ॥ ३—आलिन्दो ह्रस्वादिः "यस्यामलिन्देषु न चक्रुरेव" इति माघः—इत्यपि मुकुटः ॥

प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकः । वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ॥ १४ ॥
गोपानसी तु वलभीछादने वक्रदारुणि । कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ॥ १५ ॥
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका । तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥१६॥

॥ ( १ ) देहली ॥ ( २ ) ॥ द्वे उदुम्बरस्य ॥ अङ्गनमिति ॥ "अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता" इति नान्तवर्गे विश्वः ॥ 'अङ्गणम्[1]' इति पाठे तु पृषोदरादिः ( ६ । ३ । १०१ ) ॥ ( १ ) "चत्वरं स्यात्पथां श्लेषे स्थण्डिलाङ्गनयोरपि" इति हैमः ॥ ( २ ) अजिरम् ॥ ( ३ ) त्रीणि गृहपुरोवर्त्तिभूम्याः ॥ अध इति॥ शिला ॥ "शिल उञ्छे स्त्रियां ग्रावद्वाराधःस्थितदारुणोः" इति तालव्यादौ रभसः॥ "तलदारु शिली योषित् नासा दारूर्ध्वमस्य[2] यत्" इति बोपालितात् 'शिली' इत्यपि ॥(१)॥ एकं द्वारस्तम्भाधःस्थितकाष्ठस्य॥नासेति॥ "विज्ञेया नासिका नासा नासा द्वारोर्ध्वदारु च" इति दन्त्यान्ते रुद्रः॥ "नासा दारूपरि द्वारस्य॥ अधो[3]दारु शिला स्त्रियाम् ॥" इति नाममाला ॥ ( १ ) ॥ स्तम्भद्वारस्थकाष्ठस्यैकम्॥ उपरिभित्तिधारकस्य काष्ठस्य वा ॥ १३ ॥ प्रच्छन्नेति ॥ प्रच्छन्नम् ॥ ( १ ) ॥ अन्तर्द्वारम् ॥ ( १ ) द्वे सौधादौ गुप्तद्वारस्य (खिडकी) इति ख्यातस्य॥पक्षेति ॥पक्षद्वारम् ॥(१)॥ "पक्षकस्तु पुमान्पार्श्वद्वारे च पार्श्वमात्रके" ॥ ( २ )॥ द्वे पार्श्वद्वारस्य ॥ "प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तदुच्यते" इति कात्यात् पूर्वान्वयी—इत्यन्ये ॥ वलीकेति ॥ "वलीकः पटलप्रान्ते" इति पुंस्काण्डे बोपालितात् पुंस्त्वमपि ॥ ( १ )॥ नीध्रं ( घ्रं ) नेमौ वलीकेन्द्वो रेवतीभेऽपि कानने "॥(२)॥ पटलप्रान्तम् ॥ (३) ॥ त्रीणि गृहाच्छादनस्य ॥ अथेति ॥ "पटलं तिलके नेत्ररोगे छदिषि संचये । पिटके परिवारे च" इति हैमः ॥ ( १ ) छादिः ॥ ( २ ) ॥ पटम् 'चालम्' अन्यत्र ॥ द्वे छादनस्य ॥१४ ॥ गोपेति ॥ गोपानसी ॥(१)॥ "शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि" इति रसभः ॥ ( २ ) ॥ वक्राणि दारूणि यस्मिन् ॥ द्वे[4] कुडयेषु छादनार्थं दत्तस्य वक्रकाष्ठस्य (छ ( स ) ज्ज ) इति ख्यातस्य ॥ पटलाधारवंशपञ्जरस्य, इत्यन्ये ॥ कपोतेति ॥ कपोतपालिका ॥ ( १ ) ॥ विटङ्कम् ॥ ( २ ) ॥ द्वे गृहप्रान्ते रचितपक्षिस्थानस्य ॥ १५ ॥ स्त्रीति ॥ द्वाः ॥ ( १ ) ॥ "द्वारं निर्गमेऽभ्युपाये" इति हैमः ॥ ( २ ) ॥ "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थ-

---

१—यत्तु मालतीमाधवव्याख्यायां **जगद्धरः** "अङ्गणशब्दे विधायकाभावाण्णत्वश्रुतिरयुक्ता। पृषोदरादित्वाण्णत्वमिल-पि वचोऽमूलकमेव" इति ॥ यदपि मुरारिव्याख्यायां **रुचिपतिः** "अङ्गनशब्दो णकारान्त इति केचित्पठन्ति । तदप्रामाणिकम् । नच पृषोदरादिपाठेन णत्वमिति वाच्यम् । पृषोदरादिपाठे प्रमाणाभावात् । तथाविधानुप्रासयमकादेरदर्शनाच्च" इति ॥ तदुभयमपि मन्दम् ॥ "कानि पृषोदरादीनि, पृषोदरप्रकाराणि । कानि पृषोदरप्रकाराणि, येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते" इति भाष्यतः "कानीति । किमादिशब्दः प्रकारे, अथ व्यवस्थायाम्, इति संदेहात्प्रश्नः । पृषोदरप्रकाराणीति ॥ प्रकार आदिशब्दः, व्यवस्थार्थे ह्यादिशब्दे यथोपदिष्टग्रहणमनर्थकं स्यात्" इति कैयटतश्च श्रूयमाणाप्रासलोपागमवर्णविकारस्यैव पृषोदरादित्वस्य लाभात् गणपाठस्याप्रामाणिकत्वात्प्रामाणिकत्वेऽपि तस्याकृतिगणत्वेनाङ्गणशब्दस्य पृषोदरादित्वे बाधकाभावात् ॥ नच शिष्टायुक्तत्वेनाप्रामाणिकतेति वाच्यम् । अभ्यास्यसौरभेयं मौक्तिकरुचिरङ्गणेषु विहितमतिः" इति शृङ्गारवैराग्यार्थद्वयप्रतिपादक-**रसिकरञ्जन**-काव्ये श्लेषस्य णान्तत्वमन्तरासंभवेन तस्यावश्यकत्वात् ॥

२—"नासा दारूर्ध्वमस्य यत्" इति लिखितमपि न प्रकृतोपयोगि ॥ ३—"अधो दारु शिला स्त्रियाम्" इति तु न प्रकृतोपयोगि ॥ ४–मुकुटस्तु वलभ्याश्चन्द्रशालायाः सौधोर्ध्ववेश्मनश्छादने गोपानसीशब्दो वर्तते इति दर्शयन् 'एकम्' इत्येवोक्तवान् ॥ अतएव "गोपानसीषु क्षणमाश्रितानाम्" इति माघव्याख्यायां वल्लभदेवोऽपि "वलभीछादनं दारु वक्रं गोपानसीं विदुः" इति कोषान्तरमुपन्यस्तवान्॥अतएव मुकुटेन "छलेन वलभ्यप्युक्ता" इति प्रोक्तम् । समासघटकतयोक्त्या छलत्वनिर्वाहः।यदि च वलभ्यपि नामस्वेवोक्ता भवेत्तदा छलपदोपादानमनर्थकं स्यात्।तस्मादुक्तरभसकोषप्रामाण्येन वलभी चन्द्रशालापर्यायाङ्गीकार्या । अत एव "रम्या इति प्राप्तवतीः पताकाः" इति माघव्याख्यायां वल्लभदेवो "वलभीरुपरिवसतीः" इति व्याख्यत् ॥ ह्रस्वान्तापि वलभिः ॥ अत एव "तां कस्यांचिद्भवनवलभौ" "चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते" इति मेघदूतः ॥ "दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था" इत्यादि प्रयोगानुरोधाद्दीर्घान्तापि ॥ नह्येतैर्लक्ष्यैर्वलभ्या गोपानसीपर्यायत्वं संभवति । गोपानस्यां वासस्य सुखपूर्वकत्वानुपपत्तेः । प्राचीनतत्तत्काव्याविरोधाच्च ॥ तस्माद्वलभिशब्दे बाहुलकादभिच् प्रत्ययः । "कृदिकारात्" इति ङीषि दीर्घान्ततेति दिक् ॥

कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु।कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ॥१७॥
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहणी।संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा॥१८॥
क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणः।समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥
ग्रामान्त उपशल्यं स्यात्सिमसीमे स्त्रियामुभे । घोष आभीरपल्ली स्यात्पक्कणः शबरालयः॥२०॥

इति पुरवर्गः ॥ २ ॥

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः । अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥

तायां तु योषिति '' ॥ ( ३ ) ॥ त्रीणि द्वारस्य ॥ स्यादिति ॥ वितर्दिः ॥ ( १ ) ॥ वेदिका ॥ ( २ ) ॥ प्राङ्गणादिकृतस्योपवेशस्थानस्य द्वे ॥ तोरेति ॥ तोरणः ॥ (१)॥ बहिर्द्वारम् ॥ (२) ॥ द्वे द्वारबाह्यभागस्य ॥ पुरेति ॥ पुरद्वारम् ॥ (१) ॥ गोपुरम् ॥ ( २ ) ॥ द्वे नगरद्वारस्य ॥ १६ ॥ कटमिति ॥ हस्तिनखः ॥ ( १ ) ॥ एकं पुरद्वारे अवतारणार्थं कृतस्य क्रमनिम्नस्य मृत्कूटस्य ॥ अथेति ॥ कपाटम् ॥ 'कवाटम्' इत्यन्ये ॥ (१) ॥ ''कपाटश्च कवाटश्च त्रिषु स्यादररं न ना'' इति वाचस्पतिः ॥ ''अररं छदकटयोः '' इति विश्वमेदिन्यौ ॥ ''अररं पुनः । कपाटोऽररिः कवाटः'' इति हैमः ॥ ( २ ) ॥ द्वे कपाटस्य ॥ तदिति ॥ तत् कपाटं विष्कभ्नाति । ''स्यादर्गलं तु कल्लोले परिघेऽपि'' ॥ ( १ ) ॥ एकं कपाटरोधनकाष्ठस्य ॥ १७ ॥ आरोहेति ॥ '' आरोहणं स्यात्सोपाने समारोहे प्ररोहणे '' ॥( १ )॥ सोपानम् ॥ ( २ ) ॥द्वे पाषाणादिकृतसौधाद्यारोहणमार्गस्य॥निश्रेणीरिति॥''निश्रेणिरधिरोहण्यांखर्जूरीपादपेऽपि च''इति हैमः॥(१)॥ अधिरोहणी॥(२)॥द्वे काष्ठादिकृतारोहणमार्गस्य ॥ संमेति॥संमार्जनी॥ (१)॥ शोधनी ॥ ( २ ) ॥ ''वर्धनी'' अप्यत्र॥''संमार्जनी बहुकरी वर्धनी च समूहनी'' इति हैमात् ॥ द्वे गृहादि संमार्जन्याः, झाडू इति ख्यातायाः। समिति॥ संकरः॥'संकारः' इति पाठे तु कर्मणि घञ् ॥ (३।३।१४) ॥ ''अथ संकारोऽवकारेऽग्निचटत्कृतौ। संकारी भुक्तकन्यायाम् '' इति हैमः ॥ मेदिनीकोशे तु ह्रस्वमध्यः ॥ (१) ॥ अवकरः ॥ (२) ॥१८ ॥ क्षिप्ते धूल्यादौ ॥ द्वे धूलिप्रक्षेपणस्य ॥ मुखमिति॥''मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः'' इति हैमः ॥ ( १ )॥ ''निःसरणे मृतौ। उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च''इति हैमः ॥ ( २ )॥ द्वे निर्गमनप्रवेशमार्गस्य ॥ समिति ॥ संनिवेशः॥ ( १ ) ॥ निकर्षणः ॥ ( २ ) ॥ द्वे पुरादौ गृहादिरचनापरिच्छिन्नदेशस्य ॥ समाविति ॥ संवसथः ॥ (१) ॥ ''ग्रामः स्वरे संवसथे'' ''ग्रीष्मं ऊष्णर्तुभेदयोः''॥(२)॥ द्वे ग्रामस्य॥ वेश्मेति ॥ वेश्मभूः ॥ ( १ ) ॥ ''वास्तु स्याद्गृहभूपुर्योर्गृहे सीमसुरङ्गयोः '' ॥ ( २ ) ॥ गृहरचनावच्छिन्नभूमेः ॥ ग्रामेति ॥ ग्रामान्तः ॥ ( १ )॥ उपशल्यम् ॥ ( २ ) ॥ ग्रामग्रहणं चोर्पलक्षणम् । अतएव ''उपकण्ठोपशल्ये द्वे'' इति त्रिकाण्डशेषः ॥ द्वे ग्रामादिसमीपदेशस्य ॥ सीमेति ॥ सीमा ॥ ( १ ) ॥ ''सीमा घाटास्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम् '' ॥ ( २ )॥ ओघाटशब्दोऽप्यत्र ॥ द्वे सीमायाः ॥ चत्वार्येकार्थानि इत्यन्ये ॥ घोष इति ॥''घोष आभीरपल्ल्यां स्याद्गोपालध्वनिघोषके । कांस्ये चाम्बुदनादे ना, घोषा मधुरिकौषधौ''॥(१)॥ आभीरपल्ली ॥ कुटिग्रामकयोः पल्लिः ॥ इति शाश्वतः ॥ ( २ ) ॥ द्वे गोपग्रामस्य ॥ पक्कण इति ॥ पक्कणः ॥ ( १ ) ॥ शबरालयः ॥ (२) ॥ द्वे भिल्लग्रामस्य ॥

इति पुरवर्गविवरणम् ॥

---

महीध्र इत्यादि ॥ महीध्रः ॥ ( १ ) ॥ '' शिखरी स्यादपामार्गे शैलपादपयोः पुमान् '' ॥ ( २ ) ॥ क्ष्माभृत् ॥ ( ३ ) ॥ ''अहार्यो हर्तुमशक्ये शैलेऽपि'' इति हैमः ॥ ( ४ ) ॥ ''धरः कूर्माधिपे गिरौ । कार्पा-

---

१-सोपानं दन्त्यादि ''सोपानपथमुत्सृज्य वायुवेगसमुद्धतः'' इत्यत्राश्लीलसमश्लेषात । इति मुकुटः ॥२—तथा च कथिताभ्युदये-''प्रेयन्तेऽमी परमररयो हर्म्यवातायनानाम्'' इति मुकुटः ॥ ३—इदं तु ग्रीष्मशब्दार्थबाधकत्वान्न प्रकृतोपयोगि ॥ ४-तथा च माघः ''शैलोपशल्यनिपतद्रथनेमिधारा-''इति-इति मुकुटः॥५—तथा च प्रयोगः''दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते'' इति-इति मुकुटः ॥

**लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ । अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥**
**हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः । गन्धमादनमन्ये च हेमकूटादयो नगाः॥ ३ ॥**
**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् । कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः॥४॥**

समूलेऽथ धरा मेदोभूमिजरायुषु" इति हैमः ॥ ( ५ ) ॥ "पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले "॥ ॥ ( ६ ) ॥ "अद्रिस्तु पर्वते । सूर्ये शाखिनि च " इति हैमः ॥ ( ७ ) ॥ "गोत्रं क्षेत्रेऽन्वये छत्रे संभाव्ये बोधवर्त्मनोः । वने नाम्नि च,गोत्रोऽद्रौ गोत्रा भुवि गवां गणे" इति हैमः ॥ ( ८ ) ॥ "गिरिः पूज्येऽक्षिरुजि कन्दुके । शैले गैरेयके गीर्णावपि" इति हैमः ॥ ( ९ ) ॥ ग्रावा ॥ (१०) ॥" अचलस्तु गिरिकीलयोः । अचला भुवि" इति हैमः॥ ( ११)॥ "शैलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके"इति हैमः ॥(१२)॥ शिलोच्चयः ॥(१३)॥ त्रयोदश पर्वतस्य ॥ १ ॥ लोकेति॥लोकालोकः॥(१)॥"चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डले" इति हैमः॥(२)॥द्वे सप्तद्वीपवत्या भूमेः॥ "त्रिकूट इति॥त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरे" इति हैमः ॥ ( १ ) ॥ त्रिककुत् ॥ ( २ ) ॥ द्वे लंकाधिष्ठानपर्वतस्य ॥ अस्त इति ॥ "अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले" इति विश्वमेदिन्यौ ॥(१)॥ चरमक्ष्माभृत्॥ पश्चिमपर्वतस्य द्वे॥ उदय इति ॥"उदयः पर्वतोन्नत्योः" इति हैमः ॥ ( १ ) ॥ पूर्वपर्वतः ॥ ( २ ) ॥ द्वे पूर्वपर्वतस्य ॥ २ ॥ हिमेति ॥ हिमवान् ॥ ( १ ) ॥ "निषधः कठिने देशे तद्राजे पर्वतान्तरे " इति विश्वमेदिन्यौ ॥ ( १ ) ॥ विन्ध्यः ॥ "विन्ध्या स्त्रियां लवल्यां स्यात्पुंसि व्याधाद्रिभेदयोः " ॥ ( १ ) ॥ माल्यवान् ॥ ( १ ) ॥ पारियात्रिकः ॥ ( १ ) ॥ "स्याद्गन्धमादनो भृङ्गे गन्धके वानरान्तरे । स्त्री सुरायां नगे न स्त्री" चिरंजीवी द्विकाजयोः ॥ ( १ ) ॥ हेमकूटः । (१) ॥ आदिशब्दान्मलय-दर्दुर-चित्रकूट-मैनाक-सह्यादि-संग्रहः ॥ ३ ॥ पाषाणेति ॥ पाषाणः ॥ ( १ ) ॥ "प्रस्तरो ग्रावणि मणौ इति हैमः[३] ॥(२)॥" ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसि" इति मेदिनी॥(३)॥ " उपलो ग्रावरत्नयोः । उपला तु शर्करायाम्" इति हैमः ॥ ( ४ ) ॥ अश्मा ॥ ( ५ ) ॥ शिला ॥ ( ६ ) ॥ दृषत्पाषाणमात्रके । निष्पेषणार्थपट्टेऽपि " ॥ कषायः कूष्माण्डो महिषवृषभव्योषदृषदः " इत्यूष्मभेदान्मूर्धन्यमध्यः ॥ ( ७ ) ॥ सप्त पाषाणस्य ॥ कूट इति ॥ " कूटं पूर्द्वारयैन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ" इति हैमः ॥ ( १ ) ॥ "शिखर पुलकाग्रयोः[६] । पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च । गिरिवृक्षाग्रकक्षासु" इति हैमः ॥ "अस्त्री" इति पूर्वोत्तराभ्यां संबध्यते ॥ ( २ ) ॥ "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः कूर्चकशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि पर्वतोर्ध्वप्रदेशस्य ॥ प्रपात इति ॥ प्रपातो निर्झरे भृगौ । अवटे पतने कच्छे" इति हैमः ॥ ॥ (१) ॥ अतटः ॥२॥ "भृगुः सानौ जमदग्निप्रपातयोः । शुक्रे रुद्रे च" इति हैमः ॥ "प्रपातस्तु

---

१—हैमे तु 'त्रिकूटस्तु सुवेलके' इति पाठो दृश्यते । उक्तपाठस्तु मेदिन्यां दृश्यते ॥ २—इदं तु न प्रकृतोपयोगि ॥ ३-मेदिनीस्थोऽयं पाठः । हैमे तु 'प्रस्तारे' इत्यधिकः पाठः ॥ ४-दृषदः शिलासाहचर्यात्स्त्रीत्वम्-इति मुकुटः ॥ ५—यन्त्रे मृगादिबन्धनार्थे छले यथा " छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुराम् " इत्यनेकार्थकैरवाकरकौमुदी ॥ ६-रोमाञ्चाग्रमात्रयोर्यथा "रुचिरैः शिखरैः काम्या गृहस्त्री च मृगेक्षणा" । पक्वदाडिमबीजाभमाणिक्यखण्डे यथा "तन्वी श्यामा शिखरदशना" इत्यनेकार्थकैरवाकरकौमुदी ७-हैमे तु "वृक्षाग्रे पर्वताग्रे च" इति पाठ उपलभ्यते ॥ ८-शृङ्गशब्दः पुंस्यपीति स्वामी पञ्जिका च।तथा च "जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम्" इति माघः॥इति मुकुटः ॥ ९-हैमे तु "प्रपातः सौप्तिक भृगौ" इत्येतावदेव पाठ उपलभ्यते। व्याख्यातं च 'सौप्तिको रात्रिधावी' । तत्र यथा "यस्य प्रपातभयतो निशि न प्रसुप्ताः" इत्यनेकार्थकैरवाकरकौमुद्याम् ॥

कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियौ।उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः॥५॥
दरी तु कंदरो वा स्त्री देवखातबिले गुहा । गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः॥६॥
खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः । उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥७॥
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः । निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

इति शैलवर्गः ॥ ३ ॥

तटो भृगुः'' इति पाठे प्रपत्यते यतस्तटास्य भृगुः'' ॥(३)॥ त्रीणि पर्वतात् पतनस्थानस्य॥४॥ कटक इति ॥ ''कटकस्त्वद्रिनितम्बे बाहुभूषणे । सेनायां राजधान्यां च'' इति हैमः ॥ ( १ ) ॥ एकं पर्वतमध्यभागस्य मेखलाख्यस्य ॥ स्नुरिति ॥ स्नुः ॥ ( १ ) ॥ ''प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि'' ॥ ( २ ) ॥ ''सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रेके विदे ॥ ( ३ ) ॥ द्वित्वात्प्रस्थोऽप्यस्त्री ॥ त्रीणि पर्वतसमभूभागस्य ॥ उत्स इति ॥ उत्सः ॥ ( १ ) ॥ प्रस्रवणम् ॥ ( २ ) ॥ द्वे यतो जलं स्रवति तस्य स्थानस्य ॥ वारीति ॥ वारिणः प्रवाहः ॥ निर्झरः ॥ ( १ ) ॥ एवं झरः ॥ झरा ॥ झरिः ॥ झरी च ॥ ( २ ) ॥ उपसर्गान्तरनिवृत्त्यर्थो निर् ॥ द्वे उत्सान्निर्गतजलप्रवाहस्य पञ्चापि पर्याया इत्यन्ये ॥ ५ ॥ दरीति ॥ ''दरोऽस्त्री साध्वसे गर्ते कन्दरे तु दरी स्मृता । दराऽव्ययं मनागर्थे'' ॥ ( १ ) ॥ 'कन्दरोऽङ्कुशे । विवरे च गुहायां च' ॥ ( २ ) ॥ द्वे कृत्रिमस्य गृहाकारस्य गिरिविवरस्य ॥ देवेति ॥ अकृत्रिमे पर्वतस्य बिले ॥ ''गुहः षाण्मातुरे, गुहा । सिंहपुच्छयां च गर्ते च पर्वतादेश्च गह्वरे'' ॥ ( २ ) ॥ ''अथ गह्वरम् । गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्'' ॥ ( ३ ) केचित्तु—''देवखाते बिलं गुहा'' इति काल्यात् ''गह्वरं बिलदम्भयोः'' इति शाश्वताच '' बिलं रंध्रे गुहायां च'' इति हैमतश्च चत्वारि नामानि—इत्याहुः॥त्रीण्यकृत्रिमस्य गिरिबिलस्य ॥ गण्डेति ॥ '' गण्डः कपोले पिटके'' इति विश्वः ॥ 'गण्डशैलो ललाटे स्याच्च्युतस्थूलोपले गिरेः'' ॥ ( १ ) ॥ एकं गिरिपतितस्थूलोपलस्य ॥ ६ ॥ खनिरिति ॥ ''खनिरेव मता खानिः'' इति द्विरूपकोषः ॥ ( १ ) ॥ ''आकरो निकरे खनौ'' ॥(२)॥ द्वे रत्नाद्युत्पत्तिस्थानस्य ॥ पादा इति''पादो मूलेऽस्त्रतुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते''इति हैमः॥ ॥(१)॥ प्रत्यन्तपर्वतः ॥ (१) ॥ द्वे पर्वतसमीपस्थाल्पपर्वतस्य॥ उपेति॥ उपत्यका॥(१)॥अधित्यका ॥(१)॥ एकैकमद्रे अध ऊर्ध्वासन्नभूमेः ॥७॥ धातुरिति ॥ धातुः ॥ (१) ॥ ''सुवर्णरूप्यताम्राणि हरितालं मनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः॥ गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः'' ॥ एकं मनःशिलादिधातोः॥ गैरीति॥ गैरिकं तु विशेषेण धातुः॥ धातुशब्देनैव प्रसिद्धत्वात्॥''गैरिकं धातुरुक्मयोः''॥( १ ) ॥ एकं धातुविशेषस्य निकुञ्जेति॥कुञ्जिरावरणार्थो लोकात्—इति क्षीरस्वामी ॥ ''कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम्'' इति विश्वः ॥ द्वे लतादिभिः पिहितस्य स्थानस्य ॥ ८ ॥

इति शैलवर्गविवरणम् ॥

१—अनयोः स्नुनितम्बयोः साहचर्यादस्त्रीत्वम् । 'पुमानेव स्नुः' इति सर्वधरः—इति मुकुटः ॥ हैमाभिधाननाममालाव्याख्यायामपि 'स्नुः पुंलिङ्गः' इत्युक्तम् अत्रेदं प्रतिभाति । सानुशब्दस्यास्त्रीत्वेन स्नुशब्दस्याप्यस्त्रीत्वमेव ।'पद्दन्नो'(६।१) इति सूत्रे स्नुमादेशं विधाय तस्य स्थानितायाः सानुशब्दस्यैव भाष्यकृता दर्शितत्वात्। स्थान्यादेशयोर्भिन्नलिङ्गत्वे'स्थान्यर्थाभिधानसमर्थस्यैवादेशता' इति सिद्धान्तभङ्गापत्तेः । पञ्चकपक्षे लिङ्गस्यापि प्रतिपदिकार्थत्वादिति ॥ २—'स्थूलोपलाः'' इत्युपलक्षणम् । तेन ''लीलां दधौ राजतगण्डशैलः''इति माघप्रयोग उपपद्यते—इति मुकुटः ॥ ३-अद्रेरित्यस्य संबन्धिमात्रोपलक्षकत्वादन्यत्रापि ॥ ''समुद्रोपत्यका हैमी पर्वताधित्यका पुरी'' इति भट्टिरिति स्वाम्यादयः—इति मुकुटः ॥ ४—अत्युच्चवस्तुनि' इति पाठान्तरम् ॥ ५-अग्रके पल्लवे । अत एव विश्वकोषे''सानुः सङ्गे बुधे मार्गे वात्यायां पल्लवे वने'' इति पाठ उपलभ्यते ॥ ६—गह्वरं क्लीबमेव । 'गह्वरा गह्वरी तूपचारात्' इति तु पञ्जिका—इति मुकुटः ॥ हैमाभिधानचिन्तामणिनाममालाव्याख्यायां तु 'गह्वरः पुंक्लीबलिङ्गः' इत्युक्तम् ॥

अटव्यरण्यं विपिनं गहनं काननं वनम्।महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् । स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः।वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि॥४॥
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ५ ॥
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः। ओषधिः फलपाकान्ता स्यादवन्ध्यः फलेग्रहिः॥६॥
बन्ध्योऽफलोऽवकेशी च फलवान्फलिनः फली। प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः॥७॥

अटवीति॥ अटवी ॥(१)॥ अरण्यम् ॥(२)॥ विपिनम् ॥(३)॥ "गहनं वनदुःखयोः । गह्वरे कलिले चापि" इति हैमः ॥(४)॥ "काननं तु ब्रह्मास्ये विपिने गृहे" इति हैमः ॥ ५ ॥"वनं नपुंसकं नीरे निवासालयकानने" ॥(६)॥ षट् वनस्य ॥ महेति ॥ महारण्यम् ॥(१)॥ महदरण्यम् ॥ अरण्यानी ॥ (२) ॥ द्वे महावनस्य ॥ गृहेति ॥ गृहारामाः ॥ ( १ ) ॥ "निष्कुटस्तु गृहोद्याने स्यात्केदारकवाटयोः" ॥ ( २ ) ॥ द्वे गृहोपवनस्य ॥ १ ॥ आरेति ॥ आरामः ॥ ( १ ) ॥ उपवनम् ॥ ( २ ) ॥ एवकारादकृत्रिमवनव्युदासः ॥ द्वे कृत्रिमवृक्षसमूहस्य ॥ अमेति ॥ वृक्षवाटिका ॥ ( १ ) ॥ एकं मन्त्रिणो वेश्यायाश्च गृहस्थोपवनस्य ॥ २ ॥ पुमानिति ॥ आक्रीडः ॥ "ज्ञेयमाक्रीडमुद्यानम्" इत्यमरमालायां तु क्लीबमुक्तम् ॥ ( १ ) ॥ "उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने" ॥ ( २ ) ॥ द्वे राज्ञः सर्वोपभोग्यवनस्य ॥ स्यादिति ॥ प्रमदावनम् ॥ ( १ ) ॥ यत्र सस्त्रीको राजा क्रीडति तस्यैकम् ॥ ३ ॥ वीति ॥ "वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके" इति हैमः ॥ ( १ ) ॥ "आलिः सख्यावलीसेत्वनर्थेषु विशदाशये" इति हैमः ॥ ( २ ) ॥ आवलिः ॥ ( ३ ) ॥ "पङ्क्तिश्छन्दःश्रेण्योः" इति हैमः ॥ ( ४ ) ॥ "श्रेण्यात्यां कारुसंहतौ" इति हैमः ॥ ( ५ ) ॥ पञ्च सान्तरपङ्क्तेः ॥ लेखा इति ॥ "लेखो लेख्ये दैवते च लेखा राज्यां लिपावपि" इति हैमः ॥ ( २ ) ॥ रलयोरेकत्वस्मरणात् 'रेखा' अपि ॥ ( १ ) ॥ "राजी रेखायां पङ्क्तौ च" इति हैमः ॥ द्वे निरन्तरपङ्क्त्यपङ्क्तिसाधारणायाः ॥ वन्येति ॥ वन्या ॥"वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः" ॥ (१) ॥ वनसमूहः ॥(२)॥ द्वे वनसमूहस्य ॥ अङ्कुर इति ॥"अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे" इति हैमः ॥ "अङ्कुरश्चाङ्कुरः प्रोक्तः" इति हलायुधः ॥ ( १ ) ॥ अभिनवोद्भिद् ॥ ( २ ) ॥ द्वे ॥ ४ ॥ वृक्ष इति ॥ वृक्षः ॥ ( १ ) ॥ महीरुहः ॥ ( २ ) ॥ "शाखी स्यात्पादपे वेदे तुरुष्काख्यजने पुमान्" ॥ ( ३ ) ॥ विटपी ॥ ( ४ ) ॥ "पादपः पादपीठेऽद्री पादुकायां तु पादपा" इति विश्वः ॥ ( ५ ) ॥ तरुः ॥ ( ६ ) ॥ अनोकहः ॥ ( ७ ) ॥ कुटः ॥ ( ८ ) ॥ "पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः" इति दन्त्यादौ रभसः ॥ "सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि" ॥ ( ९ ) ॥ "पलाशी वृक्षरक्षसोः" इति विश्वमेदिन्यौ ॥ ( १० ) द्रुः ॥ ( ११ ) ॥ "द्रुमस्तु पादपे पारिजाते किंपुरुषेश्वरे" इति हैमः ॥ ( १२ ) ॥ अगमः ॥ ( १३ ) ॥ त्रयोदश वृक्षस्य ॥ ५ ॥ वानेति ॥ वानस्पत्यः ॥ (१) ॥ पुष्पाज्जातैः फलैर्हेतुभिः ॥ एकं पुष्पाज्जातफलोपलक्षितवृक्षस्य ॥ तैरिति ॥ "वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे" ॥ (१) ॥ एकमाम्रादिवृक्षस्य॥ ओषेति ॥ ओषधिः 'ओषधी' अपि ॥ ( १ ) ॥ फलपाक एवान्तो यस्याः ॥ रूपभेदात्स्त्रीत्वम् ॥ एकम् व्रीह्यादेः ॥ स्यादिति ॥ अवन्ध्यः ॥(१)॥ फलेग्रहिः ॥(२) ॥ द्वे फलसमये फलग्राहकस्य ॥६॥ बन्ध्य इति ॥ बन्ध्यः ॥ (१) ॥ अफलः ॥ ( २ ) ॥ अवकेशी ॥ ( ३ ) ॥ त्रीणि फलशून्यवृक्षस्य ॥ फलेति ॥ फलवान् ॥ ( १ ) ॥ फलिनः ॥ ( २ ) फली ॥ ( ३ ) ॥ त्रीणि फलसहितवृक्षस्य ॥ प्रफुल्लेति ॥ प्रफुल्लः ॥ ( १ ) ॥ "उत्फुल्लं

१—गौरादिङीषि (४।१।४१)वनी च । "स्ववनीसंप्रवदत्पिकापि का" इति नैषधकाव्यात्—इति मुकुटः॥ २"यत्रौषधयो रजन्याम्" इति कुमारः—इति मुकुटः ॥ "यत्रान्या ओषधयो म्लायन्ते" इति श्रुतिः ॥

**फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु॥स्थाणु वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥८॥**
**अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता॥लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥९॥**
**नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः॥अस्त्री प्रकाण्डःस्कन्धःस्यान्मूलाच्छाखावधिस्तरोः१०**
**समे शाखालते स्कन्धशाखाशाले शिफाजटे । शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता११**

करणे स्त्रीणामुत्ताने च विकस्वरे" ॥ ( २ ) ॥ संफुल्लः ॥ (३) ॥ व्याकोशः मूर्धन्यान्तो वा ॥ ( ४ ) ॥ "विकचः क्षेपणे केतौ नाकेशे स्फुटितेऽन्यवत्" ॥ ( ५ ) ॥ "स्फुटो व्यक्तप्रफुल्लयोः । सिते व्याप्ते" इति हैमः ॥ (६)॥७॥ फुल्लः ॥ ( ७ ) ॥ विकसितः ॥ ( ८ ) ॥ **अष्टौ प्रफुल्लितवृक्षस्य** ॥ **स्युरिति** ॥ अवन्ध्यादयो विकसितान्तास्त्रिलिङ्गयां स्युः ॥ **स्थेति** ॥ रूपभेदात्क्लीबत्वम् ॥ "स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे" इति मेदिनी ॥ ( १ ) ॥ "ध्रुवो वटे । वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे ॥ स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः । ध्रुवा मूर्वाशालिपर्ण्योः स्रुग्भेदे गीतभिद्यपि" इति हैमः ॥ (२ ) ॥ "शङ्कुः पत्त्रशिराजाले संख्याकीलकशंभुषु । यादोऽस्त्रभेदयोर्मेढ्रे" इति हैमः ॥ ( ३ ) ॥ **त्रीणि शाखापत्त्ररहिततरोः** ॥ **ह्रस्वेति** ॥ शाखा च शिफा = मूलं च ते । ह्रस्वे शाखाशिफे यस्य क्षुपः ॥ ( १ ) ॥ **एकं सूक्ष्मशाखामूलस्य शाखोटकादेः** ॥ ८ ॥ **अप्रकाण्ड इति** ॥ न प्रकाण्डोऽस्य ॥ "**स्तम्बो** गुल्मे तृणादीनामप्रकाण्डद्रुमगुच्छयोः" ॥ ( १ ) "**गुल्मः** सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तम्बे, त्रियामा-मलक्यै[1]लावनीवस्त्रवेश्मसु" ॥ ( २ ) ॥ **द्वे स्कन्धरहितस्य** ॥ **वल्लीति** ॥ "**वल्ली** स्यादजमोदायां लतायां कुसुमान्तरे" इति हैमः ॥ ( वेल्ल ( भ्वा० प० से० ) धातोरिनि 'वेल्लिः' इत्यपि । अत एव ) "वल्ली तु वेल्लिः सरणे" इति वाचस्पतिः ॥ ( १ ) ॥ "**प्रततिर्व्रततिस्तथा**" इति हलायुधः ॥ यद्वा व्रतमिव करोति । "**व्रत**[2]**तिस्तु** प्रतानिन्यां विस्तारेऽपि" इति हैमः ॥ ( २ ) ॥ "**लता** ज्योतिष्मतीदूर्वा शाख-वल्लीप्रियङ्गुषु । स्पृक्कामाधव्योः कस्तूर्याम्" इति हैमः ॥ ( ३ ) ॥ **त्रीणि लतामात्रस्य** ॥ **लतेति** ॥ शाखापत्त्रसंचयः प्रतानः । सोऽस्त्यस्याः सा प्रतानिनी । ईदृशी लता वीरुदादिशब्दत्रयवाच्या ॥ "वीरु-ल्लताविटपयोः स्त्रियाम्" ॥ ( १ ) ॥ गुल्मः प्रतानोऽस्त्यस्याः ॥ गुल्मिनी ॥ ( २ ) ॥ "उलपस्तु गुल्मिनीतृणभेदयोः" इति हैमः॥(३)॥**त्रीणि शाखापत्त्ररहिततरोः**॥९॥**नगेति**॥ नगस्य तरोः॥"**आरोहो** दैर्घ्य उच्छ्रये । आरोहणे गजारोहे स्त्रीकट्यां मानभिद्यपि" इति हैमः ॥ आदिना गिरिदेवालयादिग्रहः उच्छ्रायः ॥ ( १ ) ॥ "उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संनहनेऽपि च" ॥ ( २ ) ॥ उच्छ्रयः ॥ ( ३ ) ॥ **त्रीणि वृक्षादिदैर्घ्यस्य** ॥ **अस्त्रीति** ॥ "**प्रकाण्डो** विटपे शस्ते मूलस्कन्धान्तरे तरोः" इति विश्वः ॥ ( १ ) ॥ "**स्कन्धः** स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च भ्रात्रादौ छन्दसो भिदि" इति धान्तेषु मेदिनी ॥ (२ ) ॥ **द्वे मूलमारभ्य शाखापर्यन्तस्य वृक्षस्य** ॥ १० ॥ **समे इति** ॥ "**शाखा** द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके" इति हैमः ॥ ( १ ) ॥ लता॥(२)॥ **द्वे शाखायाः**॥ **स्कन्धेति**॥स्कन्धशाखा॥ ( १ ) ॥ "**शाला** तरुस्कन्धशाखा शाला भवनमिष्यते" इति शाश्वतः ॥ ( २ ) ॥ **द्वे स्कन्धात्प्रथमो-त्पन्नशाखायाः** ॥ **शिफेति** ॥ "**शिफा** जटायां सरिति मांसिकायां च मातरि" ॥ ( १ ) ॥ जटा ॥ ( २ ) ॥ **द्वे मूलस्य जटारूपस्य** ॥ **शाखेति** ॥ वटादेः शाखाया अवलम्बिनी शिफा ॥ "**अवरोहो** ऽवतरणेऽप्यारोहे च लतोद्गमे" ॥(१)॥ **एकं शाखामूलस्य**॥ **मूलादिति** ॥ मूलादूर्ध्वं गता शिफा लता स्यात्॥ मुकुटस्तु 'प्रसङ्गादवरोहस्यार्थान्तरमाह । तरुमूलात्प्रभृति वृक्षाग्रपर्यन्तं गता गुडूच्यादिलताऽप्यवरोहः' इत्याह॥(१)॥

---

१—आमलकी एला च वृक्षौ । वनी ह्रस्वं वनम्—इत्यनेकार्थकैरवाकरकौमुदी॥अत्र तु 'वल्ली' इति पाठ आसीत्॥
२—"क्तादिकारात्" इति ङीषि दीर्घान्तापि "धराधरेन्द्रं व्रततीततीरिव" इति माघः—इति मुकुटः ॥

**शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः।सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्। निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ१३ पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान्।पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् १४॥ वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम्। आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु १५॥**

एकं वृक्षाग्रगामिन्या लतायाः शिर इति।।"शिरःप्रधाने सेनाग्रे शिखरे मस्तकेऽपि च"।।(१)।। "अग्रं पुरस्ता-दुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्॥अधिके च प्रधाने च प्रथमे चाभिधेयवत्" ॥ ( २ ) ॥ **"शिखरोऽस्त्री द्रुमाग्रे चाद्रिशृङ्गपुलकाग्रयोः"** ॥ ( ३ ) ॥ **त्रीणि शिखरस्य** ॥ **मूलमिति**॥ **"मूलं शिफाद्ययोः । भे निकुञ्जेऽन्तिके वा ना"** ॥ ( १ ) ॥ **"बुध्नो ना मूलरुद्रयोः"** ॥ ( २ ) ॥ अङ्घ्रेर्नामेव नाम यस्य ॥ "अङ्घ्रिर्ना पादमूलयोः" ॥ ( ३ ) ॥ **त्रीणि मूलमात्रस्य** ॥ **सार इति** ॥ **"सारो** बले मज्जनि च स्थिरांशे, न्याय्ये च नीरे च धने च सारम्, । वरेऽन्यवत् सारमुदाहरन्ति" ॥ ( १ ) ॥ **समौ** समानालिङ्गौ ॥ **'नरि'** इति वा पाठः । पुंसीत्यर्थः ॥ "लज्जावद्राजवन्मज्जा मांससाराऽस्थिसारयोः" इति भागुरेरावन्तोऽपि ॥ **"मज्जोक्ता मज्जया सह"**इति द्विरूपकोषाच्च ॥(२)॥ **द्वे वृक्षादेः**॥ चिरांशस्य ॥ **त्वगिति** ॥ **"त्वक् स्त्री** चर्मणि वल्के च गुडत्वाचि विशेषतः" ॥(१)॥ **"वल्कं** वल्कलशल्कयोः" ॥ ( २ ) ॥ वल्कलम् ॥ ( ३ ) ॥ **त्रीणि त्वचः** ॥ १२ ॥ **काष्ठमिति** ॥ **"काष्ठं** दारुणि काष्ठा च प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि" इति हैमः ॥ ( १ ) ॥ " पुंनपुंसकयोर्दारुः" इति त्रिकाण्डशेषः ॥ **"दारु** पित्तले काष्ठे देवदारौ नपुंसकम्" ॥ ( २ ) ॥ **द्वे काष्ठमात्रस्य** ॥ **इन्धेति** ॥ इन्धनम् ॥ ( १ ) ॥ एधः ॥ ( २ ) ॥ इध्मम् ॥ ( ३ ) ॥ एधः पुंस्यपि ॥ ( ४ ) ॥ समित् ॥ ( ५ ) ॥ **त्रीण्यग्निसंदीपनतृणकाष्ठादेः** ॥ **द्वे यागादौ हूयमानस्य काष्ठस्य** ॥ **पञ्चापि पर्याया इति स्वामी** ॥ **नीति** ॥ निष्कुहः ॥ ( १ ) कोटरम् ॥ ( २ ) ॥ **द्वे वृक्षादिरन्ध्रस्य** ॥ **वल्लेति** ॥ वल्लरिः ॥ ( १ ) ॥ मञ्जरिः ॥ ( २ ) ॥ **द्वे काष्ठमात्रस्य** ॥१३॥ **पत्त्रमिति** ॥ **"पत्त्रं** तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः" ॥ ( १ ) ॥ **"पलाशं** छदने मतम् । शटी किंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु" इति मेदिनी ॥ **"पलाशः** किंशुकेऽप्यपे । हरिते **पलाशं** पत्त्रे" इति हैमः ॥ ( २ ) ॥ **"छदनं** च दले पक्षे पिधाने" ॥ ( ३ ) ॥ **"दलमुत्सेधखण्डयोः** । शस्त्रीछदेऽथ तद्द्रव्ये पत्त्रे" ॥ ( ४ ) ॥ **"पर्णस्त्रिपर्णे पर्णं** तु पत्त्रे" इति हैमः ॥ ( ५ ) ॥ **"छदः** पलाशे गरुति ग्रन्थिपर्णतमालयोः" ॥ **"पुमान्"** इति विशेषणं सान्तक्लीबभ्रमनिरासार्थम् ॥ ( ६ ) ॥ **षट् पत्त्रस्य** ॥ **पल्लव इति** ॥ **"पल्लवः** किसले बले । विटपे विस्तरेऽलक्तरागे शृङ्गारभिङ्गयोः" ॥ व्याडिस्तु--"पुंसि क्लीबे च **पल्लवः**" ॥ ( १ ) ॥ किसलयम् ॥ ( २ ) ॥ **द्वे नवपत्त्रस्य** ॥ **विस्तेति** ॥ " **विस्तारस्ततो विटपे**" ॥ ( १ ) ॥ **"विटपो** न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना" ॥ ( २ ) ॥ **द्वे शाखादिविस्तारस्य** ॥ केचित्तु--उक्तमेदिनीकोषादेव पल्लवादिचतुष्टयमेकार्थमाहुः ॥ "शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्" इति रभसाच्च ॥ "स्कन्धादूर्ध्वं तरोः शाखा कटप्रो विटपो मतः" इति कात्याच्च ॥ १४ ॥ **वृक्षादीति** ॥ आदिना लतागुल्मादिग्रहः ॥ केचित्तु 'वृक्षादीनाम्' इति पूर्वेणापि संबध्नन्ति ॥ फलं निष्पन्नं सस्यशब्दवाच्यम् ॥ **"फलं** हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" ॥ ( १ ) ॥ **सस्यम्** ॥ ( २ ) ॥ **द्वे फलस्य** ॥ वृन्तमिति । "वृन्तं प्रसवबन्धे घटीधाराकुचाग्रयोः" ॥ ( १ ) ॥ प्रसवस्य पुष्पफलपत्रस्य बन्धनम् प्रसवबन्धनम् ॥(२)॥ **द्वे पुष्पादिमूलाधारवृन्तस्य**॥ **आम इति** ॥ शलाटुः "शटी शटितं शलाटुः" इत्यूष्मभेदात् ॥(१)॥

---

१--ङीषि दीर्घान्ते अपि । "व्यवृणुत वेल्लितबाहुवल्लरीका" इति माघः । " नववञ्जुलमञ्जरीसनाथकरम् " इति काव्यप्रकाशे-इति मुकुटः ॥ २--सस्यं दन्त्यादि "ग्राम्यकविकथावन्ध इव नारसस्यमनोहर आर्यावर्तः" इति दमयन्तीश्लेषात् ॥ ३--"एधान् हुताशनवतः " इति कालिदासः--इति मुकुटः ॥ ४-पत्त्रं तकारद्वयवत् । विपत्राः साधवो न तरवः" इति दमयन्तीश्लेषात् ॥ ५--पलाशं ताल्व्यान्तम् "नवपलाशपलाशवनं पुरः" इति माघयमकात्-इति मुकुटः ॥ ६--लकारद्वयवान् । "दृश्यन्ते न तु लोकस्य कदापि च विपल्लवाः " इति दमयन्तीयमकात् ॥ ७--कटप इ० पा० ॥

**क्षारको जालकं क्लीबे कलिका कोरकः पुमान्।स्याद्गुत्सकस्तु स्तबकःकुड्मलो मुकुलोऽस्त्रियाम् ॥ स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम् । मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १७ ॥ द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् । आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥ बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्।पुष्पे जातिप्रभृतयःस्वलिङ्गा व्रीहयः फले१९ विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला।बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥२०॥**

एकमपक्कफलस्य ॥शुष्क इति ॥ 'फले' इत्येव ॥ "वानं शुष्कफले शुष्के सीवने गमने कटे । जलसंप्लुतवातोर्मिसुरङ्गासौरभेषु च" इति हैमः ॥ (१) ॥ एकंशुष्कफलस्य ॥ उभे इति ॥ उभे शलाटुवाने त्रिषु ॥ स्त्रियां 'वाना'॥१५॥क्षारक इति ॥"क्षारको रसे । कोरके पक्ष्यादिपाशे" इति हैमः ॥ "क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च ॥ (१) ॥"जालकं कोरके दम्भे कुलायानाययोरपि । न पुंसि मोचनफले स्त्रियां तु वसनान्तरे ॥ गिरिसारजलौकायामपि स्याद्विधवास्त्रियाम् । भटानामश्मरचिताङ्गरक्षिण्यां च जालिका"॥(२)॥ द्वे नवकलिकावृन्तस्य॥ कलिकेति॥कलिका॥(१)॥"कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः"॥(२)॥ द्वे अविकसितकलिकायाः ॥ स्यादिति ॥ "स्तबके हारभेदे च गुत्सः स्तम्बेऽपि कीर्तितः" इति दन्त्यान्तेषु रुद्रः ॥ श्रीभोजस्तु 'शस्यादिभ्यश्छक्' इत्याह । स्वार्थे कन् (५।३।७५) ॥ "पुष्पादिस्तबके गुच्छो मुक्ताहारकलापयोः" इति चवर्गान्ते रन्तिदेवः ॥ (१) ॥ स्तबकः ॥ (२) ॥ द्वे विकासोन्मुखकलिकाया इति मुकुटः ॥ कलिकादिकदम्बस्येत्यन्ये ॥ कुट्मल इति ॥ कुट्मलः ॥ "कुड्मलः" अपि ॥ "कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे" ॥ (१) ॥ मुकुलः ॥ (२) ॥ ईषद्विकासोन्मुखकलिकाया द्वे ॥ १६ ॥ स्त्रिय इति ॥ 'भूम्नि स्त्रियां सुमनसः' इति रत्नकोषः ॥ "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" इति मेदिन्यादेरेकैत्वमपि ॥ 'पुष्पं सुमनाः कुसुमम्' इति नाममाला ॥ (१) ॥ "पुष्पं विकास आर्तवे । धनदस्य विमाने च कुसुमे नेत्ररुज्यपि" इति हैमः ॥ (२) ॥ "प्रसूनं तु प्रसूते फलपुष्पयोः" इति हैमः ॥ (३) ॥ "कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ॥ (४) ॥ "सर्वसाधुसमानेषु समं स्यादभिधेयवत्" इति मेदिनी ॥ चत्वारि पुष्पस्य ॥ मकरन्द इति ॥ मकरन्दः ॥ (१) ॥ पुष्परसः ॥ (२) ॥ द्वे पुष्परसस्य ॥ पराग इति ॥ "परागः सुमनोरेणौ धूलीस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने" ॥ (१) ॥ सुमनोरजः ॥ (२) ॥ द्वे पुष्परजसः ॥ १७ ॥ द्वीति ॥ फले पुष्पे पत्रे च । वक्ष्यमाणमश्वत्थादि फलपुष्पादिषु वर्तमानं नपुंसकलिङ्गं ज्ञेयमित्यर्थः ॥ हरीति ॥ पूर्वोक्तापवादः ॥ हरीतक्याः फलम् हरीतकी । आदिना "कोशातकी बदरी कण्टकारिका" इत्यादयः ॥ आश्वत्थेति ॥ अश्वत्थस्य फलम् आश्वत्थम् ॥ वैणवम् ॥ नैयग्रोधम् ॥ इङ्गुद्या इदम् ऐङ्गुदम् ॥१८॥ बृहत्याः फलम् बार्हतम् ॥ पृथक्पृथगेकैकम् ॥ फले इति ॥ "जम्बूः स्यात्पादपान्तरे । तथा सुमेरुसीरि। द्वीपभेदेऽपि च स्त्रियाम्" ॥ लुपि जम्बूः ॥ (१) ॥ लुकि "ह्रस्वो नपुंसके" (१।२।४८) इति ह्रस्वे जम्बु ॥ (२) ॥ आणि जाम्बवम् ॥ (३) ॥ त्रीणि जम्बूफले ॥ पुष्प इति ॥ पुष्पे विद्यमाना जातिप्रभृतयः सदा स्वलिङ्गा एव ॥ यूथिकाशेफालिकामल्लिकाद्याः ॥ व्रीति ॥ एवं फले वर्तमाना व्रीहयोऽपि स्वलिङ्गाः यवानां फलानि यवाः ॥ माषाः । मुद्गाः ॥ १९ ॥ वीति ॥ विदार्या भूकूष्माण्ड्या मूलं पुष्पं फलमपि विदारी ॥ गम्भारी ॥ शालपर्णी ॥ पुष्प इति ॥ पाटलायाः पुष्पम् पाटलम् ॥

---

१--पुंसि प्रचुरप्रयोगदर्शनादुक्तम् । न तु नियमार्थम् । क्लीबलिङ्गोऽपि । "कोरकोऽस्त्री कुड्मलेऽपि"इत्यादिमेदिन्यादिदर्शनात् । अत एव "समुपहरन् विचकार कोरकाणि" इति माघः—इति मुकुटः ॥ २—क्वचित्पुस्तके "सुमम्" इति पाठ उपलभ्यते ॥ ३—"वेश्या श्मशानसुमना इव वर्जनीया" इति शूद्रकप्रयोगः—इति मुकुटः ॥ ४—"परिणतजम्बुफलोपभोगहृष्टा" इति किराते ह्रस्वान्तप्रयोगः । तत्र 'फल उत्तरपदे, "इको ह्रस्वोऽङ्यो गालवस्य" (६।३।६१) इति ह्रस्वत्वम्' इति वामनः । अत एव 'जलजम्बुजलाविला स्रवन्त्यः'इति वृक्षेऽपि "इको ह्रस्वः" इति ह्रस्वत्वम् ॥ "जम्बुः" इति प्रकृत्यन्तरमस्ति । "तस्माज्जम्बोः फलरसो नदी भूत्वा प्रवर्तते" इति संसारावर्तः—इति मुकुटः ॥

**अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः। तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥२१॥**
**उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः। कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥**
**सप्तपर्णो विशालत्वक् शारदो विषमच्छदः। आरग्वधे राजवृक्षसंपाकचतुरङ्गुलाः ॥ २३ ॥**
**आरेवतव्याधिघातकृतमालसुवर्णकाः। स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥**
**वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः। पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

"पाटलः कुसुमे वर्णेऽन्याश्रुत्रीहिश्च पाटलः" इति शाश्वतात् पुंलिङ्गोऽपि ॥ बोधीति ॥ "बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे" ॥ रत्नकोषेऽपि "पिप्पलो बोधिरश्वत्थः" इति ॥ बोधिश्चासौ द्रुमश्च बोधिद्रुमः ॥ ( १ ) ॥ चलदलः ॥ ( २ ) ॥ "पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ" ॥ ( ३ ) ॥ कुञ्जरेणाश्यते कुञ्जराशनः ॥ ॥ ( ४ ) ॥ २० ॥ "आपः प्रजाहितं शीतमश्वत्थं पवनं विषम्" इति केशरमाला ॥ "अश्वत्थः पिप्पलाद्रौ स्यादश्वत्था पूर्णिमा मता"॥(५)॥ **पञ्च पिप्पलवृक्षस्य ॥ अथेति** ॥ कपित्थः ॥ अमरमालायां पवर्गतृतीय-मध्यः ( **कबित्थः** ) अपि ॥ ( १ ) ॥ दधिवर्णो द्रवस्तिष्ठत्यस्मिन् दधित्थः ॥ ( २ ) ॥ ग्राही ॥ ( ३ ) ॥ **"मन्मथः** कामचिन्तायां कपित्थे कुसुमायुधे" ॥ ( ४ ) ॥ दधिफलः ॥ ( ५ ) ॥ पुष्पफलः ॥ ( ६ ) ॥ दन्तशठः ॥ ( ७ ) ॥ **सप्त 'कैथ' इति ख्यातस्य** ॥ २१ ॥ **उद्विति** ॥ "उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके। कुष्ठभेदेऽपि च पुमांस्ताम्रेऽपि स्यान्नपुंसकम्" इति मेदिनी ॥ ( १ ) ॥ जन्तुफलः ॥ ( २ ) ॥ यज्ञाङ्गः ॥ ( ३ ) ॥ हेमदुग्धकः ॥ ( ४ ) ॥ **चत्वारि उदुम्बरस्य ॥ कोवीति** ॥ कोविदारः ॥ ( १ ) ॥ चमरिकः ॥ ( २ ) ॥ "कुद्दालः स्यात्पुमान्भूमिदारणे युगपत्रके" ॥ ( ३ ) ॥ युगपत्रकः ॥ ( ४ ) ॥ **चत्वारि 'कचनार' इति ख्यातस्य ॥ २२ ॥ सप्तेति** ॥ काण्डे काण्डे सप्त पर्णान्यस्य सप्तपर्णः ॥ ( १ ) ॥ विशालत्वक् ॥ ( २ ) ॥ शारदी ङ्यन्ताऽपि ॥ "**शारदी** तोयपिप्पल्यां सप्तपर्णे च **शारदी**" इति दन्त्यान्तेषु रुद्रः ॥ "**शारदोऽब्दे**, स्त्रियां तोयपिप्पलीसप्तपर्णयोः। सस्ये क्लीबं, शरज्जातनूतनाप्रतिभे त्रिषु" इति मेदिनी ॥ ( ३ ) विषमच्छदः ॥ ( ४ ) ॥ **चत्वारि 'छतवती' इति ख्यातस्य ॥ आरगिति** ॥ आरग्वधः ॥ व्यञ्चकोऽपि ह्रस्वादिरपि ॥ "आरग्वधोऽथ संपाकः कृतमालस्तथाऽग्वधः" इति रत्नकोषात् ॥ ( १ ) ॥ राजवृक्षः ॥ ( २ ) ॥ संपाकः दन्त्यादिः ॥ "**संपाकस्तर्कके**, धृष्टे त्रिषु, ना चतुरङ्गुले" ॥ ( **शंपाकः** ) ताल-व्यादिरपि ॥ स्वामी तु--शमीं शिविम् अकवि, इति विगृह्णन् "**शम्याकः**" इति पाठं मन्यते ॥ ( ३ ) ॥ चतुरङ्गुलः ॥ ( ४ ) ॥ २३ ॥ आरेवतः ॥ ( ५ ) ॥ व्याधिघातः ॥ ( ६ ) ॥ कृतमालः ॥ ( ७ ) ॥ सुवर्णकः ॥ '**सुपर्णकः**' इति वा पाठः ॥ "सुपर्णः स्वर्णचूडे च गरुडे कृतमालके। सुपर्णा कमलिन्यां च वैनतेयस्य मातरि" ॥ ( ८ ) ॥ **अष्टौ "सोनालु, धनवहेड" इति ख्यातस्य ॥ स्युरिति ॥ "जम्बीरः** प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे" ॥ ( १ ) ॥ "स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके। नागरङ्गेऽपि च पुमान् स्याचाङ्गेर्यां तु योषिति" ॥ ( २ ) ॥ "**जम्भः** स्याद्दानवान्तरे। दन्तभोजनयोरंसे हनौ जम्बीरतूणयोः" ॥ ( ३ ) ॥ जम्भीरः ॥ ( ४ ) ॥ "जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च" ॥ ( ५ ) ॥ **पञ्च 'जम्भेरी' इति ख्यातस्य ॥ २४ ॥ वरेति** ॥ वरणः ॥ ( १ ) ॥ "**वरुणस्तरुभेदेऽप्सु** प्रतीचीपतिसूर्ययोः" ॥ ( २ )॥ "**सेतुर्नाऽऽलौ** कुमारके" ॥ ( ३ ) ॥ "तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे" ॥ (४) ॥ कुमारकः ॥ (५) । **पञ्च वरणस्य॥ पुंनेति** ॥ "पुंनागस्तु सितोत्पले। जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे" ॥(१)॥ "**पुरुषस्त्वा-**त्मनि नरे पुंनागे च" ॥ ( २ ) ॥ "**तुङ्गः** पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत्। तुङ्गी प्रोक्ता हरिद्रायां बर्बराया-मपीष्यते" इति हैमः ॥ ( ३ ) ॥ **केसरो** नागकेसरे। "तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे। पुंनागवृक्षे किंजल्के केसरं स्यात्तु हिङ्गुनि" इति हैमः ॥ ( ४ ) ॥ देववल्लभः ॥ ( ५ ) ॥ **पञ्च गुर्जरदेशे 'संदेशरा'**

---

१--शाश्वतेऽपि स्वामिपुस्तकयोः 'पाटलम्' इति क्लीबपाठस्यैवोपलम्भेन "**पाटला** पाटलौ स्त्री स्यादस्य पुष्पे पुनर्न ना" इति मेदिन्यां पुंस्त्वस्य निषेधाच्च पुंलिङ्गः ॥

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः । तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥**
**वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ । आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥**
**वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः । पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसम्भवे ॥२८॥**
**अक्षोटकर्परालौ द्वावङ्कोटे तु निकोचकः । पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ॥ २९ ॥**
**रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः । द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३० ॥**
**शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः। रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ॥३१॥**

इति ख्यातस्य ॥ २५ ॥ पारीति ॥ "पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि" ॥ ( १ ) ॥ निम्बतरुः ॥ ॥ ( २ ) ॥ मन्दारः ॥ ( ३ ) ॥ पारिजातकः ॥ ( ४ ) ॥ चत्वारि "वकायिनी" इति ख्यातस्य ॥ तिनीति ॥ तिनिशः ॥ ( १ ) ॥ "स्यन्दनं तु स्मृतं क्लीबं रथाङ्ग तिनिशे नरि" इति रभसः ॥ "स्यन्दनं तु स्रुतौ नीरे, तिनिशे ना, रथेऽस्त्रिया" ॥ ( २ ) ॥ नेमिः ॥ "पुंलिङ्गस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि" इति रुद्रः ॥ ( ३ ) ॥ रथद्रुः ॥ ( ४ ) ॥ अतिमुक्तकः ॥ ( ५ ) ॥ २६ ॥ "वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि" ॥ ( ६ ) ॥ चित्रकृत् ॥ ( ७ ) ॥ सप्त अतिमुक्तवृक्षस्य ॥ अथेति ॥ पीतनः ॥ ( १ ) ॥ कपीतनः ॥ ( २ ) ॥ आम्रातकः ॥ ह्रस्वादिरपि "कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकी" इति त्रिकाण्डशेषात् ॥ ( ३ ) ॥ त्रीणि "अवाडा" इति ख्यातस्य ॥ मधिवाति ॥ मधूकः ॥ ( १ ) ॥ गुडपुष्पः ॥ ( २ ) ॥ मधुद्रुमः ॥ ( ३ ) ॥ २७ ॥ "वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान्" ॥ ( ४ ) ॥ मधुष्ठिलः ॥ ( ५ ) ॥ पञ्च "महुआ" इति ख्यातस्य ॥ जलेति ॥ अत्र मधूके ॥ मधूलकः ॥ ( १ ) ॥ "गिरिजेऽत्र" इति मूलपाठः—इति सुभूत्यादयः ॥ "गौरशाको मधूकोऽन्यो गिरिजः सोऽल्पपत्रकः" इति माधवः ॥ "मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रकः" इति स्वामी॥एकं जलजमधूकस्य॥पीति॥"पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे। अस्थिखण्डे च तालस्य काण्डपादपभेदयोः" ॥ ( १ ) ॥ गुडफलः ॥ ( २ ) ॥ स्रंसी ॥ ( ३ ) ॥ त्रीणि गुर्जरदेशे "पीलू" इति ख्यातस्य ॥ तस्मिन्निति ॥ तस्मिन् पीलौ गिरिजे ॥ २८ ॥ अक्षोटः॥ ( १ ) कर्परालः ॥ 'कन्दरालः' इति वा पाठः ॥ ( २ ) द्वे पर्वतपीलोः "अखरोट" इति ख्यातस्य ॥ अङ्कोट इति ॥ अङ्कोटः ॥ ॥ ( १ ) ॥ "अङ्कोलः" अपि ॥ निकोचकः ॥ ( २ ) ॥ द्वे अङ्कोलस्य "ढेरा" इति ख्यातस्य ॥ पेति ॥ "पलाशः किंशुकेऽस्त्रेप । पलाशं हरिते पत्रे" इति हैमः ॥ ( १ ) ॥ किंशुकः ॥ ( २ ) "पर्ण पत्रे किंशुके ना" ॥ ( ३ ) ॥ वातपोथः ॥ ( ४ ) ॥ चत्वारि पलाशस्य ॥ अथेति ॥ वेतसः ॥ ( १ ) ॥ ॥ २९ ॥ "रथौ स्यन्दनवानीरौ" इत्यजयः ॥ "रथः पुमानवयवे स्यन्दने वेतसेऽपि च" ॥ (२) ॥ अभ्रपुष्पः ॥ ( ३ ) ॥ "विदुलस्तु पुमानम्बुवेतसे वेतसेऽपि च" ॥ ( ४ ) "वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु" इति रसभः ॥ क्लीबलिङ्गमपि ॥ "शीतं तुषारवानीरबहुवारद्रुमेषु च" इत्यजयात् ॥ ( ५ ) ॥ वानीरः ॥ ( ६ ) ॥ "वंजुलः पुंसि तिनिशे वेतसाशोकयोरपि" ॥ ( ६ ) षट् 'वेत' इति ख्यातस्य ॥ द्वाविति "परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले" ॥ ( १ ) विदुलः ॥ (२) ॥ "नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च काङ्गुष्ठेऽपि च योषिति" ॥ ( ३ ) ॥ अम्बुवेतसः ॥ ( ४ ) ॥ चत्वारि जलजातवेतसस्य ॥ ३० ॥ शोभेति ॥ शोभाञ्जनः ॥ 'शौभाञ्जनः' अपि ॥ ( सौभाञ्जनः ) दन्त्यादिरपि ॥ ( १ ) ॥ "शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे" ॥ ( २ ) ॥ तीक्ष्णगन्धकः ॥ ( ३ ) ॥ आक्षीवः ॥ ह्रस्वादिरपि ॥ "अक्षीवं वशिरे, शिग्रौ ना, ऽमत्ते पुनरन्यवत्" ॥ ( ४ ) ॥ "मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः" ॥ ततः स्वार्थे कन् ( ५।३।७५ ) मोचकः ॥ ( ५ ) ॥ पञ्च "सहेँजन" इति

---

१—लयनं लीः संश्लेषः । क्विप् ( वा० ३।३।१०८ )। तया कोचको व्यथाजनकः "लिकोचकः" इति तु श्रीकरः—इति मुकुटः ॥ २—"काक्षीव" इति रान्तमिदम्,-इत्यन्ये—इति मुकुटः ॥

**बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि । प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ॥३२**
**गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ । आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥३३**
**कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः । शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥३४**
**राजादनं पियालः स्यात्सन्नकद्रुर्धनुष्पटः । गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥३५ ॥**

ख्यातस्य ॥ रक्त इति ॥ असौ शोभाञ्जनः ॥ रक्तपुष्पः ॥ मधुप्रधानः शिग्रुः--इति मुकुटः ॥ रक्तो मधुकरः । "रक्तकण्ठानाम्" इति दर्शनात् ॥ मधुर्मधुरः शिग्रुः--इत्येके ॥ ( १ ) ॥ एकम् "मगुना" इति ख्यातस्य ॥ अरीति ॥ "अरिष्टो लशुने निम्बे फेनिले काककंकयोः" ॥ रिष्टोऽपि ॥ "रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले" ॥ ( १ ) "फेनिलोऽरिष्टपादपे । फेनिलं मदनफले बदरे फेनवत्यपि" ॥ ( २ ) द्वे "रीठा" इति ख्यातस्य ॥३१॥ बीति "बिल्वं फले श्रीफले ना" ॥ (१)॥ "शाण्डिल्यः पावकान्तरे । बिल्वे मुनौ च" इति हैमः ॥ ( २ ) ॥ "नटे बिल्वे च शैलूषः" इति ताल्व्यादिमूर्धन्यान्ते रभसः ॥ ( ३ ) ॥ मालूरः ॥ ॥ ( ४ ) "श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम्" ॥ ( ५ ) ॥ पञ्च बिल्ववृक्षस्य ॥ प्लेति ॥ "प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने" ॥ ( १ ) "जटा लग्नकचे मूले मांस्यां, प्लक्षे पुनर्जटी" ॥ रुद्रे तु "गर्दभाण्डे जटी प्लक्षौ"।(२)॥। "पर्कटी नूतनफले पूगादेः प्लक्षपादपे" ॥ शाश्वतोऽपि "विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः" ॥ (३) ॥ त्रीणि "पाकर" इति ख्यातस्य॥ न्यगिति "न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ । न्यग्रोधी तूपचित्रायाम्" ॥ ( १ ) बहुपात् ॥ ( २ ) ॥ वटः ॥ " वटो त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ॥ ( ३ ) ॥ त्रीणि वटस्य ॥३२॥ गालेति ॥ " गालवो मुनिभेदे स्याल्लोध्रवृक्षे च कीर्तितः" ॥ ( १ ) ॥ शाबरः " शाबरी शूकशिम्ब्यां स्यात् पुंसि पापापराधयोः । लोध्रे च" इति ताल्व्यादिः ॥ दन्त्यादिरपि ॥ "सावराख्यापराधे च लोध्रे पापे च पठ्यते" इति दन्त्यादावजयः ॥ ॥ ( २ ) लोध्रः ॥ रोध्रोऽपि लत्वाभावे ॥ " रोध्रो ना गालवे क्लीबमपधारे च किल्बिषे" इति मेदिनी ॥ ॥ ( ३ ) तिरीटः ॥ ( ४ ) तिल्वः ॥ ( ५ ) ॥ "मार्जनं न द्वयोर्मार्ष्टौ पुंसि स्याल्लोध्रशाखिनि" ॥(६)॥ षट् श्वेतलोध्रस्य ॥ आद्यौ श्वेतलोध्रे, शेषा रक्तलोध्रे, इति स्वामी ॥ आम्र इति ॥ आम्रः ॥ ( १ ) ॥ चूतः ॥ ( २ ) ॥ रसालः ॥ ( ३ ) ॥ त्रीणि आम्रस्य ॥ असाविति ॥ यद्यसावतिसौरभस्तदा सहकारः ॥ एकमातिसुगन्धाम्रस्य ॥३३॥ किति॥ कुम्भोलूखलकम् इति संघातविगृहीतम्॥ "कार्मुके वारनार्यां च कुम्भः क्लीबं तु गुग्गुलौ" इति रभसः ॥ "उलूखले गुग्गुलौ च क्लीबमुक्तमुलूखलम्" इति रुद्रः ॥ " कुम्भोलूखलकं कुम्भं कुम्भोलुः खलकं वरम्" इति वाचस्पतिः ॥ उलूखलकम् ॥ ( २ ) ॥ " कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । कोशज्ञोलूकयोश्च स्याद्विश्वामित्रमुनावपि । कौशिकी चण्डिकायां च नदीभेदे च योषिति" ॥ ( ३ ) ॥ गुग्गुलुः ॥ ( ४ ) ॥ पुरः ॥ " पुरं पाटलिपुत्रेऽङ्गे गुग्गुलौ तु पुमानयम्" इति रभसः ॥(५)॥ पञ्च गुग्गुलोः॥ शेलुरिति ॥ शेलुः ॥ (१) ॥ श्लेष्मातकः ॥ (२) ॥ शीतः ॥ ( ३ ) ॥ उद्दालः ॥ ( ४ ) बहुवारकः ॥ ( ५ ) ॥ पञ्च "बहुआर" इति "लसोडा" इति ख्यातस्य ॥ ३४ ॥ राजेति ॥ "राजादनं क्षीरिकायां पियाले किंशुकेऽपि च" ॥ "राजातनम्" इत्यपि पाठः ॥ " राजादनं प्रसरको राजातनः" इति वाचस्पतिः ॥ ( १ ) "प्रियालश्च प्रियालकः" इति माधवः ॥ ( २ ) ॥ सन्नकद्रुः ॥ ( ३ ) "धनुः पियालद्रुमः" इति रूपरत्नाकरः ॥ " धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने" इति नान्तेषु मेदिनी ॥ "धनुः पियाले ना, न स्त्री राशिभेदे शरासने" इति सान्तेषु च मेदिनी ॥ " पटः पियालवृक्षे ना सुचेले पुंनपुंसकम्" इति रभसः ॥ 'धनुष इव पटो विस्तारोऽस्य, इति समस्तं नाम' इति स्वामी ॥ ( ४ ) ॥ चत्वारि " चार " इति ख्यातस्य ॥ गमिति ॥ गंभारी ॥ " कंभारी " इत्यपि ॥ ( १ ) ॥ "सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे । निम्बे ना सर्वतोभद्रा गंभारीनटयोषितोः" इति मेदिनी ॥ ( २ )॥

---

१—"सवटोऽप्यवटसंकुलः" इति दमयन्तीश्लेषः ॥ २—इतः परम् "शाङ्करिः पुंसि कार्तिकेये गणाधिपे" इत्यपि लिखितमासीत् । परंतु तन्न प्रकृतोपयुक्तम् ॥

**श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः । कर्कंधूर्बदरी कोली कोलं कुवलफेनिले ॥ ३६॥**
**सौवीरं बदरं घोण्टाऽप्यथ स्यात्स्वादुकण्टकः। विकंकतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि॥३७॥**
**ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका। तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके॥३८॥**
**काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके।गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ॥३९॥**
**तिलकःक्षुरकः श्रीमान् समौ पिचुलझावुकौ। श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ॥४०॥**

काश्मरी ॥ ( ३ ) ॥ मधुपर्णिका ॥ ( ४ ) ॥ ३५ ॥ "श्रीपर्णस्त्वग्निमन्थेऽब्जे श्रीपर्णी शाल्मली हठे" इति हैमः ॥ "श्रीपर्णी काश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः ॥ ( ५ ) ॥ भद्रपर्णी ॥ ( ६ ) ॥ काश्मर्यः ॥ ( ७ ) ॥ सप्त "खंभारी" इति ख्यातस्य ॥ अथेति ॥ कर्कन्धूः ॥ ( १ ) ॥ "बदरी कोले, क्लीबं तु तत्फले" इति मेदिनी ॥ ( २ ) ॥ कोली ॥ ( कोलिः ) ह्रस्वान्तोऽपि ॥ ( ३ ) ॥ कुवलीशब्दोऽप्यत्र ॥ त्रीणि बदर्याः ॥ कोलमिति ॥ "कोलं कोलिफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्" ॥ ( १ ) ॥ "कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले" । ( २ ) ॥ फेनिलम् ॥ ( ३ ) ॥ ३६ ॥ "स्रोतोऽञ्जने तु सौवीरं बदरे काञ्जिकेऽपि च" इति दन्त्यादौ रभसः ॥ ( ४ ) ॥ बदरम् ॥ ( ५ ) ॥ "घोण्टा तु बदरीपूगवृक्षयोरपि योषिति" इति मेदिनी ॥ "बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् ॥ अटव्यामेव सा घोण्टा गोपघोण्टेति चोच्यते" ॥(६)॥ षट् कर्कन्धूफलस्य ॥ स्वामी तु—आद्यास्त्रयो वृक्षार्थाः । अन्ये फलार्थाः । घोण्टा तूभयार्था इत्याह—स्वामी तु घोण्टाकोले व्यत्यासेन पठति ॥ अथेति ॥ स्वादुकण्टकः ॥ ( १ )॥ विकङ्कतः ॥ ( २ ) ॥ स्रुवावृक्षः ॥ "स्रुवा द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियाम्" ॥ ( ३ ) ॥ ग्रन्थिलः ॥ ( ४ ) ॥ व्याघ्रपात् ॥ ( ५ ) ॥ पञ्च "कठेर"इति ख्यातस्य ॥३७॥ ऐरेति ॥ "ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुटद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् ॥ नपुंसके महेन्द्रस्य ऋजुदीर्घशरासने" ॥(१) ॥ "नागरङ्गे नारङ्गो नार्यङ्गस्तकवासनः" इति वाचस्पतिः ॥"नारङ्गः पिप्पलीरसे । यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च" ॥ ( २ )॥ द्वे"नारङ्गी" इति ख्यातस्य ॥ नेति ॥ "नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां जपायां च काकुगुष्ठे च समीक्ष्यते" इति विश्वः ॥ ( १ ) ॥ भूमिजम्बुका ॥ ( २ ) ॥ द्वे नारङ्गस्य चत्वारि इत्यन्ये ॥ तीति ॥ तिन्दुकः ॥ ( १ ) ॥स्फूर्जकः ॥ ( २ ) ॥ "कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे इति विश्वः ॥ ( ३ ) ॥ शितिसारकः ॥( ४ )॥ चत्वारि"तेन्दु"इति ख्यातस्य ॥३८॥ केति ॥ काकेन्दुः ॥ (१) ॥ "कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ काकपीलुकः ॥ ( ३ ) ॥ काकतिन्दुकः ॥ ( ४ ) ॥ चत्वारि कटुतिन्दुकस्य ॥ "कुचिला" इति ख्यातस्य इत्यन्ये ॥ गोलीति ॥ गोलीढः ॥ ( १ ) ॥ झाटलः ॥( २ ) ॥ घण्टा चासौ पाटलिश्च घण्टापाटलिः । स्वामी तु घण्टा पाटलिः इति नामद्वयमाह ॥ ( ३)॥" मोक्षस्तु मुक्तिपाटलिमोचने" ॥ ( ४ ) ॥"मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च" ॥ ( ५ ) ॥ पञ्च लोध्रविशेषस्य ॥३९॥ तिलेति ॥ "तिलको द्रुमभेदेऽश्वभेदे च तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" ॥ ( १ ) ॥ "क्षुरकः कोकिलाक्षे स्याद्गोक्षुरे तिलकद्रुमे" ॥ ( २) ॥ "श्रीमांस्तिलकवृक्षो ना मनोज्ञे धनिके त्रिषु" ॥(३)॥ त्रीणि तिलकस्य॥ सेति॥"पिचुः स्यात्तूलकर्षयोः" इति धरणिः॥पिचुं तूलं लाति॥"पिचुलो झावुकेऽपि स्यान्निचुले जलवायसे" ॥ ( १ ) ॥ झावुकः ॥( २ )॥ द्वे"झातु"इति ख्यातस्य ॥ श्रीति ॥ "श्रीपर्णी काश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः ॥ (१) ॥ कुमुदिका ॥ "कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गम्भार्यां पुंसि दिङ्नागे नागशाखामृगान्तरे" ॥( २ ) ॥ कुम्भीव कुम्भी रसाधारत्वात् ॥ "वृश्चिकायां च कुम्भी स्यात्पाटली कट्फलेऽपि च" इति रन्तिदेवः ॥ ( ३ )॥ कैटर्यः ॥ ( ४ ) ॥ कट्फलः ॥ ( ५ ) ॥ पञ्च'कायफल' इति

१—तृणाति । बाहुलकादङ्च् । गकारान्तोऽयम् ॥ "भवद्भैरिवधूवदने वने च नारङ्गतरूपशोभे भान्ति गण्डशैलस्थलालंकारधारिण्यो लोध्रलताः" इति दमयन्तीश्लेषात् ॥ २--उक्तं च समन्वयप्रदीपे—"यत्र वाक्यार्थविश्रान्तिः श्लोकेनैकेन जायते । तन्मुक्तकं युगं द्वाभ्यां त्रिभिः स्यात्तिलकं पुनः ॥ चतुर्भिः स्याच्चकलकं पञ्चभिः कुलकं ततः । महाकुलकमित्यार्याः कथयन्ति ततः परम् ॥" इति ॥ तिलकपर्यायान्तरं वैशेषिकम् ॥

**क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः। नूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च॥४१॥**
**तूलं च नीपप्रियककदम्बास्तु हलिप्रिये। वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु॥ ४२ ॥**
**गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः। प्लक्षश्च तिन्तिडी चिंचाऽम्लिकाऽथो पीतसालके॥४३॥**
**सर्जकासनबन्धूकपुष्पप्रियकजविकाः। साले तु सर्जकार्ष्याश्वकर्णकाः सस्यसंवरः ॥ ४४ ॥**
**नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः। राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः॥४५॥**
**इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ। पिच्छिला पूरणी मोचा स्थिरायुःशाल्मलिर्द्वयोः॥४६॥**

ख्यातस्य ॥४०॥ क्रेति ॥ "क्रमुकः पट्टिकालोध्रे गुवाके भद्रमुस्तके" ॥ ( १ ) ॥ पट्टिकाख्यः ॥ ( २ ) ॥ "पट्टः पेषणपाषाणे व्रणादीनां च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः॥" यद्वा पट्टिशब्दात् क्तिजन्तान्ङीष्। "पट्टिः स्त्री पट्टभेदे स्याल्ललाटे क्रमुकद्रुमे॥ पट्टी ललाटभूषायां पट्टी लाक्षाप्रसादने" इति टवर्गान्ते विश्वः॥(३)॥ लाक्षाप्रसादनः ॥ ( ४ ) ॥ चत्वारि लोध्रभेदस्य॥नूद इति॥ तूदः इति स्वामी॥ (१) ॥ यूपः ॥ ( २ ) ॥ "क्रमुको भद्रमुस्तके। गुवाके पट्टिकालोध्रे" इति हैमः॥ (३ ) ॥"ब्रह्मण्यो ब्रह्मसाधौ स्याद्ब्रह्मदाशशनैश्चरे॥ ॥ ( ४ ) ॥ ब्रह्मदारु ॥ (५) ॥ ४१ ॥ "पुँल्लिङ्गस्तु पिचौ तूलः क्लीबं स्याद्ब्रह्मदारुणि" इति रुद्रः ॥(६) ॥ षडश्वत्थाकारस्य "पार्श्वपिप्पल" इति ख्यातस्य "तूँत" इति ख्यातस्य इत्यन्ये॥नीपेति॥"नीपः कदम्बबन्धूक-नीलाशोकद्रुमेषु च" ॥ ( १ ) ॥ "प्रियकः पीतसारके। नीपे चित्रमृगे चाली प्रियङ्गौ कुङ्कुमेऽपि च" ॥ ( २ ) ॥ "कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्" ॥ ( ३ ) ॥ हलिप्रियः ॥ ( ४ ) ॥ चत्वारि "कदम्ब" इति ख्यातस्य॥वीरेति॥"वीरवृक्षस्तु भल्लातकार्जुनद्रुमयोः पुमान्" ॥(१)॥"अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्" ॥ (२) ॥ "भवेदग्निमुखो देवे विप्रे भल्लातके स्त्रियाम्" ॥(३)॥ भल्लातकी॥(४) ॥ चत्वारि "भेलावा" इति ख्यातस्य॥४२॥गर्देति॥गर्दभाण्डः॥(१)॥"कन्दरालः पुमान् गर्दभाण्डे प्लक्षतरावपि" ॥ ( २ ) ॥"कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च। अश्वत्थे च" इति विश्वः ॥ (३ ) ॥ सुपार्श्वकः ॥ ४ ॥ "प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके" इति हैमः॥(५)॥ पञ्च "गेढी" इति ख्यातस्य॥ तिन्तीति ॥ "तिन्तिडी त्वम्लिका चिंचा तिन्तिडीका कपिप्रिया" इति वाचस्पतिः ॥ "तिन्तिडी चुक्रे चिञ्चायाम्" ॥ ( १ ) ॥ चिञ्चा ॥ ( २ ) ॥ "अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिला" इति चन्द्रः ॥ "अम्लिका तिन्तिडीका-म्लोद्गारचाङ्गेरिकासु च" ॥ ( ३ ) ॥ त्रीणि चिञ्चायाः ॥ अथो इति ॥ पीतसालकः ॥ ( १ ) ॥ ॥ ४३ ॥ सर्जकः ॥ ( २ ) ॥"प्रियको जीवकोऽसनः" इति रत्नकोशः ॥ "असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे" "पीठेभस्कन्धयोः क्लीबमासनं ना तु जीवके" इति रुद्ररभसौ ॥ ( ३ ) ॥ बन्धूकपुष्पः ॥ ( ४ ) ॥ "प्रियकः पीतसारके। नीपे चित्रमृगे चाली प्रियङ्गौ कुङ्कुमेऽपि च" ॥ ( ५ ) ॥ "जीवकः प्राणके पीतसारे च कृपणेऽपि च। कूर्चशीर्षे च पुंसि स्यात्" ॥ ( ६ ) ॥ षट् "विजयसार" इति ख्यातस्य ॥ सेति ॥ "पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः" इति दन्त्यादौ रभसः ॥ (१) ॥ सर्जः ॥ ( २ ) ॥ कार्ष्यः ॥ ( ३ ) ॥ अश्वकर्णकः ॥ ( ४ ) ॥ सस्यसंवरः ॥ ( ५ ) ॥ पञ्च सालस्य ॥ ४४ ॥ नेति ॥ नदीसर्जः ॥ ( १ ) ॥ वीरतरुः ॥ ( २ ) ॥ इन्द्रद्रुः ॥ ( ३ ) ॥ "ककुभो रागभेदेऽपि वीणाङ्केऽर्जुनपादपे" ॥ ( ४ ) ॥ अर्जुनः ॥ "पार्थस्तु ककुभे जिष्णौ" इति विश्वात् पार्थोऽपि ॥ ( ५ ) ॥ पञ्च "कौपीतक" इति ख्यातस्य ॥ राजेति ॥ "राजादनं क्षीरिकायां पियाले किंशुकेऽपि च"॥"राजादनः पियालद्रौ क्षीरिकायां त्रिपत्रके" इति हैमात् पुँल्लिङ्गोऽपि॥(१)॥ फलाध्यक्षः ॥ ( २ ) ॥ क्षीरिका ॥ ( ३ ) ॥त्रीणि "खिरणी" इति ख्यातस्य ॥ अथेति ॥४५॥इङ्गुदी ॥(१)॥ तापसतरुः ॥ ( २ ) ॥ द्वे "इङ्गुआ" इति ख्यातस्य "जियापूता"—इति ख्यातस्य—इति मुकुटः॥

१—ह्रस्वादि दन्त्यमध्यम्। "निरसनैरसनैः" इति माघयमकात्॥ ह्रस्वादितालव्यमध्यमपि। "विकसितकंदलदशनैर्यो वमति दरीमुखैश्च कं दलदशनैः" इति वृन्दावनयमकात्—इति मुकुटः॥ २—सालो दन्त्यादिः—"सालकानन-शोभिनी" इति दण्डिश्लेषात्॥ "सालसदृशं भुजवनं भवानी च" इति दमयन्तीश्लेषाच्च॥

पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः । चिरविल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः । करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥ ४८ ॥
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः । गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥
अरिमेदो विट्खदिरे कदरः कदिरे सिते । सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः । चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥

भिन्त्वेति ॥ भूर्जः ॥ (१) ॥ "चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गिरिटावपि" ॥ (२) ॥ मृदुत्वक् ॥ ॥ (३) ॥ त्रीणि भोजपत्रवृक्षस्य ॥ पिच्छेति ॥ पिच्छिला ॥ (१) ॥ "पूरणः पूरके त्रिषु । क्लीबे पिष्टप्रभेदे च पूरणी शाल्मलीद्रुमे ॥ पटारम्भकसूत्रेषु" ॥ (२) ॥ "मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः" ॥ (३) ॥ स्थिरायुः ॥ "षष्टिं वर्षसहस्राणि वने जीवति शाल्मलिः" इति वचनात् ॥ (४) ॥ शाल्मलिः ॥ (५) ॥ पञ्च "सेंबर" इति ख्यातस्य ॥ ४६ ॥ पीति ॥ पिच्छा ॥ (१) ॥ शाल्मलिवेष्टः ॥ "क्वाथः कषायो निर्यूषो निर्यासो वेष्टकस्तथा" इति रभसः ॥ (२) ॥ द्वे सेंवरीगोंदस्य ॥ रोचेति ॥ "रोचना रक्तकह्लारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु" ॥ (१) ॥ कूटशाल्मलिः ॥ (२) ॥ द्वे कृष्णशाल्मलेः ॥ कुत्सितशाल्मलेः, इत्येके ॥ चिरेति ॥ चिरविल्वः ॥ "चिरिविल्वः" इत्यन्ये ॥ (१) ॥ नक्तमालः "रक्तमालः" इति स्वामी ॥ (२) ॥ "करजं स्याद्व्याघ्रनखे करञ्जनखयोः पुमान्" ॥ (३) ॥ करञ्जकः ॥ (४) ॥ चत्वारि करञ्जवृक्षस्य ॥ ४७ ॥ प्रकीति ॥ "प्रकीर्यः पूतिकरजे विप्रकीर्णे तु वाच्यवत्" ॥ (१) ॥ पूतिकरजः ॥ (२) ॥ पूतीकः ॥ 'पूतिकः' इति पाठे पूतिं कायति ॥ "पूतीकः पूतिकः" इति माधवः ॥ ॥ (३) ॥ कलिमारकः ॥ यदाहेन्दुः—"पूतीकरञ्जः सुमनास्तथा कलहनाशनः" ॥ मुकुटस्तु—'कलिकारकः'—इत्याह ॥ (४) ॥ चत्वारि कण्टकवत्करञ्जस्य ॥ केति ॥ षड्ग्रन्थः ॥ "षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्" ॥ (१) ॥ "अथ मर्कटी । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः" ॥ (१) ॥ अङ्गारवर्णपर्णा वल्लरी अङ्गारवल्लरी ॥ (१) ॥ करञ्जभेदानामेकैकम् ॥ ४८ ॥ रोहीति ॥ "रोही रोहितकेऽश्वत्थवटपादपयोः पुमान्" ॥ (१) ॥ रोहितकः ॥ "रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मनिमृगयोर्भेदे ना रोहितद्रुमे" ॥ (२) ॥ "प्लीहशत्रुर्वनातिक्तश्च रोहितः" इति माधवः ॥ प्लीहः शत्रुः ॥ (३) ॥ दाडिमपुष्पकः ॥ (४) ॥ चत्वारि "रोहिड" इति ख्यातस्य ॥ गायेति ॥ "गायत्री खदिरे स्त्री स्यात्" इति रभसः ॥ "गायत्री त्रिपदादेवीछन्दोभित्खदिरेषु च" ॥ "वह्निगायत्रिणां तथा" इति वैद्यकादिन्नन्तोऽपि ॥ (१) ॥ बालतनयः ॥ "बालपत्त्राश्च" इति मूलपाठः—इत्यन्ये ॥ "बालपत्रो यवासः खदिरश्च" इति प्राञ्चः ॥ आह च—"खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्मशल्यः क्षितिक्षमः" ॥ (२) ॥ खदिरः ॥ "खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने" ॥ (३) ॥ दन्तधावनः ॥ (४) ॥ चत्वारि खदिरस्य ॥ ४९ ॥ अरीति ॥ अरिमेदः (१) ॥ विट्खदिरः ॥ (२) ॥ द्वे दुर्गन्धिखदिरस्य ॥ कदेति ॥ "कदरः श्वेतखादिरे क्रकचव्याधिभेदयोः" ॥ (१) "सोमवल्कस्तु धवलखदिरे कट्फलेऽपि च ॥ (२) ॥ द्वे श्वेतखदिरस्य ॥ अथेति ॥ व्याघ्रपुच्छः ॥ (१) ॥ गन्धर्वहस्तकः ॥ (२) ॥ ५० ॥ एरण्डः ॥ (३) ॥ "खपुरः क्रमुको निचुलो हिज्जल, एरण्ड उरुबूकः" इति बोपालितः ॥ "उरुबूकोरुबुकव्याघ्रदलाश्च" इति रभसः ॥ (४) ॥ रुचकः ॥ (५) ॥ चित्रकः ॥ "चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु" ॥ (६) ॥ "चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके" ॥ (७) ॥ पञ्चाङ्गुलः ॥ (८) ॥ "आमलक्यां स्त्रियां मण्ड एरण्डे मोचपिच्छयोः" इति रभसः ॥ "मण्डः पञ्चाङ्गुले शाके पुंसि क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाऽथास्त्रियां सारपिच्छयोः" ॥ अकारप्रश्लेषोऽपि ॥ "अमण्डपञ्चाङ्गुलवर्धमानगन्धर्वहस्ताः" इति हारावली ॥ आकारादिरपि ॥ "गन्धर्वहस्तकोऽमण्ड आमण्डो व्याघ्रपुच्छकः" इति तारपालः ॥

**अल्पा शमी शमीरः स्यात् शमी सक्तुफला शिवा । पिण्डीतको मरुवकः श्वसनः करहाटकः॥५२**
**शल्यश्च मदने शक्रपादपः पारिभद्रकः । भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥**
**पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः । पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा॥५४॥**
**कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया।लता गोवन्दनी गुन्द्रा प्रियङ्गु फलिनीःफली५५**
**विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा । मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ॥५६॥**
**स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः। शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥**

"आदण्डः" इत्येके । ( दीर्घदण्डत्वात् )—इति स्वामी ॥ ( ९ ) ॥ "**वर्धमानः** प्रश्नभेदे शरावैरण्डविष्णुषु" ॥ ( १० ) व्यडम्बकः ॥ "व्यडम्बनः" इति स्वामी ॥ ( ११ ) ॥ **एकादश एरण्डस्य** ॥ ५१ ॥ **अल्पेति**॥ अल्पा शमी शमीरः ॥ ( १ ) ॥ **एकमल्पशम्याः** ॥ **शमीति** ॥ "**शमी** सक्तुफलायां च शिम्बिकायां च वल्गुली" ॥ ( १ ) ॥ सक्तुफला ॥ ( २ ) ॥ "**शिवा** झाटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च" ॥ ( ३ ) ॥ **त्रीणि शम्याः** ॥ **पिण्डीति** ॥ "**पिण्डीतकः** स्यात्तगरे मदनाख्यमहीरुहे" ॥ ( १ ) ॥ मरुवकः ॥ ( २ ) ॥ "**श्वसनं** श्वसिते पुंसि मारुते मदनद्रुमे" ॥ ( ३ ) ॥ "**करहाटः** शिफाकन्दे पद्मस्य मदनद्रुमे" ॥ ( ४ ) ॥ ५२ ॥ "क्ष्वेडाशङ्कुशरे **शल्यं** ना श्वाविन्मदनद्रुमे" इति तालव्यादौ रभसः ॥ (५) ॥ "**मदनः** स्मरवसन्तद्रुभिद्धत्तूरासिह्लके" ॥ (६) ॥ **षट् "मयनफला" इति ख्यातस्य वृक्षस्य** ॥ **शक्रेति** ॥ शक्रपादपः ॥ ( १ ) ॥ " **पारिभद्रस्तु** निम्बद्रौ मन्दारे देवदारुणि" ॥ ( २ ) ॥ भद्रदारुः ॥ "भद्रदारुणि च क्लीबम्" इत्यमरमाला ॥ "**पुंनपुंसकयोर्दारुः**" इति त्रिकाण्डशेषात् पुंस्यपि ॥ ( ३ ) ॥ द्रुकिलिमम् ॥ ॥ ( ४ ) ॥ पीतदारु ॥ ( ५ ) ॥ "**पुंनपुंसकयोर्दारु**" इति त्रिकाण्डशेषः ॥ ( ६ ) ॥ ५३ ॥ पूतिकाष्ठम् ॥ ( ७ ) ॥ देवदारुः ॥ ( ८ ) ॥ **अष्ट देवदारुवृक्षस्य** ॥ **अथेति** ॥ पाटलिः ॥ ( १ )॥ "**पाटला** पाटलौ स्त्री स्यादस्याः पुष्पे पुनर्न ना" ॥ ( २ ) ॥ "अलिप्रिया विशालाग्राऽप्यमोघा पाटलिर्द्वयोः" इति वाचस्पतिः ॥ "**मोघा** स्त्री पाटलावृक्षे मोघं त्रिषु निरर्थके" इति रुद्रात् '**मोघा**' अपि ॥ (३)॥ काचस्थाली ॥ स्वामी तु "काला" "स्थाली" इति पठति ॥ "**काला** तु कृष्णवृन्ताख्यामाञ्जिष्ठा-नीलिकासु च" ॥ "**स्थाली** स्यात्पाटलोख्योः" ॥ ( ४ ) ॥ फलेरुहा ॥ ( ५ ) ॥ ५४ ॥ "**कृष्णवृन्ता** पाटलायां माषपर्ण्यां च योषिति" ॥ ( ६ ) ॥ कुबेराक्षी ॥ ( ७ ) ॥ **सप्त "पाडली" इति ख्यातस्य** ॥ **श्यामेति** ॥ "**श्यामो** वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु ॥ मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि वल्गुली ॥ यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायाम्" ॥ ( १ ) ॥ महिलाह्वया ॥ ( २ ) ॥ "**प्रियङ्गुर्लतयोर्लता** । स्पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च" ॥ ( ३ ) ॥ गोवन्दनी ॥ ( ४ ) "**गुन्द्रस्तेजनके** स्त्री तु प्रियङ्गौ भद्रमुस्तके" ॥ ( ५ ) ॥ "**प्रियङ्गुः** स्त्री राजिकाकणयोरपि । फलिन्यां कङ्गुसस्ये च" ॥ ( ६ ) ॥ **फलिन्यग्निशिखायां** स्त्री फलिन्यां फलिने त्रिषु" ॥ ( ७ ) ॥ "**फली** फलिन्याम्" ॥ ( ८ ) ॥ ५५ ॥ "**विष्वक्सेना** फलिन्यां स्याद् **विष्वक्सेनो** जनार्दने" ॥ ( ९ ) ॥ "**गन्धफल्यपि** गुन्द्रायां चम्पकस्य च कोरके" ॥ ( १० )॥ कारम्भा ॥ ( ११ ) ॥ "**प्रियकः** पीतसारके । नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च" ॥ ॥ ( १२ ) ॥ **द्वादश प्रियङ्गुवृक्षस्य** ॥ **मण्डूकेति** ॥ मण्डूकपर्णः ॥ ( १ ) ॥ "**पत्रोर्णं** धौतकौशेये क्लीबं स्याच्छोणके पुमान्" ॥ ( २ ) ॥ नटः ॥ ( ३ ) ॥ कट्वङ्गः ॥ ( ४ ) ॥ "**टुण्टुकः** शोणकाल्पयोः" ॥ ( ५ ) ॥ ५६ ॥ स्योनाकः ॥ '**श्योनाकः**' तालव्यादिरपि ॥ (६)॥ शुकनासः ॥ ( ७ ) ॥ "**ऋक्षः** पर्वतराजे स्याद्भल्लूके शोणके पुमान् ॥ ( ८ ) ॥ दीर्घवृन्तः ॥ ॥ ( ९ ) ॥ कुटन्नटः ॥ ( १० ) ॥ "**शोणः** कृशानौ श्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनद-

१—प्रियंगुर्वृकाखवती । "सरलप्रियङ्गुणाढ्यम्" इति दमयन्तीश्लेषात् ॥

**अमृता च वयस्था च त्रिलिङ्गस्तु बिभीतकः। नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ५८**
**अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता । हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥५९**
**पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः । कर्णिकारः परिव्याधे लकुचो लिकुचो डहुः॥६०॥**
**पनसः कण्टकिफलः निचुलो हिज्जलोऽम्बुजः । काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला॥६१॥**

च्छाये" ॥ शोणकः ॥ स्वामी तु—**शोनकः**—इत्याह ॥ ( ११ ) ॥ अरलुः ॥ ( १२ ) ॥ **द्वादश शोणकस्य** ॥ **तिष्येति** ॥ "नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये । नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससि" इति श्रवणात् तिष्यं मङ्गल्यं फलमस्याः तिष्यफला ॥ ( १ ) ॥ आमलकी ॥ ( २ ) ॥ ५७ ॥ "अमृता मागधीपथ्यागुडूच्यामलकीषु च" ॥ ( ३ ) ॥ "वयस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां, तरुणे त्रिषु" ॥ कायस्थाऽपि ॥ "कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता" इति रभसः ॥ ( ४ ) ॥ **चत्वारि आमलक्याः** ॥ **त्रीति** ॥ विभीतकः ॥ ( १ ) ॥ "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके ॥ रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये" ॥ ( २ ) ॥ "धान्यत्वचि **तुषः** पुंसि विभीतकतरावपि" इति मूर्धन्यान्ते रुद्रः ॥ ( ३ ) ॥ कर्षफलः ॥ ( ४ ) ॥ भूतावासः ॥ ( ५ ) ॥ कलिद्रुमः ॥ ( ६ ) ॥ **षट् "बहेडा" इति ख्यातस्य** ॥ ५८ ॥ **अभेति** ॥ "**अभया** स्त्री हरीतक्यामुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गः स्यात्" इति मेदिनी ॥ ( १ ) ॥ "**अव्यथो** निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ "**पथ्या** स्त्री हरीतक्यां हिते त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ "**कायस्था** तु हरीतक्यामलक्योश्च प्रकीर्तिता" इति रभसः ॥ "**कायस्थः** परमात्मनि । नरजातिविशेषे ना हरीतक्यां तु योषिति" इति मेदिनी ॥ ( ४ ) ॥ "**पूतना** तु हरीतक्यां दानवीरोगभेदयोः" इति मेदिनी ॥ ( ५ ) ॥ अमृता ॥ ( ६ ) ॥ हरीतकी ॥ ( ७ ) ॥ "**हैमवत्यभयास्वर्णक्षीर्योः** श्वेतवचोमयोः" इति विश्वमेदिन्यौ ॥ ( ८ ) ॥ चेतकी ॥ ( ९ ) ॥ "**श्रेयसी** करिपिप्पल्यामभयापाठयोरपि" इति मेदिनी ॥ ( १० ) ॥ "**शिवो** मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् ॥ सुखे क्षेमे जले क्लीबं **शिवा** झाटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च" इति मेदिनी ॥ ( ११ ) ॥ **एकादश हरीतक्याः** ॥ ५९ ॥ **पीति** ॥ पीतद्रुः ॥ ( १ ) ॥ "**सरलः** पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु" इति मेदिनी ॥ ( २ ) ॥ "**पूतिकाष्ठं** च सरलदेवदारुमहीरुहोः" इति मेदिनी ॥ ( ३ ) ॥ **त्रीणि "सरला" इति ख्यातस्य** ॥ **अथेति** ॥ द्रुमोत्पलः ॥ ( १ ) ॥ "**कर्णिकारः** पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी ॥ ( २ ) ॥ "**परिव्याधस्तु** पुंसि स्याद्वेतसे च द्रुमोत्पले" इति मेदिनी ॥ ( ३ ) ॥ **त्रीणि "कठचम्पा" इति ख्यातस्य** ॥ **लेति** ॥ लकुचः ॥ ( १ ) ॥ लिकुचः ॥ ( २ ) ॥ डहुः ॥ '**अडहुः**' इत्यपि—इति स्वामी ॥ ॥ ( ३ ) ॥ **त्रीणि "वडहर" इति ख्यातस्य** ॥ ६० ॥ "**पनसः** कण्टकिफले कण्टके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्" इति मेदिनी ॥ '**पणसः**' इत्यपि पाठः ॥ ( १ ) ॥ कण्टकिफलः ॥ ( २ ) ॥ **द्वे "कटहर" इति ख्यातस्य** ॥ **नीति** ॥ "**निचुलस्तु** निचोले स्याद्हिज्जलाख्यमहीरुहे" इति मेदिनी ॥ (१) ॥ हिज्जलः॥ "**इज्जलः**" इत्यपि ॥"निचुलेज्जलहिज्जलाः" इति रभसः ॥ (२) ॥ अम्बुजः॥(३)॥ **त्रीणि स्थलवेतसस्य** ॥ "वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवात् ॥ "**समुद्रफलस्य**" **इत्यन्ये** ॥ **केति** ॥ काकोदुम्बरिका ॥ ( १ ) ॥ "**फल्गु**सारेऽभिधेयवत् । नदीभेदे मलप्वां स्त्री" इति मेदिनी ॥ ( २ ) ॥ "**मलं** पापे च किट्टे च वर्चस्के कृपणे **मलः**" इति धरणिः ॥ मलात् पापात् पुनाति मलपूः ॥ '**मलयूः**' इति वा पाठः ॥ ( ३ ) ॥ जघनेफला ॥ ( ४ ) ॥ **चत्वारि "कदुम्बरी"**

१—शकटे यथा"हस्तिभिस्तुरगैरक्षैः संबाधेऽस्मिन् रणाङ्गणे"। 'समुदाये प्रवृत्ता अवयवेष्वपि वर्तन्ते' इति रथावयवेऽपि वर्तते । विश्वेऽपि "शकटव्यवहारयोः" इत्युपलभ्यते ॥ २—व्यवहार आयव्ययादिर्न्यायः । तत्र यथा "राजाध्यक्षः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ३—पनसो दन्त्यान्त्यः । " प्रियालपनसाराणि यौवनानीव वनानि " इति दमयन्तीश्लेषात् ॥

अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः । पिचुमर्दश्च निम्बेऽथ पिच्छिलाऽगुरु शिंशपा॥६२॥
कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः । भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः६३॥
एतस्य कालिका गन्धफली स्यादथ केसरे । वकुलो वञ्जुलोऽशोके समौ करकदाडिमा ॥६४॥
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः । जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥६५॥
श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका । जयाऽथ कुटजः शक्रो वत्सको गिरिमल्लिका६६

इति ख्यातस्य ॥ ६१ ॥ अरीति ॥ "अरिष्टे लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च" इति मेदिनी ॥ ( १ ) ॥ "सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे । निम्बे ना सर्वतोभद्रा गम्भारीनटयोषितोः" इति मेदिनी ॥(२)॥ "हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च" इति मेदिनी॥(३)॥ मालकः ॥(४) पिचुमर्दः ॥"पिचुमन्दः" इति स्वामी ॥(५) ॥ निम्बः ॥(६)॥ षट् "नीम्ब" इति ख्यातस्य ॥ अथेति॥"पिच्छिलं विजिलेऽन्यवत्। स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयोः" ॥ ( १ ) ॥ "अगुरु क्लीबे शिंशपायां जोङ्गके, लघुनि त्रिषु" इति रुद्रः ॥ ( २ ) ॥ द्वितालव्या शिंशपा ॥ "श्वश्रूस्तथा श्वशुरशाश्वतशिंशपाश्च" इति शभेदात् ॥ अगुरुसारा शिंशपा 'अगुरुशिंशपा' इत्येकं नाम—इति स्वामी ॥ तन्न ॥ उक्तरुद्रविरोधात् ॥ ( ३ ) ॥ त्रीणि "सिसँव" इति ख्यातस्य ॥ ६२ ॥ केति ॥ सा कपिलवर्णपुष्पा सती भस्मगर्भोच्यते ॥ ( १ ) ॥ ऐकं कपिलवर्णायाः॥ शीति ॥ शिरीषः ॥ ( १ ) ॥ कपीतनः ॥ ( २ ) ॥ भण्डिलः ॥ रलयोरेकत्वात् भण्डिरोऽपि ॥ "भण्डिरो भण्डिलो ना" इति वाचस्पतिः ॥ ( ३ ) ॥ त्रीणि "सिरीस" इति ख्यातस्य ॥ अथेति ॥ "चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे" इति मेदिनी ॥ ( १ ) ॥ चम्पकः ॥ ( २ ) ॥ "हेमपुष्पं तु चम्पके । अशोकद्रौ जपापुष्पे" ॥ ( ३ ) ॥ त्रीणि चम्पकस्य ॥ ६३ ॥ एतेति ॥ "प्रियङ्गौ स्त्री गन्धफली चम्पकस्य च कोरके" इति रुद्रः ॥ ( १ ) ॥ एकं चम्पककलिकायाः ॥ अथेति॥"केसरं हिङ्गुनि क्लीबं किञ्जल्के न स्त्रियां पुमान् । सिंहच्छटायां पुंनागे वकुले नागकेसरे" इति मेदिनी ॥ ( १ ) ॥ वकुलः ॥(२)॥ द्वे "मौंसरी" इति ख्यातस्य ॥ वञ्जिति ॥ वञ्जुलः ॥ ( १ ) ॥ "अशोकस्त्रिषु निःशोके पुंसि कङ्केल्लिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्" इति मेदिनी ॥ ( २ ) ॥ द्वे अशोकस्य ॥ समाविति ॥ "करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्भेघोपले, न स्त्री करङ्के च कमण्डलौ" इति मेदिनी ॥ ( १ ) ॥ "दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु" इति मेदिनी ॥ दाडिम्बोऽपि "दाडिम्बसारपिण्डीरस्वाद्वम्लशुकवल्लभाः" इति रभसात् ॥ ( २ ) ॥ द्वे दाडिमस्य ॥ ६४ ॥ चेति ॥ "चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे" इति मेदिनी ॥ ( १ ) ॥ केसरः ॥ ( २ ) ॥ नागकेसरः "स्वर्णभस्पर्ध्यो नागकेसरः षट्पदप्रियः" इति रभसः ॥ (३) ॥ काञ्चनाह्वयः ॥ (४) ॥ चत्वारि चाम्पेयस्य ॥ जयेति ॥ "जया जयन्तीतिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे" इति मेदिनी ॥ ( १ ) ॥ "जयन्ती वृक्षभिद्गौर्योरिन्द्रपुत्रीपताकयोः । पुमानैन्द्रौ हरे भीमे" इति मेदिनी ॥ ॥ ( २ ) ॥ तर्कारी ॥ ( ३ ) ॥ नादेयी ॥ ( ४ ) ॥ वैजयन्तिका ॥ ( ५ ) ॥ पञ्च "अरणी" इति ख्यातायाः ॥ "जाही" इति ख्यातायाः, इत्यन्ये ॥ ६५ ॥ श्रीति ॥ "श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे" इति हैमः ॥ ( १ ) ॥ अग्निमन्थः ॥ ( २ ) ॥ "कणिका सूक्ष्मवस्तुनि । अग्निमन्थे"

१—वकुलोऽन्तस्थादिः । अत एव मुकुटेन 'उच्यते वर्ण्यते कविभिः' इति विग्रहो दर्शितः । नापि व्याख्यात्रा निम्बवद् 'बवयोरभेदः' इत्युक्तम्॥तथा च "भवद्भैरिनगरमिवानेकविधवकुलसङ्कुलम्" इति दमयन्ती ॥ न च बवयोरैक्येन निर्वाहः। "व्यालम्बिना" इत्यादौ यत्र वबयोः व्याकरणेन निर्णयस्तत्रैव तदङ्गीकारात्।न हि वकुलशब्दे व्याकरणेन स्पर्शादित्वं संभवति। अत एव दमयन्तीव्याख्यात्राऽपि "महात्रातिकान्तःपातिभिः" इत्यत्रैव "बवयोरैक्यम्" इत्युक्तम् । न त्वत्रापि इति दिक् ॥
२—वस्तुतस्तु कपिलादिकमपि शिंशपासामान्यपर्यायमेव । अत एव "कपिला रेणुकायां च शिंशपागोविशेषयोः" इति मेदिनी, "कपिलो वह्निपिङ्गयोः । कुक्कुरे मुनिभेदे च कपिला शिंशपातरौ । पुण्डरीककरिण्यां च रेणुकागोविशेषयोः" इति हैमश्च संगच्छते । तस्मात् 'पञ्च नामानि' इति युक्तम् ॥

**एतस्यैव कलिंगेन्द्रयवभद्रयवं फले । कृष्णपाकफलाविघ्नसुषेणाः करमर्दके ॥ ६७ ॥**
**कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुकः।सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि॥**
**वेणी खरा गरी देवताडो जीमूत इत्यपि । श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ॥६९॥**
**भूपदी शीतभीरुश्च सैवास्फोता वनोद्भवा । शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा॥**
**सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी । गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ७१**

इति हैमः ॥ ( ३ ) ॥ गणिकारिका ॥ ( ४ ) ॥ "जया जयन्तीतिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे" इति मेदिनी ॥ ( ५ ) ॥ पञ्च जयपर्णस्य ॥ "अरणी" इति ख्याताया इत्येके ॥ दशाप्यरणिपर्यायाः, इति स्वामी ॥ अथेति ॥ "कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि" ॥ ( १ ) ॥ "शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः" ॥ ( २ ) ॥ वत्सकः ॥ ( ३ ) ॥ गिरिमल्लिका ॥ ( ४ ) ॥ चत्वारि "कुरैया" इति ख्यातस्य ॥६६॥ एतेति ॥ एतस्य पूर्वोक्तस्य (कुटजस्य ) फले ॥ कलिङ्गम् ॥ ( १ ) ॥ इन्द्रयवम् ॥ ( २ ) ॥ भद्रयवम् ॥ ( ३ ) ॥ 'कलिङ्गेन्द्रयवः पुमान् " इत्यमरमालादर्शनादिन्द्रयवः पुमानपि ॥ तत्रैव स्त्रीकाण्डपाठात् कलिङ्गा च ॥ त्रीणीन्द्रयवस्य ॥ कृष्णेति ॥ कृष्णपाकफलः ॥ ( १ ) ॥ अविघ्नः ॥ ( २ ) ॥ "सुषेणः करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः" इति मेदिनी ॥ ( ३ )॥ "मकरन्दः करमर्दः शिरीषो मूर्धपुष्पकः" इति शुभाङ्गः ॥ करमर्दकः ॥ ( ४ ) ॥ चत्वारि "करोंदा" इति ख्यातस्य ॥ ६७ ॥ कालेति ॥ "कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे" इति मेदिनी ॥ ( १ ) ॥ "तमालस्तिलके खङ्गे तापिच्छे वरुणद्रुमे" इति मेदिनी ॥ (२) ॥ तापिच्छः ॥ ( ३ ) ॥ त्रीणि तमालस्य ॥ अथेति ॥ "सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्धुवारितः । नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्धुकः" इति ॥ (१) ॥ सिन्दुवारः ॥(२)॥ इन्द्रसुरसः ॥ 'इन्द्रसुरिसः' इति स्वामी ॥(३)॥ "निर्गुण्डी नीलशेफाल्यां सिन्दुवारद्रुमेऽपि च" इति मेदिनी ॥ ( ४ ) ॥ "इन्द्राणी करणे स्त्रीणां पौलोमीसिन्दुवारयोः" इति मेदिनी ॥ ( ५ ) ॥ पञ्च "स्यौंडी" इति ख्यातायाः ॥ ६८ ॥ वेणीति॥"देवताडेऽपि वेणी स्यात्प्रवेण्यामपि योषिति" इति रभसः॥(१)॥"देवताडे खरा तीक्ष्णे त्रिषु स्याद्गर्दभे पुमान् " इति रभसः ॥ ( २ ) ॥ " गरी खरायां करणे क्लीबं नागविषे विषे " ॥ 'खरागरी' इत्येकमाहुः ॥ 'गरागरी' इति स्वामी ॥ तदुक्तम्—"जीमूतको देवताडो वृन्तकोशो गरागरी " इति ॥(३)॥ " देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी ॥ देवमिन्द्रियं ताडयति । "देवताडः सैंहिकेये जीमूते च हुताशने" इति मेदिनी ॥ ( ४ ) ॥ " जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे " इति मेदिनी ॥ ( ५ ) ॥ पञ्च देवताडस्य ॥ श्रीति ॥ श्रीहस्तिनी ॥ ( १ ) ॥ भूरुण्डी ॥ ( २ ) ॥ हस्तिकर्णपत्त्रा शाकविशेष इति स्वामी ॥ द्वे माषादिक्षेत्रभवाया बकुलपुष्पाभलोहितपुष्पायाः "शिरीहथिनी" इति ख्यातायाः॥ तृणेति ॥ "तृणशून्यं मल्लिकायां तथा स्यात्केतकीफले " इति विश्वमेदिन्यौ ॥ 'तृणशूल्यम्' इति तु स्वामी ॥ ( १ ) ॥ "मल्लिको हंसभिद्यपि । मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः" इति मेदिनी ॥ ( २ ) ॥ ६९ ॥ भूपदी ॥ ( ३ ) ॥ शीतभीरुः॥' शतभीरुः ' इति वा पाठः ॥ " मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम् " इति वाचस्पतिः ॥ (४) ॥ चत्वारि"वेलि"इति ख्यातायाः॥ सैवेति ॥ "आस्फोता विष्णुक्रान्तायां वनमल्ल्यर्कपर्णयोः" इति रभसः॥"आस्फोतस्तु पुमानर्कपर्णे स्यात्कोविदारके । आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति" इति मेदिनी ॥(१) ॥ एकं वनमल्ल्याः ॥ शेफेति ॥ शेफालिका ॥ (१) ॥ "सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री, सुखवाह्येऽन्यलिङ्गः स्यात्" इति मेदिनी ॥ ( २ ) ॥ निर्गुण्डी ॥ ( ३ ) ॥ " नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि "न्यवारी"इति ख्यातायाः॥७०॥सितेति ॥ श्वेतसुरसा ॥(१)॥भूतवेशी ॥ ( २ ) ॥ द्वे श्वेतनिर्गुण्ड्याः ॥ अथेति ॥ "मागधो मगधोद्भूते शुक्लजीरकवन्दिनोः । वैश्यतः क्षत्रियापुत्रे मागधी स्याच्च पिप्पली ॥

१—काव्यकल्पलतायाम् "रविमिव तापिच्छविराजितं वनम्" इति श्लेषान्निरनुस्वारः—इति मुकुटः ॥

**अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता। सुमना मालती जातिः सप्तला नवमालिका ७२॥**
**माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः। सहा कुमारी तरणिरम्लानस्तु महासहा ॥७३॥**
**तत्र शोणे कुरबकस्तत्र पीते कुरुण्टकः। नीला झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा॥७४॥**
**सैरीयकस्तु झिंटी स्यात्तस्मिन् कुरबकोऽरुणे। पीता कुरण्टको झिंटी तस्मिन् सहचरी द्वयोः ७५**

यूथी भाषाविशेषश्च '' इति हैमः ॥ ( १ ) ॥ ''गणिका यूथीवेश्येभीतर्कारीषु ना तु दैवज्ञे '' इति मेदिनी ॥ ॥ ( २ ) ॥ यूथिकाऽऽम्रातके पुष्पविशेषेऽपि च योषिति '' इति मेदिनी ॥ ( ३ ) ॥ '' अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च'' । अम्बष्ठाऽप्यम्ललोण्यां स्यात्पाठायूथिकयोरपि'' इति विश्वमेदिन्यौ ॥ ( ४ ) ॥ चत्वारि ''जूही'' इति ख्यातायाः॥सेति॥''स्याद्धेमपुष्पिका यूथ्यां चम्पको हेमपुष्पकः'' इति मेदिनी॥(१)॥एकं तस्या एव पीतपुष्पायाः ॥७१॥अतीति ॥ ''अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च'' इति मेदिनी॥( १ )॥ पुण्ड्रकः ॥ ( २ ) ॥ ''वासन्ती माधवीयूथ्योरुष्ट्रे नाऽवहिते त्रिषु '' इति मेदिनी ॥ ( ३ ) ॥''माधवोऽजे मधौ राधे वसन्ते न स्त्रियां मिसौ । वासन्तीकुट्टनीमद्यशर्करामधुषु स्त्रियाम्'' इति मेदिनी॥रन्तिदेवोऽपि ॥''वैशाखे माधवः कृष्णे माधवी चातिमुक्तके '' ॥ (४) ॥ लता ॥ (५)॥ पञ्च कुन्दभेदस्य॥स्विति॥''स्त्रियां सुमनसो भूम्नि पुष्पे, जातौ तु भेदतः । विदुष्यपि यदा दृष्टस्तदा भेदेन शिष्यते''इति व्याडिः ॥''सुमनायाश्च पत्रेण''इति सुश्रुतदर्शनात् टाबन्ताऽपि ॥ ( १ ) ॥ '' मालती युवतौ काचमाच्यां जातिविशल्ययोः । ज्योत्स्नायां निशि नद्यां च'' इति हैमः ॥(२)॥'' जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम् '' इति मेदिनी॥ ( ३ )॥ त्रीणि ''चँवेली'' इति ख्यातायाः॥सप्तेति ॥''अथ सप्तला । नवमाला-चर्मकषागुञ्जासु पाटलौ स्त्रियाम् '' इति मेदिनी॥ (१)॥नवमालिका ॥(२)॥ द्वे नवमालिकायाः॥७२॥मेति ॥ माध्यम् ॥ ( १ ) ॥ कुन्दम् ॥ ''माध्यः कुन्दः कुरुण्टकः '' इति पुंस्काण्डे रत्नकोषात् पुंस्त्वमपि ॥ कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना '' इति मेदिनी ॥ ( २ ) ॥ द्वे कुन्दस्य ॥ रक्तेति ॥ ''रक्तकोऽम्लान-बन्धूकरक्तवस्त्रानुरागिषु'' इति मेदिनी ॥ ( १ ) ॥''बन्धूकं बन्धुजीवे स्याद्बन्धूकः पीतसारके'' इति मेदिनी ॥ ॥ ( २ ) ॥ बन्धुजीवकः ॥( ३ ) ॥ त्रीणि''दोपहरिया''इति ख्यातस्य ॥ सहेति ॥ '' सहो बले न स्त्रियां स्यात्स्त्रियां तु नखभेषजे । दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च'' इति मेदिनी ॥ ( १ ) ॥ ''कुमारी रामतरुण्यां नवमाल्ये नदीभिदि । कन्यापराजितागौरीजम्बूद्वीपेषु च स्मृता '' इति विश्वः ॥ ( २ ) ॥ ''तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् '' इति मेदिनी ॥ ( ३ ) ॥ त्रीणि ''घीउकुआरी'' इति ख्यातायाः ॥ अम्लेति ॥ ''अम्लानस्त्वमले झिण्टीभेदे''इति हैमः॥''अम्लानो महासहायां ना वाच्यलिङ्गस्तु निर्मले''इति मेदिनी॥(१)॥ '' महासहा माषपर्ण्यामम्लानेऽपि च योषीति'' इति मेदिनी ॥ (२) ॥ द्वे ''कटसरया'' सामान्यस्य॥७३॥ तत्रेति ॥ तत्राम्लाने शोणे रक्ते ॥''कुँरबकः शोणाम्लाझिण्टीप्रभेदयोः''इति मेदिनी ॥ उकारद्वयवान् (कुँरुवकः) इति मुकुटः॥(१)॥एकं रक्तवर्णायाः ॥ तत्रेति॥''कुरुण्टकः पीतपुष्पाम्लानझिण्टिकयोः पुमान्''इति मेदिनी ॥ '' कुरण्टी दारुपुत्र्यां ना झिण्ट्यम्लानप्रभेदयोः '' इति मेदिनी इत्येकोकारवान्—इति कश्चित् ॥ ॥ (१) ॥ पीतपुष्पयुक्त—''कुटसरया''—इति ख्याताया एकम् ॥ नीलेति ॥ '' बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः '' इति मेदिनी ॥ ( १ ) ॥ '' दासी बाणाभुजिष्ययोः '' इति मेदिनी ॥ ( २ ) ॥ आर्तगलः ॥ ( ३ ) त्रीणि नीलझिण्टिकायाः ॥ ७४ ॥ सैरीयकेति ॥ सैरीयकः ॥ ''सैरेयकः'' इति पाठो वा ''सैरीयकः सहचरः सैरेयश्च सहाचरः । पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत् ॥ पीतः कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृतः । नील आर्तगलो दासी बाणा ओदनपाक्यपि'' ॥ ( १ ) ॥ झिण्टी॥(२)॥ द्वे झिण्टीसामान्यस्य ॥ तस्मिन्निति ॥ तस्मिन् सैरेयके अरुणे । कुरबकः॥(१)॥

१-अस्यार्धश्लोकस्य''सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरबकोऽरुणे'' इत्यर्धव्याख्योत्तरं व्याख्या युक्ता ॥ २—पूर्वार्धं तु मेदिनीपठितम् । उत्तरार्धानुपूर्वी तु मेदिन्यां नोपलभ्यते । किंतु ''शर्करामधुवासन्तीकुट्टिनीमदिरासु च'' इत्थमुपलभ्यते ॥ ३—अत्र रेफो निरुकारः ''कुरबकारवकारणताम्'' इति रघुः—इति मुकुटः ॥''कुरबकैः कुजन्मभिः सह संवससि'' इति दमयन्तीश्लेषश्च ॥ ४—''किरातिके कुरु कुरबकाचितां चिताम्'' इति बाणः—इति मुकुटः ॥

ओड्रपुष्पं जवा पुष्पं वज्रपुष्पं तिलस्य यत् । प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ । उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चास्य फले मातुलपुत्रकः । फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः । जम्बीरोऽप्यथ पर्णासे कठिंजरकुठेरकौ ॥ ७९ ॥
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः । अर्काह्ववसुकास्फोतगणरूपविकीरणाः ॥८० ॥

एकं रक्तकुरण्टकस्य ॥ पीतेति ॥ "भवेत्सहचरो झिंटयां द्वयोरनुचरे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ सहचरी ॥ ( २ ) ॥ द्वे पीतकुरण्टकस्य ॥ ७५ ॥ ओड्रेति ॥ "ओड्राः पुंभूम्नि नीवृति । ओड्रः ख्यातो जवापुष्पे" इति मेदिनी ॥ ओड्रपुष्पम् "ओड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तितः" इति त्रिकाण्डशेषः ॥ ( २ ) ॥ द्वे "ओडर" इति ख्यातायाः ॥ पुष्पमिति ॥ वज्रपुष्पम् ॥ ( १ ) ॥ तिलस्य ( यत् ) पुष्पम् ॥ एकं तिलपुष्पस्य॥ प्रतीति ॥ प्रतिहासः ॥ ( १ ) ॥ शतप्रासः॥ (२) ॥ चण्डातः ॥(३) ॥ हयमारकः ॥ ( ४ ) ॥ ७६ ॥ "करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः । करवीर्यदितिश्रेष्ठगवीपुत्रवतीषु च" इति मेदिनी ॥ ( ५ ) ॥- पञ्च "कणेर" इति ख्यातस्य ॥ करीति ॥"वंशाङ्कुरे करीरोऽस्त्री वृक्षाभिद्घटयोः पुमान् । करीरी चीरिकायां च दन्तमूले च दन्तिनाम्" इति मेदिनी ॥ ( १ ) ॥ "क्रकरः करीरवृक्षे दीने क्रकचे च पक्षिभेदे च" इति मेदिनी ॥ ( २ ) ॥ "ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान् । सग्रन्थौ त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि "करील" इति ख्यातस्य ॥ उन्मत्त इति ॥ "उन्मत्त उन्मादवति धूस्तूरमुचुकुन्दयोः" इति मेदिनी ॥ ( १ ) ॥ "कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये" इति विश्वः ॥ ( २ ) ॥ "धूर्त तु खण्डलवणे धूस्तूरे ना विटे त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ "धत्तूरस्तु स्मृतो धूर्तो देविता कितवः शठः" इति स्वामी ॥ ( ४ ) ॥ कनकाह्वयः ॥ "कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च" इति मेदिनी ॥ ( ५ ) ॥ ७७ ॥ "मातुलो व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धत्तूरे" इति मेदिनी ॥ ( ६ ) ॥ "मदनः स्मरवसन्तद्रुभिद्धत्तूरसिह्लके" इति मेदिनी ॥ ( ७ ) ॥ सप्त धत्तूरस्य ॥ अस्येति ॥ अस्य धूर्त्तस्य फले ॥ "मातुलपुत्रक इत्यपि मामकतनये फले च धूर्तस्य" इति मेदिनी ॥ ( १ ) ॥ एकं धत्तूरफलस्य ॥ फलेति ॥ फलपूरः ॥ ( १ ) ॥ बीजपूरः ॥ ( २ ) ॥ द्वे "बिजौरा" इति ख्यातस्य ॥ रुचेति ॥ "रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः । सौवर्चलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च" इति मेदिनी ॥( १ )॥ मातुलुङ्गकः ॥ ( २ ) ॥ द्वे मातुलिङ्गस्य ॥ स्वामी तु चतुर्णां पर्यायतामाह—तदुक्तम् "फलपूरो बीजपूरः केसरी बीजपूरकः। बीजकः केसराम्लश्च मातुलुङ्गश्च पूरकः"॥ अनेकार्थे—"सौवर्चलं मातुलुङ्गं शिलाचन्दनपेषणी । ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम्"—इति ॥ ७८ ॥ समीति ॥ "समीरणस्तु पवने पथिके च फणिज्जके" इति मेदिनी ॥ ( १ ) ॥ "भवेन्मरुवकः पुष्पभिच्छल्यद्रुफणिज्जके" ॥ ( २ ) ॥ प्रस्थपुष्पः ॥ ( ३ ) ॥ फणिज्जकः ॥ ( ४ ) ॥ "जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे" इति मेदिनी ॥ ( ५ ) ॥ पञ्च "मरुआ" इति ख्यातस्य ॥ अथेति ॥ पर्णासः ॥ ( १ ) कठिंजरः ॥ ( २ ) ॥ कुठेरकः ॥ ( ३ ) ॥ त्रीणि पर्णासस्य ॥ ७९ ॥ सीति ॥ अत्र पर्णासे सिते ॥ अर्जकः ॥ ( १ ) ॥ एकं श्वेतपर्णासस्य ॥ पोति ॥ पाठी ॥ ( १ ) ॥ "चित्रकं तिलके ना तु व्याघ्रभिचञ्चुपाठिषु" इति मेदिनी ॥ ( २ ) ॥ वह्निसंज्ञकः ॥ ॥ ( ३ ) ॥ त्रीणि "चीता" इति ख्यातस्य ॥ अर्केति ॥ अर्काह्वः "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" इति मेदिनी॥(१)॥"वसुकं रोमके पुंसि शिवमल्ल्यर्कपर्णयोः" इति मेदिनी ॥(२) ॥"आस्फोतस्तु पुमानर्कपर्णे स्यात् कोविदारके । आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति " इति मेदिनी ॥ ( ३ ॥

---

१—इतः परम् "भद्रायाम्" इत्यपि लिखितमासीत् । तथापि मेदिन्यां तदपाठात्त्यक्तम्॥ २- कटकेऽपि ॥इ०पा०॥

मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ । शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि । वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता॥८२॥
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि।मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥८३ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि।पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा॥८४॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका । कटुः कटंवराऽशोकरोहिणी कटुरोहिणी॥८५॥

गणरूपः ॥ ( ४ ) ॥ विकीरणः ॥ ( ५ ) ॥ ८० ॥ "मन्दारः स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः" इति मेदिनी ॥ ( ६ ) ॥ अर्कपर्णः ॥ ( ७ ) ॥ सप्त "आक" इति ख्यातस्य ॥ अत्रेति ॥ अस्मिन् शुक्ले॥"अलर्को धवलार्के, स्याद्योगोन्मादितकुक्कुटे" इति मेदिनी॥(१)॥ प्रतापसः ॥(२)॥ द्वे श्वेतार्कस्य॥शिवेति॥शिवमल्ली॥(१)॥ "पाशुपतो बकपुष्पे स्यात्पशुपत्याधिदैवते । तद्भक्ते च" इति मेदिनी ॥(२)॥" एकाष्ठीला वनतिक्तिकौषधौ पुंसि बकपुष्पे" इति मेदिनी ॥ ( ३ ) ॥ बुकः ॥ "बकः " इति पाठे "बकस्तु बकपुष्पे स्यात्कङ्के श्रीदे च रक्षसि " इति मेदिनी ॥ ( ४ ) ॥ " ब (व) सुर्ना देवभेदाग्निभायोक्त्रब-कराजसु । क्लीबं वृद्धयौषधेऽश्वे च रैरत्नमधुरे त्रिषु " इति मेदिनी ॥ ( ५ ) पञ्च "गुलमा" इति ख्यातस्य बकपुष्पस्य ॥ ८१ ॥ बन्देति ॥ " बन्दा लतान्तरे स्मृता । भिक्षुक्यामपि बन्द्यां च " इति स्पर्शादौ मेदिनी ॥ ( १ ) ॥ " वृक्षादनी तु बन्दायां विदारीकन्दकेऽपि च" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ वृक्षरुहा ॥ ॥ ( ३ ) ॥ "जीवन्तिका गुडूच्यां च जीवाख्यशाकबन्दयोः " इति मेदिनी ॥ ( ४ ) ॥ चत्वारि वृक्षोपरि-जातलताविशेषस्य ॥ वत्सेति ॥ वत्सादनी ॥ ( १ ) ॥ छिन्नरुहा ॥ ( २ ) ॥ गुडूची ॥ ( ३ ) ॥ तन्त्रिका ॥ ( ४ ) ॥ " अमृता मागधीपथ्यागुडूच्यामलकीषु च " इति मेदिनी ॥ ( ५ ) ॥ ८२ ॥ "जीवन्तिका गुडूच्यां च जीवाख्यशाकबन्दयोः " इति मेदिनी ॥ ( ६ ) ॥ सोमवल्ली ॥ ( ७ )॥ " विशल्याऽग्निशिखादन्तीगुडूचीत्रिपुटासु च " इति मेदिनी ॥ ( ८ ) ॥ मधुपर्णी ॥ ( ९ ) ॥ नव गुडूच्याः ॥ मूर्वेति ॥ मूर्वा ॥ ( १ ) ॥ " देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि " इति मेदिनी ॥ ( २ ) ॥ " भवेन्मधुरसा द्राक्षामूर्विकादुग्धिकासु च " इति मेदिनी ॥ ( ३ ) ॥ "मोरटं तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः । सप्तरात्रात्परक्षीरे, मूर्विकायां तु मोरटा" इति मेदिनी ॥ ( ४ ) ॥ तेजनी ॥ ॥ ( ५ ) ॥ स्रवा ॥ संज्ञापूर्वकत्वाद्गुणाभावे स्रुवाऽपि ॥ " स्रुवा द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियाम् " इति मेदिनी ॥ ( ६ ) ॥ ८३ ॥ मधूलिका ॥ ( ७ ) ॥ मधुश्रेणी ॥ ( ८ ) ॥ "गोकर्णोऽश्वतरेऽपि स्यान्मृगसर्पगणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ " इति विश्वः ॥( ९ ) ॥"पीलुपर्णी चिञ्चि-कायां मूर्वायामौषधीभिदि" इति मेदिनी ॥ ( १० ) ॥ दश "मुहार" इति ख्यातायाः ॥ पाठेति ॥ पाठा ॥ "पाठस्तु पठने ख्यातो विद्धकर्ण्यां तु योषिति " इति मेदिनी ॥ ( १ ) ॥ " अम्बष्ठाऽप्यम्ललोण्यां स्यात् पाठायूथिकयोरपि" इति मेदिनी ॥ ( २)॥ विद्धकर्णी ॥ अविद्धकर्णी इति मुकुटः॥(३)॥ स्थापनी ॥"स्थापनं रोपणे, पुंसि वने, पाठौषधौ स्त्रियाम्" इति मेदिनी ॥ ( ४ ) ॥ "श्रेयसी करिपिप्पल्यामभयापाठयोरपि " इति मेदिनी ॥ (५) ॥ रसा ॥ " रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥ देहधातु-प्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसनापाठासल्लकीकङ्गुभूमिषु " इति मेदिनी ॥ ( ६ ) ॥ ८४ ॥ एकाष्ठीला ॥ ( ७ ) ॥ पापचेली ॥ ( ८ ) ॥ प्राचीना ॥ ( ९ ) ॥ वनतिक्तिका ॥ ( १० ) ॥ दश "पाठा" इति ख्यातायाः ॥ कोति ॥ "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुंल्लिङ्गे रसमात्रके ॥ त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च " इति मेदिनी ॥ ( १ ) ॥ कटंवरा ॥ " कटंभरा" इति पाठः—इत्यन्ये ॥ " कटंभरा प्रसारण्यां रोहिण्यां गजयोषिति । कलम्बिकायां गोलायां बर्षाभूमूर्वयोरपि" इति मेदिनी ॥ ( २ ) ॥ " अशोकरोहिणी शक्ता चक्राङ्गी शकुलादनी " इति निघण्टुः ॥ व्यस्तमपीदं नाम ॥ " अशोकः कटुरोहिण्यामशोको वञ्जुलद्रुमे" इति रभसः । "अशोकस्त्रिषु निःशोके पुंसि कङ्केलिपादपे ।

१—विश्वे तु "गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे" इत्येवं पाठ उपलभ्यते ॥

**मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी।आत्मगुप्ता जडाऽव्यण्डा कण्डूरा प्रावृषायणी८६**
**ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी। चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंवरी वृषा८७॥**
**प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि । अपामार्गः शैखरिको धामार्गवमयूरकौ ॥८८॥**
**प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरिः।हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ८९॥**
**अङ्गारवल्ली बालेयशाकवर्वरवर्धकाः । मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेशिका ॥९०॥**

स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम् '' इति मेदिनी ॥ " रोहिणी कटुरोहिण्याम् '' इति रुद्रः ॥ " रोहिणी कण्ठरुग्भिदि ॥ भभित्कटंभरासोमवल्केषु लोहितागवोः'' इति मेदिनी ॥ ( ३ ) ॥ " प्रोक्ता तिक्त-करोहिणी'' इति निघण्टुः ॥ ( ४ ) ॥ ८५ ॥ मत्स्यपित्ता ॥ ( ५ ) कृष्णभेदी । " कृष्णभेदा चण्डरुहा'' इति निघण्टुः ॥ ( ६ ) " चक्राङ्गो मानसौकासि । चक्राङ्गी कटुरोहिण्याम् '' इति मेदिनी ॥ ( ७ ) ॥ "शकुलादनी स्त्रियां कृष्णभेदी कटुकशाकयोः '' इति मेदिनी ॥ (८) ॥ अष्टौ "कुटकी''इति ख्यातायाः॥ आत्मेति ॥ आत्मगुप्ता ॥ ( १ ) ॥ " जडा स्त्रियाम् ॥ शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु '' इति मेदिनी ॥ डहयोरैक्यात् ॥ न जहाति शूकान् अजहा ॥ " ज्ञेया जाङ्गलिका सैव साऽजहा प्रावृषायणी '' इतीन्दुः–इति स्वामी ॥ ( २ ) " अव्यण्डा वृषभी गुप्ता '' इतीन्दुः ॥ ( ३ ) ॥ कण्डूरा ॥ ह्रस्वत्वमपि ॥ "कपिकच्छूश्च कण्डूरा कण्डुरा शूकशिम्बिका '' इतीन्दुः ॥(४)॥ प्रावृषायणी ॥ ( ५ ) ॥८६॥ "ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिम्बिषु '' इति मेदिनी ॥ ( ६ ) ॥ " शश्वच्छशाङ्कशिशिराणि च शूकशिम्बिः '' इत्यूष्म-विवेकात् द्वितालव्या ॥ " शूकशिम्बिस्तु मर्कटी । शूकशिम्बा च '' इति वाचस्पतिः ॥ ( ७ ) ॥ कपि-कच्छुः ॥ ( ८ ) ॥ " अथ मर्कटी । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः '' इति मेदिनी ॥ ( ९ ) ॥ नव "कँवाच'' इति ख्यातायाः ॥ चित्रेति ॥ "चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्प-नक्षत्रनदीभेदेषु च स्त्रियाम् '' इति मेदिनी ॥ ( १ ) ॥ उपचित्रा ॥ ( २ ) ॥ " न्यग्रोधस्तु पुमान्व्यामवट-योश्च शमीतरौ । न्यग्रोधी तूपचित्रायाम् '' इति मेदिनी ॥ ( ३ ) ॥ द्रवन्ती ॥ ( ४ ) ॥ "शंवरं सलिले पुंसि मृगदैत्यविशेषयोः । शंवरी चाखुपर्ण्यां स्यात् '' इति तालव्यादौ मेदिनी ॥ ( ५ )॥ " वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च व्यासमूषिकशुक्रले । तथा वास्तुस्थानभेदे पुमानेष प्रकीर्तितः। वृषा मूषिकपर्ण्यां च, यतीनामासने वृषी '' ॥ ( ६ ) ॥ ८७ ॥ प्रत्यक्श्रेणी ॥ ( ७ ) ॥ सुतश्रेणी ॥ ॥ ( ८ ) ॥ " रण्डा मूषिकपर्ण्यां च विधवायां च योषिति'' इति मेदिनी ॥ स्वामी तु--चण्डा ॥ " प्रत्यक्-श्रेणी वृषा चण्डा पुत्रश्रेण्याखुपर्णिका '' इति निघण्टुः----इत्याह ॥ ( ९) ॥ मूषिकपर्णी ॥ ( १० ) दश "मूसाकर्णी इति ख्यातायाः ॥ अपेति ॥ अपामार्गः ॥ ( १ ) ॥ शैखरिकः ॥ ( २ ) ॥ "धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके '' इति मेदिनी ॥ 'अधामार्गवः' ॥ " अधामार्गवोऽपामार्गः कोशातकी च '' इति द्व्यर्थे----इति स्वामी ॥ ( ३ ) ॥ " मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः '' इति मेदिनी ॥ ॥ ( ४ ) ॥ ८८ ॥ प्रत्यक्पर्णी ॥ ( ५ )॥ कीशपर्णी ॥ केशपर्णी इति स्वामी ॥ ( ६ ) ॥ किणिही ॥ ( ७ ) ॥ खरमञ्जरिः ॥ ( ८ ) ॥ अष्टौ अपामार्गस्य ॥ हञ्जीति । "अङ्गारवल्ली हञ्जी च वर्दो बर्बरकस्तथा'' इति निघण्टुः ॥ हञ्जिका ॥ 'फञ्जिका' इति वा–इति मुकुटः ॥ ( १ ) ॥ "ब्राह्मणं ब्रह्म-संघाते वेदभागे नपुंसकम् । भूमिदेवे तु पुँल्लिङ्गः फञ्जिकापृक्कयोः स्त्रियाम्'' इति मेदिनी ॥ ब्राह्मणी॥ ( २ ) ॥ "पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचार्वाटीपन्नगीषु च'' इति मेदिनी ॥ ॥ (३) ॥ भार्गी ॥ ( ४ ) ॥ ब्राह्मणयष्टिका ॥ ( ५ ) ॥ ८९ ॥ अङ्गारवल्ली ॥ ( ६ ) ॥ बालेयशाकः ॥ ॥ ( ७ ) ॥ वर्वरः ॥ ( ८ ) ॥ वर्धकः ॥ ( ९ ) ॥ नव भार्ग्याः ॥ मञ्जीति ॥ मञ्जिष्ठा ॥ ( १ ) ॥ विकसा ॥ "विकषा''—इति मुकुटः ॥ ( २ ) ॥ जिङ्गी ॥ ( ३ ) ॥ समङ्गा ॥ ( ४ ) ॥ कालमेशिका ॥

१—आधुनिकास्मदुपलब्धस्वामिपुस्तकद्वये तु अकारादित्वं नोपलभ्यते ॥

**मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि। यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ९१॥**
**रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा। पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका॥९२॥**
**क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा। निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका९३॥**
**प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि। नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ९४**
**रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी। अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका९५**
**कालमेषी कृष्णफला वाकूची पूतिफल्यपि। कृष्णोपकुल्या वैदेही मागधी चपला कणा९६॥**
**उषणा पिप्पली शौण्डी कोलाऽथ करिपिप्पली। कपिवल्ली कोलवल्ली श्रेयसी वसिरः पुमान्९७**

"मञ्जिष्ठा कालमेषी च" इति निघण्टुः ॥ ( ५ ) ॥ ९० ॥ "मण्डूकपर्णी मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके" इति मेदिनी ॥ ( ६ ) ॥ भण्डीरी ॥ "हेमपुष्पी च भाण्डीरी" इति रभसः ॥ ( ७ ) ॥ "भण्डी योजनवल्ल्यपि । रक्ता भण्डीरिका च" इतीन्दुः ॥ ( ८ ) ॥ योजनवल्ली ॥ ( ९ ) ॥ नव "मँजीठ" इति ख्यातायाः ॥ येति ॥ यासः ॥ ( १ ) ॥ यवासः ॥ ( २ ) ॥ "दुःस्पर्शो धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु । खरस्पर्शे" इति मेदिनी ॥ ( ३ ) ॥ धन्वयासः ॥ ( ४ ) ॥ कुनाशकः ॥ ( ५ ) ॥ ९१ ॥ "रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम्" इति मेदिनी ॥ "चोदनी" इति स्वामी ॥ ( ६ ) ॥ "कच्छुरा शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि" इति मेदिनी ॥ ( ७ ) ॥ "अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यात्" इति मेदिनी ॥ ( ८ ) ॥ "समुद्रान्ता तु कार्पासीपृक्कादुरालभासु च" इति मेदिनी ॥ ( ९ ) ॥ दुरालभा ॥ ( १० ) ॥ दश "यवासा" इति ख्यातस्य ॥ पृश्नीति ॥ पृश्निपर्णी ॥ ( १ ) ॥ पृथक्पर्णी ॥ ( २ ) ॥ चित्रपर्णी ॥ (३) ॥ अङ्घ्रिपर्णिका ॥ "अनिवल्लिका" इति मुकुटः ॥ ( ४ ) ॥ ९२ ॥ क्रोष्टुविन्ना ॥ ( ५ ) ॥ सिंहपुच्छी ॥ ( ६ ) ॥ कलशिः ॥ ( ७ ) ॥ धावनिः ॥ ( ८ ) ॥ गुहा ॥ ( ९ ) ॥ नव "पिठवनी" इति ख्यातायाः ॥ निदीति ॥ निदिग्धिका ॥ ( १ ) ॥ स्पृशी ॥ (२) ॥ व्याघ्री ॥ ( ३ ) ॥ "क्षुद्रायां क्षुद्रवार्ताक्यां बृहती छन्दसि क्वचित्" इति शाश्वतः ॥ ( ४ ) ॥ कण्टकारिका ॥ ( ५ ) ॥ ९३ ॥ प्रचोदनी ॥ ( ६ ) ॥ कुली ॥ ( ७ ) ॥ "क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि" ॥ ( ८ ) ॥ दुःस्पर्शा ॥ ( ९ ) ॥ "राष्ट्रं स्याज्जपदवर्तने । उपद्रवे क्लीबपुंसोः" इति मेदिनी ॥ राष्ट्रिका ॥ ( १० ) ॥ दश "भटकंटा" इति ख्यातायाः ॥ नीलीति ॥ "नीली रुग्भेदनीलिन्योः" इति मेदिनी ॥ ( १ ) ॥ "काला तु कृष्णत्रिवृतामञ्जिष्ठानीलिकासु च" इति मेदिनी ॥ ( २ ) ॥ क्लीतकिका ॥ ( ३ ) ॥ "ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्" इति मेदिनी ॥ ( ४ ) ॥ "मधुपर्णी तु गम्भार्यां नीली संज्ञौषधावपि" इति मेदिनी ॥ ( ५ ) ॥ ९४ ॥ "गुडारोचनिकानीलीमञ्जिष्ठासु च रञ्जनी । रजनी नीलिनीरात्रिहरिद्राजतुकासु च" इति मेदिनी ॥ ( ६ ) ॥ "श्रीफलः पुंसि माल्रे धात्रीनीलिकयोः स्त्रियाम्" इति मेदिनी ॥ ( ७ ) ॥ "तुत्थमञ्जनभेदे स्यात्रीलीसूक्ष्मैलयोः स्त्रियाम्" इति मेदिनी ॥ ( ८ ) ॥ द्रोणी ॥ 'तूणी' इति स्वामी । "तूणी नील्यां निषङ्गे ना" इति मेदिनी ॥ ( ९ ) ॥ "दोला नील्यां यानान्तरेऽपि च" इति मेदिनी ॥ 'मेला' इति स्वामी ॥ "तुत्था श्रीफलिका मेला सारवाही च रञ्जनी" इति निघण्टुः ॥ ( १० ) ॥ नीलिनी ॥ ( ११ ) ॥ एकादश "नील" इति ख्यातस्य ॥ अवेति ॥ अवल्गुजः ॥ ( १ ) ॥ सोमराजी ॥ ( २ ) ॥ सुवल्लिः ॥ ( ३ ) ॥ सोमवल्लिका ॥ ( ४ ) ॥९५॥ कालमेषी ॥ ( ५ ) ॥ कृष्णफला ॥(६)॥ वाकूची॥ मुकुटस्तु–'वागुञ्जी' इत्याह ॥ ॥ ( ७ ) ॥ पूतिफली ॥ ( ८ ) ॥ अष्टौ "वकुची" इति ख्यातायाः ॥ कृष्णेति ॥ "कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति" इति मेदिनी ॥ ( १ ) ॥ उपकुल्या ॥ ( २ ) ॥ "वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च" इति मेदिनी ॥ ( ३ ) ॥ "मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे । पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकवन्दिनोः" ॥ ( ४ ) ॥ "चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च" इति मेदिनी ॥ ( ५ ) ॥ "कणा जीरककुम्भीरमक्षिकापिप्पलीषु च" इति मेदिनी ॥ ( ६ ) ॥ ९६ ॥ उपणा ॥ दीर्घादिरपि ॥ "ऊषणं मरिचे

चव्यं तु चविकं काकचिञ्चागुञ्जे तु कृष्णला । पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः॥९८॥
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि । विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ॥९९॥
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे । शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥१००॥
ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी । अहेरुरथ पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि । वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका॥१०२॥

क्लीवं कणायामूषणा स्त्रियाम्" इति॥(७)॥"पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ। निरर्गले पक्षिभेदे कणायां पिप्पली स्मृता" इति मेदिनी ॥(८) "शौण्डो मत्ते च विख्याते पिप्पल्यां तु भवेत्स्त्रियाम्" इति मेदिनी॥(९)॥ "कोलं कोलफले क्लीवं पिप्पलीचव्ययोः स्त्रियाम्" इति मेदिनी॥(१०)॥ दश पिप्पल्याः ॥ अथेति ॥ करिपिप्पली ॥ ( १ ) ॥ कपिवल्ली ॥ ( २ ) ॥ कोलवल्ली ॥ ( ३ ) ॥ "श्रेयसी करिपिप्पल्यामभयापाठयोरपि" इति मेदिनी ॥ ( ४ ) ॥ वसिरः ॥ तालव्यपाठे तु "वशिरः पुमान् । किणिहीहस्तिपिप्पल्योः, क्लीवेऽब्धिलवणे स्मृतम्" इति मेदिनी ॥ ( ५ ) ॥ पञ्च "गजपिप्पली" इति ख्यातायाः ॥ ९७ ॥ चेति ॥ "चव्यं तु चविके क्लीवं वचायामपि योषिति" इति मेदिनी ॥ ( १ ) ॥ चविकम् ॥ स्त्रियामपि ॥ "चव्या कोला च चविका चव्यं कुञ्जरपिप्पली" इति हट्टचन्द्रः ॥ ( २ ) ॥ द्वे "चव्य" इति ख्यातस्य ॥ केचित्तु पूर्वान्वयमाहुः ॥ यदाह चन्द्रनन्दनः—"चव्या कोलाऽथ चविका श्रेयसी गजपिप्पली । च्यवना कोलवल्ली तु चव्यं कुञ्जरपिप्पली" ॥ अत्र पक्षे तुस्थाने चः पाठ्यः ॥ काकेति ॥ काकचिञ्चा ॥ ( १ ) ॥ "गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ" इति मेदिनी ॥ ( २ ) ॥ कृष्णला ॥ ( ३ ) ॥ त्रीणि "घोंघची" इति ख्यातायाः ॥ पलमिति ॥ "पलंकषा गोक्षुरके स्त्रियां रास्नापलाशयोः" इति मूर्धन्यान्तेषु रभसः ॥ "पलंकषा गोक्षुरके रास्नागुग्गुलुकिंशुके । तु ( मु ) ण्डीरीलाक्षयोश्च स्त्री राक्षसे तु पलंकषः" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे" इति मेदिनी ॥ ( २ ) ॥ श्वदंष्ट्रा ॥ ( ३ ) ॥ स्वादुकण्टकः ॥ ( ४ ) ॥ ९८ ॥ "गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे" इति मेदिनी ॥ ( ५ ) ॥ गोक्षुरकः ( ६ ) ॥ वनशृङ्गाटः ॥ ( ७ ) ॥ सप्त "गोखुरू" इति ख्यातस्य ॥ वीति ॥ "विश्वं समस्ते जगति, विश्वे देवेषु, नागरे । विश्वा चातिविषायां स्यात्" इति विश्वः ॥ ( १ ) ॥ "विषं जलेऽतिविषायां स्त्रियां क्ष्वेडे तु न स्त्रियाम्" ॥ ( २ ) ॥ प्रतिविषा ॥ ( ३ ) ॥ अतिविषा ॥ ( ४ ) ॥ उपविषा ॥ ( ५ ) ॥ "अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च" इति मेदिनी ॥ ( ६ ) ॥ ९९ ॥ "शृङ्गी विषायामृषभे स्वर्णमीनविशेषयोः" इति विश्वः ॥ ( ७ ) ॥ "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति मेदिनी ॥ ( ८ ) ॥ अष्टौ "अतीस" इति ख्यातस्य ॥ अथेति ॥ क्षीरावी ॥ ( १ ) ॥ दुग्धिका ॥ ( २ ) ॥ द्वे "दूधी" इति ख्यातायाः ॥ शतेति ॥ शतमूली ॥ ( १ ) ॥ बहुसुता ॥ ( २ ) ॥ अभीरुः ॥ ( ३ ) ॥ "इन्दीवरं कुवलये शतावर्यां तु योषिति" इति मेदिनी ॥ ( ४ ) ॥ वरी ॥ ( ५ ) ॥ १०० ॥ "ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिम्बिषु" इति मेदिनी ( ६ ) ॥ अभीरुपत्री ॥ ( ७ ) ॥ "नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी मता" इति मेदिनी ॥ ( ८ ) ॥ "शतावरी तु शच्यां स्यादिन्दीवर्यामपि स्त्रियाम्" इति मेदिनी ॥ ( ९ ) ॥ अहेरुः ॥ ( १० ) ॥ दश "शतावरी" इति ख्यातायाः ॥ अथेति ॥ पीतद्रुः ॥ ( १ ) ॥ कालेयकः ॥ "कालीयकः" इति वा पाठः ॥ "निर्दिष्टा वै कटकिनी स च कालेयकः स्मृतः । कालीयको दारुनिशा" इति रुद्रः ॥ ( २ ) ॥ "हरिद्रुः पीतचन्दनम्" इति निघण्टुः ॥ ( ३ ) ॥ १०१ ॥ "दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ" इति मेदिनी ॥ ( ४ ) ॥ "पीतदारु पचंपचा" इति निघण्टुः ॥ (५)॥दारुहरिद्रा॥(६)॥ पर्जनी॥(७)॥सप्त"दारुहलदी" इति ख्यातायाः॥ वेति ॥"वचः कीरे वचौषधौ । शारिकायां च"इति मेदिनी॥(१)॥"उग्रगन्धाऽजमोदायां वचायां छिक्किकौषधौ"इति मेदिनी॥(२)॥"षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्"इति मेदिनी ॥(३) ॥ "गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः" इति

शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका। वृषोऽटरुषः सिंहास्यो वासको वाजिदन्तकः॥१०३॥
आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता। इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः।मिश्रेयोऽप्यथ सीहुण्डो वज्रद्रुः स्नुक् स्नुही गुडा
समन्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला। तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम्॥ १०६॥
बला वाट्यालको घण्टारवा तु शणपुष्पिका।मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च१०७

मेदिनी॥ (४)॥ "शतपर्विका तु दूर्वायां वचायामपि योषिति" इति मेदिनी॥ (५)॥ पञ्च "वच" इति ख्यातायाः॥ १०२॥ शुक्लेति॥ "हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः" इति मेदिनी॥ (१)॥ एकं श्वेतमूलवचायाः॥ वैद्येति॥ वैद्यमाता॥ (१)॥ "सिंही तु कण्टकार्यां स्यात् वार्ताकौ वासकेऽपि च" इति मेदिनी॥ "सिंही स्वर्भानुमातरि। वासाबृहत्योः क्षुद्रायाम्" इति हैमः॥ (२)॥ वाशिका॥दन्त्यान्तोऽपि॥ "वासो गृहेऽप्यवस्थाने वासा स्यादटरूषके" इति रुद्रः॥ (३)॥ "वृषः स्याद्वासके धर्मे सौरभेये च शुक्रले" इति मूर्धन्यान्ते विश्वः॥ (४)॥ "वैद्यमाताऽटरूषकः। सिंहास्यो वाजिदन्तकः" इति रभसः॥ "वृषो वासाऽटरूषकः" इति माधवः॥ (५)॥ सिंहास्यः॥ (६)॥ वासकः॥ (७)॥ वाजिदन्तकः॥ (८)॥ अष्टौ "अरडूसा" इति ख्यातस्य॥ ॥१०३॥ आस्फोतेति॥ "आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति" इति मेदिनी॥ (१)॥ गिरिकर्णी॥ (२)॥ विष्णुक्रान्ता॥ (३)॥ "अपराजित ईशाजेष्ट्यन्तरे नाऽजिते त्रिषु। गिरिकर्णी-जयादुर्गाशालपर्णीषु योषिति" इति मेदिनी॥ (४)॥ चत्वारि विष्णुक्रान्तायाः॥ स्वामी तु वासक-पर्यायानिमान् मन्यते॥ इति॥ "इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे" इति मेदिनी॥ (१)॥ काण्डेक्षुः॥ (२)॥ कोकिलाक्षः॥ (३)॥ इक्षुरः॥ (४)॥ "क्षुरः स्याच्छेदन-द्रव्ये कोकिलाक्षे च गोक्षुरे" इति विश्वः॥ (५)॥ पञ्च "तालमखाना" इति ख्यातस्य ॥१०४॥ शेति॥ "शालेयः स्यान्मिसौ पुमान्। त्रिषु शाल्युद्भवे क्षेत्रे" इति मेदिनी॥ (१)॥ "अथ शीतशिवं क्लीबं शैलेयमणिमन्थयोः। पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ" इति मेदिनी॥ (२)॥ "छत्त्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः। नपुंसकं चातपात्रे" इति मेदिनी॥ (३)॥ मधुरिका॥ "मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः। मधुकुक्कुटिकामेदामधूलीयष्टिकासु च॥ क्लीबं निसे पुंसि रसे तद्व-त्स्वादुप्रियेऽन्यवत्" इति मेदिनी॥ (४)॥ "स्यान्मांस्यां शतपुष्पायां मधुरायां मिसिः स्त्रियाम्" इति दन्त्यान्ते रभसः॥ "मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः" इति मेदिनी॥ सोमनन्दी तु "मिशी" "मिशिः" इति तालव्यान्ते आह॥ (५)॥ मिश्रेयः॥ (६)॥ षट् "वनसोंफ" इति ख्यातायाः॥ अथेति॥ सीहुण्डः॥ सिंहतुण्डस्यापभ्रंशोऽयम्——इति स्वामी॥ "वज्रद्रुमः सिहुण्डोऽथ" इति रभसाद्ध्रस्वादि-रपि॥ (१)॥ 'वज्रद्रुः स्नुक् स्नुही' इति पाठः॥ स्वामी तु "वज्रः स्नुक् स्त्री स्नुही गुडा" इति पठति॥ "वज्रा स्नुह्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता" इति मेदिनी॥ (२)॥ स्नुक्॥ भागुरिमते टाप्॥ "स्नुही च स्नुहा स्नुग्भा स्नुङ्" इत्यमरदत्तः॥ (३)॥ स्नुही॥ (४)॥ "गुडौ गोलेक्षुविकृती स्नुही-गुडिकयोर्गुडा" इति रुद्रः॥ "गुडश्च स्नुहीगुडयोर्गुड ऐक्षवगोलयोः" इत्यजयः॥ (५)॥ १०५॥ समन्तदुग्धा॥ (६)॥ षट् "सेहुण्ड" इति ख्यातस्य॥ अथो इति॥ "अथ वेल्लं कृमिघ्नतण्डुलौ" इति रभसः॥ (१)॥ "अमोघं सफले वाच्यवत् स्त्री पथ्याविडङ्गयोः" इति मेदिनी॥ मोघाऽपि॥ "कृमिघ्नं तण्डुलं मोघा" इति वाचस्पतिः॥ (२)॥ चित्रतण्डुला॥ (३)॥ "तण्डुलः स्याद्विडङ्गेऽपि धान्यादि-निकरे पुमान्" इति मेदिनी॥ "तन्तुलः" इति मुकुटः॥ (४)॥ कृमिघ्नः॥ (५)॥ "विडङ्गस्त्रिष्व-भिज्ञे स्यात्कृमिघ्ने पुंनपुंसकम्" इति मेदिनी॥ (६)॥ षड् विडङ्गस्य॥ १०६॥ बेति॥ "बलयुक्तेऽन्य-लिङ्गः स्याद्बला वाट्यालके स्त्रियाम्" इति मेदिनी॥ (१)॥ वाट्यालकः॥ (२)॥ द्वे "वलिआर" इति ख्यातस्य॥ घण्टेति॥ घण्टारवा॥ (१)॥ शणपुष्पिका॥ (२)॥ द्वे 'घंटा' इति ख्यातस्य॥ मृद्वीति॥ मृद्वीका॥ (१)॥ "गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम्" इति मेदिनी॥ (२)॥

**सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् । त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका १०८**
**काला मसूरविदलाऽर्धचन्द्रा कालमेषिका । मधुकं क्लीतकं यष्टीमधुकं मधुयष्टिका ॥ १०९ ॥**
**विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च यासिता । अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ११० ॥**
**लाङ्गली शारदी तोयपिप्पली शकुलादनी । खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः १११ ॥**
**गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा । योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ११२**
**कदली वारणबुसा रम्भा मोचांऽशुमत्फला । काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥**

द्राक्षा ॥ ( ३ ) ॥ स्वाद्वी ॥ ( ४ ) ॥ "भवेन्मधुरसा द्राक्षामूर्विकादुग्धिकासु च" इति मेदिनी ॥ ( ५ ) ॥ पञ्च "दाख" इति ख्यातायाः ॥१०७॥ सर्वेति ॥ सर्वानुभूतिः ॥( १ )॥ सरला ॥ 'सरणा' इति पाठे ॥ "सर्वानुभूतिः सरणा त्रिपुटा रेचनी सरा" इति वाचस्पतिः ॥ ( २ ) ॥ "त्रिपुटा मल्लिकायां च सूक्ष्मैला-त्रिवृतोः स्त्रियाम्" इति मेदिनी ॥ "त्रिपुटी" इत्यपि ॥ "त्रिपुटी महती स्वाशा" इति वाचस्पतिः ॥( ३) ॥ त्रिवृता ॥ ( ४ ) ॥ त्रिवृत् ॥ ( ५ ) ॥ त्रिभण्डी ॥ ( ६ ) ॥ "रोचनी कर्कशे स्मृता" इति मेदिनी ॥ "रेचनी' इति पाठे "रेचनी त्रिवृतादन्त्योः" ॥ ( ७ ) ॥ सप्त "शुक्लत्रिधारा" इति ख्यातायाः ॥ श्येति ॥ श्यामा ॥ ( १ ) ॥ पालिन्दी ॥ ( २ ) ॥ सुषेणिका ॥ ( ३ ) ॥ १०८ ॥ काला ॥ ( ४ ) ॥ मसूरविदला ॥ ( ५ ) ॥ अर्धचन्द्रा ॥ ( ६ ) ॥ कालमेषिका ॥ ( ७ ) ॥ सप्त "श्यामत्रिधारा" इति ख्यातस्य ॥ मेति ॥ "मधुकं क्लीतके खगे । बन्ध्यन्तरे ना" इति मेदिनी ॥ ( १ ) ॥ क्लीतकम् ॥ ॥(२ )॥यष्टीमधुकम्॥"मधुयष्टी च यष्टी च यष्टीमधुकमेव च" इति वाचस्पतिः॥(४)॥चत्वारि"जेठीमधु" इति ख्यातस्य ॥ १०९ ॥ वीति ॥ "विदारी शालपर्ण्यां च रोगभेदेक्षुगन्धयोः" इति मेदिनी ॥ ( १ )॥ क्षीरशुक्ला ॥ ( २ ) ॥ इक्षुगन्धा ॥ ( ३ ) ॥ "क्रोष्ट्री शृगालिकाकृष्णविदारीलाङ्गलीषु च" इति मेदिनी ॥ ॥ ( ४ ) ॥ चत्वारि कृष्णभूकूष्माण्डस्य ॥ स्वामी तु--विदार्यादित्रयं पठित्वा 'कृष्णो भूकूष्माण्डोऽयं प्राक्षु देशेषु' इत्युक्त्वा "क्रोष्ट्री तु या सिता" इति पठित्वा 'शुक्लो भूकूष्माण्डः' इत्युक्त्वा "अन्या क्षीरविदारी-" इति त्रयं पपाठ ॥ तत्र विभागत्रयमनुचितम् उक्तमेदिनीविरोधात् ॥ अन्येति ॥ क्षीरविदारी ॥ ( १ ) ॥ महा-श्वेता ॥ ( २ ) ॥ ऋक्षगन्धिका ॥ ( ३ ) ॥ त्रीणि शुक्लभूकूष्माण्डस्य ॥ ११० ॥ लेति ॥ "लाङ्गली तोयपिप्पल्यां क्लीबं तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयोः" इति मेदिनी ॥ ( १ ) ॥ "शारदो वत्सरे नवे । शरद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी ॥ सप्तपर्णाम्बुपिप्पल्योः" इति हैमः ॥ ( २ ) ॥ तोय-पिप्पली ॥ ( ३ ) ॥ "शकुलादनी स्त्रियां कृष्णभेदीकचट ( ? ) शाकयोः" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि "जलपिप्पली" इति ख्यातस्य ॥ खरेति ॥ खराश्वा ॥ ( १ ) ॥ "कारवी मधुरादीप्यत्वक्पत्री-कृष्णजीरके" इति मेदिनी॥(२ ) ॥दीप्यः॥ 'दीपकः'अपि ॥"अलंकारे यवान्यां च दीपको लोचमस्तके" इति रभसः ॥ ( ३ ) ॥ "मयूरो नीलकण्ठेऽपि स्यान्मयूरशिखौषधौ" इति रभसः ॥ ( ४) ॥ लोचमस्तकः ॥ "लोचमर्कटः" इत्यपि--इति स्वामी ॥ ( ५ ) ॥ पञ्च मयूरशिखायाः ॥ १११ ॥ गोपीति ॥ " गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा " इति वाचस्पतिः ॥ ( १ ) ॥ श्यामा ॥ ॥ ( २ ) ॥ शारिवा ॥ ( ३ ) ॥ "अनन्ता च विशल्यायां शारिवादूर्वयोरपि" इति मेदिनी ॥ ( ४ )॥ उत्पलशारिवा ॥ ( ५ ) ॥ पञ्च "गुलीसर" इति ख्यातस्य ॥ योग्यमिति ॥ "योग्यः प्रवीणयोगा-र्होपायिशक्तेषु वाच्यवत् । क्लीबमृद्ध्योषधौ, पुष्ये ना, स्त्र्यभ्यासार्कयोषितोः" इति मेदिनी ॥ ( १ ) ॥ "ऋद्धिः स्यादोषधीभेदे समृद्धावपि योषिति" इति मेदिनी ॥ ( २ ) ॥ "सिद्धिस्तु मोक्षे निष्पत्तियोगयोः" इति हैमः ॥ "सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु" इति मेदिनी ॥ ( ३ ) ॥ "लक्ष्मीः संप-त्तिशोभयोः । ऋद्ध्योषधौ च पद्मायां वृद्धिनामौषधेऽपि च" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि ऋद्ध्याख्यौ-षधेः ॥ वृद्धेरिति ॥ इमे उक्ताश्चत्वारो वृद्ध्याख्यौषधेरप्याह्वया नामानि ॥ ( ४ ) ॥ "वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे । कालान्तरे चाभ्युदये समृद्धावपि योषिति" इति मेदिनी ॥ ( ५ ) ॥ पञ्च वृद्ध्या-ख्यौषधेः ॥ ११२ ॥ कदेति ॥"कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः । रम्भावृक्षेऽथ कदली पताकामृगभे-

**वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षणी। नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ११४
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा। विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ११५॥
तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च। भारद्वाजी तु सा वन्या शृङ्गी च ऋषभो वृषः ११६
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका। धामार्गवो घोषकः स्यान्महाजाली स पीतकः॥११७॥
ज्यौत्स्नी पटोलिकाजालीनादेयी भूमिजम्बुका। स्याल्लाङ्गलिक्यग्निशिखाकाकाङ्गी काकनासिका**

भेदयोः ॥ कलदा डिम्बिकायां च शाल्मलीभूरुहेऽपि च" इति मेदिनी ॥ "कदलश्च कदल्यसौ" इति व्याडिः ॥ (१) वारणवुसा ॥ "वुषा" इति मूर्धन्यान्तः—इति केचित् ॥ (२) ॥ "रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे" इति मेदिनी ॥ (३) ॥ "मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः" इति मेदिनी ॥ (४) ॥ अंशुमत्फला ॥ "कदली सुकुमारा च रम्भा भानुफला मता" इति धन्वन्तरिः ॥ (५) ॥ काष्ठीला ॥ (६) ॥ षट् कदल्याः ॥ मुद्गेति ॥ मुद्गपर्णी ॥ (१) ॥ काकमुद्गा ॥ (२) ॥ "सहो बले न स्त्रियां स्यात् स्त्रियां तु नखभेषजे। दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च" इति मेदिनी ॥ (३)॥ त्रीणि "मुगौनी" इति ख्यातस्य॥११३॥वार्तेति ॥ वार्ताकी॥"वातिङ्गणस्तु वार्ताङ्गो वार्ताकः शाकबिल्वकः" इति रभसात् पुंस्यपि ॥ "वार्ता वातिङ्गणे वृत्तौ" इति विश्वाद् "वार्ता" अपि ॥"वार्ताकुरेषा गुणसप्तयुक्ता" इति वैद्यकात्, "वातिङ्गणश्च वार्ताकु" इति त्रिकाण्डशेषाच्च 'वार्ताकुः' अपि ॥ (१) ॥ "हिङ्गुलो वर्णकद्रव्ये ना भण्टाक्यां तु हिङ्गुली" इति मेदिनी ॥ (२) ॥ "सिंहस्तु राशिभेदे मृगाधिपे। श्रेष्ठे स्यादुत्तरस्थस्य सिंही स्वर्भानुमातरि। वासावृहत्योः क्षुद्रायाम्" इति हैमः ॥ (३) ॥ भण्टाकी ॥ (४) ॥ दुष्प्रधर्षणी ॥ "दुष्प्रधर्षिणी" इत्यपि ॥ (५) ॥ पञ्च भण्टाक्याः ॥ नेति ॥ नाकुली कुक्कुटीकन्दे रास्नायां चव्यके स्त्रियाम्" इति मेदिनी ॥ (१) ॥ "सुरसं तु त्रिषु स्वादौ, पर्णासे तु नपुंसकम्। स्त्री रास्नानागमात्रोश्च" इति मेदिनी ॥ (२) ॥ "रास्ना तु स्याद्भुजङ्गाख्यामेलापर्ण्यामपि स्त्रियाम्" इति मेदिनी ॥ (३) ॥ सुगन्धा ॥ स्वामी तु रास्नासुगन्धयोः स्थाने "नागसुगन्धा" इति पठित्वा 'सर्पसुगन्धा' इति व्याख्यत् ॥ (४) ॥ गन्धनाकुली ॥ (५) ॥ ११४ ॥ नकुलेष्टा ॥ (६) ॥ भुजङ्गाक्षी ॥ (७) ॥ छत्राकी ॥ (८) ॥ "सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम्। रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात्" इति मेदिनी ॥ (९) ॥ नव "रासना" इति ख्यातायाः ॥ विदेति ॥ विदारिगन्धा ॥ (१) ॥ "अंशुमान् भास्करे सालपर्ण्यामंशुमती स्मृता" इति मेदिनी ॥ (२) ॥ सालपर्णी॥ तालव्यशादिरपि "शालपर्णी" इत्येके ॥ (३) ॥ "स्थिरा भूसालपर्ण्योर्ना शनौ मोक्षे,ऽचले त्रिषु" इति मेदिनी ॥ (४) ॥ "ध्रुवो वटे। वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः। ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीताभिद्यपि" इति हैमः ॥(५)॥ पञ्च शालपर्ण्याः ॥११५॥ तुण्डीति ॥ तुण्डिकेरी ॥ (१) ॥ समुद्रान्ता ॥ (२) ॥ कार्पासी ॥ (३) ॥ बदरा ॥ (४) ॥ चत्वारि "कपास" इति ख्यातस्य ॥ भारेति ॥ भारद्वाजी ॥ (१) ॥ सा कर्पासी वन्या चेत्तदा भारद्वाजी ॥ "वनकर्पासिकायां तु सहा चन्दनबीजिका। भारद्वाजी महावीर्या कुष्ठला कुष्ठनाशिनी" इति वाचस्पतिः॥ एकं वनकर्पास्याः "नर्मा" इति ख्यातायाः ॥ शृङ्गीति ॥ "ऋषभेऽतिविषायां च शृङ्गी मद्गुरवल्लभा" इति रुद्राजयौ ॥ (१) ॥ "ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः" इति मेदिनी ॥ (२) ॥ वृषः ॥ (३) ॥ त्रीणि "काकड़ासिंगी" इति ख्यातायाः ॥११६॥ गेति ॥ गाङ्गेरुकी ॥ (१) नागबला ॥ (२) ॥ "झषा नागबलायां स्त्री तापमत्स्याटवीषु ना" इति मेदिनी ॥ (३) ॥ ह्रस्वगवेधुका ॥ (४) ॥ चत्वारि "कंकही" "गंगेरण" इति ख्यातायाः ॥ धामेति ॥ "धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके" इति मेदिनी ॥ (१) ॥ "घोष आभीरपल्ल्यां स्याद्गोपालध्वानघोषके। कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ" इति मेदिनी ॥ (२)॥ द्वे "श्वेतपुष्पतोरयी" इति ख्यातायाः ॥ महेति ॥ स घोषकः पीतकः ( पीतपुष्पः ) चेन्महाजाली॥(१)॥एकम् "घीया" इति ख्यातायाः ॥११७॥ज्यौत्स्नीति॥"ज्यौत्स्नी पटोलीज्योत्स्नावन्निशोः" इति हैमः॥संज्ञापूर्वकत्वात् वृद्ध्यभावे "ज्योत्स्नी" अपि॥

गौधापदी तु सुवहा मुसली तालमूलिका।अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे ॥११९॥
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा।हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी१२०॥
एलावालुकमैलेयं सुगन्धि हरिवालुकम्।वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ॥१२१॥
बालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ॥ १२२॥
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा । गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥

॥(१)॥पटोलिका॥ "पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति" इति मेदिनी॥(२)॥"जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः । जालो नीपद्रुमे जाली पटोलिकौषधौ स्त्रियाम् " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि "छिछिंडा" "तोरयी" इति ख्यातस्य ॥ नादेति ॥ "नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च काङ्गुष्ठेऽपि च योषिति " इति मेदिनी॥ (१) ॥ भूमिजम्बुका॥(२)॥प्रागुक्ताऽपि भ्रमात्पुनरिहोक्ता—इति स्वामी॥ द्वे भूमिजम्बुकायाः ॥ स्यादिति ॥ लाङ्गलिकी ॥ ( १ ) ॥ अग्निशिखा॥"अग्निज्वाला लाङ्गलिकी" इति वाचस्पतिः ॥ (२ ) ॥ द्वे 'करिहारी' इति ख्यातायाः ॥ काकेति ॥ काकाङ्गी ॥(१)॥ काकनासिका ॥ ( २ ) ॥ द्वे काकजङ्घायाः " कौवाठोठी " इति ख्यातायाः ॥ ११८ ॥ गौधेति ॥ गौधापदी ॥ ( १ ) ॥ " गोधापदी तु सुवहा त्रिफला हंसपद्यपि" इति कोषान्तरम्॥ (२ ) ॥ द्वे हंसपद्याः ॥ मुसेति ॥ "मुसलं स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि " इति मेदिनी ॥ (१) ॥ तालमूलिका ॥ (२) ॥ द्वे "मूसली" इति ख्यातायाः ॥ अजेति ॥अजशृङ्गी॥(१ )॥ "विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधे क्लीबं त्रिषु शृङ्गेभदन्तयोः " इति मेदिनी ॥ ( २ ) ॥ द्वे "मेडासींगी" इति ख्यातायाः ॥ गोजेति ॥ गोजिह्वा ॥ (१) ॥ दर्विका ॥"दार्विका" इति पाठे "दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ" इति मेदिनी ॥(२ )॥ द्वे "गोभी" इति ख्यातायाः॥ ११९ ॥ तेति ॥ ताम्बूलवल्ली ॥ ( १ )॥ " ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम् " इति मेदिनी ॥( २ ) ॥ नागवल्ली ॥(३) ॥ त्रीणि "नागवेली" इति ख्यातायाः ॥ अथेति ॥ "द्विजो विप्रक्षत्रिययोर्वैश्ये दन्ते विहंगमे । द्विजा भार्गीरेणुकयोः" इति हेमचन्द्रः ॥ ( १ ) ॥ "कषायेऽपि हरेणुर्ना रेणुकायां स्त्रियां भवेत् " इति रुद्रः ॥(२)॥" रेणुकाऽपि हरेणौ च जामदग्न्यस्य मातरि"इति मेदिनी॥(३)॥कौन्ती॥(४)॥ "कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्॥ नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे" इति मेदिनी ॥ (५ ) ॥ भस्मगन्धिनी॥(६)॥षट् हरेणुकायाः॥१२०॥एलेति ॥ एलावालुकम्॥"एलबालुकम्" इति स्वामी ॥ ( १ ) ॥ ऐलेयम् ॥ ( २ ) ॥ सुगन्धि ॥ ( ३ ) ॥ हरिवालुकम् ॥ ( ४ )॥ " वालुका सितकासु स्याद्वालुकं त्वेलवालुके " इति मेदिनी ॥ ( ५ ) ॥ पञ्च वालुकाख्यगन्धद्रव्यस्य ॥ अथेति ॥ पालङ्की ॥ ( १ ) ॥ "मुकुन्दः पारदे विष्णौ रत्नभेदे च कुन्दुरौ" ॥ ( २) ॥ "कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना" इति मेदिनी॥(३) ॥ कुन्दुरुः॥(४)॥ चत्वारि"पालक"इति ख्यातशाकस्य॥"कुन्दुरू" इति ख्यातस्य वा ॥ १२१ ॥ बेति ॥ "बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेध्ये बाली बाला त्रुटौ स्त्रियाम्" इति स्पर्शादौ मेदिनी ॥ ( १ ) ॥ ह्रीवेरम् ॥ "वेरं कलेवरे क्लीबं वार्ताकौ कुङ्कुमेऽपि च" इति मेदिनी ॥ (२) ॥ बर्हिष्ठम् ॥ (३) ॥ उदीच्यम् ॥ (४ ) ॥ केशाम्बुनाम ॥ ( ५ ) ॥ पञ्च "नेत्रबाला" इति ख्यातस्य ॥ केति ॥ कालानुसार्यम् ॥ (१) ॥ " वृद्धो जीर्णे प्रवृद्धे ऽे त्रिषु क्लीबं तु शैलजे" इति मेदिनी ॥ ( २ ) ॥ अश्मपुष्पम् ॥ (३) ॥ शीतशिवम् ॥ (४) ॥ ॥१२२॥" शैलेयं तालपर्ण्यां च सैन्धवे । शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम् " इति मेदिनी ॥ (५)॥ पञ्च "शिलाजित" इति ख्यातस्य ॥ तालेति ॥ तालपर्णी ॥ (१) ॥ दैत्या ॥ (२) ॥ गन्धकुटी ॥ (३) ॥ "मुरा गन्धद्रव्ये दैत्यान्तरे पुमान् " इति मेदिनी ॥ ( ४ ) ॥ गन्धिनी ॥ ( ५ ) ॥ पञ्च मुराख्यसुगन्धद्रव्यस्य ॥ गजेति ॥ गजभक्ष्या "गजभक्षा" वा ॥ ( १ )॥ सुवहा ॥ ( २ ) ॥ "सुरभिः सल्लकीमातृभिन्मुरागोषु योषिति" इति मेदिनी ॥ ( ३ ) ॥ रसा "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले

महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च।अग्निज्वालासुभिक्षे तु धातकी धातृपुष्पिका ॥१२४॥
पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुलाऽथ सा।सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः१२५
व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पाकलमुत्पलम्।शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः॥
झटाऽमलाऽज्झटा ताली शिवा तामलकीति च। प्रपौण्डरीकं पुण्डर्यमथ तुन्नः कुवेरकः ॥१२७॥
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी।चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः१२८॥
व्याडायुधं व्याघ्रनखं करजं चक्रकारकम्। शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥१२९॥

रागे गृहे धातौ तिक्तादौ पारदेऽपि च'' इति हैमः ॥(४)॥ १२३ ॥ महेरणा॥(५)॥ कुन्दुरुकी॥(६)॥ "सल्लकी सिल्लकी ह्लादा" इति रुद्रः ॥ "श्वाविद्द्रुमभेदौ शल्लक्यौ" इति ताल्व्यादौ रभसः ॥(७)॥ ह्लादिनी॥(८)॥अष्टौ "साला" इति ख्यातायाः॥अग्नीति॥ अग्निज्वाला॥(१)॥सुभिक्षा॥(२)॥धातकी॥(३)॥ धातृपुष्पिका॥(४)॥चत्वारि"धवा"इति ख्यातस्य॥१२४॥पृथ्वीति॥ पृथ्वीका॥(१)॥चन्द्रबाला॥(२)॥एला ॥(३)॥निष्कुटिः॥(४)॥ "बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः" इति मेदिनी ॥(५)॥ पञ्च "एलायची" इति ख्यातायाः॥अथेति॥अथ सैला सूक्ष्मा चेत् उपकुञ्चिका॥(१)॥"तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्" इति मेदिनी ॥(२)॥ कोरङ्गी ॥(३)॥ "त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम्। सतीनके च तीरे च त्रिपुटः समुदाहृतः"इति मेदिनी॥(४)॥"त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः"इति मेदिनी ॥(५)॥ पञ्च सूक्ष्मैलायाः ॥ १२५ ॥ व्येति ॥ "व्याधिः कुष्ठे च रोगे ना" इति मेदिनी ॥(१)॥ "कुष्ठं रोगे पुष्करेऽस्त्री" इति मेदिनी ॥(२)॥ पारिभाव्यम् ॥(३)॥ व्याप्यम् ॥ "वाप्यम्" इति क्वचित्पाठः ॥ "आप्यम्" इति च ॥(४)॥ "पाकलं कुष्ठभैषज्ये पुंसि स्यात्कुञ्जरज्वरे" इति मेदिनी ॥ ॥(५)॥ "उत्पला तुषपर्पट्यां क्लीबं कुष्ठप्रसूनयोः" इति मेदिनी॥(६)॥ षट् "कुठ" इति ख्यातस्य॥ शङ्खीति॥ "शङ्खिनी श्वेतचुक्रायां चोरपुष्प्यां वधूभिदि" इति मेदिनी ॥(१)॥ चोरपुष्पी॥(२)॥ केशिनी ॥ "केशी केशवति त्रिषु। दैत्ये ना चोरपुष्प्यां स्त्री" इति मेदिनी ॥(३)॥ त्रीणि "शंखाहुली" इति ख्यातायाः ॥ अथेति ॥ वितुन्नकः ॥(१)॥ १२६ ॥ झटा ॥(२)॥ अमला ॥(३)॥ अज्झटा ॥(४)॥ "तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ ताली झटौषधी। क्लीबं तु हारिताले स्यात्" इति मेदिनी ॥(५)॥ "शिवा झटामलौषधी। अभयामलकगौरीफेरुसक्तुफलासु च"इति मेदिनी ॥(६)॥ तामलकी ॥(७)॥ सप्त भूम्यामलक्याः ॥ प्रेति ॥ प्रपौण्डरीकम् ॥(१)॥ पुण्डर्यम् ॥(२)॥ द्वे "पुण्डरीया" इति ख्यातस्य ॥ अथेति ॥ तुन्नः ॥(१)॥ "कुवेरकः कुवेरे स्यात्पुंसि नन्द्याख्यपादपे ॥ कुवेरः स्यात्पुंसि नन्दीवृक्षे पुण्यजनेश्वरे" इति मेदिनी ॥(२)॥ १२७ ॥ "कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत्" इति मेदिनी ॥ "तुणिः" इति क्वचित् पाठः॥(३)॥ "अथ कच्छः स्यादनूपे तुन्नकद्रुमे। नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति" इति मेदिनी ॥(४)॥ कान्तलकः ॥(५)॥ नन्दिवृक्षः ॥(६)॥ षट् "तुणी" इति ख्यातस्य ॥ अथेति ॥ राक्षसी ॥(१)॥ "चण्डा धनहरीशंखपुष्प्योस्त्रिष्वतिकोपने। तीव्रेऽपि" इति मेदिनी ॥(२)॥ "दुष्कुलीना धनहरी विरोकः क्रोधमूर्छितः" इति वाचस्पतिः ॥(३)॥ "क्षेमोऽस्त्री लब्धरक्षणे। चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति" इति मेदिनी ॥(४)॥ दुष्पत्रः ॥(५)॥ गणहासकः ॥ "गणः" इत्यप्यस्य नाम ॥"गणः प्रमथसंख्यौघे चण्डासैन्यप्रभेदयोः" इति रुद्रः ॥(६)॥ षट् 'चोरा' इत्याख्यगन्धद्रव्यस्य ॥ १२८ ॥ व्याडेति ॥ व्याडायुधम् ॥(१)॥ "भवेद्व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः। नखक्षतान्तरे क्लीबम्" इति मेदिनी ॥ (२)॥ करजम् ॥(३)॥ चक्रकारकम् ॥(४)॥ चत्वारि नखाख्यगन्धद्रव्यस्य ॥ शुषीति ॥ शुषिरा ॥ ॥(१)॥ विद्रुमलता ॥(२)॥ कपोताङ्घ्रिः ॥(३)॥ नटी ॥(४)॥ नली ॥ "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि च नट्यां च क्रमेण क्लीबयोषितोः" इति मेदिनी ॥(५)॥ पञ्च

**धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी । शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी ॥१३० ॥**
**काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे । कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥**
**प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च । ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥**
**मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः।समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि॥१३३॥**
**तपस्विनी जटामांसी जटिला लोमशा मिसी।त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम्१३४॥**

"मालकांगणी" इति ख्यातायाः ॥ १२९ ॥ धमेति ॥ "धमनो नाऽनले भस्त्राध्मापकक्रूरयोस्त्रिषु । धमनी तु शिराहट्टविलासिन्योश्च योषिति " इति मेदिनी ॥ ( १ ) ॥ अञ्जनकेशी ॥ ( २ ) ॥ केचित्तु---इदं द्वयं पूर्वान्वयि----इत्याहुः ॥ " हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे " इति मेदिनी ॥ (३)॥हट्टविलासिनी॥(४)चत्वारि अञ्जनकेश्याः॥शुक्तिरिति॥ "शुक्तिः शंखनके शंखे कपालखण्डद्दग्रुजोः । नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि " इति हैमः॥(१)॥" शङ्खः कम्बौ निधिभेदे स्यान्नख्यामलिकास्थनि " इति हैमः॥(२)॥"खुरः शफे कोलदले"इति हैमः॥(३)॥कोलदलम्॥(४)॥"नखं पुनर्गन्धद्रव्ये नखः करजषण्डयोः" इति हैमः ॥ " नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्"इति मेदिनी॥(५)॥पञ्च नखाख्यगन्धद्रव्यस्य॥ अथेति ॥ "आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ १३० ॥ "काक्षी तुवरिकायां च सौराष्ट्रमृद्यपि स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ "मृत्स्ना मृत्सातुवर्योः स्त्री" इति मेदिनी ॥ ( ३ ) ॥ तुवरिका ॥ "वार्षिका मल्लिका तूवर्याढकी कच्छुरा शटी" इति बोपालितात् 'तूवरी' च ॥ ( ४ ) ॥ मृतालकम् "अजिता तुवरा स्तुत्या मृत्स्ना मृत्तालकम्" इति कोशाद् द्वितकारं च ( ५ ) ॥ सुराष्ट्रजम् ॥ ( ६ ) ॥ ॥ षट् "तुवर" इति ख्यातायाः ॥ किति ॥ कुटन्नटम् ॥ ( १ ) ॥ दाशपुरम् ॥ "दशपूरम्" इति "दशपुरम् इति च क्वचित् पाठः ॥ "दशपूरं दशपुरं प्लवनं जीविताह्वयम्" इति वाचस्पतिः ॥ ( २ ) ॥ वानेयम् ॥ वन्यं च ॥ "परिपेलवं प्लवं वन्यं तत् कुटन्नटसंज्ञकम् । जायते मण्डूकाकारं शैवालदलसंचये ॥ कैवर्तीमुस्तके क्लीबं शोणके वा कुटन्नटः" इत्यजयः ॥ ( ३ ) ॥ परिपेलवम् ॥ ४ ॥ १३१ ॥ "प्लवः कारण्डवे भेके कुलके भेलके कपौ । शब्दे प्लुतिगतौ प्लक्षे चण्डालजलकाकयोः ॥ प्लवं गन्धतृणे प्रोक्तं कैवर्तीमुस्तकेऽपि च" इति विश्वः ॥ ( ५ ) ॥ गोपुरम् ॥ ( ६ ) ॥ गोनर्दम् ॥ ( ७ ) ॥ कैवर्तीमुस्तकम् ॥ ( ८ ) ॥ अष्टौ "मोथा"इति ख्यातस्य ॥ ग्रन्थीति ॥ ग्रन्थिपर्णम् ॥ ( १ ) ॥ "ग्रन्थिपर्णे शिरीषे च शुकः स्यात्" इति विश्वः ॥ "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि, ग्रन्थिपर्णे नपुंसकम्" इति मेदिनी ॥ 'शुकबर्हम्' इत्येकं नाम---इत्येके ॥ ( २ ) ॥ "बर्हिपुष्पम्" इत्येकं नाम---इत्येके ॥ "बर्हपुष्पम्" इत्यन्ये ॥ "बर्हम्" इति पृथग् नाम, इति कश्चित् ॥ ( ३ ) ॥ स्थौणेयम् ॥ ( ४ ) ॥ कुक्कुरम् ॥ ( ५ ) ॥ "मरुत्" इत्यत्राप्यन्वेति ॥ "मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्" इति मेदिनी ॥ पञ्च "कुक्कुरवद्रा" इति ख्यातस्य ॥ १३२ ॥ मरुदिति ॥ व्यस्तं समस्तं च नामेदम् ॥ "पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः । समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिका मरुत् । मुनिर्माल्यवती माला मोहना कुटिला लता" इति वाचस्पतिः ॥ ( १ ) ॥ "पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्" इति मेदिनी ॥ ( २ ) ॥ स्पृक्का ॥ पृषोदरादित्वात् ( ६ । ३ । १०९ ) सलोपे "पृक्का" अपि ॥ ( ३ ) ॥ "देवी कृताभिषेकायां तेजनीपृक्कयोरपि" इति मेदिनी ॥ ( ४ ) ॥ "लता प्रियङ्गुशाखयोः । पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च । माधवीदूर्वयोः" इति मेदिनी ॥ ( ५ ) ॥ "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागरुणि पृक्कानामौषधौ तु स्त्री" इति मेदिनी ॥ ( ६ ) ॥ समुद्रान्ता ॥ ( ७ ) ॥ "वधूः स्त्री शारिवौषधौ । स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च" इति मेदिनी ॥ " पृक्का च महिला वधूः" इति त्रिकाण्डशेषः ॥ ( ८ ) ॥ कोटिवर्षा ॥ ( ९ ) ॥ लङ्कोपिका ॥ ( १० ) ॥ दश "असयर" इति ख्यातस्य ॥ १३३ ॥ तपेति॥ तपस्विनी ॥ ( १ )॥ जटा ॥ ( २ ) ॥ "मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्" इति मेदिनी ॥ ( ३ ) ॥

**कर्चूरको द्राविडकः काल्पको वेधमुख्यकः। ओषधयो जातिमात्रे स्युरजातौ सर्वमौषधम् १३५**
**शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः।विशल्याऽग्निशिखाऽनन्ता फलिनी शक्रपुष्प्यपि।।**
**स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः। जुङ्गो ब्राह्मी तु मत्स्याक्षी वयःस्था सोमवल्लरी १३७।।**
**पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती।हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ १३८ ॥**
**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि।बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥**
**एलापर्णी तु सुवहा रास्ना युक्तरसा च सा। चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका १४०।।**

"जटिला पिप्पलीमांस्योर्जटायुक्ते तु वाच्यवत्" इति मेदिनी ॥ ( ४ ) ॥ "लोमशो मुनिमेषयोः। लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च। शूकशिम्बिमहामेदाकाशीशे शाकिनीभिदि" इति मेदिनी ॥ (५)॥ मिसी ॥ (६) ॥ षट् "जटामांसी" इति ख्यातायाः ॥ त्वगिति ॥ त्वक्पत्रं "त्वग्" अपि नामास्य ॥ "त्वक् स्त्री चर्मणि कल्के च गुडत्वचि विशेषतः" इति मेदिनी ॥ ( १ ) ॥ उत्कटम् ॥ ( २ ) ॥ भृङ्गम् ॥ ( ३ ) ॥ त्वचम् ॥ ( ४ ) ॥ चोचम् ॥ "त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्त्रके" इति धरणिः ॥ ( ५ ) ॥ वराङ्गकम् ॥ ( ६ ) ॥ षट् त्वक्पत्रस्य "तज" इति ख्यातस्य ॥ १३४ ॥ केति॥ कर्चूरकः ॥(१)॥ द्राविडकः ॥(२)॥ कल्पकः ॥(३)॥ वेधमुख्यकः ॥ (४) ॥ चत्वारि "कर्चूर" इति ख्यातस्य ॥ ओषेति ॥ जातिमात्रविवक्षायाम् "ओषधी" शब्दप्रयोगः ॥ अजेति ॥ द्रव्यमात्रविवक्षायां तु "औषध" शब्दप्रयोगः ॥ 'सर्वम्'इत्यनेन—'घृततैलादिकमप्यौषधशब्दवाच्यम्'-इत्युक्तम् ॥१३५॥शाकेति॥ शाकाख्यम् ॥ ( १ ) ॥ आदिना फलनाड्यग्रमूलादिपरिग्रहः ॥ "मूलपत्रकरीराग्रफलकाण्डाधिरूढकम्। त्वक् पुष्पं कवकं चैव शाकं दशविधं स्मृतम्" अधिरूढकं तालबीजाङ्कुरास्थिमज्जादि ॥ तेति ॥ "तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः" इति हैममेदिन्यौ ॥ ( १ ) ॥ "मारिषः शाकाभिधार्ये नाट्योक्त्या पुंसि, योषिति। दक्षाम्बायाम्" इति मेदिनी ॥ अल्पमारिषः ॥ ( २ ) ॥ द्वे "चउराई" इति ख्यातस्य ॥ विशेति ॥ "विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च। शल्येन रहितायां च प्रियायां लक्ष्मणस्य च" इति हेमचन्द्रः ॥ ( १ ) ॥ "अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च। लाङ्गलिक्याख्यौषधौ च विशल्यायां च योषिति" इति मेदिनी ॥(२) ॥अनन्ता ॥(३)॥"फलिन्यग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु" इति मेदिनी ॥ ( ४ ) ॥ शक्रपुष्पी ॥ ( ५ ) ॥ पञ्च "इन्द्रपुष्पी" इति ख्यातायाः ॥ १३६ ॥ स्यादिति ॥ ऋक्षगन्धा ॥ "ऋष्यगन्धा" इति पाठान्तरम् ॥ ( १ ) ॥ छगलान्त्री ॥ "छगला" इति पृथग् नाम—इत्यन्ये ॥ "छागे तु छगलश्छागीवृद्धदारकयोः स्त्रियाम्" इत्यनेकार्थकोशः ॥ ॥ ( २ ) ॥ आवेगी ॥ ( ३ ) ॥ वृद्धदारकः ॥ ( ४ ) ॥ जुङ्गः ॥ ( ५ ) ॥ पञ्च वृद्धदारकस्य॥ ब्राह्मीति ॥ ब्राह्मी ॥ ( १ ) ॥ मत्स्याक्षी ॥ ( २ ) ॥ "वयःस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च। सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ सोमवल्लरी ॥ ( ४ ) ॥ चत्वारि ब्राह्म्याः ॥ १३७ ॥ पट्विति ॥ पटुपर्णी ॥ ( १ ) ॥ हैमवती ॥ ( २ ) ॥ स्वर्णक्षीरी ॥ ( ३ ) ॥ हिमावती ॥ ( ४ ) ॥ चत्वारि "मको" इति ख्यातायाः ॥ हयेति ॥ हयपुच्छी ॥ (१) ॥ काम्बोजी ॥ ( २ ) ॥ माषपर्णी ॥ ( ३ ) ॥ "महासहा माषपर्ण्यामम्लानेऽपि च योषिति" इति मेदिनी ॥ (४)॥ चत्वारि माषपर्ण्याः॥१३८॥ तुण्डीति ॥ तुण्डिकेरी ॥ "तुण्डकेरी" इत्यपि ॥ ( १ ) ॥ रक्तफला॥(२)॥ बिम्बिका ॥ ( ३ ) ॥ पीलुपर्णी ॥ ( ४ ) ॥ चत्वारि "कुंदुरी" इति ख्यातायाः ॥ बर्बेति ॥ "बर्बरः पामरे केशे चक्रले नीवृदन्तरे। फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ "कबरं लवणाम्लयोः। कबरी केशविन्यासशाकयोः" इति हैमः ॥ ( २ ) ॥ "तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत्। तुङ्गी प्रोक्ता हरिद्रायां बर्बरायामपीष्यते" इति हैमः ॥ ( ३ ) ॥ खरपुष्पा ॥ ( ४ ) ॥ अजगन्धिका ॥ ( ५ ) ॥ पञ्च खरपुष्पायाः ॥१३९॥एलेति॥ एलापर्णी ॥ ( १ ) ॥ "सुवहा शल्लक्ये-

[1]—मूलं मूलकादेः, पत्रं वास्तुकादेः करीरं वंशाङ्कुरम्। अग्रं वेत्रादेः फलं कूष्माण्डादेः, काण्डमुत्पलादेर्नालम्, त्वक् मातुलुङ्गादेः, पुष्पं तिन्तिडीकोविदारादेः, कवकं छत्त्रिका—इति मुकुटः ॥

**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि।नमस्कारी गण्डकाली समङ्गा खदिरेत्यपि ॥ १४१ ॥
जीवन्ती जीवनी जीवा जीवनीया मधुः स्रवा । कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः१४२
किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला । विमला सातला भूरिफेना चर्मकषेत्यपि१४३॥
वायसोली स्वादुरसा वयःस्थाऽथ मकूलकः।निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि१४४
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका। मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥१४५॥**

लापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात् " इति मेदिनी ॥ ( २ )॥ रास्ना ॥ ( ३ ) ॥ युक्तरसा ॥ ( ४ ) ॥ चत्वारि एलापर्ण्याः ॥ चेति ॥ चाङ्गेरी ॥ ( १ ) ॥ चुक्रिका ॥ (२) ॥ "स्याद्दन्तशठो जम्बीरे कपित्थे करमर्दके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां च योषिति" इति मेदिनी ॥ ( ३ ) ॥ "अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । अम्बष्ठाऽप्यम्ललोण्यां स्यात्पाठा-यूथिकयोरपि" इति मेदिनी ॥(४)॥ अम्ललोणिका ॥ ( ५ ) ॥ पञ्च "लोनिजा" इति ख्यातस्य॥१४०॥ सहेति ॥ सहस्रवेधी ॥ ( १ ) ॥ चुक्रः ॥ ( २ ) ॥ अम्लवेतसः ॥ नम्रत्वात् ॥ ( ३ ) ॥ शतवेधी ॥ ( ४ ) ॥ चत्वारि "अम्लवेद" इति ख्यातस्य ॥ नमेति ॥ नमस्कारी ॥ ( १ ) ॥ गण्डकाली ॥ ( २ ) ॥ समङ्गा ॥ ( ३ ) ॥ "खदिरा शाकभेदे स्त्री ना चन्द्रे दन्तधावने" इति मेदिनी ॥ ( ४ )॥ चत्वारि "हाताजोडी" इति ख्याताया: ॥——नव "लजालू" इति ख्यातस्य——इति मुकुटः ॥ १४१ ॥ जीवेति ॥ " जीवन्ती जीवनीशम्योर्गुडूचीवन्दयोरपि" इति मेदिनी ॥ ( १ ) ॥ "जीवनी जीवना चापि जीवन्तीभेदयोः क्रमात् " इति मेदिनी ॥ ( २ ) ॥ "जीवा जीवन्तिकामौर्वीवचा-शिञ्जितभूमिषु । न स्त्री तु जीविते" इति मेदिनी ॥ ( ३ ) ॥ जीवनीया ॥ ( ४ ) ॥ "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति मेदिनी ॥ ( ५ ) ॥ स्रवा ॥ "मधुस्रवा" इत्येकं नाम——इत्यन्ये ॥ ( ६ ) ॥ षट् गुर्जरदेशे "डोडी" इति ख्याताया:। । कूर्चेति ॥ कूर्चशीर्षः ॥ ( १ ) ॥ "स्याद्ध्रस्वाङ्गो मधुरको मुधुरश्चिरजीवकः" इति रभसः ॥ ( २ ) ॥ "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके ॥ स्त्री विषायां स्वर्णमीनभेद-योर्ऋषभौषधौ" इति मेदिनी ॥ ( ३ ) ॥ ह्रस्वाङ्गः ॥ ( ४ )॥ "जीवकः प्राणके पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे जीविका मता ॥ त्रिषु सेविनि वृद्ध्याजीविनोराहितुण्डिके" इति मेदिनी ॥ ॥ ( ५ ) ॥ पञ्च अष्टवर्गान्तर्गतजीवकस्य इति मुकुटः ॥१४२॥ किरेति ॥ किराततिक्तः ॥ ( १ ) ॥ भूनिम्बः ॥ ( २ ) ॥ अनार्यतिक्तः ॥( ३ )॥ 'चिरात्तिक्तः' अपि॥"किरातश्चिरात्तिक्तश्च भूनिम्बहिमकावपि" इति रभसः ॥ त्रीणि "चिरायत" इति ख्यातस्य ॥ अथेति ॥ "अथ सप्तला । वनमालाचर्मकषागुञ्जासु पाटलौ स्त्रियाम्" इति मेदिनी॥( १ )॥"स्याद्विमला स्त्रियाम् । सातलायां भुवो भेदे निर्मले त्वभिधेयवत्"इति मेदिनी ॥ (२) ॥ सातला ॥(३) ॥भूरिफला ॥ (४) ॥ चर्मकषा ॥ ( ५ ) ॥ पञ्च सीहुण्डभेदस्य ॥ चर्मघासस्य इत्यन्ये ॥ १४३ ॥ वायेति ॥ वायसोली ॥ ( १ ) ॥ स्वादुरसा ॥ ( २ ) ॥ "वयःस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि " ककोडी " इति ख्याताया: ॥ अथेति ॥ मकूलकः ॥ "मुकूलकः" अपि इत्यन्ये ॥ ( १ ) ॥ "निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ" इति मेदिनी ॥ ( २ ) ॥ दन्तिका ॥ ( ३ ) ॥ प्रत्यक्श्रेणी ॥ ( ४ ) ॥ उदुम्बरपर्णी ॥ ( ५ ) ॥ पञ्च वज्रदन्त्याः ॥ १४४ ॥ अजेति ॥ अजमोदा ॥ ( १ ) ॥ "उग्रगन्धा वचाक्षेत्रयवान्योश्छिक्किकौषधौ" इति हैमः ॥ ( २ ) ॥ ब्रह्मदर्भा ॥(३) ॥ यवानिका ॥ "यमानिका" इत्यपि ॥ ( ४ ) ॥ यवानीद्वयस्य द्वे द्वे नामनी ॥——चत्वारः पर्यायाः—— इत्येके ॥ मूल इति ॥ पौष्करे मूले, इत्यन्वयः ॥ "पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । ओषधिद्वीपविहग-तीर्थरागोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च" इति विश्वः ॥ ( १ ) ॥ काश्मीरम् ॥ ॥ ( २ ) ॥ पद्मपत्रम् ॥ "पद्मवर्णम्" इति क्वचित् पाठः ॥ ( ३ ) ॥ त्रीणि पुष्करमूलस्य ॥ १४५ ॥

अन्यथाऽतिचरा पद्मा चारटी पद्मचारिणी । काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि॥
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः । पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ॥ १४७॥
लतार्कदुर्द्रुमौ तत्र हरितेऽथ महौषधम् । लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् । स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि १४९
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता। वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका॥
विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेति च । मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी १५१

अन्येति ॥ "अन्यथो निर्व्यथे सर्वे चारटीपथ्ययोः स्त्रियाम्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ आतिचरा ॥(२) ॥ पद्मा ॥ ( ३ ) ॥ चारटी ॥ ( ४ ) ॥ पद्मचारिणी ॥ ( ५ ) ॥ पञ्च पद्माकस्य ॥ केति ॥ काम्पिल्यः ॥ "काम्पिल्लः" इत्येके ॥ ( १ ) ॥ कर्कशः ॥ ( २ ) ॥ "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी ॥ ( ३ ) ॥ "रक्ताङ्गस्तु महीसुते । काम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः" इति मेदिनी ॥ ॥ ( ४ ) ॥ "रोचनी कर्कशे स्त्रियाम्" इति मेदिनी ॥ " रेचनी" इति क्वचित् पाठः ॥ ( ५ ) ॥ पञ्च "कपीला" इति ख्यातस्य ॥ १४६ ॥ प्रपुन्नेति ॥ प्रपुन्नाडः ॥ ( १ ) ॥ एडगजः ॥ ( २ ) ॥ दद्रुघ्नः ॥ ( ३ ) ॥ चक्रमर्दकः ॥ ( ४ ) ॥ पद्माटः ॥ ( ५ ) ॥ उरणाख्यः ॥ ( ६ ) ॥ षट् "पुआड" इति ख्यातस्य ॥ पलेति ॥ पलाण्डुः ॥ ( १ ) ॥ सुकन्दकः ॥ ( २ ) ॥ द्वे "प्याज" इति ख्यातस्य ॥ १४७ ॥ लतेति ॥ तत्र पलाण्डौ हरिते लतार्कः ॥ ( १ ) ॥ दुर्द्रुमः ॥ ( २ ) ॥ द्वे हरिद्वर्णपलाण्डोः ॥ अथेति ॥ "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति मेदिनी ॥ ( १ ) ॥ लशुनम् ॥ ( २ ) ॥ "गृञ्जनम् । विषदिग्धपशोर्मांसे क्लीबं, पुंसि रसोनके" इति मेदिनी ॥ "लशुनं गृञ्जनं चैव पलाण्डुकवकानि च । वृत्ताकारालिकालाबुजातीया जातिदूषितम्" इति ॥ श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम् ॥ "लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लतार्कश्चापराजिता । गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः" इति सुश्रुतेनोक्तत्वात् ॥ "गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । दीर्घनालाग्रपत्रत्वात् भिद्यतेऽसौ पलाण्डुतः" ॥ ( ३ ) ॥ "अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरण-चिह्ने च" इति मेदिनी ॥ ( ४ ) ॥ महाकन्दः ॥ ( ५ ) ॥ रसोनकः ॥ ( ६ ) ॥ षट् "लशुन" इति ख्यातस्य ॥ १४८ ॥ पुनेति ॥ पुनर्नवा ॥ ( १ ) ॥ शोथघ्नी ॥ ( २ ) ॥ द्वे "गदहपूर्णा" इति ख्याताया: ॥ वीति ॥ "वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम्" इति मेदिनी ॥ ( १ ) ॥ सुनिषण्णकम् ॥ ॥ ( २ ) ॥ द्वे "विषखपरिआ" इति ख्यातस्य ॥ स्यादिति ॥ वातकः ॥ ( १ ) ॥ शीतलः ॥ "शीतल-वातकः" इत्यपि नाम ॥ "शणपर्णी शीतलवातकः" इति धन्वन्तरिः ॥ ( २ ) ॥ "अपराजित ईशाजेष्ट्य-न्तरे नाऽजिते त्रिषु । गिरिकर्णीजयादुर्गाशनपर्णीषु योषिति" इति मेदिनी ॥ ( ३ ) ॥ शणपर्णी ॥ "अशन-पर्णी"-इति कश्चित् ॥ ( ४ ) ॥ चत्वारि "पटशण" इति ख्यातस्य ॥१४९॥ पारेति ॥ पारावताङ्घ्रिः ॥ ( १ ) ॥ कटभी ॥ ( २ ) ॥ पण्या ॥ ( ३ ) ॥ ज्योतिष्मती ॥ ( ४ ) ॥ लता ॥ ( ५ ) ॥ पञ्च "मालकांगणी" इति ख्यातायाः ॥ वेति ॥ "वार्षिकं त्रायमाणायां क्लीबं वर्षाभवे त्रिषु" इति मेदिनी॥ ॥ ( १ ) ॥ "त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत्" इति मेदिनी ॥ ( २ ) ॥ त्रायन्ती ॥ ( ३ ) ॥ बलभद्रिका ॥ ( ४ ) ॥ चत्वारि "त्रायमाण" इति ख्यातस्य ॥ १५० ॥ वीति ॥ विष्वक्सेनप्रिया ॥ ॥ ( १ ) ॥ "अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियाम्" इति मेदिनी ॥ "घृष्टिः" इति पाठान्तरम् ॥ "घृष्टिः स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ" इति मेदिनी ॥ ( २ ) ॥ "वाराही मातृभेदे स्याद्विष्वक्सेन-प्रियौषधौ" इति मेदिनी ॥ ( ३ ) ॥ "ब( व ) दरा गृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां, पुमान् । कर्पासस्यास्थिन, बदरी कोले क्लीबं तु तत्फले" इति मेदिनी ॥ ( ४ )॥ चत्वारि "वाराहीकन्द" इति ख्यातायाः॥मार्केति ॥ मार्कवः ॥ ( १ ) ॥ "अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे" इति मेदिनी ॥ "भृङ्गरजः" इति पाठे सान्तोऽदन्तोऽपि ॥ "स्यान्मार्कवो भृङ्गरजो भृङ्गराजः सुजागरः" इति रभसात् ॥ ( २ ) ॥ द्वे

**शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः। अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी॥**
**तस्यां कटंभरा राजबला भद्रबलेति च । जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥**
**संस्पर्शाऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि। कर्चूरोऽपि पलाशोऽथ कारवेल्लः कटिल्लकः॥१५४**
**सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः। कूष्माण्डकस्तु कर्कारुरीर्वारुः कर्कटी स्त्रियौ१५५॥**
**इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे समे। चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी**

"भृङ्गराज" इति ख्यातस्य।।काकेति॥काकमाची॥(१)॥"काकोदुम्बरिकायां च काकमाच्यां च वायसी" इति मेदिनी ॥(२)॥ द्वे काकमाच्याः "कवप्रिया" इति ख्यातायाः॥ १५१ ॥ शतेति ॥ शतपुष्पा ॥ (१)॥ सितच्छत्रा ॥ (२) ॥ अतिच्छत्रा ॥ (३) ॥ "मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः" इति मेदिनी ॥ (४)॥ "मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः" इति मेदिनी ॥ (५) ॥ अवाक्पुष्पी ॥ (६) ॥ "कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके" इति मेदिनी ॥(७)॥ सप्त "सौंफ" इति ख्यातायाः ॥ अन्त्य-द्वयम् "उंधावली" इति ख्यातायाः—इत्येके ॥ सरेति ॥ सरणा॥ 'सरणी' इत्यपि ॥"सरणा सरणी चार्वी कटंभरा महाबला" इति रुद्रः ॥ (१) ॥ प्रसारिणी ॥ 'सारणी' इत्यपि॥ "सारणो राक्षसान्तरे । रुग्भेदे ना, प्रसारिण्यां स्वल्पनद्यां च सारिणी" इति मेदिनी ॥ (२) ॥ १५२ ॥ कटंभरा ॥ (३) ॥ राजबला ॥ (४) ॥ भद्रबला ॥ (५) ॥ पंच "कुब्जप्रसारिणी" इति ख्यातायाः ॥जनीति ॥"जनी सीमन्तिनी-वध्वोरुत्पत्तावोषधीभिदि" इति मेदिनी ॥ (१) ॥ जतूका॥ "जतुका" च॥ (२)॥"रजनी नीलिनीरात्रिहरिद्रा-जतुकासु च" इति मेदिनी ॥ (३) ॥ जतुकृत् ॥ (४) ॥ चक्रवर्तिनी ॥ (५) ॥१५३॥ संस्पर्शा॥(६) ॥ षट् "चकवत" इति ख्यातस्य ॥ अथेति ॥ शटी ॥ (१) ॥ गन्धमूली ॥ (२) ॥ षड्ग्रन्थिका ॥(३) ॥ "कर्चूरः स्यात् पुमाञ्शट्यां सुवर्णे तु नपुंसकम्" इति मेदिनी ॥"कर्बुरः" अपि ॥ (४) ॥ "पलाशः किंशुकः शटी । हरिद्वर्णो राक्षसश्च पलाशं छदने मतम्" इति हैमः ॥(५) ॥ पंच "कचूर" इति ख्यातस्य ॥ अथेति ॥ कारवेल्लः ॥ (१) ॥ कटिल्लकः॥"कठिल्लकः" अपि । कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः" इति विश्वमेदिन्यौ ॥ (२) ॥ १५४ ॥ "सुषवी कृष्णजरिके । कारवेल्ले च जीरे च" इति हैमः ॥(३) ॥ त्रीणि करेला इति ख्यातायाः॥ अथेति ॥"कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुल-श्रेष्ठेषु कथ्यते" इति मेदिनी ॥ (१) ॥ "पटोलं वस्त्रभेदे, नौषधौ ज्योत्स्न्यां तु योषिति" इति मेदिनी ॥ (२) ॥ तिक्तकः ॥ (३) ॥ "पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्त्रालव-णयोरपि" इति मेदिनी ॥ (४) ॥ चत्वारि "परवर" इति ख्यातस्य ॥ किति ॥ कूष्माण्डकः ॥ "कूष्माण्डचुमायां स्त्री पुंसि कर्कारौ च गणान्तरे । भ्रूणान्तरे" इति मेदिनी ॥(१) ॥ कर्कारुः ॥ (२) ॥ द्वे कूष्माण्डस्य ॥ ईर्वेति ॥ "तुर्यस्वरादिर् 'ईर्वारुः' कर्कट्यां पठ्यते बुधैः" ॥ ह्रस्वादिरपि ॥ "उन्मत्तो-ऽन्धुस्तुर् 'इर्वारुः' कर्कटिः स्यात्" इति पुंस्काण्डे रत्नकोषात्॥"एर्वारुः" इति पाठे आङ् बोध्यः॥पृषोदरादि-त्वेनादेरुत्वे "उर्वारुः" इति च ॥"उर्वारुकमिव बन्धनात्" इति श्रुतेः ॥ (१) ॥ कर्कटी ॥ (२) ॥ द्वे "काकडी" इति ख्यातायाः ॥ १५५ ॥ ईति ॥ "इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान्" इति मेदिनी ॥ (१) ॥ कटुतुम्बी ॥ (२) ॥ द्वे कटुतुम्ब्याः ॥ त्विति ॥ तुम्बी ॥ (१) ॥ "अला-बुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला । तुम्बा तु वर्तुलाऽलाबूनिम्बचूर्णा तु लाबुका" इति वाचस्पतिः ॥ "अलाबूस्तुम्बकः प्रोक्तः" इति चन्द्रः ॥ (२) ॥ द्वे "तुम्बा" इति ख्यातायाः॥ चित्रेति ॥ "चित्रा-ऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्" इति मेदिनी ॥ (१) ॥ "गवाक्षी त्विन्द्रवारुण्यां गवाक्षो जालके कपौ" इति हैमः ॥ (२) ॥ गोडुम्बा ॥ (३) ॥ त्रीणि कर्कटीविशेषस्य ॥ विशेति ॥ "विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति । नृपद्रुक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्" इति मेदिनी ॥(१)॥ इन्द्रवारुणी ॥(२) ॥ द्वे "इन्द्रारुणी" इति ख्यातायाः ॥१५६॥

---

१—प्रथमोपात्तचरणस्तु विश्वे संभवति । चरमोपात्तचरणस्तु मेदिन्यामुपलभ्यते । हैमे तु मध्यस्थोऽपि नोपलभ्यते ॥

अर्शोघ्नः शूरणः कन्दो गण्डीरस्तु समष्ठिला। कलम्ब्युपोदका स्त्री तु मूलकं हिलमोचिका १५७
वस्तूकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका। सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताऽथ सा सिता १५८
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः। कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्॥
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा। वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः १६०
शतपर्वा यवफलो वेणुमस्करतेजनाः। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः॥१६१॥
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः। नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् १६२

अर्शेविति ॥ अर्शोघ्नः ॥ ( १ ) ॥ शूरणः ॥ ( सूरणः ) दन्त्यादिरपि ॥ ( २ ) ॥ "कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि "सूरण" इति ख्यातस्य ॥ गण्डीति ॥ गण्डीरः ॥ ( १ ) ॥ "गण्डीरो ना समष्ठिला" इति माला ॥ ( २ ) ॥ द्वे "गाण्डरदूवी" इति ख्यातस्यानूपजशाकभेदस्य ॥ "गडिनी" इति भाषा ॥ केति ॥ "कलम्बी तु शतपर्वा कलम्बूर्वासु वीरुधः" इति वाचस्पतिः ॥ "कलम्बी शाकभेदेऽपि कदम्बशरयोः पुमान्" इति मेदिनी ॥ (१) ॥ एकं "करेम्बु" इति ख्यातस्य ॥ उपेति ॥ उपोदका ॥ "अपोदका" इति स्वामी ॥ ( १ ) ॥ एकं "पोई" इति ख्यातस्य ॥ मूलेति ॥ मूलकम् ॥ ( १ ) ॥ एकं "मूली" इति ख्यातस्य ॥ हिलेति ॥ हिलमोचिका ॥ ( १ ) ॥ एकं "हिलसाल" इति ख्यातस्य ॥ १५७ ॥ वेति ॥ वास्तूकम् ॥ ( वास्तुकम् ) ह्रस्वमध्यमपि ॥ ( १ ) एकं "वथुवा" इति ख्यातस्य ॥ शाकेति ॥ कलम्ब्याद्याः पञ्च शाकभेदाः स्युः ॥ "शाकाख्यं पत्रपुष्पादि" इत्यत आरभ्य च ॥ "मण्डूकपर्णी पालङ्क्या चिल्लिका चाप्यपोदिका। चाङ्गरी हिलमोचा च कलम्बी शाकजातयः" इति माला ॥ दूर्वेति ॥ दूर्वा ॥ ( १ ) ॥ "शतपर्विका तु दूर्वायां वचायामपि योषिति" इति मेदिनी ॥ ( २ ) सहस्रवीर्या ॥ ( ३ ) ॥ "भार्गवो पार्वतीश्रियोः। दूर्वायाम्" इति मेदिनी ॥ ( ४ ) ॥ रुहा ॥ ( ५ ) ॥ "अनन्ता च विशल्यायां शारिवादूर्वयोरपि। कणादुरालभापथ्यापार्वत्यामलकीषु च ॥ विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि। अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु" इति मेदिनी ॥ ( ६ ) ॥ षट् दूर्वायाः ॥ अथेति ॥ सा दूर्वा सिता शुक्ला चेत् ॥ १५८ ॥ "गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः" इति मेदिनी ॥ ( १ ) शतवीर्या ॥ ( २ ) ॥ गण्डाली ॥ ( ३ ) ॥ शकुलाक्षकः ॥ ( ४ ) ॥ चत्वारि शुक्लदूर्वायाः ॥ स्वामी तु--परे द्वे दूर्वाभेदस्य--इत्याह ॥ कुर्विति ॥ "कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ मेघनामा ॥ ( २ ) ॥ मुस्ता ॥ ( ३ ) ॥ मुस्तकम् ॥ (४) ॥ चत्वारि "मोथा" इति ख्यातायाः ॥ १५९ ॥ स्यादिति ॥ भद्रमुस्तकः– 'भद्रम्' अपि नाम ॥ "भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे" इति रुद्रः ॥ ( १ ) ॥ "गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके" इति मेदिनी ॥ ( २ ) ॥ द्वे "नागरमोथा" इति ख्यातस्य ॥ चूडेति ॥ "चूडाला तूच्चटायां स्त्री चूडावति च वाच्यवत्" इति मेदिनी ॥ (१) ॥ चक्रला ॥ (२) उच्चटा ॥(३) ॥ त्रीणि मुस्ताविशेषस्य॥ वंशे इति "वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च" इति विश्वः ॥ ( १ ) त्वक्सारः ॥ ( २ ) कर्मारः ॥ ( ३ ) त्वचिसारः ॥ ( ४ ) ॥ तृणध्वजः ॥ ( ५ ) ॥ १६० ॥ शतपर्वा ॥ ॥ ( ६ ) ॥ "यवफलो मांसिकायां कुटजत्वचिसारयोः" इति हैमः ॥ ( ७ ) ॥ "वेणुर्नृपान्तरे। त्वक्सारेऽपि च पुंसि स्यात्" इति मेदिनी ॥ ( ८ ) ॥ मस्करः ॥(९)॥ तेजनः ॥ ( १० ) ॥ दश वंशस्य ॥ वेणेति ॥ ये वेणवोऽनिलेनोद्धतास्ताडिताश्चालिता वा शब्दायन्ते ॥ "कीचको दैत्यभिद्वाताहतसस्वनवंशयोः" इति मेदिनी ॥ ( १ ) ॥ एकं वेणुविशेषस्य॥१६१॥ग्रन्थिरिति॥ "ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः" इति मेदिनी ॥ ( १ ) ॥ "पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि" इति मेदिनी ॥ ( २) ॥ परुः॥ बाहुलकादुप्रत्यये उदन्तोऽपि॥

१—"रम्या वास्तववास्तुकस्तवकिता" इति प्रयोगात्--इति मुकुटः ॥

इक्षुगन्धा पोटगलः पुंभूमनि तु वल्वजाः । रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः॥१६३॥
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यममृणालं जलाशयम् ॥१६४॥
लामज्जकं लघुलयमवदाहेष्टकापथे । नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् । पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥१६६॥

"मज्जा सारो, ग्रन्थिः परुः, परागः कुसुमरेणुः" इति पुंस्काण्डे रत्नकोषात् ॥ (३ ) ॥ त्रीणि ग्रन्थेः ॥ ग्विति ॥ "गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके" इति मेदिनी ॥ (१) ॥ तेजनकः ॥ (२) ॥"शरस्तेजनके बाणे दध्यग्रे ना शरं जले" इति मेदिनी ॥ "सरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शरः" इति वाचस्पतेर्दन्त्यादिश्च ॥(३)॥त्रीणि "सरहरी" इति ख्यातस्य ॥ नड इति॥ नडः ॥(१)॥ "धमनो नले। क्रूरे भस्त्राध्मापके च धमनी कंधरा शिरा । हारिद्रा च" इति हैमः ॥ (२) ॥ " अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदिनी ॥ (३) ॥ त्रीणि "नल" इति ख्यातस्य ॥ अथो इति ॥ "काशस्तृणे रोगभेदे" इति हैमः ॥ " काशी वाराणसीपुरी " इति मेदिनी ॥ " काशी काशश्च तृणवाचकः " इति शभेदः ॥ (१) ॥ १६२ ॥ "इक्षुगन्धा कोकिलाक्षे क्रोष्ट्यां काशे च गोक्षुरे " इति मेदिनी ॥ (२)॥ पोटगलः ॥ (३) ॥ त्रीणि काशस्य ॥ पुमिति॥ वल्वजाः ॥ (१) ॥ एकं पुंसि बहुवचनान्तम्"वगयी" इति ख्यातस्य ॥ रसेति ॥ " रसालं सिह्लके बोले रसालश्चेक्षुचूतयोः" इति मेदिनी ॥ (१)॥ इक्षुः ॥ (२) ॥ द्वे इक्षोः ॥ तादिति ॥ कोषकाराद्या आदिना गृह्यन्ते ॥ " इक्षुः कर्कटको वंशः कान्तारो वेणुनिःसृतः । इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः " ॥ " पुण्ड्रेक्षौ पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधुः" इति वाचस्पतिः ॥ ". पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके । चित्रे कृमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे" इति मेदिनी ॥ (१) ॥ कान्तारकः ॥ (१) ॥ १६३ ॥ स्यादिति ॥ वीरणम् ॥ (१) ॥ "स्याद्वीरणे वीरतरं वीरश्रेष्ठे शवे च ना" इति मेदिनी ॥ (२) ॥ द्वे " गाँडर" इति ख्यातस्य ॥ मूल इति ॥ वीरणस्य मूले ॥ उशीरम् ॥ (१) ॥ " अभया स्त्री हरीतक्यामुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गः स्यात्" इति मेदिनी ॥ (२)॥ " नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयोः" इति मेदिनी ॥ (३) ॥ "सेव्यं क्लीबमुशीरे स्यात्सेवार्हे पुनरन्यवत्" इति मेदिनी ॥ (४) ॥ अमृणालम् ॥ (५)॥ "जलाशयो जलाधारे स्यादुशीरे नपुंसकम्" इति मेदिनी ॥ (६) ॥ १६४ ॥ लामज्जकम् ॥ (७) ॥ समस्तं नाम लघुलयम् ॥ व्यस्तमपि ॥ "लामज्जकं सुवासं स्यादमृणालं लयं लघु" इति सुश्रुतः ॥ "लामज्जकं सुनालः स्यादमृणालं लयं लघु" ॥ (८) ॥ अवदाहम्॥केचित्तु—"अवदाहेष्टम्" "कापथम्" इति नामद्वयमाहुः ॥ (९) ॥ इष्टकापथम् ॥ (१०) ॥ दश वीरणमूलस्य "खश" इति ख्यातस्य ॥ नलेति ॥ तृणजातयो नलादयः ॥ तृणम् ॥ (१) ॥ गर्मुत् ॥ (१) ॥ "श्यामाकः श्यामकोऽपि च" इति हलायुधः ॥ "साँवा" इति ख्यातः ॥ (१) ॥ प्रमुखशब्दान्नीवाराद्याः ॥ मुकुटस्तु—अनन्तराः कुशादयो व्यवहिताश्च कङ्गुकोद्रवादयो गृहीताः—इत्याह ॥ कोद्रवादीनामेवं सति हविष्यत्वापातात् ॥१६५॥अस्त्रीति ॥"कुशो रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयोः। कुशी फाले कुशो दर्भे कुशा वल्गा कुशं जले" इति हैमः ॥ (१) ॥ "कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि" इति मेदिनी ॥ (२) ॥ दर्भः ॥ (३)॥ "पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत्" इति मेदिनी ॥ (४) ॥ चत्वारि दर्भविशेषस्य ॥ अथेति ॥ "कत्तृणं तृणभित्पृश्न्योः" इति मेदिनी ॥ (१) ॥ "पौरं त्रिषु पुरोद्भूते कत्तृणे पुंनपुंसकम्" इति मेदिनी ॥ (२) ॥ "सौगन्धिको गन्धवणिक् सौगन्धिकं तु कत्तृणे । गन्धोत्पले पद्मरागे कह्लारे" इति हैमः ॥ (३) ॥ "ध्यामं दमनके गन्धतृणे श्यामेऽभिधेयवत्" इति विश्वः ॥ (४) ॥ देवजग्धकम् ॥ (५) ॥ "कत्तृणे रौहिषं क्लीबं पुँल्लिङ्गो हरिणान्तरे" इति मूर्धन्यान्ते रभसः ॥ (६) ॥ षट् "रोहिस" इति

छत्राऽतिच्छत्रपालघ्नौ मालातृणकभूस्तृणौ । शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥१६७॥
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः । तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली१६८
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु । फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ॥१६९॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः॥१॥

ख्याततृणविशेषस्य ॥ १६६ ॥ छत्रेति ॥ "छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः । नपुंसकं चातपत्रे" इति मेदिनी ॥ ( १ ) ॥ अतिच्छत्रः ॥ ( २ ) ॥ पालघ्नः ॥ ( ३ ) ॥ त्रीणि जलजतृणविशेषस्य ॥ मालेति ॥ मालातृणकम् ॥ ( १ ) ॥ भूस्तृणम् ॥ ( २ ) ॥ द्वे तृणविशेषस्य ॥ स्वामी तु—छत्रादिपञ्च पर्यायानाह ॥ शष्पमिति ॥ "शष्पं बालतृणे स्मृतम् । पुंसि स्यात् प्रतिमाहानौ" इति मेदिनी ॥ ( १ ) ॥ बालतृणम् ॥ ( २ ) ॥ द्वे नवतृणस्य ॥ घेति ॥ घासः ॥ ( १ ) ॥ यवसम् ॥ ( २ ) ॥ द्वे गवाद्यदनीयतृणविशेषस्य ॥ तृणमिति ॥ तृणम् ॥ ( १ ) "अर्जुनः ककुभे पार्थ कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्याद् धवले पुनरन्यवत् ॥ नपुंसकं तृणे नेत्ररोगे स्यादर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित्" इति मेदिनी ॥ ( २ ) ॥ द्वे तृणमात्रस्य ॥ १६७ ॥ तृणेति ॥ तृणानां संहतिः समूहः "तृण्या ॥ ( १ ) ॥ एकं तृणसमूहस्य ॥ नेति ॥ नडानां संहतिः नड्या ॥ ( १ ) ॥ एकं नडसमूहस्य ॥ तृणेति ॥ तृणराजाह्वयः ॥ ( १ ) ॥ "तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे । वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटौषधौ । क्लीबं तु हरिताले स्यात्" इति मेदिनी ॥ 'तलः' अपि॥"तलश्चपेटे तालद्रौ तलं ज्याघातवारणे । त्सरौ स्वभावाधरयोस्तन्त्रीघाते च संमतः ॥ ( २ ) ॥ द्वे तालस्य ॥ नालीति ॥ नालिकेरः ॥ नारिकेलश्च ॥ ( १ ) ॥ लाङ्गली ॥ ( २ ) ॥ द्वे नारिकेलस्य ॥ १६८ ॥ घोण्टेति ॥ "घोण्टा तु बदरीपूगवृक्षयोरपि योषिति" इति मेदिनी ॥ ( १ ) ॥ "पूगः क्रमुकसंघयोः" इति हैमः ॥ ( २ )॥ "क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि । फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः" इति मेदिनी ॥ ( ३ ) ॥ गुवाकः॥ "गुवाकोऽपि च गूवाकः" इति तारपालः ॥ ( ४ )॥ "खपुरः क्रमुके भद्रमुस्तकेऽलसकेऽपि च" इति मेदिनी ॥ ( ५ ) ॥ पञ्च "सोपारी" इति ख्यातस्य ॥ अस्येति ॥ अस्य पूगस्य फलम् उद्वेगम् ॥ ( १ ) ॥ एकं क्रमुकफलस्य ॥ एत इति ॥ एते नालिकेराद्यास्त्रयो हिन्तालेन चतुर्थेन सहिताः खर्जूराद्याश्च चत्वारः ॥ तृणजातीया द्रुमाः ॥ हिंतालः ॥ ( १ )॥ "खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः" इति हैमः ॥ ( १ ) ॥ "वनखजूरी" इति ख्याता ॥ ( १ ) ॥ केतकी ॥ ( १ ) ॥ ताली ॥ ( १ ) ॥

इति वनौषधिवर्गविवरणम् ॥

---

सिंह इति ॥ "सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । सिंही तु कण्टकार्यां स्यात्" इति मेदिनी ॥ "सिंही स्वर्भानुमातरि । वासाबृहत्योः क्षुद्रायाम्" इति हैमः ॥ ( १ ) ॥ मृगेन्द्रः ॥ (२) ॥ पञ्चास्यः ॥ ( ३ ) ॥ हर्यक्षः ॥ ( ४ ) ॥ "केसरी तुरगे सिंहे पुंनागे नागकेसरे" इति मेदिनी ॥ केचित् ( केशरी ) इति तालव्योष्ममध्यमाहुः ॥ "हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवत् पिङ्गहरितोः" इति मेदिनी ॥ ( ६ ) ॥ षट् सिंहस्य ॥ शार्द्वेति ॥ "शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः" इति मेदिनी ॥ (१) ॥

---

१—लद्वितीयरेफचतुर्थः "नालिकेरचितास्तिलकः" इति दमयन्तीश्लेषात् ॥२-रद्वितीयलचतुर्थः "नारिकेलीमहाबीरैरिव नारिकेलीवनैः" इति वासवदत्ताश्लेषात् ॥

**वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः। दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि २ कपिप्लवंगप्लवगशाखामृगवलीमुखाः । मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ३ ॥ ऋक्षाच्छभल्लभालूका गण्डके खड्गखड्गिनौ । लुलापो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥ स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥ ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् । त्रयो गौधारगौधेरगौधेया गोधिकात्मजे ॥ ६ ॥**

द्वीपी ॥ ( २ ) ॥ "व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थः कण्टकार्यां तु योषिति" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि "वाघ" इति ख्यातस्य ॥ तरेति ॥ तरक्षुः ॥ ( १ ) ॥ मृगादनः ॥ ( २ ) ॥ द्वे " तेंदुआवाघ" इति ख्यातस्य—इत्यन्ये "हुण्डार" इति ख्यातस्य—इति मुकुटः ॥ ॥ १ ॥ वरेति ॥ "वराहो नाणके किरौ । मेघे मुस्ते गिरौ विष्णौ" इति हैमः ॥ ( १ ) ॥ सूकरः ॥ "तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः" इति शभेदः ॥ ( २ ) ॥ "घृष्टिः स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ" इति विश्वः ॥ ( ३ ) ॥ "कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ । कोलं च बदरे कोला पिप्पल्यां चव्यभेषजे" इति हैमः ॥ ( ४ ) ॥ पोत्री ॥ ( ५ ) ॥ किरः ॥ "किरिः" इति पाठे "अथ किरः किरिः । भूदारः शूकरः" इति हैमः ॥ ( ६ ) ॥ किटिः ॥ ( ७ ) ॥ दंष्ट्री ॥ ( ८ ) ॥ घोणी ॥ ( ९ ) ॥ स्तब्धरोमा ॥ ( १० ) ॥ क्रोडः ॥ ( ११ ) ॥ भूदारः ॥ ( १२ ) ॥ द्वादश सूकरस्य ॥ २ ॥ केति ॥ "कपिर्ना सिह्लके शाखामृगे च मधुसूदने" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ प्लवंगः ॥प्लवंगमः च "प्लवंगमश्च मण्डूके तथा शाखामृगेऽपि च" इति मेदिनी॥(२)॥"प्लवगः कपिभेकयोः। अर्कसूते" इति हैमः ॥ ( ३ ) शाखामृगः ॥ ( ४ ) ॥ वलीमुखः ॥ ( ५ ) ॥ मर्कटः ॥ ( ६ ) ॥ वानरः ॥ ( ७ ) ॥ कीशः ॥ ( ८ ) ॥ वनौकाः ॥ ( ९ ) ॥ नव वानरस्य ॥ अथेति ॥ भल्लुकः ॥ दीर्घमध्योऽपि ॥ "भल्लूको भल्लुको भल्ल इत्युलूकादयश्च सः" इति पुरुषोत्तमः ॥"भाल्लुकः" "भाल्लूकः" च ॥ ( १ ) ॥ ३ ॥ "ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे च नपुंसकम्" इति मेदिनी ॥ ( २ ) ॥ संघातविगृहीतमिदं नाम ॥ "अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् । आभिमुख्ये" इति मेदिनी ॥ "भल्लः स्यात् पुंसि भल्लूके शस्त्रभेदे तु न द्वयोः । भल्लातक्यां स्त्रियां भल्ली" इति मेदिनी ॥ ( ३ ) ॥ भालूकः ॥ ( ४ ) ॥ चत्वारि "भालु" इति ख्यातस्य ॥ गण्डेति ॥ "गण्डकः पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयोः । अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे" इति विश्वमेदिन्यौ॥(१)॥ "खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ "खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु" इति मेदिनी ॥ (३) ॥ त्रीणि "गंडा" इति ख्यातस्य ॥ लुलेति ॥ लुलापः ॥ 'लुलायः' इति च ॥ ( १ ) ॥ महिषः ॥ ( २ ) ॥ वाहद्विषत् ॥ ( ३ ) ॥ कासरः ॥ ( ४ ) ॥ सैरिभः ॥( ५ ) ॥ पञ्च महिषस्य ॥ ४ ॥स्त्रियामिति ॥ "शिवः किलः शिवा क्रोष्टा भवेदामलकी शिवा" इति शाश्वतात्सृगालेऽपि स्त्रीलिङ्गः ॥ चतुष्पदां द्विलिङ्गता वक्ष्यते तदपवादोऽयम् ॥ ( १ ) ॥ भूरिमायः ॥ (२) ॥ गोमायुः ॥ ( ३ ) ॥ मृगधूर्तकः॥ ( ४ ) ॥ सृगालः ॥ "तालव्या अपि दन्त्याश्च शम्बशम्बरशूकराः । रशनाऽपि च जिह्वायां शृगालः कलशोऽपि च" इति शभेदः ॥ "शृगालो वञ्चके दैत्ये शृगालं डमरे विदुः" इति विश्वः ॥ ( ५ ) ॥"वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके" इति मेदिनी ॥ ( ६ ) ॥ क्रोष्टा ॥ ( ७ ) ॥ फेरुः ॥ ( ८ ) ॥ फेरवः ॥ ( ९ ) ॥ जम्बुकः ॥ 'जम्बूकः' च ॥ "खरोष्ट्रकपिजम्बूकवायसाजम्बरो यमः" इति वाचस्पतिः ( १० ) ॥ दश सृगालस्य ॥ ५ ॥ ओतुरिति॥ ओतुः ॥(१)॥ "विडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्" ॥ इति मेदिनी॥(२)॥ "मार्जार ओतौ खट्वाशे"

---

१—"दधति कुहरभाजां यत्र भल्लूकयूनाम्" इति प्रयोगात्—इति स्वामिमुकुटौ ॥ २—"अच्छभल्लपरिषद्विहरन्ती" इत्यभिनन्दः—इति मुकुटः ॥ ३—तथा च प्रयोगो दृश्यते "खुरविधुतधरित्रीचित्रकायो लुलायः" इति—इति मुकुटः ॥

श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् । वातप्रमीर्वातमृगः कोक ईहामृगो वृकः ॥७॥
मृगे कुरङ्गवातायुहरिणाजिनयोनयः । ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥
कदली कन्दली चीनश्चमूरुप्रियकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसाररुरुन्यङ्कुरङ्कुशंबररौहिषाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः । इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥११॥

इति मेदिनी ॥ ( ३ ) ॥ वृषदंशकः ॥ ( ४ ) ॥ आखुभुक् ॥ ( ५ ) ॥ पञ्च विडालस्य ॥ त्रेति ॥ गौधारः ॥ ( १ ) ॥ गौधेरः ॥ ( २ ) ॥ गौधेयः ॥ ( ३ ) ॥ त्रीणि सर्पाद्गोधायां जातस्य "चन्दनगोहा" इति ख्यातस्य ॥ ६ ॥ श्वेति ॥ श्वावित् ॥ ( १ ) ॥ "शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुश्वाविधोर्ना" इति मेदिनी ॥ ( २ ) ॥ द्वे "सेह" इति ख्यातस्य ॥ तादिति ॥ तस्य श्वाविधो लोमनि ॥ शलली ॥ ( १ ) ॥ स्त्रीत्वाविवक्षायां शललम् ॥ "तच्छलाकायां शललं शलमित्यपि" इति हैमनाममाला ॥ "शललस्तु नृशण्ढयोः" इत्यमरमाला ॥ ( २ ) ॥ "शलं तु शल्यकीलोम्नि शलो भृङ्गे गणे विधौ" इति विश्वः ॥ ( ३ ) ॥ त्रीणि श्वाविल्लोमानि ॥ वातेति ॥ "वातप्रमीर्वातमृगः" इति पुंस्काण्डेऽमरमाला ॥ "योषिति वातप्रमीः समीरमृगः" इति बोपालितात् स्त्रीत्वमप्यस्य ॥ ( १ ) ॥ वातमृगः ॥ ( २ ) ॥ द्वे मृगभेदस्य ॥ कोक इति ॥ कोकः ॥ ( १ ) ॥ "ईहामृगस्तु पुंसि स्यात् कोकरूपकभेदयोः" इति मेदिनी ॥ ( २ ) ॥ वृकः ॥ ( ३ ) ॥ त्रीणि "विग" इति ख्यातस्य ॥ ७ ॥ मृग इति ॥ "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणायां याञ्चायां मृगी तु वनितान्तरे" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ कुरङ्गः ॥ ( २ ) ॥ वातायुः ॥ "वानायुः" इत्येके ॥ ( ३ ) ॥ "हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् । हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च" इति मेदिनी ॥ ( ४ ) ॥ अजिनयोनिः ॥ ( ५ ) ॥ पञ्च मृगस्य ॥ ऐणयिति ॥ एण्या मृग्याश्चर्मास्थिमांसादि ॥ ऐणेयम् ॥ ( १ ) ॥ एकं मृगीचर्मादेः ॥ एणेति ॥ एणस्य मृगस्य विकारोऽवयवो वा ऐणम् ॥ ( १ ) ॥ एकं मृगचर्मादेः ॥ उभे इति ॥ उभे ऐणेयैणे ॥ ८ ॥ केति ॥ षडेते हरिणभेदा अजिनयोनयः स्युः ॥ "कदली हरिणान्तरे । रम्भायां वैजयन्त्यां च" इति लान्तेषु हैमः ॥ "रम्भावृक्षे च कदली पताकामृगभेदयोः" इति लान्तेषु मेदिनी ॥ "कदलं त्रिषु" इत्यमरमाला ॥ ( १ ) ॥ "कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः" इति लान्तेषु मेदिनी ॥ ( १ ) ॥ "चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे" इति मेदिनी ॥ ( १ ) ॥ चमूरुः ॥ ( १ ) ॥ प्रियकः ॥ ( १ ) ॥ समूरुः ॥ ( १ ) ॥ षट् हरिणभेदाः ॥ ९ ॥ कृष्णेति ॥ "कृष्णसारः शिंशिपायां मृगभेदे स्नुहीतरौ" इति हैमः ॥ 'कृष्णशारः' इति तालव्यपाठोऽपि ॥ ( १ ) ॥ "रुरुर्दैत्ये मृगेऽपि च" इति हैमः ॥ ( १ ) ॥ "न्यङ्कुर्मृगे मुनौ" इति हेमचन्द्रः ॥ ( १ ) ॥ रङ्कुः ॥ ( १ ) ॥ "शंबरो दानवान्तरे । मत्स्यैणगिरिभेदेषु शंबरी पुनरोषधौ" इति हैमः ॥ ( १ ) ॥ "रौहिषं[1] कत्तृणे क्लीबं पुंसि स्याद्धरिणान्तरे" इति मेदिनी ॥ ( १ ) ॥ "गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ" इति मेदिनी ॥ ( १ ) ॥ "मृगो विन्दुः पृषश्चैव पृषतश्च प्रकीर्तितः" इति व्याडिः ॥ "पृषतवत् पृषन्मृगे । विन्दौ" इति हैमः । "पृषतस्तु मृगे विन्दौ खरोहिते । श्वेतविन्दुयुतेऽपि स्यात्" इति हेमचन्द्रः[3] ॥ ( १ ) ॥ एणः ॥ ( १ ) ॥ ऋश्यः ॥ ( ऋष्यः ) मूर्धन्यान्तोऽपि ॥ 'रिष्यः' अपि ॥ "एणः कुरङ्गमो रिष्यः स्यादश्यश्चारुलोचनः" इति त्रिकाण्डशेषः ॥ ( १ ) ॥ रोहितः ॥ ( १ ) ॥ "चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः" इति मेदिनी ॥ ( १ ) ॥ एते द्वादश मृगभेदाः ॥१०॥ गन्धेति ॥ "गन्धर्वः पशुभेदे स्यात् पुंस्कोकिलतुरंगयोः । अन्तराभवसत्त्वे च गायने खेचरेऽपि च" इति ( स्पर्शान्ते )

---

१ हैमे तु "कलापे" इति लिखितम् । "समूहे" इति व्याख्यातमनेकार्थकैरवाकरकौमुद्याम् ॥ २ रौहिद् हलन्तोऽपि "स एव रौहिषां मध्ये चरति" इति भवभूतिः । "रुणद्धि कश्चित् क्रमे सुप्तरौहिषि" इत्यभिनन्दः-इति मुकुटः ॥ ३—हैमसटीकपुस्तके तु नोपलभ्यते ॥

उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका । सरटः कृकलासः स्यान्मुसली गृहगोधिका १२॥
लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः। नीलङ्गुस्तु क्रिमिः कर्णजलौका शतपद्युभे१३॥
वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके । पारावतः कलरवः कपोतोऽथ शशादनः १४॥
पत्री श्येन उलूके तु वायसारातिपेचकौ । व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः१५॥
लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः । कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः१६

विश्वमेदिन्यौ ॥ ( १ ) ॥ "अष्टापदे च करभे शरभः स्यान्मृगान्तरे" इति तालव्यादौ रभसः ॥ "शरभस्तु पशोर्भिदि । करभे वानरभिदि" इति मेदिनी ॥ ( १ ) ॥ "रामा योषाहिङ्गुलिन्योः क्लीबं वास्तुककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हये च पशुभेदे च त्रिषु चारौ सितेऽसिते" इति मेदिनी ॥ ( १ ) ॥ सृमरः ॥ ( १ ) ॥ गवयः ॥ ( १ ) ॥ शशः ॥ ( १ ) ॥ इत्यादयो येऽत्रोक्ताः, ये च पूर्वोक्ताः सिंहादयः, वक्ष्यमाणाश्च ये गोमेषहस्त्यश्वादयः, सर्वे ते पशुजातयः पशुशब्दवाच्याः ॥ ११ ॥ उन्द्विति ॥ "कन्दुरुन्दुरुन्दुरः" इति शब्दार्णवः ॥ ( १ ) ॥ मूषिकः ॥ ( २ ) ॥ आखुः ॥( ३ ) ॥ त्रीणि मूषिकस्य ॥ गिरीति ॥ गिरिका ॥ ( १ ) ॥ "खर्वाऽखुर्बालमूषिका" इति दुर्गः ॥ ( २ ) ॥ द्वे मूषिकबालानाम् ॥ सरेति ॥ सरटः ॥ ( १ ) ॥ कृकलासः ॥ ( २ ) ॥ द्वे "किर्काट" इति ख्यातस्य ॥ मुसेति ॥ मुसली ॥ तालव्यमध्या[1] ( मुशली ) इति स्वामी ॥ ( १ ) ॥ गृहगोधिका ॥ "ज्येष्ठा स्त्री कुड्यमत्स्या च गृहगोधा गृहालिका" इति साहसाङ्कः ॥ "गृहगोलिका" इति पाठः सभ्यः—इति स्वामी ॥ ( २ ) ॥ द्वे "विछुत्तिया" इति ख्यातायाः ॥ १२ ॥ लूतेति ॥ "लूता लूतका" इत्यमरदत्तः ॥ "लूता तु रोगे पिपीलिकोर्णनाभयोः" इति हेमचन्द्रः ॥ ( १ ) ॥ तन्तुवायः ॥ 'तन्त्रवायः' इति स्वामी ॥ ( २ ) ॥ ऊर्णनाभः ॥ ( ३ ) ॥ "अथ मर्कटकः सस्यभेदे वानरलूतयोः" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि "मकडी" इति ख्यातायाः ॥ नीति ॥ "नीलङ्गुरपि नीलाङ्गुः" इति द्विरूपकोशः ॥ "नीलङ्गुः स्यात् कृमौ पुंसि भम्भराल्यां तु योषिति" इति मेदिनी ॥ ( १ ) ॥ "द्रुमामये भवेत्पुंसि कीटे च क्रिमिवत् कृमिः" इति रभसः ॥ "क्रिमिर्ना कृमिवत् कीटे लाक्षायां कृमिले खरे" इति मेदिनी ॥ (२) ॥ द्वे "सुनकीडा" इति ख्यातस्य ॥ कर्णेति ॥ कर्णजलौका ॥ "कर्णजलौकाः" सान्ता वा ॥ ( १ ) ॥ शतपदी ॥ ( २ ) ॥ सान्तत्वेऽपि स्त्रीत्वबोधनाय—"उभे"इति ॥ द्वे"गोजर"इति ख्यातस्य॥१३॥वृश्चीति ॥ "वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः" इति मेदिनी ॥ ( १ ) ॥ शूककीटः ॥ ( २ ) ॥ द्वे ऊर्णादिभक्षककृमिविशेषस्य ॥ अलीति ॥ "भृङ्गवृश्चिकयोरलिः" इति रभसः ॥ दीर्घादिरपि ॥ "वृश्चिको द्रुण आलिः स्यात्" इति बोपालितः ॥ "अथाली स्याद्वृश्चिके भ्रमरे पुमान्" इति मेदिनी ॥ ( १ ) ॥ द्रुणं चापेऽलिनि द्रुणः" इति मेदिनी ॥ 'द्रोणः' इत्येके—इति स्वामी ॥ ( २ ) ॥ वृश्चिकः ॥ ( ३ ) ॥ त्रीणि "वीछी" इति ख्यातस्य ॥ पारेति॥ पारावतः॥'पारापतः' इति पाठे"पारावतश्च छेद्यश्च कपोतो रक्तलोचनः । पारापतः कलरवः" इति रभसः ॥ ( १ ) ॥ कलरवः ॥ ( २) ॥ "पारावतः कपोतः स्यात्कपोतो विहगान्तरे" इति विश्वः॥ ( ३ ) ॥ त्रीणि "परेवा"इति ख्यातस्य ॥ अथेति॥शशादनः॥"श्येने पत्त्रिशशादनौ" इत्यमरमाला ॥ ( १ ) ॥ १४ ॥ "श्येनाख्यो विहगः पत्त्री पत्त्रिणौ शरपक्षिणौ" इति शाश्वतः ॥ (२) ॥ "श्येनः पक्षिणि पाण्डुरे" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि "बाज" इति ख्यातस्य ॥ उलूकेति ॥ "उलूकः पुंसि काकारातिन्द्रे भारतयोधिनि" इति मेदिनी ॥ ( १ ) ॥ वायसारातिः ॥ ( २ ) ॥ पेचकः ॥ ( ३ ) ॥ त्रीणि घूकस्य ॥ व्याघ्रेति ॥ व्याघ्राटः ॥ ( १ ) ॥ "भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहंगमे" इति मेदिनी ॥ ( २ ) ॥ द्वे "मर्दुल" इति ख्यातस्य ॥ खञ्जेति ॥ खञ्जरीटः ॥ ( १ ) ॥ "खञ्जनः खञ्जरीटे, स्त्री सर्षप्यां, खञ्जनं गतौ" इति मेदिनी ॥ ( २ ) ॥ द्वे "खञ्जन" इति ख्यातस्य ॥ १५ ॥ ॥ लोहेति ॥ लोहपृष्ठः ॥ ( १ ) ॥ "कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठ-

---

१—"मुषली, मूर्धन्यमध्या च इति वर्णदेशना—इति मुकुटः ॥ २—अनेकार्थकैरवाकरकौमुद्यां तु "कर्दमे गदे" इति व्याख्यातं मङ्खप्रामाण्येन ॥

**दार्वाघाटोऽथ शारङ्गः स्तोककश्चातकः समाः । कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः॥१७॥ चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः । पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि॥१८॥ कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ । वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥१९॥ काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः । ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥ द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः॥आतायिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ॥२१**

कृतान्तयोः'' इति मेदिनी ॥ (२)॥ द्वे ''कंकहड'' इति ख्यातस्य ॥ अथेति ॥ चाषः ॥ 'चासः' अपि ॥ ''इक्षुपक्षिभिदोश्चासः'' इति दन्त्यान्तेषु रभसः ॥ ( १ ) ॥ ''किकीदिविश्च चाषः स्यात्'' इति रत्नकोषः ॥ ( २ ) ॥ द्वे ''चास'' इति ख्यातस्य ॥ केति ॥ ''कलिङ्गः'' पूतिकरजे धूम्याटे भूम्नि नीवृति । न द्वयोः कौटजफले महिलायां तु योषिति'' इति मेदिनी ॥ ( १ ) ॥ ''भृङ्गो धूम्याटषिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि'' इति मेदिनी ॥ ( २ )॥ धूम्याटः ॥ ( ३ ) ॥ त्रीणि भृङ्गस्य ॥ अथेति ॥ शतपत्रकः ॥ ( १ ) ॥ १६ ॥ दार्वाघाटः ॥ ( २ ) ॥ द्वे ''काठकोरा'' इति ख्यातस्य ॥ अथेति ''शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च'' इति तालव्यादावजयः ॥ ''सारङ्गः'' च ॥ ''चातके हरिणे पुंसि सारङ्गः शबले त्रिषु'' इति दन्त्यादौ रभसात् ॥ ''सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु'' इति मेदिनी ॥ ( १ ) ॥ स्तोककः ॥ ( २ ) चातकः ॥ ( ३ ) ॥ त्रीणि ''पिपिहा'' इति ख्यातस्य ॥ कृकेति ॥ ''कृकवाकुर्मयूरेऽपि सरटे चरणायुधे'' इति विश्वः ॥ ( १ ) । ताम्रचूडः ॥ ( २ ) ॥ ''कुक्कुटश्चूतचर्यायां पुंसि स्याच्चरणायुधे । निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे'' इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ चरणायुधः ॥ ( ४ ) ॥ चत्वारि कुक्कुटस्य ॥ १७ ॥ चटेति ॥ चटकः ॥ ( १ ) ॥ ''कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके'' इति मेदिनी ॥ ( २ ) ॥ द्वे चटकस्य ॥ तस्येति ॥ चटका ॥ ( १ ) ॥ एकं चटकस्त्रियाः ॥ तयोरिति ॥ तयोश्चटकदम्पत्योः पुमपत्ये चाटकैरः ॥ ( १ ) ॥ एकं चटकपुमपत्यस्य॥स्त्र्येति॥स्त्री च तदपत्यं चेति तस्मिन्॥चटका ॥(१)॥एकं चटकस्त्र्यपत्यस्य॥१८॥कर्केति॥कर्करेटुः ॥(१)॥''कर्करेटुः करेटुः स्यात् करटुः कर्कराटुकः'' इति रभसः॥(२)॥द्वे अशुभवादिपक्षिभेदस्य॥कृकेति॥ कृकणः ॥ ( १ ) ॥क्रकरः॥(२)॥ द्वे अशुभपक्षिविशेषस्य ॥ वनेति॥वनप्रियः॥(१)॥ परभृतः॥ ( २ ) ॥ कोकिलः ॥ ( ३ ) ॥ पिकः ॥ ( ४ ) ॥ चत्वारि कोकिलस्य ॥ १९ ॥ काके इति ॥ ''काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः ॥ काका स्यात्काकनासायां काकोलीकाकजङ्घयोः । रक्तिकायां मलय्यां च काकमाच्यां च योषिति ॥ काकं सुरतबन्धे स्यात् काकानामपि संहतौ'' इति विश्वमेदिन्यौ ॥ ( १ ) ॥ ''करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे ॥ करटो वाद्यभेदे'' इति विश्वमेदिन्यौ ॥ ( २ ) ॥ ''अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः'' इति मेदिनी ॥ ( ३ )॥ बलिपुष्टः ॥ ( ४ ) ॥ सकृत्प्रजः ॥ ( ५ ) ॥ ''ध्वाङ्क्षः काके बकेऽर्थिनि । गेहे, ध्वाङ्क्षी तु काकोल्याम्'' इति हैमः ॥ ( ६ ) ॥ आत्मघोषः ॥ ( ७ ) ॥ परभृत् ॥ ( ८ ) ॥ बलिभुक् ॥ ( ९ ) ॥ ''वायसोऽगुरुवृक्षे च श्रीवासध्वाङ्क्षयोः पुमान्'' इति मेदिनी ॥ ( १० ) ॥ दश काकस्य ॥ २० ॥ द्रोणेति ॥ द्रोणकाकः ॥''द्रोणो ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि'' इति रुद्रः ॥ ''द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये । पुमान् कृपीपतौ कृष्णकाके, स्त्री नीवृदन्तरे ॥ तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते'' इति मेदिनी ॥ ( १ ) ॥ ''काकोलं नरकान्तरे, । ना कुलाले द्रोणकाके, विषभेदे तु न स्त्रियाम्'' इति मेदिनी ॥ ( २ ) ॥ द्वे ''डोंडकाक'' इति ख्यातस्य ॥ देति ॥ ''दात्यूहः कालकण्ठके । चातकेऽपि'' इति हैमः ॥ ( १ ) ॥

---

१—गृहं गृहविशेषः । यथाऽऽडिः—'ध्वजो धूमश्च सिंहश्च श्वा वृषश्च खरो गजः । ध्वाङ्क्षोऽष्टमस्तु प्राच्याद्या ईशानान्ताः क्रमादमी ॥ इत्यनेकार्थकैरवाकरकौमुदी ॥—''ध्वाङ्क्षी काकोलिकायां स्यात्–'' इति पाठस्तु मेदिनीस्थः ॥

**क्रुङ् क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः । कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥२२॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ । हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥२३॥
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः । मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः॥२४॥
शरारिराटिराडिश्च बलाका विसकण्ठिका । हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥२५॥**

"कालकण्ठनीलकण्ठौ पीतसारे महेश्वरे । दात्यूहे ग्रामचटके खञ्जरीटे शिखावले " इति हेमचन्द्रः ॥ ( २ ) ॥ द्वे दात्यूहस्य॥ आतेति ॥ आतायी॥ स्वामी तु 'आतापी' इति पाठं मन्यते॥(१)॥ "चिल्लः खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने । क्लिन्नाक्षि " इति हैमः ॥ ( २ ) ॥ द्वे " चील " इति ख्यातस्य ॥ दाक्षेति ॥ दाक्षाय्यः ॥ ( १ ) ॥ "गृध्रः खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके " इति मेदिनी ॥ ( २ ) ॥ द्वे "गीध" इति ख्यातस्य ॥ कीरेति ॥ "कीरः शुके पुंभूम्नि नीवृति " इति मेदिनी ॥ ( १ ) ॥ " शुको व्याससुते कीरे रावणस्य तु मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् " इति मेदिनी ॥ ( २ ) ॥ द्वे शुकस्य ॥ सेति ॥ 'समौ' इति त्रिषु योज्यम् ॥ २१ ॥ क्रुङ्ङिति ॥ क्रुङ् ॥ ( १ ) ॥ " क्रौञ्चो द्वीपप्रभेदे स्यात् पक्षिपर्वतभेदयोः " इति मेदिनी ॥'क्रुञ्चः ' इति च॥(२)॥ द्वे "करांगुल" इति ख्यातस्य॥अथेति॥"बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि " इति मेदिनी ॥ ( १ ) कह्वः ॥ ( २ ) द्वे बकस्य ॥ पुष्केति ॥ पुष्कराह्वः ॥ ( १ ) "सारसः पक्षिभेदेन्द्वोः क्लीबं तु सरसीरुहे " इति मेदिनी ॥ ( २ ) ॥ द्वे सारसस्य॥ कोकेति ॥ "कोकश्चक्रे वृके ज्येष्ठयां खर्जूरीद्रुमभेकयोः " इति विश्वः ॥ ( १ ) ॥ "चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः ॥ जलावर्तेऽपि " इति मेदिनी ॥ ( २ )॥ चक्रवाकः ॥ ( ३ ) ॥ रथाङ्गाह्वयनामकः ॥ ( ४ ) ॥ चत्वारि "चकवा" इति ख्यातस्य ॥ २२ ॥ कादेति ॥ " कादम्बः स्यात् पुमान्पक्षिविशेषे सायकेऽपि च" इति मेदिनी ॥ ( १ ) "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे " इति मेदिनी ॥ ( २ ) ॥ द्वे "बतक" इति ख्यातस्य ॥ उदिति ॥ उत्क्रोशः ॥(१)॥ कुररः ॥ ( २ ) ॥ द्वे कुररपक्षिणः ॥ हंसा इति ॥ "हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मन्यमत्सरे ॥ योगभेदे मन्त्रभेदे शारीरमरुदन्तरे । तुरंगमप्रभेदे च " इति मेदिनी ॥ ( १ ) ॥ श्वेतगरुत् ॥ ॥ ( २ ) ॥ " चक्राङ्गो मानसौकसि । चक्राङ्गी कटुरोहिण्याम् " इति मेदिनी ॥ ( ३ ) ॥ मानसौकाः ॥ ॥ ( ४ ) ॥ चत्वारि हंसस्य ॥ २३ ॥ राजेति ॥ चञ्चुसहितैश्चरणैः ॥ यद्वा चञ्चुभिश्चरणैश्चेति द्वन्द्वः ॥ तैर्लोहितैरुपलक्षिताः ये देहेन सितास्ते राजहंसाः॥" राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ ॥ (१ ) ॥ एकं राजहंसस्य ॥ मलीति ॥ मलिनैः किंचिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षितास्ते मल्लिकाख्या भवेयुः ॥ " मल्लिको हंसभेदे स्यात् तृणशूल्येऽपि मल्लिका" इति रुद्रः ॥ " मल्लिको हंसभित्रापि । मल्लिका तृणशूल्येऽपि मीनमृत्पात्रभेदयोः " इति मेदिनी ॥ मल्लिकाकारमाक्षि यस्य शुक्लापाङ्गत्वात् इति 'मल्लिकाक्षः'—इति स्वामी ॥ " बहुव्रीहौ सक्थ्यक्ष्णोः " ( ५।४।११३ ) इति षच् ॥ ( १ ) ॥ एकं हंसभेदस्य ॥ धार्तेति ॥ कृष्णैश्चञ्चुचरणैरुपलक्षितास्ते धार्तराष्ट्राः स्युः ॥ ( १ ) ॥ एकं कृष्णचञ्चुचरणहंसस्य ॥ २४ ॥ शरेति ॥ शरारिः ॥ 'शरालिः ' अपि ॥ "शरातिः" इति पाठान्तरम् ॥ ( १ ) आटिः ॥ ( २ ) आडिः ॥ ( ३ ) ॥ त्रयोऽपि स्त्रीलिङ्गाः ॥ " आडिः शरालिर्वरटी गन्धोली, वानरी कपी, "इति स्त्रीलिङ्गकाण्डे रत्नकोषात् ॥ त्रीणि 'आडी' इति ख्यातायाः ॥ बलेति ॥ बलाका ॥ ( १ ) ॥ विसकण्ठिका ॥ ( २ ) ॥ द्वे बकभेदस्य ॥ हंसेति ॥ "वरटा द्वयोर्वरट्यां, स्त्री हंस्यां तु, तत्पतौ पुमान् " इति मेदिनी ॥ ( १ ) ॥ एकं हंसस्त्रियाः ॥ सारेति॥ "सारस्यां लक्ष्मणा ना तु सौमित्रौ श्रीमति त्रिषु " इति रुद्रः ॥ "लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् " इति मेदिनी ॥ निर्मकारोऽपि ॥ "लक्षणश्चैव सारसे " इत्यमरमाला ॥"लक्ष्मणं नाम्नि चिह्नेऽथ सारस्यां लक्ष्मणा काचित् "इति मेदिनी ॥(१)॥ एकं सारसस्त्रियाः॥२५॥

---

१—"महापुरुषमिव प्रकटमीनशङ्खलक्षणं सरः' इति कादम्बरीश्लेषश्च–इति मुकुटः ॥

**जतुकाऽजिनपत्त्रा स्यात्परोष्णी तैलपायिका । वर्वणा मक्षिका नीला सरघा मधुमक्षिका२६**
**पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका। दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः२७॥**
**भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः।समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः२८**
**मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥**
**मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् । शिखावलः शिखी केकी मेघनादानुलास्यपि३०**
**केका वाणी मयूरस्य समौ चन्द्रकमेचकौ । शिखा चूडा शिखण्डश्च पिच्छबर्हे नपुंसके३१॥**

जात्विति॥ "रामठे जतुकं चर्मपत्त्राजतुकृतोः स्त्रियाम् " इति चवर्गतृतीयादौ रभसः ॥ ( १ ) ॥ अजिनपत्त्रा ॥ ( २ ) ॥ द्वे "चामचिरयि" इति ख्यातायाः॥ पेति ॥ परोष्णी ॥(१)॥ तैलपायिका ॥(२)॥ "तनुकामिस्त्विन्द्रगोपः, परोष्णी तैलपायिका। तैलाभ्यक्ता खलाधारा हीरा पिप्पलिका स्त्रियाम् " इति रभसः ॥ द्वे "मुखविष्ठा" वागुलिकादिनामिकायाः ॥ वर्वेति ॥ वर्वणा ॥ ( १ ) ॥ मक्षिका नीला ॥ नीलवर्णमक्षिकाया एकम् ॥ केचित्तु नामत्रयमिदमाहुः ॥ सरेति ॥ सरघा ॥ ( १ ) ॥ मधुमक्षिका ॥ ( २ ) ॥ द्वे मधुमक्षिकायाः ॥ २६ ॥ पेति ॥ पतङ्गिका ॥ ( १ ) ॥ पुत्तिका ॥ ( २ ) ॥ द्वे मधुमक्षिकाविशेषस्य ॥ दंश इति ॥ " दंशः कीटविशेषे च वर्मदंशनयोः पुमान्" इति मेदिनी ॥ ( १ ) ॥ वनमक्षिका ॥ ( २ ) ॥ द्वे वनमक्षिकायाः ॥ दंशीति ॥ तेषां दंशानाम् अल्पा दंशजातिः ॥ दंशी ॥ ( १ ) ॥ एकं मक्षिकाल्पजातेः ॥ गन्धेति ॥ "गन्धोली वरटाशुण्ठ्योर्भद्रायाम्" इति हैमः ॥ ( १ ) ॥ वरटा ॥ 'वरटी' अपि ॥ "वरटा वरटीहंस्योस्तत्पतौ वरटः स्मृतः" इति तारपालः ॥ ( २ ) ॥ द्वे "वरडे" इति ख्यातायाः॥२७॥ भृङ्गेति ॥ "भृङ्गारी झिल्लिकायां च कनकालौ पुनः पुमान्" इति मेदिनी ॥ ( १ ) ॥ चीरुका ॥ "झीरुका" इति मुकुटः ॥ ( २ ) ॥ "चीरी झिल्लयां, नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः" इति मेदिनी ॥ ( ३ ) ॥ "झिल्ली चीर्यातपरुचोर्वर्त्यामुद्वर्तनांशुके" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि "झिंगुरी" इति ख्यातायाः ॥ समाविति ॥ "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ शलभः ॥ ( २ ) ॥ द्वे "फणिग" इति ख्यातस्य ॥ खेति ॥ खद्योतः ॥ ( १ ) ॥ ज्योतिरिङ्गणः ॥ ( २ ) ॥ द्वे खद्योतस्य ॥ २८ ॥ मध्विति ॥ मधुव्रतः ॥ (१) ॥ मधुकरः ॥ ( २ ) ॥ मधुलिट् ॥ ( ३ ) ॥ मधुपः ॥ ( ४ ) ॥ अली ॥ ( ५ ) ॥ द्विरेफः ॥ ॥ ( ६ ) ॥ पुष्पलिट् ॥ ( ७ ) ॥ भृङ्गः ॥ ( ८ ) ॥ षट्पदः ॥ ( ९ ) ॥ "भ्रमरः कामुके भृङ्गे" इति मेदिनी ॥ ( १० ) ॥ "अलिः सुरापुष्पलिहोः" इति मेदिनी ॥ ( ११ ) ॥ एकादश भ्रमरस्य॥ ॥ २९ ॥ मेति ॥ मयूरः ( १ ) ॥ बर्हिणः ॥ ( २ ) ॥ बर्ही ॥ ( ३ ) ॥ नीलकण्ठः ॥ ( ४ ) ॥ भुजङ्गभुक् ॥ ( ५ ) ॥ शिखावलः ॥ ( ६ ) ॥ "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः" इति मेदिनी ॥ ( ७ ) ॥ केकी ॥ ( ८ ) ॥ मेघनादानुलासी ॥ ( ९ ) ॥ नव मयूरस्य ॥३०॥ केकेति ॥ केका ॥ ( १ ) ॥ एकं मयूरस्य वाण्याः ॥ समाविति ॥ चन्द्रकः ॥( १ ) ॥ "बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः" इति कात्यः ॥ "मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके " इति हैमः ॥ ( २ ) ॥ द्वे पिच्छस्थचन्द्राकृतेः ॥ शेति ॥ "शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "चूडा वडभौ शिखायां बाहुभूषणे" इति मेदिनी ॥ ( २ ) ॥ द्वे मयूरशिखायाः ॥ शिखेति ॥ "शिखण्डो बर्हचूडयोः" इति हेमचन्द्रः ॥ ॥ ( १ ) ॥ "पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसंभूतमण्डे च पङ्क्तावश्वपदामये ॥ स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः" इति मेदिनी ॥ ( २ ) ॥ "बर्हं पिच्छे दलेऽस्त्रियाम्" इति मेदिनी ॥

---

१-दीर्घमध्या च जतूका॥"निशाशश्वद्व्यापिस्थितघनजतूकापटलकम्" इति पूर्वकविप्रयोगदर्शनात्-इति मुकुटः ॥

**खगे विहंगविहगविहंगमविहायसः । शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥**
**पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजाः । नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥**
**नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः । तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ३४॥**
**तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः । कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः॥ ३५॥**
**गरुत्पक्षच्छदाः पत्त्रं पतत्त्रं च तनूरुहम्।स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥**
**प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः।पेशी कोषो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ३७**

॥ ( ३ )॥ त्रीणि मयूरपिच्छस्य ॥ ३१ ॥ खग इति ।।"खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे" इति मेदिनी ॥ ( १ ) ॥ विहंगः ॥ ( २ ) "विहगस्तु त्रिलिङ्गः स्यादाशुगे ना विहंगमे" इति मेदिनी ॥(३)॥ विहंगमः ॥ ( ४ ) ॥ "विहायाः शकुनौ पुंसि गगने पुंनपुंसकम्" इति मेदिनी ॥ ( ५ ) ॥ शकुन्तिः ॥ ( ६ ) ॥ पक्षी ॥ ( ७ ) ॥ "शकुनिः पुंसि विहगे सौबले करणान्तरे" इति मेदिनी ॥ ( ८ ) ॥ "शकुन्तः कीटभेदे स्याद्भासपक्षिविहंगयोः" इति मेदिनी ॥ ( ९ ) ॥ "शकुनस्तु पुमान् पक्षिमात्रपाक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी ॥ ( १० ) ॥ "द्विजः स्याद् ब्राह्मणक्षत्त्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्ग्यां हरेणौ च" इति मेदिनी ॥ ( ११ ) ॥ ३२ ॥ पतत्त्री ॥(१२)॥ पत्त्री ॥ "पत्त्री श्येने पत्त्ररथे काण्डदुरथिकाद्रिषु" इति मेदिनी ॥ ( १३ ) ॥ पतगः ॥ ( १४ ) ॥ पतन् ॥ ( १५ ) ॥ पत्त्ररथः ॥ ( १६ ) ॥ "अण्डजो मृगनाभौ स्यात्सरटेऽहौ खगे झषे" इति मेदिनी ॥ ( १७ ) ॥ "नगौकाः पुंसि शरभे पक्षिपञ्चास्ययोरपि" इति मेदिनी ॥ जलौकावद् अदन्तः अपि----इति मुकुटः ॥ ( १८ ) ॥ "वाजी बाणाश्वपक्षिषु" इति मेदिनी ॥ ( १९ ) ॥ विकिरः ॥( २० ) ॥ विः ॥ ( २१ )॥ विष्किरः ॥ ( २२ ) ॥ पतत्रिः ॥ ( २३ ) ॥ ३३ ॥ नीडोद्भवः ॥ ( २४ ) ॥ गरुत्मान् ॥ ( २५ ) ॥ पित्सन् ॥ ( २६ ) ॥ नभसंगमः ॥ ( २७ ) ॥ **सप्तविंशतिः पक्षिणः** ॥ तेषामिति।।एते पक्षिणां भेदाः॥"हारीतो विहगान्तरे । मुनौ छद्मनि"इति हेमचन्द्रः ।।"हरियाल" इति ख्यातः ॥ ( १ ) ॥ "मद्गुः पानीयकाकिका" इति रभसः ॥ ( १ ) ॥ कारण्डवः ॥ ( १ ) ॥ "प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः ॥ क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि" इति हेमचन्द्रः ॥ ( १ ) ॥-३४ ॥ "तित्तिरिः पक्षिणि मुनौ" इति हैमः ॥ अदन्तपक्षे "कपोतलावतित्तिराः" इति वाचस्पतिः ॥ ( १ ) ॥ कुक्कुभः वनकुक्कुटोऽयम् ॥ ( १ ) ॥ लावः ॥ ( १ ) ॥ "जीवंजीवः खगान्तरे। द्रुमभेदे चकोरे च" इति हैमः ॥ (१) ॥ चकोरकः ॥ ( १ ) ॥ कोयष्टिकः ॥ ( १ ) ॥ टिट्टिभकः ॥ ( १ ) ॥ वर्तकः ॥ ( १ ) ॥ "वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयोः" इति मेदिनी ॥ ( १ ) ॥ आदिना शारिकादयो ज्ञेयाः ॥ **पक्षिविशेषाणां पृथगेकैकम्** ॥३५॥ गरुदिति ॥ गरुत्॥ ( १ ) ॥ "पक्षस्तु मासार्धे गृहसाध्ययोः । चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे"इति मूर्धन्यषान्तेषु हैमः॥ सान्तोऽपि "पक्षसी च स्मृतौ पक्षौ" इति शुभाङ्कः ॥ ( २ ) ॥ "गरुत्पक्षौ नरौ छदम्" इति बोपालितात्क्लीबमपि ॥ ( ३ ) ॥ "पत्त्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः" इति मेदिनी ॥ ( ४ ) ॥ पतत्त्रम् ॥ ( ५ ) ॥ तनूरुहम् ॥ (६) ॥ **षट् पक्षस्य** ॥ स्त्रीति ॥ पक्षतिः ॥( १ )॥पक्षस्य मूलम् ॥ पक्षमूलम्॥(२)॥ **द्वे पक्षमूलस्य**।।चञ्चुरिति॥"चञ्चूश्चञ्चुस्तथा त्रोटिः"इति हलायुधः॥"चञ्चुः पञ्चाङ्गुले त्रोट्याम्" इति हैमः ॥ ( १ ) ॥ "त्रोटिश्चञ्च्वां खगान्तरे । मीनकट्फलयोः" इति हैमः ( २ ) ॥ **द्वे "चोंच" इति ख्यातस्य** ॥ ३६ ॥ प्रेति ॥ प्रडीनं तिर्यग्गमनम्—इत्यन्ये॥(१)॥ उड्डीनम् ॥ (१) ॥ संडीनम् ( संगतगमनम् )॥(१)॥'एताः' इत्यनेन हि डीनाद्या बोध्याः॥ **पक्षिणां गतिविशेषाणां पृथक् पृथगे-**

---

१–के शशब्दातपरीभूतः पक्षशब्दश्चयार्थक इत्यर्थः ॥

**पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम्**
**समूहनिवहव्यूहसंदोहविसरव्रजाः । स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥**
**समुदायः समुदयः समवायश्चयो गणः । स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥४० ॥**
**वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः । सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ॥४१॥**
**पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् । स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम्॥**

कैकम् ॥ पेशीति ॥ "पेशी सुपक्वकणिके मांस्यां खड्गपिधानके । मांसपिण्डयामण्डभेदे" इति तालव्यान्तेषु मेदिनी ॥ ( १ ) ॥ "कोषोऽस्त्री कुड्मले पात्रे पेश्यां शब्दादिसंग्रहे । जातिकोशेऽर्थसंघाते दिव्ये खड्गपिधानके" इति मूर्धन्यान्ते मेदिनी ॥ तालव्यान्तोऽप्ययम् ॥ "कोशोऽस्त्री–" इति तालव्यान्तेषु मेदिनी यथा पठितम् ॥ ( २ ) ॥ नामद्वयमिदम् ॥ स्वामी तु----पेशीनां मांसखण्डानां कोशो भाण्डागारः— इति व्याचक्षाणो नामैकमिदामिच्छति ॥ द्वाभ्यां हीने क्लीब इत्यर्थः ॥ " अण्ड मुष्के पेश्यां स्यात् " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि " अण्डा " इति ख्यातस्य ॥ कुलेति ॥ " कुलायस्तु पुमान्स्थानमात्रे स्यात् पक्षिवासके " इति मेदिनी ॥ ( १ ) ॥ "नीडं स्थानकुलाययोः" इति मेदिनी ॥ ( २ ) ॥ द्वे पक्षिवासस्य ॥ ३७ ॥ पोत इति ॥ "पोतः शिशौ वहित्रे च गृहस्थाने च वाससि" इति मेदिनी ॥ ( १ ) "पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च" इति मेदिनी ॥ ( २ ) ॥ "अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च" इति मेदिनी ॥ ( ३ ) ॥ "डिम्भोऽपि बालिशे बाले" इति मेदिनी ॥ ( ४ ) ॥ "पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् " इति मेदिनी ॥ ( ५ ) ॥ शावकः ॥ ( ६ ) ॥ शिशुः ॥ ( ७ ) ॥ सप्त अर्भकस्य ॥ स्त्रीति ॥ स्त्री च पुंमांश्च स्त्रीपुंसौ ॥ ( १ ) ॥ "मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके" इति मेदिनी ॥ ( २ ) ॥ "द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि दम्पत्योः ॥ युग्ममिति ॥ "युग्मं यमलयामले" इति रभसः ॥ ( १ ) ॥ युगलम् ॥ ( २ ) ॥ "युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च" इति मेदिनी ॥(३)॥ त्रीणि यमलस्य ॥ ३८ ॥ समूहेति ॥ समूहः ॥ ( १ ) ॥ निवहः ॥( २ ) ॥ "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" इति मेदिनी ॥ ( ३ ) ॥ संदोहः ॥ ( ४ ) ॥ "विसरः प्रसरे व्रजे" इति मेदिनी ॥ ( ५ ) ॥ "व्रजो गोष्ठाध्ववृन्देषु" इति मेदिनी ॥ ( ६ ) ॥ स्तोमः ॥ ( ७ ) ॥ "ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः " इति मेदिनी ॥ ( ८ ) ॥ " निकरो निवहे सारे न्यायदेयधने निधौ" इति मेदिनी ॥ ( ९ ) ॥ व्रातः ॥ ( १० ) ॥ "वारः सूर्यादिवासरे । द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे" इति मेदिनी ॥ ( ११ ) ॥ " संघातः पुंसि घाते च संहतौ नरकान्तरे"इति मेदिनी ॥ १२॥ संचयः ॥ (१३ )॥३९॥"समुदायः समूहे स्याद्युद्धे" इति मेदिनी ॥ ( १४ ) ॥ "भवेत्समुदयः संघे संयुगे च समुद्गमे" इति मेदिनी ॥ ( १५ ) ॥समवायः ॥ ( १६ ) ॥ "चयः समूहे प्राकारमूलबन्धे समाहृतौ" इति मेदिनी ॥ ( १७ ) ॥ "गणः प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयोः" इति मेदिनी ॥ ( १८ ) ॥ संहतिः ॥ ( १९ ) ॥ वृन्दम् ॥ ( २० ) ॥ निकुरम्बम् ॥ ( २१ ) ॥ "कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्" इति मेदिनी ॥(२२) ॥ द्वाविंशतिः समूहस्य ॥ ॥४०॥वृन्देति॥समूहविशेषा उच्यन्ते ॥ सेति ॥ समैरुपलक्षितम् ॥ वर्गः ॥ ( १ ) ॥ एकं समसमूहस्य ॥ संघेति ॥ संघः ॥ ( १ ) ॥ "सार्थो वणिक्समूहे स्यादपि संघातमात्रके" इति मेदिनी ॥ ( २ ) ॥ द्वे जन्तुसमूहस्य ॥ भागुरिस्तु पर्यायतामाह—"संघसंघातपुञ्जौघसार्थयूथकदम्बकाः" इति ॥ सजेति ॥ सजातीयैरेव जन्तुभिरुपलक्षितम् ॥ "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम् " इति मेदिनी ॥ ( १ ) ॥ एकं सजातीयजन्तुसमूहस्य ॥ यूथमिति ॥ "यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति" इति मेदिनी ॥ ( १ ) ॥ एकं तिर्यक्समूहस्य ॥४१॥ पेति ॥ "समजः पशुवृन्दे ना विपिने तु नपुंसकम् " इति मेदिनी ॥ ( १ ) ॥ एकं पशुवृन्दस्य ॥ अन्येषामिति ॥ अन्येषां संघः

**कापोतशौकमायूरतैत्तिरादीनि तद्गणे । गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥**

इति सिंहादिवर्गः ॥ ५ ॥

---

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः॥ स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः॥१॥ स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । प्रतीपदर्शिनी वामा वनिता महिला तथा॥२॥ विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना।प्रमदा मानिनी कान्ता ललना च नितम्बिनी सुन्दरी रमणी रामा कोपना सैव भामिनी । वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥**

समाजः ॥ ( १ )॥ एकं पशुभिन्नसंघस्य ॥ अथेति ॥ "निकायस्तु पुमाँल्लक्ष्ये सधर्मिप्राणिसंहतौ । समुच्चये संहतानां निलये परमात्मनि" इति मेदिनी ॥ ( १ ) ॥ एकं सधर्मिप्राणिवृन्दस्य ॥ पुञ्जेति ॥ पुञ्जः॥(१)॥"राशिर्मेषादिपुञ्जयोः"इति मेदिनी॥(२)॥उत्करः॥(३)॥"कूटं पूर्द्वारयन्त्रयोः। मायादम्भाद्रिश्रृङ्गेषु सीराङ्गेऽनृततुच्छयोः । निश्चलेऽयोघने राशौ" इति हेमचन्द्रः॥(४)॥चत्वारि धान्यादेरुच्छ्रितवृन्दस्य ॥ ४२ ॥ केति ॥ तेषां कपोतशुकमयूरतित्तिरीणां गणे ॥ कपोतानाम् , शुकानाम् , मयूराणाम्, तित्तिरीणाम्, च गणः ॥ आदिना काकवर्तकोलूकादीनां ग्रहः ॥ "कापोतो रुचके, क्लीबं कपोतौघेऽञ्जनान्तरे" इति मेदिनी ॥ ( १ ) ॥ "शौकं शुकगणे स्त्रीणां करणे" इति मेदिनी ॥(१)॥ मायूरम् ॥ (१)॥ तैत्तिरम् ॥(१)॥ कपोतादीनां गणस्य पृथक् पृथक् ॥ गृहेति ॥ "छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु" इति मेदिनी ॥ "छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे" इति चवर्गादौ रभसः ॥ ( १ ) ॥ "गृह्यं गुदे ग्रन्थभेदे क्लीबं, शाखापुरे स्त्रियाम्, । गृहासक्तमृगादौ ना, त्रिषु चास्वैरिपक्ष्ययोः" इति मेदिनी ॥ ततोऽनुकम्पायां कन् ( ५।३।७६ ) ॥ "गृह्यको निघ्नके छेके" इति मेदिनी ॥ ( २ ) ॥ द्वे गृहासक्तपक्षिमृगाणाम् ॥ ४३ ॥

इति सिंहादिवर्गविवरणम् ॥

---

मनुष्या इति॥मनुष्यः॥(१)॥मानुषः ॥(२) ॥ मर्त्यः ॥ (३ ) ॥ मनुजः ॥ (४) ॥ मानवः ॥ (५) ॥ "नरोऽजे मनुजेऽर्जुने । क्लीबं तु रामकर्पूरे" इति मेदिनी ॥(६) ॥ षट् मनुष्यमात्रस्य ॥ स्युरिति ॥ पुमान् ॥(१)॥ पञ्चजनः ॥ ( २ ) ॥ पुरुषः ॥ (३) ॥ पूरुषः ॥ (४) ॥ ना॥(५)॥पञ्च मनुष्यजातौ पुरुषस्य॥ ॥ १ ॥ स्त्रीति ॥ स्त्री ॥(१)॥ योषित् ॥टाबन्तोऽपि ॥"स्त्री वधूर्योषिता रामा" इति त्रिकाण्डशेषः ॥ (२) ॥ अबला ॥ ( ३ ) ॥ योषा 'जोषा' इति चवर्गादिरपि ॥ ( ४ ) ॥ नारी ॥ ( ५ ) ॥ सीमन्तिनी ॥ ( ६ ) ॥ वधूः ॥ ( ७ ) ॥ प्रतीपदर्शिनी ॥ ( ८ ) ॥ "वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम्" इति मेदिनी ॥ ( ९ ) ॥ "वनिता जातरागस्त्रीस्त्रियोस्त्रिषु च याचिते। सेविते" इति मेदिनी ॥ ॥ ( १० ) ॥ "महिलौ फलिनीस्त्रियोः" इति मेदिनी ॥ 'महेला[3]' अपि ॥ ( ११ ) ॥ एकादश स्त्रीमात्रस्य ॥ २ ॥ वीति ॥ स्त्रीणां विशेषा भेदाः ॥ अङ्गनेत्यादि ॥ "अङ्गनं प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी" इति हैमः ॥ ( १ ) ॥ "भीरुः स्यात्कातरे नार्याम्" इत्यजयः ॥ "भीरुरार्ते जने स्त्रियाम्" इति रभसः ॥ "भीरुरार्ते त्रिलिङ्गः स्याद्वरयोषिति योषिति" इति मेदिनी ॥ ( १ ) ॥ "कामिनी भीरुबन्दयोः" इति मेदिनी ॥ ( १ ) ॥ वामलोचना ॥ ( १ ) ॥ "प्रमदः संमदे मत्ते स्त्रियामुत्तमयोषिति" इति मेदिनी ॥ ( १ ) ॥ "मानिनी तु स्त्रियां फल्यां मानी मानवति त्रिषु" इति मेदिनी ॥ ( १ ) ॥ "कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायान्तःशिलासु च" इति मेदिनी ॥(१)॥ "ललना कामिनीनारीभेदजिह्वासु योषिति" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ नितम्बिनी ॥ ( १ ) ॥ ३ ॥ "सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत्" इति मेदिनी ॥ ( १ )॥ रमणी ॥ ( १ ) ॥ "रामः श्यामे हलायुधे । पशुभेदे सिते चारौ राघवे रेणुकासुते । रामं तु वास्तुके कुष्ठे रामा हिङ्गुलिनीस्त्रियोः" इति हैमः ॥ ( १ ) ॥ उत्कृष्टस्त्रीविशेषाणां पृथक् पृथक् ॥ कोपेति ॥ कोपना ॥ ( १ ) ॥ भामिनी ॥ ( २ ) ॥ द्वे कोपन-

---

१—भावः श्रृङ्गारचेष्टाविशेषः । तद्युक्ता "भाविनी"–इति तु मुकुटः ॥ २–तथा च रसिकरञ्जनश्लेषः "चिरमीक्षमहिलास्यम्" इति श्रृङ्गारवैराग्यार्थद्वयपरः ॥ ३–तथा च दमयन्तीश्लेषः "परमहेलारतोऽप्यपारदारिकः" इति ॥

**कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः। पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ५**
**भार्या जायाऽथ पुंभूम्नि[1] दाराः स्यात्तु कुटुम्बिनी। पुरंध्री[2] सुचरित्रा तु सती साध्वी पतिव्रता६**
**कृतसपत्निकाऽध्यूढाऽधिविन्नाऽथ स्वयंवरा । पतिंवरा च वर्या च कुलस्त्री कुलपालिका ॥७॥**
**कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा। स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे॥८॥**
**समाः स्नुषाजनीवध्वश्चिरण्टी तु सुहासिनी । इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी९**

**स्त्रियाः** ॥ **वरेति** ॥ वरारोहा ॥ ( १ ) ॥ मत्तकाशिनी॥ मत्तकासिनी च ॥ ( २ ) ॥ उत्तमा ॥ ( ३ ) ॥ "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी" इति रुद्रः ॥ (४) ॥ **चत्वार्यत्यन्तोत्कृष्टस्त्रियाः** ॥ ४ ॥ **कृतेति** ॥ कृतोऽभिषेकोऽस्याः ॥ "**महिषी** नृपयोषिति । सैरिभ्यामोषधी-भेदे" इति हेमचन्द्रः ॥ ( १ ) ॥ एकं पट्टाभिषिक्तनृपस्त्रियाः ॥ **भोगीति** ॥ अन्या महिष्यतिरिक्ता नृपस्त्रियो भोगिन्य इत्युच्यन्ते ॥"विहाय महिषीमन्यराजयोषिति **भोगिनी**" इति मेदिनी ॥(१) ॥ **एकमन्यराजस्त्रियाः**॥ **पत्नीति** ॥ पत्नी ॥ ( १ ) ॥ पाणिगृहीती ॥ ( २ ) ॥ "**द्वितीया** तिथिगेहिन्योर्द्वितीयः पूरणे द्वयोः" इति हेमचन्द्रः ॥ ( ३ ) ॥ सहधर्मिणी ॥ (४) ॥ ५ ॥ भार्या ॥ (५) ॥ जाया ॥ ( ६ ) ॥ दाराः ( दार-शब्दो नित्यं पुंसि बहुवचनान्तः) ॥ टाबन्तोऽपि ॥"क्रोडा हारा तथा **दारा** त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः" इति व्याडिशुभाङ्कौ ॥ ( ७ ) ॥ **सप्त विवाहिताया भार्यायाः** ॥ **स्या-दिति** ॥ कुटुम्बिनी ॥ ( १ ) ॥ पुरंध्री ॥ ( २ ) ॥ **द्वे पुत्रादिमत्याः सधवायाः** ॥ **सुचेति** ॥ सुचरित्रा ॥ ( १ ) ॥ सती ॥ "**सन्** साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ साध्वी ॥ ( ३ ) ॥ पतिव्रता ॥ ( ४ ) ॥ **चत्वारि पतिव्रतायाः** ॥ ६ ॥ **कृतेति** ॥ कृतसपत्निका ॥ "**कृतसापत्निका**" इति क्वचित् पाठः ॥ "**कृत-सापत्नका**" इति पाठः ॥ ( १ ) ॥ "**अध्यूढा** कृतसापत्न्यनार्यामध्यूढ ईश्वरे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ अधिविन्ना ॥ ( ३ ) ॥ **त्रीणि अनेकभार्यस्य प्रथममूढायाः** ॥ **अथेति** ॥ स्वयंवरा ॥ ( १ ) ॥ पतिंवरा ॥ ( २ ) ॥ "**वर्या** पतिंवरायां स्त्री, वरेण्ये त्रिषु, ना स्मरे" इति मेदिनी ॥ ( ३ ) ॥ **त्रीणि स्वेच्छाकृतपतिवरणायाः** ॥ **कुलेति** ॥ कुलस्त्री ॥ ( १ ) ॥ कुलपालिका ॥ ( २ ) **द्वे व्यभिचारवारणेन कृतकुलरक्षायाः** ॥७॥ **केति** ॥ "**कन्या** नार्यां कुमार्यां च राश्यौषधिविशे-षयोः"इति हैमः॥"**कन्या** कुमारिकानार्योरोषधीराशिभेदयोः"इति मेदिनी ॥(१) ॥ "**कुमारः** स्याच्छुके स्कन्धे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने" इति मेदिनी ॥ "**कुमारी** रामतरुणीनवमाल्योर्नदीभि-दि । कन्यापराजितागौरीजम्बूद्वीपेषु च स्मृता" इति विश्वः ॥( २ ) ॥ **द्वे प्रथमवयस्ककन्यायाः** ॥ **गौरीति** ॥ "**गौरी** त्वसंजातरजःकन्याशंकरभार्ययोः । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसांपति-योषिति" इति मेदिनी ॥ ( १ ) ॥ "**नग्निका** तु कुमार्यां स्यात् पुमान् क्षणपवन्दिनोः" इति मेदिनी ॥ (२) ॥ अनागतार्तवा ॥ ( ३ ) ॥ **त्रीणि अदृष्टार्तवायाः** ॥ **स्यादिति**॥"**मध्यमो** मध्यजेऽन्यवत् । पुमान् स्वरे मध्य-देशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा" इति मेदिनी ॥ ॥ ( १ ) ॥ दृष्टरजाः ॥ ( २ ) ॥ **द्वे प्रथमदृष्टरजस्कायाः** ॥ **तेति** ॥ "**तरुणी तलुनीति** च" इति शब्दभेदः ॥ "**तलुनः** पवने यूनि युवत्यां **तलुनी** स्मृता" इति मेदिनी ॥ ( १ ) ॥ ( १ ) ॥ "प्रमदा चेति विज्ञेया **युवतिस्तु** तथा स्मृता" इति भागुरिः '**युवती**'—इति मुकुटो व्या-चख्यौ ॥ ( २ ) ॥ **द्वे तरुण्याः** ॥ ८ ॥ **सेति** ॥ स्नुषा ॥(१) ॥ "**जनो** लोके जगद्भेदे पृथग्जने । **जनी** स्नुषावनितयोः " इति हैमः । "**जनी** सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि" इति मेदिनी ॥(२)॥

---

१–अथशब्दात् पुंभूम्नोर्न पूर्वभाक्त्वम्–इति स्वामी ॥ २–पुरं धरति । "अच इः" ( उ० ४।१३९ ) । पृषोदरा-दित्वात् ( ६।३।१०९ ) धात्वकारलोपमुमागमौ । पुरंध्रिर्ह्रस्वान्ताऽपि ॥ तथा च "तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रि-भिश्च क्रमशः प्रयुक्तम्" इति रघुः–इति मुकुटः ॥

**कान्तार्थिनी तु या याति संकेतं साऽभिसारिका। पुंश्चली चर्षिणी बन्धक्यसती कुलटेत्वरी १०**
**स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना। अवीरा निष्पतिसुता विश्वस्ताविधवे समे ११**
**आलिः सखी वयस्या च पतिवत्नी सभर्तृका । वृद्धा पलिक्नी प्रज्ञा तु प्राज्ञी प्राज्ञा तु धीमती॥**
**शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च। आभीरी तु महाशूद्री जातिपुंयोगयोः समा**
**अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि।उपाध्यायाऽप्युपाध्यायीस्यादाचार्याऽपिचस्वतः**

"वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि । नवपरिणीतायां च" इति हैमः ॥ ( ३ ) ॥ त्रीणि पुत्रभार्यायाः ॥ चिरेति ॥ चिरण्टी ॥ 'चरण्टी' इत्येके ॥ "चिरिण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ सुवासिनी॥ "स्ववासिनी" इत्यपि पाठः ॥ "स्ववासिन्यां चिरिण्टी स्याद्द्वितीयवयसि स्त्रियाम्" इति रुद्रः ॥ ( २ ) ॥ द्वे प्राप्तयौवनायाः पितृगेहस्थायाः ॥ इच्छेति ॥ इच्छावती ॥ ( १ ) ॥ कामुका ॥ "कामुकः कमनेऽशोकपादपे चातिमुक्तके" इति मेदिनी ॥ ( २ ) ॥ द्वे धनादीच्छायुक्तायाः ॥ वृषेति । "वृषो नरो वृषः कालः" इत्यनेकार्थमञ्जरी ॥ वृषं नरं शुक्लं वेच्छत्यात्मनः ॥ वृषस्यन्ती ॥ ( १ ) ॥ कामुकी ॥ ( २ ) ॥ द्वे मैथुनेच्छावत्याः ॥ ९ ॥ कान्तेति ॥ या ( कान्ता ) कान्तार्थिनी पत्युः संकेतस्थानं याति साऽभिसारिका ॥ ( १ ) ॥ एकं भर्त्रिच्छया रतिस्थानं गच्छन्त्याः ॥ पुंश्चलीति ॥ पुंश्चली ॥ ( १ ) ॥ चर्षिणी ॥ "धर्षणी" इति वा पाठः ॥ "धर्षणं स्यात्परिभवे रतेऽसत्यां तु धर्षणी" इति मेदिनी ॥ "धर्षिणी" इति क्वचित् पाठः ॥ ( २ ) ॥ "बन्धकः स्याद्विनिमये पुंश्चल्यां स्याच्च बन्धकी" इति मेदिनी ॥ ( ३ ) ॥ असती ॥ ( ४ ) ॥ "कुलटा मनःशिलायां नेपाल्यामपि योषिति" इति मेदिनी ॥ ( ५ ) ॥ इत्वरी ॥ "इत्वर्यसत्यां पथिके क्रूरकर्मणि च त्रिषु" इति मेदिनी ॥ ( ६ ) ॥ १० ॥ स्वैरिणी ॥ ( ७ ) ॥ पांशुला ॥ ( ८ ) ॥ अष्टावसत्याः ॥ अशीति ॥ आशिश्वी ॥ ( १ ) ॥ एकमपत्यरहितायाः ॥ अवीति ॥ "पतिपुत्रवती वीरा" इति नाममाला ॥ वीराया भिन्ना अवीरा ॥ ( १ ) ॥ एकं पतिपुत्ररहितायाः ॥ विश्वेति ॥ "विश्वस्तो जातविश्वासे विश्वस्ता विधवास्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ विधवा ॥ ( २ ) ॥ "विश्वस्ताविधवे तुल्ये विशस्ताऽपतिनी च सा" इति वाचस्पतिः ॥ द्वे रण्डायाः ॥ ११ ॥ आलिरिति ॥ "आलिः सखी सेतुरालिरालिरावलिरिष्यते" इति शाश्वतः ॥(१)॥ "सखा मित्रे सहाये ना वयस्यायां सखी मता" इति मेदिनी ॥(२)॥ वयस्या॥(३)॥त्रीणि सख्याः ॥ पतीति ॥ पतिवत्नी ॥ ( १ ) ॥ सभर्तृका ॥ ( २ ) ॥ द्वे जीवद्भर्तृकायाः ॥ वृद्धेति ॥ वृद्धा॥ "वृद्धे जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे" इति मेदिनी ॥ ( १ ) ॥ पलिक्नी ॥ ( २ ) ॥ द्वे जीर्णकेश्याः ॥ प्रज्ञेति॥ प्रज्ञा ॥ "प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति" ॥ ( १ ) ॥ प्राज्ञी ॥ ( २ ) ॥ द्वे स्वयं ज्ञात्र्याः ॥ प्राज्ञेति ॥ प्राज्ञा ॥ ( १ ) ॥ धीमती ॥ ( २ ) ॥ द्वे प्रशस्तबुद्धेः ॥ १२ ॥ शूद्रीति ॥ शूद्रस्य स्त्री शूद्री ॥ ( १ ) ॥ एकं भिन्नजातीयाया अपि शूद्रभार्यायाः ॥ शूद्रेति ॥ तज्जातिः शूद्रजातिरित्यर्थः ॥ शूद्रा ॥ ( १ ) ॥ एकमन्यभार्याया अपि शूद्रजातीयायाः ॥ आभीति ॥ आभीरी ॥ ( १ ) ॥महाशूद्री ॥ या तु महती शूद्रा तत्र 'महाशूद्रा' इत्येव ॥ ( २ ) ॥ द्वे आभीर्याः ॥ उभयत्रापि शूद्रजातियोगे, शूद्रपुंयोगे च नामद्वयं ङीबन्तमेव ॥ १३ ॥ अर्येति ॥ स्वयं पुंयोगं विना जातिमात्रे ॥ अर्याणी ॥ ( १ ) ॥ अर्या ॥ ( २ ) ॥ द्वे वैश्यजातीयायाः॥क्षत्त्रियेति ॥ एवं क्षत्त्रिया ॥ ( १ ) ॥ क्षत्त्रियाणी ॥ ( २ ) ॥ द्वे क्षत्त्रियजातीयायाः ॥ उपेति ॥ उपाध्याया ॥ ( १ ) ॥ उपाध्यायी ॥ ( २ ) ॥ द्वे स्वयं विद्योपदे-

---

१—पितृकुलस्नेहाच्चिरमिटति गच्छति । 'चिरम्' इत्युपपदे 'इट गतौ' इत्यतः "इगुपध–" इति के पृषोदरादित्वाच्चिराकारनाशे इकारस्य विपर्यये मकारस्य परसवर्णत्वे "वयसि प्रथमे" ङीपि चिरिण्टी—इति मुकुटः ॥ हैमस्तु स्वोपज्ञनाममालाव्याख्यायाम्–चिरिः सौत्रः स्वादिः । चिरिणोति चिरिण्टी । 'डिण्टश्चर् च वा' इति साधुः । 'चरिण्टी' इत्यपि । 'चिरण्टी' इत्यमरः । 'चरण्टी' इत्यन्ये–इति प्रोक्तवान् ॥

आचार्यानी तु पुंयोगे स्यादर्यी क्षत्त्रियी तथा। उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा१५॥
वीरपत्नी वीरभार्या वीरमाता तु वीरसूः। जातापत्या प्रजाता च प्रसूता च प्रसूतिका१६॥
स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे। कात्यायन्यर्धवृद्धा या कषायवसनाऽधवा॥१७॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका। असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी१८
वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः। सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे
विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रजस्वला। स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि॥२०॥
ऋतुमत्यप्युदक्याऽपि स्याद्रजः पुष्पमार्तवम्। श्रद्धालुर्दोहदवती निष्कला विगतार्तवा॥२१॥

शिन्याः॥ स्यादिति॥ आचार्या॥ (१)॥ एकं स्वयं मन्त्रव्याख्यात्र्याः॥ १४॥ आचेति॥ पुंयोगे तु आचार्यानी॥ (१)॥ एकमाचार्यभार्यायाः॥ स्यादिति॥ अर्यी॥ (१)॥ एकं वैश्यपत्न्या अन्यजातीयाया अपि॥ क्षेति॥ एवं क्षत्त्रियी॥ (१)॥ एकमन्यजातीयाया अपि क्षत्त्रियपत्न्याः॥ उपेति॥ उपाध्यायानी॥ (१)॥ उपाध्यायी॥ (२)॥ द्वे विद्योपदेष्टृभार्यायाः॥ पोटेति॥ पोटा॥ (१)॥ एकं स्त्रीपुंसयोः स्तनश्मश्र्वादिचिह्नयुक्तायाः॥१५॥ वीति॥ वीरपत्नी॥(१)॥ वीरभार्या॥ (२)॥ द्वे वीरभार्यायाः॥ वीरमेति॥ वीरमाता॥ (१)॥ वीरसूः॥ (२)॥ द्वे वीरमातुः॥ जातेति॥ जातापत्या॥ (१)॥ प्रजाता॥ (२)॥ प्रसूता॥ (३)॥ प्रसूतिका॥ (४)॥ चत्वारि जातापत्यायाः॥ १६॥ स्त्रीति॥ नग्निका॥ "नग्नो वन्दिक्षपणयोः पुंसि, त्रिषु विवाससि" इति मेदिनी॥ (१)॥ कोटवी "कोट्टवी" इति च॥ (२)॥ द्वे नग्नायाः॥ दूतीति॥ दूती॥ (१)॥ "संचारिका तु युगले कुट्टनीघ्राणयोरपि" इति विश्वमेदिन्यौ॥ (२)॥ द्वे दूत्याः॥ केति॥ "कात्यायनो वररुचौ विशेषे च मुनेः पुमान्। कषायवस्त्रविधवार्धजरत्युमयोः स्त्रियाम्" इति मेदिनी॥ (१)॥ एकं विशेषणत्रयवत्याः। विशेषणत्रयं यथा—अर्धवृद्धा, काषायवसना, अधवेति॥ १७॥ साधिति॥ 'सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशास्त्रियाम्" इति दन्त्यादौ रभसः॥ "चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी। प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता" इति कात्यः॥ 'सैरिन्ध्री' इति च॥ (१) एकं विशेषणत्रयवत्याः॥ विशेषणत्रयं—परवेश्मस्था, स्ववशा, शिल्पकारिका॥ असीति॥"असिक्न्यन्तःपुरप्रेष्या" इति हैमः॥ "असिक्निका स्यादवृद्धा या प्रेष्याऽन्तः पुरोषिता" इति कात्यः॥ (१)॥ एकं कृष्णकेशादित्रिविशेषणायाः॥ विशेषणत्रयम्--अवृद्धा, प्रेष्या, अन्तःपुरचारिणीति॥ १८॥ वारेति॥ वारस्त्री॥ (१)॥ गणिका॥ (२)॥ "वेशो वेश्यागृहे गृहे। नेपथ्ये च" इति मेदिनी॥ वेशेन नेपथ्येन शोभते वेश्या॥ "वेश्यं वेश्यागृहे क्लीबं गणिकायां तु योषिति" इति मेदिनी॥ "वेष्या" इति मूर्धन्यमध्यपाठोऽपि॥ (३)॥ रूपाजीवा॥ (४)॥ चत्वारि वेश्यायाः॥ अथेति॥ अथ सा जनैः सत्कृता सती-वारमुख्या॥ (१)॥ एकं जनैः सत्कृतवेश्यायाः॥ कुट्टेति॥ कुट्टनी॥ (१)॥ "शाल्कं शम्भलीशालल्गुष्क--" इति शभेदात्तालव्यादिः॥ (संभली) दन्त्यादिरपि॥ (२)॥ द्वे परनारीं पुंसा संयोजयित्र्याः॥ १९॥ विप्रेति॥ विप्रश्निका॥ (१)॥ ईक्षणिका॥ (२)॥ "दैवज्ञो गणके पुमान्। दैवज्ञेक्षणिकायां स्त्री" इति मेदिनी॥ (३)॥ त्रीणि लक्षणादिना शुभाशुभे जानत्याः॥ अथेति॥ रजस्वला॥ (१)॥ स्त्रीधर्मिणी॥ (२)॥ "अविं स्त्रीधर्मिणीं विद्यात्" इति कात्यात् अविः ह्रस्वान्ता॥ (३)॥ "आत्रेयो मुनिरात्रेयी पुष्पवत्यां सरिद्भिदि" इति हैमः॥ (४)॥ "मलिनं कृष्णदोषयोः। मलिनी रजस्वलायाम्" इति हैमः॥ (५)॥ पुष्पवती॥ (६)॥॥ २०॥ ऋतुमती॥ (७)॥ उदक्या॥ (८)॥ अष्टौ रजस्वलायाः॥ स्यादिति॥ "रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रे च दृश्यते" इति मेदिनी॥ (१)॥ "पुष्पं विकासिकुसुमस्त्रीरजःसु नपुंसकम्" इति मेदिनी॥(२)॥ "आर्तवं स्त्रीरजे पुष्पे क्लीबं स्यादृतुजे त्रिषु" इति मेदिनी॥ (३)॥ त्रीणि स्त्रीपुष्पस्य॥ श्रेति॥ "श्रद्धालुर्दोहदिन्यां स्त्री श्रद्धायुक्ते च वाच्यवत्" इति मेदिनी॥ (१)॥ दोहदवती॥ (२)॥ द्वे अभिलाषविशेषवत्याः॥ नीति॥

आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी । गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषूः पतिः।स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी॥२३॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ।सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः २४
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः । सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥२५॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः । कौलटेयः कौलटेरो भिक्षुकी तु सती यदि २६॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः।आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे। स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥२८॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा। ननन्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा २९

"कलं शुक्रे त्रिष्वजीर्णे नाऽव्यक्तमधुरध्वनौ" इति मेदिनी ॥ कलान्निष्क्रान्ता ॥ निष्कला ॥ "निष्कलं तु कलाशून्ये नष्टवीर्ये तु वाच्यवत्" इति मेदिनी ॥ ( १ ) ॥ विगतार्तवा ॥ ( २ ) ॥ द्वे रजोहीनायाः ॥ २१ ॥ आपेति ॥ आपन्नसत्त्वा ॥ ( १ ) ॥ "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि" इति मेदिनी ॥ गुरुदुर्जरोऽलघुर्वा गर्भोऽस्त्यस्याः गुर्विणी ॥ ( २ ) ॥ अन्तर्वत्नी ॥ ( ३ ) ॥ गर्भिणी ॥ ( ४ )॥ चत्वारि गर्भिण्याः ॥ गेति ॥ गणिकादेर्गणे ॥ गणिकानां समूहः गाणिक्यम् ॥ ( १ ) ॥ गर्भिणीनां समूहः गार्भिणम् ॥ ( १ ) ॥ युवतीनां समूहः यौवतम् ॥ ( १ ) ॥ गणिकादिगणे पृथक्पृथगेकैकम् ॥ २२ ॥ पुनरिति ॥ पुनर्भवति संस्कृता पुनर्भूः ॥ ( १ ) ॥ दिधिषूः ॥ ( २ ) ॥ द्वे द्वौ वारौ ऊढायाः ॥ तेति ॥ तस्या दिधिष्वाः ॥ "पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्तथा" इत्येषोऽप्यूदन्तः इति स्वामी ॥ मुकुटस्तु "दिधिषुम्" ह्रस्वमाह ॥ ( १ ) ॥ एकं द्व्यूढापतेः ॥ स इति ॥ अग्रे प्रधानं दिधिषूर्यस्य॥ ( १ ) ॥ द्विजः क्षत्रियादिरपि ॥ "दिधिषूः परपूर्वाऽग्रेदिधिषूस्तत्पुरंध्रिकः" इति नाममाला ॥ मनुस्तु—"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता" इत्याह ॥ एकं पुनर्भूप्रधानभार्यस्य ॥ २३ ॥ कानीति ॥ "कानीनः कन्यकासुते । कर्णे व्यासे" इति हेमचन्द्रः ॥ ( १ ) ॥ कन्यकाजातः ॥ ( २ ) ॥ द्वे अनूढापत्यस्य ॥ अथेति ॥ सुभगासुतः ॥ (१)॥ सौभागिनेयः ॥ ( २ ) ॥ द्वे सुभगासुतस्य ॥ स्यादिति ॥ परास्त्रिया अपत्यं पारस्त्रैणेयः॥(१)॥ एकं परभार्यापुत्रस्य ॥२४॥ पैत्रिति ॥ पितृष्वसुरपत्यं पैतृष्वसेयः॥(१)॥पैतृष्वस्रीयः ॥(२)॥द्वे पितृष्वसुः सुतस्य ॥ मात्रिति ॥ मातृष्वसुरपत्यं मातृष्वसेयः ॥(१) ॥ मातृष्वस्रीयः ॥ ( २ ) ॥ द्वे मातृष्वसुः सुतस्य ॥ वैमेति ॥ विमातुरपत्यं वैमात्रेयः ॥ ( १ ) ॥ एकमपरमातृसुतस्य ॥ ॥ २५ ॥ अथेति ॥ बन्धक्या अपत्यं बान्धकिनेयः ॥ ( १ ) ॥ बन्धुलः ॥ ( २ ) ॥ असतीसुतः ॥ ( ३ ) ॥ कौलटेयः ॥ ( ४ ) ॥ कौलटेरः ॥ ( ५ ) ॥ पञ्च कुलटायाः पुत्रस्य ॥ भीति ॥ यदि सती भिक्षुकी॥२६॥ तदा अस्या आत्मजः कौलटिनेयः ॥ ( १ ) ॥ कौलटेयः ॥ ( २ ) ॥ द्वे सत्या भिक्षार्थं गेहं गेहमटन्त्याः पुत्रस्य ॥ आत्मेति ॥ आत्मजः ॥ ( १ ) ॥ तनयः ॥ ( २ ) ॥ "सूनुः पुत्रेऽनुजेऽर्के ना" इति मेदिनी ॥ ( ३ ) ॥ "सुतस्तु पार्थिवे पुत्रे, स्त्र्यपत्ये तु सुता स्मृता" इति मेदिनी ॥ ( ४ ) ॥ "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा" ( मनुः ९।१३८ ) ॥ ( ५ ) ॥ पञ्च पुत्रस्य ॥ स्त्रियामिति ॥ अमी आत्मजाद्याः स्त्रियां वर्तमानाः सन्तः ॥ २७ ॥ दुहितरं वदन्ति यथा आत्मजा, तनया, सूनुः, सुता, पुत्री, ॥ "सुता तु दुहिता पुत्री" इति त्रिकाण्डशेषः ॥ ( ५ ) ॥ दुहिता ॥ ( ६ ) ॥ एवं पुत्र्याः षट् ॥ अपेति ॥ अपत्यम् ॥ ( १ ) ॥ "तोकं संतानसुतयोः" इति हैमः ॥ ॥ ( २ ) ॥ तयोस्तनयदुहित्रोः ॥ समे समानलिङ्गे ॥ द्वे अपत्यमात्रस्य ॥ स्वेति ॥ औरसः ॥ ( १ ) ॥ उरस्यः ॥ ( २ ) ॥ द्वे स्वस्माज्जातस्य पुत्रस्य ॥ तातेति ॥ "तातोऽनुकम्प्ये पितरि" इति हेमचन्द्रः ॥ ॥ ( १ ) ॥ "जनकः पितृभूपयोः" इति हैमः ॥ ( २ ) ॥ पिता ॥ ( ३ ) ॥ त्रीणि पितुः ॥ २८ ॥ जनेति ॥ जनयित्री ॥ "जनित्री" इति च ॥ ( १ ) ॥ प्रसूः ॥ ( २ ) ॥ "माता गौर्दुर्गा जननी मही । मातरश्च ब्रह्माण्याद्याः" इति हैमः ॥ ( ३ ) ॥ जननी ॥ ( ४ ) ॥ चत्वारि मातुः ॥

भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् । प्रजावती भ्रातृजाया मातुलानी तु मातुली ३०
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः। पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ। स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः
पितामहः पितृपिता तत्पिताप्रपितामहः । मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः । सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः । धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः । भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥

भेति ॥ भगिनी ॥ ( १ ) ॥ स्वसा ॥ ( २ ) ॥ द्वे भगिन्याः ॥ ननेति ॥ ननन्दा ॥ "ननन्दा तु स्वसा पत्युर्ननान्दा नन्दिनी च सा" इति रभसः ॥ ( १ ) ॥ एकं भर्तृभगिन्याः ॥ नप्त्रीति ॥ "नप्ता नप्त्री च पौत्रिका" इति रभसः ॥ ( १ ) ॥ पौत्री ॥ ( २ ) ॥ सुतात्मजा ॥ ( ३ ) ॥ त्रीणि पौत्र्याः ॥ २९ ॥ भेति ॥ या भ्रातृवर्गस्य भार्यास्ताः परस्परं यातरः स्युरिति ॥ याता ॥ ( १ ) ॥ एकं परस्परं भ्रातृभार्याणाम् ॥ प्रेति ॥ प्रजावती ॥ ( १ ) ॥ भ्रातृजाया ॥ ( २ ) ॥ द्वे भ्रातृपत्न्याः ॥ मेति ॥ मातुलानी ॥ ( १ ) ॥ मातुली ॥ ( २ ) ॥ द्वे मातुलपत्न्याः ॥ ३० ॥ पेति ॥ पत्युर्माता पत्न्याः श्वश्रूः । पत्न्या माता पत्युः श्वश्रूः ॥ ( १ ) ॥ एकं पतिपत्न्योः मातुः ॥ श्वेति ॥ तयोः पतिपत्न्योः पिता परस्परं श्वशुरः ॥ द्वितालव्यः ॥ "श्वश्रूः शिशुःश्वशुरः" इति शभेदात् ॥ ( १ ) ॥ एकं पतिपत्न्योः पितुः ॥ पित्रिति ॥ पितृव्यः ॥ ( १ ) ॥ एकं पितुर्भ्रातुः ॥ मेति ॥ "मातुलो मदनद्रुमे । धत्तूरेऽहिव्रीहिभिदोः पितुः श्यालेऽपि" इति हैमः ॥ (१) ॥ एकं मातुर्भ्रातुः ॥ ३१ ॥ श्येति ॥ श्यालः ॥ "स्याललालसमसूरसूरयः" इति सभेदादन्त्यादिरपि ॥ ( १ ) ॥ एकं पत्न्याः भ्रातुः ॥ स्येति ॥ पत्युर्भ्राता पत्न्याः देवा ॥ ( १ ) ॥ देवरः ॥ ( २ ) ॥ "देवृदेवरदेवानः" इति शब्दार्णवः ॥ द्वे पत्युः कनिष्ठभ्रातुरिति स्वामी । ज्येष्ठस्तु श्वशुर एवेति सुभूत्यादयः ॥ स्वेति ॥ स्वस्रीयः ॥ (१) ॥ भागिनेयः ॥(२)॥ द्वे भगिनीसुतस्य ॥ जेति ॥ जामाता ॥(१)॥ दुहितुः पतिः ॥ (२)॥ द्वे जामातुः॥ ३२ ॥ पितेति ॥ "पितामहः पद्मयोनौ जनके जनकस्य च" इति हैमः ॥ (१) ॥ पितृपिता ॥ ( २ ) ॥ द्वे पितामहस्य ॥ तदिति ॥ तस्य पितामहस्य पिता ॥ प्रपितामहः ॥ ( १ ) ॥ एकं पितामहपितुः ॥ मेति ॥ एवं मातुः पिता मातामहः ॥ ( १ ) ॥ प्रकृष्टो मातामहः प्रमातामहः ॥ ( १ ) ॥ एकैकं मातुः पितुस्तत्पितुश्च ॥ सेति ॥ समानः पिण्डो देहो मूलपुरुषो निर्व्वाप्यो वाऽस्य । सपिण्डः ॥(१) ॥ सनाभिः॥(२)॥ द्वे सप्तपुरुषावधिपुरुषाणाम् ॥ ३३ ॥ समेति ॥ समानोदर्यः ॥ ( १ ) ॥ सोदर्यः ॥ ( २ ) ॥ सगर्भ्यः ॥ ( ३ ) ॥ सहजः ॥ ( ४ ) ॥ सोदरः ॥ सहोदरश्चात्र ॥ "भ्राता तु स्यात्सहोदरः । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । सोदरश्च" इति नाममाला ॥ चत्वार्येकोदरोत्पन्नभ्रातुः ॥ सेति ॥ सगोत्रः ॥ ( १ ) ॥ "बान्धवो बन्धुमित्रयोः" इति हैमः ॥ ( २ ) ॥ "ज्ञातिस्तातसगोत्रयोः" इति मेदिनी ॥ ( ३ ) ॥ "बन्धुर्भ्रातृबान्धवयोः" इति हैमः ॥ ( ४ ) ॥ स्वः ॥ ( ५ ) ॥ स्वजनः ॥ ( ६ ) ॥ षड् बन्धोः॥ ३४ ॥ ज्ञेति ॥ ज्ञातेर्भावः ज्ञातेयम् ॥(१)॥ बन्धूनां समूहः बन्धुता ॥(१)॥ एकैकं ज्ञातिबन्धूनां भावसमूहयोः॥ धेति ॥ "धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "प्रियो वृद्ध्योषधौ हृद्ये धवे" इति हैमः ॥ ( २ ) ॥ पतिः ॥ ( ३ ) ॥ भर्त्ता ॥ ( ४ ) ॥ चत्वारि प्रियस्य ॥ जेति ॥ "जारस्तूपपतौ जार्यौषधीभिदि" इति हैमः ॥ ( १ ) ॥ उपपतिः ॥ ( २ ) ॥ द्वे जारस्य॥ ३५ ॥ अम्रिति ॥ अमृते भर्तरि जाराज्जातः जारजः ॥ कुण्डः ॥ "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ, जारात्पतिवत्नीसुते पुमान् ॥ पिठरे तु न ना" इति मेदिनी ॥ ( १ ) ॥ एकं जीवति पत्यौ जारजातस्य ॥ म्रिति ॥ मृते भर्त्तरि गोलक इत्युच्यते ॥ "गोलको विधवापुत्रे जारात्, स्यान्मणिके गुडे" इति मेदिनी ॥ ( १ ) ॥ एकं विधवायां जारजातस्य ॥ भ्रात्रीति ॥ भ्रात्रीयः ॥ (१) ॥

**मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ । श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च**
**दंपती जंपती जायापती भार्यापती च तौ।गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रियाम् ३८**
**सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ।तृतीया प्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ३९**
**शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे।स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ४०**
**पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा।स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ४१**
**बालस्तु स्यान्माणवको वयःस्थस्तरुणो युवा।प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ४२**

भ्रातृजः ॥ ( २ ) ॥ **द्वे भ्रातृपुत्रस्य** ॥ **भ्रात्रिति** ॥ भ्राता च भगिनी च भ्रातृभगिन्यौ ॥ ( १ ) ॥ स्वसा च भ्राता च भ्रातरौ ॥(२)॥ **द्वे भ्रातृभगिन्योः** ॥ ३६ ॥ **मेति** ॥ माता च पिता च मातापितरौ ॥ ( १ ) ॥ पितरौ ॥ ( २ ) ॥ मातरपितरौ ॥ ( ३ ) ॥ **त्रीणि मातापित्रोः** ॥ **श्वेति**॥श्वश्रूश्च श्वशुरश्च श्वश्रूश्वशुरौ॥(१) ॥एकशेषे श्वशुरौ ॥(२)॥ **द्वे सहोक्तयोः श्वश्रूश्वशुरयोः**॥**पुत्राविति** ॥ पुत्रश्च दुहिता चैकशेषे पुत्रौ स्याताम् ॥ ( १ ) ॥ **एकं सहोक्तपुत्रदुहित्रोः** ॥ ३७ ॥ **दंपेति** ॥ दंपती ॥ ( १ ) ॥ जंपती ॥ ( २ ) ॥ जायापती ॥ ( ३ ) ॥ भार्यापती ॥ ( ४ ) ॥ 'तौ' इत्यनेन पुंस्त्वमुक्तम् ॥ "शाल्मली मैथिली मैत्री दंपती जंपती च सा" इति वाचस्पतौ स्त्रीत्वमप्युक्तम् ॥ **चत्वारि जायापत्योः** ॥ **गर्भेति** ॥ गर्भाशयः ॥ (१) ॥ जरायुः ॥ ( २ ) ॥ **द्वे गर्भवेष्टनचर्मणः** ॥ **उल्वमिति** ॥ उल्वम् ॥ (१)॥ कललः ॥ ( २ ) ॥ **द्वे शुक्रशोणितसंपातस्य** ॥ **चत्वारि गर्भवेष्टनस्य, इत्यन्ये** ॥ ३८ ॥ **स्विति** ॥ सूतेः प्रसवस्य मासः सूतिमासः ॥ ( १ ) ॥ वैजननः ॥ ( २ ) ॥ **द्वे प्रसवमासस्य** ॥ **गर्भ इति** ॥ "**गर्भो** भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "**भ्रूणः** स्त्रीगर्भडिम्भयोः" इति मेदिनी ॥ ॥ ( २ ) ॥ **द्वे कुक्षिस्थगर्भस्य** ॥ **तृतीति** ॥ तृतीया प्रकृतिः असमस्तमेतत् ॥ समासे तु तृतीयप्रकृतिः ॥ ॥ ( १ ) ॥ "**क्लीबे शण्ढश्च** कञ्चुकी" इति ताल्व्यादौ रभसः ॥ "**शण्ढः** स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" इति मेदिनी ॥ "**शण्ढषण्ढौ** तु सौविदे । वन्ध्यपुंसीड्वरे क्लीबे" इति हैमः ॥ ( २ ) ॥ "अस्त्री नपुंसके **क्लीबं** वाच्यलिङ्गस्त्वविक्रमे" इति रुद्रः ॥ ( ३ ) ॥ "**पण्डः** षण्ढे, धियि स्त्री स्यात्" इति मेदिनी ॥ ( ४ ) ॥ 'न स्त्री न पुमान्' इत्यत्र नपुंसकभावो "नभ्राड्—" ( ६।३।७५ ) इत्यत्र निपातनात् ॥ "स नपुंसको भवेत्" इति भाष्यात्पुंस्यप्ययम् ॥ ( ५ ) ॥ **पञ्च नपुंसकस्य** ॥ ३९ ॥ **शिश्विति** ॥ शिशुत्वम् ॥ ( १ ) ॥ शैशवम् ॥ ( २ ) ॥ बाल्यम् ॥ ( ३ ) ॥ **त्रीणि बाल्यस्य** ॥ **तेति** ॥ तारुण्यम् ॥ ( १ ) ॥ यौवनम् ॥ ( २ ) ॥ **द्वे तारुण्यस्य** ॥ **स्यादिति** ॥ स्थाविरम् ॥ ( १ ) ॥ वृद्धत्वम् ॥ ( २ ) ॥ **द्वे वृद्धत्वस्य** ॥ **वृद्धेति** ॥ वृद्धसंघः ॥ ( १ ) ॥ "**वार्धकं** वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि" इति विश्वः ॥ **'वार्धक्यम्'** अपि ॥ ( २ ) ॥ **द्वे वार्धकस्य** ॥ ४० ॥ **पेति** ॥ यज्जरसा केशादौ शौक्ल्यं ( धवलिमा ) तत्पलितमुच्यते ॥ "**पलितं** शैलजे तापे केशपाके च कर्दमे" इति मेदिनी ॥ ( १ ) ॥ **आदिना लोमश्मश्रुणोः** ॥ **एकं जरया शुक्लस्य** ॥ **वीति** ॥ विस्रसा ॥ ( १ ) ॥ जरा ॥ ( २ ) ॥ **द्वे जरावस्थायाः** ॥ **स्यादिति** ॥ उत्तानशया ॥ ( १ ) ॥ डिम्भा ॥ "**डिम्भोऽपि** बालिशे बाले" इति मेदिनी ॥ ( २ ) ॥ स्तनपा ॥ ( ३ ) ॥ स्तनंधयी ॥ ( ४ ) ॥ एषु त्रिलिङ्गता । "त्रिषु जरावराः" इति वक्ष्यमाणत्वात् ॥ स्त्रीलिङ्गनिर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥ **चत्वार्यतिबालिकायाः** ॥ ४१ ॥ **बाल इति** ॥ "**बालोऽ**ज्ञेऽश्वेभपुच्छयोः । शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः ॥" इति हैमः ॥ (१) ॥ "हारभेदे **माणवको** बाले कुपुरुषेऽपि च" इति रभसः ॥(२)॥ **द्वे बालस्य**॥**वयेति**॥ "**वयः** पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति विश्वः ॥ वयसि तिष्ठति वयःस्थः ॥ ( १ ) ॥ "**तरुणं** कुब्जपुष्पे ना रुचके यूनि तु त्रिषु" इति विश्वः ॥ ( २ ) ॥ युवा ॥ ( ३ ) ॥ **त्रीणि तरुणस्य** ॥ **प्रेति** ॥ प्रगतं वयोऽस्य प्रवयाः ॥ ( १ ) ॥ स्थविरः ॥ ( २ ) ॥ "**वृद्धः** प्राज्ञे च स्थविरे वृद्धं शैलेयरूढयोः" इति हैमः ॥ ( ३ ) ॥ जीनः ॥ ( ४ ) ॥ "**जीर्णं** परिपक्वपुराणयोः" इति मेदिनी ॥ ( ५ ) ॥

वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः।जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः॥४३॥
अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः । तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः
अवटीटोऽवनाटश्चावभ्रटो नतनासिके । केशवः केशिकः केशी बलिनो बलिभः समौ॥४५॥
विकलाङ्गस्तु पोगण्डः खर्वो ह्रस्वश्च वामनः।खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः॥४६॥
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः।ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥४७॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः। पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते४८
वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः । जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ४९॥

जरन् ॥ ( ६ ) ॥ षट् स्थविरस्य ॥ ४२ ॥ वेति ॥ अतिशयेन वृद्धः वर्षीयान् ॥ ( १ ) ॥ दशमोऽवस्थाविशेषोऽस्यास्ति दशमी ॥ ( २ ) ॥ ज्यायान् ॥ ( ३ ) ॥ त्रीण्यतिवृद्धस्य ॥ पूर्वेति ॥ पूर्वजः॥(१)॥ अग्रियः क्वचित् "अग्रिमः" इति पाठः ॥ ( २ ) ॥ अग्रजः ॥ ( ३ ) ॥ त्रीणि प्रथमजातस्य ॥ जघेति ॥ जघन्येऽवरकाले जातः जघन्यजः ॥ ( १ ) ॥ कनिष्ठः ॥ 'कनीयान्' अपि ॥ ( २ ) ॥ यवीयान्, यविष्ठः ॥ ( ३ ) ॥ अवरजः ॥ ( ४ ) ॥ अनुजः ॥ ( ५ ) ॥ पञ्च अनुजस्य ॥ ४३ ॥ अमेति ॥ अमांसः ॥ ( १ ) ॥ दुर्बलः ॥ ( २ ) ॥ छातः ॥ 'शातः' इति वा पाठः ॥ "दुर्बले निशिते स्यातां शितशाताविमौ त्रिषु" इति तालव्यादौ रभसः ॥ ( ३ ) ॥ त्रीणि दुर्बलस्य ॥ बलेति ॥ बलवान् ॥ ॥ ( १ ) ॥ मांसलः ॥(२) अंसलः॥(३)॥त्रीणि बलवतः। त्विति॥तुन्दिलः ॥ 'तुन्दिभः' इति च ॥ (१)॥ तुन्दिकः॥(२)॥ तुन्दी॥(३)॥बृहत्कुक्षिः॥(४)॥ अतिशयितं पिचिण्डमुदरमस्य पिचिण्डिलः॥ (५)॥ पञ्च स्थूलोदरस्य॥४४॥ अवेति ॥ अवटीटः॥(१)॥अवनाटः॥(२)॥अवभ्रटः ॥ ( ३ ) ॥ त्रीणि चिपिटनासस्य ॥ केशेति ॥ केशवः ॥ ( १ ) ॥ केशिकः ॥ ( २ ) ॥ केशी ॥ (३) ॥ त्रीणि प्रशस्तकेशस्य ॥ स्थूलकेशस्य वा ॥ वलीति॥ वलिनः ॥(१) ॥ वलिभः ॥ ( २ ) ॥द्वे श्लथचर्मवतः॥४५॥ वीति ॥ विकलाङ्गः॥(१ )॥ "पोगण्डो विकलाङ्गकः" इति रत्नकोषः ॥ "पोगण्डो विकलाङ्गः स्यात्" इति हलायुधः ॥ 'अपोगण्डः' इति पाठे नञ्समासः ॥ "अपोगण्डस्तु शिशुके विकलाङ्गे च भीरुके" इति विश्वः ॥ ( २ ) ॥ द्वे स्वभावन्यूनाधिकाङ्गस्य॥ खेति ॥ "खर्वं संख्यान्तरे नीचि वामनके त्रिषु"इति मेदिनी ॥ ( १ ) ॥ "ह्रस्वो न्यक्खर्वयोस्त्रिषु" इति मेदिनी ॥ ( २ ) ॥ " वामनो नीचि खर्वे च त्रिषु पुंसि तु दिग्गजे । हरावङ्कोटवृक्षे " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि खर्वपुंसः ॥ खरेति ॥ खरणाः ॥ ( १ ) ॥ खरणसः ॥ ( २ ) ॥ द्वे तीक्ष्णनासिकस्य॥ विग्रेति ॥ विग्रः ॥ 'विग्रुः' 'विख्रः' 'विख्युः' इति च "विग्रो विगतनासिकः" इति हैमः ॥(१)॥ गतनासिकः ॥ ( २ ) ॥ द्वे गतनासिकस्य ॥ ४६ ॥ खुरेति॥ खुरणाः ॥ ( १ ) ॥ खुरणसः ॥ ( २ ) ॥ द्वे पशुखुरसदृशनासिकस्य ॥ प्रेति ॥ प्रज्ञुः ॥ ( १ ) ॥ प्रगतजानुकः ॥ ( २ ) ॥ द्वे वातादिना विरलजानुकस्य ॥ ऊर्ध्वेति ॥ ऊर्ध्वे जानुनी यस्य ऊर्ध्वज्ञुः ॥ (१) ॥ ऊर्ध्वजानुः ॥ ( २ ) ॥ द्वे ऊर्ध्वजानुकस्य ॥ सेति ॥ संहते जानुनी यस्य संज्ञुः ॥ ( १ ) ॥ संहतजानुकः॥ ( २ ॥ द्वे संलग्नजानुकस्य ॥ "प्रज्ञुः प्रगतजानुः स्यात् प्रज्ञोऽप्यत्रैव दृश्यते । संज्ञुः संहतजानौ च भवेत् संज्ञोऽपि तत्र हि ॥ ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादूर्ध्वज्ञोऽप्यूर्ध्वजानुके " इति साहसाङ्कः ॥ ४७ ॥ स्यादिति ॥ एडः ॥ ( १ ) ॥ बधिरः ॥(२)॥ द्वे श्रवणशक्तिहीनस्य॥कुब्जेति । "कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः" इति मेदिनी॥(१)॥ गडुलः ॥(२)॥ द्वे कुब्जस्य॥ कुकेति॥ कुकरः॥(१)॥"कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत्" इति मेदिनी ॥ 'निसर्गतः कूणिपङ्गुपौगण्डाः' इति नाममालायामार्यापाठाद्दीर्घोकारवानपि ॥ (२) ॥ द्वे रोगादिना वक्रकरस्य॥ प्रेति ॥ पृश्निः॥(१)॥ अल्पतनुः ॥ ( २ ) ॥ द्वे अल्पशरीरस्य ॥ श्रवेति ॥ श्रोणः ॥(१)॥ पङ्गुः ॥ (२)॥द्वे जङ्घाहीनस्य ॥ मुण्डेति॥"मुण्डो मुण्डितशीर्षयोः । राहौ दैत्यान्तरे" इति हैमः॥(१) ॥ मुण्डितः ॥ ( २ ) ॥ द्वे खण्डितकेशस्य ॥ ४८ ॥ वेति ॥ वलिरः ॥ ( १ ) ॥ केकरः॥ ( २ )॥ "टेरे

अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया । भेषजौषधभैषज्यान्यगदो जायुरित्यपि ५०॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः । क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ५१
स्त्री क्षुत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्।शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका
किलाससिध्मे कच्छ्वां तु पाम पामा विचर्चिका।कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्त्रिषु
व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् । कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ५४
आनाहस्तु विबन्धः स्याद् ग्रहणी रुक् प्रवाहिका ।प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः

वलिरकेकरौ" इति रभसः ॥ द्वे नेत्रविहीनस्य ॥ खविति ॥ खोडः ॥ ( १ ) ॥ खञ्जः ॥ ( २ ) ॥ "अथ खञ्जके खोडखोरौ" इति रभसः ॥ द्वे पादेन खञ्जस्य ॥ त्रिष्विति ॥ जराशब्दादवरा अर्वाचीना उत्तानशयाद्यास्त्रिलिङ्गाः ॥ जेति ॥ जडुलः ॥ 'जटुलः' इति मुकुटः ॥ ( १ ) ॥ कालकः ॥ ( २ ) ॥ पिप्लुः ॥ ( ३ ) ॥ त्रीणि "लसुन" इति ख्यातस्य ॥ तीति ॥ तिलकः ॥ ( १ ) ॥ तिलकालकः ॥ ( २ ) ॥ द्वे देहस्थतिलस्य ॥ ४९ ॥ अनेति ॥ अनामयम् ॥ ( १ ) ॥ आरोग्यम् ॥ ( २ ) ॥ द्वे रोगराहित्यस्य ॥ चिकीति ॥ चिकित्सा ॥ ( १ ) ॥ रुजः प्रतिक्रिया निरसनं रुक्प्रतिक्रिया ॥ ( २ ) ॥ द्वे रोगनिवारणस्य ॥ भेषेति ॥ भेषजम्॥(१)॥ औषधम् ॥(२) ॥ भैषज्यम् ॥( ३ ) ॥ अगदः ॥(४)॥ जायुः ॥ ( ५ ) ॥ पञ्च औषधस्य ॥ ५० ॥ स्त्रीति ॥ रुक् ॥ ( १ ) ॥ "रुजा त्वामयभङ्गयोः" इति हैमः ॥ ( २ )॥ "उपतापो गदे तापे" इति हैमः ॥ ( ३ ) ॥ रोगः ॥ ( ४ ) ॥ व्याधिः ॥ ( ५ ) ॥ "गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे" इति हैमः ॥ ( ६ ) ॥ आमयः ॥ ( ७ ) ॥ सप्त रोगस्य ॥ क्षयेति ॥ "क्षयो गेहे कल्पान्तेऽपचये रुजि" इति हैमः ॥ ( १ ) ॥ "शोषः शोषणयक्ष्मणोः" इति हैमः ॥ ( २ ) ॥ यक्ष्मा ॥ ( ३ ) ॥ त्रीणि राजयक्ष्मणः ॥ प्रेति ॥ प्रतिश्यायः ॥ ( १ ) ॥ पनिसः ॥ ( २ ) ॥ द्वे नासारोगस्य ॥ ५१ ॥ स्त्रीति ॥ क्षुत् ॥ ( १ ) ॥ क्षुतम् ॥ ( २ ) ॥ क्षवः ॥ ( ३ ) ॥ त्रीणि छिक्कायाः ॥ केति ॥ कासः ॥ " काशस्तृणे रोगभेदे " इति हैमतः "वाराणस्यां भवेत्काशी क्षवथौ ना तृणे स्त्रियाम् " इति तालव्यान्ते रभसाच्च तालव्यान्तोऽपि ॥ ( १ ) ॥ "क्षवथुः कासे छिक्कायाम् " इति हेमचन्द्रः॥ (२) ॥ द्वे कासस्य॥ शविति ॥ "शोफ औषधिभेदे स्यादुत्कृते श्वयथावपि" इति हैमः ॥ ( १ ) ॥ श्वयथुः ॥ ( २ ) ॥ शोथः ॥ ( ३ ) ॥ त्रीणि शोथस्य ॥ पेति ॥ पादस्फोटः ॥ ( १ ) ॥ विपादिका ॥(२)॥ द्वे पादस्फोटनरोगस्य ॥५२॥ कीति ॥ किलासम् ॥ ( १ ) ॥ सिध्मम् ॥ ( २ ) ॥ द्वे "सेहुवा" इति ख्यातस्य ॥ केति ॥ कच्छूः ॥ ( १ ) ॥ पाम ॥ ( २ ) ॥ पामा ॥ ( ३ ) ॥ विचर्चिका ॥ ( ४ ) ॥ चत्वारि खसुरोगस्य ॥ कोति ॥ कण्डूः ॥ ( १ ) ॥ " खर्जूः खर्जूरीकीटकण्डुषु " इति हैमः ॥ ( २ ) ॥ कण्डूया ॥ (३ ) ॥ त्रीणि गात्रविघर्षणस्य ॥ वीति ॥ विस्फोटः॥ ( १ ) ॥ " पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते " इति हेमचन्द्रः ॥ स्त्रियां पिटका ॥ "विस्फोटा विटिका स्त्रियाम् " इत्यमरमालायां वकारादिरपि ॥ ( २ ) ॥ द्वे " फोडा " इति ख्यातस्य ॥ ५३ ॥ व्रेति ॥ व्रणः ॥ ( १ ) ॥ ईर्मम् ॥ ( २ ) ॥ अरुः ॥ ( ३ ) ॥ त्रीणि व्रणस्य ॥ नेति ॥ नाडीव्रणः ॥ ( १ ) ॥ एकं सदा गलतो व्रणस्य ॥ कत्रिति ॥ कोठः॥(१)॥मण्डलकम्॥(२)॥ द्वे मण्डलाकारकुष्ठस्य ॥ कुिति ॥ " कुष्ठं भेषजरोगयोः " इति हैमः ॥ ( १ ) ॥ श्वित्रम् ॥ ( २ ) ॥ द्वे श्वेतकुष्ठस्य ॥ दुरिति ॥ दुर्नामकम् ॥ ( १ ) ॥ अर्शः ॥ ( २) ॥ द्वे गुदरोगस्य॥५४॥ आनेति ॥ आनाहः ॥ ( १ ) ॥ विबन्धः ( २ ) ॥ द्वे आध्मानस्य ॥ ग्रेति ॥ ग्रहणी ॥ ( १ ) ॥ प्रवाहिका ॥ ( २ ) ॥ रुक् रोगः ॥ प्रवाहिक-

१—सटीकहैमपुस्तके तु नोपलभ्यते ॥

व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः । अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥५६॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके । वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ५७
ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः।आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ
दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः । वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ५९॥
स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाःक्लिन्नेऽक्ष्णि[१] चाप्यमी।उन्मत्त उन्मादवति श्लेष्मलःश्लेष्मणःकफी
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुण्डिभतुण्डिलौ।किलासी सिध्मलोऽन्धोऽदृङ् मूर्छाले मूर्तमूर्छितौ

रोगो ग्रहणी स्यात् ॥ द्वे संग्रहणीरोगस्य ॥ प्रेति ॥ प्रच्छर्दिका ॥ ( १ ) ॥ वामिः ॥ ( २ ) ॥ "वमथुः पुंसि वमने गजस्य करशीकरे" इति मेदिनी ॥( ३ )॥ त्रीणि वमनस्य ॥ व्येति ॥५५॥ अथ व्याधिभेदाः कथ्यन्ते ॥ विद्रधिः ॥ ( १ ) ॥ ज्वरः ॥ ( १ )॥ मेहः ॥ ( १ )॥ भगंदरः ॥ ( १ ) ॥ व्याधिभेदानां पृथगेकैकम् ॥ अश्मेति अश्मरी ॥ ( १ ) ॥ मूत्रकृच्छ्रम् ॥ ( १ ) ॥ विद्रध्यादीना व्याधिप्रभेदानां प्रत्येकमेकैकम् ॥—अश्मर्यास्तु द्वे नाम्नी—इत्येके ॥ त्रिवति ॥ इतः परं शुक्रशब्दात् प्राक्पठिता वाच्यलिङ्गा इत्यर्थः ॥ ५६ ॥ रोगेति ॥ रोगहारी ॥ ( १ ) ॥ अगदंकारः ॥ ( २ ) ॥ भिषक् ॥ ( ३ ) वैद्यः ॥ ( ४ ) ॥ चिकित्सकः ॥ ( ५ ) ॥ पञ्च वैद्यस्य ॥ वेति ॥ "वार्ता तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबं वृत्तिमन्नीरुजोस्त्रिषु" इति मेदिनी ॥ ( १ ) ॥ "निरामयस्तु स्यादीडिक्के विगतामये" इति हैमः ॥ "निरामयस्तु पुंसि स्यादीडिक्के त्रिषु नीरुजे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ "कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यात्" इति हैमः ॥ ( ३ ) ॥ "उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि" इति हैमः ॥ ( ४ ) ॥ चत्वारि रोगानिर्मुक्तस्य ॥ ५७ ॥ ग्लेति ॥ ग्लानः॥(१)॥ग्लास्नुः॥(२)॥द्वे रोगेणं क्षीणस्य ॥ आमेति ॥ आमयावी ॥( १ ) ॥'विकृतो रोग्यसंस्कृतः । बीभत्सश्च"इति हैमः॥(२)॥व्याधितः ॥(३) ॥'पटुर्दक्षे च नीरोगे" इति मेदिनी पटोरन्यः अपटुः ॥ ( ४ ) ॥ आतुरः॥(५)॥अभ्यमितः॥(६)॥अभ्यान्तः ॥ (७) ॥ सप्त रोगिणः ॥ सेति ॥ पामनः॥( १ ) ॥ "कच्छुरा शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि । कच्छुरं वाच्यवत्प्राहुः पामने पुंश्चलेऽपि च" इति विश्वः ॥ ( २ ) ॥ द्वे विचर्चिकायुक्तस्य ॥५८॥ देति ॥ दद्रुणः ॥ ( १ ) ॥ दद्रुरोगी ॥ ( २ ) ॥ द्वे दद्रुरोगिणः ॥ अर्शविति ॥ अर्शोरोगयुतः ॥ ( १ ) ॥ अर्शांसि सन्त्यस्य अर्शसः ॥ ( २ ) ॥ द्वे मूलव्याधिमतः ॥ वातेति ॥ वातकी ॥ ( १ ) ॥ वातरोगी ॥ ( २ ) ॥ द्वे वातरोगिणः ॥ सेति ॥ सातिसारः ॥ (१) ॥ अतिसारकी ॥ ( २ ) ॥ द्वे अतिसारवतः ॥ ५९ ॥ स्युरिति ॥ चक्षुर्गतः क्लेदरोगश्चुल्लादिवाच्यः । तद्योगाच्चक्षुश्चुल्लादिवाच्यम् ॥ तच्चक्षुर्योगात्पुरुषोऽपि ॥ "चिल्लः खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने । क्लिन्नाक्षि" इति हैमः ॥ त्रीणि क्लिन्ननेत्रतद्वतोः ॥ उन्मेति ॥ "उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः" इति हैमः ॥ ( १ ) ॥ उन्मादवान् ॥ ( २ ) ॥ द्वे वातकृतचित्तविभ्रमस्य ॥ श्लेष्मेति ॥ श्लेष्मलः ॥ ( १ ) ॥ श्लेष्मणः ॥ ( २ ) ॥ कफी ॥ ( ३ ) ॥ त्रीणि कफवतः ॥ ६० ॥ न्युबिति ॥ रुजा रोगेण भुग्ने पुरुषे न्युब्जो वर्तते ॥ "न्युब्जः कुब्जे कुशस्रुचि । अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले" इति हैमः ॥ ( १ ) ॥ एकम् रोगभुग्नस्य ॥ वृद्धेति ॥ वृद्धनाभिः ॥ ( १ ) ॥ तुण्डिभः ॥ ( २ ) ॥ तुण्डिलः "तुन्दिलः" इति च ॥ ( ३ ) ॥ त्रीणि उन्नतनाभियुक्तपुरुषस्य ॥ कीति ॥ किलासी ॥ ( १ ) ॥ "सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि" इति मेदिनी ॥ ( २ ) ॥ द्वे सिध्मयुक्तस्य।॥अन्ध इति॥"अन्धं स्यात्तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्"इति मेदिनी॥ ( १ ) ॥ अदृक् ॥ (२) ॥ द्वे अचक्षुषः ॥ म्विति ॥ मूर्छाक्तः ॥ ( १ ) ॥ 'मूर्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ "मूर्छितं सोच्छ्रये मूढे" इति हैमः ॥ ( ३ ) ॥ त्रीणि मूर्छावतः ॥ ६१ ॥

१—अक्षिण तु नपुंसकानि । "अमी" इति पुंस्त्वं तु शब्दापेक्षया—इति मुकुटः ॥

**शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च।मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा६२ पिशितं तरसं मांसं पललं क्रव्यमामिषम्। उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥६३॥ रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्। वुक्काऽग्रमांसं हृदयं हृन्मेदस्तु वपा वसा॥ ६४॥ पश्चाद्ग्रीवा सिरा मन्या नाडी तु धमनिः सिरा।तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा। स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे६६**

श्विति ॥ "शुक्रं तु रेतोऽक्षिरुजोः" इति हैमः ॥ (१) ॥ तेजः ॥ (२) ॥ रेतः ॥ (३) ॥ "बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" इति हैमः ॥ (४) ॥ "वीर्यं तेजःप्रभावयोः। शुक्रे शक्तौ च" इति हैमः ॥ (५) ॥ "इन्द्रियं तु चक्षुरादिषु रेतसि" इति हेमचन्द्रः ॥ (६) ॥ षट् वीर्यस्य ॥ मेति ॥ मायुः ॥ (१) ॥ पित्तम् ॥ (२) ॥ द्वे पित्तस्य ॥ केति ॥ कफः ॥ (१) ॥ श्लेष्मा ॥ (२) ॥ द्वे कफस्य ॥ स्त्रीति ॥"त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः" इति मेदिनी ॥'त्वचः' इत्यदन्तोऽपि॥ "त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके" इति धरणेः ॥ (१) ॥ असृग्धरा ॥ "असृग्वरा" इत्येके ॥ (२) ॥ द्वे त्वचः ॥ ६२ ॥ पिशीति ॥ "पिशितं मांसं पिशिता मांसिका" इति हैमः ॥ (१) ॥ "तरो जवे बले" इति हैमः ॥ तरो बलमस्त्यस्मिन् तरसम् ॥ (२) ॥ मांसम् ॥ (३) ॥ "पललं तिलमिश्रे स्यात् पललं पिशितेऽपि च" इति शाश्वतः ॥ "पललं पङ्कमांसयोः। तिलचूर्णे पललस्तु राक्षसे" इति हैमः ॥ (४) ॥ क्रव्यम् ॥ (५) ॥ आमिषम् ॥ (६) ॥ षट् मांसस्य ॥ उत्तेति ॥ "उत्तप्तं चञ्चले शुष्कमांससंतप्तयोरपि" इति हैमः ॥ (१) ॥ शुष्कमांसम् ॥ (२) ॥ "वल्लूरं स्याद्वनक्षेत्रे, वाहनोषरयोरपि। वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः" इति मेदिनी ॥ (३) ॥ त्रीणि शुष्कमांसस्य ॥ ६३ ॥ रुधीति ॥ "रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः" इति मेदिनी ॥ (१) ॥ असृक् ॥ (२) ॥ "लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने। पुमान्नदान्तरे भौमे वर्णे च, त्रिषु तद्वति" इति मेदिनी ॥ (३) ॥ "अस्त्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" इति मेदिनी ॥ (४) ॥ "रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु। क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि" इति मेदिनी ॥ (५) ॥ क्षतजम् ॥ (६) ॥ शोणितम् ॥ (७) ॥ सप्त रुधिरस्य ॥ वित्ति ॥ "शोणितेषु, स्त्रियां वृक्का वुक्का सुरसमद्रयोः" इति रभसः ॥ "उरस्यपि च वुक्कायां हृदयं मानसेऽपि च" इति त्रिकाण्डशेषः ॥ (१) ॥ अग्रमांसम् ॥ (२) ॥ द्वे हृदयान्तर्गतमांसविशेषस्य ॥ हिति ॥ "हृदयं मानसे वुक्कोरसोरपि नपुंसकम्" इति मेदिनी॥ "पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम्। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति ॥ (१) ॥ हृत् ॥ (२) ॥ द्वे हृदयकमलस्य ॥ चत्वारि पर्याया इत्येके ॥ मयिति ॥ मेदः ॥ (१) ॥ "वपा विवरमेदसोः" इति हैमः ॥ (२) ॥ वसा ॥ (३) ॥ त्रीणि शुद्धमांसस्नेहस्य ॥ ६४ ॥ पेति ॥ ग्रीवायाः पश्चाद्भागे सिरा मन्या ॥ (१) ॥ एकं ग्रीवायाः पश्चाद्भागे स्थितसिरायाः ॥ नेति ॥ "नाडी नाले व्रणान्तरे। शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च ॥ तथा षट्क्षणकालेऽपि" इति मेदिनी ॥ (१) ॥ धमनिः ॥ ङीषन्तोऽपि ॥ "धमनी तु शिराहट्टविलासिन्योश्च योषिति" इति मेदिनी ॥ (२) ॥ सिरा ॥ तालव्यादिरपि ॥ "शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति" इति तालव्यादौ रभसात् ॥ त्रीणि धमन्याः ॥ तीति ॥ "तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" इति विश्वमेदिन्यौ ॥ (१) ॥ क्लोम ॥ (२) ॥ द्वे उदर्यजलाशयस्य ॥ मेति ॥ मस्तिष्कम् ॥ (१) ॥ गोर्दम् ॥ (२) ॥ द्वे मस्तकभवस्नेहस्य ॥ कीति ॥ किट्टम् ॥ (१) ॥ "मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्" इति मेदिनी ॥ "वसा शुक्रमसृङ्मज्जा कर्णविड्मूत्रविण्नखाः। श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः॥(२)॥ द्वे मलस्य ॥६५॥ अन्त्रमिति ॥ अन्त्रम् ॥ (१) ॥ "पुरीतदस्त्रियाम्" इति वाचस्पतिः ॥ (२) ॥ द्वे "आंत" इति

---

१—प्लीहा टावन्ता च। "यत्कृत्प्लीहे च संबद्धे" इति पालकाप्यात्—इति मुकुटः ॥ २—हैमनाममालायामपि "वुक्का हृद्धृदयं वृक्का गुरसं च तदग्रिमम्" इत्युलभ्यते ॥ "स्त्रियां वुक्का वुक्कस्तु समयोर्द्वयोः" इति पाठान्तरम् ॥

सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् । मूत्रं प्रस्रावं उच्चारावस्करौ शमलं शकृत् ६७
गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ। स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ६८
स्याच्छरीरास्थ्नि कङ्कालः पृष्ठास्थ्नि तु कशेरुका। शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका
अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः । पादाग्रे प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ७१॥
तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः । जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ७२

ख्यातस्य ॥ गिवति ॥ गुल्मः ॥ ( १ ) ॥ प्लीहा ॥ ( २ ) ॥ द्वे कुक्षिवामपार्श्वे मांसखण्डस्य ॥ अथेति ॥ वल्लसा ॥ ( १ ) ॥ स्नायुः ॥ ( २ ) ॥ द्वे अङ्गप्रत्यङ्गसन्धिबन्धनरूपायाः स्नायोः ॥ कालेति ॥ कालखण्डम् ॥ ( १ ) ॥ यकृत् ॥ ( २ ) ॥ द्वे कुक्षेर्दक्षिणभागस्थमांसखण्डस्य "कलेजा" इति ख्यातस्य॥६६॥ सृिति ॥ सृणिका ॥ ( सृणीका ) दीर्घमध्याऽपि ॥ ( १ ) ॥ स्यन्दिनी ॥ ( २ ) ॥ लाला ॥ ( ३ ) ॥ त्रीणि "लाल" इति ख्यातायाः ॥ द्विति ॥ "पिचोण्डकं नेत्रमलं दूषी च दूषिकाऽपि च" इति वाचस्पतिः ॥ 'दूषीका' अपि ॥ ( १ ) ॥ एकं नेत्रयोर्मलस्य ॥ म्विति ॥ मूत्रम् ॥ ( १ ) ॥ प्रस्रावः ॥ ( २ ) ॥ द्वे मूत्रस्य ॥ उच्चेति ॥ उच्चारः ॥ ( १ ) ॥ अवस्करः ॥ ( २ ) ॥ शमलम् ॥ ( ३ ) ॥ शकृत् ॥ ( ४ ) ॥ ६७ ॥ गूथम् ॥ ( ५ ) ॥ पुरीषम् ॥ ( ६ ) ॥ वर्चस्कम् ॥ ( ७ ) ॥ विष्ठा ॥ ( ८ ) ॥ विट् ॥ ( ९ ) ॥ नव पुरीषस्य ॥ स्यादिति ॥ "कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः" इति हैमः ॥ ( १ ) ॥ "कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी ॥ ( २ ) ॥ द्वे शिरोऽस्थिखण्डस्य ॥ कीति ॥ "कीकसः कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकम्" इति मेदिनी ॥ ( १ ) ॥ "सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्" इति विश्वः ॥ कुले भवं साधु वा कुल्यम् ॥ "कुल्यः कुलोद्भवे मान्ये कुलस्याति हितेऽपि च । कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च ॥ पयःप्रणालीसरितोः कुल्या जीवान्तिकौषधौ" इति विश्वः ॥ ( २ ) ॥ अस्थि ॥ ( ३ ) ॥ त्रीणि अस्थ्नः ॥ ६८ ॥ स्यादिति ॥ कङ्कालः ॥ ( १ ) ॥ एकं त्वङ्मांसरहितशरीरास्थ्नः ॥ पृष्ठेति ॥ कशेरुका ॥ ( १ ) ॥ एकं पृष्ठवंशस्य ॥ शीति ॥ करोटिः ॥ ( १ ) ॥ एकं शिरोगतास्थिसमूहस्य ॥ पेति ॥ पर्शुका ॥ ( १ ) ॥ एकं पार्श्वास्थ्नः ॥ ६९ ॥ अङ्गमिति ॥ "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके" इति मेदिनी ॥ ( १ ) ॥ "प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः" इति मेदिनी ॥ ( २ ) ॥ अवयवः ॥ ( ३ ) ॥ अपघनः ॥ ( ४ ) ॥ चत्वारि अवयवस्य ॥ अथेति ॥ कलेवरम् ॥ ( १ ) ॥ "गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ "वपुः क्लीबं तनौ शस्ताकृतावपि" इति मेदिनी ॥ ( ३ ) ॥ संहननम् ॥ ( ४ ) ॥ शरीरम् ॥ ( ५ ) ॥ वर्ष्म ॥ ( ६ ) ॥ "विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी ॥ ( ७ ) ॥ ७० ॥ "कायः कदैवते मूर्तौ संघे लक्षस्वभावयोः । मनुष्यतीर्थे कायं स्यात्" इति मेदिनी ॥ ( ८ ) ॥ देहः ॥ ( ९ ) ॥ "मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपि" इति हैमः ॥ ( १० ) ॥ "तनुर्वपुस्त्वचोः । विरलेऽल्पे कृशे" इति हैमः ॥ "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति नान्तेषु विश्वमेदिन्यौ ॥ "तनूः" सान्तोऽपि ॥ ( ११ ) ॥ एकादश शरीरस्य ॥ पेति ॥ पादाग्रम् ॥ ( १ ) ॥ प्रपदम् ॥ ( २ ) ॥ द्वे पादाग्रस्य ॥ पाद इति ॥ "पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च" इति मेदिनी ॥ ( १ ) ॥ पत् ॥ ( २ ) ॥ अङ्घ्रिः ॥ ( ३ ) ॥ "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुंसक उदाहृतः" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि पादस्य ॥ ७१ ॥ तदिति ॥ तस्य पादस्य ग्रन्थी ॥ घुटिके ॥ ( १ ) ॥ गुल्फौ ॥ ( २ ) ॥ द्वे पादग्रन्थ्योः ॥ पुमेति ॥ तयोर्गुल्फयोरधः ॥ "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ" इति रन्तिदेवः ॥ ( १ ) ॥ एकं पाद-

१—"तनुषे तनुषे कम्" इति वासवदत्तायमकात्—इति मुकुटः ॥

**सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः । गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः७३**
**कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः**
**कूपकौ तु नितम्बस्थौ द्वयहीने कुकुंदरे । स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः७५**
**भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी । मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ७६॥**
**पिचण्डकुक्षी जठरोदरन्तुन्दं स्तनौ कुचौ । चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम्७७**
**उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः। स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ७८**

**पश्चाद्भागस्य** ॥ **जेति** ॥ जङ्घा ॥ ( १ ) ॥ प्रसृता ॥ ( २ ) ॥ **द्वे जङ्घायाः** ॥ **जान्विति** ॥ **'अस्त्रियाम्'** इति त्रिभिः संबध्यते । जानुः ॥ ( १ ) ॥ ऊरुपर्व ॥ ॥(२)॥ अष्ठीवत् ॥(३)॥ **त्रीणि जानूरुसन्धेः** ॥ **सेति** ॥ ७२ ॥ सक्थि ॥ ( १ ) ॥ ऊरुः ॥ ( २ ) ॥ **द्वे जानूपरिभागस्य** ॥ **तदिति** ॥ तस्य ऊरोः ॥ सन्धिः वङ्क्षणः ॥(१)॥ **एकम् ऊरुसन्धेः** ॥ **गिवति** ॥ **गुदम्** ॥ ( १ ) ॥ अपानम् ॥ ( २ ) ॥ पायुः ॥ ( ३ ) ॥ **त्रीणि विष्ठानिर्गममार्गस्य** ॥ **वेति** ॥ **द्वयोः स्त्रीपुंसयोः** ॥ **"मूत्राशयपुटे वस्तिः"** इति रत्नमाला ॥ ( १ ) ॥ **एकं नाभ्यधोभागस्य** ॥ ७३ ॥ **केति** ॥ "शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे **कटः**" इति शाश्वतः ॥ ( १ ) ॥ श्रोणिफलकम् ॥ ( २ ) ॥ **द्वे कटस्य** ॥ **केति** ॥ **कटिः** ॥(१)॥ श्रोणिः ॥ ( २ ) ॥ ककुद्मती ॥ ( ३ ) ॥ **त्रीणि कटेः** ॥ **पञ्चापि पर्याया इत्यन्ये** ॥ **पेति** ॥ नितम्बः ॥ ( १ ) ॥ **एकं स्त्रीकट्याः पश्चाद्भागस्य** ॥ **क्लीति** ॥ "जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि" इति मेदिनी ॥ ( १ ) ॥ **एकं स्त्रीकट्या अग्रभागस्य** ॥ ७४ ॥ **कूपेति** ॥ नितम्बस्थौ कूपकौ ( गर्त्तौ ) कुकुंदरे भवतः॥" कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे" इति हैमः ॥ ॥ ( १ ) ॥ द्वयेन हीने ॥ **एकं पृष्ठवंशादधोगर्तयोः** ॥ **स्त्रीति** ॥ स्फिचौ ॥ ( १ ) ॥ कटिप्रोथौ॥कटी, प्रोथौ, इति नामद्वयं वा ॥ **"स्त्रियां स्फिचौ कटिप्रोथौ कटी प्रोथौ च पूलकौ"** इति रभसः ॥ **"प्रोथोऽश्वघोणाध्वगयोः कट्याम्"** इति हैमः ॥ (२) ॥ **द्वे कटिमांसपिण्डयोः** ॥ **उपेति** ॥ वक्ष्यमाणयोः भगशिश्नयोः ॥ **"उपस्थः शेफसि क्रोडे तथा मदनमन्दिरे"** इति विश्वमेदिन्यौ ॥ ( १ ) ॥ **एकम् उपस्थस्य** ॥७५॥ **भेति** ॥ **"भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ"** इति विश्वमेदिन्यौ ॥ ( १ ) ॥ **'द्वयोः'** इति योनिनाऽन्वेति ॥ **" योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे"** इति मेदिनी ॥ **"योनिः कारणे भगतोययोः"** इति हैमः ॥ ( २ ) ॥ **द्वे भगस्य** ॥ **शीति** ॥ शिश्नः ॥ ( १ ) ॥ मेढ्रम् ॥ ( २ ) ॥ **"मेहनं मूत्रशिश्नयोः"** इति मेदिनी ॥ ( ३ ) ॥ शेफः ॥ **'शेपः'** इति च ॥ अदन्तावप्येतौ **'शेफशेपौ'** ॥(४)॥ **चत्वारि मेढ्रस्य॥म्विति॥"मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च"** इति मेदिनी ॥ ॥ ( १ ) ॥ **अण्डकोशः** ॥ ( २ ) ॥ वृषणः ॥ ( ३ ) ॥ **त्रीणि अण्डकोशस्य** ॥ **पृष्ठेति** ॥ पृष्ठवंशस्याधोभागे ॥ त्रयाणाम् अस्थ्नां संघः ॥ **"त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरत्रये"** इति मेदिनी ॥(१)॥ **एकं त्रिकस्य** ॥ ७६ ॥ **पीति** ॥ **"पिचण्ड उदरे पशोरवयवे पुमान्"** इति मेदिनी ॥ **'पिचिण्डः'** इति च ॥ ( १ ) ॥ कुक्षिः ॥ ( २ ) ॥ **"जठरो न स्त्रियां कुक्षौ, बद्धकक्खटयोस्त्रिषु"** इति मेदिनी ॥ ( ३ ) ॥ **"उदरं तुन्दरणयोः"** इति हैमः ॥ ( ४ ) ॥ तुन्दम् ॥ ( ५ ) ॥ **पञ्च उदरस्य** ॥ **स्तेति** ॥ स्तनः ॥ ( १ ) ॥ कुचः ॥ ( २ ) ॥ **द्वे कुचस्य॥च्विति** ॥ **"चूचुको ना कुचाननम्"** इति रत्नकोषः ॥ चूचुकम् ॥ ( १ ) ॥ कुचाग्रम् ॥ ( २ ) ॥ **द्वे कुचाग्रस्य** ॥ **नेति** ॥ **"क्रोडः कोले शनौ क्रोडमंके"** इति हैमः॥ **"क्रोडः शनौ सूकरे ना, न पुमानङ्करक्षसोः"** इति मेदिनी ॥ ( १ ) ॥ भुजान्तरम् ॥ ( २ ) ॥ **द्वे अङ्कस्य** ॥ ७७ ॥ **उराविति "उरो** वक्षसि मुख्ये स्यात्" इति हैमः ॥ ( १ ) ॥ **"वत्सः** पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी ॥ " पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसि "

---

१--आशयश्च पुटं च । मूत्रादाशयपुटे । मूत्राशयः, मूत्रपुटम्, इत्यर्थः । अत एव हैमीयनाममालायां "नाभेरधो मूत्रपुटं वस्तिर्मूत्राशयोऽपि च" इत्युक्तम् ॥

**बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः । मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ७९**
**भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः।अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः८०**
**मणिबन्धादाकनिष्ठं करस्य करभो बहिः । पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशनी८१॥**
**अङ्गुल्यःकरशाखाःस्युःपुंस्यङ्गुष्ठः प्रदेशिनी।मध्यमाऽनामिका चापि कनिष्ठा चेति ताःक्रमात्**
**पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् । प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३॥**

इति रुद्रः ॥ ( २ ) ॥ वक्षः ॥ ( ३ ) ॥ त्रीणि उरसः॥--पश्चापि वत्सस्य—इत्यन्ये ॥ प्रिति ॥ "पृष्ठं चरममात्रे स्याद्देहस्यावयवान्तरे" इति मेदिनी॥(१)॥ एकं देहपश्चाद्भागस्य॥ स्केति॥"स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च " इति हैमः ॥(१)॥ भुजशिरः ॥ (२) ॥ " अंसः स्कन्धे विभागे स्याद्" इति हैमः ॥ (३) ॥ त्रीणि स्कन्धदेशस्य ॥ समिति ॥ तस्यैव स्कन्धस्यैवेत्यर्थः ॥ जत्रु ॥ (१) ॥ एकमंसकक्षयोः संधेः ॥ ७८ ॥ वेति ॥ बाहुमूलम् ॥(१)॥"कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्धापदे, ना दोर्मूलकच्छवीरुत्तृणेषु च " इति मेदिनी ॥ ( २ ) ॥ द्वे बाहुमूलस्य ॥ पेति ॥ "पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च " इति हैमः ॥ (१)॥ एकं कक्षयोरधोभागस्य ॥ मेति ॥ "मध्यमो मध्यजेऽन्यवत् । पुमान्स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः । त्र्यक्षरच्छन्दसि तथा" इति मेदिनी ॥ (१) ॥"अवलग्नोऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके" इति मेदिनी ॥ (२) ॥ "मध्यं विलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु" इति मेदिनी ॥ (३)॥ त्रीणि देहमध्यस्य ॥ द्वाविति॥ परौ भुजबाहू द्वयोः स्त्रीपुंसयोः ॥ ७९ ॥ "अथो भुजौ । द्वयोर्बाहौ करे" इति मेदिनी ॥ (१) ॥बाहुः ॥ अदन्तोऽपि ॥ " बाहोऽश्वभुजयोः पुमान्" इति दामोदरः ॥ "बाहो बाहुरिति स्मृतः" इति देशीकोषः ॥ "वाहोऽश्वमानयोः । वृषे, वाहा तु बाहौ स्यात्" इति हैमः ॥ (२) ॥ प्रवेष्टः ॥ (३) ॥ "दोर्दोषौ च भुजो बाहुः, पाणिर्हस्तः करस्तथा" इति धनंजयः ॥ ( ४ ) ॥ चत्वारि भुजस्य ॥ केति ॥ " कफोणिः कफणिर्द्वयोः " इति शब्दार्णवः ॥ ( १ ) ॥ कूर्परः ॥ " कफोणिः कूर्परोऽरत्नेः पृष्ठम् " इति नाममाला ॥ ( २ ) ॥ द्वे " कूगी " इति ख्यातस्य भुजमध्यग्रन्थेः ॥ कस्येति ॥ कूर्परस्योर्ध्वे प्रगण्डः ॥ (१) ॥ एकं कूर्परोपरिभागस्य ॥ प्रेति ॥ तस्य कूर्परस्य अधः ॥"प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः" इति कात्यः ॥ "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्" इति मेदिनी ॥ (१) ॥ एकं कफोणेरधो मणिबन्धपर्यन्तस्य ॥ ८० ॥ मणीति ॥ "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते"इति मेदिनी॥(१)॥एकं मणिबन्धात् पाणिमूलात् आकनिष्ठं ( कनिष्ठावधि) करस्य बहिर्भागस्य ॥ पञ्चेति ॥पञ्चशाखः ॥(१)॥"शयः शय्याहिपाणिषु" इति मेदिनी॥"शमः"इति पाठान्तरम् ॥"पाणिः शमः शयो हस्तः"इत्यमरमाला॥(२)॥पाणिः॥(३)॥त्रीणि हस्तस्य॥तेति॥तर्जनी॥(१)॥प्रदेशनी॥"प्रदेशिनी" इति पाठान्तरम् ॥(२)॥ द्वे अङ्गुष्ठसमीपाङ्गुल्याः॥८१॥अङ्ग्विति ॥ अङ्गुली॥"अङ्गुलिः करशाखायां कर्णिकायां गजस्य च " इति हैमविश्वप्रकाशौ॥"अङ्गुरिः"इति च॥(१)॥ करशाखा॥(२)॥ द्वे अङ्गुल्याः॥ पुंसीति ॥अङ्गुष्ठः॥(१)॥ प्रदेशिनी॥(१)॥ "मध्यमो मध्यजे स्वरे । देहमध्ये मध्यदेशे मध्यमा कर्णिकाङ्गुलिः॥राका रजस्वला चापि" इति हैमः॥(१)॥ अनामिका ॥ (१)॥ "कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुली" इति हैमः ॥ ( १ ) ॥ क्रमेण एकैकैकाङ्गुलीनाम् ॥८२॥ ध्विति ॥ पुनर्भवः॥"पुनर्नवः " इति वा पाठः॥(१)॥कररुहः ॥(२)॥ "नखी स्त्रीपुंसयोः शुक्तौ नखरे पुंनपुंसकम्" इति मेदिनी ॥(३)॥"नखरं त्रिषु"इत्यमरमाला॥(४)॥ चत्वारि नखस्य ॥प्रेति॥ प्रादेशः॥ह्रस्वादिरपि॥"प्रदेशो देशमात्रे स्यात्तर्जन्यङ्गुष्ठसं-

---

१—"बाहौ यथा-"उद्वेल्लद्भुजवल्लिकङ्कणझणत्कारस्तदा दुःसहः" । करे यथा-"चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य"-- इत्यनेकार्थकैरवाकरकौमुदी ॥ २-"सुबाहा" इति सुबन्धुः । स्वश्वा, सुभुजा च-इति मुकुटः ॥ ३--"शाम्यन्ति भोगेन न जातु कामा न बाहया वा सुतरः समुद्रः" इत्यनेकार्थकैरवाकरकौमुदी ॥ ४-"बहुदोषो गुरुध्वंसी गोहन्ता जनपीडकः" इति विदग्धमुखमण्डनम्-इति मुकुटः ॥ ५-प्रसङ्गेनोक्तम् । न त्वत्रास्योपयोगः ॥ किन्तु पाणिपर्यायकथनम् ॥

**अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः । पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४॥
द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ । पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्॥८५॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया । स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना॥८६
व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् । ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु॥८७॥
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि।कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका॥८८
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका॥८९॥**

मिते" इति मेदिनी ॥ (१) ॥ "तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे" इति मेदिनी ॥ (१) ॥"गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ" इति विश्वः ॥(१)॥ तर्जन्यादिसहिते विस्तृतेऽङ्गुष्ठे क्रमेणैकैकम् ॥ ८३ ॥ ऐति ॥ कनिष्ठया सह विततेऽङ्गुष्ठे ॥ वितस्तिः ॥(१)॥द्वादशाङ्गुलः॥(२)॥द्वे वितस्तेः॥पेति॥चपेटः॥"चर्पटः" ॥ अप्यत्र॥ "चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च"इति विश्वमेदिन्यौ॥(१)॥"प्रतलं पातालभेदे तताङ्गुलिकरे पुमान्" इति मेदिनी ॥ 'तलम्' अप्यत्र ॥ "तलं स्वरूपाधारयोः खड्गमुष्टिचपेटयोः" इति विश्वः ॥ "तलश्चपेटे तालद्रौ" इति हैमतः" पुंसि तालमहीरुहे । चपेटे च " इति मेदिनीतश्च पुंस्यप्ययम् ॥ ( २ ) ॥ प्रहस्तः ॥ ( ३ ) ॥ त्रीणि विस्तृताङ्गुलौ पाणौ ॥ ८४ ॥ द्वाविति ॥ सिंहतलः॥"संहतलः" इति पाठान्तरम् ॥ ( १ ) प्रतलः ॥( २)॥ द्वे वामदक्षिणयोः पाण्योर्मिलितयोर्विस्तृताङ्गुल्योः॥ पेति ॥ नितरां कुब्जा प्रकृतिरस्येति निकुब्जः पाणिः प्रसृतिः॥"प्रसृतः" इति वा पाठः ॥ " प्रसृतः सप्रसारे स्याद्विनीते वेगिते त्रिषु । अर्धाञ्जलौ तु पुंल्लिङ्गो जंघायां प्रसृता मता " इति मेदिनी ॥ (१) ॥ एकं निकुब्जपाणेः ॥ तावीति ॥ तौ प्रसृतौ युतौ मिलितौ ॥ "अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च " इति मेदिनी ॥ ( १ ) ॥ एकं मिलितप्रसृतयोः ॥ ८५ ॥ प्रेति ॥ बाहौ प्रसारितपाणौ हस्तः ॥ "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते" इति मेदिनी ॥(१)॥ विस्तृतः करो यस्य तस्मिन् ॥ एकं विस्तृतकरस्य प्रकोष्ठस्य ॥ म्विति ॥स हस्तः बद्धया मुष्ट्योपलक्षितः॥ "रत्न्यरत्नी स्त्रियौ बद्धमुष्टिताङ्गुली" इत्यमरमाला॥(१)॥एकं बद्धमुष्टिहस्तस्य ॥ अरेति ॥"नाऽरत्निः कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलौ" इति रुद्रः ॥ "अरत्निर्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च । कफोणावपि " इति मेदिनी ॥ ( १ ) ॥ निर्गता कनिष्ठा यस्मात्तेन मुष्टिनोपलक्षितः ॥ एकं निष्कनिष्ठमुष्टिहस्तस्य॥ ८६ ॥ व्येति ॥ व्यामः ॥ ( १ ) ॥ स्वे स्वे पार्श्वे तिर्यक् प्रसारितयोर्बाह्वोर्मध्यम् ॥ एकं तिर्यक्प्रसारितकरमध्यपरिमाणस्य ॥ ऊर्ध्वेति ॥ दोषौ च पाणी च तत् ॥ ऊर्ध्वं विस्तृतं दोःपाणि येन सः ॥ तादृशो ना ॥ तस्य यन्मानं परिमाणम् ॥ तेन पुंसा वा यन्मीयते तत्र ॥ " पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत् " इति मेदिनी ॥ ( १ ) ॥ एकं पुरुषप्रमाणस्य ॥ ॥ ८७ ॥ केति ॥ " समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः " इति शाश्वतः ॥ " कण्ठो गले संनिधाने ध्वनौ मदनपादपे " इति विश्वः ॥ ( १ ) ॥ " गलः कण्ठे सर्जरसे " इति मेदिनी ॥ ( २ ) ॥ द्वे ग्रीवाग्रभागस्य ॥ अथेति ॥ "ग्रीवे शिरोधितच्छिरे " इति हैमः ॥ ( १ ) ॥ शिरोधिः ॥ ( २ ) ॥ "कन्धरो वारिवाहे स्याद् ग्रीवायां कंधरा मता" इति विश्वः ॥ ( ३ ) ॥ त्रीणि ग्रीवायाः ॥ कोति ॥ कम्बुग्रीवा ॥ (१) ॥ एकं त्रिरेखाया ग्रीवायाः ॥ अवेति ॥ "अवटुः पुरुषे कृकाटिका घाटा" इति बोपालितः॥ ( १ ) ॥ घाटा ॥ ( २ ) ॥ कृकाटिका ॥ (३)॥ त्रीणि ग्रीवायामुन्नतभागस्य "घाटी" इति ख्यातस्य । ग्रीवापश्चाद्भागस्य--इति स्वामिमुकुटौ ॥ वेति ॥ "वक्त्रमास्ये छन्दसि च " इति हेमचन्द्रः ॥ ( १ ) ॥ "मुखं मुखान्तरालं च द्वयमास्यमितीरितम् " इति शाश्वतः ॥ " आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां

---

१—मुकुटस्तु—" संहतलः प्रतलौ" इति सविसर्गपाठमाश्रित्य द्वौ वामदक्षिणौ प्रतलौ मिलितौ संहतल उच्यते । प्रतलद्वयं मिलितं संहतलः स्यादित्यर्थः—इत्युक्त्वा 'एकम्' इत्येवोक्तवान् ॥ २—बाहुशब्दस्य प्रकोष्ठवाचकत्वाभावः। "चतुर्विंशत्यङ्गुलो हस्तः" इति सकलसिद्धान्तभङ्गश्च ॥

**ओष्ठाधरौ तु रदनच्छदौ दशनवाससी । अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥९०॥**
**रदना दशना दन्ता रदास्तालु तु काकुदम् । रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्कणी॥९१॥**
**ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ । कूर्चमस्त्री भ्रुवोर्मध्यं तारकाऽक्ष्णः कनीनिका॥**
**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥ ९३ ॥**

स्थितौ'' इति मेदिनी ॥ ( २ ) ॥ वदनम् ॥ ( ३ ) ॥ तुण्डम् ॥ ( ४ ) ॥ आननम् ॥ ( ५ ) ॥ लपनम् ( ६ ) ॥ " मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः '' इति हैमः ॥ ( ७ ) ॥ **सप्त मुखबिलस्य** ॥ तदुपलक्षिते समुदाये तूपचारात् ॥ **क्लीबे इति** ॥ " **घ्राणं** क्लीबं नासिकायां घ्राते स्याद्घ्राच्यलिङ्गकम् '' इति मेदिनी ॥ ( १ ) ॥ "स्याद्गन्धवहा नासायां पुंलिङ्गे मातरिश्वनि '' इति मेदिनी ॥ ( २ ) ॥ घोणा ॥ (३) ॥ " नासा तु नासिकायां च द्वारोर्ध्वदारुणि स्त्रियाम् '' इति मेदिनी ॥ ( ४ ) ॥ "घ्राणं गन्धवहा नासा नसा नस्या च नासिका '' इति साहसाङ्कः ॥ " कुल्या गन्धवहा घोणा घ्राणं नासा च नासिका '' इति कात्यः ॥( ५ ) ॥ **पञ्च नासिकायाः** ॥ ८९ ॥ **ओष्ठेति** ॥ ओष्ठः ॥ (१) ॥ " **अधरस्तु** पुमानोष्ठे, हीनेऽनूर्ध्वे च वाच्यवत् '' इति मेदिनी ॥ ( २ ) ॥ रदनच्छदः ॥ ( ३ ) ॥ दशनवासः ॥ ( ४ ) ॥ **चत्वार्युत्तराधरोष्ठमात्रस्य** ॥ **अधेति** ॥ चिबुकम् ॥ ( १ ) ॥ "अधस्तादधरोष्ठस्य **चिबुः** स्याच्चिबुकं तथा '' इति निगमः ॥ **एकमोष्ठाधोभागस्य** ॥ **गेति** ॥ " **गण्डः** स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे'' इति मेदिनी ॥ ( १ ) कपोलः ॥ ( २ ) ॥ **द्वे कपोलस्य** ॥ तदिति ॥ ताभ्यां कपोलाभ्यां परः ॥ " हनुर्हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे'' इति मेदिनी ॥ ( १ ) ॥ **एकं कपोलाधोभागस्य** ॥ ९० ॥ **रेति** ॥ रदनः ॥ ( १ ) ॥ दशनः ॥ (२) ॥ "दन्तोऽद्रिकटके कुञ्जे दशनेऽप्योषधौ स्त्रियाम् '' इति मेदिनी ॥ ( ३ ) ॥ रदः ॥ ( ४ ) ॥ **चत्वारि दन्तस्य** ॥ **तेति** ॥ तालु ॥ ( १ ) ॥ काकुदम् ॥ ( २ ) ॥ **द्वे तालुनः** ॥ **रेति** ॥ रसज्ञा ॥ ( १ )॥ "**रसनं** स्वदने ध्वनौ । जिह्वायां तु न पुंसि स्यात् '' इति मेदिनी ॥ " तालव्या अपि दन्त्याश्च'' इत्यादौ " जिह्वायां **रशना** तथा '' इत्युक्तेर्दन्त्यतालव्यमध्येयम् ॥ " रसनं तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम् '' इति रभसः ॥ ( २ ) ॥ जिह्वा ॥ ( ३ ) ॥ **त्रीणि जिह्वायाः** ॥ **प्रेति** ॥ ओष्ठस्य प्रान्तौ ( वामदक्षिणौ ) ॥ "प्रान्तावोष्ठस्य **सृक्कणी**[3]'' इति क्लीबकाण्डेऽमरदत्तः ॥ कवयुक्तम् (सृकगी) इत्यन्ये ॥ ( सृक्कणी ) ङ्यन्ता—इत्येके ॥ अदन्तम् ( सृक्कम् )—इत्यपरे ॥ 'सृक्कि' इकारान्तः क्लीबम् इति चापरे ॥ (१ ) ॥ **एकमोष्ठान्तयोः** ॥ ९१ ॥ **लेति** ॥ ललाटम् ॥ ( १ ) ॥ "**अलीकमहितेऽपि**'' इति कात्यः ॥ "**अलिकं**[3] ह्रस्वदीर्घमध्यम् '' इति राजदेवः ॥ ( २ ) ॥ गोधिः ॥ पुंस्ययम् । "**गोधि**-भाली महाशङ्खः'' इति त्रिकाण्डशेषात् ॥ ( ३ ) ॥ **त्रीणि ललाटस्य** ॥ **ऊर्ध्वे इति** ॥ **भ्रुवौ** ॥(१)॥ **एकं नेत्रोपरिभागस्थरोमराजेः** ॥ **किति** ॥ "**कूर्चमस्त्री** भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे'' इति मेदिनी ॥ (१) ॥ **एकं नासोपरिभ्रूद्वयमध्यस्य** ॥ **तेति** ॥ "**तारका** दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु'' इति मेदिनी ॥ ( १ ) ॥ "**कनीनिका** तारकेऽक्ष्णः स्यात्कनिष्ठाङ्गुलावपि'' इति मेदिनी ॥ ( २ ) ॥ "अक्ष्णः '' इति खेचरीव्यावृत्त्यर्थम् ॥ **द्वे तारकायाः** ॥ ९२ ॥ **लविति** ॥ लोचनम् ॥ ( १ )॥ नयनम् ॥ ( २ ) ॥ "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री

१—" मां विवक्षुरसि किं चलदोष्ठः इति प्रयोगात्—इति मुकुटः ॥ २—"महासृक्कायशोभितो नृसिंहनखाग्रवत्'' इति, लताश्लेषात् कद्वयम् ॥ " स्मितस्य सम्भावय सृक्कणा कणान् '' इति ॥ श्रीहर्षप्रयोगात् वकारयुक्तं च । " न संयोगाद्वमन्तात्'' ( ६।४।१३७ ) इत्यल्लोपो न ॥ " स सृक्कणीप्रान्तमसृक्प्रदिग्धं प्रलेलिहानो हरिणारिरुच्चैः '' इति पाणिनेर्ङीबन्ता च ॥ " सृक्के द्वे चैव विज्ञेये चत्वारिंशच्च वक्त्रजाः '' इति वचनाददन्तं सृक्कमपि ॥ 'सृकाणि' इतीदन्तमपि ॥ क्लीबं वारिशब्दवत्' इत्युक्तेः ॥'सृक्कि' शब्दो ह्रस्वेकारान्तोऽपि क्लीबः—इत्यपरे। "सक्थ्यक्षिदधिसृक्कि तथा वारि स्यात्'' इत्यरुणः—इति मुकुटः॥ ३—अत एव हैमनाममालायाम् "भाले गोध्यलिकाली-कललाटानि'' इत्युपलभ्यते ॥

**अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने । कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ९४॥ उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्॥चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः । ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः॥९६॥ कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः॥शिखा चूडा केशपाशी व्रतिनस्तु जटा सटा९७**

नेतारि वाच्यवत्" इति मेदिनी ॥ ( ३ ) ॥ "ईक्षणं दर्शने दृशि" इति मेदिनी ॥ ( ४ ) ॥ चक्षुः ॥ ( ५ ) ॥ अक्षि ॥ ( ६ ) ॥ दृक् ॥ ( ७ ) ॥ "दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इति हैमः ॥ ( ८ ) ॥ **अष्ट नयनस्य** ॥ **अस्विति** ॥ **अस्रु** ॥ ( १ ) ॥ नेत्राम्बु ॥ ( २ ) ॥ "रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम्" इति मेदिनी ॥ ( ३ ) ॥ "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" इति मेदिनी ॥ "जगरे चास्रमश्रुणि" इत्यूष्मभेदात्तालव्यप्रकरणोक्तेश्च तालव्यशमपि ॥ ( ४ ) ॥ अश्रु ॥(५)॥ **पञ्च रोदनस्य** ॥ ९३ ॥ **अपेति** ॥"अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति विश्वः ॥ ( १ ) ॥ 'बाह्यौ' इति शेषः ॥ **एकं नेत्रान्तभागयोः** ॥ **केति**॥ कटाक्षः ॥ "कटाक्षकाक्षौ" इति रभसात् काक्षोऽपि॥ ॥ ( १ ) ॥ अपाङ्गदर्शनम् ॥ ( २ ) ॥ **द्वे कटाक्षस्य** ॥ **केति** ॥ "**कर्णः** पृथासुते ज्येष्ठे सुवर्णालौ श्रुतावपि" इति मेदिनी ॥ ( १ ) ॥ शब्दग्रहः ॥ ( २ ) ॥ श्रोत्रम् ॥ ( ३ ) ॥ "**श्रुतिः** श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम्" इति मेदिनी ॥ ( ४ ) ॥ "**श्रवणं** च श्रुतौ कर्णे नक्षत्रे न नपुंसकम्" इति मेदिनी ॥ ( ५ ) ॥ श्रवः ॥ ( ६ ) ॥ **षट् कर्णस्य** ॥ ९४ ॥ **उत्तेति** ॥ उत्तमाङ्गम् ॥ ( १ ) ॥ "**शिरः** प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च" इति मेदिनी ॥ "शिरोवाची शिरोऽदन्तो, रजोवाची रजस्तथा" ॥ ( २ ) ॥ शीर्षम् ॥ ( ३ ) ॥ मूर्धा ॥ ( ४ ) मस्तकः ॥ ( ५ ) ॥ **पञ्च मस्तकस्य** ॥ **चीति** ॥ चिकुरः ॥ "कुन्तला मूर्धजास्त्वस्राश्चिकुराश्चिहुराः कचाः" इति दुर्गाद्रुमध्योऽपि ॥ ( १ ) ॥ " कुन्तलश्चषके बाले यवे ना भूम्नि नीवृति" इति मेदिनी ॥ ( २ ) ॥ "बालो ना कुन्तलेऽश्वस्य गजस्यापि च बालधौ । नालिकेरे हरिद्रायां मल्लिकाभिदयपि स्त्रियाम् ॥ वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुंनपुंसकम् । अलकारान्तरे मेध्ये बाली बाला त्रुटिस्त्रियोः" इति पवर्गीयादौ मेदिनी ॥ ( ३ ) ॥ "कचः शुष्कव्रणे केशे बन्धे पुत्रे च गीष्पतेः । कचा करेण्वाम्" इति हैमः ॥ ( ४ ) ॥ "केशः स्यात्पुंसि वरुणे ह्रीबेरे कुन्तलेऽपि च" इति मेदिनी ॥ (५) ॥ शिरोरुहः ॥ ( ६ ) ॥ **षट् केशस्य** ॥ **तदिति** ॥ केशानां समूहः कैशिकम् ॥ ( १ ) ॥ कैश्यम् ॥ ( २ ) ॥ **द्वे केशवृन्दस्य** ॥ **अलेति** ॥ "अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' इति मेदिनी ॥ ( १ ) ॥ चूर्णकुन्तलाः ॥ ( २ ) ॥ **द्वे वक्रकेशानाम्** ॥ **त इति** ॥ "अथ **भ्रमरको** भृङ्गे गैरिके चूर्णकुन्तले" इति मेदिनी ॥ ( १ ) ॥ **एकं ललाटे लम्बमानानां केशानाम्** ॥ **काकेति** ॥ काकपक्षः ॥ ( १ ) ॥ "**शिखण्डौ** तु शिखाबर्हौ" इति तालव्यादौ रभसः ॥ "शिखण्डो बर्हचूडयोः" इति मेदिनी ॥ शिखाण्डकोऽपि ॥ "शिखाण्डकशिखण्डकौ" इति वाचस्पतिसुभूती ॥ ( २ ) ॥ **द्वे सामान्येन शिखायाः** ॥ **बालानां शिखाया वा** ॥ ॥ ९६ ॥ **केति** ॥ "**कबरं** लवणाम्लयोः । कबरी केशविन्यासशाकयोः" इति हैमः ॥ ॥ ( १ ) ॥ केशानां वेशो मार्जनाबन्धविशेषः केशवेशः ॥ ( २ ) ॥ **द्वे अलङ्कृतकेशानाम्** ॥ **अथेति** ॥ अथ संयताः ( पुष्पादिना ग्रथिताः ) कचाः ॥ धम्मिल्लम्॥(१)॥ **एकं "चूडा" इति ख्यातस्य** ॥ **शीति** ॥ "**शिखा** शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "**चूडा** शिखाग्रयोः । बाहुभूषावलभ्योश्च" इति हैमः ॥ ( २ ) ॥ केशपाशी ॥ ( ३ ) ॥ **त्रीणि शिरोमध्यस्थचूडायाः "चोटी" इति ख्यातायाः** ॥ **व्रेति** ॥ व्रतिनः शिखा ॥ "**जटा** लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी" इति मेदिनी ॥ ( १ ) ॥ "**सटा** जटाकेसरयोः" इति मेदिनी ॥ (२) ॥

---

१—केषुचिन्मूलपुस्तकेषु तु "व्रतिनः सा" इति पाठ उपलभ्यते ॥ "सा जटायां च राक्षस्यां दुर्भगस्त्रियाम्" इति कचित्पुस्तके हैमः ॥ "सुप्तोऽपि प्रबुद्धः" इति कादम्बरीश्लेषश्च ॥ २—"प्रावर्तयन्नदीमस्रैर्द्विषां तद्योषितां च सः" इति माघे रक्तार्थेन सह श्लेषादस्रं दन्त्यसम्—इति मुकुटः ॥

वेणिप्रवेणी शीर्षण्यशिरस्यौ विशदे कचे । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८॥
तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे । आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलंकर्ताऽलंकरिष्णुश्च मण्डितः । प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥१००॥
विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलंक्रिया । अलंकारस्त्वाभरणं परिष्कारो विभूषणम्॥
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् । चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
बालपाश्या पारितथ्या पत्त्रपाश्या ललाटिका।कर्णिका तालपत्त्रं स्यात्कुण्डलं कर्णवेष्टनम् १०३

द्वे व्रतिनः शिखायाः ॥ ९७ ॥ वेणीति ॥ वेणिः ॥ ( १ ) ॥ प्रवेणिः ॥ ( २ ) ॥ "करणिश्रोणिवेणयः" इति स्त्रीकाण्डे निगमः ॥ ङीषन्तावपि ॥ "वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे" इति हैमः ॥ द्वे प्रोषितभर्तृकादिधार्यकेशरचनाविशेषस्य ॥ शीति ॥ "शीर्षण्यं तु शीर्षके । सुकेशे पुंसि" इति मेदिनी ॥ ॥ ( १ ) ॥ शिरस्यः ॥ ( २ ) ॥ द्वे अन्योन्यासंपृक्ते स्नानादिनिर्मले वा केशे ॥ पेति ॥ "पाशस्तु मृगपक्ष्यादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । छत्राद्यन्ते च निन्दार्थः" इति हैमः ॥ ॥ ( १ ) ॥ "पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो वृन्दे बले सखिसहाययोः" इति मेदिनी ॥ ( २ ) ॥ "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते" इति मेदिनी ॥ (३) ॥ कचवाचकात् परे सन्तः॥कलापोऽर्थो येषाम्॥त्रीणि कलापार्थस्य॥९८॥तेति॥"तनूरुहं तु लोम्नि स्यात्पतत्त्रे च नपुंसकम्" इति मेदिनी ॥ "तनूरुहस्तु पुत्रे गरुति लोम्नि च" इति हैमः ॥ ( १ ) ॥ रोम ॥ ( २ ) ॥ लोम ॥ ( ३ ) ॥ त्रीणि रोममात्रस्य ॥तदिति॥ तस्य वृद्धिस्तस्याम् ॥ श्मश्रु ॥ ( १ ) ॥ पुंसो मुखे ॥ एकं दाढिकायाः ॥ आकेति ॥ "आकल्पः कल्पने वेशे" इति मेदिनी ॥ ( १ ) ॥ वेषः ॥ तालव्यशान्तोऽपि ॥ "वेशो वेश्यागृहे गृहे । नेपथ्ये च" इति मेदिनी ॥ (२) ॥ "नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेदे" इति हैमः ॥ ( ३ ) ॥ प्रतिकर्म ॥ ( ४ ) ॥ प्रसाधनम् ॥ ( ५ ) ॥ पञ्चालंकाररचनादिकृतशोभायाः ॥ ९९ ॥ देति ॥ एते वक्ष्यमाणा रोचिष्णुपर्यन्ताः ॥ अलमिति ॥ अलंकर्त्ता ॥ ( १ ) ॥ अलंकरिष्णुः ॥ ( २ ) ॥ द्वे अलंकरणशीलस्य ॥ मेति ॥ मण्डितः ॥ ( १ ) ॥ प्रसाधितः ॥ ( २ ) ॥ अलंकृतः ॥ ( ३ ) ॥ भूषितः ॥ ( ४ ) ॥ परिष्कृतः ॥ ( ५ ) ॥ पञ्च भूषितस्य ॥ १०० ॥ वीति ॥ विभ्राट् ॥ ( १ ) ॥ भ्राजिष्णुः ॥ ( २ ) ॥ रोचिष्णुः ॥ ( ३ ) ॥ त्रीण्यलंकारादिना शोभमानस्य ॥ भ्विति ॥ भूषा ॥ ( १ ) ॥ अलंक्रिया ॥ ( २ ) ॥ द्वे अलंकरणस्य ॥ अलमिति ॥ "अलंकारः कङ्कणादिषु । उपमादौ" इति हैमः ॥ ( १ ) ॥ आभरणम् ॥ ( २ ) ॥ परिष्कारः ॥ ( ३ ) ॥ विभूषणम् ॥ ( ४ ) ॥ १०१ ॥ "मण्डनं तु प्रसाधने । मण्डनोऽलंकरिष्णौ" इति हैमः ॥ ॥ ( ५ ) ॥ पञ्च भूषाणाम् ॥ अथेति ॥ एकोकारं मकुटम् ॥ ( मुकुटम् ) इति द्व्युकारं च ॥ ( १ ) ॥ किरीटम् ॥ ( २ ) ॥ द्वे मुकुटस्य ॥ चूडेति ॥ "चूडामणिः काकचिञ्चाफले मूर्धमणावपि" इति हैमः ॥ ( १ ) ॥ शिरोरत्नम् ॥ ( २ ) ॥ द्वे शिरोरत्नस्य ॥ तेति ॥ "तरलं चञ्चले षिङ्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ हारस्य मध्यं हारमध्यं गच्छति ॥ एकं हारमध्यगतस्य मुख्यमणेः ॥ १०२ ॥ बेति ॥ बालपाश्या ॥ ( १ ) ॥ पारितथ्या ॥ ( २ ) ॥ द्वे सीमन्तस्थितायाः स्वर्णादिपट्टिकायाः ॥ स्वामी तु--प्रथमं बालबन्धनमुक्तावलीनाम्--इत्याह ॥ पत्रेति ॥ पत्त्रपाश्या ॥ ( १ ) ॥ ललाटिका ॥ ( २ ) ॥ द्वे ललाटाभरणस्य ॥ केति ॥ "कर्णिका कर्णभूषणे । बीजकोशे सरोजस्य करमध्याङ्गुलावपि ॥ कुट्टिन्यां हस्तिहस्ताग्रे" इति हैमः ॥ ( १ ) ॥ "तालपत्त्रं तु कुण्डले । स्यात्तालपत्त्री रण्डायाम्" इति हैमः ॥ ( २ ) ॥ 'ताटंकः' अन्यत्र ॥ सुवर्णरचितस्यापीदमेव नाम ॥ द्वे कर्णाभरणस्य ॥ कुण्डेति॥"कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्योः स्त्री"

**ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका।स्वर्णैः प्रालम्बिकाऽथोरःसूत्रिका मौक्तिकैः कृता॥ हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः । हारभेदा यष्टिभेदाद्गुत्सगुत्सार्धगोस्तनाः१०५॥ अर्धहारो माणवक एकावल्येकयष्टिका । सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥१०६॥ आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् । केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका १०७ साक्षराऽङ्गुलिमुद्रा सा कङ्कणं करभूषणम्।स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा१०८**

इति मेदिनी ॥ ( १ ) ॥ कर्णवेष्टनम् ॥ ( २ ) ॥ द्वे कुण्डलस्य ॥ १०३ ॥ ग्रैवेयेति ॥ ग्रैवेयकम् ॥ "ग्रैवेयम्" अपि—इति मुकुटः ॥ ( १ ) ॥ कण्ठभूषा ॥ ( २ ) ॥ द्वे "कण्ठा" इति ख्यातायाः ॥ लेति ॥ लम्बनम् ॥ ( १ ) ॥ ललन्तिका ॥ ( २ ) ॥ द्वे किंचिल्लम्बमानकण्ठभूषणस्य ॥ स्वेति ॥ सैव ललन्तिका सुवर्णैः कृता ॥ प्रालम्बिका ॥ ( १ ) ॥ एकं लम्बकण्ठिकायाः ॥ अथेति ॥ सैव ललन्तिका मुक्ताभिः कृता ॥ उरःसूत्रिका ॥ ( १ ) ॥ एकं मुक्ताकृतललन्तिकायाः॥ ॥ १०४ ॥ हेति ॥ "हारो मुक्तासरे युधि" इति मेदिनी ॥ स्त्रीलिङ्गोऽपि ॥ "हारा मुक्तावली हारः" इति रभसः ॥ ( १ ) ॥ मुक्तावली ॥ ( २ ) ॥ द्वे मुक्तावल्याः ॥ देवेति ॥ हारः शतयष्टिकः सन् देवच्छन्दः ॥ ( १ ) ॥ एकं शतलतिकहारस्य ॥ हारेति ॥ यष्टीनां भेदात् हारभेदाः स्युः ॥ "गुत्सः स्यात्स्तवके स्तम्बे हारभिद् ग्रन्थिपर्णयोः" इति दन्त्यान्तेषु मेदिनी ॥ छान्तोऽपि ॥ "स्याद् गुच्छः स्तवके स्तम्बे हारभेदकलापयोः" इति मेदिनी ॥ "द्वात्रिंशल्लतिको गुच्छः" ॥ ( १ ) ॥ चतुर्विंशतियष्टिको हारो गुत्सार्धः ॥ "गुच्छार्धस्तत्त्वसंख्यकः" ॥ ( १ ) ॥ "चतुस्त्रिंशल्लतो हारश्चतुःसरिच गोस्तनः" ॥ ( १ ) ॥ १०५ ॥ "विंशतियष्टिको हारो मणवः परिकीर्तितः" ॥ अर्धेनैकदेशेन कृतो हारः ॥ ( १ ) ॥ "माणवको हारभेदे बाले कुपुरुषे बटौ" इति मेदिनी ॥ ( १ ) ॥ एकावली ॥ ( १ ) ॥ एकयष्टिका ॥ एकावल्येव सप्तविंशतिमुक्ताभिः कृता ॥ ( १ ) ॥ नक्षत्रमाला ॥ ( १ ) ॥ प्रत्येकमेकैकं हारभेदस्य ॥ १०६ ॥ आवेति ॥ आवापकः ॥ ( १ ) ॥ पारिहार्यः ॥ ( २ ) ॥ "कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डने । सामुद्रलवणे राजधानीवलययोरपि" इति मेदिनी ॥ ( ३ ) ॥ "वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम्" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि प्रकोष्ठाभरणस्य ॥ कयिति ॥ केयूरम् ॥ ( १ ) ॥ "अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् । अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति" इति मेदिनी ॥ ( २ ) ॥ द्वे प्रगण्डभूषणस्य ॥ अङ्गुलीति ॥ अङ्गुलीयकम् ॥ 'अङ्गुरीयकम्'—इति मुकुटः ॥ ( १ ) ॥ ऊर्मिका ॥ ( २ ) ॥ द्वे अङ्गुलीभूषणस्य ॥ १०७ ॥ सेति ॥ सा ऊर्मिका अक्षरैः सहिता चेत् ॥ अङ्गुलिमुद्रा ॥ ( १ ) ॥ एकं साक्षरोर्मिकायाः ॥ कङ्केति ॥ "कङ्कणं करभूषायां सूत्रमण्डनयोरपि"इति मेदिनी ॥ (१) ॥ "क्लीबं मण्डने सूत्रे कङ्कणं करभूषणम्" इति रभसः ॥ ( २ ) ॥ द्वे कङ्कणस्य ॥ स्त्रीति ॥ "मेखलाऽद्रिनितम्बे स्याद्रशनाखड्गबन्धयोः" इति हैमः ॥ ( १ ) ॥ "काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इति मेदिनी ॥ ( २ ) ॥ सप्तकी ॥ ( ३ ) ॥ तालव्यमध्या रशना ॥ दन्त्यमध्याऽपि ॥ "तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः । रशनाऽपि च जिह्वायाम्"॥"रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोः" इत्यजयधरणी ॥ "रसनं स्वदने ध्वाने रसना काञ्चिजिह्वयोः । रसनं चापि रास्नायाम्" इति विश्व-

---

१—"सग्रैवेयस्त्वमसि फणिना" इति राजशेखरः ॥ इति मुकुटः ॥ २—"हैमे तु "अर्धहारश्चतुःषष्टिर्गुच्छमाणवमन्दराः । अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम्" इत्युक्तम् । अन्ये तु "चतुःषष्टिलतो हारोऽथाष्टहीना यथोत्तरम् । रश्मिकलापौ माणवकोऽर्धहारोऽर्धगुच्छकः ॥ कलापच्छन्दो मन्दरश्च गुच्छः सप्तयष्टिकः" इत्याहुः ॥ ३—पुंलिङ्गोऽप्ययम् "अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः" इति भट्टिप्रयोगात्—इति मुकुटः ४—"क्षुभितसिन्धुमनीरशनैः शनैः" इति भारवियमकात्—इति मुकुटः ॥ ५—"रसनाबन्धो रतिकलहेषु, न दानानुमतिषु" इति वासवदत्ताश्लेषात्—इति मुकुटः ॥

**क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु।पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्१०९**
**हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका। त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ११०॥**
**वाल्कं क्षौमादि फालं तु कार्पासं वादरं च तत्। कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम्॥**
**अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे। तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२॥**
**पत्त्रोर्णं धौतकोशेयं बहुमूल्यं महाधनम् ।क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ॥११३॥**
**स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः। दैर्घ्यमायाम आनाहः परिणाहो विशालता ॥**

प्रकाशः ॥ एवमुभयमुभयत्र साधु ॥ (४) ॥ १०८ ॥ "मेखलायां सारसनमुरस्त्रे च तनुत्रिणाम्" इति दन्त्यादौ रभसः ॥ (५) ॥ पञ्च स्त्रीकटिभूषणस्य ॥ 'स्त्री' इत्यविवाक्षितम् । पुंस्कटिभूषणेऽपि ॥ —स्त्रीकट्यां वस्त्रग्रन्थने—इति स्वामी ॥ " एका यष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिकाः । रसना षोडश ज्ञेयाः कलापः पञ्चविंशकः"—इति भेदास्त्विह न विवक्षितः ॥ अथेति ॥ पुंसां कट्यां चेत् काञ्ची ॥ "शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने" इति हैमः ॥ (१) ॥ एकं पुरुषकटिभूषणस्य ॥ पेति ॥ पादाङ्गदम् ॥ (१) ॥ "तुलाकोटिर्मानभेदेऽम्बुदे स्यान्नूपुरेऽपि च" इति हैमः ॥ (२) ॥ मञ्जीरः ॥ (३)॥ "मञ्जीरोऽस्त्री स नूपुरः" इति रभसः ॥ (४) ॥ चत्वारि नूपुरस्य ॥१०९॥ हंसेति ॥ हंसकः ॥ (१) ॥ पादकटकः ॥ ( २ ) ॥ द्वे पादकटकस्य ॥—षडपि पर्यायाः—इत्येके ॥ किमिति ॥ किंकिणी ॥ 'कङ्कणी' इति स्वामी ॥ "कङ्कणः स्यात्प्रातिसरः कंकणी क्षुद्रघण्टिका" इति भागुरिः ॥ ( १ ) ॥ क्षुद्रघण्टिका ॥ ( २ ) ॥ द्वे घुघुराख्यस्य ॥ त्वेति ॥ त्वगादि वस्त्रस्य योनिः कारणं वस्त्रयोनिः ॥ (१)॥ एकं वस्त्रकारणस्य ॥देति॥ वक्ष्यमाणानि तन्त्रकान्तानि दश त्रिलिङ्ग्याम् ॥११०॥ वेति ॥ वल्कस्य विकारः वाल्कम् ॥ ( १ ) ॥ क्षौमादि वस्त्रं वाल्कम् ॥ "क्षौमं वल्कलजांशुके । शणजेऽतसीजे" इति मेदिनी ॥ एकं क्षौमवस्त्रस्य ॥ फेति ॥ "फालं तु वसने फाल उत्प्लुतौ"इति हैमः ॥ ( १ ) ॥ कार्पासम् ॥ ( २ ) ॥ वादरम् ॥ ( ३ ) ॥ त्रीणि कार्पासवसनस्य ॥ काविति ॥ कृमिकोशोत्पन्नं कौशेयम् ॥ ( १ ) ॥ एकं पीताम्बरादेः ॥ रेति ॥ मृगशब्देन पशुमात्रं ग्राह्यम् ॥ तेन कम्बलाद्यपि॥ राङ्कवम् ॥ ( १ ) ॥ एकमूर्णादेः ॥ १११ ॥ अनेति ॥ अनाहतम् ॥ ( १ ) ॥ निर्गता प्रवाणी तन्तुवायशलाकाऽस्मात् निष्प्रवाणि ॥ ( २ ) ॥ तन्त्रकम् ॥ ( ३ ) ॥ नवाम्बरम् ॥ ( ४ ) ॥ चत्वारि छेदभोगक्षालनरहितवस्त्रस्य ॥ तदिति ॥ धौतयोः प्रक्षालितयोर्वस्त्रयोर्युगम् उद्गमनीयम् ॥ ( १ ) ॥ 'युगम्' इत्यविवक्षितम् ॥ एकं धौतवस्त्रस्य ॥ ११२ ॥ पेति ॥ "पत्त्रोर्णं धौतकौशेये पत्त्रोर्णः शोणकद्रुमे" इति हैमः ॥ ( १ ) ॥ धौतकौशेयम् ॥ ( २ ) ॥ द्वे धौतकौशेयस्य ॥—प्रक्षालितकौशेयमेव पत्त्रोर्णाख्यम्—इत्यन्ये ॥ बेति ॥ बहुमूल्यम् ॥ ( १ ) ॥ महाधनम् ॥ ( २ ) ॥ द्वे बहुमूल्यवस्तुनः ॥ क्षाविति ॥ "क्षौममट्टे दुकूलेऽस्त्री" इति मेदिनी ॥ क्षुमाया विकारः क्षौमम्—इति स्वामी ॥ पर्यायान्तराभिधानाय पुनरभिहितम् ॥ ( १ ) ॥ दुकूलम् ॥ ( २ ) ॥ द्वे पट्टवस्त्रस्य ॥ द्वे इति ॥ निवीतम्॥'निवृत्तम्' इति स्वामी ॥ ( १ ) ॥ प्रावृतम् ॥ ( २ ) ॥ द्वे प्रावृतवसनस्य ॥ ॥ ११३ ॥ स्त्रीति ॥ "दशा वर्त्यामवस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः" इति रभसः ॥ ( १ ) ॥ द्वयोः (स्त्रीपुंसयोः ) बहुत्वे ॥ वस्तयः ॥ "वस्तिर्द्वयोर्निरूहे नाभ्यधोभूम्नि दशासु च" इति मेदिनी ॥( २ ) ॥ द्वे वस्त्रान्तावयवानाम् ॥ दायिति ॥ दैर्घ्यम् ॥ ( १ ) ॥ आयामः ॥ ( २ ) ॥ आनाहः ॥ 'आरोहः' इति क्वचित्पाठः ॥ "आरोहस्त्ववरोहे स्याद्वरयोषित्कटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि वस्त्रादिदैर्घ्यस्य ॥ पेति ॥ परिणाहः ॥ ( १ ) ॥

---

[1] वाल्कक्षौमफालकार्पासवादरकौशेयराङ्कवाहनाहतनिष्प्रवाणितन्त्रकाणि इति स्वामी ॥ वाक्ष्यमाणानि क्षौमादिवर्जं वाल्कफालादीनि निष्प्रवाण्यन्तानि दश त्रिषु त्रिलिङ्गानि । चकारादेकादशं तन्त्रकम्, इति सुभूतिः—इति मुकुटः ॥

पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ । वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥ ११५ ॥
सुचेलकः पटोऽस्त्री ना वराशिः स्थूलशाटकः । निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ११६
अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥११७॥
संव्यानमुत्तरीयं च चोल,कूर्पासकौ स्त्रियाः । नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ११८
अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्। स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ११९
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि।प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा१२०

विशालता ॥ ( २ ) ॥ द्वे "पनहा" इति ख्यातस्य ॥ ११४ ॥ पेति ॥ पटच्चरम् ॥ ( १ ) ॥ जीर्णवस्त्रम्॥(२)॥द्वे जीर्णवस्त्रस्य ॥ सेति ॥ नक्तकः॥ क्वचित्"लक्तकः"इति पाठः॥(१)॥ कर्पटः ॥ (२)॥ द्वे प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्डस्य ॥ स्वामी तु--द्रवद्रव्यं येन पूयते तत्र रूढोऽयम्--इत्याह ॥ मुकुटस्तु—मलिनत्वादिदुष्टजीर्णवस्त्रखण्डस्येति ॥ वेति ॥ वस्त्रम् ॥ ( १ ) ॥आच्छादनम् ॥ ( २ ) ॥ वासः ॥ ( ३ ) ॥ "चेलो नीचेऽधमे त्रिषु । नपुंसकं तु वसने" इति मेदिनी ॥ ( ४ ) ॥ "वसनं छादने वस्त्रे" इति मेदिनी ॥ ( ५ ) ॥ "अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः" इति मेदिनी ॥ ( ६ ) ॥ षट् वस्त्रस्य ॥११५॥ स्विति ॥ सुचेलकः ॥(१) ॥ "पटोऽस्त्री कर्पटः शाटः सिचयप्रोतलक्तकाः" इति रभसः ॥ "पटश्चित्रपटे वस्त्रेऽस्त्री, प्रियालद्रुमे पुमान्" इति मेदिनी ॥—'अस्त्री' इति चिन्त्यम् । द्वयोरदर्शनात्—इति स्वाम्येव चिन्त्यः ॥ उक्तरभसमेदिन्योः "अस्त्री" इति दर्शनात् ॥ ( २ ) ॥ द्वे शोभनवस्त्रस्य ॥ नेति ॥ "वराशिर्ना" इति तालव्यान्ते शाब्दिकः ॥"वरासिः स्यात्खड्गवरे वरासिः स्थूलशाटके" इति दन्त्यान्तेषु रभसः ॥ ( १ ) ॥ स्थूलशाटकः ॥ ( २ ) ॥ 'वराशिर्ना' इत्यन्वयः ॥ द्वे स्थूलपटस्य ॥ चत्वार एकार्थाः—इत्येके ॥ नीति ॥ निचोलः॥"निचोलं तु नपुंसकम्" इति रभसः॥—स्त्रियाम् 'निचोली' इत्यपि—इति राजदेवः ॥ निचुलोऽपि ॥ "निचुलस्तु निचोले स्यादिज्जलाख्यमहीरुहे" इति मेदिनी ॥ ( १ ) ॥ प्रच्छदपटः ॥ ( २ ) ॥ द्वे डोलिकाद्यावरणपटस्य ॥—स्त्रीपिधानपटस्य "बुरका" इति ख्यातस्य—इत्यन्ये ॥—येन तूलशय्यादि प्रच्छाद्यते तस्य—इति स्वामी ॥ सेति ॥ "रल्लकः कम्बले स्मृतः । तथैव कम्बलमृगे" इति हैमः ॥ ( १ ) ॥ "कम्बलः क्रिमिसास्नयोः । नागप्रभेदे प्रावारे वैकक्ष्ये कम्बलं जले" इति हैमः ॥ ( २ ) ॥ द्वे कम्बलस्य ॥ ११६ ॥ अन्तेति ॥ अन्तरीयम् ॥(१)॥ उपसंव्यानम् ॥ ( २ ) ॥ परिधानम् ॥ ( ३ ) ॥ अधोदेहभागस्यांशुकम् अधोंऽशुकम् ॥ ( ४ ) ॥ चत्वारि परिधानवस्त्रस्य ॥ द्वाविति ॥ प्रावारः ॥ ( १ ) ॥ उत्तरासङ्गः ॥ ( २ ) "बृहती वसनान्तरे" इति मेदिनी ॥ बृहत्येव बृहतिका ॥ ( ३ ) ॥ ११७ ॥ "संव्यानं छदनेंऽशुके" इति विश्वमेदिन्यौ ॥(४)॥ उत्तरीयम् ॥ ( ५ ) ॥ पञ्चोपरिवस्त्रस्य ॥ चोलेति ॥ चोलः ॥ ( १ ) ॥ "कूर्पासस्त्वर्धचोलकः" इति हारावली ॥ ( १ ) ॥ द्वे आप्रपदीनकञ्चुकस्य, स्त्रीणां कञ्चुलिकाख्यस्य इति स्वामी ॥ नीति ॥ नीशारः ॥ ( १ ) ॥ एकं हिमानिलनिवारणार्थं कृतस्य प्रावरणस्य ॥ ११८ ॥ अर्धेति ॥ चण्डां कोपनां वरस्त्रियमतति । क्वुन् ( उ० । २ । ३२ ) चण्डातकम् ॥"अर्धोरुकं वरस्त्रीणां वासश्चण्डातकः स्मृतः" इति पुंस्काण्डे बोपालितात्पुँल्लिङ्गोऽपि ॥ ( १ ) ॥ एकं वरस्त्रीणामर्धोरुकस्यांशुकस्य "लँहगा" इति ख्यातस्य ॥ स्यादिति ॥ यदाप्रपदं प्राप्नोति तदाप्रपदीनम् ॥ ( १ ) ॥ एकं पादाग्रपर्यन्तलम्बमानवस्त्रस्य ॥ ११९ ॥ अस्त्रीति ॥ "वितानो यज्ञ उल्लोचे वितारे पुंनपुंसकम् । क्लीबं वृक्षाविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः" इति मेदिनी ॥ ( १ ) ॥ उल्लोचः ॥ ( २ ) ॥ द्वे "चँदवा" इति ख्यातस्य ॥ द्विति ॥ "दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे" इति मेदिनी ॥ ( १ ) ॥ आद्येन कुदरपटकुटीपटवासादिग्रहः ॥ एकं वस्त्रगेहस्य ॥ प्रतीति ॥ प्रतिसीरा ॥ ( १ ) ॥

१—'स्त्रियाः' इति विशेषेणोक्तम् । पुंसोऽप्येतावुपमानादिति सुभूतिः॥ द्वे स्त्रीपुंसकं चुलिकायाः—इति मुकुटः ॥

**परिकर्माङ्गसंस्करः स्यान्मार्ष्टिर्मार्जना मृजा । उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः १२१॥ स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम्।अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् १२३॥ कश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम् । रक्तसंकोचपिशुनं धीरलोहितचन्दनम्॥ १२४ ॥ राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः । लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् १२५॥ कालीयकं च कालानुसार्यं चाथ समार्थकम् । वंशकागुरुराजार्हलोहकृमिजजोङ्गकम् ॥१२६॥**

जवानिका ॥ "यमनिका" इति वा पाठः ॥ ( २ ) ॥ तिरस्करिणी ॥ 'तिरस्करणी' इति च ॥ ( ३ ) ॥ त्रीणि व्यवधानपटयाः "कनात" इति ख्यातायाः ॥ १२० ॥ पेति ॥ परिकर्म ॥ 'प्रतिकर्म' इति क्वचित्पाठः ॥ ( १ ) ॥ अङ्गसंस्कारः ॥ ( २ ) ॥ द्वे शरीरशोभाधायककर्मणः ॥ स्यादिति ॥ मार्ष्टिः ॥ ( १ ) ॥ "मार्जनो लोध्रशाखिनि । मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ" इति हैमः ॥ ( २ ) ॥ मृजा ॥ ( ३ ) ॥ त्रीणि प्रोञ्छनादिनाऽङ्गनिर्मलीकरणस्य ॥ उद्वेति ॥ उद्वर्तनम् ॥ ( १ ) ॥ "उत्सादनं समुल्लेखोद्वर्तनोद्वाहनेषु च" इति हैममेदिन्यौ ॥ ( २ ) ॥ द्वे उद्वर्तनद्रव्येणाङ्गनिर्मलीकरणस्य ॥ आप्लेति ॥ आप्लावः ॥ ( १ ) ॥ आप्लवः ॥ (२) ॥१२१॥ स्नानम् ॥ ( ३ ) ॥ त्रीणि स्नानस्य ॥ चेति ॥ "चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि" इति हैमः ॥ ( १ ) ॥ चार्चिक्यम् ॥ ( २ ) "स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि चन्दनादिना देहविलेपनस्य ॥ अथेति ॥ प्रबोधनम् ॥ ( १ ) ॥ अनुबोधः ॥ ( २ ) ॥ द्वे गतगन्धस्य प्रयत्नेनोद्बोधनस्य यथा कस्तूरिकादेर्मेद्यादिना ॥ पेति ॥ पत्रलेखा ॥ ( १ ) ॥ पत्राङ्गुलिः ॥ ( २ ) ॥ समे स्त्रियाम् ॥ द्वे स्तनकपोलादौ केसरादिना रचितस्य तिलकविशेषस्य ॥ १२२ ॥ तेति ॥ "तमालपत्रं तापिच्छे तिलके पत्रके" इति विश्वः ॥ "तमालस्तिलके खड्गे" इति विश्वात्तमालोऽपि ॥ ( १ ) ॥ "तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके ॥ तिलकं रुचके क्लोम्नि" इति हैमः ॥ ( २ ) ॥ "चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाटिषु" इति मेदिनी ॥ ( ३ ) ॥ "विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु" इति मेदिनी ॥ ( ४ ) ॥ द्वितीयं तिलकम्, तुरीयं विशेषकं च स्त्रियां न भवतः । किं तु पुंनपुंसकयोः ॥ चत्वारि ललाटकृतस्य तिलकस्य ॥ अथेति ॥ कुङ्कुमम् ॥ ( १ ) ॥ १२३ ॥ कश्मीरजन्म॥"काश्मीरं कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः" इति मेदिनी ॥ ( २ ) ॥ "अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च" इति मेदिनी ॥ ( ३ ) ॥ "वरो वृतौ । विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते ॥ वरं तु घुसृणे किंचिदिष्टे" इति हैमः ॥ "कश्मीरजं वह्निशिखं बाह्लीकं पीतनं वरम्" इति वाचस्पतिः ॥ ( ४ ) ॥ "बाल्हीकं बाल्हिकं धीरहिङ्गुनोर्नाऽश्मदेशयोः" इति त्रिकाण्डशेषः ॥ "काश्मीरं चारु वाल्हीकं संकोचं पिशुनं वरम्" इति हलायुधाच्चार्वपि ॥ ( ५ ) ॥ "पीतनं पीतदारुणि । कुङ्कुमे हरिताले च पुमानाम्रातके मतः" इति मेदिनी ॥ ( ६ ) ॥ "रक्तं नील्यादिरञ्जिते । कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे" इति हैमः ॥ ( ७ ) ॥ "संकोचो मीनभेदे च बन्धे क्लीबं तु कुङ्कुम" इति मेदिनी ॥ ( ८ ) ॥ "पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्" इति मेदिनी ॥ ( ९ ) ॥ "धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे" ॥ ( १० ) ॥ लोहितचन्दनम् ॥ लोहितमपि ॥ लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने" इति मेदिनी ॥ ( ११ ) ॥ एकादश "केसर" इति ख्यातस्य ॥१२४ ॥ रेति ॥ राक्षा ॥ ( १ ) ॥ लाक्षा ॥ ( २ ) ॥ जतु ॥ ( ३ ) "यावोऽलक्ते पाकभेदे" इति हैमः ॥ ( ४ ) ॥ अलक्तः ॥ ( ५ ) ॥ द्रुमामयः ॥ ( ६ ) ॥ षट् "महावर" इति ख्यातस्य ॥ लेति ॥ लवङ्गम् ॥ ( १ ) ॥ देवकुसुमम् ॥ ( २ ) ॥ श्रीसंज्ञम् ॥ ( ३ ) ॥ त्रीणि लवङ्गस्य ॥ अथेति ॥ जायकम् ॥ ( १ ) ॥ १२५ ॥ कालीयकम् ॥ क्वचित् 'कालेयम्' इति पाठः । "कालीयकं च कालेयं वर्णकं कान्तिदायकम्" इति व्याडिः ॥ ( २ ) ॥ "कालानुसार्यं शैलेये कालीये

कालागुर्वगुरु स्यात्तन्मङ्गल्या मल्लिगन्धि यत् । यक्षधूपः सर्जरसोऽरालसर्वरसावपि ॥१२७॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ । तुरुष्कः पिण्डकः सिल्हो यावनोऽप्यथ पायसः॥१२८॥
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ । मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥१२९ ॥
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् । तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥१३१॥

शिंशपाद्रुमे" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ त्रीणि सुगन्धद्रव्यभेदस्य [१] अथेति ॥ वंशकम् ॥ क्वचित् 'वंशिकम्' इति पाठः । "राजार्हं वंशिकं नतम् । चन्द्रमः परमदो वंशकं लोहनामकम्" इति वाचस्पतिः ॥ ( १ ) ॥ "कुस्तुम्बुरुकधान्याकमगुरु वा पुंसि लघुनाम च" इति वोपालितः ॥ "अगुरुस्त्वगरौ लघौ । शिंशिपायाम्" इति हैमः ॥ "अगुर्वगुरु राजार्हम्" इति हैमः ॥ ( २ ) ॥ "राजार्हं जोङ्गके क्लीब राजयोग्येऽभिधेयवत्" इति मेदिनी ॥ ( ३ ) ॥ "लोहोऽस्त्री शस्त्रके लोहं जोङ्गके सर्वतेजसि" इति मेदिनी ॥ ( ४ ) ॥ कृमिजम् ॥ ( ५ ) ॥ जोङ्गकम् ॥ ( ६ ) ॥ षडगुरुणः ॥ ( १२६ ) ॥ केति ॥ कालागुरुः ॥ ( १ ) ॥ "कालागुर्वगुरूच्यते" इति सुभूतिः ॥ ( २ ) ॥ द्वे कालागुरुणः ॥ स्यादिति ॥ यदगुरु मल्लिगन्धि तत् मङ्गल्या स्यात् ॥ "मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्पीमिसिशुक्लवचासु च । रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ एकं मल्लिगन्धिनोऽगुरुणः ॥ यक्षेति ॥ यक्षधूपः ॥ ( १ ) ॥ सर्जरसः ॥ ( २ ) ॥ अरालः "अरालः सर्ववक्रयोः" इति "रालः सर्वरसोऽरालो धूपको वह्निवल्लभः" इति च रभसः ॥ ( ३ ) ॥ सर्वरसः ॥ ( ४ ) ॥ १२७ ॥ "बहुरूपः स्मरे विष्णौ सरटे धूपके शिवे" इति हैमः ॥ ( ५ ) ॥ पञ्च रालस्य ॥ अथेति ॥ "वृकधूपस्तु सरलद्रवकृत्रिमधूपयोः" इति मेदिनी ॥ ( १ ) ॥ कृत्रिमधूपकः ॥ ( २ ) ॥ द्वे नानासुगन्धिकृतस्य दशाङ्गादिधूपस्य ॥ त्विति ॥ "तुरुष्कः सिल्हके म्लेच्छजातौ देशान्तरेऽपि च" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ पिण्डकः ॥ "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि ॥ ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः" इति मेदिनी ॥ ( २ ) ॥ सिल्हः ॥ ( ३ ) ॥ यावनः ॥ ( ४ ) ॥ चत्वारि "लोहवान" इति ख्यातस्य ॥ अथेति ॥ "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः" इति मेदिनी ॥ ( १ ) ॥ १२८ ॥ "श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने" इति मेदिनी ॥ ( २ ) ॥ "वृकः स्यात् कृत्रिमेऽनेकधूपेऽपि सरलद्रवे" इति रभसः ॥ वृकनामा धूपः वृकधूपः ॥ ( ३ ) ॥ श्रीवेष्टः ॥ ( ४ ) ॥ सरलद्रवः ॥ ( ५ ) ॥ पञ्च सरलद्रवस्य ॥ मृगेति ॥ मृगनाभिः ॥ ॥ ( १ ) ॥ मृगमदः ॥ ( २ ) ॥ कस्तूरी ॥ ( ३ ) ॥ "मृगनाभिर्मृगमदो मृगः कस्तूरिकापि च" इति माधवात् 'मृगः' अपि ॥ 'मदः' अपि ॥ "मदो रेतसि कस्तूर्याम्" इति मेदिनी ॥ "मुख्यराट्क्षत्रिये नाभिः पुंसि, प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे" इति रभसात् 'नाभिः' अपि ॥ त्रीणि कस्तूर्याः॥ अथेति ॥ कोलकम् ॥ रलयोरेकत्वात् 'कोरकम्' अपि ॥ "कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः" इति मेदिनी ॥ (१) ॥ १२९ ॥ कक्कोलकम् ॥ (२) ॥ कोशफलम् ॥ (३) ॥ त्रीणि फलकर्पूरस्य "गहुला" इति ख्यातस्य ॥ अथेति ॥ कर्पूरम् ॥ ( १ ) ॥ "घनः सान्द्रे दृढे दार्ढ्ये" इति विश्वः ॥ घनस्य सार इव ॥ "घनसारस्तु कर्पूरे दक्षिणावर्तपारदे" इति हैमः ॥ ( २ ) ॥ चन्द्रसंज्ञः ॥ ( ३ ) ॥ सिताभ्रः ॥ 'सिताभः' इति वा पाठः ॥ ( ४ ) ॥ हिमवालुका ॥ ( ५ ) ॥ पञ्च कर्पूरस्य ॥ १३० ॥ गन्धेति ॥ गन्धसारः ॥(१) ॥ मलयजः॥( २ )॥ भद्रश्रीः॥ ( ३ ) ॥ चन्दनः ॥ ( ४ ) ॥ चत्वारि चन्दनस्य ॥

१—"नागरुचितस्तिलकः" इति दमयन्तीश्लेषः ॥

तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् । कुचन्दनं चाथ जातीकोशजातीफले समे ॥१३२॥
कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः । गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु । संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः।प्रभ्रष्टकं शिखालम्बि पुरो न्यस्तं ललामकम्१३५
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत्। यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ१३६
रचना स्यात्परिस्पन्द आभोगः परिपूर्णता । उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥१३७॥

तैलेति ॥"तैलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च" इति मेदिनी ॥(१)॥ गोशीर्षम् ॥(१)॥ "हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि" इति मेदिनी॥(१)॥ चन्दनविशेषाणां पृथक पृथक्॥१३१॥ तिलेति ॥ तिलपर्णी ॥ ( १ ) ॥ "पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने" इति मेदिनी ॥ (२)॥"रञ्जनो रागजनने रञ्जनं रक्तचन्दने" इति मेदिनी ॥ ( ३ ) ॥ रक्तचन्दनम् ॥ (४) ॥ "कुचन्दनं च पत्राङ्गे द्रुभेदे रक्तचन्दने" इति विश्वमेदिन्यौ ॥ ( ५ ) ॥ पञ्च रक्तचन्दनस्य ॥ अथेति ॥ जातीकोशः ॥ जातिरपि ॥ "जातिर्जातीफलेऽपि च" इति रभसः ॥ "कोषोऽप्रकृते पेश्यां पात्रे जातिकोषे" इति रभसः ॥ ( १ ) ॥ जातीफलम् ॥ 'फलम्' अपि ॥ "फलं लाभे जातिकोषे बाणाग्रे फलकेऽपि च" इति रुद्रः ॥(२)॥ द्वे "जाईफल" इति ख्यातस्य ॥ १३२ ॥ केति ॥ कर्पूरादिभिः समभागैः ॥ यक्षकर्दमः ॥ ( १ ) ॥ "कर्पूरागुरुकस्तूरीकक्कोललघुतृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यते" इति व्याडिः ॥ "कुङ्कुमागरु-कस्तूरीकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्तं नामतो यक्षकर्दमः" इति धन्वन्तरिः ॥ एकं कस्तूर्यादिसम-भागस्य ॥ गेति ॥ गात्रानुलेपनी ॥ ( १ ) ॥ "वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशा-दीपेषु योषिति" इति मेदिनी ॥ ( २ ) ॥ वर्णकम् ॥ ( ३ ) ॥ विलेपनम् ॥ ( ४ ) ॥ चत्वारि गात्रानु-लेपयोग्यस्य पिष्टघृष्टसुगन्धिद्रव्यस्य ॥ द्वौ द्वौ भिन्नार्थौ--इत्येके ॥ "गात्रानुलेपनी वर्तिर्विगन्ध्यथ विले-पनम् । वर्णकं चाथ विच्छित्तिः[1] स्त्री कषायोऽङ्गरागके" इति रभसात् ॥ आद्यद्वयमुक्तार्थमेत्र । वर्णकादिद्वयं घृष्टचन्दनादिलेपमात्रस्य ॥ १३३ ॥ चित्रति ॥ "चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु" इति मेदिनी ॥ ( १ ) ॥ वासे सुगन्धीकरणे योगा उपायाः वासयोगाः ॥ ( २ ) ॥ द्वे पटवासादिक्षोदस्य ॥ भेति ॥ "भावितं वासिते प्राप्ते" इति हैमः ॥ ( १ ) ॥ "वासितं भाविते रुते" इति मेदिनी ॥ ( २ ) ॥ द्वे द्रव्यान्तरभावितस्य ॥ संस्केति ॥ मङ्गल्यधूपादिभिर्वस्त्रादीनां ताम्बूलादीनां च यः संस्कारः तत् अधिवा-सनम् ॥ ( १ ) ॥ एकं वस्त्रादिसंस्कारस्य । ( १३४ ) ॥ मेति ॥ मूर्ध्नि शिरसि ॥ "माल्यं कुसुमतत्स्रजोः" इति मेदिनी ॥ ( १ ) ॥ "माला तु पङ्क्तौ पुष्पादिदामनि" इति हैमः ॥ ( २ ) ॥ स्रक् ॥ ( ३ ) ॥ त्रीणि मालायाः ॥ केशेति ॥ गर्भकः ॥ ( १ ) ॥ एकं केशमध्यस्थाया मालायाः ॥ प्रेति ॥ शिखातो लम्बमानम् ॥ प्रभ्रष्टकम् ॥ (१) ॥ एकं शिखातो लम्बमानाया मालायाः॥ प्विति ॥ तदेव माल्यं पुरोभागे न्यस्तं ललाटपर्यन्तम् ॥ ललामकम् ॥ ( १ ) ॥ एकं पुरोलम्बमानमा-लायाः ॥ १३५ ॥ प्रेति ॥ माल्यमेव कण्ठादूर्ध्वं लम्बमानम् ॥ प्रालम्बम् ॥ ( १ ) ॥ ऋजु लम्बितुं शील-मस्य ॥ एकमृजुलम्बिमाल्यस्य ॥ वैकेति ॥ वैकक्षम् ॥ (१) ॥ यदुरासि उपवीतवत्तिर्यक् क्षिप्तं तत् ॥ एक-मुरसि क्षिप्तमाल्यस्य ॥ शीति ॥ शिखाक्षितं माल्यम् ॥ आपीडः ॥ ( १ ) ॥ शेखरः ॥ ( २ ) ॥ द्वे शिखास्थमाल्यस्य ॥ १३६ ॥ रेति ॥ रचना ॥ ( १ ) ॥ परिस्पन्दः॥"परिस्यन्दः" इति वा पाठः ॥ ॥ ( २ ) ॥ द्वे शिल्पादिरचनायाः ॥ आभोग इति ॥ "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ परिपूर्णता ॥ ( २) ॥ द्वे अखिलोपचारपरिपूर्णतायाः ॥ उपेति ॥ उपधानम् ॥ ( १ ) ॥ उपबर्हः ॥ ( २ ) ॥ द्वे शिरोनिधानस्य ॥ शेति ॥ "शय्या स्याच्छयनीयेऽपि गुम्फनेऽपि

---

[1] —विच्छित्त्यादित्रीणि अङ्गरागस्य नामानि ॥

शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः । गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥१३८॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मकुरादर्शौ व्यजनं तालवृन्तकम् ॥

इति मनुष्यवर्गः ॥ ६ ॥

---

संततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥१॥
विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् । राजवीजी राजवंश्यो वीज्यस्तु कुलसंभवः ॥२॥

च योषिति" इति मेदिनी ॥ ( १ ) ॥ शयनीयम् ( २ ) ॥ १३७ ॥ "शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" इति मेदिनी ॥ ( ३ )॥ त्रीणि तूलिकादेः ॥ मुकुटस्तु—शय्यामात्रस्य—इति व्याख्यत् ॥ मेति ॥ मञ्चः ॥ ( १ ) ॥ पर्यङ्कः ॥ ( २ ) ॥ "पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च" इति मेदिनी ॥ ( ३ ) ॥ खट्वा ॥ ( ४ ) ॥ चत्वारि पल्यङ्कस्य ॥ गयिति ॥ गेन्दुकः॥ ( १ ) ॥ कन्दुकः ॥ ( २ ) ॥ 'वीटा' इत्यपि भारते ॥ द्वे "गेंद" इति ख्यातस्य ॥—"गालमसूरिया" इति ख्यातस्य—इत्यन्ये ॥ दीति ॥ दीपः ॥ ( १ ) ॥ प्रदीपः ॥ ( २ ) ॥ द्वे दीपस्य ॥ पीति॥" विष्टरः पीठमस्त्रियाम्" इति त्रिकाण्डशेषः ॥ ( १ ) ॥ आसनम् ॥ ( २ ) ॥ द्वे आसनस्य ॥ १३८ ॥ सेति ॥ समुद्गकः ॥ ( १ ) ॥ संपुटकः ॥ ( २ ) ॥ द्वे संपुटस्य ॥ प्रेति ॥ प्रतिग्राहः ॥ "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे" इति मेदिनी ॥ ( १ ) ॥ पतद्ग्रहः ॥ ( २) ॥ द्वे "पीकदानी" इति ख्यातायाः ॥ प्रसेति ॥ "प्रसाधनी तु कङ्कत्यां सिद्धौ, वेशे प्रसाधनम्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "कङ्कती तु प्रसाधनी" इति स्त्रीकाण्डेऽमरमाला ॥ "कङ्कतं तु प्रसाधनम्" इति क्लीबकाण्डे च ॥ ( २ ) ॥ द्वे "कङ्ही" इति ख्यातायाः ॥ पीति ॥ पिष्टातः ॥ ( १ ) ॥ पटवासकः ॥ ( २ ) ॥ द्वे "वुका" इति ख्यातस्य ॥ १३९ ॥ देति ॥"आदर्शो दर्पणः प्रोक्तः" इत्यमरमाला ॥ (१) ॥ "मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे । कुलालदण्डे" इति मेदिनी ॥ "मङ्कुरः"—इत्यन्ये ॥ ( २ ) ॥ "आदर्शो दर्पणे टीकाप्रातिपुस्तकयोरपि" इति मेदिनी ॥(३)॥त्रीणि दर्पणस्य ॥ व्येति॥व्यजनम् ॥ ( १ ) ॥ तालवृन्तकम् ॥ (२) ॥ द्वे व्यजनस्य ॥

इति मनुष्यवर्गविवरणम् ।

---

सेमिति ॥ "संततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रपौत्राणाम्" इति मेदिनी ॥ ( १ ) ॥ "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु" इति मेदिनी ॥ ( २ ) ॥ "जननं वंशजन्मनोः" इति मेदिनी ॥ ( ३ ) ॥ "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबं कण्टकार्योषधौ कुली" इति मेदिनी ॥ ( ४ ) ॥ "भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे । कुलेऽपि च पुमान्" इति मेदिनी॥(५)॥अन्वयः ॥(६)॥"वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च" इति विश्वमेदिन्यौ॥(७)॥अन्ववायः॥(८)॥ "संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे" इति मेदिनी॥(९)॥नव कुलस्य॥ "वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने"इति मेदिनी ॥ (१) ॥ एकं ब्राह्मणादीनाम्॥१॥वीति ॥ विप्रश्च क्षत्रियश्च विट् च शूद्रश्च चत्वार एव वर्णाः इति चातुर्वर्ण्यम् ॥(१)॥ एकं विप्रादिवर्णचतुष्टयस्य ॥ रेति ॥ राजवीजी ॥ ( १ ) ॥ राजवंश्यः ॥ ( २ ) ॥ द्वे राजकुलस्य ॥ वीति ॥

---

१--अनिकारककारा "कङ्कतिकोपान्तेनाकेशम्" इति दमयन्तीश्लेषात् ॥ २—"किं तद्दर्पणमस्ति यत्र सकलम्" इति धर्मसेनः ॥ अतः क्लीबमपि—इति मुकुटः ॥

**माहाकुलकुलीनार्यसभ्यसज्जनसाधवः । ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥**
**आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः । विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः ॥४॥**
**विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः। धीरो मनीषी ज्ञः प्रज्ञः संख्यावान् पण्डितः कविः**
**धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः । दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ ॥६॥**
**उपाध्यायोऽध्यापकोऽथ स निषेकादिकृद्गुरुः।मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती॥७॥**

वीज्यः॥(१)॥कुलसम्भवः॥(२)॥**द्वे कुलसम्भवस्य**॥२॥**मेति**॥माहाकुलः॥(महाकुलः) ह्रस्वादिरपि॥ ( १ )॥ कुलीनः ॥'कौलेयक' इति च ॥"कौलेयकः सारमेये कुलीने" इति मेदिनी ॥ ( २) ॥ आर्यः ॥(३)॥ सभ्यः ॥ (४) ॥ "**सज्जनं** तु भवेत्क्लीवमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात्कल्पनायां च योषिति"इति मेदिनी॥ ॥ (५) ॥ **साधु**र्वार्धुषिके चारौ सज्जने चाभिधेयवत्" इति मेदिनी ॥( ६ ) ॥ **षट् कुलीनस्य** ॥ **ब्रेति** ॥ ब्रह्मचारी ॥ ( १ ) ॥ गृही ॥ ( १ ) ॥ वानप्रस्थः ॥ ( १ ) ॥ भिक्षुः ॥ ( १ ) ॥ चतुरवयवसमुदाये ॥ ३ ॥ "**आश्रमो** ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ **एकैकं ब्रह्मचर्यादीनाम्** ॥ **द्वीति** ॥ "मातुरग्रेऽधि (वि) जननं द्वितीयं मौञ्जिबन्धनात्" (मनुः २।१६९ ) ॥ "**द्विजाति**र्विप्राण्डजयोश्च पुँल्लिङ्गः" इति मेदिनी ॥(१)॥ "**अग्रजन्मा** द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः" इति विश्वः ॥ (२)॥ भूदेवः ॥ ( ३ ) ॥ "**वडवा** कुम्भदास्यश्वा स्त्रीविशेषा द्विजन्मनाम्" इति रभसः ॥ " वडवाऽश्वाकुम्भदास्योः स्त्रीविशेषे द्विजस्त्रियाम्" इति विश्वः ॥ वडवायां जातः वाडवः ॥ "**वाडवं** करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले" इति मेदिनी ॥( ४ ) ॥ विप्रः ॥ ( ५ ) ॥ ब्राह्मणः ॥ ( ६ ) ॥ **षट् ब्राह्मणस्य**॥**असाविति**॥ असौ विप्रः यागादिभिर्युतः॥"इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते" ॥ (१) ॥ **एकं षट्कर्मणो विप्रस्य** ॥४ ॥ **वीति** ॥ "**विद्वान्** ज्ञानिनि धीरे च विद्वानध्यात्मवेदके"इति धरणिः।"विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्"इति विश्वः॥(१)॥विपश्चित्॥(२)॥ दोषज्ञः ॥ ( ३ )॥ "**सन्**साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति मेदिनी ॥ (४ )॥ सुधीः ॥ (५ )॥ कोविदः ॥ ( ६ ) ॥ "**बुधः** सौम्ये च पण्डिते" इति मेदिनी ॥ (७)॥ "**धीरो** धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायाम्" ॥(८) ॥ मनीषी ॥ ( ९ ) ॥ "**ज्ञो** ब्रह्मबुधविद्वत्सु" इति मेदिनी ॥ ( १० ) ॥ "**प्रज्ञ**स्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति" इति मेदिनी॥ '**प्राज्ञः**' इति च ॥ ( ११ ) ॥ संख्यावान् ॥ ( १२ ) ॥ "**पण्डः** षण्डे धियि स्त्री स्यात्" इति मेदिनी ॥ पण्डा जाताऽस्य पण्डितः ॥ ( १३ ) ॥ "**कवि**र्वाल्मीकिकाव्ययोः । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति" इति मेदिनी ॥ ( १४ ) ॥ ५॥"**धीमान्** पण्डिते च बृहस्पतौ" इति मेदिनी ॥ ( १५ ) ॥ सूरिः ॥ केचित्तु-॥ "**सूरो**ऽर्कहलयोः पुंसि"[1] ॥ सूरः सूर्योऽस्त्युपास्यतयाऽस्य इति ( सूरी ) नान्तम्--इत्याहुः॥ "दूरदृक् कोविदः **सूरी**" इति रभसः ॥ ( १६ ) ॥ "**कृती** स्यात्पण्डिते योग्ये" इति हैमः ॥ ( १७ ) ॥ "**कृष्टिः** स्यादाकर्षे स्त्री बुधे पुमान्" इति मेदिनी ॥ रन्तिदेवोऽपि----"आकर्षणे स्त्रियां कृष्टिर्भवेन्ना तु विपश्चिति" इति ॥ ( १८ ) ॥ लब्धवर्णः ॥ ( १९ ) ॥ विचक्षणः॥ ( २० )॥ दूरदर्शी ॥ ( २१ ) ॥ दीर्घदर्शी ॥ ( २२ ) ॥ **द्वाविंशतिः विदुषः** ॥ **श्रोत्रीति** ॥ श्रोत्रियः ॥ ( १ )॥ छान्दसः ॥ ( २ )॥ **द्वे संपूर्णशाखाध्यायिनः** ॥ ६ ॥ **उपेति** ॥ उपाध्यायः ॥ ( १ ) ॥ अध्यापकः ॥ ( २ ) ॥ "एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" ( मनुः २।१४१ ) ॥ **द्वे अध्यापकस्य** ॥ **अथेति** ॥ सोऽध्यापकः ॥ निषेको गर्भाधानमादिर्यस्य सीमन्तोन्नयनादेस्तस्य कर्ता ॥ "**गुरु**स्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि" इति मेदिनी ॥ मनुश्च ( २।१४२ ) "निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते" ॥ ( १ )॥ **एकं संस्कारादिकर्तुर्गुरोः** ॥ **मेति** ॥ मन्त्रव्याख्याकृत् ॥ ( १ ) ॥ मनुः---

1--मेदिन्यां 'सीर' शब्दघटितत्वेनास्य प्रमादकृतत्वम् ॥तस्मात् 'सूरश्चारुभट्टे सूर्ये'इति विश्वस्योपन्यासः कर्तुं योग्यः ॥

यष्टा च यजमानश्च स सोमवति दीक्षितः । इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥८॥
स गीर्पतीष्ट्या स्थपतिः सोमपीती तु सोमपः । सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥९॥
अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः । लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥१०॥
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः।एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः॥११॥
सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् । पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥१२॥
उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वाऽऽरम्भ उपक्रमः । यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः१३॥
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥१४॥

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते" ( २।१४० ) ॥ (२)॥ द्वे आचार्यस्य॥ येति ॥ योऽध्वरे यज्ञे आदेष्टा (आदिशत्यृत्विजो यागे स्वेष्टसंपादनाय प्रेरयति) ॥ व्रती॥(१)॥ ॥७॥यष्टा ॥ ( २ ) ॥ यजमानः ॥ ( ३ ) ॥ त्रीणि यजमानस्य ॥ स इति ॥ स व्रती सोमपानवति यागे आदेष्टा सन् दीक्षितः ॥ ( १ ) ॥ एकं सोमयाजिनः ॥ ईति ॥ इज्याशीलः ॥ ( १ ) ॥ पुनः पुनः भृशं वा यजते यायजूकः ॥ ( २ ) ॥ द्वे यजनशीलस्य ॥ येति ॥ यज्वा ॥ ( १ ) ॥ एकं विधिना शास्त्रमर्यादयेष्टवतः ॥ ८ ॥ स इति ॥ स यज्वा बृहस्पतिसवननामकयागेनेष्टवान् सन् ॥"स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु " इति मेदिनी ॥ ( १ ) ॥ एकं बृहस्पतियाजिनः ॥ सविति ॥ सोमपीती ॥ स्वामी तु--"सोमपीथः"--इत्याह ॥(१) ॥ सोमपः ॥ 'सोमपाः' इति च ॥ ( २ ) ॥ सर्वदाऽयम् ॥ दीक्षितस्तु तत्कालम् ॥ द्वे सोमपायिनः ॥ सेति॥ सर्वस्वं दक्षिणा यत्र विश्वजिदादौ स येनेष्टः कृतः सर्ववेदाः ॥ ( १ ) ॥ एकं विश्वजिदादियाजिनः ॥९॥ अन्विति ॥ "अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे " इति विश्वः ॥ ( १ ) ॥ शिक्षाद्यङ्गषट्कोपेते प्रवचने वेदे अधीती कृताभ्यासः ॥ एकं कृतसाङ्गवेदाध्ययनस्य ॥ ग्विति ॥ गुरोः सकाशाल्लब्धा प्राप्ताऽनुज्ञा आज्ञा येन स समावृत्तः ॥ ( १ ) ॥ गुरुकुलवासान्निवृत्तस्यैकम् ॥ स्विति ॥ सुत्वा ॥ ( १ ) ॥ अभिषवेऽवभृथस्नाने कृते सति॥ एकं कृतावभृथस्य ॥ १० ॥ छेति ॥ छात्रः ॥ ( १ ) ॥ "अन्तेवासी भवेच्छिष्ये चण्डाले प्रान्तगेऽपि च " इति विश्वः ॥ ( २ ) ॥ शिष्यः ॥ ( ३ ) ॥ त्रीणि छात्रस्य॥ शायिति॥ शैक्षाः ॥ ( १ ) ॥ प्राथमकल्पिकाः ॥ ( २ ) ॥ द्वे प्रथमारब्धवेदानाम् ॥ एकेति ब्रह्म वेदस्तदध्ययनव्रतमप्युपचाराद्ब्रह्म ॥ एकस्मिन् ब्रह्मणि व्रताचरणं येषां ते॥ मिथः परस्परम्॥ सब्रह्मचारिणः॥ ( १ ) ॥ एकं समानशाखाध्येतॄणाम् ॥ ११ ॥ सेति ॥ सतीर्थ्याः ॥ ( १ )॥ एकगुरवः ॥ ( २ ) ॥ द्वे एकगुरूणां छात्राणाम् ॥ चीति ॥ योऽग्निं चितवान् अग्निमचैषीत् ॥ अग्निचित् ॥ ( १ ) ॥ एकमग्न्युपासकस्य ॥ पेति ॥ परम्पराया आगतः ॥ पारम्पर्यश्चासावुपदेशश्च तस्मिन् ॥ ऐतिह्यम् ॥ ( १ ) ॥ इत्येवं ह किल इतिह ॥ ( २ ) ॥ द्वे परम्परोपदेशस्य ॥ १२ ॥ उपेति ॥ यदाद्यं ज्ञानम् ॥ उपज्ञा॥(१)॥ यथोपदेशं विना श्लोकनिर्माणे वाल्मीकेर्ज्ञानम्॥ एकमाद्यज्ञानस्य ॥ ज्ञेति ॥ "उपक्रमस्तूपधायां ज्ञात्वाऽऽरम्भे च विक्रमे । चिकित्सायाम् " इति मेदिनी ॥ ( १ ) ॥ यथा माने नन्दस्य प्रथमारम्भ उपक्रमः सः ॥ एकं ज्ञात्वा प्रथमारम्भस्य ॥ येति ॥ 'यज्ञः स्यादात्मनि मखे नारायणहुताशयोः " इति हैमः ॥ ( १ ) ॥ " सवो यज्ञे च संधाने " इति मेदिनी ॥ ( २ ) ॥ " अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान् " इति मेदिनी ॥ ( ३ ) ॥ यागः ॥ ( ४ ) ॥ सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते सप्ततन्तुः ॥ ( ५ ) ॥ मखः ( ६ ) ॥ "क्रतुर्यज्ञे मुनौ पुंसि " इति मेदिनी ॥ ( ७ ) ॥ सप्त यज्ञस्य ॥ १३ ॥ पेति ॥ " पाठश्च पठने ख्यातो विद्धपर्ण्यां तु योषिति " इति मेदिनी ॥ ( १ )॥ होमः ॥ (१)॥ अतिथीनामदृष्टपूर्वाणां गृहमागतानां सपर्या ॥ ( १ ) ॥ तर्पणम् ॥ ( १ ) ॥ "बलिर्दैत्योपहारयोः । करे चामरदण्डे च गृहदारुशरांशयोः । त्वक्संकोचे गन्धके च" इति हैमः ॥ ( १ ) ॥ महान्तश्च ते यज्ञाश्च ॥ ब्रह्मयज्ञ आदिर्येषां तानि ब्रह्मयज्ञादीनि नामानि येषां ते॥ मनुः--"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् "

समज्या परिषद्गोष्ठी सभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥१५॥
प्राग्वंशः प्राग्हविर्गेहात्सदस्या विधिदर्शिनः।सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते१६
अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् । आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते १७
वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे । चषालो यूपकटकः कुम्बा सुगहना वृतिः १८॥
यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः । दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः । समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥२०॥
यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते। तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया२१
ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने।गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान्२२

(३। ७० ) इति ॥ पाठादीनामेकैकम् ॥ १४ ॥ सेति ॥ समज्या ॥ ( १ ) ॥ परिषत् ॥ " पर्षद् " च ॥ ( २ ) ॥ " गोष्ठी सभासंलापयोः स्त्रियाम् " इति मेदिनी ॥ ( ३ ) " सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि " इति मेदिनी ॥ ( ४ ) ॥ " समितिः संपराये स्यात्सभायां संगमेऽपि च " इति मेदिनी ॥ ( ५ ) ॥ संसत् ॥ ( ६ ) ॥ आस्थानी ॥ ( ७ ) ॥ आस्थानम् ॥ ( ८ ) ॥ सदः ॥ ( ९ ) ॥ नव सभायाः ॥ १५ ॥ प्रेति ॥ प्राङ् वंशो गोत्रं स्थूणा वाऽत्र प्राग्वंशः ॥ ( १ ) ॥ हविःशालायाः पूर्वभागे यजमानादीनां स्थित्यर्थं गेहे प्राग्वंशशब्दो वर्तते ॥ एकं यजमानादिगेहस्य ॥ सेति ॥ सदस्याः ॥ ( १) विधिं द्रष्टुं शीलं येषां ते न्यूनाधिकविचारका ऋत्विग्विशेषाः ॥ एकमृत्विग्विशेषाणाम् ॥ सेति ॥ सभासदः ॥ ( १ ) ॥ सभास्ताराः॥(२)॥ सभ्याः॥(३)सामाजिकाः॥( ४)॥चत्वारि सभ्यानाम्॥१६॥अध्वेति ॥ अध्वर्युः ॥(१)॥ उद्गाता॥(१)॥होता॥(१)॥ यजुश्च सामानि च ऋचश्च यजुःसामर्चो विदन्ति ॥ यजुर्विदध्वर्युः । सामविदुद्गाता । ऋग्विद् होता ॥ ऋत्विग्विशेषाणां क्रमादेकैकम् ॥ आग्नीति ॥ आग्नीध्र आद्यो येषां ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंस्यच्छावाकनेष्ट्रादीनां षोडशानाम् ॥ ( १ ) ॥ धनैर्हेतुभिः वरणे करणैर्वा व्रियन्ते । ऋत्विजः ॥ ॥ ( २ ) ॥ "याजकस्तु गजे राज्ञो याज्ञिकेऽपि" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि याजकस्य ॥ "वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते " इति कात्यः—इति मते द्वे ॥ १७ ॥ वेदिरिति ॥ " वेदिः स्यात्पण्डिते पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात् परिष्कृतभूतले" इति मेदिनी ॥ (१) ॥ एकं संस्कृताया भूम्याः ॥ सेति ॥ स्थण्डिलम् ॥ ( १ ) ॥ "चत्वरं स्थण्डिलेऽङ्गणे" इति मेदिनी ॥ (२) ॥ यागार्थं संस्कृतभूमेर्द्वे॥—यज्ञार्थं परिष्कृताया अनिम्नोन्नताया यज्ञभूमेः–इति मुकुटः ॥ चेति ॥ चषालः ॥ ( १ ) ॥ यूपस्याग्रे कृतः कटकाकारः यूपकटकः ॥ ( २ ) ॥ द्वे यूपकटकस्य ॥ किति ॥ कुम्बा ॥ ( १ ) ॥ सुगहना निविडा वृत्तिर्वेष्टनम् ॥ एकं निबिडवेष्टनस्य ॥१८ ॥ यित्रति ॥ यूपाग्रम् ॥ ( १ ) ॥ तर्म ॥ २ ) ॥ द्वे यूपाग्रस्य ॥ नीति ॥ निर्मन्थ्यं च तद्दारु च तस्मिन् ॥ "अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि" इति मेदिनी ॥ ( १ ) ॥ एकं निर्मन्थ्यदारुणः॥ देति ॥ दक्षिणाग्निः ( १ ) ॥ गार्हपत्यः ॥ ( १ ) ॥ आहवनीयः ॥ ( १ ) ॥ क्वचित्तु त्रयाणां द्वन्द्वः पठ्यते ॥ क्रमेणाग्नित्रयस्यैकैकम् ॥ १९ ॥ अग्नीति ॥ इदमग्नित्रयम् ॥ "त्रेता युगेऽग्नित्रये च" इति हैमः ॥ ( १ ) ॥ एकमग्नित्रयस्य ॥ प्रेति ॥ "प्रणीत उपसंपन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ च" इति हेमचन्द्रः ॥ ( १ ) ॥ एकं संस्कृतस्याग्नेः ॥ सेति ॥ समूह्यः ॥ ( १ ) ॥ परिचाय्यः ॥ ( २ ) ॥ उपचाय्यः ॥ ( ३ ) ॥ प्रयोगोऽस्ति येषां ते अग्नौ प्रयोक्तव्याः ॥ त्रीणि अग्निनामानीत्यर्थः ॥२०॥ य इति ॥ दक्षिणाग्नित्वेन संस्क्रियते ॥ आनाय्यः ॥ यस्तु भ्राष्ट्रवैश्यकुलयोनिः स 'आनेयः' ॥ एकं गार्हपत्यादुद्धृतदक्षिणाग्नेः ॥ अथेति ॥ अग्नायी ॥(१)॥ स्वाहा ॥ ( २ ) ॥ हुतभुक्प्रिया ॥ ( ३ ) ॥ त्रीणि अग्नेः प्रियायाः ॥ २१ ॥ ऋगिति ॥ सामिधेनी ॥ ( १ ) ॥ धाय्या ॥ ( २ )॥ अग्नेः समिन्धने ( समुद्दीपने ) या ऋक् तत्र द्वे ॥ गेति ॥ "गायत्री त्रिपदादेवीछन्दोभित्खदिरेषु च" इति मेदिनी ॥ ( १ ) ॥ षडक्षरपदा गायत्री ॥ प्रमुखपदेन उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्करीत्याद्येकाक्षरवृद्ध्या बोध्यम् ॥ छन्दः ॥ ( १ ) ॥ एकं

**आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः। धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा॥२३॥**
**पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम्। हव्यकव्ये दैवपैत्रे अन्नेपात्रं स्रुवादिकम् ॥ २४ ॥**
**ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः। उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः॥२५॥**
**परम्पराकं शमनं प्रोक्षणं च वधार्थकम्। वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥**
**सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम्। दीक्षान्तोऽवभृथो यज्ञस्तत्कर्मार्हं तु यज्ञियम् ॥२७**
**त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि । अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥**

गायत्त्र्यादेः ॥ **हेति** ॥ हव्यस्य पाकः ॥ "अनवस्रावितान्तरूष्मपाक ओदनश्चरुः" इति याज्ञिकाः॥ मीमांसकैरपि त्रिवृच्चर्वधिकरणे अन्नपरत्वं चरुशब्दस्याभ्युपगतम्॥विश्वप्रकाशे तु"चरुर्भाण्डे च हव्यान्ने" इत्यनेकार्थतोक्ता॥ अथ "चरुः पुमान् हव्यान्नभाण्डयोः" इति मेदिनी च॥स्वामी तु—पक्वं होतव्यं चरुः ॥ चर्यते रध्यते हव्यस्य पाकोऽत्र इति स्थाल्यपि चरुः—इत्याह॥**एकं हव्यपाकस्य** ॥२२ ॥ **आमीति** ॥ आमिक्षा॥(१)॥ शृते क्वथिते तप्ते च पयसि दध्नो योजनात् या स्यात् ॥ **एकं दधियुक्तपक्वक्षीरस्य** ॥ **धेति** ॥ धवित्रम् ॥ 'धुवित्रम्' ॥ इत्येके ॥ ( १ ) ॥ **एकमग्नेः संधुक्षणाय मृगत्वचा रचितस्य व्यजनस्य** ॥ २३ ॥ **प्रेति** ॥ पृषदाज्यम् ॥ ( १ ) ॥ दध्ना सहिते घृते ॥ **एकं दधिमिश्रितघृतस्य** ॥ **पेति** ॥ परमान्नम् ॥ ॥ ( १ ) ॥ "पायसः श्रीवासे पायसं परमान्नके" इति हैमः ॥ "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः" इति मेदिनी ॥ ( २ ) ॥ **द्वे पायसस्य** ॥ **हेति** ॥ हव्यम् ॥ ( १ ) ॥ कव्यम् ॥(१)॥ देवानामिदम् । पितॄणामिदम् । 'पित्र्ये' इति पाठे पितरो देवता यस्य ॥ देवान्नं हव्यम् ॥ पित्रन्नं कव्यम् । **देवाद्यन्नस्यैकैकम्** ॥ **पेति** ॥"पात्रं[३] तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे च" इति मेदिनी ॥ ( १ ) ॥ आदिना चमसोलूखलमुसलस्फ्यादि ॥ **एकं स्रुवादेः** ॥ २४ ॥ **ध्रुवेति** ॥ "ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे । वस्रुयोगभिदोः पुंसि, क्लीबं निश्चिततर्कयोः । स्त्री मूर्वाल्योः शालपर्ण्यां गीतिस्रुग्भेदयोस्त्रिषु । सन्तते शाश्वते च" इति मेदिनी ॥ (१) ॥ **उपभृत्** ॥ (१) ॥ **जुहूः** ॥(१)॥ "स्रुवो द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियाम्"इति मेदिनी॥ ( १ ) ॥ एते च स्रुचो विशेषः स्त्रियाः स्त्रीलिङ्गाः॥ स्रुवस्तु पुँल्लिङ्गः॥**यज्ञपात्राणां पृथक् पृथगेकैकम्** ॥**उपेति** ॥"उपाकृतोऽध्वरहते पशौ नोपद्रुते त्रिषु"इति विश्वमेदिन्यौ॥हतो हन्तुमारब्धः ॥**एकं क्रतावभिमन्त्रितपशोः**॥२५॥**पेति**॥परम्पराकम्॥(१)॥"**शमनं** शान्तिवधयोः शमनः श्राद्धदेवते" इति विश्वमेदिन्यौ॥"शमनस्तु यमे शमनं शान्तिहिंसयोः" इति हैमः ॥ "**शसनम्**" इति स्वामी ॥ "ससनम्" इत्यन्ये ॥ "**प्रोक्षणं** सेकवधयोः" इति हैमः ॥ ( ३ ) ॥ वधो हिंसाऽर्थोऽस्य॥**त्रीणि यज्ञार्थं पशुहननस्य** ॥ **वेति** ॥ "प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते" इति विश्वमेदिन्यौ ॥(२)॥ "प्रोक्षितं निहते सिक्ते"इति रभसः ॥(३)॥ **त्रीणि यज्ञहतपशोः** ॥ २६ ॥ **सामिति** ॥ सांनाय्यम् ॥ ( १ ) ॥ हविः ॥ ( २ ) ॥ **द्वे हविर्विशेषस्य** ॥ **अग्नाविति** ॥ हुतम् ॥ ( १ ) ॥ 'वषट्' इति मन्त्रोपलक्षणम् ॥ वषट्मन्त्रेण कृतं प्रक्षिप्तं वषट्कृतम् ॥ ( २ ) ॥ **द्वे हुतस्य** ॥ **दीति** ॥ अवभृथः ॥ ( १ ) ॥ दीक्षाया अन्तः ॥ **प्रधानकर्मसमाप्तौ क्रियमाणो यो यज्ञ इष्टिविशेषस्तस्यैकम्** ॥ **तादेति** ॥ तस्य यज्ञस्य क्रियामर्हति ॥ यज्ञियम् ॥ ( १ ) **एकं क्रतुक्रियासम्पादनयोग्यद्विजद्रव्यादेः**॥२७॥'त्रिषु' इति यज्ञियान्वितम् ॥**अथेति**॥क्रतुश्च यज्ञः कर्म च दानादि तदिष्टशब्दवाच्यम् ॥"इष्टं यागे च दाने च वाञ्छितेऽपि प्रयुज्यते" इत्यजयः॥ "एकाग्निकर्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते" इति मनुः ॥ इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि" इति मेदिनी ॥ (१) ॥ **एकं यज्ञदानयोः**॥ **त्वेति** ॥ खातं पुष्करिणीखननमादिर्यस्य

---

१—ध्रुवा वटपत्राकृतिः। उपभृच्चक्राकृतिः। जुहूरर्धचन्द्राकृतिः—इति मुकुटः॥२—हव्यान्ने यथा—"हेमपात्रे कृतं दोर्भ्यामाददानः पयश्चरुम्"॥भाण्डे यथा—"उत्पलकान्तिकचरुः ( लः काञ्चनचरुः ) स्वात्मनः पार्श्वदाहकः" इत्यनेकार्थकरवाकरकौमुदी ॥ ३—"पात्रामत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्य" इति पाठः ॥

त्यागो विहायितं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपनमपवर्जनमंहतिः । मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥ ३० ॥
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः।अन्वाहार्यं मासिकोंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम्
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा । संनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनाऽर्थना ३२॥
षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि । क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ३३
स्युरावेशिक आगन्तुरतिथिर्ना गृहागते । पूजा नमस्याऽपचितिः सपर्याचार्हणाः समाः ३४
वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना । व्रज्याऽटाऽटया पर्यटनं चर्या त्वीर्यापथस्थितिः ३५

देवालयारामादिनिर्माणस्य॥खातादि च तत्कर्म च क्रिया तस्मिन्॥"पुष्करिण्यःसभावापीदेवतायतनानि च। आरामश्च विशेषेण पूर्तं कर्म विनिर्दिशेत् "इति स्मृतिः ॥"पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि"इति मेदिनी ॥(१)॥ एकं खातादिकर्मणः ॥ अम्रिति ॥ "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" इति मेदिनी ॥ ( १ ) ॥ विघसः ॥ ( १ ) ॥ यज्ञस्य शेषो होमावशिष्टाज्यपुरोडाशादिः ॥ देवपित्रतिथिगुर्वादिभुक्तस्य शेषः॥ तयोः क्रमेणैकैकम् ॥२८॥ त्येति ॥ "त्यागो दाने च वर्जने" इति मेदिनी ॥ ( १ ) ॥ विहायितम् ॥ ( २ ) ॥ "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति विश्वमेदिन्यौ॥ ( ३ ) ॥ उत्सर्जनम् ॥ ( ४ ) ॥ " विसर्जनं परित्यागे दाने सम्प्रेषणेऽपि च " इति मेदिनी ॥ ( ५ ) ॥ विश्राणनम् ॥ ( ६ ) ॥ वितरणम् ॥ ( ७ ) ॥"स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्" इति मेदिनी ॥ ( ८ ) ॥ "प्रतिपादनं तु दाने प्रतिपत्तौ प्रबोधने" इति मेदिनी ॥ ( ९ ) ॥ २९ ॥ प्रादेशनम् ॥ ( १० ) ॥ निर्वपनम् ॥ (११) ॥ अपवर्जनम् ॥ ( १२ ) ॥"अंहतिस्त्यागरोगयोः" इति हैमः ॥ (१३) ॥ त्रयोदश दानस्य ॥ म्रिति ॥ तदहे प्रेतदिने ॥ और्ध्वदैहिकम् ॥ केचिदुत्तरपदवृद्धिं नेच्छन्ति ॥ ( १ ) ॥ प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डीकरणपर्यन्तं प्रत्यहं दीयमानस्य जलपिण्डादेरेकम् ॥ ३० ॥ पीति ॥ पितृदानम् ॥(१)॥ निवापः॥ ( २ ) ॥ द्वे सपिण्डनादूर्ध्वं पित्रुद्देशेन दानस्य ॥ श्रेति ॥ श्राद्धम् ॥ ( १ ) ॥ तेषां पितॄणां कर्म ॥ शास्त्रविधानेन ॥ एकं विधिना पितृकर्मणः ॥ अन्वेति ॥ अन्वाहार्यम् ॥ ( १ ) ॥ मासिकः ॥ ॥ ( २ ) ॥ "पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" ( ३।१२२ ) इति मनुः ॥ द्वे मासिकश्राद्धस्य ॥ अंश इति ॥ पञ्चदश मुहूर्तात्मकस्य दिनस्याष्टमो भागः ॥ "दिवसस्याष्टमे भागे मन्दीभवति भास्करः । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्" इति शातातपः ॥ "कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकुम्बले । कुशे दिनस्याष्टमांशे ना सूर्ये" इति मेदिनी ॥( १)॥ एकमह्नोऽष्टमांशस्य ॥ पेति ॥ ३१ ॥ पर्येषणा ॥ ( १ ) ॥ "परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ अन्वेषणा ॥ ( ३ ) ॥ गवेषणा ॥ ( ४ ) ॥ चत्वारि धर्माद्यन्वेषणस्य ॥ सेति ॥ सनिः ॥ ( १ ) ॥ अध्येषणा ॥ ( २ ) ॥ द्वे गुर्वाद्याराधनस्य ॥——गुर्वादेः प्रार्थनया क्वचिदर्थे नियोजनस्य——इति स्वामी ॥ येति ॥ याच्ञा ॥ ( १ ) ॥ "अभिशस्तिः पुनर्लोकापवादे प्रार्थितेऽपि च' इति हैमः ॥ स्वामी तु 'अभिषस्तिः'——इत्यवोचत् ॥(२)॥ याचना ॥(३)॥ अर्थना ॥(४)॥ चत्वारि याचनस्य॥ ३२ ॥ षेति ॥ आगन्तुपर्यन्ताः षट् ॥ अर्घ्येति ॥ अर्घ्यम् ॥अर्घार्थे जले॥(१)॥पदार्थे वारिणि पाद्यम्॥ (१) एकैकमर्घपादार्थजलयोः ॥ क्रेति ॥ अतिथ्यर्थे, आतिथ्यम् ॥ ( १ ) ॥ अतिथौ साधु आतिथेयम् ॥ ( १ ) ॥ एकैकमातिथ्यस्य ॥ ३३ ॥ स्युरिति ॥ आवेशिकः ॥ ( १ ) ॥ आगन्तुः ॥ ( २) ॥ "अध्वनीनोऽतिथिर्ज्ञेयः" इति स्मृतिः ॥ "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च" इति विश्वमेदिन्यौ ॥ "प्राघुणस्त्वतिथिर्द्वयोः" इति त्रिकाण्डशेषः ॥ ( ३ ) ॥ त्रीणि गृहागतस्य ॥ प्विति ॥ पूजा ॥ ( १ ) ॥ नमस्या ॥ ॥ ( २ ) ॥ अपचितिः ॥ ( ३ ) ॥ सपर्या ॥ ( ४ ) ॥ अर्चा ॥ ( ५ ) ॥ अर्हणा ॥ ( ६ ) ॥ षट् पूजनस्य ॥ ३४ ॥ वेति ॥ वरिवस्या ॥ ( १ ) ॥ शुश्रूषा ॥ ( २ ) ॥ परिचर्या ॥ ( ३ ) ॥ उपासना ॥

उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् । आनुपूर्वी स्त्रियां वाऽऽवृत्परिपाटी अनुक्रमः ॥३६॥
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः । नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥३७॥
औपवस्तं तूपवासो विवेकः पृथगात्मता । स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्धिरथाञ्जलिः ॥ ३८ ॥
पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः । ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ३९॥
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः । संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ४०॥
समे तु पादग्रहणमभिवादनमित्युभे । भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥
तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः । तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः४२

'उपासनम्' इति च ॥"उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च" इति विश्वमेदिन्यौ ॥ ( ४ ) ॥ चत्वारि सेवायाः ॥ व्रेति ॥ व्रज्या ॥ ( १ ) ॥ अटा ॥ ( २ ) ॥ अट्या ॥"अटा पर्यटनं भ्रमः"इति रत्नकोशादट्नमपि ॥ ( ३ ) ॥ त्रीण्यटनस्य ॥ चेति ॥ चर्या ॥ ( १ ) ॥ ईर्यापथे ध्यानाद्युपाये ॥ परिव्राजकादीनां स्थितेरेकम् ॥ ३५ ॥ उपेति ॥ "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति मेदिनी ॥ ( १ ) ॥ आचमनम् ॥ ( २ ) ॥ द्वे आचमनस्य ॥ अथेति ॥ मौनम् ॥ ( १ ) ॥ अभाषणम् ॥ ( २ ) ॥ द्वे मौनस्य ॥ आन्विति ॥ आनुपूर्वी॥ 'आनुपूर्व्यम्' इति च ॥ ( १ ) ॥ आवृत् ॥ ( २ ) ॥ परिपाटिः ॥ ( ३ ) ॥ अनुक्रमः ॥ ( ४ ) ॥ ३६ ॥ "पर्यायः प्रकारेऽवसरे क्रमे" इति विश्वमेदिन्यौ ॥ ( ५ ) ॥ पञ्च क्रमस्य ॥ अतीति ॥ अतिपातः ॥ ( १ ) ॥ पर्ययः ॥ ( २ ) ॥ उपात्ययः ॥ ( ३ ) ॥ त्रीणि क्रमोल्लङ्घनस्य ॥ नीति ॥ "नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते" इति मेदिनी ॥ ( १ ) ॥ व्रतम् ॥ ( २ ) ॥ द्वे व्रतमात्रस्य ॥ तेति ॥ उपवास आदिर्यस्य कृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादेः, तदुपवासादि व्रतम् ॥ पुण्यकम् ॥ ( १ ) ॥ एकमुपवासादेर्विहितव्रतस्य ॥ ३७ ॥ औपेति ॥ औपवस्तम् ॥ क्वचित् "औपवस्त्रम्" इति पाठः ॥ उपवासः ॥ "उपोषितम्" ॥ "उपोषणम्" इति च ॥(२) ॥ द्वे भोजनविरहस्य ॥ वीति ॥ "विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः" इति मेदिनी ॥ ( १ ) ॥ पृथगात्मता ॥ ( २ ) ॥ द्वे प्रकृतिपुरुषादिभेदज्ञानस्य ॥ स्यादिति ॥ ब्रह्मणो वेदस्य तपसो वा वर्चः ब्रह्मवर्चसम् ॥ ( १ ) ॥ वृत्तं चाचारः, अध्ययनं च गुरुमुखाद्वेदाक्षरग्रहणम् । तयोर्ऋद्धिः वृत्ताध्ययनर्धिः ॥ ( २ ) ॥ द्वे ब्रह्मवर्चसस्य ॥ अथेति ॥ ३८ ॥ ब्रह्माञ्जलिः ॥ ( १ ) ॥ एकं वेदपाठकाले कृतस्याञ्जलेः ॥ पेति ॥ वेदपाठे विप्रुषो मुखान्निर्गतबिन्दवः ॥ ब्रह्मबिन्दवः ॥ ( १ ) ॥ एकं वेदपाठकाले जातस्य विप्रुषः ॥ ध्येति ॥ ध्यानं प्रत्ययैकतानता च, योगश्चित्तवृत्तिनिरोधश्च तयोरासनम् ॥ ब्रह्मासनम् ॥ ( १ ) ॥ एकं ध्यानयोगासनस्य ॥ केति ॥ "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने" इति मेदिनी ॥ ( १ ) ॥ "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी ॥ ( २ ) ॥ "क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी ॥ ॥ ( ३ ) ॥ त्रीणि विधानस्य ॥ ३९ ॥ म्विति ॥ प्रथम आद्यः कल्पो विधिः ॥ मुख्यः ॥ ( १ ) ॥ एकमाद्यविधेः ॥ अन्विति ॥ ततः प्रथमकल्पात् ॥ अनुकल्पः ॥ (१)॥ व्रीह्यभावे "नीवारैः" इति यथा ॥ एकं गौणविधेः ॥ समिति ॥ संस्कार उपनयनं पूर्वं यत्र तत् श्रुतेर्ग्रहणम् उपाकरणम् ॥ ( १ ) ॥ एकं वेदपाठारम्भविधिविशेषस्य ॥ ४० ॥ सेति ॥ पादग्रहणम् ॥ ( १ ) ॥ अभिवादनम् ॥ ( २ ) ॥ द्वे नामोच्चारणपूर्वकं संस्कृतप्रयोगेण नमस्कारस्य ॥ भीति ॥ भिक्षुः ॥ ( १ ) ॥ परिव्राट् ॥ ( २ ) ॥ कर्मन्दी ॥ ( ३ ) ॥ पाराशरी ॥ ( ४ ) ॥ मस्करी ॥ ( ५ ) ॥ पञ्च संन्यासिनः ॥ ४१ ॥ तेति ॥ " तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति । मांसिकाकटुरोहिण्योः " इति मेदिनी ॥ ( १ ) ॥ तापसः ॥ ( २ ) ॥ पारिकाङ्क्षी ॥ ( ३ ) ॥ त्रीणि तपस्विनः ॥ वेति ॥ वाचंयमः ॥ ( १ ) ॥ "मुनिः पुंसि वशिष्ठादौ वङ्गसेनतरौ जिने " इति मेदिनी ॥ ( २ ) ॥ द्वे मौनव्रतिनः ॥ तेति ॥ तपःक्लेशसहः ॥ ( १ ) ॥ "दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु " इति मेदिनी ॥ ( २ ) ॥ द्वे तपःक्लेशसहस्य ॥ वेति ॥ "वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि " इति विश्वमेदिन्यौ ॥ ( १ ) ॥ ब्रह्म वेदाध्ययनव्रतं चरति

**ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतव्रती । ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥४३॥**
**यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ।स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ४४**
**पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः । पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः४५॥**
**अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं बृषी।अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ४६**
**स्वाध्यायः स्याज्जपः सुत्याऽभिषवः सवनं च सा। सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम्॥४७॥**
**दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् । शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥४८॥**

ब्रह्मचारी ॥ ( २ ) ॥ द्वे ब्रह्मचारिणः ॥ ४२ ॥ऋषेति ॥ "ऋषिर्वेदे वशिष्ठादौ दीधितौ च पुमानयम् " इति मेदिनी ॥ ( १ ) । सत्यवचाः ॥ ( २ ) द्वे ऋषेः ॥ स्नेति ॥ स्नातकः ॥ ( १ ) ॥ आप्लवव्रती ॥ ( २ ) ॥ द्वे समाप्तवेदव्रतस्याश्रमान्तरमगतस्य ॥ ये इति ॥ इन्द्रियाणां ग्रामः ॥ निर्जित इन्द्रियग्रामो यैस्ते निर्जितेन्द्रियग्रामाः ॥ ( १ ) ॥ यतिनः ॥ ( २ ) ॥ यतयः ॥ " यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान् " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि निर्जितसर्वेन्द्रियस्य ॥ ४३ ॥ य इति ॥ स्थण्डिले व्रतवशात् शेते स्थण्डिलशायी ॥ ( १ ) ॥ स्थाण्डिलः ॥ ( २ ) ॥ द्वे अनास्तृतभूमिशयनव्रतिनः ॥ अथेति ॥ विरजस्तमाः ॥ ( १ ) ॥ द्वयातिगः ॥ ( २ ) ॥ द्वे निवृत्तरजस्तमोगुणानाम् ॥ ४४ ॥ पेति ॥ "पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत् " इति मेदिनी ॥ ( १ ) ॥ प्रयतः ॥ ( २ ) ॥ "पूतं त्रिषु पवित्रे च शटिते बहुलीकृते " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि पवित्रस्य ॥ पेति ॥ पाषण्डः ॥ कवर्गद्वितीयमध्यपाठे " पालनाच्च त्रयी धर्मः पाशब्देन निगद्यते तं खण्डयन्ति ते यस्मात् पाखण्डास्तेन हेतुना" ॥( १ ) ॥ सर्वलिङ्गी ॥ ( २ ) ॥ द्वे पाखण्डस्य ॥ पेति ॥ " आषाढो व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम् " इति मेदिनी ॥ ( १ ) ॥ व्रते ब्रह्मचर्ये ॥ एकं ब्रह्मचर्ये विद्यमानस्य ब्रह्मचारिणः पालाशदण्डस्य ॥ रेति ॥ " रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे " इति मेदिनी ॥ रम्भस्य वेणोर्विकारः राम्भः ॥ ( १ ) ॥ व्रत इत्येव ॥ अन्यत्र वैणव एव ॥ एकं वेणुविकारस्य रम्भस्य ॥ ४५ ॥ अस्त्रीति ॥ कमण्डलुः ॥ ( १ ) ॥ "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ, जारात्पतिवत्नीसुते पुमान्॥ पिठरे तु न ना " इति मेदिनी ॥ ( २ ) ॥ द्वे व्रतधारिणो जलपात्रस्य ॥ व्रेति ॥ बृषी ॥ मूर्धन्यान्तः ॥ " अतसी बृसी मांसी " इति दन्त्यान्ते चन्द्रगोमिदर्शनाद्दन्त्यान्तोऽपि ॥ ( १ ) ॥ एकं ब्रह्मचर्याद्यासनस्य ॥ अजीति ॥ अजिनम् ॥ ( १ ) ॥ "चर्म कृत्तौ च फलके " इति मेदिनी ॥ ( २ ) ॥ "कृत्तिश्चर्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम् " इति मेदिनी ॥ ( ३ ) ॥ त्रीणि मृगादीनां चर्मणि ॥ भायिति ॥ भैक्षम् ॥ ( १ ) ॥ एकं भिक्षाराशेः ॥ ४६ ॥ स्वेति ॥ सु अतीव आवृत्त्या अध्ययनं स्वाध्यायः ॥ ( १ ) ॥ जपः ॥ ( २ ) ॥ द्वे वेदाध्ययनस्य ॥ स्विति॥ सुत्या ॥ ( १ )॥ " भवेदभिषवः स्नाने मद्यसंधानयज्ञयोः " इति मेदिनी ॥ ( २ ) ॥ " सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च " इति मेदिनी ॥ ( ३ ) ॥ 'सा' इति सुत्या ॥ त्रीणि सोमलताकण्डनस्य ॥ सेति ॥ सर्वाणि एनांसि मानसादिपापानि अपध्वंसयितुं शीलमस्य अघमर्षणम् ॥ ( १ ) ॥ एकं जप्यविशेषस्य ॥ ४७ ॥ देति ॥ " पक्षान्तेऽष्टौ दर्शने च दर्शः सूर्येन्दुसंगमे " ॥ " दर्शस्तु स्यादमावास्यायागभेदावलोकने " इति मेदिनी ॥ ( १ ) ॥ " पौर्णमासः पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ " इति मेदिनी ॥ ( १ ) ॥ पक्षान्तयोरमावास्यापौर्णमास्योः ॥ पृथग् भिन्नौ । न तु पर्यायः ॥ क्रमेणैकैकं पक्षान्तयागयोः ॥

---

१—'बाहुलकाद् घञ् । जापः' इति रक्षितः । तेन " शूद्रस्य मन्त्रजापं प्रत्यनधिकारात्" इत्यादिसिद्धिः—इति मुकुटः ॥ "प्रजापो ब्राह्मण इव क्षत्त्रियोऽपि न लिप्यते पापैः" इति दमयन्तीश्लेषश्च ॥ तद्व्याख्यायां चण्डपालश्च 'जपनं जापः' इत्यभिहितवान् ॥ २—"गण्डूषा मञ्जूषा बृषी" इति मूर्धन्यान्तेषु लिङ्गकारिका—इति मुकुटः ॥

नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम्। उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे॥ ४९ ॥
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्। अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम्
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम्। स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि
देवभूयादिकं तद्वत्कृच्छ्रं सांतपनादिकम्। संन्यासवत्यनशने पुमान् प्रायोऽथ वीरहा ॥५२॥
नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना। व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः
धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः। सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥५४॥

शेति ॥ "यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ। शरीरसाधनापेक्षनित्यकर्मणि संयमे" इति मेदिनी ॥ ( १ ) ॥ शरीरमात्रेण साध्यं यावज्जीवं कार्यं सत्यास्तेयाहिंसादि यत् तस्यैकम् ॥ ४८ ॥ नीति ॥ यत् कर्म अनित्यं न तु यावज्जीवं कर्तव्यम्, आगन्तुभिः कादाचित्कैः कामनया समयविशेषादिभिः साधनैः साध्यमुपवासस्नानजपादि तत् नियमः ॥ "नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते" इति मेदिनी ॥ ( १ ) ॥ एकमुपवासादेः ॥ उपेति ॥ प्रोद्धृते बहिष्कृते सति वामस्कन्धार्पितम् ॥ उपवीतम् ( १ ) ॥ यज्ञसूत्रम् ॥ ( २ ) ॥ द्वे यज्ञोपवीतस्य ॥ ४९ ॥ प्रेति ॥ प्राचीनावीतम् ॥ ( १ ) ॥ अन्यस्मिन् वामकरे प्रोद्धृते सति एकं विपरीतधृतयज्ञोपवीतस्य ॥ नीति ॥ निवीतम् ॥ ( १ ) ॥ कण्ठाल्लम्बितम् ॥ एकं करद्वये बहिष्कृते सति ऋजुभावेन स्थापितयज्ञसूत्रस्य ॥ अङ्गिवति ॥ अङ्गुलीनामग्रे दैवं तीर्थम् ॥ ( १ ) ॥ एकं देवतीर्थस्य ॥ स्वेति ॥ स्वल्पाङ्गुल्योः कनिष्ठिकयोरधोभागे ॥ "कायः कदैवते मूर्तौ संघे लक्षस्वभावयोः। मनुष्यतीर्थे कायं स्यात्" इति मेदिनी ॥ ( १ ) ॥ एकं मनुष्यतीर्थस्य ॥ ५० ॥ मेति ॥ अङ्गुष्ठतर्जन्योः ॥ पित्र्यम् ॥ ( १ ) ॥ एकं पितृतीर्थस्य ॥ म्विति ॥ 'हिरवधारणे ॥ अङ्गुष्ठस्य मूले ॥ ब्राह्मम् ( १ ) ॥ एकं ब्रह्मतीर्थस्य ॥ स्यादिति ॥ ब्रह्मभूयम् ॥ ( १ ) ॥ ब्रह्मत्वम् ॥ ( २ ) ॥ ब्रह्मसायुज्यम् ॥ ( ३ ) ॥ त्रीणि ब्रह्मत्वस्य ॥ ५१ ॥ दयिति ॥ देवभूयमादिर्यस्य "देवत्वम्" "देवसायुज्यम्" च ॥ तद्वत् ब्रह्मभूयादिवत् त्रिरूपी ॥ त्रीणि देवत्वस्य ॥ क्रिति ॥ "कृच्छ्रमाख्यातमाभीले पापसांतपनादिनोः" इति मेदिनी ॥ ( १ ) ॥ "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम्" आदिना चान्द्रायणप्राजापत्यपराकादिग्रहः ॥ एकं प्रायश्चित्तस्य ॥ समिति ॥ सम्यक् न्यास आत्यन्तिकस्त्यागः। तद्युक्तेऽनशनेऽभोजने ॥ "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी ॥ ( १ ) ॥ एकं प्रायोपवेशस्य ॥ अथेति ॥ वीरोऽग्निः तं हन्ति वीरहा ॥ ( १ ) ॥ ५२ ॥ नष्टाग्निः ॥ ( २ ) ॥ द्वे प्रमादादिना यस्याग्निहोत्रिणोऽग्निर्नष्टस्तस्य ॥ किति ॥ "कुहना ग्रामजालं स्यात्" इति रत्नकोषः ॥ "कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु" इति मेदिनी ॥ ( १ ) मिथ्यातत्त्वे ईर्यापथस्याचारभेदस्य कल्पना संपादना ॥ एकं दम्भेन कृतध्यानमौनादेः ॥ अर्थलिप्सया मिथ्याधर्माश्रयणस्य वा ॥ व्रेति ॥ शरीरायासजीवी व्याधादिर्व्रातः ॥ स इव ॥ व्रात्यः ॥ ( १ ) ॥ संस्कारैर्गर्भाधानादिभिरुपनयनादिभिर्वाहीनः ॥ ( २ ) ॥ द्वे संस्कारहीनस्य ॥ अस्वेति ॥ अस्वाध्यायः ॥ ( १ ) ॥ आकृतेरध्ययनचेष्टाया निर्गतः निराकृतिः ॥ ( २ ) ॥ द्वे वेदाध्ययनरहितस्य ॥—चत्वार्येकार्थानि—इत्येके॥५३॥धेति॥ धर्मस्य ध्वजश्चिह्नम्॥धर्मध्वजोऽस्यास्ति धर्मध्वजी ॥(१) ॥ लिङ्गमाश्रमादिचिह्नधारणं वृत्तिर्जीविकाहेतुर्यस्य लिङ्गवृत्तिः ॥ ( २ ) ॥ द्वे भिक्षाद्यर्थं जटादिधारिणः ॥ अवेति ॥ अव-

---

१—तथा च पातञ्जलसूत्रम्। "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" ( २।३० ) इति ॥ २—तथा च पातञ्जलसूत्रम् "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" ( २।३२ ) इति ॥ ३—तथा च गोभिलसूत्रम् "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवतीत्येवं यज्ञोपवीती भवति"(१।२।२ ) इति ॥ ४—तथा च गोभिलसूत्रम् "सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति" ( १।२।३) इति ॥

अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् । परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥५५॥
परिवित्तिस्तु तज्ज्यायान्विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥५६॥
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् । त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ॥ ५७ ॥
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

मूर्धाभिषिक्तो राजन्यो बाहुजःक्षत्त्रियो विराट् । राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः॥१॥
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः । चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥२॥
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥३ ॥
राजन्यकं च नृपतिक्षत्त्रियाणां गणे क्रमात् । मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः४

कीर्णं विक्षिप्तं हिंसितं वृत्तमनेन अवकीर्णी ॥ ( १ ) ॥ क्षतव्रतः ॥ ( २ ) ॥ द्वे खण्डितब्रह्मचर्यादेः ॥ स्विति ॥ यस्मिन् पुरुषे सुप्ते अंशुमान् ( सूर्यः ) अस्तमेति तत्र अभिनिर्मुक्तः ॥ ( १ ) ॥ एवमंशुमान् यस्मिन्सुप्त उदेति तत्र अभ्युदितः ॥ ( १ ) ॥ ५४ ॥ एकैकं क्रमेणोदयास्तमनकाले स्वापशीलयोः ॥ पेति ॥ परिवेत्ता ॥ ( १ ) ॥ एकं ज्येष्ठे विवाहरहिते कृतदारपरिग्रहस्य कनिष्ठस्य ॥ ५५ ॥ पेति ॥ परिवित्तिः ॥ ( १ ) ॥ तस्य परिवेत्तुः ॥ ज्यायाञ् ज्येष्ठः ॥ एकं परिवेत्तुर्ज्येष्ठभ्रातुः ॥ वीति ॥ विवाहः ॥ ( १ ) ॥ उपयमः ॥ ( २ ) परिणयः ॥ ( ३ ) ॥ उद्वाहः ॥ ( ४ ) ॥ उपयामः ॥ ( ५ ) ॥ पाणिपीडनम् ॥ ( ६ ) ॥ षट् विवाहस्य ॥ ५६ ॥ व्येति ॥ व्यवायः ॥ ( १ )॥ ग्राम्यधर्मः ॥(२)॥मैथुनम्॥ ( ३) ॥ निधुवनम् ॥( ४ ) ॥ रतम् ॥(५)॥ पञ्च रतस्य॥ त्रीति॥ त्रिवर्गः ॥ ( १ ) ॥ धर्मश्च कामश्च अर्थश्च तैः कृत्वा ॥ एकं पुरुषार्थत्रिकस्य ॥ चेति ॥ चतुर्वर्गः। ॥ ( १ ) ॥ मोक्षेण सहितैर्धर्मकामार्थैः कृत्वा ॥ एकं पुरुषार्थचतुष्टयस्य ॥ ५७ ॥ सेति ॥ बलेन सहितैर्धर्मादिभिः ॥ चतुर्भद्रम् ॥ "भद्रो वाच्यवच्छ्रेष्ठसाधुनोः" इति विश्वः ॥ ( १ ) ॥ एकं बलयुक्तधर्मादेः ॥ जेति ॥ जन्याः ॥ ( १ ) ॥ वरस्य जामातुर्ये स्निग्धास्तत्पक्षा वयस्यादयः ॥ "जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च" इति विश्वः ॥ ( १ ) ॥ एकं वरपक्षीयाणाम् ॥

इति ब्रह्मवर्गविवरणम् ॥

---

म्विति ॥ राज्यदानसमये मूर्धन्यभिषिच्यते ॥ तत्प्रभवत्वात्सर्वोऽपि मूर्धाभिषिक्तः॥ (१)॥ राजन्यः ॥( २ ) ॥ "बाहुजः क्षत्त्रिये कीरे स्वयंजाततिलेऽपि च" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ क्षत्त्रियः ॥ ( ४ ) ॥ विराट् ॥ ( ५ ) ॥ पञ्च क्षत्त्रियस्य ॥ रेति ॥ "राजा प्रभौ च नृपतौ क्षत्त्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी ॥ ( १ ) ॥ राट् ॥ ( २ ) ॥ "पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत्" इति विश्वः ॥ "पार्थिवो नृपे । पार्थिवी स्यात्तु सीतायां पृथिव्या विकृतौ त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ क्ष्माभृत् ॥ "क्ष्माभुक्" इति च ॥ ( ४ ) ॥ नृपः ॥ ( ५ ) ॥ भूपः ॥ ( ६ ) ॥ महीक्षित् ॥ ( ७ ) ॥ सप्त राज्ञः ॥ १ ॥ रेति ॥ प्रणता अशेषाः सामन्ताः स्वदेशानन्तरराजा यस्य ॥ अधीश्वरः ॥ ( १ ) ॥ एकं सर्वसंनिहितनृपवशकारिणः ॥ चेति ॥ "चक्रं गणे चक्रवाके" इति विश्वः ॥ चक्रं वर्तयति चक्रवर्ती ॥ ( १ ) ॥ "सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ द्वे समुद्रपर्यन्तभूमीश्वरस्य ॥ न्विति ॥ मण्डलस्य भूम्येकदेशस्य ईश्वरः मण्डलेश्वरः ॥ "स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च" इति विश्वः ॥ ( १ ) ॥ एकं सार्वभौमान्यनृपस्य ॥ २ ॥ येनेति ॥ सम्राट् ॥ ( १ ) ॥ एकं सार्वभौमविशेषस्य ॥ केचित्तु पृथक् त्रीणि नामान्याहुः ॥ राजसूयकर्ता सम्राट् ॥ द्वादशराजमण्डलस्येश्वरोऽपि सम्राट् । सर्वनृपतीनां शासकोऽपि सम्राट् ॥ अथेति ॥ राजकम् ॥ ( १ ) ॥३॥ राजन्यकम् ॥ (१) ॥ तत्र पूर्वं नृपतीनां गणस्य ॥ अपरं क्षत्त्रियाणां

महामात्राः प्रधानानि पुरोधास्तु पुरोहितः । द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः । रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥६॥
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु । भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ७
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ८
शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः । विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥९॥

गणस्य ॥ मेति ॥ मन्त्री ॥ ( १ ) ॥ धीसचिवः ॥ ( २ ) ॥ अमात्यः ॥ ( ३ ) ॥ त्रीणि मन्त्रिणः । अन्य इति ॥ ततो धीसचिवादन्ये ॥ कर्मसचिवाः ॥ ( १ ) ॥ एकं साहाय्यकारिणाम् ॥ ४ ॥ मेति ॥ "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे" इति मेदिनी ॥ महती मात्रा येषां ते ॥ "महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे"इति मेदिनी॥(१)॥"प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" इति मेदिनी इति क्लीबत्वम् ॥ पुंल्लिङ्गोऽपि । "महामात्रः प्रधानः स्यात्" इति पुंस्काण्डे बोपालितात् ॥ (२) ॥ द्वे प्रधानस्य ॥ त्रीणि कर्मसहायानाम्— इत्येके ॥ प्विति ॥ पुरोधाः ॥ ( १ ) ॥ पुरोहितः ॥ ( २ ) ॥ द्वे पुरोहितस्य ॥ द्रेति ॥ ऋणादानादीन्यष्टादश विवादस्थानानि व्यवहाराः, तेषां द्रष्टरि निर्णेतरि ॥ प्राट् च विवाकश्च प्राड्विवाकौ प्रश्नविवेकावस्य स्तः ॥ प्रश्नविचारयोः कुशलः इत्यर्थः ॥ "विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः" ॥ ( १ ) ॥ "अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः" इति विश्वः ॥ अक्षाणां व्यवहाराणां दर्शकः ॥ ( २ ) ॥ द्वे धर्माध्यक्षस्य ॥ ५ ॥ प्रेति ॥ "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ द्वारपालः ॥ ॥ ( २ ) ॥ द्वाःस्थः ॥ ( ३ ) ॥ 'द्वाःस्थितः' 'दर्शकः' इति व्यस्तं नाम ॥ 'द्वाःस्थितो वेत्रधारकः' इति त्रिकाण्डशेषः ॥ ( ४ ) ॥ "स्याद्दर्शको दर्शयिता प्रतीहारोऽपि दर्शकः" इति रुद्रः ॥ द्वाःस्थितस्य दर्शकः इति समस्तं नाम इत्यन्ये ॥ "द्वारपो द्वाःस्थितादर्शी" इति रभसः ॥ ( ५ ) ॥ पञ्च द्वारपालस्य ॥ रेति ॥ रक्षिवर्गः ॥ ( १ ) ॥ "अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे । राजरक्षिणि चिह्ने च वीरमर्दनकेऽपि च" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ द्वे रक्षकगणस्य ॥ अथेति ॥ "अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षे त्वभिधेयवत्" इति मेदिनी ॥ ( १ ) ॥ अधिकृतः ॥ ( २ ) ॥ द्वे व्यापारितस्य ॥ ॥ ६ ॥ स्थेति ॥ स्थायुकः ॥ (१) ॥ एकमेकग्रामाधिकृतस्य ॥ गविति ॥ "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते शारिवाख्यौषधौ स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ एकं बहुग्रामाधिकृतस्य ॥ भाविति ॥ भौरिकः ॥ ( १ ) ॥ कनकाध्यक्षः ॥ ( २ ) ॥ द्वे सुवर्णाधिकृतस्य ॥ रूप्येति ॥ "रूप्यः स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्" इति मेदिनी ॥ रूप्यस्याध्यक्षः रूप्याध्यक्षः ॥ ( १ ) ॥ निष्के हेम्नि नियुक्तः ॥ "टङ्कपतिर्नैष्किको रजताध्यक्षः" इति रभसः ॥ ( २ ) ॥ द्वे टङ्कादिशालायां नियुक्तस्य ॥ ७ ॥ अन्तेति ॥ अन्तर् अभ्यन्तरो वंशो गृहम् ॥ अन्तर्वंशे नियुक्तः ॥ अन्तर्वंशिकः ॥ ( १ ) ॥ एकमन्तःपुराधिकृतस्य जनस्य ॥ साविति ॥ सौविदल्लः ॥ ( १ ) ॥ "कञ्चुकी जोङ्गकतरौ महल्ले पन्नगे विटे" इति हैमः ॥ ( २ ) ॥ स्थापत्यः ॥ "स्थपतिः कञ्चुकिन्यपि" इति मेदिनी ॥ ( ३ ) ॥ सौविदः ॥ ( ४ ) ॥ चत्वारि राज्ञां स्त्र्यगारे बहीरक्षाधिकृतस्य ॥८॥ शेति ॥ "शण्ढः क्लीबस्तु कञ्चुकी" इति ताल‌व्यादौ रभसः ॥ "शण्ढः स्यात्पुंसि गोपतौ ॥ आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" इति मेदिनी ॥ "शण्ढषण्ढौ सौविदौ । वन्ध्यपुंसीड्वरे क्लीबे" इति हैमः ॥(१)॥ "ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः" ॥ ॥ ( २ ) ॥ द्वे अत्यन्तान्तर्महल्लकानाम् ॥ सेवेति ॥ "सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि" इति मेदिनी ॥ ( १ ) ॥ "अर्थी पुमान्याचके स्यात्सेवके च विवादिनि" इति मेदिनी ॥ ( २ ) ॥ अनुजीवी ॥ ( ३ ) ॥ त्रीणि सेवकस्य ॥ वीति ॥ शत्रुः ॥ ( १ ) ॥ एकं स्वदेशाव्यवहितदेशस्य

उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः । रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
स्निग्धो वयस्यः सवया अथ मित्रं सखा सुहृत् । सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् १२
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषश्चाप्तः प्रत्ययितस्त्रिषु ॥ १३ ॥
सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि । स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥१४॥
तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ । लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके १५
लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ । स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥१६॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च १७

राज्ञः ॥ मीति॥"मित्रं सुहृदि न द्वयोः। सूर्ये पुंसि स्त्रियां गन्धद्रव्ये दैत्यान्तरे पुमान्" इति मेदिनी॥(१)॥ अतः शत्रोः ॥ एकं शत्रुभिन्नस्य ॥ ९ ॥ विति ॥ अतिशयितः परः परतरः ॥ उदासीनः ॥ ( १ ) ॥ एकं शत्रुमित्राभ्यां परस्य राज्ञः ॥ पेति ॥ पार्ष्णिं पश्चात्पदं गृह्णाति पार्ष्णिग्राहः ॥ "सैन्यपृष्ठे पुमान् पार्ष्णिः पश्चात्पदजिगीषयोः" इति विश्वः ॥ ( १ ) ॥ एकं जिगीषोः पृष्ठभागस्थितस्य राज्ञः ॥ रीति ॥ रिपुः ॥ ( १ ) ॥ वैरी ॥ ( २ ) ॥ सपत्नः ॥ ( ३ ) ॥ अरिः ॥ ( ४ ) ॥ द्विषन् ॥ ( ५ ) ॥ द्वेषणः ॥ ( ६ ) ॥ दुर्हृद् ॥ ( ७ ) ॥ १० ॥ द्विट् ॥ ( ८ ) ॥ विपक्षः ॥ ( ९ ) ॥ अहितः ॥ ॥ ( १० ) ॥ अमित्रः ॥ ( ११ ) ॥ दस्युः ॥ ( १२ ) ॥ शात्रवः ॥ ( १३ ) ॥ शत्रुः॥(१४)॥ अभिघाती ॥ "द्वेष्योऽभियातिरमित्रः" इति रत्नकोषः ॥ ( १५ ) ॥ परः ॥ (१६) ॥ अरातिः॥(१७)॥ प्रत्यर्थी ॥ ( १८ ) ॥ परिपन्थी ॥ ( १९ ) ॥ ऊनविंशतिः वैरिणः ॥ ११ ॥ स्नीति ॥ स्निग्धः ॥ ( १ ) ॥ वयस्यः ॥ ( २ ) ॥ सवयाः ॥ ( ३ ) ॥ त्रीणि तुल्यवयसः ॥ अथेति ॥ मित्त्रम् ॥ ( १ ) ॥ सखा ॥ ( २ ) ॥ सुहृत् ॥ ( ३ ) ॥ त्रीणि मित्त्रस्य ॥ सेति ॥ सख्यम् ॥ ( १ ) ॥ साप्तपदीनम् ॥(२)॥ द्वे सख्युर्धर्मकर्मणोः॥ अन्विति॥अनुरोधः॥(१)॥अनुवर्तनम्॥(२)॥ द्वे आराध्या- देरिष्टसंपादनस्य ॥ १२ ॥ येति ॥ यथार्हवर्णः ॥ "वर्णः स्याद्भेदरूपयोः" इति धरणिः ॥ ( १ ) ॥ "प्रणिधिर्याचने चरे" इति हैमः ॥ ( २ ) ॥ अपसर्पः ॥ ( ३ ) ॥ "चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले" इति मेदिनी ॥ ( ४ ) ॥ ॥ "स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम्" इति मेदिनी ॥ (५)॥ "चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः" इति मेदिनी ॥(६) ॥ गूढपुरुषः॥(७)॥सप्त चारस्य॥ आप्त इति ॥ आप्तः ॥ ( १ ) ॥ प्रत्ययितः ॥ "प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु" इति विश्वः ॥ ( २ ) ॥ द्वे विश्वासाधारस्य ॥ १३ ॥ सांवेति ॥ सांवत्सरः ॥ ( १ ) ॥ ज्यौतिषिकः ॥ ( २ ) ॥ दैवज्ञः ॥ ( ३ ) ॥ गणकः ॥ ( ४ ) ॥ मौहूर्तिकः ॥ ( ५ ) ॥ मौहूर्तः ॥ ( ६ ) ॥ ज्ञानी ॥ ( ७ ) ॥ कार्तान्तिकः ॥ ( ८ ) ॥ अष्टौ गणकस्य ॥ १४ ॥ तेति ॥ तान्त्रिकः ॥ ( १ ) ॥ ज्ञातसिद्धान्तः ॥ ( २ ) ॥ द्वे तत्त्वार्थज्ञातुः ॥ सेति ॥ सत्त्रमस्यास्ति सत्री ॥ "सत्त्रमाच्छादने यज्ञे सदादाने च कैतवे" इति विश्वः ॥ ( १ ) ॥ गृहपतिः ॥ ( २ ) ॥ द्वे सदाऽन्नादिदानकर्तुर्गृहस्थस्य ॥ लीति ॥ लिपिकरः ॥ "लिबिकरः" अपि ॥ ( १ ) ॥ अक्षरचणः ॥ ( २ ) ॥ अक्षरचुञ्चुः ॥ ( ३ ) ॥ लेखकः ॥ ( ४ ) ॥ चत्वारि लेखकस्य ॥ १५ ॥ लिखीति ॥ अक्षराणां विन्यासः ॥ लिखितं चाक्षरविन्यासश्च अनयोः समाहारः तस्मिन् ॥ कर्मधारयो वा ॥ लिपिः ॥ ( १ ) ॥ लिबिः ॥ ( २ ) ॥ द्वे लेखनस्य ॥ चत्वार्येव नामानि-- इति केचित् ॥—'लिखिताक्षरसंस्थाने' इत्येकमेकपदम्--इत्यन्ये ॥ स्यादिति ॥ संदेशहरः ॥ ( १ ) ॥ दूतः ॥ ( २ ) ॥ द्वे दूतस्य ॥ द्विति॥ दूतस्य भावः कर्म वा दूत्यम्॥ 'दौत्यम्' अपि ॥ केचित्तु--"दूत्यं तद्भागकर्मणी" इति पाठं मन्यन्ते ॥ ( १ ) ॥ एकं दूतस्य भावकर्मणोः ॥१६॥ अध्वेति ॥ अध्वनीनः ॥ ( १ ) ॥ अध्वगः ॥ ( २ ) ॥ अध्वन्यः ॥ ( ३ ) ॥ पान्थः॥ स्त्रियां पान्था ॥ ( ४ ) ॥ पथिकः॥ स्त्रियां पथिकी ॥ ( ५ ) ॥ पञ्च पथिकस्य ॥ स्वेति ॥ स्वामी राजा ॥--पुरोहितः--इति श्रीधरः ॥ अमात्यो

**राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च। संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः॥१८॥ षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः। क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् । भेदो[2] दण्डः साम दानमित्युपायचतुष्टयम् २०॥**

मन्त्री ॥ सुहृद् मित्त्रम् ॥ कोशो भण्डारः ॥ राष्ट्रं देशः ॥ पर्वतादि दुर्गाणि ॥ बलं सैन्यम् ॥ १७ ॥ राज्यस्य राजकर्मणोऽङ्गानि राज्याङ्गानि ॥ ( १ ) ॥ प्रकृतयः ॥ ( २ ) ॥ पौराणां नागराणां श्रेणयोऽपि प्रकृतयः स्युः॥ कामन्दकीये--"स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ॥ परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते " ॥ "पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यम् " इति दर्शितम्॥ द्वे राज्याङ्गानाम् ॥ **समिति** ॥ संधिः ॥ ( १ ) ॥ विग्रहः ॥ ( १ ) ॥ यानम् ॥ ( १ ) ॥ आसनम् ॥ ( १ ) ॥ द्वैधम् ॥ ( १ ) ॥ आश्रयः ॥ ( १ ) ॥ ॥ १८ ॥ एतानि षड् गुणशब्दवाच्यानि ॥ **शेति** ॥ शक्तिशब्दवाच्यास्तिस्रः॥ प्रभावः ॥ उक्तं हि "कोशदण्डबलं प्रभुशक्तिः" इति ॥ ( १ ) ॥ उक्तं हि--"विक्रमबलमुत्साहशक्तिः " इति ॥ ( १ ) ॥ संध्यादीनां सामादीनां च यथावत्स्थापनम्, न तु ज्ञानबलं मन्त्रशक्तिः ॥—"पञ्चाङ्गमन्त्रो मन्त्रशक्तिः" इत्यन्ये ॥ **तिसृणां शक्तीनामेकैकम्** ॥ **क्षेति** ॥ अष्टवर्गस्यापचयः क्षयः ॥(१) ॥ उपचयो वृद्धिः ॥ ( १ ) ॥ उपचयापचयाभावः स्थानम् ॥ ( १ ) ॥ " कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ॥ खन्याकरबलादानं शून्यानां च निवेशनम्" इत्यष्टवर्गः ॥ त्रयाणां वर्गः ॥ ( १ ) ॥ **नीतिवेदिनां त्रिवर्गस्यैकैकम्** ॥ १९ ॥ **स इति** ॥ प्रतापः ॥ ( १ ) ॥ प्रभावः ॥ ( २ ) ॥ " अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्यये प्र (ऽप्य) सहनं तत्तेजःसमुदाहृतम् " इति भरतः ॥ कोशो धनम् ॥ दण्डो दमः सैन्यं च॥ ताभ्यां जातम् ॥ द्वे कोशद-

---

१--स्वर्णादिदानेन ( पर ) बन्धुभिः प्रीत्युत्पादना मित्त्रीकरणं **संधिः** ॥ अयं च बहुविधो ग्रन्थविस्तारभिया न लिखितः ॥ परमण्डले दाहलुण्ठनच्छेदादि **विग्रहः** ॥ तं च प्रकाशकूटतूष्णींभेदेन त्रिविधमाह ॥ उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय यात्रा **यानम्**॥तच्च विगृह्ययानम्,सन्धाययानम्, संभूययानम् प्रसङ्गयानम्, उपेक्ष्ययानम् , चं इति पञ्चविधम् । पश्चात्स्थायिनः शत्रोर्बलद्रव्यजनपदवासादिकं हत्वा पुरोवार्तिनि शत्रौ या यात्रा त**द्विगृह्ययानम्** । शून्यराज्यग्रहणसमर्थेन शत्रुणा संधिं विधायारेः सम्मुखगमनं **सन्धाययानम्** । बलवदरिणा सन्धाय संमिल्य तैः सह कातरेऽरौ यद्यानं तत् **सम्भूययानम्** ।एकप्रकृतयानस्यान्तरोपस्थितेऽनुद्देश्येऽपि यद्यानं तत्**प्रसङ्गयानम्** शत्रोर्बलाधानाय पथि प्राप्तेषु शत्रुमित्त्रेषु अवेरषु वा बलिषु शत्रुमुपेक्ष्य यद्यानं त**दुपेक्ष्ययानम्** ॥ 'नाहमिदानीं योद्धुं समर्थः'इति कालादिप्रतीक्षया विजिगीषोर्दुर्गादीन् वर्धयतः स्थिति**रासनम्** ॥ तदपि विगृह्यासनम्, सन्धायासनादि पूर्ववत् पञ्चविधम् । विग्रहेण शत्रोरवस्कन्देऽशक्तस्य तद्देशादिकं विनाश्य दुर्गं प्रविश्यावस्थानं **विगृह्यासनम्** ।तुल्यबलत्वाद्युद्धे क्षीयमाणयोः सन्धिं कृत्वाऽऽस्थानं **सन्धायासनम्** । बलिनः शत्रोर्जयेऽशक्तस्य दुर्गाश्रयेणापि स्थातुमशक्यत्वाद्बलिना मित्त्रेण शत्रुणा वा मिलित्वाऽवस्थानं **सम्भूयासनम्** । शत्रुमभिगच्छतो मित्त्रागमनादेरुत्सवस्य च प्रसङ्गेनान्तरा स्थितिः **प्रसङ्गासनम्** । बलिनमपि शत्रुं दुर्नयादिना नित्यमपचीयमानमुपेक्ष्य तदपचयापेक्षया स्थितिरु**पेक्ष्यासनम्**॥ बलिनोर्वैरिणोर्मध्ये काकाक्षिवदलक्षितस्योभयत्र वाचा समर्पणम् (इत्येकम्) **द्वैधम्** ॥ बलिना सह सन्धिः, अबलेन सह विग्रहः, इत्यपरम् । शत्रोर्वा मूलप्रकृतिभिः सह सन्धाय शत्रुणा सह विग्रहः, इति तृतीयम् । शत्रुणैव वा सन्धिविग्रहसमुदायहेतोर्दुर्गाश्रयस्य व्यापारः इति चतुर्थम्–इति चतुर्विधं **द्वैधम्** ॥ बलवताऽऽरिणोच्छिद्यमानस्य हीनशक्तेर्यद्बलवद्धर्मविजयिसमाश्रयणं त**दाश्रयः** ॥ कस्यैव वा बलिनः शत्रोः सेवया कोषादिदानेन वाऽऽश्रयण**माश्रयः**—इति द्विविध **आश्रयः**। उक्तं च—"उच्छिद्यमानो रिपुणा निरुपायप्रतिक्रियः । शक्तिहीनः संश्रयते बलिनं धार्मिकं नृपम् " इति ॥–इति मुकुटे विशेषः॥ २—भेदस्त्रिविधिः।तदुक्तम्–"स्नेहरागापनयनं संहर्षोत्पादनं तथा।सन्तर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः"इति॥ राज्ञो द्रोहाय शपथपूर्वकम् 'अमीषामैकमत्यं जातम्' इत्यस्यार्थस्य कपटलेखादीनां राजसदसि प्रक्षेपाद्राज्ञोऽनुयायिषु स्नेहस्य परिजनानां च प्रभौ भक्तेरपनयनमित्येकः । अनुयायिनामेव परस्पराभिभवसंजननं संहर्षोत्पादनम्--इति द्वितीयः॥ दण्डोऽपि त्रिविधः । तदुक्तम्"वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च । इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः" इति ॥ परिक्लेशो बन्धनताडनादिः ॥ "प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम् । द्रव्यादानमपूर्वं च स्वयंग्राहप्रवर्तनम् । देवस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्"—इति मुकुटे विशेषः ॥

**साहसं तु दमो दण्डः साम सान्त्वमथो समौ । भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥२१॥**
**पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः । विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥२२॥**
**रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु । समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् २३**
**अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् । युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥२४॥**
**न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् । अववादस्तु निर्देशो निदेशः शासनं च सः२५**

दण्डजतेजसः ॥ **भयिति** ॥ शत्रोरमात्यादीनामुपायेन परतो विश्लिष्यात्मसात्करणं भेदः ॥ ( १ ) ॥ दण्डः शास्तिः ( २ ) ॥ प्रियवचनादिना क्रोधोपशमनं साम ॥ " परस्परोपकाराणां दर्शनं गुणकीर्तनम् ॥ सम्बन्धस्य समाख्यानमायत्याः संप्रकाशनम् ॥ वाचा पेशलया साधु तवाहमिति चार्पणम् । इति सामविधानज्ञैः साम पञ्चविधं स्मृतम् " ॥ ( ३ ) ॥ स्वधनस्य परेभ्यः प्रतिपादनं दानम् ॥ ( ४ ) ॥ "उपायः सामभेदादौ तथैवोपगतौ पुमान् " इति मेदिनी ॥ उपायानां चतुष्टयम् ॥ अन्यत्र सप्तोपाया उक्ताः ॥ " साम दानं च दण्डश्च भेदश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः" ॥ **चत्वारि उपायानाम्** ॥ २० ॥ **सेति** ॥ सहसि बले भवम् ॥ "साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धाष्टर्ये " इति हैमः ॥ (१) ॥ "दमः स्यात्कर्दमे दण्डे दमने दमथेऽपि च " इति हेमचन्द्रः ॥ ( २ ) ॥ " दण्डः सैन्ये दमे यमे । मानव्यूहग्रहभेदेष्वश्वेऽर्कानुचरे मयि । प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः" इति हैमः ॥(३)॥ **त्रीणि दण्डस्य** ॥ **सामेति** ॥ साम ॥ ( १ ) ॥ सांत्वम् ॥ ( २ ) ॥ **द्वे साम्नः** ॥ **अथो इति** ॥ " भेदो द्वैधे विशेषे स्यादुपजापे विदारणे " इति विश्वमेदिन्यौ ॥ ( १ ) ॥ उपजापः ॥ (२)॥ **द्वे भेदस्य** ॥ **उपेति** ॥ उपधा ॥ ( १ ) ॥ आद्येन कामार्थभयग्रहः॥ **एकं राज्ञा धर्मार्थकामभयैरमात्यादेः परीक्षणस्य** ॥ २१ ॥ **पेति** ॥ निःशलाकान्ताः पञ्च ॥ **अषेति** ॥ अविद्यमानानि षड् अक्षीण्यत्र अषडक्षीणः ॥ ( १ ) ॥ **एकं द्वाभ्यामेव कृतस्य मन्त्रस्य** ॥ **वीति** ॥ "विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिषु । वसुनन्दे ना" इति मेदिनी ॥ ( १ ) ॥ विजनः ॥ ( २ ) ॥ "छन्नं तु रहसि क्लीबं छादिते वाच्यलिङ्गकम्" इति मेदिनी ॥ ( ३ ) ॥ निःशलाकः ॥ ( ४ ) ॥ 'तथा'-शब्दः समुच्चये ॥ "रहस्तत्त्वे रते गुह्ये" इति मेदिनी ॥ रभसोऽपि—"रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्" इति ॥ ( ५ ) ॥ २२ ॥ ( ६ ) ॥ "उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययम्" इति विश्वहैममेदिन्यः ॥ ( ७ ) ॥ अलिङ्गे द्वे अव्यये ॥ **सप्त एकान्तस्य** ॥ **रेति** ॥ रहस्यम् ॥ "रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्" इति मेदिनी ॥ ( १ ) ॥ **एकं तद्भवस्य ( रहोभवस्य )** ॥ **सेति** ॥ विस्रम्भः ॥ तालव्यादिश्च ॥"विश्रम्भः केलिकलहे विश्वासे प्रलयेऽपि च"इति विश्वमेदिन्यौ ॥ ( १ ) ॥ विश्वासः ॥ ( २ )॥ **द्वे विश्वासस्य** ॥ **भ्रयिति** ॥ यथोचिताद् यथाप्राप्तात् भ्रंशोऽधःपतनम् ॥ भ्रेषः ॥ ( १ ) ॥ **एकं भ्रंशस्य** ॥ २३ ॥ **अभ्रयिति** ॥ अभ्रेषः ॥ ( १ ) ॥ न्यायः ॥ ( २ ) ॥ "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने" इति मेदिनी ॥ ( ३ ) ॥ देशरूपम् ॥ ( ४ ) ॥ समञ्जसम् ॥ ( ५ ) ॥ **पञ्चोचितस्य** ॥ **य्विति** ॥ "युक्तो युक्ते पृथग्भूते क्लीबं हस्तचतुष्टये" इति मेदिनी ॥ ( १ ) ॥ औपयिकम् ॥ ( २ ) ॥ "लभ्यं युक्ते च लब्धव्ये" इति मेदिनी ॥ ( ३ ) ॥ भजमानम् ॥ ( ४ ) ॥ "अभिनीतं संस्कृते च न्याय्ये चामर्षणे त्रिषु" इति रुद्रः ॥ "अभिनीतं त्रिषु न्याय्ये संस्कृतामर्षिणोरपि" इति मेदिनी ॥ ( ५ ) ॥ ॥ २४ ॥ न्याय्यम् ॥ ( ६ ) ॥ युक्तादयः षट् त्रिषु ॥ **षट् न्यायागतस्य** ॥ **समिति** ॥ संप्रधारणा ॥ ( १ ) ॥ समर्थनम् ॥ ( २ ) ॥ **द्वे 'इदमुचितमेव' इति निश्चयस्य** ॥ **अवेति** ॥ अववादः ॥ ( १ ) ॥ निर्देशः ॥ ( २ ) ॥ "निदेशः शासनोपान्तकथनेषु प्रयुज्यते" इति विश्वः ॥ ( ३ ) ॥ "शासनं राजदत्तोर्व्यां लेखा-

---

१—तालव्यादिस्तु प्रमादे गतः—इति तु सिद्धान्तकौमुदी ॥ २—विश्वहैमसंवादप्राप्तप्रामाण्यमेदिनीपुस्तके "युतः" इति पाठस्योपलम्भेन योग्यत्वेन चात्रास्योपन्यासः प्रामादिकः॥

**शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः । आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने**
**द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः। घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् २७**
**उपायनमुपग्राह्यमुपहारस्तथोपदा । यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥**
**तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः । सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् २९॥**
**अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् । महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥**

शशास्त्रज्ञान्तिषु'' इति मेदिनी ॥ ( ४ ) ॥ २५ ॥ शिष्टिः ॥ "शास्तिः'' इति च ॥ ( ५ ) ॥ आज्ञा ॥ ॥ ( ६ ) ॥ षड् आज्ञायाः ॥ सामिति ॥ "संस्थश्चरेऽवस्थिते, स्त्री स्थितौ सादृश्यनाशयोः'' इति मेदिनी ॥ ( १ ) ॥ 'मर्या' इति सीमार्थेऽव्ययम् ॥ तत्र दीयते मर्यादा ॥ ( २ ) ॥ "धारणाऽङ्गे च योगस्य न पुंसि स्याद्विधारणे'' इति मेदिनी ॥ ( ३ ) ॥ स्थितः ॥ ( ४ ) ॥ चत्वारि न्याय्यपथस्थितेः ॥ आग इति ॥ "आगोऽपराधेऽपाये स्यात्'' इति मेदिनी ॥ सौन्तं क्लिबम् ॥(१)॥ अपराधः ॥ (२)॥"मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ'' इति मेदिनी ॥ ( ३ ) ॥ त्रीण्यपराधस्य ॥ सोति ॥ उद्दानम् ॥ ( १ ) ॥ बन्धनम् ॥(२)॥द्वे बन्धनस्य।।२६॥द्वीति॥द्वौ पादौ परिमाणमस्य द्विपाद्यः॥(१)॥एकमपराधे शास्त्रेण बोधितदण्डाद्विगुणदण्डस्य ॥ भेति ॥ भागधेयः ॥ ( १ ) ॥ "करो वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयोः '' इति मेदिनी ॥ ( २ ) ॥ "बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमानस्त्री जरया श्लथचर्मणि ॥ गृहदारुप्रभेदे च जठरावयवेऽपि च'' इति मेदिनी ॥ ( ३ ) ॥ त्रीणि कर्षकादिभ्यो राजग्राह्यभागस्य ॥ घेति ॥ घट्टादौ देयम् ॥ "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्'' इति मेदिनी ॥ ( १ ) ॥ आदिना गुल्मप्रतोल्यादिग्रहः ॥ एकं घट्टादिदेयस्य ॥ प्रेति ॥ प्राभृतम् ॥ ( १ ) ॥ प्रदेशनम् ॥ ( २ ) ॥ द्वे देवताभ्यो मित्रादिभ्यश्च दीयमानस्य ॥ २७ ॥ उपेति ॥ उपायनम् ॥ ( १ ) ॥ उपग्राह्यम् ॥ ( २ ) ॥ उपहारः ॥ ( ३ ) ॥ उपदा ॥ ( ४ ) ॥ चत्वार्युपढौकनस्य ॥—षडप्युपढौकनस्य—इत्यन्ये ॥ "उपायनमुपग्राह्यं प्राभृतं चोपदा स्त्रियाम्'' इत्यमरमाला ॥ याविति ॥ युतयोर्वरवध्वोरिदम् ॥ यौतकम् ॥ "युतकं युगले युक्ते संशयेऽपि च'' इति रभसः ॥ "युतकं संशये युगे । नारीवस्त्राञ्चले युक्ते चलनाग्रे च यौतके'' इति मेदिनी ॥ "यौतकं यौतुकं च तत्'' इति वाचस्पतेरुमध्यमपि ॥ आदिना व्रतभिक्षादिपरिग्रहः ॥ सुदायः ॥ ( १ ) ॥ "हरणं यौतकादीनां द्रव्ये भुजे हृतावपि'' इति मेदिनी ॥ ( २ ) ॥ द्वे कन्यादानकाले व्रतभिक्षादौ च दीयमानद्रव्यस्य ॥ २८ ॥ तेति ॥ तत्कालः ॥ ( १ ) ॥ तदात्वम् ॥ ( २ ) ॥ द्वे वर्तमानकालस्य ॥ उत्तेति ॥ "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः'' इति मेदिनी ॥ ( १ ) ॥ एकमुत्तरकालस्य ॥ सामिति ॥ सांदृष्टिकम् ॥ ( १ ) ॥ एकं व्यापारानन्तरं जायमानस्य फलस्य ॥ विति ॥ "उदर्क एष्यत्कालीनफले मदनकण्टके '' इति मेदिनी ॥ ( १ ) ॥ एकं भाविनः कर्मफलस्य ॥२९॥ अद्रिति ॥ वह्निश्च तोयं चादिर्यस्य ॥ भयहेतुत्वाद्भयम् ॥ आदिना " हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा । अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः'' गृह्यन्ते ॥ अदृष्टहेतुकत्वाददृष्टम् ॥ ( १ ) ॥ एकमग्न्यादिकृतस्य भयस्य ॥ द्रिति ॥ दृष्टम् ॥ ( १ ) ॥ स्वश्च परश्च स्वपरौ तयोश्चक्रे सैन्ये ताभ्यां जातम् ॥ एकं स्वपरसैन्यात् परराष्ट्राच्चौराटविकादेः परचक्राद्दाहविलोपादेर्भयस्य ॥ मेति ॥ गृहस्थत्वात्, आवृताकारत्वाच्च स्वस्य पक्ष एवाहिः, अहेर्भयम् अहिभयम् ॥ ( १ ) ॥ "निजोऽथ मैत्रश्च समाश्रितश्च संबन्धतः कार्यसमुद्भवश्च । भृत्या गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति'' ॥ स्वपक्षात्प्रभवतीति ॥ एकं महीभुजां स्वसहायाज्जातभयस्य ॥ 'भयम्' इति पूर्वाभ्यामपि संबध्यते ॥ ३० ॥

१—"सोढाहे शतमागांसि'' इति माघात्—इति मुकुटः ॥

प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् । नृपासनं तु यद्भद्रासनं सिंहासनं तु तत् ३१॥
हैमं छत्त्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् । भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ३२ ॥
निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी ३४॥
इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः । मदोत्कटो मदकलः कलभः करिशावकः ॥ ३५ ॥
प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ । हास्तिकं गजता वृन्दे करिणी धेनुका वशा ३६॥

प्रेति ॥ "प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः" इति हेमचन्द्रः ॥ ( १ ) ॥ अधिकारः ॥ ( २ ) ॥ द्वे राज्ञां छत्त्रधारणादिव्यापारस्य ॥ चेति ॥ "चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः" इति मेदिनी ॥ "चमरश्चामरे दैत्ये चमरी तु मृगान्तरे" इति हैमः ॥ प्रज्ञाद्यण् ( ५।४।३८ ) ॥ अजादित्वात् ( ४।१।४ ) टाप् ॥ "चामरा चामरं बालव्यजनं रोमगुच्छकम्" इति रभसः ॥ "चामरं चामराऽपि च । दण्डे च बालव्यजने" इति मेदिनी ॥ ( १ ) ॥ "प्रकीर्णकं चामरे स्याद्विस्तरे ना तुरंगमे" इति मेदिनी ॥ ( २ ) ॥ द्वे चामरस्य ॥ न्विति ॥ नृपासनम् ॥ ( १ ) ॥ भद्रासनम् ॥ ( २ ) ॥ द्वे मण्यादिकृतराजासनस्य ॥ सिंहेति ॥ तत् नृपासनं हैमं चेत् ॥ सिंहाकारमासनं सिंहासनम् ॥ ( १ ) ॥ ३१ ॥ एकं सुवर्णकृतराजासनस्य ॥ छेति ॥ छत्त्रम् ॥ ( १ ) ॥ आतपत्रम् ॥ ( २ ) ॥ द्वे छत्त्रस्य ॥ रेति ॥ राज्ञस्तत् छत्त्रम् ॥ नृपलक्ष्म ॥ ( १ ) ॥ एकं नृपच्छत्त्रस्य ॥ भेति ॥ भद्रकुम्भः ॥ ( १ ) ॥ पूर्णकुम्भः ॥ ( २ ) ॥ द्वे पूर्णकलशस्य ॥ भ्रिति ॥ भृङ्गारः॥ ( १ ) ॥ कनकालुका ॥ ( २ ) ॥ द्वे सुवर्णकृतजलपात्रस्य ॥ ३२ ॥ नीति ॥ "निवेशः सैन्यविन्यासे न्यासे रङ्गविवाहयोः" इति हैमः ॥ ( १ ) ॥ शिबिरम् ॥ ( २ ) ॥ षण्ढे क्लीबे ॥ द्वे आगन्तुकसैन्यवसतेः ॥ सेति ॥ सज्जनम् ॥ ( १ ) ॥ उपरक्षणम् ॥ ( २ ) ॥ द्वे सैन्यरक्षणाय नियुक्तप्रहरिकादिन्यासस्य ॥ हेति ॥ हस्तिनश्च अश्वाश्च रथाश्च पादातं च ॥ सेनाङ्गम् ॥ ( १ ) ॥ चत्वारोऽवयवा यस्य नाविकाटविकादीनां पदातावन्तर्भावः ॥ नौकानां रथेष्वन्तर्भावः ॥ महिषादीनां गजाश्वेऽन्तर्भावः---इति मुकुटः ॥ एकं हस्त्यादिचतुष्टयस्य ॥३३॥ देति ॥ दन्ती ॥ ( १ ) ॥ दन्तावलः ॥ ( २ ) ॥ हस्ती ॥ ( ३ ) ॥ द्विरदः ॥ ( ४ ) ॥ अनेकपः ॥ ( ५ ) ॥ द्विपः ॥ ( ६ ) ॥ मतङ्गजः ॥ ( ७ ) ॥ गजः ॥ ( ८ ) ॥ "नागो मतङ्गजे सर्पे पुंनागे नागकेसरे । क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ॥ देहानिलविशेषे च श्रेष्ठे स्यादुत्तरास्थितः । नागं रङ्गे सीसपत्त्रे स्त्रीबन्धे करणान्तरे" इति हैमः ॥ ( ९ ) ॥ "कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे । पाटलायां च" इति हेमचन्द्रः ॥ ( १० ) ॥ "वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे" इति विश्वः ॥ ( ११ ) ॥ करी ॥ ( १२ ) ॥ ३४ ॥ इभः ॥ ( १३ ) ॥ "स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः" इति विश्वः ॥ स्तम्बे रमते स्तम्बेरमः ॥ ( १४ ) ॥ पद्मी ॥ ( १५ ) ॥ पञ्चदश हस्तिनः ॥ यूिति ॥ यूथनाथः ॥ ( १ ) ॥ यूथपः ॥ ( २ ) ॥ द्वे यूथमुख्यहास्तिनः ॥ मेति ॥ मदोत्कटः ॥ ( १ ) ॥ मदकलः ॥ ( २ ) ॥ द्वे अन्तर्मदस्य हस्तिनः ॥ केति ॥ कलभः ॥ ( १ ) ॥ करिशावकः ॥ ( २ ) ॥ द्वे करिशावकस्य ॥ ३५ ॥ प्रेति ॥ प्रभिन्नः ॥ ( १ ) ॥ "गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ मत्तः ॥ ( ३ ) ॥ त्रीणि जातमदस्य ॥ सेति ॥ "उद्वान्त उद्गीर्णे निर्मदद्विपे" इति हैमः ॥ ( १ ) ॥ निर्मदः ॥ ( २ ) ॥ द्वे गतमदस्य ॥ हेति ॥ हास्तिकम् ॥ ( १ ) ॥ गजता ॥ ( २ ) ॥ द्वे गजवृन्दे ॥ केति ॥ करिणी ॥ ( १ ) ॥ "स्याद्धेनुका करिण्यां च धेनावपि पुंसि दानवविशेषे" इति मेदिनी ॥ ( २ ) ॥ "वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि" इति हैमः ॥ तालव्यशा ॥ "वशा वन्ध्यासुतायोषास्त्रीगवीकरिणीषु च" इति तालव्यान्तेषु विश्वात् ॥ ( ३ ) ॥ त्रीणि

**गण्डः कटो मदो दानं वमथुः करशीकरः । कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान्
अवग्रहो ललाटं स्यादिषीका त्वक्षिकूटकम् । अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ३८॥
अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ।आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम्
पक्षभागः पार्श्वभागो दन्तभागस्तु योऽग्रतः। द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥४०॥**

करिण्याः ॥ ३६॥ गेति ॥ "गण्डः स्यात्पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे" इति मेदिनी ॥ ( १ ) ॥ "कटः श्रोणौ द्वयोः पुंसि कलिङ्गेऽतिशये शवे । समये गजगण्डेऽपि पिप्पली तु कटी मता" इति मेदिनी ॥ ( २ ) ॥ द्वे गजगण्डयोः ॥ मेति ॥ "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति मेदिनी ॥ ( १ ) ॥ "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ द्वे मदपतनस्य ॥ वेति ॥ "वमथुर्वमने कासे मातङ्गकरशीकरे" इति हैमः ॥ ( १ ) ॥ करस्य शीकरः करशीकरः ॥ ( २ ) ॥ द्वे शुण्डान्निर्गतजलस्य ॥ किति ॥ "कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे । कार्मुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ' इति मेदिनी ॥ ( १ ) ॥ "पिण्डो बाले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि ॥ ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः" इति मेदिनी ॥ एकं शिरसः पिण्डयोः ॥ तेति ॥ तयोः कुम्भयोः ॥ विदुः ॥ ( १ ) ॥ एकं कुम्भमध्यदेशस्य ॥ ३७ ॥ अवेति ॥ "अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी ॥ रुद्रोऽपि—"गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः" इति ॥ ( १ ) ॥ एकं गजललाटस्य ॥ इषीति ॥ ( ह्रस्वादिदीर्घमध्या ) इषीका ॥ 'ईषिका' ह्रस्वमध्या दीर्घादिरपि ॥ ( १ ) ॥ अक्षिकूटकं चक्षुर्गोलकम् ॥ एकं नेत्रगोलकस्य ॥ अपेति ॥ "निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे" इति मेदिनी ॥ ( १ ) ॥ एकं हस्तिनोऽपाङ्गदेशस्य ॥ केति कर्णस्य मूलम् ॥ "चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्" इति मेदिनी ॥ ( १ ) ॥ एकं हस्तिनः कर्णमूलस्य ॥ ३८ ॥ अध इति ॥ कुम्भोऽत्र वातकुम्भः ॥ "वाहित्थं वातकुम्भाधः" इति भागुरिः ॥ स च ललाटाधोभागः ॥ "कुम्भयोरन्तरं विदुः । वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यधः" इति हैमनाममाला ॥ ( १ ) ॥ एकं कुम्भस्याधोभागस्य ॥ प्रेति ॥ "प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः" इति रुद्रः ॥ ( १ ) ॥ एकं वाहित्थाधोभागस्य दन्तमध्यस्य ॥ आसेति ॥ "आसनं द्विरदस्कन्धे पीठे यात्रानिवर्तने" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ स्कन्धदेशः ॥ ( २ ) ॥ द्वे गजस्कन्धदेशस्य ॥ पेति ॥ "पद्मकं स्यात्पद्मकाष्ठबिन्दुजालकयोरपि" इति मेदिनी ॥ ( १ ) ॥ बिन्दुजालकम् ॥ ( २ ) ॥ द्वे गजमुखादिस्थबिन्दुसमूहस्य ॥ पक्षेति ॥ पक्षभागः ॥ ( १ ) ॥ पार्श्वभागः ॥ ( २ ) ॥ द्वे गजपार्श्वस्य ॥ ३९ ॥ देति ॥ दन्तभागः ॥ ॥ ( १ ) ॥ एकमग्रभागस्य ॥ द्वाविति ॥ पूर्वा च पश्चाच्च पूर्वपश्चाच्च ते जङ्घे च ॥ पूर्वपश्चाज्जङ्घे आदी यस्य सः ॥ पूर्वपश्चादिश्चासौ देशश्च ॥ पूर्वजङ्घाभागो गात्रम् ॥ पश्चाज्जङ्घाभागोऽवरम् ॥ "गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे" इति मेदिनी ॥ ( १ ) ॥ "अवरं गजान्त्यजङ्घादिदेशे च चरमे त्रिषु" इति मेदिनी ॥ "गजान्त्यजङ्घादिदेशेऽवरं स्याच्चरमे त्रिषु" इति रुद्रः ॥ ( १ ) ॥ "गात्रावरे पूर्वपश्चात्पादयोः परिभाविते" इति भागुरिः ॥ "द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे न ना" इति रभसः ॥ कश्चित्तु—अष्ठीवद्भागादूर्ध्वमवरम् । अधस्तु गात्रम्—इत्याह ॥ अपरा पवर्गादिमध्या च ॥ "अपरं तूत्तरार्धे स्यात्पश्चाद्भागे च दन्तिनाम्" इति विश्वः॥ क्रमेणैकैकं गजजङ्घापूर्वापरभागयोः ॥४०॥

---

१—"ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा" इति मुरारिः ॥ "तस्मिन्नस्यदिषीकास्त्रम्-इति रघुः-इति मुकुटः ॥
२—तथा च माघश्लेषः—"वद्धापराणि परितो निगडान्यलावीत्" इति—इति मुकुटः ॥

तोत्त्रं वैणुकमालानं बन्धस्तम्भेऽथ शृङ्खला अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिःस्त्रियाम्
दूष्या कक्ष्या वरत्रा च कल्पना सज्जना समे । प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः४२
वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी । घोटके पीतितुरगतुरंगाश्वतुरंगमाः ॥ ४३ ॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः । आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥४४ ॥
वनायुजाः पारसीकाः काम्बोजा बाल्हिका हयाः। ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः॥

तवेति ॥ "तोत्त्रं तु प्राजने वैणुकेऽपि च" इति मेदिनी ॥ ( १ ) ॥ 'वैणुकम् ॥ वेणुकम्' इति पाठान्तरम् ॥ ( २ ) ॥ द्वे तोदनदण्डस्य ॥ आलेति ॥ आलानम् ॥ ( १ ) ॥ बन्धस्तम्भः ॥ ( २ ) ॥ द्वे बन्धनस्तम्भस्य ॥ अथेति ॥ "शृङ्खला पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने" इति हैमः ॥ "शृङ्खला पुंस्कटीवस्त्रबन्धेऽपि निगडे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ अन्दुकः ॥ ( २ ) ॥ निगडः ॥ ( ३ ) ॥ त्रीणि "वेडी" इति ख्यातस्य ॥ अङ्केति ॥ अङ्कुशः ॥ ( १ ) ॥ सृणिः ॥ ताल्व्योष्मादिरपि ॥ "शृणिरङ्कुशवाची च काशश्च तृणवाचकः" इति शभेदः ॥ ( २ ) ॥ "आरक्षमग्नमवमत्य सृणिं शिताग्रम्" इति तु माघस्य प्रमादः ॥ सृणेः स्त्रीत्वात् ॥ द्वे अङ्कुशस्य ॥ ४१ ॥ द्विति ॥ "दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे" इति मेदिनी ॥ "चूषा" इति मुकुटः ॥ ( १ ) ॥ "कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च " इति मेदिनी ॥ ( २ ) ॥ वरत्रा ॥ ( ३ ) ॥ त्रीणि गजमध्यबन्धनस्य ॥ केति ॥ "अथ कल्पना । करिणः सज्जनायां स्त्री क्लीबं क्लृतौ च कल्पने" इति मेदिनी ॥ ( १ ) ॥ "सज्जनं तु भवेत्क्लीबमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात्कल्पनायां च योषिति" इति मेदिनी ॥ ( २ ) ॥ द्वे कल्याणाद्यारोपणेन सज्जीकरणस्य ॥ प्रेति ॥ "प्रवेणिः स्त्री कुथावेण्योः" इति मेदिनी ॥ आस्तरणम् ॥ ( २ ) ॥ "वर्णः स्वर्णे व्रते स्तुतौ । रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे ॥ भेदे गीतक्रमे चित्रे यशस्तलाविशेषयोः । अङ्गरागे च वर्णं तु कुङ्कुमे" इति हैमः ॥ ( ३ ) ॥ परिस्तोमः ॥ ( ४ ) ॥ "कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि" इति मेदिनी ॥ क्लीबेऽपि ॥ "स्त्री प्रवेणी, कुथं त्रिषु" इति बोपालितः ॥ ( ५ ) ॥ पञ्च गजोपर्यास्तरणचित्रकम्बलस्य ॥ ४२ ॥ वीति ॥ "वीतमसारगजे स्यादङ्कुशकर्मण्यसारतुरगे च' इति मेदिनी ॥ ( १ ) ॥ न सारो बलमस्य ॥ हस्ती चाश्वश्च हस्त्यश्वम् ॥ एकमसारहस्त्यश्वस्य ॥ वेति ॥"वारी स्याद्गजबन्धन्यां कलश्यामपि योषिति । वारिर्वागजबन्धन्योः स्त्री क्लीबेऽम्बुनि बालके"इति मेदिनी ॥ ( १ ) ॥ गजबन्धनी ॥ ( २ ) ॥ द्वे गजबन्धनशालायाः ॥ घोटेति ॥ घोटकः ॥ "घोटः" अपि ॥ "घोटसैन्धवगन्धर्वा हयवाजितुरङ्गमाः" इति रभसः ॥ (१)॥ "पीतिर्नाऽश्वे स्त्रियां पाने" इति मेदिनी॥'वीतिः' इति च। "वीतिरश्वेऽसने गतौ । प्रजने धावने दीप्तौ" इति हैमः॥ ( २ ) ॥ " तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः" इति मेदिनी ॥ (३) ॥ तुरङ्गः॥(४)॥ अश्वः ॥ ( ५ ) ॥ तुरङ्गमः ॥ ( ६ )॥४३॥ "वाजी बाणाश्वपक्षिषु" इति मेदिनी ॥ ( ७ ) ॥ "वाहो भुजे पुमान्मानभेदाश्ववृषवायुषु" इति मेदिनी ॥ ( ८ ) ॥ " अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी ॥ (९) " गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे ॥ अन्तराभवदेहे च" इति हैमः ॥ (१०) ॥ हयः ॥ ( ११) ॥" सैन्धवस्तु सिन्धुदेशोद्भवे हये । मणिमन्थेऽपि" इति हैमः ॥ ( १२ ) ॥ सप्तिः ॥ (१३) ॥ त्रयोदशाश्वस्य ॥ आजेति ॥ "शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे ॥ आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः" इत्यश्वशास्त्रम् ॥ ( १ ) ॥ कुलीनाः ॥ ( २ ) ॥ द्वे कुलीनाश्वस्य ॥ वीति ॥ "विनीतः सुवहाश्वे स्याद्वणिज्यपि पुमांस्त्रिषु । जितेन्द्रियेऽपनीते च निभृते विनयान्विते" इति मेदिनी ॥(१) ॥ साधुवाही॥(२) ॥ द्वे साधुवाहिनोऽश्वस्य॥४४॥वेति ॥ "आजानेयः कुलजो, वनायुजः पारसीक उक्तः" इति रत्नकोषः ॥(१)॥ पारसीकः ॥(१॥ काम्बोजः॥(१)॥

१—'स्त्रियाम्' इत्येकदेशेन स्त्रीपुंसशब्दसमुदायो लक्ष्यते । तेन सृणेः पुंस्त्वमपि, इति सुभूत्यादयः । स्त्रियामिति प्रायिकत्वादुक्तम्, इति तु वयम्—इति मुकुटः ॥

**पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः। बालः किशोरो वाम्यश्वा वडवा वाडवं गणे**
**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते । कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ४७॥**
**निगालस्तु गलोद्देशे वृन्दे त्वाश्वीयमाश्ववत्।आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम्॥४८॥**
**गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम्।कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥**
**पुच्छोऽस्त्री लूमलांगूले बालहस्तश्च बालधिः । त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥**

" वाल्हीकं वाल्हिकं धीराहिङ्गुनोर्नाऽश्वदेशयोः " इति त्रिकाण्डशेषतो दीर्घमध्योऽपि ॥ ( १ ) ॥ एते हयविशेषाः प्रत्येकं भिन्नाः ॥—"वनायुजः पारसीक उक्तः" इति रत्नकोषात्, "श्वेताश्वं कर्काख्यं, वनायुजमपि पारसीकं तु" इति नाममालायाश्च द्वयोः पर्यायता—इत्यपरे ॥ येति ॥ "ययुः पुमानश्वमेधतुरगे च तुरङ्गमे" इति मेदिनी ॥(१) ॥ अश्वमेधीयः ॥(२) ॥ **द्वे अश्वमेधीयस्याश्वस्य**॥ जेति॥ "**जव**नस्तु स्यदे वेगिहये ना वेगिनि त्रिषु" इति मेदिनी ॥ जवाधिकः ॥ ( २ ) ॥ **द्वे अधिकवेगस्य** ॥ ४५ ॥ ध्रिति ॥ पृष्ठ्यः ॥(१)॥ "**स्थौरी** पृष्ठ्यः पृष्ठवहः" इति बोपालितः ॥ **द्वे भारवाहिनोऽश्वस्य** ॥ सीति ॥ "**कर्कः** कर्केतने वह्नौ शुक्लाश्वे दर्पणे घटे" इति मेदिनी ॥ ( १ ) ॥ **एकं शुक्लाश्वस्य** ॥ रेति ॥ "**रथ्या** रथौघविशिखावर्तनीषु च योषिति । रथवोढरि पुँल्लिङ्गः" इति मेदिनी ॥ ( १ ) ॥ **एकं रथवाहकाश्वस्य**॥ बेति ॥ "अथ **किशोरो**ऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः" इति मेदिनी ॥ ( १ ) ॥ **एकं बालाश्वस्य** ॥ वेति ॥ "**वामी** शृगालीवडवारासभीकरभीषु च" इति मेदिनी ॥ (१) ॥ अश्वा ॥(२)॥ "**वडवा** द्विजयोषिति । अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि च" इति मेदिनी॥(३)॥ **त्रीणि वडवायाः**॥ वेति ॥ "**वाडवं** करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले" इति मेदिनी ॥ ( १ ) ॥ **एकं वडवानां समूहस्य** ॥ ४६ ॥ त्रीति ॥ अश्वेन एकाहेनातिक्रम्यते यद्वर्त्म ॥ आश्वीनम् ॥ ( १ ) ॥ **एकमेकदिनगम्याध्वनः** ॥ केति ॥ "**कश्यं** त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमध्ययोः" इति मेदिनी ॥ ( १ ) ॥ **एकमश्वानां मध्यभागस्य** ॥ हेषेति ॥ हेषा ॥ ( १ ) ॥ ह्रेषा ॥ ( २ ) ॥ **द्वे अश्वानां निस्वनस्य (शब्दस्य)** ॥ ४७ ॥ नीति ॥ निगालः ॥ ( १ ) ॥ गलोद्देशः ॥ ( २ ) ॥ "घण्टाबन्धसमीपस्थो **निगालः** कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः" इत्यश्वशास्त्रम् ॥ **द्वे ग्रीवायाः समीपभागस्य** ॥ त्रीति ॥ आश्वीयम् ॥ ( १ ) ॥ आश्वम् ॥ ( २ ) ॥ **द्वे अश्ववृन्दस्य** ॥ आस्केति ॥ " उत्तेरितमुपकण्ठम**आस्कन्दितक**मित्यपि । उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः" इति हैममाला ॥ ( १ ) ॥ "अथ **धोरितकं** धौर्यं धा ( धो ) रणं धौरितं च तत्" इति वाचस्पतिः ॥ "तत्र **धौरितकं** धौर्यं धोरणं धौरितं च तत् । बभ्रुकङ्कशिखिक्रोडगतिवत्" इति हैमनाममाला ॥ ( १ ) ॥ "उत्तेजितं **रेचितं** स्यान्मध्यवेगेन या गतिः" इति हैमनाममाला ॥ ( १ ) ॥ " **वल्गितं** पुनः । अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् " इति नाममाला ॥ ( १ ) ॥ " **प्लुतं** तु लङ्घनं पक्षिमृगगत्यनुहारकम् " इति हैमः ॥ " प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके " इति हैमः ॥ ॥ ( १ ) ॥ ४८ ॥ अमूरश्वानां पञ्च गतयः ॥ " **धारा** सैन्याग्रिमस्कन्धे तुरंगगतिपञ्चके" इति मेदिनी ॥ ( १ ) ॥ **गतिविशेषाणामेकम्** ॥ घविति ॥ घोणा ॥ ( १ ) ॥ "**प्रोथो**ऽस्त्री हयघोणायां ना कट्याध्वगे त्रिषु" इति मेदिनी ॥ ( २ ) ॥ **द्वे अश्वभ्रमणस्य** ॥ केति ॥ कविका ॥ ( १ ) ॥ खलीनः ॥ ( २ ) ॥ **द्वे "कडिआली" इति ख्यातायाः** ॥ शेति॥ "**शफं** मूले तरूणां स्याद्गवादीनां खुरेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "**खुरः** कोलदले शफे" इति मेदिनी ॥(२)॥ **द्वे खुरस्य** ॥४९॥ प्विति ॥ "**पुच्छः** पश्चात्प्रदेशः स्याल्लाङ्गूले **पुच्छ**मिष्यते" इति मेदिनी ॥ ( १ ) ॥ लूमम् ॥ ( २ ) ॥ "**लाङ्गूलं** पुच्छशेफयोः" इति मेदिनी ॥ ( ३ ) ॥ **त्रीणि पुच्छस्य** ॥ वेति ॥ " वालो ना **कुन्तले**ऽश्वस्य गजस्यापि च बालधौ" इति पवर्गीयादौ मेदिनी ॥ बालो हस्त इव बालहस्तः ॥ ( १ ) ॥ बालधिः ॥ (२) ॥ **द्वे केशवल्लाङ्गूलमात्रस्य** ॥ त्रीति ॥ उपावृत्तः ॥ ( १ ) ॥ लुठितः ॥ ( २ ) ॥ **द्वे श्रमशान्त्यर्थं**

**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः । असौ पुष्यरथश्चक्रयानं न समराय यत्॥५१
कर्णीरथः प्रवहणं डयनं च समं त्रयम्।क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम्॥५२
शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम् । उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ५४॥
त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे । धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः॥५५॥
चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्। पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोराणिः**

पुनःपुनर्भूमौ लुठितस्याश्वस्य ॥ ५० ॥ येति ॥ युद्धार्थे चक्रिणि ( चक्रसहिते ) याने ॥ शताङ्गः॥(१)॥ "स्यन्दनं तु स्रुतौ नीरे, तिनिशे ना रथेऽस्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ "रथः पुमानवयवे स्यन्दने वेतसेऽपि च" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि युद्धार्थं सज्जितस्य रथस्य ॥ असाविति ॥ यच्चक्रयानं समराय ( युद्धाय ) न (अन्तस्थमध्यः) पुष्यरथः ॥ पकारमध्यपाठे तु पुष्परथः ॥ ( १ ) ॥ एकं युद्धं विना यात्रासेवादौ सुखभ्रमणार्थस्य रथस्य ॥ ५१ ॥ केति ॥ कर्णीरथः ॥ ( १ ) ॥ प्रवहणम् ॥ ( २ ) ॥ डयनम् ॥ "हयनम्" इति च ॥ ( ३ ) ॥ त्रीणि पुरुषस्कन्धवाह्यस्य यानविशेषस्य "डोला" इति ख्यातस्य ॥ क्लीति ॥ अनः ॥ ( १ ) ॥ "शकटः शाकिनीगावो यानमास्कन्दनं स्वनम् । अनूपः पर्वतो राजा दुर्भिक्षे नव वृत्तयः" इति ॥ ( २ ) ॥ द्वे शकटस्य ॥ गेति ॥ गन्त्री ॥(१)॥ कम्बलिवाह्यकम् ॥ ( २ ) ॥ द्वे शकटिकायाः ॥५२॥ शीति ॥ शिबिका ॥ ( १ ) ॥ याप्यैरधमैर्वाह्यं यानं याप्ययानम् ॥ ( २ ) ॥ द्वे "पालकी" इति ख्यातायाः ॥ दविति ॥ दोला ॥ ( १ ) ॥ प्रेङ्खा ॥ ( २ ) ॥ आदिना शयनखट्वावाह्यादिर्लोलः ॥ द्वे "हिंदोला" इति ख्यातायाः ॥ 'डोली' इति ख्यातायाः वा ॥ उभाविति ॥ द्वीपिनो व्याघ्रस्य च विकारः ॥ द्वैपेन वैयाघ्रेण च चर्मणा परिवृतो रथः॥ द्वैपः ॥ (१) ॥ वैयाघ्रः ॥ ( २ ) ॥द्वे व्याघ्रचर्मवेष्टितरथस्य ॥५३॥ पेति॥ "स्यात्पाण्डुकम्बलः श्वेतप्रावारग्रावभेदयोः" इति मेदिनी ॥ पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली ॥(१)॥ एकं शुक्लकम्बलवेष्टितरथस्य ॥ रेति ॥ कम्बलेन वस्त्रेण च प्रावृतो रथः ॥ काम्बलः ॥ ( १ ) ॥ वास्त्रः॥ ( १ ) ॥ आदिना चार्मक्षौमदौकूलादिग्रहः॥ एकैकं कम्बलादिभिरावृतस्य रथस्य ॥५४ ॥ त्रीति ॥ द्वैपादयो वास्त्रान्ताः ॥ रोति ॥ "रथ्यो रथांशे रथवोढरि । रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे" इति हैमः॥ ( १ ) ॥ रथकट्या ॥ ( २ ) ॥ रथव्रजः ॥ ( ३ ) ॥ त्रीणि रथसमूहस्य ॥ धिवति ॥" धूर्यानमुखभारयोः इति हैमः ॥ ( १ ) ॥ यानमुखम् ॥ ( २ ) ॥ द्वे वोढृबन्धनस्थानस्य ॥ स्येति ॥ रथाङ्गम् ॥ ( १ ) ॥ अपस्करः ॥ (२) ॥ द्वे [१]चक्रभिन्नस्य रथारम्भकस्य॥५५॥ चेति॥"चक्रः कोके पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि" इति मेदिनी ॥ ( १ ) ॥ " रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहंगमे" इति मेदिनी ॥ ( २ ) ॥ द्वे चक्रस्य ॥ तेति ॥ तस्य चक्रस्यान्तो भूस्पर्शिभागः ॥ "नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ प्रधिः ॥ ( २ ) ॥ द्वे चक्रान्तस्य ॥ पीति ॥ पिण्डिका ॥ ( १ ) ॥ "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ॥ द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे" इति मेदिनी ॥ ( २ ) ॥ द्वे रथचक्रमध्ये मण्डलाकारस्य ॥ अक्षेति ॥ अक्षस्य नाभिक्षेप्यस्यान्ते कीलके ॥ " [२]अणिराणिवदक्षाग्रकीले स्यादाश्रिसीमयोः" इति विश्वः ॥ "अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः" इति मेदिनी ॥ ( १ ) ॥ एकं चक्रधारणार्थं स्थापितस्य कील-

१—इदं च 'रथारम्भकं चक्रादन्यत्' इति भट्टक्षीरस्वामिग्रन्थानुरोधेनोक्तम् ॥ मुकुटस्तु—सामान्येन रथस्याङ्गमक्षयुगचक्रादिकमपस्करः—इति, अग्रे—रथांगत्वेनैव गतार्थस्यापि 'चक्रम्' इति विशेषतो नामान्तरप्रतिपादनाय 'तस्यान्ते नेमिः' इत्युक्तये च रथाङ्गस्यानुवादः—इति च प्रोक्तवान् ॥ २—"कृदिकारात्" इति ङीषि 'अणी' 'आणी' च ॥ 'समाधुर्यीवाणी मनो हरति' इति दमयन्तीश्लेषात् ॥

रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः। अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगान्तरम् ॥ ५७ ॥
सर्वं स्याद्वाहनं यानं युग्यं पत्त्रं च धोरणम्। परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः। नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ५९
सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः। रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः॥६०॥
भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः। सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ६१॥
बलिनो ये साहस्रेण सहस्रास्ते सहस्रिणः। परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२॥
कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः। बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम्॥

कस्य ॥५६॥ रेति ॥ रथगुप्तिः ॥ (१) ॥ "वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः" इति मेदिनी ॥ (२) ॥ द्वे परप्रहरणाभिघातरक्षार्थं रथसन्नाहवदावरणस्य॥ क्विति ॥ "कूबरास्त्रिषु चारौ ना कुब्जकेऽस्त्री युगंधरे" इति मेदिनी॥ (१)॥ युगं वोढृबन्धनकाष्ठं धारयाति युगंधरः॥(२)॥द्वे युगकाष्ठबन्धनस्थानस्य ॥ अन्विति ॥ "अनुकर्षो रथाधःस्थदारुण्यप्यनुकर्षणे" इति मेदिनी ॥ नान्तोऽप्ययम् ॥ "अनुकर्षा नाक्षतलदारु" इति बोपालितात् ॥ (१) ॥ एकं रथस्याधस्तलभागदारुणः ॥ प्रेति ॥ प्रासङ्गः ॥ (१) ॥ रथाद्यङ्गयुगादन्यद्युगं वृषभाणां दमनकाले यदासज्यते, तस्यैकम् ॥ स्वामी तु "युगाद्युगः" इति पाठमाश्रित्य--युगेनातति युगाद्रथादिः ॥ तस्य युगो ना—इत्याह ॥ अन्ये तु--युगान्तरं यद्बध्यते। तस्य--इत्याहुः ॥ "युगं द्वितीयं प्रासङ्गः" इति कात्यः ॥ ५७ ॥ सेति ॥ सर्वं हस्त्यश्वरथादिदोलान्तम् ॥ वाहनम् ॥ (१) ॥ "यानं स्याद्वाहने गतौ" इति मेदिनी ॥ (२) ॥ युग्यम् ॥ (३) ॥ "पत्त्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः" इति मेदिनी ॥ (४) ॥ धोरणम् ॥ (५) ॥ पञ्च वाहनमात्रस्य ॥ पेति ॥ विनीतकानामिदं वैनीतकम् ॥ (१) परम्परया यद्वाह्यं वहति (शकटं यथाऽऽरूढम्) तस्यैकम् ॥ ५८ ॥ आधविति ॥ आधोरणाः ॥ (१) ॥ हस्तिपकाः ॥ (२) ॥ हस्त्यारोहाः ॥ (३) ॥ निषादिनः ॥ (४) ॥ चत्वारि हस्तिपकानाम् ॥ नीति ॥ नियन्ता ॥ (१) ॥ प्राजिता ॥ (२) ॥ यन्ता ॥ (३) ॥ "सूतस्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते। वन्दिपारदयोः पुंसि, प्रसूते प्रेरिते त्रिषु" इति विश्वमेदिन्यौ ॥ (४) ॥ क्षत्ता ॥ (५) ॥ सारथिः ॥ (६) ॥ ५९ ॥ सव्येष्ठा ॥ 'सव्येष्ठः' इत्यदन्तोऽपि ॥ "प्राजिता दक्षिणस्थश्च सादी सारथिरुच्यते। सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च" इत्यरमाला ॥ (७) ॥ दक्षिणस्थः ॥ (८) ॥ रथं कुटुम्बयितुं शीलमस्य ॥ यद्वा रथस्य कुटुम्बम् ॥ रथकुटुम्बमस्यास्ति ॥ तस्य अष्टौ संज्ञाः॥रेति॥रथिनः॥(१)॥स्यन्दनमारोहन्ति स्यन्दनारोहाः ॥(२)॥द्वे रथारूढस्य योद्धुः ॥ अश्वेति ॥ अश्वारोहाः ॥ (१) ॥ सादिनः ॥ "सादी तुरंगमातङ्गरथारोहेषु दृश्यते" इति मेदिनी ॥ (२) ॥ द्वे "असवार" इति ख्यातस्य ॥ ६० ॥ भेति ॥ "भटः स्यात् पुंसि वीरे च विशेषे पामरस्य च" इति मेदिनी ॥ (१) ॥ योधः ॥ (२) ॥ योद्धा ॥ (३) ॥ त्रीणि योधस्य ॥ सेनेति ॥ सेनारक्षः ॥ (१) ॥ "सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके" इति मेदिनी ॥ द्वे प्रहरिकादेः ॥ सेनेति ॥ "सैन्यं सैनिकसेनयोः" इति हैमः ॥ (१) ॥ सैनिकः ॥ (२) ॥ द्वे सेनायां मिलितस्यैकदेशीभूतस्य ॥ ६१ ॥ बेति ॥ सहस्रं बलानि सन्ति येषाम् ॥ साहस्राः ॥ (१) ॥ सहस्रिणः ॥ (२) ॥ द्वे सहस्रसंख्याकेन गजादिना बलवतः ॥ पेति ॥ परिधिस्थः ॥ (१) ॥ परिचरः ॥(२)॥ द्वे सेनायां राज्ञो दण्डकारिणः ॥ प्रयाणे सामन्तस्यापकर्षकस्य—इत्यन्ये ॥ रथगजादेश्चक्रपादादिरक्षकस्य—इति केचित् ॥ सेनेति ॥ "सेनानीः स्यात् पुमान् कार्तिकेये सेनापतौ पुमान्" इति मेदिनी ॥ (१) ॥ वाहनीपतिः ॥ (२) ॥ द्वे सेनापतेः ॥ ६२ ॥ केति ॥ "कञ्चुको वारबाणे स्यान्निर्मोके

---

१--हेमचन्द्रोऽपि स्वोपज्ञनाममालायाम् "प्रासङ्गस्तु युगान्तरम्" इति पठित्वा-द्वितीयं युगं युगान्तरम्। यत्काष्ठं वत्सानां दमनकाले स्कन्ध आसज्यते। यन्मुनिः--'युगं द्वितीयं प्रासङ्गः'-इति व्याख्यातवान् ॥

**शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् । उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥६४॥
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् । संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥६५॥
त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे । पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥
पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः । शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥६७॥
कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् । अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥६८॥
धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ॥ स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः
याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ । नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ७०**

कवचेऽपि च । वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके । कञ्चुक्यौषधिभेदे" इति मेदिनी ॥ ( १ ) ॥ वारबाणः ॥ ( २ ) ॥ द्वे चोलकाकृतिसंनाहस्य ॥ येति ॥ "सारसनमप्युरस्त्रे तनुत्रिणां मेखलायां च" इति मेदिनी ॥ विश्वोऽपि---"सारसनं मेखलायामुरस्त्रे च तनुत्रिणाम्" इति ॥ ( १ ) ॥ आधिकाङ्गः ॥ क्वचित्तु "सारसनाधिपाङ्गे" इति पाठः ॥ यत्कात्यः----"अधिपाङ्गं सारसनम्" इति ॥ दुर्गस्तु----"तस्य सारसनं ज्ञेयं धिपाङ्गं च निबन्धनम्" इति ॥ ( २ ) ॥ द्वे कञ्चुकदाढर्यार्थं मध्यकाये निबद्धस्य ॥ अथेति ॥ शीर्षकम् ॥ ( १ ) ॥ ६३ ॥ "शीर्षण्यं शीर्षरक्षणे । शीर्षण्यो विशदे कचे" इति हैमः ॥ ( २ ) ॥ शिरस्त्रम् ॥ ( ३ ) ॥ त्रीणि "टोप" इति ख्यातस्य ॥ अथेति ॥ तनुत्रम् ॥ ( १ ) ॥ वर्म ॥ (२)॥ "दंशनं वर्मदंशयोः" इति हैमः ॥( ३ )॥ उरश्छदः ॥ ( ४ ) ॥ कङ्कटकः ॥ ( ५ ) ॥ " जगरः कङ्कटो योग संनाहः स्यादुरश्छदः" इति बोपालितः ॥ ( ६ ) ॥ "कवचो गर्दभाण्डे च संनाहे पटहेऽपि च" इति विश्वमेदिन्यौ ॥ ( ७ )॥ सप्त संनाहस्य ॥ ६४ ॥ आम्विति ॥ आमुक्तः ॥ ( १ ) ॥ प्रतिमुक्तः ॥ ( २ ) ॥ पिनद्धः ॥ ( ३ ) ॥ अपिनद्धः ॥ (४) ॥ चत्वारि परिहितकवचादेः ॥ परिहितस्य वस्त्रादेः-- इति मुकुटः ॥ समिति ॥ "संनद्धो वर्मिते व्यूढे" इति मेदिनी ॥ ( १ ) ॥ वर्मितः ॥ ( २ ) ॥ "अथ सज्जः स्यात्संनद्धे संभृते त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ दंशितः ॥ ( ४ ) ॥ व्यूढो धृतः कङ्कटो येन व्यूढकङ्कटः ॥ ( ५ ) ॥ पञ्च धृतसंनाहस्य ॥ ६५ ॥ त्रीति ॥ आमुक्तादयो व्यूढकङ्कटान्ताः ॥ वेति ॥ कवचिनां समूहः कावचिकम् ॥ ( १ ) ॥ एकं धृतसंनाहानां गणस्य ॥ पेति ॥ पदातिः ॥ ( १ ) ॥ "पत्तिः सेनाभित्पद्गयोर्गतौ" इति हैमः ॥ ( २ ) ॥ पदगः ॥ ( ३ ) ॥ पदातिरेव पादातिकः ॥ "पादाविकः" इति क्वचित्पाठः ॥ ( ४ ) ॥ पदाजिः ॥ ( ५ ) ॥ ६६ ॥ पद्गः ॥ ( ६ ) ॥ पदिकः ॥ ( ७ ) ॥ पादातशब्दोऽप्यत्र ॥ "पदातिपत्तिपादातपादाविकपदाजयः" इत्यमरमाला ॥ सप्त पदातेः ॥ अथेति ॥ पादातम् ॥ ( १ ) ॥ पत्तिसंहतिः ॥ ( २ ) द्वे पदातीनां समूहस्य ॥ शेति ॥ शस्त्राजीवः ॥(१)॥ काण्डपृष्ठः ॥ "काण्डस्पृष्टः" इति मुकुटः ॥(२)॥ आयुधीयः ॥(३)॥ आयुधिकः ॥ ( ४ ) ॥ चत्वारि शस्त्रजीविनः ॥ ६७ ॥ क्रिति ॥ कृतहस्तः ॥ ( १ ) ॥ सुप्रयोगविशिखः ॥ ( २ ) ॥ कृतोऽभ्यस्तः पुङ्खः पुङ्खयुक्तः शरो येन कृतपुङ्खः ॥ ( ३ ) ॥ त्रीणि सम्यक्कृतशराभ्यासस्य ॥ अपेति ॥ अपराद्धः पृषत्को बाणोऽस्य अपराद्धपृषत्कः ॥ ( १ ) ॥ लक्ष्याद्वेध्यात् ॥ च्युता भ्रष्टः सायको यस्य ॥ एकं लक्ष्याप्राप्तशरस्य ॥ ६८ ॥ धेति ॥ "धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च" इति मेदिनी ॥ धन्वास्यास्ति धन्वी ॥ ( १ ) ॥ धनुष्मान् ॥ ( २ ) ॥ धानुष्कः ॥ ( ३ ) ॥ निषङ्गी ॥ ( ४ ) ॥ "अस्त्रं प्रहरणे चापे" इति विश्वः ॥ अस्त्रमस्यास्ति अस्त्री ॥ ( ५ ) ॥ धनुर्धरः ॥ ( ६ ) ॥ षट् धनुर्धरस्य ॥ स्यादिति ॥ "काण्डः स्तवे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्" इति मेदिनी ॥ काण्डो बाणोऽस्यास्ति काण्डवान् ॥ ( १ ) ॥ काण्डीरः ॥ ( २ ) ॥ द्वे बाणधारकस्य ॥ शेति ॥ शाक्तीकः ॥ ( १ ) ॥ शक्तिर्हेतिर्यस्य शक्तिहेतिकः ॥ ( २ ) द्वे शक्तिधरस्य ॥ ६९ ॥ येति ॥ याष्टीकः ॥ ( १ ) ॥ परश्वधः परशुः प्रहरणमस्य पारश्वधिकः ॥ ( १ ) ॥ यष्टिश्च पर्श्वधश्च हेती ययोः ॥

**चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः । अनुप्लवः सहायश्चानुचरोऽभिसरः समाः७१॥**
**पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः । पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ७२ ॥**
**जंघालोऽतिजवस्तुल्यौ जंघाकरिकजांघिकौ । तरस्वी त्वरितो वेगी प्रजवी जवनो जवः७३॥**
**जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके । जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति७४॥**
**सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि।ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः**
**स्यादुरस्वानुरसिलो रथिनो रथिको रथी । कामंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम्७६॥**
**शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः। सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु७७**

एकैकं यष्टिपर्श्वधधारिणोः ॥ नायिति ॥ निस्त्रिंशः प्रहरणमस्य नैस्त्रिंशिकः ॥ ( १ ) ॥ असिहेतिः ॥ ( २ ) ॥ द्वे खड्गायुधस्य ॥ सेति ॥ प्रासः, कुन्तश्च प्रहरणमस्य ॥ प्रासिकः ॥ ( १ ) ॥ कौन्तिकः ॥ ( १ ) ॥ एकैकं प्रासकुन्तधारिणोः ॥ ७० ॥ चेति ॥ चर्मी ॥ ( १ ) ॥ फलकपाणिः ॥ ( २ ) ॥ द्वे फलकधारकस्य ॥ पेति ॥ पताकी ॥ ( १ ) ॥ वैजयान्तिकः ॥ ( २ ) ॥ द्वे ध्वजधारकस्य ॥ अन्विति ॥ अनुप्लवः ॥ ( १ ) ॥ सहायः ॥ ( २ ) ॥ अनुचरः ॥ ( ३ ) ॥ अभिसरः ॥ ( ४ ) ॥ चत्वारि सहायस्य ॥ ७१ ॥ प्विति ॥ पुरोगः ॥ ( १ ) ॥ अग्रेसरः ॥ ( २ ) ॥ "प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ" इति मेदिनी ॥ ( ३ ) ॥ अग्रतःसरः ॥ ( ४ ) ॥ पुरःसरः ॥ ( ५ ) ॥ पुरोगमः ॥ ( ६ ) ॥ पुरोगामी ॥ ( ७ ) ॥ सप्ताग्रेसराणाम् ॥ मेति ॥ मन्दगामी ॥ ( १ ) ॥ "मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्" इति मेदिनी ॥ ( २ ) ॥ द्वे शनैर्गमनशीलस्य ॥ ७२ ॥ जेति॥ जङ्घालः ॥ "जङ्घिलः" अपि ॥ "प्रज्ञालप्रज्ञिलौ तुल्यौ जङ्घालजङ्घिलादयः" इति वाचस्पतिः ॥ ( १ ) ॥ अतिजवः ॥ ( २ ) ॥ द्वे अतिवेगवतः ॥ जेति ॥ जङ्घासाध्यत्वादुपचाराद्गतिर्जङ्घा ॥ सैव करो राजदेयो भागः आकरः श्रेष्ठो वा ॥ जङ्घाकरोऽस्यास्ति जङ्घाकरिकः ॥ ( १ ) ॥ जाङ्घिकः ॥ ( २ ) ॥ द्वे जङ्घाजीविनः ॥ तेति ॥ "तरस्वी शूरवेगिनोः" इति मेदिनी ॥ ( १ ) ॥ "त्वरितं वेगतद्वतोः" इति हैमः ॥ ( २ ) ॥ वेगी ॥ ( ३ ) ॥ प्रजवी ॥ ( ४ ) ॥ "जवनं तु स्यदे वेगिहये ना वेगिनि त्रिषु" इति मेदिनी ॥ ( ५ ) "जवो वेगवति त्रिषु । पुँल्लिङ्गस्तु भवेद्वेगे चौड्रपुष्पे जवा मता" इति मेदिनी ॥ ( ६ ) ॥ षड् वेगवन्मात्रस्य ॥ ७३ ॥ जेति ॥ यः पुरुषः जेतुं शक्येत जय्यः ॥ ( १ ) ॥ एकं जेतुं समर्थस्य ॥ जयिति ॥ जेयः ॥ ( १ ) ॥ एकं जेतुं योग्यस्य ॥ जायिति ॥ जैत्रः ॥ ( १ ) ॥ जेता ॥ ( २ ) ॥ द्वे जयवतः ॥ य इति ॥ ७४ ॥ अभ्यमित्र्यः ॥ ( १ ) ॥ अभ्यमित्रीयः ॥ ( २ ) ॥ अभ्यमित्रीणः ॥ ( ३ ) ॥ त्रीणि सामर्थ्येन शत्रूणां संमुखं गच्छतः ॥ ऊर्जेति ॥ "ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेऽपि च" इति मेदिनी ॥ अतिशयित ऊर्जोऽस्यास्ति ऊर्ज्जस्वलः ॥ ( १ ) ॥ ऊर्जस्वी ॥ (२)॥ ऊर्जातिशयान्वितः ॥ ( ३ ) ॥ त्रीणि बलातिशयवतः ॥ ७५ ॥ स्येति ॥ प्रशस्तमतिशयितं वा उरो यस्य उरस्वान् ॥ ( १ ) ॥ उरसिलः ॥ ( २ ) ॥ उरसा बलं लक्ष्यते—इति स्वामी ॥ द्वे विपुलोरसः ॥ रेति ॥ रथिनः॥ "रथिरः"[1] इति च ॥ ( १ ) ॥ रथिकः ॥ ( २ ) ॥ रथी ॥ ( ३ )॥ त्रीणि रथस्वामिनः ॥ केति ॥ कामं यथेच्छं गमनशीलः कामंगामी ॥ ( १ ) ॥ अनुकामीनः ॥ ( २ ) ॥ द्वे यथेष्टं गमनशीलस्य ॥ ह्येति ॥ अत्यन्तीनः ॥ ( १ ) ॥ 'भृशं गामी' इत्यन्वयः ॥ एकमतिगमनशीलस्य ॥ ७६ ॥ श्विति ॥ "शूरः स्याद्यादवे भटे" इति मेदिनी ॥ ( १ ) ॥ "वीरो रसविशेषे स्यादुत्तरे सुभटे त्रिषु । स्त्रीसुराक्षीरकाकोलीतामलक्यैलवालुके ॥ पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च । मल्यूक्षीरविदार्योः क्लीबं शृङ्ग्यां नतेऽपि च" इति मेदिनी ॥ ( २ ) ॥ विक्रान्तः ॥ ( ३ ) ॥ त्रीणि शूरस्य ॥ जयिति ॥ जेता ॥ ( १ ) ॥ "जिष्णुर्ना वासवेऽर्जुने । जित्वरे वाच्यवत्" इति

---

१—स्वामिना तु भाष्याङ्गीकृतमेवोक्तम् ॥ मुकुटोऽपि प्राथम्येन "रथिरः" इत्येवोक्तवान् ॥

**ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ व्यूहस्तु फलविन्यासो भेदा दण्डादयो युधि । प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ७९ ॥ एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्योऽक्षौहिण्यथ संपदि ८१ ॥ संपत्तिः श्रीश्च लक्ष्मीश्च विपत्तौ विपदापदौ । आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥**

मेदिनी ॥ ( २ ) ॥ जित्वरः ॥ ( ३ ) ॥ त्रीणि जयशीलस्य ॥ सामिति ॥ संयुगे रणे साधुः सांयुगीनः ॥ ( १ ) ॥ एकं युद्धकुशलस्य ॥ शेति ॥ शस्त्राजीवादयः सांयुगीनान्ताः ॥ ७७ ॥ ध्वेति ॥ ध्वजिनी ॥ ( १ ) ॥ वाहिनी ॥ ( २ ) ॥ सेना ॥ ( ३ ) ॥ "पृतना तु स्त्रियां सेनामात्रसेना-विशेषयोः" इति मेदिनी ॥ ( ४ ) ॥ "अनीकिनी स्त्रियां सेनामात्रसेनाविशेषयोः" इति मेदिनी ॥ ( ५ ) ॥ "चमूः सेनाविशेषे च सेनामात्रे च योषिति" इति मेदिनी ॥ ( ६ ) ॥ वरूथिनी ॥ ( ७ ) ॥ बलम् ॥ ( ८ ) ॥ सैन्यम् ॥ ( ९ ) ॥ चक्रम् ॥ ( १० ) ॥ "अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी ॥ ( ११ ) ॥ एकादश सेनायाः ॥ ७८ ॥ व्यिति ॥ "व्यूहः स्याद्बल-विन्यासे निर्माणे वृन्दतर्कयोः" इति मेदिनी ॥ ( १ ) ॥ बलस्य सेनाया विन्यासो विभज्य स्थापनं बलविन्यासः ॥ ( २ ) ॥ द्वे व्यूहस्य ॥ भयिति ॥ भेदा विशेषाः ॥ यदाह कामन्दकिः—"तिर्य-ग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः" इति ॥ दण्डवदवस्थानं दण्डः । अन्योऽन्यानुगतावृत्तिर्भोगः । सर्पशरीरवदवस्था मण्डलः । गजादीनां विजातीयैरभिश्रितानां स्थानमसंहतः ॥ शकट—मकर—पताका—सर्वतोभद्र—दुर्जयादयोऽपि ॥ प्रेति ॥ प्रत्यासारः ॥ ( १ ) ॥ व्यूहपार्ष्णिः ॥ ( २ ) ॥ द्वे व्यूहस्य पृष्ठभागस्य ॥ सैन्येति ॥ सैन्यस्य पृष्ठे धनुःशतद्वयान्तरे स्थितं सैन्यम् ॥ "प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्ये-भ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे" इति मेदिनी ॥ ( १ ) ॥ एकं सैन्यस्य पश्चाद्छिन्नसंघातस्यानी-कस्य ॥ ७९ ॥ एकेति ॥ एक इभो यस्याम् । एको रथो यस्याम् । त्रयोऽश्वा यस्याम् । पञ्च पदातयो यस्याम् ॥ "पत्तिर्ना पदगे, स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके" इति मेदिनी ॥ भरतः—"एको रथो गज-श्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" ॥ एकं सेनाविशेषस्य ॥ पेति ॥ तिस्रः पत्तयः सेनामुखम् । त्रिभिः सेनामुखैर्गुल्मः । त्रयो गुल्मा गणः । त्रयो गणा वाहिनी । तिस्रो वाहिन्यः पृतना । तिस्रः पृतनाश्चमूः । तिस्रश्चम्वोऽनीकिनी ॥ ८० ॥ सेनामुखम् ॥ ( १ ) ॥ "गुल्मः सेनाघट्टभिदोः सेनारक्षणरुग्भिदोः । स्तम्बेऽस्त्रियामामलक्यैलावली वस्त्रवेश्मसु" इति मेदिनी ॥ ( १ ) ॥ "गणः प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयोः" इति मेदिनी ॥ ( १ ) ॥ एकैकं सेनाविशेषस्य ॥ देति ॥ दशानीकिन्योऽक्षौहिणी ॥ "अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संख्या युक्ता सहस्राणि गजा-नामेकविंशतिः ॥ एवमेव रथानां तु संख्यानं कीर्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु ॥ संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु ॥ शतानि त्रीणि चा-न्यानि पञ्चाशच्च पदातयः" ॥ ( १ ) ॥ एकं सेनाविशेषस्य ॥ अथेति ॥ संपत् ॥ ( १ ) ॥ ॥ ८१ ॥ संपत्तिः ॥ ( २ ) ॥ "श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तौ वेत्रोपक-

**१—तत्तत्सेनाविशेषे गजादीनां निर्णयाय चक्रमिदम् ॥**

| सेना | पत्तिः | सेना-मुखम् | गुल्मः | गणः | वाहिनी | पृतना | चमूः | अनीकिनी | अक्षौहिणी |
|---|---|---|---|---|---|---|---|---|---|
| गजाः, रथाश्च... | १ | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | २१८७० |
| अश्वाः........ | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | ६५६१ | ६५६१० |
| पदातयः........ | ५ | १५ | ४५ | १३५ | ४०५ | १२१५ | ३६४५ | १०९३५ | १०९३५० |

**धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥८३॥ कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ । कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥८४॥ लस्तकस्तु धनुर्मध्यं मौर्वी ज्याशिञ्जिनी गुणः । स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् । पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ८६॥ कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः । प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजास्त्रिषूत्तरे ॥८७॥**

रणे मतौ'' इति विश्वमेदिन्यौ ॥ (३) ॥ ''लक्ष्मीः श्रीशोभासंपत्तिप्रियङ्गुषु'' इति हेमचन्द्रः ॥ (४) ॥ चत्वारि धनोत्कर्षस्य ॥ वीति ॥ विपत्तिः ॥ (१) ॥ विपत् ॥ (२) ॥ आपत् ॥ 'आपत्तिः' इति च ॥ (३) ॥ त्रीणि विपदः ॥ आयुधमिति ॥ आयुधम् ॥ (१) ॥ प्रहरणम् ॥ (२) ॥ शस्त्रम् ॥ (३) ॥ अस्त्रम् ॥ (४) ॥ चत्वारि प्रहरणमात्रस्य ॥ अथेति ॥ ८२ ॥ ''धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु'' इति सान्तेषु मेदिनी ॥ ''धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने'' इति नान्तेषु मेदिनी ॥ स्त्रियामपि ॥ ''स्थावरं तु धनुर्गुणी । शरावापो धनूः स्त्री स्यात् तृणता त्रिणताऽपि च'' इति त्रिकाण्डशेषात् ॥ (१) ॥ चापः ॥ (२) ॥ ''धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च'' इति मेदिनी ॥ (३) ॥ शरासनम् ॥ (४) ॥ ''कोदण्डं कार्मुके देशभेदभ्रूलतयोरपि'' इति हेमचन्द्रः ॥ (५) ॥ ''अथ कार्मुकः । वंशे कार्मुकमिष्वासे कर्मठे'' इति हैमः ॥ (६) ॥ ''इष्वासो धन्वधन्विनोः'' इति हैमः ॥ (७) ॥ सप्त धनुषः ॥ अथेति ॥ कालो यम इव पृष्ठमस्य ॥ ''कालपृष्ठं कर्णचापे पुंसि कङ्कविहंगमे'' इति मेदिनी ॥ ''कालपृष्ठं तु कोदण्डमात्रके कर्णधन्वनि । कालपृष्ठो मृगभेदे कङ्के'' इति हैमः ॥ (१) ॥ एकं कर्णधनुषः ॥ ८३ ॥ केति ॥ कपिर्हनुमान् ध्वजो ध्वजे वा यस्य ॥ ''जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं तथा'' इति शाश्वतः ॥ कोदण्डे धनुर्मात्रेऽपि ॥ (१) ॥ (२) ॥ द्वे अर्जुनधनुषः ॥ कविति ॥ अस्य धनुषः ॥ ''कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः'' इति मेदिनी ॥ (१) ॥ अटनिः ॥ (२) ॥ द्वे धनुषोऽन्त्यस्य ॥ गविति ॥ ''गोधा तलनिहाकयोः'' इति मेदिनी ॥ (१) ॥ ''तलश्चपेटे तालद्रौ तलं ज्याघातवारणे । त्सरौ स्वभावाधरयोस्तन्त्रीघाते च सव्यतः'' ॥ ''तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे'' इति मेदिनी ॥ (२) ॥ व्यक्तिद्वयाद्द्वित्वम् ॥ ज्याया गुणस्याघातस्य वारणे ॥ द्वे ज्याघातवारणस्य ॥ ८४ ॥ लेति ॥ लस्तकः ॥ (१) ॥ धनुर्मध्यम् ॥ (२) ॥ द्वे धनुषो मध्यभागस्य ॥ माविति ॥ मौर्वी ॥ (१) ॥ ज्या ॥ (२) ॥ शिञ्जिनी ॥ (३) ॥ ''गुणो ज्यासूत्रतन्तुषु । रज्जौ सत्त्वादौ संध्यादौ शौर्यादौ भीम इन्द्रिये । रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे'' इति हैमः ॥ (४) ॥ चत्वारि धनुर्ज्यायाः ॥ स्येति ॥ ''प्रत्यालीढं तु चरणन्यासभेदेऽशिते त्रिषु'' इति मेदिनी ॥ (१) ॥ ''आलीढं पादन्यासेऽशिते त्रिषु'' इति विश्वमेदिन्यौ ॥ (२) ॥ तत्र ऊर्ध्वस्थस्य वामपादप्रसारे दक्षिणपादसंकोचे आद्यम् ॥ विपर्ययेऽन्त्यम् ॥ आदिना समपाद (३) विशाख (४) मण्डल (५) ग्रहः ॥ वितस्त्यन्तरेण स्थिते पादद्वये विशाखः ॥ रभसस्त्वाह—''वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम्'' इति ॥ पञ्च धन्विनां स्थानभेदानाम् ॥ ८५ ॥ लेति ॥ ''लक्षं व्याजशरव्ययोः । संख्यायामपि'' इति हैमः ॥ (१) ॥ लक्ष्यम् ॥ (२) ॥ शरव्यम् ॥ (३) ॥ त्रीणि ''वेझा निसाणा'' इति ख्यातस्य ॥ शेति ॥ शराभ्यासः ॥ (१) ॥ ''उपासनमासने । शुश्रूषायां शराभ्यासेऽपि'' इति हैमः ॥ (२) ॥ द्वे शरमोक्षस्याभ्यासे ॥ पृति ॥ पृषत्कः ॥ (१) ॥ ''बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः'' इति मेदिनी ॥ (२) ॥ ''विशिखा खनित्रिकायां रथ्यायां विशिखः शरे'' इति हैमः ॥ (३) ॥ अजिह्मगः ॥ (४) ॥ ''खगोऽर्कग्रहपक्षिषु । शरे देवेऽपि'' इति हैमः ॥ (५) ॥ ''आशुगोऽर्के शरे वायौ'' इति हेमचन्द्रः ॥ (६) ॥ ८६ ॥ कलम्बः ॥ ''कलम्बी शाकभेदेऽपि कदम्बशरयोः पुमान्'' इति मेदिनी

---

१—पृषन् असृजा सिञ्चन् कषति हिनस्ति । ''अन्येभ्योऽपि'' (वा ३।२।१०१०।) इति डः—इति मुकुटः ॥
२—भरत इत्यपि पाठान्तरम् ॥

**निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८॥**
**तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करपालः कृपाणवत्॥८९॥**
**त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् । फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः॥९०**
**द्रुघणे मुद्गरघनौ स्यादीली करपालिका । भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः॥९१॥**
**द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका॥९२॥**

॥ (७) ॥ "मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि" इति हैमः ॥ ( ८ ) ॥ "शरस्तु तेजने बाणे दध्यग्रे ना शरं जले" इति विश्वमेदिन्यौ ॥ दन्त्यादिपाठे तु "बाणः स्यादस्त्रकण्टकः । स्थूलक्ष्वेडो विपाटश्च चित्रपुंखः शरः सरः । पत्त्रवाहो विकर्षः" इति त्रिकाण्डशेषः ॥ ( ९ ) ॥ "पत्त्री काण्डे खगे द्रुमे । रथेऽद्रौ रथिके श्येने" इति हेमचन्द्रः ॥ ( १० ) ॥ "रोपो रोपणबाणयोः" इति विश्वः ॥ ( ११ ) ॥ इषुः ॥ (१२) ॥ द्वादश बाणस्य । प्रेति ॥ प्रक्ष्वेडनः ॥ ( १ ) ॥ नाराचः ॥ ( २ ) ॥ द्वे सर्वलोहमयस्य शरस्य ॥ पेति ॥ पक्षः ॥ ( १ ) ॥ "वाजो निस्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु" इति मेदिनी ॥ ॥ ( २ ) ॥ द्वे शरपक्षस्य ॥ त्रीति ॥ वक्ष्यमाणा लिप्तकान्ताः ॥ ८७ ॥ नीति ॥ निरस्तः ॥ ( १ ) ॥ एकं प्रक्षिप्तबाणस्य ॥ वीति ॥ दिग्धः ॥ ( १ ) ॥ लिप्तकः ॥ ( २ ) ॥ द्वे विषसंबद्धबाणस्य ॥ त्विति ॥ तूणः ॥ तूणा च ॥ "स्त्रियां तूणेषुधी उपासङ्गः" इति रत्नकोषः ॥ ( १ ) ॥ उपासङ्गः ॥ (२) ॥ तूणीरः ॥ ( ३ ) ॥ निषङ्गः ॥ (४) ॥ इषुधिः ॥ ( ५ ) ॥ ८८ ॥ "तूणी नील्यां निषङ्गे वा ना" इति मेदिनी ॥ "तूणी तु नील्यां तूणौ निषङ्गके" इति विश्वः॥(६)॥ षट् शराधारस्य॥खेति॥ "खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके" इति विश्वमेदिन्यौ॥(१)॥ "निस्त्रिंशो निर्घृणे खड्गे" इति हैमः ॥ (२) ॥ "चन्द्रहासोऽसिमात्रके । दशग्रीवकृपाणे च" इति हैमः ॥ ( ३ ) ॥ "असिः खड्गे नदीभिदि" इति हैमः ॥ ( ४ ) ॥ "रिष्टिः खड्गे ना शुभे स्त्री" इति मेदिनी॥ अजादिरिति स्वाम्यादिः ॥ "करवालमण्डलाग्रकालेयकासिरष्टयः। ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः" इति रभसः ॥ ( ५ ) ॥ कौक्षेयकः ॥ ( ६ ) ॥ मण्डलाग्रः ॥ ( ७ ) ॥ करपालः ॥ 'करवालः' इति पाठान्तरम्॥(८)॥ कृपाणः ॥ ( ९ ) ॥ नव खड्गस्य ॥८९॥त्सेति॥ त्सरुः ॥ ( १ ) ॥ आदिना कटितलच्छुरिकादिग्रहः ॥ एकं खड्गमुष्टेः ॥ मयिति ॥ "मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः" इति मेदिनी ॥ ( १ ) ॥ एकं खड्गादेश्चर्मादिनिर्मितकटिबन्धनस्य युद्धे हस्तात्पतनवारणाय मणिबन्धे प्रध्रियमाणस्य चर्मादेर्वा ॥ फेति ॥ फलकः ॥ ( १ ) ॥ "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति मेदिनी ॥ ( २ ) ॥ "चर्म कृत्तौ च फलके" इति विश्वः ॥ ( ३ )॥ त्रीणि "फरी" इति ख्यातस्य ॥ समिति ॥ संग्राहः ॥(१)॥ अस्य फलस्य ॥ एकं फलकस्य मुष्टेः ॥ ९० ॥ द्रिति ॥ 'द्रुघणो मुद्गरेऽपि स्याद्द्रुहिणे च परश्वधे" इति विश्वमेदिन्यौ ॥ केचित्तु "द्रुघनः"—इत्याहुः ॥ ( १ ) ॥ मुद्गरः ॥ ( २ ) ॥ "घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते घनं मध्यनृत्यवाद्यप्रकारयोः" इति हैमः ॥ ( ३ ) ॥ त्रीणि 'गुर्जा' इति ख्यातस्य ॥ स्येति ॥ ईली ॥ "इली" इति च ॥ (१)॥ करपालिका ॥ "करवालिका" इति च ॥ (२)॥ द्वे "तरवार" इति ख्यातस्य ॥–"गुप्ती" इति ख्यातस्य—इत्यन्ये ॥ भीति ॥ "भिन्दिर्द्वादशतालं तु दश कुन्तोऽभिधीयते" इति भरतः ॥ तदवच्छिन्नः कालोऽपि भिन्दिः । भिन्दिं पालयति भिन्दिपालः ॥ ( १ ) ॥ सृगः ॥ ( २ ) ॥ द्वे "गोफण" इति ख्यातस्य ॥—नलिकास्त्रस्य----इत्यन्ये ॥ पेति ॥ "परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च" इति हैमः ॥ ( १ ) ॥ परिघातनः ॥ ( २ ) ॥ द्वे लोहबद्धस्य लगुडभेदस्य "लोहाङ्गी" इति ख्यातस्य ॥९१॥ द्वेति ॥ कुठारः ॥ (१) ॥ स्वधितिः ॥( २ ) परशुः ॥ ( ३ ) ॥ परश्वधः॥ "पर्श्वधः" अपि ॥ "यष्टिपर्श्वधहेतिकौ" इति स्वामी॥ 'परस्वधः' इति च ॥ "कुठारः स्त्री च स्वधितिः परशुश्च परस्वधः । पर्शुः" इति रभसः ॥ ( ४ ) ॥ चत्वारि कुठारस्य ॥ स्येति ॥ "शस्त्रमायुधे । लोहे शस्त्री छुरिकायाम्" इति हैमः ॥ ( १ ) ॥ असिपुत्री ॥ ( २ ) ॥ छुरिका ॥ ( ३ ) ॥ असिधेनुका ॥(४)॥

१—"शिलाशूलर्ष्टिमुद्गरम् इति भट्टिश्च—इति मुकुटः ॥

वा पुंसि शल्यं शङ्कुर्ना शर्वला तोमरोऽस्त्रियाम्।प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः
सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः। लोहाभिहारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥९४॥
यत्सेनयाऽभिगमनमरौ तदभिषेणनम्। यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥९५॥
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम्। अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥९६॥
वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः। स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठकाः९७
संशप्तकास्तु समयात्संग्रामादनिवर्तिनः। रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥९८॥

चत्वारि छुरिकायाः ॥ ९२ ॥ वेति ॥ "शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुश्वाविधोर्ना" इति मेदिनी ॥ (१) ॥ "शङ्कुः पत्त्रशिराजाले संख्याकीलकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे" इति हैमः ॥ "संख्याकीलकयोः शङ्कुः शङ्कुः प्रहरणान्तरे" इति शाश्वतः ॥ (२) ॥ द्वे "बर्छी" इति ख्यातस्य ॥—"शेल" इति ख्यातस्य इत्यन्ये ॥ शेति ॥ "शार्दूलशर्वलाशलाटु—" इति शभेदः ॥ स्वामी तु—'सर्वलायाः' दन्त्यादितामभिप्रैति ॥ (१) ॥ तोमरः ॥ (२) ॥ द्वे "गँडासा" इति ख्यातस्य ॥ 'शावली' इति ख्यातायाः----इत्यन्ये ॥ प्रेति ॥ प्रासः ॥ (१) ॥ "कुन्तः प्रासे चण्डभावे क्षुद्रजातौ गवेधुके । कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलुद्रुमे" इति विश्वः ॥ (२) ॥ द्वे "भाला" इति ख्यातस्य ॥ कवेति ॥ "कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामश्रौ च लगुडेऽपि च" इति मेदिनी ॥ (१) ॥ "पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्त्रादिदेये स्त्री पाली यूकास्श्मश्रुयोषितोः" इति मेदिनी ॥ (२) ॥ "अश्रिः कोणैकदेशयोः" इति धरणिः । "अस्त्रः कोणे शिरसिजे" इति विश्वात् 'अस्त्रः' अपि ॥ (३) ॥ "कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः" इति मेदिनी) ॥ (४) ॥ चत्वारि कोणभागस्य ॥ ९३ ॥ सेति ॥ सर्वाभिसारः ॥ (१) ॥ "सर्वौघो गुरुवेगे च सर्वसंनहने पुमान्" इति मेदिनी ॥ (२) ॥ सर्वेषां संनहनं सर्वसंनहनमर्थो यस्य सर्वसंनहनार्थकः ॥ (३) ॥ त्रीणि सर्वसैन्यसंनहनस्य ॥ लोहेति ॥"लोहोऽस्त्री शस्त्रके लौहे"इति मेदिनी ॥ लोहस्य शस्त्रस्याभितो हरणम् ॥ "लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तरः" इत्यमरमाला ॥ "लोहाभिसारः" इति च ॥ (१) ॥ नीराजनाविधिः 'नीराजनो विधिः' इति पाठे तु 'निःशेषेण राजनमत्र' इति बहुव्रीहिर्बोध्यः ॥ एकं महानवम्यां प्रस्थानात्प्राक् शस्त्रवाहनादिपूजनविधेः ॥ ९४ ॥ येति ॥ अभिषेणनम् ॥(१) ॥ एकमरौ पार्श्वे सेनया सहाभिगमनस्य ॥ येति ॥"यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्" इति मेदिनी॥(१)॥ व्रज्या ॥ (२) ॥ अभिनिर्याणम् ॥ (३) ॥ प्रस्थानम् ॥ (४) ॥ गमनम् ॥ (५) ॥"गमो नाऽक्षविवर्ते स्यादपर्यालोचितेऽध्वनि"इति मेदिनी ॥ (६) ॥ षट् प्रस्थानमात्रस्य॥९५॥स्येति ॥"आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले" इति विश्वः॥(१)॥ प्रसरणम्॥"प्रसरणी" इति च ॥(२)॥द्वे सर्वतोव्यापिसैन्यप्रसरणस्य॥ प्रेति ॥ प्रचक्रम् ॥ (१) ॥ चलितशब्दस्य समानार्थकम् ॥ "प्रचक्रं चलितं त्रिषु" इत्यमरमाला ॥ (२) ॥ द्वे प्रस्थितसैन्यस्य ॥ अहीति ॥ अभिक्रमः ॥ (१) ॥ एकं रणे शत्रून्प्रति विगतभयस्य शूरगमनस्य ॥ ९६ ॥ वायेति ॥ वैतालिकः ॥ (१) ॥ बोधकरः ॥ (२) ॥ द्वे प्रातर्जागरणकारिणः ॥ चेति ॥ चाक्रिकाः ॥ (१) ॥ घाण्टिका ॥ (२) ॥ बहवो भिलिता ये राज्ञां स्तुत्यादि पठन्ति, तेषां द्वे ॥ क्वचित्तु "चक्रिका घटिकार्थकाः" इति पाठः ॥ चक्रिकाः ॥ (१) ॥ घटिकाः ॥ (२) ॥ द्वे "घडियारी" इति ख्यातस्य घटिकावादकस्य ॥ स्युरिति ॥ मागधाः ॥ (१) ॥ मगधाः ॥ मुकुटस्तु 'मधु मधुरं कायन्ति' इति विगृह्णन् "मधुकाः" इति पाठं मन्यते ॥ (२) ॥ द्वे वंशपरम्पराशंसकानाम् ॥ वेति ॥ वन्दिनः ॥ (१) ॥ स्तुतिपाठकाः ॥ (२) ॥"वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" ॥ द्वे "भाट" इति ख्यातस्य ॥ 'चत्वार एकार्थाः' इत्येके—इति स्वामी ॥ ९७ ॥ समिति ॥ संशप्तकाः ॥ (१) ॥ समयाच्छपथाद्धेतोराचाराद्वा ॥ एकं युद्धादपराङ्मुखानाम् ॥ रयेति ॥

**चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले । पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ९९॥**
**सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा । अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥**
**आहोपुरुषिका दर्पाद्या स्यात्संभावनाऽऽत्मनि। अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः**
**द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं च । शक्तिः पराक्रमप्राणौ विक्रमस्त्वतिशक्तिता १०२**
**वीरपाणं तु तत्पानं वृत्ते भाविनि वा रणे । युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥१०३॥**
**मृधमास्कन्दनं संख्यं समीकं संपरायकम् । अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥१०४ ॥**

"रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ धूलिः ॥ ( २ ) ॥ पांशुः ॥ "तालव्या अपि दन्त्याश्च शंवशूकरपांशवः" इति शभेदात् ( **पांसुः** ) दन्त्यान्तश्च ॥ ( ३ ) ॥ रजः ॥ ( ४ ) ॥ **चत्वारि रजसः** ॥ ९८ ॥ **चिवति** ॥ "चर्णा निवासयोगाः स्युश्चूर्णो धूलिः सशर्करा" इति शाश्वतः ॥ ( १ ) ॥ "क्षोदः पेषणचूर्णयोः" इति हैमः ॥ ( २ ) ॥ **द्वे चूर्णस्य** ॥—**षडेव रजसः**—**इत्येके** ॥ **सेति** ॥ समुत्पिञ्जः ॥ ( १ ) ॥ पिञ्जलः ॥ ( २ ) ॥ **द्वे अतिसंकुलस्य** ॥ **पेति** ॥ "पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "वैजयन्तो गुहे शक्रप्रासादध्वजयोः पुमान् । वैजयन्ती पताकायां जयन्तीपादपे स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ "केतनं तु निमन्त्रणे । गृहे केतौ च कृत्ये च" इति मेदिनी ॥ ( ३ ) ॥ "ध्वजः पूर्वदिशो गृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च" इति हैमः ॥ ( ४ ) ॥ **चत्वारि पताकायाः** ॥ ॥ ९९ ॥ **सेति** ॥ वीराशंसनम् ॥ ( १ ) ॥ **एकमतिभयप्रदाया युद्धभूमेः** ॥ **अहमिति** ॥ अहं- पूर्विका ॥ ( १ ) ॥ **एकं 'अहं पूर्वमहं पूर्वम्' इति योधानां धावनक्रियायाः** ॥ १०० ॥ **आहविति** ॥ आहोपुरुषिका ॥ ( १ ) ॥ **एकमात्मनि शक्त्याविष्करणस्य** ॥ **अहेति** ॥ अहमहमिका ॥ ॥ ( १ ) ॥ **एकं परस्परमहं शक्तोऽहं शक्त इत्येवंरूपस्याहंकारस्य** ॥ १०१ ॥ **द्रेति** ॥ "द्रविणं काञ्चने धने । पराक्रमे बलेऽपि स्यात्" इति हेमचन्द्रः ॥ ( १ ) ॥ "तरो जवे बले" इति हैमः ॥ ( २ ) ॥ "सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः" इति सान्तेषु हैमः ॥ "दण्डोत्पलामुद्गपर्णीकुमारी- नखभेषजे । सहा स्त्रियां, बले न स्त्री" इति रभसाददन्तमपि ॥ ( ३ ) ॥ "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च ॥ बलयुक्तेऽन्यलिङ्गः स्याद्बाट्यालके तु योषिति" इति मेदिनी ॥ ( ४ ) ॥ "शौर्यमारभटीशक्त्योः" इति विश्वः ॥ ( ५ ) ॥ स्थाम ॥ ( ६ ) ॥ "शुष्मं तेजसि, सूर्ये ना" इति मेदिनी ॥ ( ७ ) ॥ "शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्" इति हैमः ॥ ( ८ ) ॥ "पराक्रमो विक्रमे स्यात्सामर्थ्योद्योगयोरपि" इति विश्वः ॥ ( ९ ) ॥ "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः, पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु" इति मेदिनी ॥ ( १० ) ॥ **दश सामर्थ्यस्य** ॥ **वीति** ॥ "विक्रमस्तु पुमान्क्रान्तिमात्रे स्याच्छक्तिसंपदि" इति मेदिनी ॥ ( १ ) ॥ आति- शक्तिता ॥ ( २ ) ॥ **द्वे अतिशयितशक्तेः** ॥ १०२ ॥ **वीति** ॥ वीरपाणम् ॥ ( १ ) ॥ **एकं भविष्यति रणे वृत्ते वा कृतस्य मद्यपानस्य** ॥ **यिवति** ॥ युद्धम् ॥ ( १ ) ॥ आयोधनम् ॥ ( २ ) ॥ "जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् ॥ त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । वरस्निग्धे" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ "प्रधनं युधि दारणे" इति हैमः ॥ ( ४ ) ॥ "प्रविदारणमाख्यातं संपराथेऽवदारणे" इति मेदिनी ॥ ( ५ ) ॥ १०३ ॥ मृधम् ॥ ( ६ ) ॥ "आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च" इति विश्वः ॥ ( ७ ) ॥ "संख्यमाहवे । संख्यैकादौ विचारे च" इति हैमः ॥ (८) ॥ समीकम् ॥ (९) ॥ संपरायकम् ॥ "सांपरायिकः" अपि ॥ (१०) ॥ समरः ॥ (११) ॥

---

१–उत्पिञ्जलश्च । "कुर्वाणमुत्पिञ्जलजातपत्त्रैः" इति माघः—इति मुकुटः ॥ केचित्तु पिञ्जलमाकुलमाहुः—इति वल्लभः ॥ २–"अपांसुवसनाः सागरा इव नागराः" इति दमयन्तीश्लेषात् ॥

संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः । अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः । नियुद्धं बाहुयुद्धे स्यात्तुमुलं रणसंकुले ॥ १०६ ॥
क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा । क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् १०७
विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ। प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् १०८
अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् । मूर्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् १०९

"अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी ॥ ( १२ ) ॥ "रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम्" इति मेदिनी ॥ ( १३ )॥ "कलं तु मधुरध्वनौ" इति धरणिः ॥ कलस्य हननं कलहः ॥ ( १४ ) ॥ "विग्रहो युधि विस्तारे प्रविभागशरीरयोः" इति हैमः ॥ ( १५ ) ॥ १०४ ॥ "संप्रहारो गतौ रणे" इति हैमः ॥ ( १६ ) ॥ अभिसंपातः ॥ ( १७ ) ॥ "कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि" इति हैमः ॥ ( १८ ) ॥ संस्फोटः ॥ "संस्फेटः" इति तु स्वामी ॥ ( १९ ) ॥ संयुगः ॥ ( २० ) ॥ "अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये च" इति मेदिनी ॥ ( २१ ) ॥ "समाघातो वधे युद्धे" इति मेदिनी ॥ ( २२ ) ॥ संग्रामः ॥ ( २३ ) ॥ "अभ्यागमः समरेऽन्तिके । घाते रोधेऽभ्युपगमे" इति हैमः ॥ ( २४ ) ॥ "आहवः संगरे यज्ञे" इति हैमः ॥ ( २५ ) ॥ १०५ ॥ समुदायः ( २६ ) ॥ संयत्[1] ॥ ( २७ ) ॥ "समितिर्युधि संगमे । साम्ये सभायाम्" इति हेमचन्द्रः ॥ ( २८ ) ॥ "आजिः स्त्री समभूमौ संग्रामे" इति मेदिनी ॥ ( २९ ) ॥ समित् ॥ ( ३० ) ॥ युत् ॥ ( ३१ ) ॥ एषु अनेकार्थत्वात् सर्वे धातवो युद्धार्थाः । सर्वत्राधिकरणे प्रत्ययः— इति मुकुटः ॥ एकत्रिंशत्प्रहरणक्रियायाः ॥ नीति ॥ नियुद्धम् ॥ ( १ ) ॥ बाहुयुद्धम् ॥ ( २ ) ॥ द्वे बाहुयुद्धस्य ॥ त्विति ॥ "तुमुलं रणसंकुले । तुमुलो बिभीतकद्रौ" इति हैमः ॥ "तुमुलं व्याकुले रणे" इति त्रिकाण्डशेषः ॥ ( १ ) ॥ रणसंकुलम् ॥ ( २ ) ॥ द्वे रणव्याकुलतायाः ॥ १०६ ॥ क्ष्वायिति ॥ "क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ॥ लोहितार्के पर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः" ॥ ( १ ) ॥ सिंहनादः ॥ ( २ ) ॥ द्वे योधानां सिंहनादस्य ॥ कोति ॥ घटना ॥ ( १ ) ॥ "घटः समाधिभेदेभशिरःकूटकुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति" इति मेदिनी ॥ ( २ ) ॥ द्वे हस्तिसंघस्य ॥ क्रेति ॥ "क्रन्दनं रोदनेऽपि स्यादाह्वानेऽपि" इति मेदिनी ॥ ( १ ) ॥ योधसंरावः ॥ ( २ ) ॥ द्वे अन्योन्यस्पर्धया योधानामाह्वानस्य ॥ ब्रिति । बृंहितम् ॥ ( १ ) ॥ करिगर्जितम् ॥ ( २ ) ॥ द्वे करिणां गर्जितस्य ॥ १०७ ॥ वीति ॥ विस्फारः ॥ ( १ ) ॥ एकं धनुषः शब्दस्य ॥ पेति ॥ "पटहो ना समारम्भे आनके पुंनपुंसकम्" इति मेदिनी ॥ ( १ ) ॥ "आडम्बरः समारम्भे गजगर्जिततूर्ययोः" इति विश्वः ॥ ( २ ) ॥ द्वे युद्धपटहस्य "दमदमा" इति ख्यातस्य ॥ प्रेति ॥ "क्लीबे तु प्रसभं हठः" इति बोपालितः ॥ ( १ ) ॥ बलात्कारः ॥ ( २ ) ॥ "हठः स्यात्प्रसभे पृश्न्याम्" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि हठस्य ॥ अथेति ॥ "स्खलितं छलिते भ्रेषे" इति हैमः ॥ ( १ ) ॥ "छलं छद्मस्खलितयोः" इति हैमः ॥ ( २ ) ॥ द्वे युद्धमर्यादायाश्चलनस्य ॥ १०८ ॥ अजेति ॥ अजन्यम् ॥ ( १ ) ॥ उत्पातः ॥ ( २ ) ॥ "उपसर्गः पुमान् रोगभेदोपप्लवयोरपि" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि शुभाशुभसूचकमहाभूतविकारस्य ॥ म्विति ॥ मूर्छा ॥ ( १ ) ॥ कश्मलम् ॥ ( २ ) ॥ "अथ मोहो नृलिङ्गः स्यादविद्यायां च मूर्च्छने" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि मोहस्य ॥ अवेति ॥ अवमर्दः ॥ ( १ ) ॥ पीडनम् ॥ ( २ ) ॥ द्वे देशादेरुपद्रवदानस्य ॥ १०९ ॥

---

१—"संयत्" पुंस्यपि ॥ "रवेजि संयत्यतुलास्त्रगौरवे" इति दण्डी इति मुकुटः ॥

**अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः । वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ११०॥**
**प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः । अपक्रमोऽपयानं च रणे भङ्गः पराजयः ॥१११ ॥**
**पराजितपराभूतौ त्रिषु नष्टतिरोहितौ । प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥**
**प्रवासनं परासनं निषूदनं निहिंसनम् । निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥**
**निस्तर्हणं निहननं क्षणनं परिवर्जनम् । निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥**
**उद्वासनप्रमथनक्रथनोज्जासनानि च । आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥**
**स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्**
**परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ११७॥**

अभ्येति ॥ अभ्यवस्कन्दनम् ॥ ( १ ) ॥ अभ्यासादनम् ॥ ( २ ) ॥ द्वे प्रहारादिना निःशक्तीकरणस्य ॥ वीति ॥ "विजयः स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृतः । उमासख्याम्" इति मेदिनी ॥ ( १ ) ॥ "जया जयन्तीतिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे, ना जयन्ते विजये च युधिष्ठिरे" इति मेदिनी ॥ ( २ ) ॥ द्वे विजयस्य ॥ वायिति ॥ वैरशुद्धिः ॥ ( १ ) ॥ प्रतीकारः ॥ ( २ ) ॥ वैरनिर्यातनम् ॥ ( ३ ) ॥ त्रीणि वैरशोधनस्य ॥ ११० ॥ प्रेति ॥ प्रद्रावः ॥ ( १ ) ॥ उद्द्रावः॥(२)॥ संद्रावः ॥ ( ३ ) ॥ संदावः ॥ ( ४ )॥ विद्रवः ॥( ५ )॥ "द्रवः प्रद्रावनर्मणोः। विद्रवे रसगत्योश्च" इति हैमः ॥ ( ६ ) ॥ अपक्रमः ॥ ( ७ ) ॥ अपयानम् ॥ ( ८ ) ॥ अष्टौ पलायनस्य ॥ रेति ॥ "भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ पराजयः ॥ ( २ ) ॥ द्वे रणेऽपजयस्य ॥ १११ ॥ पेति ॥ पराजितः ॥ ( १ ) ॥ पराभूतः ॥ ( २ ) ॥ द्वे प्राप्ताभिभवस्य ॥ त्रीति ॥ 'त्रिषु' इति पूर्वाभ्यामपि संबध्यते ॥ नष्टः ॥ ( १ ) ॥ तिरोहितः ॥ ( २ ) ॥ द्वे भयात्पर्वतादौ तिरोहितस्य ॥ प्रेति ॥ प्रमापणम् ॥ ( १ ) ॥ निबर्हणम् ॥ ( २ ) ॥ निकारणम् ॥ ( ३ ) ॥ विशारणम् ॥ ( ४ ) ॥ ॥ ११२ ॥ प्रवासनम् ॥ ( ५ ) ॥ परासनम् ॥ ( ६ ) ॥ निषूदनम् ॥ ( ७ ) ॥ निहिंसनम् ॥ ( ८ ) ॥ निर्वासनम् ॥ ९ ॥ संज्ञपनम् ॥ ( १० ) ॥ निर्ग्रन्थनम् ॥'निर्गन्धनम्' इत्यन्ये ॥ ( ११ ) ॥ अपासनम् ॥ ( १२ ) ॥ ११३ ॥ निस्तर्हणम् ॥ ( १३ ) ॥ निहननम् ॥ ( १४ ) ॥ क्षणनम् ॥ ( १५ ) ॥ परिवर्जनम् ॥ ( १६ ) ॥ निर्वापणम् ॥ ( १७ ) ॥ विशसनम् ॥ ( १८ ) ॥ मारणम् ॥ ( १९ ) ॥ प्रतिघातनम् ॥ ( २० ) ॥ ११४ ॥ उद्वासनम् ॥ ( २१ ) ॥ प्रथनम् ॥ ( २२ ) क्रथनम् ॥ ( २३ ) ॥ उज्जासनम् ॥ ( २४ ) ॥ आलम्भः ॥ ( २५ ) ॥ पिञ्जः ॥ ( २६ ) ॥ विशरः ॥ ( २७ ) ॥ घातः ॥ ॥ ( २८ ) ॥ उन्माथः ॥ "उन्मन्थः" इति पाठः ॥ ( २९ ) ॥ वधः ॥ ( ३० ) ॥ त्रिंशन्मारणस्य ॥ ११५ ॥ स्यादिति ॥ "पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति" इति मेदिनी ॥ ( १ ) ॥ कालधर्मः ॥ ( २ ) ॥ दिष्टान्तः ॥ ( ३ ) ॥ प्रलयः ॥ ( ४ ) "अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः" इति मेदिनी ॥ ( ५ ) ॥ "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि" इति हैमः ॥ ( ६ ) ॥ "नाशः पलायने मृत्यौ परिध्वस्तावदर्शने" इति हेमचन्द्रः॥(७)॥ "मृत्युर्ना मरणे यमे" इति मेदिनी ॥(८) ॥ मारणम् ॥ ( ९ ) ॥ "निधनं स्यात् कुले नाशे" इति मेदिनी ॥ ( १० ) ॥ दश मृत्योः ॥ ११६ ॥ पेति ॥ परासुः ॥ ( १ ) ॥ प्राप्तपञ्चत्वः ॥ ( २ ) ॥ "परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान्" इति मेदिनी ॥ ( ३ ) ॥ "प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ ( ४ ) ॥ संस्थितः ॥ ॥ ( ५ ) ॥ "मृतं मृत्यौ याचिते च" इति हैमः ॥ ( ६ ) ॥ "प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च" इति मेदिनी ॥ ( ७ ) ॥ त्रिषु परास्वादयः ॥ सप्त प्राप्तपञ्चत्वस्य ॥ चीति ॥ "चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ "चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम्" इति मेदिनी ॥ ( २ ) ॥ "चितिश्चित्यावृन्दयोः स्त्री" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि चित्याः ॥ ११७ ॥

कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् । श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ११८॥
प्रग्रहोपग्रहौ वन्द्यां कारा स्याद्बन्धनालये । पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम्११९
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥

इति क्षत्रिवर्गः ॥ ८ ॥

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः । आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने१
स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः । सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम्२
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते । सत्यानृतं वणिग्भावः स्याद्दणं पर्युदञ्चनम् ॥ ३॥

केति ॥ "कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः" इति हैमः ॥ ( १ ) ॥ एकं नर्तनक्रियासनाथस्य मस्तकरहितस्य कलेवरस्य ॥ श्मेति ॥ श्मशानम् ॥ ( १ ) ॥ पितृवनम् ॥ ( २ ) ॥ द्वे श्मशानस्य ॥ क्विति॥"कुणपी पुनः । विट्सारिकायां कुणपः पूतिगन्धे शवेऽपि च" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "शवः स्यात्कुणपे पुमान् । नपुंसकं तु पानीये" इति मेदिनी ॥ ( २ ) ॥ द्वे मृतशरीरस्य ॥ ११८ ॥ प्रेति ॥ "प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे" इति मेदिनी ॥ (१) ॥ "उपग्रहः पुमान् वन्द्यामुपयोगेऽनुकूलने" इति मेदिनी ॥ ( २ ) ॥ वन्दी ॥ ( ३ ) ॥ त्रीणि चौरादीनां निग्रहस्य ॥ केति ॥ "कारो वधे निश्चये च वलौ यत्ने यतावपि । कारस्तुषारशैले च कारा दूत्यां प्रसेवके । बन्धने बन्धनागारे हेमकारिकयोरपि" इति विश्वः ॥ ( १ ) ॥ बन्धनालयः ॥ ( २ ) ॥ द्वे कारागृहस्य ॥ पुमिति ॥ असवः ॥ ( १ ) ॥ "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु" इति मेदिनी ॥ एवं पुंसि भूम्नि च ॥ ( २ ) ॥ द्वे पञ्चवायूनाम् ॥ जीति ॥ "जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु ॥ न स्त्री तु जीविते" इति मेदिनी ॥ ( १ ) ॥ असुधारणम् ॥ ( २ ) ॥ द्वे जीवनस्य ॥ ११९ ॥ आयुरिति ॥ आयुः ॥ ( १ ) ॥ जीवितकालः ॥ ( २ ) ॥ द्वे जीवावच्छिन्नकालस्य ॥ नेति ॥ "जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे" इति मेदिनी ॥ ( १ ) ॥ जीवनौषधम् ॥ ( २ ) ॥ द्वे मृतसंजीवनौषधस्य ॥

इति क्षत्रिवर्गविवरणम् ॥

विति ॥ ब्रह्मण ऊर्वोर्भवः ऊरव्यः ॥ ( १ ) ॥ ऊरुजः ॥ ( २ ) ॥ अर्यः ॥ ( ३ ) ॥ वैश्यः ॥ ( ४ ) ॥ "भूमिस्पृक् पुंसि मानववैश्ययोः" इति मेदिनी ॥ ( ५ ) ॥ विट् ॥ ( ६ ) ॥ षट् वैश्यस्य ॥ आजीति ॥ आजीवः ॥ ( १ ) ॥ "जीवकः प्राणके पीतसारक्षपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे जीविका मता ॥ त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके" इति मेदिनी ॥ ( २ ) ॥ "वार्ता तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबे वृत्तिमत्स्त्रीरुजोस्त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ "वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने" इति मेदिनी ॥ ( ४ ) ॥ "वर्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः । न पुंसि तूलनालायां तर्कुपिण्डे च जीवने ॥ वर्तिष्णौ त्रिषु" इति मेदिनी ॥ ( ५ ) ॥ जीवनम् ॥ ( ६ ) ॥ षट् जीवनोपायस्य॥ १॥ स्त्रीति॥ कृषिः॥ (१)॥ पाशुपाल्यम्॥ (१)॥ वाणिज्यम् "वणिज्या" च॥ "सत्यानृतं तु वाणिज्यं वणिज्या" इति हैमनाममाला ॥ ( १ ) ॥ प्रत्येकजीवनोपायस्यैकैकम् ॥ सायिति ॥ सेवा ॥ ( १ ) ॥ शुनो वृत्तिरिव शुन इव वृत्तिर्वा श्ववृत्तिः ॥ ( २ ) ॥ द्वे परचित्तानुवर्तनस्य ॥ अन्विति ॥ "अनृतं कृषावसत्ये च" इति रुद्रः ॥ "प्रमृतम्" इति तु सभ्यः पाठः—इति स्वामी ॥ "प्रमृतं कर्षणं स्मृतम्" ( ४।५ ) इति मनुः॥ (१)॥ "शुनो वृत्तिः स्मृता सेवा गर्हितं तद्द्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते" इति॥ (२) ॥ द्वे कर्षणस्य ॥ विति ॥ उञ्छः ॥ ( १ ) ॥ "उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्" इति यादवः ॥ ( २ ) ॥ "ऋतमुञ्छशिलं स्मृतम्" ( ४।५ ) इति मनुः ॥ "पुमानुञ्छः शिलमृतम्" इति बोपालितः ॥ ( ३ ) ॥ त्रीणि कणश आदानस्य ॥ २ ॥ द्वे इति ॥ मृतम् ॥ ( १ ) ॥ अमृतम् ॥ ( १ ) ॥ प्रार्थनाऽप्रार्थन-

उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका । याच्ञयाऽऽप्तं याचितकं निमयादापमित्यकम्॥४॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् । कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः॥५॥
क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः । क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत् । तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता ॥७॥
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् । बीजाकृतं तूप्तकृष्टं सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतंतृतीयाकृतंत्रिहल्यंत्रिसीत्यमपि तास्मिन्। द्विगुणाकृतेतु तत्सर्वंद्विपूर्वंशम्बाकृतमपीह
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः । खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥

क्रिययोस्तत्कर्मणोर्वा एकैकम् ॥ सेति ॥ सत्यसहितमनृतं सत्यानृतम् ॥ ( १ ) ॥ वणिग्भावः ॥(२)॥ द्वे वाणिज्यस्य ॥ ऋणमिति ॥ "ऋणं देये जले दुर्गे" इति हैमः ॥ ( १ ) ॥ पर्युदञ्चनम् ॥ ( २ ) ॥ ॥ ३ ॥ "उद्धारश्चोद्धतावृणे" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि ऋणस्य ॥ अर्थेति ॥ अर्थप्रयोगः ॥ ॥ ( १ ) ॥ "कुसीदं वृद्धिजीवने । वृद्ध्याजीवे" इति हैमः ॥ ( २ ) ॥ वृद्धिजीविका ॥ ( ३ ) ॥ त्रीणि कुसीदस्य "व्याज" इति ख्यातस्य ॥ येति ॥ याचितकम् ॥ ( १ ) ॥ एकं याच्ञया प्राप्तस्य ॥ नीति ॥ आपमित्यकम् ॥ ( १ ) ॥ एकं परिवर्तनेनाप्तस्य ॥ ४ ॥ उत्तेति ॥ उत्तमर्णः ॥ ( १ ) ॥ अधमर्णः ॥ ( १ ) ॥ ऋणव्यवहारे धनस्वामिधनग्राहकयोः क्रमेणैकैकम् ॥ किति ॥ कुसीदिकः ॥ ( १ ) ॥ वार्धुषिकः ॥ ( २ ) ॥ वृद्ध्याजीवः ॥ ( ३ ) ॥ वार्धुषिः ॥ ( ४ ) ॥ चत्वारि ऋणदातुः ॥५॥ क्षेत्रेति ॥ क्षेत्राजीवः॥ (१) ॥ कर्षकः ॥ (२) ॥ कृषकः॥ वृद्धिपक्षे "कार्षकः" ॥ ( ३ ) ॥ कृषीवलः ॥ ( ४ ) ॥ चत्वारि कृषकस्य ॥ क्षयिति ॥ व्रैहेयम् ॥ ( १ ) ॥ शालेयम् ॥ ( १ ) धान्यसामान्यस्य कलमादेश्चोत्पत्तियोग्यक्षेत्रस्यैकैकम् ॥ ६ ॥ येति ॥ यव्यम् ॥ ( १ ) ॥ यवक्यम् ॥ ( १ ) ॥ षष्टिक्यम् ॥ ( १ ) ॥ एकैकं यवादीनां भवनक्षेत्रस्य ॥ तीति ॥ तिलानाम् ( १ ) माषाणाम् ( १ ) उमानाम् ( १ ) अणूनाम् ( १ ) भङ्गायाः ( १ ) च भवनं क्षेत्रम् ॥ तिल्यम् ॥ ( १ ) ॥ तैलीनम् ॥ ( २ ) ॥ माष्यम् ॥ ( १ ) ॥ माषीणम् ॥ ॥ ( २ ) ॥ उम्यम् ॥ ( १ ) ॥ औमीनम् ॥ ( २ ) ॥ अणव्यम् ॥ ( १ ) ॥ आणवीनम् ॥ ॥ ( २ ) ॥ भङ्ग्यम् ॥ ( १ ) ॥ भाङ्गीनाम् ॥ ( २ ) ॥ तिलादिभवनस्य प्रत्येकं द्वयं द्वयम् ॥ ॥ ७ ॥ मौद्गीति ॥ मुद्गानाम् ( १ ) कोद्रवाणाम् ( १ ) च भवनं क्षेत्रम् ॥ मौद्गीनम् ( १ ) कौद्रवीणम् ॥ ( १ ) ॥ आदिना गौधूमीनम् ॥ ( १ ) ॥ कालायीनम् ॥ ( १ ) ॥ कौलत्थीनम् ॥ ॥ ( १ ) ॥ प्रैयङ्गवीणम् ॥ ( १ ) ॥ चाणकीनम् ॥ ( १ ) ॥ इत्यादि ज्ञेयम् ॥ मुद्गादिभवनस्यैकैकम् ॥ बीति ॥ बीजेन सह कृतं कृष्टं बीजाकृतम् ॥ ( १ ) ॥ ( पूर्वम् ) उप्तं च तत् ( पश्चात् ) कृष्टं च उप्तकृष्टम् ॥ ( २ ) ॥ द्वे उप्तोत्तरं कृष्टस्य क्षेत्रस्य ॥ सीति ॥ सीत्यम् ॥ ( १ ) ॥ कृष्टम् ॥ ( २ ) ॥ हल्यम् ॥ ( ३ ) ॥ त्रीणि हलेनाकृष्टस्य क्षेत्रस्य ॥ ८ ॥ त्रीति ॥ त्रिगुणाकृतम् ॥(१)॥ तृतीयाकृतम् ॥ ( २ ) ॥ त्रिहल्यम् ॥ ( ३ ) ॥ त्रिसीत्यम् ॥ ( ४ ) ॥ चत्वारि वारत्रयकृष्टस्य॥ द्वीति ॥ द्विगुणाकृतम् ॥ ( १ ) ॥ द्वितीयाकृतम् ॥ ( २ ) ॥ द्विहल्यम् ॥ ( ३ ) ॥ द्विसीत्यम् ॥ ॥ ( ४ ) ॥ शम्बशब्दो द्वितीयकर्षणे वर्तते ॥ शम्बं कृतं शम्बाकृतम् ॥ "सरित्सैरिभसम्बाकृतम्" इति दन्त्यादौ वर्णदेशना ॥ ( ५ ) ॥ पञ्च द्विवारकृष्टस्य ॥ ९ ॥ द्रोणेति ॥ द्रोणस्य वापः क्षेत्रं द्रौणिकः ॥ ( १ ) ॥ आढकस्य वापः आढकिकः ॥ ( १ ) ॥ आदिना—प्रस्थस्य वापः प्रास्थिकः ॥(१)॥ कुडवस्य वापः कौडविकः ॥ ( १ ) ॥ 'वापादौ' इत्यादिना पचाद्यर्थग्रहः ॥ द्रोणम् , आढकं च पचति इत्यादि ॥ द्रोणादिपरिमितव्रीह्यादिवापयोग्यक्षेत्रस्यैकैकम् ॥ खेति ॥ खार्या वापः खारीकः ॥ (१) ॥

१—लक्ष्यादिवन्तोऽपि ॥ "श्रोत्रियस्य कदर्यस्य वदान्यस्यापि वार्धुषी"—इति स्वामी ॥

पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु । कैदारकं स्यात्कैदार्यं क्षैत्रं कैदारिकं गणे ॥ ११ ॥
लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः । प्राजनं तोदनं तोत्रं खनित्रमवदारणम् ॥ १२ ॥
दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम्। निरीशं कुटकं फालः कृषिको लाङ्गलं हलम् १३
गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः । ईशा लाङ्गलदण्डः स्यात्सीता लाङ्गलपद्धतिः
पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने। आशुर्व्रीहिः पाटलः स्यात्सितशूकयवौ समौ१९॥

एकं खारीपरिमितस्योप्तस्य ॥ उत्तेति ॥ खारीकान्ता वाच्यलिङ्गाः ॥ १० ॥ पुमिति॥"वप्रस्ताते पुमान्स्त्री रेणौ क्षेत्रे चये तटे" इति विश्वः॥ "वप्रः प्राकाररोधसोः । क्षेत्रे ताते चये रेणौ" इति हैमः॥(१)॥ "केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः" इति विश्वः॥ ( २ ) ॥ "क्षेत्रं भारतादौ भगाङ्गयोः । केदारे सिद्धभूपत्न्योः" इति हैमः ॥ "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति विश्वः ॥ ( ३ ) ॥ त्रीणि क्षेत्रस्य ॥ अस्येति ॥ कैदारकम् ॥ ( १ ) ॥ कैदार्यम् ॥ ( २ ) ॥ क्षैत्रम् ॥ ( ३ ) ॥ कैदारिकम् ॥ (४) ॥ चत्वारि क्षेत्रगणस्य ॥११॥ लवेति ॥ लोष्टम् ॥ पुंल्लिङ्गोऽप्ययम् ॥ "लेष्टुः शण्ढेऽपि लोष्टः स्यात्" इति बोपालितः ॥ (१) ॥ लेष्टुः ॥ ( २ ) ॥ द्वे मृदः खण्डानाम् ॥ कवेति ॥ कोटिशः ॥(१)॥ लोष्टभेदनः ॥ (२) ॥ द्वे लोष्टभेदनकाष्ठस्य "हेंगा" इति ख्यातस्य॥प्रेति॥ प्राजनम्॥(१)॥ तोदनम्॥(२)॥ "तोत्रं तु प्राजने वेणुकेऽपि च" इति विश्वः ॥ ( ३ ) ॥ त्रीणि वृषभादिप्रेरणदण्डस्य ॥ खेति ॥ खनित्रम् ॥ ( १ ) ॥ अवदारणम् ॥ ( २ ) ॥ द्वे खनित्रस्य "कुदाल" इति ख्यातस्य ॥१२॥ देति ॥ दात्रम् ॥ ( १ ) ॥ लवित्रम् ॥ ( २ ) ॥ द्वे दात्रस्य "दांत" इति ख्यातस्य ॥ आबेति ॥ आबन्धः ॥ ( १ ) ॥ योत्रम् ॥ ( २ ) ॥ योक्त्रम् ॥ ( ३ ) ॥ त्रीणि वृषादेर्गले युगबन्धनस्य ॥ अथो इति ॥ " फलं हेतुफले जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । फली फालिन्याम् " इति हैमः ॥ स्वामी तु "हलम्" इति पठित्वा ' हलप्रकरणमारब्धम्' इति व्याख्यत् ॥ ( १ ) ॥ निरीशम् ॥'निरीषम्'' च॥(२)॥कुटकम् ॥ मुकुटस्तु--(कूटकम्) दीर्घादिं मन्यते॥(३)॥ "फाल उत्प्लुतौ । क्लीबं सीरोपकरणे पुंसि शंकरसीरिणोः" ॥ ( ४ ) ॥ "कृषिकाकृषिकौ फालकृषकौ " इति रुद्रात् स्त्रियामपि ॥ "कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत् " इति विश्वः ॥ ( ५ ) ॥ पञ्चापि फालस्य॥---इति कालिङ्गः---द्वयं यत्र काष्ठे फालो निबध्यते तस्य ॥ अन्त्यद्वयं तु फालस्य---इति स्वामी ॥ लेति ॥ "लाङ्गली तोयपिप्पल्यां क्लीबं तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयोः" इति मेदिनी॥ (१)॥हलम् ॥ "हलः फालवहः सीता " इति विक्रमादित्यः ॥ ( २ ) ॥ १३ ॥ गोदारणम् ॥ ( ३ ) ॥ " हलतिग्मकरौ सीरौ" इति दन्त्यादौ रभसः ॥ " सीरः स्यादंशुमालिनि । लाङ्गले " इति हैमः ॥ ( ४ ) ॥ चत्वारि हलस्य ॥ अथेति ॥ शम्या ॥ ( १ ) ॥ युगकीलकः ॥ ( २ ) ॥ द्वे युगस्य कीलके ॥ ईति ॥ "प्रभुशंकरयोरीशः स्त्रियां लाङ्गलदण्डके " इति तालव्यान्ते रुद्ररभसौ ॥ " ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके " इति शान्ते विश्वः ॥ " ईषा पेषी मञ्जूषा " इति मूर्धन्यान्ते चन्द्रगोमी ॥ ( १ ) लाङ्गलदण्डः ॥ ( २ ) ॥ द्वे हलयुगयोर्मध्यकाष्ठस्य ॥ सीति ॥ "सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी " इति दन्त्यादौ रभसः॥"सीता जनकजागङ्गाभेदयोर्हलपद्धतौ"इति दन्त्यादौ हैमः॥"शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः॥" इति तालव्यादौ धरणिः ॥ ( १ ) ॥ लाङ्गलपद्धतिः ॥ ( २ ) ॥ द्वे लाङ्गलकृतरेखायाः ॥ १४ ॥ पुंवेति ॥ मेधिः ॥ स्वामी तु---'मेथिः' इति पठति ॥ ( १ ) ॥ एकं खले (भूमौ) पशुबन्धनार्थं न्यस्तस्य दारुणः॥ आशिवति ॥ "आशुस्तु व्रीहिशीघ्रयोः" इति हेमचन्द्रः ॥ " तृणबीजं तु श्यामाकौ, व्रीहिराशु च पाटलः" इति ( पर्याये ) क्लीबमाशु ॥ " आशु स्याद् व्रीहिशीघ्रयोः " इति रत्नमालायामपि क्लीबम् ॥ (१) ॥ व्रीहिः

१—केदार एकारवान्" नमिताः फलभारेण न मिताः शालिमञ्जरीः । केदारेषु हि पश्यन्तः के दारेषु विनिःस्पृहाः" इति दमयन्तीयमकात् ॥

तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः। हरेणुखण्डिकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥१६॥
मङ्गल्यको मसूरोऽथ मकुष्ठकमयुष्ठकौ । वनमुद्गे सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥
सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ। स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः १८॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फलेक्षवः क्षुधाभिजननो राजिका कृष्णिकाऽऽसुरी १९
स्त्रियौ कङ्गुप्रियंगू द्वे अतसी स्यादुमा क्षुमा।मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान्२०
किंशारुः शस्यशूकं स्यात्कणिशं शस्यमञ्जरी। धान्यं व्रीहिः स्तम्बकरिःस्तम्बो गुच्छस्तृणादिनः

॥ ( २ ) ॥ पाटलः ॥ ( ३ ) ॥ पाटलः, व्रीहिः, आशु, च इति नामत्रयम् ॥ आशुनामा व्रीहिः पाटल उच्यते इति नामद्वयम्----इति सुभूतिः ॥ " आशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान् " इति रुद्रः ॥ त्रीणि षष्टिकादेः ॥ सीति ॥ शितशूकः इति मध्यतालव्यः ॥ ( शितशूकः ) द्वितालव्यः----इति स्वामी ॥ ( १ )॥" यवो धान्येऽपृथक्कृतौ" इति हैमः ॥ ( २ ) ॥ द्वे यवस्य ॥ १५ ॥ तविति ॥ " तोक्मं कर्णमले, पुंसि हरिते च हरिद्यवे " इति मेदिनी ॥ ( १ ) ॥ एकमपक्वयवस्य ॥ केति ॥ कलायः॥ ( १ ) ॥ सतीनकः ॥" सातीनकः " अपि--इति माधवी ॥ ( २ ) ॥ " हरेणुः स्त्री रेणुकायां स तु पुंसि सतीनके" इति रभसात्पुंसि ॥ ( ३ ) ॥ खण्डिकः ॥ ( ४ ) ॥ " कलायस्त्रिकटः प्रोक्तः सतीनो वर्तुलो मतः । हरेणु-रङ्कटो ज्ञेयः " इति व्याडिः ॥ चत्वारि सतीनकस्य ॥ कोरेति ॥ कोरदूषः ॥ ( १ ) ॥ कोद्रवः ॥ (२)॥ द्वे कोद्रवान्नस्य ॥ १६ ॥ मेति ॥ मङ्गल्यकः ॥ ( १ ) ॥ मसूरः॥" वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम् । मसूरमसुरौ पुंसि द्वावेतावपि चैतयोः " इति रभसः ॥ ( २ ) ॥ द्वे मसूरस्य ॥ अथेति ॥ मकुष्ठकः ॥ विश्वमेदिन्योस्तु"मकुष्ठो व्रीहिभेदे स्यात् मकुष्ठो मन्थरेऽन्यवत् " इति टवर्गद्वितीयान्तः ॥ ( १ ) ॥ मयुष्ठकः ॥ ( २ ) ॥ वनमुद्गः ॥ ( ३ ) ॥ त्रीणि "मोठे" इति ख्यातस्य ॥ सेति " सर्षपः स्यात् सारिषपः कुटुस्नेहश्च तन्तुभः " इति त्रिकाण्डशेषः॥(१)॥ तन्तुभः॥स्वामी तु" तुन्तुभः "इत्याह ॥ ( २ ) ॥ कदम्बकः ॥ (३) ॥ त्रीणि सर्षपस्य॥१७॥सीति॥ "सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे" इति विश्वः ॥(१)॥एकं धवलसर्षपस्य॥गविति॥"गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः " इति मेदिनी ॥ ( १ ) ॥ सुमनः ॥ " गोधूमसुमनौ समौ" इति रभसः ॥ ( २ ) ॥ द्वे गोधूमस्य ॥ स्येति ॥ यावकः ॥ ( १ ) ॥ कुल्मासः दन्त्यान्तः इति मुकुटः ॥ "कुल्माषो यावकः पुंसि" इति मूर्धन्यान्तेषु रभसः॥(२)॥कुल्माषोऽर्धस्विन्नो यवादिः—इति स्वामी॥'शूकशून्यो यवादिः'इति रक्षितादयः॥द्वे यवविशेषस्य ॥ चेति॥ चणकः॥(१)॥हरिमन्थकः ॥(२)॥द्वे चणकस्य ॥ १८ ॥ द्वाविति ॥ तिलपेजः॥(१)॥ तिलपिञ्जः॥ (२) ॥ "जर्तिलः " अपि । "अर्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः" ॥ द्वे तैलहीनतिलस्य ॥ क्षेति ॥ "क्षवः क्षुते राजिकायाम् " इति मेदिनी ॥ ( १ ) ॥ क्षुधाभिजननः॥"क्षुताभिजननः"—इति स्वामी ॥ ( २ ) ॥ राजिका ॥ ( ३ ) ॥ कृष्णिका ॥ ( ४ ) ॥ आसुरी ॥ ( ५ ) ॥ पञ्च " राई " इति ख्यातायाः ॥१९॥ स्त्रीति ॥ कङ्गुः ॥ (१) ॥ प्रियंगुः॥(२) ॥ द्वे प्रियङ्ग्वाः ॥ अतेति ॥ अतसी ॥(१)॥ "उमाऽतसीहैमवतीहरिद्राकीर्तिकान्तिषु" इति मेदिनी ॥ ( २ ) ॥ " क्षुमाऽतसीनीलिकयोः " इति विश्वः ॥ ( ३ ) ॥ त्रीण्यतस्याः ॥ मेति ॥ मातुलानी ॥ ( १ ) ॥ "तरङ्गभेदयोर्भङ्गो भङ्गा शस्यशणाह्वये" इति रुद्रः ॥ ( २ ) ॥ द्वे शणाख्यशस्यभेदस्य॥ व्रीति ॥ व्रीहिविशेषः ॥ " अणुर्व्रीह्यल्पयोः " इति हैमः ॥ ( १ ) ॥ एकम् " चीना " इति ख्यातस्य ॥२०॥ किमिति ॥ "अथ किंशारुर्धान्यशूके शरेऽपि च" इति हैमः ॥ ( १ ) ॥ शस्यस्य शूकम् ॥ —शस्यस्य शूकः–इति मुकुटः॥ शस्यशूकम् ॥ (२) ॥ द्वे यवाद्यग्रस्य ॥ केति ॥ " कणिशो धान्यशीर्षके " इति तालव्यान्ते रत्नकोषः ॥(१)॥ शस्यमञ्जरी॥(२)॥ द्वे धान्यमञ्जर्याः ॥ धेति ॥"धान्यं तु व्रीहौ धान्याके" इति हैमः ॥(१)॥ "व्रीहिः सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययम्" इति विश्वः ॥(२)॥स्तम्बकरिः ॥ (३)॥

**नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः। कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमांस्तुषः**
**शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी सिम्बा त्रिषूत्तरे। ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम्॥२३॥**
**माषादयः शमीधान्ये शूकधान्ये यवादयः। शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी॥२४॥**
**तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका। अयोग्रो मुसलोऽस्त्री स्यादुदूखलमुलूखलम्॥२५॥**
**प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्। स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ॥२६॥**

त्रीणि धान्यसामान्यस्य ॥ स्तेति ॥ स्तम्बः ॥ (१) ॥ गुच्छः ॥ (२) ॥ आदिना व्रीहियवादिग्रहः ॥ द्वे यवादीनां मूलस्य ॥ २१ ॥ नेति ॥ "नाडी कुहनचर्यायां घटिकागण्डदूर्वयोः। नाले गुणान्तरे स्नायौ" इति हैमः ॥ (१) ॥ "नालं काण्डे मृणाले च नाली शाककलम्बके" इति च हैमः ॥ (२) ॥ "काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे। सहःश्लाघाम्बुषु स्तम्बे" इति हैमः ॥ (३) ॥ अस्य गुच्छस्य ॥ त्रीणि गुच्छकाण्डस्य ॥ पेति ॥ पलालः ॥ (१) ॥ स काण्डः ॥ एकं निष्फलस्य काण्डस्य॥ केति ॥ कडङ्गरः ॥ "कडंकरः" इति हरदत्तः ॥ (१)॥ बुसं दन्त्यमिति धातुप्रदीपः ॥ "बुषवेषतुषारतोषाः" इति षभेदान्मूर्धन्यान्तमपि ॥ (२) ॥ द्वे तुषस्य ॥ धेति ॥ धान्यत्वक् ॥ (१) ॥ "तुषस्तु धान्यत्वचि विभीतके" इति हेमचन्द्रः ॥ (२) ॥ द्वे धान्यादेस्त्वचः ॥२२॥ शिवति ॥ "शूकोऽनुक्रोशशुङ्गयोः" इति विश्वः ॥ (१)॥ "श्लक्ष्णं कृशं च तत्तीक्ष्णं च तदग्रं च श्लक्ष्णतीक्ष्णाग्रम्॥(२)॥ किंशारोरन्यः शूको निर्दिष्टः॥ शूकधान्यशमीधान्यभेदार्थं वा पुनरुक्तः ॥ द्वे शूकस्य ॥ शेति॥शमी ॥ "शमी सक्तुपलायां च शिम्बिकायां च वल्गुलौ"इति मेदिनी ॥ (१) ॥ सिम्बा ॥ "शिम्बा" ॥ "शिमिः" "शिम्बिः" इत्यपि—इति स्वामी॥ ॥ (२) ॥ द्वे "छिमि" इति ख्यातायाः ॥ त्रीति ॥ उत्तरे बहुलीकृतान्ताः॥ रिति॥"ऋद्धं संपन्नधान्ये च सुसमृद्धे तु वाच्यवत्" इति विश्वः॥ "रिद्धम्" संसिद्धम् इति स्वामी ॥ (१) ॥ "अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिङ्गं स्यात्" इति विश्वः ॥ (२)॥ द्वे मर्दनानन्तरमपनीततृणस्य बहुलीकरणयोग्यस्य धान्यराशेः ॥ पिवति ॥ "पूतं त्रिषु पवित्रे च शठिते बहुलीकृते' इति विश्वः ॥ (१) ॥ बहु मानं लाति ॥ अबहुलं बहुलमकारि बहुलीकृतम् ॥ (२) ॥ द्वे राशीकृतस्य ॥ हैमे तु "धान्यमावसितं रिद्धं तत्पूतं निर्बुसीकृतम्" इत्युक्तम् ॥ २३ ॥ मेति ॥ "माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः। काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः" इति रत्नकोषः ॥ शमीधान्यम् ॥ (१) ॥ एकं शमीधान्यस्य ॥ श्विति ॥ शूकधान्यम् ॥ (१) ॥ आदिना गोधूमादिः ॥ एकं शूकधान्यस्य॥ शेति ॥ "शालिस्तु गन्धालौ कलमादिषु" इति हैमः ॥ (१) ॥ एकमधिकजलोद्भूतानां कलमादीनाम्, षष्टिरात्रेण पच्यमानानां षष्टिकादीनां च॥ष्विति॥ अमी माषाद्याः॥२४॥ त्रिति॥तृणधान्यम्॥(१)॥ "स्यान्नीवारो वणिजके वास्तव्येऽपि च दृश्यते" इति विश्वः ॥ (२) ॥ बहुवचनेन श्यामाकादिग्रहः॥ द्वे मुनिखाद्यस्यान्नस्य ॥ स्त्रीति ॥ गवेधुः ॥ "गवेडुः"—इत्याह मुकुटः ॥ (१) ॥ गवेधुका॥ ॥ (२) ॥ द्वे ऋषीणामन्नविशेषस्य ॥ अयविति ॥ अयोग्रः ॥ (१) ॥ "मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि" इति विश्वमेदिन्यौ ॥ (२) ॥ द्वे मुसलस्य ॥ उद्विति ॥ ऊर्ध्वं च तत् खं च ऊर्ध्वखं लाति ॥ "उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः" इति मेदिनी ॥ (१) ॥ उलूखलम् ॥(२)॥ द्वे उलूखलस्य ॥ २५ ॥ प्रेति ॥ प्रस्फोटनम् ॥

---

१—धान्यपदेन सप्तदश धान्यान्युच्यन्ते। व्रीहि (१) यव (२) मसूर (३) गोधूम (४) मुद्ग (५) माष (६) तिल (७) चणक (८) अणु (९) प्रियंगु (१०) कोद्रव (११) मकुष्ठक (१२) कलाय (१३) कुलत्थ (१४) षठ (१५) सर्षप (१६) अतसी (१७) इति सप्तदश—इति मुकुटः॥ महाभाष्ये (५।२।४ सूत्रे) तु "शणसप्तदशानि धान्यानि" इत्युक्तम् ॥ २—गुणान्तरं चर्मरज्जुविशेषः। तत्र यथा "नाडीभिर्नह्यते युगम्" ॥ इत्यनेकार्थकैरवाकरकौमुदी॥ 'व्रणान्तरे' इति पाठ आसीत् ॥ ३—सहो बलम् ॥

**समानौ रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ॥ २७ ॥**
**आरालिका आन्धसिकाः सूदा औदनिका गुणाः।आपूपिकः कान्दविको भक्षकार इमे त्रिषु२८॥**
**अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका । अङ्गारधानिकाऽङ्गारशकटचापि हसन्त्यपि ॥ २९॥**
**हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्।क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्**

( १ ) ॥ "शुभशतकिंशारुशूर्पांशुकम्" इति शभेदात्तालव्यादिः ॥ "सूर्पे च" इति पाठाद्दन्त्यादिरपि ॥ ( २ ) ॥ द्वे शूर्पस्य ॥ चेति ॥ चालनी ॥ "क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः" इति कात्यः ॥ ( १ ) ॥ "चालनं तितउ प्रोक्तम्" इति क्लीबकाण्डे रत्नकोषः ॥ "न स्त्री तितउ चालनी" इति त्रिकाण्डशेषः ॥ ( २ ) ॥ द्वे चालन्याः ॥ स्यूति ॥ स्यूतः ॥ "स्योनप्रसेवौ" इति मुकुटः ॥ "स्योनस्यूतप्रसेवकाः" इति रभसः ॥ ( १ ) ॥ "प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ" इति हेमचन्द्रः ॥ ( २ ) ॥ द्वे वस्त्रशणादिनिर्मितस्य "थैला" इति ख्यातस्य ॥ केति ॥ कण्डालः ॥ ( १ ) ॥ पिटः ॥ "पिटकः" अपि ॥ "पिण्डः"—इति स्वामी ॥ "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि ॥ ओण्ड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । पिण्डी स्यात्पिण्डतगरेऽलाबूखर्जूरभेदयोः" इति मेदिनी ॥ ( २ ) ॥ द्वे वंशादिनिर्मितभाण्डस्य ॥ केति ॥ "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां च कटी मता" इति मेदिनी ॥ ( १ ) ॥ किलिञ्जकः ॥ ( २ ) ॥ द्वे वंशादिनिर्मितकटस्य ॥ २६ ॥ सेति ॥ "समानौ" इति पूर्वेषु त्रिष्वप्यन्वेति ॥ रेति ॥ रसवती ॥ ( १ ) ॥ पाकस्थानम् ॥(२)॥ महानसम् ॥ (३) ॥ त्रीणि पाकस्थानस्य ॥ पाविति ॥ पौरोगवः ॥(१)॥ तस्याध्यक्षः महानसाध्यक्षः ॥ (२) ॥ द्वे महानसाधिकृतस्य ॥ स्विति ॥सूपकारः ॥(१)॥ " बल्लवः सूपकारे स्याद्भीमसेने च गोदुहि " इति विश्वः ॥ (२) ॥२७ ॥ आरालिकः ॥ ( ३ ) ॥ अन्धो भक्तं शिल्पं येषाम् आन्धासिकः ॥ ( ४ ) ॥ "सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे " इति विश्वमेदिन्यौ ॥ ( ५ ) ॥ ओदनं शिल्पं येषाम् औदनिकः ॥ ( ६ ) ॥ " गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिय । त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु ॥ शुक्लादावपि बुद्ध्यां च" इति मेदिनी ॥ ( ७ ) ॥ सप्त पाचकस्य—आद्यद्वयं व्यञ्जनकारस्य—इति स्वामी ॥ आविति ॥ अपूपाः पण्यमस्य आपूपिकः ॥ ( १ ) ॥ कन्दौ संस्कृतम् ॥ कान्दवं पण्यमस्य कान्दविकः ॥ ( २ ) ॥ भक्षं करोति ॥ भक्षकारः ॥ ( २ ) ॥ त्रीणि पाकविक्रेतुः ॥ इमयिति ॥ इमे पौरोगवादयः॥२८॥ अश्मेति ॥ "अश्मन्तमशुभे चुल्ल्यां मरणेऽनवधावपि । क्षेत्रेऽपि" इति विश्वः॥ "अस्वन्तम्" इति पाठः॥ ( १ ) ॥ " उद्धानमुद्वते वाच्यलिङ्गं चुल्ल्यां नपुंसकम् " इति विश्वः ॥ " उद्धमानम् " इति पाठः॥ ( २ ॥ अधिश्रयणी ॥ (३) ॥ चुल्लिः ॥ ( ४ ) ॥ " अन्तिकं निकटे वाच्यलिङ्गं स्त्री शातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्तौ कीर्त्यतेऽन्तिका " इति मेदिनी ॥ ( ५ ) ॥ पञ्च चुल्लेः ॥ अङ्गेति ॥ अङ्गारा धीयन्तेऽस्याम् अङ्गारधानिका ॥ ( १ ) ॥ अङ्गारशटकी ॥ ( २ ) ॥ " हसन्त्यङ्गारधान्यां च मल्लिकाशाकिनीभिदोः " इति विश्वः ॥ ॥ ( ३ ) ॥ २९ ॥ हसनी ॥ ( ४ ) ॥ चत्वारि " बोरसी" इति ख्यातायाः ॥ अथेति ॥ "अङ्गारे-मुल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते " इति विश्वः ॥ ( १ ) ॥ एकमङ्गारस्य ॥ अलेति ॥ अलातम् ॥ (१)॥ उल्मुकम्॥(२)॥ द्वे अर्धदग्धकाष्ठस्य॥--त्रयोऽपि पर्यायाः—इति मुकुटः ॥ क्लीति॥"अम्बरीषपुरुषोपरीषधम् " इति षभेदान्मूर्धन्यान्तोऽयम् ॥ "अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ॥ आम्रातकेऽनुतापे च " इति मेदिनी ॥ ( १ ) ॥ भ्राष्ट्रः ॥ ( २ ) ॥ द्वे भर्जनपात्रस्य ॥ नेति ॥ कन्दः ॥' वा ' इत्यस्यात्राप्यन्वयः ॥ पक्षे स्त्रीसाहचर्यात् ॥ (१) ॥ स्वेदनी ॥—'वा' स्त्रियाम् इत्यन्वयात् 'स्वेदनः ' अपि—इति मुकुटः ॥ ( २ ) ॥ द्वे " कराही " इति ख्यातस्य ॥ ३० ॥

१—स च साम्निर्निरग्निश्च । तत्र साग्नौ यथा—"अङ्गारचुम्बितमिव व्यथमानमास्ते" इति । निरग्नौ यथा—"कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारतुलनाम् " इत्यादिप्रयोगः इति मुकुटः ॥ २ उचितमिदम् । उक्तमेदिन्यामङ्गारस्योल्मुकार्थकतोक्तेः ॥

**अलिञ्जरः स्यान्मणिकः कर्कर्यालूर्गलन्तिका । पिठरः स्थाल्युखा कुण्डं कलसस्तु त्रिषु द्वयोः घटः कुटनिपावस्त्री शरावो वर्धमानकः । ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥३२॥ कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् । सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ३३॥ दर्विः कम्बिः खजाका च स्यात्तर्दूर्दारुहस्तकः । अस्त्री शाकं हरितकं शिग्रुरस्य तु नालिका ३४ कडम्बश्च कलम्बश्च वेसवार उपस्करः । तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥३५॥**

अलीति॥ अलिञ्जरः ॥ ( १ ) ॥ मणिकः ॥ ( २ ) ॥ द्वे 'माट' इति ख्यातस्य ॥ केति ॥ "कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु " इति विश्वः ॥(१) ॥ आलूः ॥ ह्रस्वपाठे" आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके " इति विश्वः ॥ ( २ ) ॥ गलन्तिका ॥ ( ३ ) ॥ त्रीणि ' करवती ' इति ख्यातायाः ॥ कन्दोर्धृतपक्वनिष्काशनसाधनस्य----इत्येके ॥ पीति ॥ पिठरः ॥ ( १ ) ॥ "स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः " इति मेदिनी ॥ ( २ ) ॥ उखा॥'उषा' इति च ॥ ( ३ ) ॥ "कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् ॥ पिठरे तु न ना " इति विश्वः ॥(४) ॥ चत्वार्योदनादिपचनपात्रस्य ॥ कोति ॥ कलसः ॥ " ताल्व्या अपि दन्त्याश्च शम्बशूकरपांशवः । कलशः शम्बलं चैव जिह्वायां रशना तथा"इति शभेदः ॥(१)॥३१॥ स्त्रियां घटी॥"घटः समाधिभेदे ना शिरःकूटकुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति " इति मेदिनी ॥ ( २ ) ॥ कुटः ॥ ( ३ ) ॥ निपः ॥ ( ४ ) ॥ कुटनिपावप्यस्त्री ॥ चत्वारि घटस्य ॥ अस्त्रीति ॥ शरावः ॥ ( सरावः ) दन्त्यादिरपि----इति मुकुटः ॥ ( १ ) ॥ वर्धमानकः ॥ ( २ ) ॥ द्वे शरावस्य ॥ ऋजीति ॥ ऋजीषम् ॥ "ऋचीषम् " इति पाठः---- इति कश्चित् ॥ ( १ ) ॥ पिष्टपचनम् ॥ ( २ ) ॥ द्वे "तावा" इति ख्यातस्य ॥ कमिति ॥ "कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना " इति मेदिनी ॥ ( १ ) ॥ पानभाजनम् ॥ ( २ ) ॥ द्वे क्षीरादिपान-भाजनस्य ॥ ३२ ॥ किति ॥ कुतूः ॥ ( १ ) ॥ कृत्तेश्चर्मणः ॥ स्नेहपात्रम् ॥ ( २ ) ॥ द्वे चर्मणस्तै-लाद्याधारभाजनस्य ॥ सैवेति ॥ " सा " इति निर्देशात् कुतूः स्त्रीलिङ्गः ॥ अल्पा कुतूः कुतुपः ॥ ( १ ) ॥ एकमल्पायाः कुत्वाः ॥ सेति ॥ आवपनम् ॥ ( १ ) ॥ " भाण्डं मूलवणिग्वित्ते तुरंगाणां च मण्डने ॥ नदीकूलद्वयीमध्ये भूषणे भाजनेऽपि च " इति हैमः ॥ ( २ ) ॥ पात्रम् ॥ ( ३ ) ॥ अमत्रम् ॥ ( ४ ) ॥ भाजनम् ॥ ( ५ ) ॥ स्यूतादि पिठरादि च सर्वमावपनादिशब्द-वाच्यम् ॥ पञ्च पात्रस्य ॥ ३३ ॥ देति ॥ दर्विः ॥ "दर्वी" च ॥ "दर्वी पणातर्द्वोः" इति हैमः ॥(१)॥ कम्बिः ॥ ( २ ) ॥ खजाका ॥ ( ३ ) ॥ एतत्साहचर्यात्पूर्वयोः स्त्रीत्वम् ॥ त्रीणि "करछुली" इति ख्या-तायाः ॥ स्यादिति ॥ तर्दूः ॥ ( १ ) ॥ दारुहस्तकः ॥ ( २ ) ॥ एतत्साहचर्यात्पूर्वः पुंसि ॥ द्वे दर्वी-विशेषस्य ॥ पञ्चापि पर्यायाः उक्तहैमानुरोधात् इत्येके ॥ अस्त्रीति ॥ "शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान्, हरितकेऽस्त्रियाम्" इति विश्वः ॥ ( १ ) ॥ हरितकम् ॥ ( २ ) ॥ "शिग्रुर्ना शाक-मात्रे च शोभाञ्जनमहीरुहे" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ त्रीणि शाकस्य ॥ अस्येति ॥ ३४ ॥ कडम्बः ॥ ( १ ) ॥ डलयोरैक्यम् ॥ "कलम्बी शाकभेदे, स्यात्कदम्बशरयोः पुमान्" इति मेदिनी ॥ "कलम्बः सायके नीपे नालीशाके कलम्ब्यपि" इति विश्वः ॥ ( २) ॥ द्वे शाकनालस्य ॥—त्रीणि—इति मुकुटः ॥ वेसेति ॥ वेसवारः ॥ ( १ ) ॥ उपस्करः॥ ( २ ) ॥ द्वे संस्कारार्थे दीयमानस्य हिङ्ग्वादेः ॥—हिङ्गु-जीरकहरिद्राधान्याकशुण्ठीसर्षपादेः—इति मुकुटः ॥ "चित्रकं पिप्पलीमूलं पिप्पलीचव्यनागरम् ॥ धान्याकं रजनीश्वेततण्डुलाश्च समांशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेत्" इत्यात्रेयसंहिता ॥ विंशतिः पलानि हरिद्रायाः, दश पलानि धान्याकस्य, पञ्च पलानि शुद्धजीरकस्य, पलसार्धद्वयं मेथिकायाः, । एतच्चतुष्टयं भर्जितमेव ग्राह्यम् । त्रीणि पलानि मरीचस्य, अर्धपलं रामठस्य । एतत्सर्वमेकत्र संयोज्य संमर्दितं वेसवार इत्युच्यते—इत्यन्ये ॥ तीति ॥ तिन्तिडीकम् ॥ ( १) ॥ "चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्ल-वेतसे" इति विश्वः ॥ ( २ ) ॥ वृक्षाम्लम् ॥ ( ३ ) ॥ त्रीणि "चूका" इति ख्यातस्य ॥—वल्लीविशे-

१—अत एव ' नाला न ना पद्मदण्डे नाली शाककडम्बके" इति मेदिन्यां नालीशब्दस्य कडम्बवाचकता दृश्यते ॥

मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् । जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ३६॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।आर्द्रकं शृङ्गवेरं स्यादथ च्छत्रा वितुन्नकम्३७
कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् । स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ।।३८।।
आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिकं॥३९॥
सहस्रवेधि जतुकं बाल्हीकं हिङ्गु रामठम् । तत्पत्त्री कारवी पृथ्वी वाष्पिका कबरी पृथुः ४०
निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी ॥ सामुद्रं यत्तु लवणमक्षीवं वसिरं च तत् ॥४१॥

षस्य--इत्यन्ये ॥ अथेति ॥ वेल्लजम् ॥ ( १ ) ॥ ३५ ॥ मरीचम् ॥ ( मरिचम् ) ह्रस्वमध्यमपि ॥ ॥ ( २ ) ॥ कोलकम् ॥ ( ३ ) ॥"कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः" इति विश्वः ॥ ( ४ ) ॥ "ऊषणं मरिचे क्लीबं कणायामूषणा स्मृता" इति मेदिनी ॥ "उषणम्" इति च ॥ ( ५ ) ॥ धर्मपत्तनम् ॥ ( ६ ) ॥ षट् मरिचस्य ॥ जीति ॥ जीरकः ॥ ( १ ) ॥ "जरणं हिङ्गुनि स्मृतम् । जरणो: जीरकेऽपि स्यात्कृष्णे सौवर्चलेऽपि च" इति विश्वः ॥ ( २ ) ॥ अजाजी ॥ ( ३ ) ॥ "कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे" इति विश्वः ॥ ( ४ ) ॥ चत्वारि जीरकस्य ॥ क्रिति ॥ ३६ ॥ सुषवी ॥ ( १ ) ॥ "कारवी मधुरादीप्यत्वक्पत्त्रीकृष्णजीरके" इति मेदिनी ॥ ( २ ) ॥ "पृथ्वी भूमौ महत्यां च त्वक्पत्त्र्यां कृष्णजीरके" इति विश्वः ॥ ( ३ ) ॥ "पृथुः स्यान्महति त्रिषु । त्वक्पर्ण्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे" इति मेदिनी ॥ ( ४ )॥ काला ॥ ( ५ ) ॥ उपकुञ्चिका ॥ ( ६ ) ॥ षट् कृष्णजीरकस्य ॥ आर्द्रेति ॥ आर्द्रकम् ॥ ( १ ) ॥ शृङ्गवेरम् ॥ ( २ ) ॥ द्वे आर्द्रकस्य ॥ अथेति ॥ "छत्त्रं स्यादातपत्राणे छत्त्रा मधुरिकौषधी । धान्याके च शिलीन्ध्रे च" इति हेमचन्द्रः ॥ (१) ॥ "वितुन्नकं तु धान्याके झाटामलमयूरके" इति विश्वः ॥ ( २ ) ॥ ३७ ॥ कुस्तुम्बरु ॥ ( ३ ) ॥ धान्याकम् ॥ ह्रस्वादिः—इति मुकुटः ॥ "धन्याकं धान्यकं धान्यं कुस्तुम्बुरु धनीयकम्" इति रभसः ॥ ( ४ ) ॥ चत्वारि धान्यकस्य ॥ अथेति ॥ शुण्ठी ॥ ह्रस्वान्तोऽपि ॥ "सधन्याशुण्ठिसैन्धवम्" इति वैद्यकम् ॥ ( १ ) ॥ "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति विश्वः ॥ ( २ ) ॥ "विश्वं कृत्स्ने च भुवने, विश्वेदेवेषु, नागरे । विश्वाऽप्यतिविषायां स्यात्" इति विश्वः ॥ "विश्वा त्वतिविषायां स्त्री, जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदे त्वखिले त्रिषु" इति मेदिनी ॥ ( ३ ) ॥ "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" इति मेदिनी ॥ ( ४ ) ॥ विश्वभेषजम् ॥ ( ५ ) ॥ पञ्च शुण्ठ्याः ॥ ३८ ॥ आरेति ॥ आरनालकम् ॥ ( १ ) ॥ "सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले । ना तु नीवृति" इति मेदिनी ॥ ( २ ) ॥"कुल्माषं स्यात्तु काञ्जिके । कुल्माषोऽर्धस्विन्नधान्ये" इति हेमचन्द्रः ॥ ( ३ ) ॥ अभिषुतम् ॥ कुल्माषैर्यवादिभिरर्धस्विन्नैरभिषूयते स्म ( कुल्माषाभिषुतम् ) इत्येकं नाम—इति स्वामी ॥(४) ॥ अवन्तिसोमम् ॥ (५) ॥ धान्याम्लम् ॥(६)॥ कुञ्जलम् ॥(७)॥ काञ्जिकम् ॥ "काञ्चिके" इति पाठे "काञ्चिकं काञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं वहारसम् । सौवीरं च सुवीराम्लं तथा शुक्तं तुषोदकम्" इति धन्वन्तरिः ॥ ( ८ )॥ अष्टौ काञ्जिकस्य॥ ॥ ३९ ॥ सेति ॥ सहस्रवेधि ॥ ( १ ) ॥ "जतुकाऽजिनपत्त्रायां जतुकं हिङ्गुलाक्षयोः" इति मेदिनी ॥ ( २ ) ॥ बाल्हीकम् ॥ ह्रस्वमध्यमपि ॥ "अथ बाल्हिकः । देशभेदेऽश्वभेदे च बाल्हिकं हिङ्गुकुङ्कुमम् "इति हैमः॥(३)॥हिङ्गु॥(४) ॥रामठदेशोद्भवत्वादुपचारः॥रामठम् ॥ (५)॥पञ्च रामठस्य ॥ तेति ॥ तस्य हिङ्गुतरोःपत्त्री तत्पत्त्री॥"त्वक्पत्त्री"इति च पाठः॥"तत्पत्त्री त्वचमाख्यातं त्वक्पत्त्री कारवीति च"इति रुद्रः॥" त्वक्पत्त्रं तु वराङ्गके । त्वक्पत्त्रीति च कारव्याम्" इति हैमः ॥(१)॥कारवी ॥(२)॥"पृथ्वी भूमौ महत्यां च त्वक्पत्त्र्यां कृष्णजीरके" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ वाष्पिका ॥ "वाष्पीका" इति च ॥ ( ४ ) ॥ कबरी ॥ "कर्वरी" इति च पाठभेदः—इति स्वामी ॥ ( ५ ) ॥ "पृथुः स्यान्महति त्रिषु । त्वक्पत्त्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे" इति मेदिनी ॥ ( ६ ) ॥ षट् हिङ्गुपत्त्र्याः ॥ ४० ॥ नीति ॥ निशाह्वा ॥ निशापदेन तत्पर्याया लक्ष्यन्ते ॥ ( १ ) ॥ "काञ्चनः काञ्चनारे स्याच्चम्पके नाग॰

सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे । रौमकं वसुकं पाक्यं विडं च कृतके द्वयम् ॥
सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके । मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥४३॥
कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता। स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ४४
शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम् । प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥४५॥

केसरे । उदुम्बरे च धत्तूरे, हरिद्रायां तु काञ्चनी ॥ क्लीबेऽब्जकेसरे हेम्नि" इति विश्वः ॥ ( २ ) ॥ "पीतो वर्णनिपीतयोः । पीता हरिद्रा" इति हैमः ॥ ( ३ ) ॥ हरिद्रा ॥ ( ४ ) ॥ वरवर्णिनी ॥(५)॥ पञ्च हरिद्रायाः ॥ सेति ॥ "सामुद्रं लवणान्तरे । लक्षणे च शरीरस्य" इति हैमः ॥ "लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्वियोः स्त्रियाम्" इति मेदिनी ॥ "अक्षीवं वशिरे, शिग्रौ ना, मत्ते पुनरन्यवत्" इति विश्वः ॥ ( १ ) ॥ वसिरम् ॥ तालव्यमध्यमपि ॥ "वशिरः पुमान् । किणिहीहस्तिपिप्पल्योः क्लीबेऽब्धिलवणे स्मृतः" इति मेदिनी ॥ ( २ ) द्वे समुद्रोद्भवलवणस्य ॥ ४१ ॥ सैन्धेति ॥ "सैन्धवस्तु सिन्धुदेशोद्भवे हये । माणिमन्थेऽपि" इति हेमचन्द्रः ॥ ॥ ( १ ) ॥ "अथ शीतशिवं क्लीबं शैलेयमाणिमन्थयोः । पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ" इति मेदिनी ॥ "सितशिवम्"—इति मुकुटः ॥ ( २ ) ॥ माणिमन्थाख्यपर्वते भवं माणिमन्थम् ॥ माणिबन्धपर्वते भवम् ( माणिबन्धम् )—इति तु स्वामी ॥ ( ३ ) ॥ सिन्धुजम् ॥ ( ४ ) ॥ चत्वारि सिन्धुदेशोद्भवस्य लवणस्य॥ रौमेति ॥ रौमकम् ॥ ( १ ) ॥ "वसुकं रौमके, पुंसि शिवमल्लयर्कपर्णयोः" इति विश्वः॥ "वस्तकम्" इति पाठे "रौमके वस्तकं वसु" इति नाममाला॥(२)॥ द्वे "सांभरी" इति ख्यातस्य॥ पेति॥ पाक्यम् ॥(१)॥ विडम् ॥ ( २ ) ॥ द्वे कृतकस्य लवणस्य "खारी" इति ख्यातस्य ॥४२॥ सावेति ॥ "अथ सौवर्चलं सर्जक्षारे च लवणान्तरे" इति मेदिनी ॥ ( १ ) ॥ "अक्षो रथस्यावयवे व्यवहारे विभीतके । पाशके शटके कर्षे ज्ञाने चात्मनि रावणौ ॥ अक्षं सौवर्चले तुत्थे हृषीके" इति हेमचन्द्रः ॥ ( २ ) ॥ "रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽश्वाभरणमाल्ययोः ॥ सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ त्रीणि "सौंचर" इति ख्यातस्य ॥ तीति ॥ "तिलको द्रुमरोगाश्वभेदेष तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्ना स्त्रियां तु विशेषके" इति मेदिनी ॥ ( १ ) ॥ एकं तस्मिन् ( सौवर्चले ) कृष्णवर्णे ॥ मेति ॥ मत्स्यण्डी ॥ ( १ ) ॥ फाणितम् ॥ ( २ ) ॥ खण्डविकारः ॥ ( ३ ) ॥ त्रीणि "राव" इति ख्यातस्य ॥ शुभ्रखण्डगुटिकायाः क्रमेणैकैकम्—इति मुकुटः ॥ शेति ॥ "शर्करा खण्डविकृतौ कर्पराशे रुगन्तरे । उपलायां शर्करायुक्तदेशे शकलेऽपि च" इति हैमः ॥ ( १ ) ॥ "सितमवसिते च बद्धे धवले त्रिषु । शर्करायां स्त्री" इति मेदिनी ॥ ( २ ) ॥ द्वे "मिश्री" इति ख्यातायाः ॥ ४३ ॥ किति ॥ "दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका । तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्चिका" "कूर्चिका सूचिकायां च तूलिकायां च कुड्मले । कपाटाकुटिके(टोद्धेदने ) क्षीरविकृतावपि योषिति" इति मेदिनी ॥ ( १ ) ॥ क्षीरविकृतिः ॥ ( २ ) ॥ "उभे क्षीरस्य विकृती किलाटी कूर्चिका तथा" इति हैमनाममाला ॥ द्वे किलाटिकायाः "मावा' इति ख्यातायाः ॥ रेति ॥ रसाला ॥ ( १ ) ॥ मार्जिता ॥ ( २ ) ॥ "अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् ॥ सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरसा रसाला याऽऽस्वादिता भगवता मधुसूदनेन" इति सूदशास्त्रम् ॥ "रसालायां तु मार्जिता । शिखरिणी" इति हैमनाममाला॥ द्वे "शिखरिण" इति ख्यातायाः ॥ स्येति ॥ "तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिभिद्यपि" इति हेमचन्द्रः ॥ ( १ ) ॥ निष्ठानम् ॥ ( २ ) ॥ द्वे व्यञ्जनस्य ॥ त्रीति ॥ वासितपर्यन्ताः ॥ ४४ ॥ शिवाति ॥ शूलाकृतम् ॥ ( १ ) ॥

१—हैमपुस्तके सटीकेऽपि "सैन्धवः सिन्धुदेशजे । सिन्धूत्थे स्यात्" इत्येव पाठ उपलभ्यते ॥

**स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे। चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ४६॥**
**आपक्कं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः। पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः॥**
**पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः। भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः**
**भिस्सटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम्। मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥४९॥**
**यवागूरुष्णिका श्राणा विलेपी तरला च सा। गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम्५०**

भटित्रम् ॥ ( २ ) ॥ शूले संस्कृतं शूल्यम् ॥ ( ३ ) ॥ त्रीणि लोहशलाकया पक्वमांसस्य ॥ उख्येति ॥ उखायां संस्कृतम् उख्यम् ॥ ( १ ) ॥ पिठरे संस्कृतं पैठरम् ॥ ( २ ) ॥ द्वे स्थालीसंस्कृतानामन्नादीनाम् ॥ प्रेति ॥ "प्रणीतमुपसंपन्ने कृते क्षिप्ते प्रवेशिते। संस्कृताग्नौ च" इति हैमः ॥ (१)॥ "उपसंपन्नमुद्दिष्टं निहते च सुसंस्कृते" इति विश्वः ॥ ( २ ) ॥ द्वे पाकेन संस्कृतस्य व्यञ्जनादेः ॥ प्रेति ॥ प्रयस्तम् ॥ (१)॥ सुसंस्कृतम् ॥(२)॥ द्वे द्रव्यान्तरसंस्कृतस्य पकस्य ॥ ४५ ॥ स्येति॥ पिच्छिलम्॥ ॥ ( १ ) ॥ विजिलम् ॥ ( २ ) ॥ द्वे मण्डयुक्तभक्तजलयुक्तव्यञ्जनयोः॥ सेति ॥ संमृष्टम् ॥ ( १ ) ॥ शोधितम् ॥ (२) ॥ द्वे केशकीटमृत्पाषाणाद्यपनयनेन शोधितस्यान्नादेः ॥ चीति ॥ चिक्कणम् ॥ ( १) ॥ "मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति" इति विश्वः ॥ ( २ ) ॥ स्निग्धम् ॥ ( ३ ) ॥ त्रीणि स्निग्धस्य ॥ त्विति ॥ " भावितं वासिते प्राप्ते " इति विश्वः ॥ ( १ ) ॥ " वासिता करिणीनार्योर्वासितं भाविते रुते " इति मेदिनी ॥ " अथ वासितम्। वस्त्रच्छन्ने ज्ञानमात्रे भाविතेऽप्यथ वासिता । स्त्रीकरिण्योः " इति हैमः ॥ ( २ ) ॥ द्वे ग्राहितहिङ्ग्वादिगन्धस्य व्यञ्जनादेः ॥ ४६ ॥ आपेति ॥ आपक्कम् ॥ ( १ ) ॥ पौलिः ॥ ( २ ) ॥ अभ्यूषः ॥" तोक्मं हरितो यवोऽभ्युषः " इति बोपालितात् ह्रस्वमध्यः अपि ॥" अभ्योषः " अपि, इत्येके ॥ ( ३ ) ॥ त्रीणि हरितयवादेर्भर्जितस्य ॥ लेति ॥ पुंसि बहुत्वे ॥ " लाजः स्यादार्द्रतण्डुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते " इति मेदिनी ॥ (१) ॥ न क्षतं येषां ते ॥ चो भिन्नक्रमः ॥ अक्षताश्च पुंभूम्नि, इत्यर्थः ॥ मुकुटस्तु--'अक्षतम्' इति पठित्वा क्षतं खण्डितम् , न क्षतमक्षतम् इति विगृह्य ते लाजाः नित्यपुंलिङ्गा नित्यबहुवचनान्ताश्च--इति व्याचख्यौ ॥ " अक्षतं न द्वयोः पण्डे लाजेषु, त्रिष्वहिंसिते । यवेऽपि क्वचित् " इति मेदिनी ॥ ( २ ) ॥ द्वे भृष्टव्रीह्यादेः ॥ केचित्तु अखण्डतण्डुला अक्षताः--इत्याहुः ॥ प्रीति ॥ " पृथुकश्चिपिटेऽर्भके " इति हेमचन्द्रः ॥ ( १ ) ॥ चिपिटकः ॥(२)॥ द्वे " चिवडा " इति ख्यातस्य ॥ धेति ॥ बहुवचननिर्देशाद्भूम्नि ॥ " धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु " इति हैमः ॥ ( १ ) ॥ भृष्टयवः ॥ ( २ ) ॥ द्वे भर्जितयवानाम् ॥ ४७ ॥ पूपेति॥ पूपः ॥ ( १ ) ॥ अपूपः ॥ ( २ ) ॥ " पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च " इति विश्वः ॥ ( ३ ) ॥ त्रीणि अपूपस्य ॥ केति ॥करम्भः ॥" करम्बः "इति च ॥(१)॥" धानाचूर्णं तु सक्तवः" इति नाममाला ॥ दध्युपसिक्ताः सक्तवः दधिसक्तवः॥(२)॥ द्वे दधिमिश्रसक्तुनः॥भीति॥भिस्सा॥(१)॥"भक्तमन्ने तत्परे च "इति हेमचन्द्रः ॥ ( २ ) ॥ अन्धः ॥ ( ३ ) ॥ " अन्नं भक्ते च भुक्ते स्यात् " इति विश्वः ॥ ( ४ ) ॥ " ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम् " इति मेदिनी ॥ दीदिविसहितोऽस्त्री, इत्यन्वयः ॥ ( ५ ) ॥ 'सः' इति विशेषणात्पुंसि--इति स्वामी ॥ " दीदिविर्धिषणे पुंसि स्यादन्ने च तदस्त्रियाम् " इति विश्वः ॥ ( ६ ) ॥ षट् सिद्धान्नस्य ॥ ४८ ॥ भीति ॥ भिस्सटा ॥ ( १ ) ॥ दग्धिका ॥ ( २ ) ॥ द्वे दग्धौदनस्य ॥ सेति ॥ सर्वरसाग्रः ॥ ( १ ) ॥ "मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाऽथास्त्रियां सारपिच्छयोः " इति विश्वः ॥ ( २ ) ॥ द्वे मण्डस्य ॥ मेति ॥ मासरः ॥ ( १ ) ॥ आचामः ॥ ( २ ) ॥ निस्रावः ॥" विस्रावः "--इति मुकुटः ॥( ३ ) ॥ भक्तात्समुद्भवति ॥ त्रीणि भक्तसमुद्भवस्य मण्डस्य ॥ ४९ ॥ येति ॥ यवागूः ॥ ( १ ) ॥ उष्णिका ॥ ( २ ) ॥ श्राणा ॥(३)॥ विलेपी ॥ ( ४ ) ॥ तरला ॥ ( ५ ) ॥ पञ्च "लपसी" इति ख्यातायाः ॥ गेति ॥ " गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गं तु गोदुग्धादौ च गोहिते" इति मेदिनी ॥ (१) ॥

तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् । पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत्५१
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् । तत्तु हैयङ्गवीनं यद्ध्योगोदोहोद्भवं घृतम् ॥५२॥
दण्डाहतं कालशेयमरिष्टमपि गोरसः । तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्॥५३॥
मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः । अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः पुमान्॥५४॥
सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् । उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्
जेमनं लेह आहारो निघसो न्याद इत्यपि । सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ५६
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् । गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥५७॥

भवं भवविकारावयवादि ॥ एकं गोदुग्धादीनाम् ॥ गविति ॥ गोविट् ॥ ( १ ) ॥ गोमयम् ॥ ( २ ) ॥ द्वे गोमयस्य ॥ ५० ॥ तेति ॥ करीषः ॥ ( १ ) ॥ एकं शुष्कगोमयस्य ॥ द्विति ॥ "दुग्धं क्षीरे पूरिते च" इति हेमचन्द्रः ॥ ( १ ) "क्षीरं पानीयदुग्धयोः" इति हैमः ॥ ( २ ) ॥ "पयः क्षीरे च नीरे च" इति हैमः ॥ ( ३ ) ॥ त्रीणि दुग्धस्य ॥ पेति ॥ पयस्यम् ॥ ( १ ) ॥ आज्यं च दधि चादिर्यस्य ॥ आदिना तक्रं नवनीतं च ॥ एकं घृतादीनाम् ॥ द्रेति ॥ द्रप्सं द्राक् प्सानीयम्—इति सर्वानन्दः ॥ "द्रप्सं दध्यघनं तथा" इति नाममाला ॥ ( १ ) ॥ घनात् कठिनादन्यत् ॥ एकम् "दगडा" इति ख्यातस्य ॥ केचित्तु द्रप्सस्थाने सरं पठन्ति ॥ "वाणद्रप्सौ सरौ" इति दुर्गात् ॥—उपरि प्लवमानम्—इति च व्याचक्षते ॥५१॥ घ्रिति ॥ "घृतमाज्याम्बुदीप्तेषु" इति हेमचन्द्रः ॥ ( १ ) ॥ आज्यम् ॥ ( २ ) ॥ "हविः सर्पिषि होतव्ये" इति हैमः ॥ ( ३ ) ॥ सर्पिः ॥( ४ ) ॥ चत्वारि घृतस्य ॥ नेति ॥ नवनीतम् ॥ ( १) ॥ नवं च तदुद्धृतं च॥एकं कृताग्निसंयोगस्य नवोद्धृतस्य ॥ तेति ॥ ह्योगोदोहादुद्भवति हैयङ्गवीनम्॥(१) ॥ एकमेकरात्रपर्युषितादह्न उत्पन्नस्य घृतस्य ॥५२॥ देति ॥ दण्डाहतम् ॥ ( २ ) ॥ कलश्यां मन्थपात्रे भवं कालशेयम् ॥ ( २ ) ॥ "अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च" इति विश्वः ॥ ( ३ ) ॥ गोरसः ॥ ( ४ ) ॥ चत्वारि घोलस्य ॥ तेति ॥ तक्रम् ॥ ( १ ) ॥ उदश्वित् ॥ ( १ ) ॥ मथितम् ॥ ( १ ) ॥ एकैकं क्रमेण चतुर्थांशजलघोलार्धजलघोलनिर्जलघोलानाम् ॥ ५३ ॥ मेति ॥ दध्नो भवति ॥ मस्तु ॥ (१) ॥ एकं वस्त्रानिःसृतदधिजलस्य ॥—दध्न उपरिभागस्य—इत्यन्ये ॥ पीति ॥ "पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते" इति विश्वमेदिन्यौ ॥ मुकुटस्तु—"पेयूषम्" इति पठति ॥ एकं नवप्रसूतायाः गोः क्षीरस्य ॥ अशेति ॥ अशनाया ॥(१)॥ बुभुक्षा॥(२)॥ क्षुत् ॥भागुरिमते टाबपि "क्षुधा"च ॥(३)॥त्रीणि क्षुधायाः ॥ ग्रेति॥ ग्रासः ॥ (१) ॥कवलः ॥ (२) ॥ द्वे ग्रासस्य ॥ ५४ ॥ सेति ॥ सपीतिः ॥(१)॥ तुल्यपानम् ॥ (२) ॥ द्वे बहुभिः संभिल्य पानस्य ॥ सेति ॥ सग्धिः॥(१)॥ सहभोजनम् ॥(२)॥ द्वे बहुभिः सह भोजनस्य ॥ उदेति॥उदन्या॥(१)॥ पिपासा ॥ (२)॥ "तृट् तृष्णावत्तर्षवच भवेल्लिप्सापिपासयोः" इति हैमः ॥ (३)॥तर्षः॥"तृषा लिप्सातृषोः स्त्रियाम्" इति विश्वः ॥ ( ४ ) ॥ चत्वारि पिपासायाः ॥ जेति ॥ जग्धिः ॥ ( १ ) ॥ भोजनम् ॥ ( २ ) ॥ ५५ ॥ जेमनम् ॥ ( ३ ) ॥ लेहः 'लेपः॥' इति पाठोऽपि॥"लेपस्तु लेपने । अशने च सुरायां च"इति हेमचन्द्रः॥ ( ४ ) ॥ आहारः ॥ ( ५ ) ॥ निघसः ॥ ( ६ ) न्यादः ॥ ( ७ ) ॥ सप्त भोजनस्य ॥ साविति ॥ सौहित्यम् ॥ ( १ ) ॥ तर्पणम् ॥ ( २ ) ॥ तृप्तिः ॥ ( ३ ) ॥ त्रीणि तृप्तेः ॥ फयिति ॥ फेला ॥ (१) ॥ पूर्वं भुक्तं पश्चात्समुज्झितं भुक्तसमुज्झितम् ॥ ( २ ) ॥ द्वे भुक्तोत्सृष्टस्य ॥ ५६ ॥ केति ॥ "कामं बाढेऽनुमतिरेतसोः । कामः स्मरेच्छाकाम्येषु" इति हैमः ॥ ( १ ) ॥ प्रकामम् ॥ ( २ ) ॥ पर्याप्तम् ॥ (३ )॥ निकामम् ॥ (४) ॥ "इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि" इति विश्वः ॥ ( ५ ) ॥ यथेप्सितम् ॥ ( ६ ) ॥ षट् इच्छानतिक्रमस्य ॥ गविति ॥ "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि सारिवाख्यौषधौ स्त्रियाम्" इति विश्वः ॥ ( १ ) ॥ "गोपालो नृपगोपेशो" इति मेदिनी ॥ ( २ ) ॥ गोसंख्यः ॥ ( ३ ) ॥ गोधुक् ॥"गोदुहः" अपि॥"गोपगोदुह्वल्लवाः" इति त्रिकाण्डशेषः ॥ ( ४ ) ॥ आभीरः ॥ ( ५ ) ॥ बल्लवः ॥ ( ६ ) ॥ षट्

**गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे । गोमान् गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ९८॥**
**त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा । उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥९९॥**
**अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् । गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ६०**
**उक्षा महान्महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः । उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः॥६१॥**
**शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ।आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः६२**
**स्कन्धप्रदेशस्तु वहः सास्ना तु गलकम्बलः । स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः ६३**

गोपस्य ॥ ५७ ॥ **गोमेति** ॥ गौश्च महिषी च गोमहिष्यौ आदी यस्य तत् ॥ पादे बन्धनमस्य पादबन्धनम् ॥"यादवं धनम्" इति पाठे तु गोमाहिष्यादिकं धनम् ॥ "गवादि यादवं वित्तम्" इति वोपालितः ॥ ( १ ) ॥ आदिना खराजाविकादिग्रहः ॥ **एकं गोमहिष्यादेः** ॥ **द्वाविति** ॥ गवीश्वरः ॥ ( १ ) ॥ गोमान् ॥ ( २ ) ॥ गोमी ॥ ( ३ ) ॥ **त्रीणि गवामीश्वरस्य** ॥ **गविति** ॥ गोकुलम् ॥ ( १ ) ॥ गोधनम् ॥"**गोकुले धनगोधने**" इति व्याडिः ॥ ( २ ) ॥ **द्वे गोसंघातस्य** ॥ ५८ ॥ **त्रीति** ॥ आशिता भोजिता गावो यत्र आशितंगवीनम् ॥ ( १ ) ॥ **एकं पूर्वं गवां चरणस्थानस्य** ॥ **विति** ॥ उक्षा ॥ ( १ ) ॥ " **भद्रः** शिवे खञ्जरीटे वृषभे तु कदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः ॥ काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि । त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे" इति मेदिनी ॥ ( २ ) ॥ बलीवर्दः ॥ ( ३ ) ॥ ऋषभः ॥ ( ४ ) ॥ " **वृषभः** श्रेष्ठवृषयोः " इति विश्वः ॥ ( ५ ) ॥ " **वृषो** धर्मे बलीवर्दे शृङ्ग्यां पुराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च वासमूषकशुक्रले । **वृषा** मूषिकपर्ण्यां च " इति मेदिनी ॥ ( ६ ) ॥ ॥ ( ५९ ) ॥ अनड्वान् ॥ ( ७ ) ॥ सौरभेयः ॥ ( ८ ) ॥ " **गौः** स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च " इति विश्वमेदिन्यौ ॥ ( ९ ) ॥ **नव बलीवर्दस्य** ॥ **विति** ॥ औक्षकम् ॥ ( १ ) ॥ **एकम् उक्ष्णां समूहस्य** ॥ **गेति** ॥ गव्या ॥ ( १ ) ॥ गोत्रा ॥ ( २ ) ॥ **द्वे गवां समूहस्य** ॥ **वेति** ॥ वात्सकम् ॥ ( १ ) ॥ धैनुकम् ॥ ( १ ) ॥ **प्रत्येकमेकैकं क्रमेण वत्सानां धेनूनां च समूहस्य** ॥ ६० ॥ **विति** ॥ महोक्षः ॥ ( १ ) ॥ **एकं महतो वृषस्य** ॥ **त्रिति** ॥ वृद्धोक्षः ॥ ( १ ) ॥ जरद्गवः ॥ ( २ ) ॥ **द्वे वृद्धवृषस्य** ॥ **विति** ॥ जातोक्षः ॥ ( १ ) ॥ **एकं भ्रष्टदम्यभावस्य** ॥ **सेति** ॥ तर्णकः ॥ ( १ ) ॥ **एकं सद्यो जातस्य वृषस्य** ॥६१॥ **शेति** ॥ शकृत् करोति शकृत्करिः ॥ ( १ ) ॥ "**वत्सः** पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम् " इति विश्वः ॥ ( २ ) ॥ **द्वे वत्सस्य** ॥ **देति** ॥ दम्यः ॥ ( १ ) ॥ वत्सतरः ॥ ( २ ) ॥ **द्वे वत्सभावमतीत्य द्वितीयं वयः स्पृष्टस्य** ॥ **आर्षेति** ॥ आर्षभ्यः ॥ ( १ ) ॥ षण्डताया योग्यः ॥ **एकं स्पष्टतारुण्यस्य** ॥ **षेति** ॥ " षण्डं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान् " इति मूर्धन्यादौ डान्ते मेदिनी ॥ "**शण्ढः**" इति पाठे " **शण्ढः** स्यात्पुंसि गोपतौ । आ ( अ ) कृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" इति मेदिनी ॥ ( १ ) ॥ गोपतिः ॥ ( २ ) ॥ इट्चरः ॥ केचित् " **इत्वरः**" इति पठन्ति ॥ ( ३ ) ॥ **त्रीणि " सांड " इति ख्यातस्य** ॥ ६२ ॥ **स्केति** ॥ "**वहः** स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च " इति विश्वः ॥ ( १ ) ॥ **एकं वृषस्कन्धप्रदेशस्य** ॥ **सेति** ॥ सास्ना ॥(१) ॥ गलकम्बलः ॥ ( २ ) ॥ **द्वे सास्नायाः** ॥ **स्योति** ॥ नस्तितः ॥ ( १ ) ॥नस्यया नासारज्ज्वा उतः नस्योतः॥"**नस्तोतः**"इति पाठः—इति कश्चित्॥(२)॥**द्वे नासारज्जुयुक्तस्य** **प्रेति** ॥ प्रष्ठवाट् ॥ स्वामी तु—पञ्चमं षष्ठं वा वर्षं वहति, इति विगृह्य '**पष्ठवाट्**' इति रेफरहितं पठति ॥ ( १ ) ॥ युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छति युगपार्श्वगः ॥( २ )॥ **द्वे दमनकाले कण्ठारोपित-**

१—"स्कन्धदेशस्त्वस्य वहः" इति पाठान्तरम् ॥

युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः। खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ ॥ ६४॥
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः । उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः । माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी। वर्णादिभेदात्संज्ञाः स्युः शवलीधवलादयः६७
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी । चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ६८॥
वशा वन्ध्याऽवतोका तु स्रवद्गर्भाऽथ संधिनी । आक्रान्ता वृषभेणाथ वेहद् गर्भोपघातिनी ६९
काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी । स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥७०॥
चिरप्रसूता वष्कयिणी धेनुः स्यान्नवसूतिका । सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी॥७१॥

काष्ठवाहस्य ॥६३॥ य्विति ॥ युगम् ( १ ) प्रासङ्गम् ( १ ) शकटम् ( १ )च वहति ॥ युग्यः॥ (१)॥ प्रासङ्ग्यः ॥ ( १ )॥ शाकटः ॥ ( १ ) ॥ क्रमेणैकैकं रथादिवाह्याश्ववृषभाणाम् ॥ खेति ॥ हलेन ( १ ) सीरेण ( २ ) च खनति । हालिकः ॥ सैरिकः ॥ हलम् ( १ ) सीरम् ( २ ) च वहति ॥ हलस्य ( १ ) सीरस्य ( २ ) च इदम् ॥ हालिकः ॥ सैरिकः ॥ द्वे उक्तार्थेषु नाम्नी ॥६४॥ ध्विति ॥ धूर्वहः ॥ ॥ ( १ ) ॥ धुर्यः ॥ ( २ ) ॥ धौरेयः ॥ ( ३ ) ॥ धुरीणः ॥ ( ४ ) ॥ धुरंधरः ॥ ( ५ ) ॥ पञ्च धूर्वहस्य ॥ विति ॥ एकधुरीणः ॥ ( १ ) ॥ एकधुरः ॥ ( २ ) एकधुरावहः ॥ ( ३ ) ॥ त्रीणि एकधुरावहानाम् ॥ ६५ ॥ स इति ॥ सर्वधुरीणः ॥ ( १ ) ॥ सर्वधुरावहः ॥ ( २ ) ॥ द्वे धुरीणेषु मुख्यस्य ॥ मेति ॥ "गौरुस्रा प्रिया इला मही" इति निरुक्तम् ॥ मह्या अपत्यं स्त्री माहेयी ॥ ( १ ) ॥ सौरभेयी ॥ ( २ ) ॥ गौः ॥ ( ३ ) ॥ "उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः" इति मेदिनी ॥ "उस्रस्तु वृषभे प्रोक्तः किरणे च तथा पुमान्" ॥ ( ४ ) ॥ "मातरौ गोजनन्यौ द्वे" इति रुद्रः ॥ "माता गौर्यादिजननीगोत्रह्याण्यादिभूमिषु" इति विश्वमेदिन्यौ॥ ( ५ ) ॥ शृङ्गिणी ॥( ६ ) ॥ ॥ ६६ ॥ "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि, स्याद्धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे स्यादर्जुनी गावि । उषायां बाहुदानाद्यां कुट्टिन्यामपि च क्वचित्" इति विश्वः ॥ ( ७ ) ॥ अघ्न्या ॥ ( ८ )॥ "रोहिणी सोमवल्के भे कण्ठरोगोमयोर्गवि । लोहिताकटुरोहिण्योः" इति हेमचन्द्रः ॥ ॥ ( ९ ) ॥ नव गोः ॥ स्येति ॥ "नैचिकी गौरुत्तमा तु निचिकी सा प्रकीर्तिता" इति नाममाला ॥ ( १ ) ॥ एकमुत्तमाया गोः ॥ वेति ॥ आदिना प्रमाणावयवादिग्रहः ॥ शवली ॥ ( १ ) ॥ धवली ॥ ( १ ) ॥ आदिना 'कृष्णा—कपिला—पाटला' इत्यादयः ॥ प्रमाणभेदात् दीर्घा ह्रस्वा खर्वा वामनी, इत्यादयः ॥ अङ्गभेदात् पिङ्गाक्षी लम्बकर्णी वक्रशृङ्गी, इत्यादयः ॥ ६७ ॥ द्वीति ॥ द्वौ हायनौ यस्याः द्विहायनी ॥ ( १ ) ॥ द्वे वर्षे वयः—प्रमाणमस्याः द्विवर्षा ॥ ( २ ) ॥ द्वे द्विवर्षाया गोः ॥ एकेति ॥ एकाब्दा ॥ ( १ ) ॥ एकहायनी ॥ ( २ ) ॥ द्वे एकाब्दायाः गोः ॥ चेति ॥ चतुरब्दा ॥ ( १ ) ॥ चतुर्हायणी ॥ ( २ ) ॥ द्वे चतुर्वर्षाया गोः ॥ एवमिति ॥ त्र्यब्दा ॥ ( १ ) ॥ त्रिहायणी ॥ ( २ ) ॥ द्वे त्रिवर्षाया गोः ॥ ६८ ॥ वेति ॥ "वशो जनस्पृहायत्तेष्वायतत्वप्रभुत्वयोः । वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि" इति हैमः ॥ ( १ ) ॥ वन्ध्या ॥ ( २ ) ॥ द्वे वन्ध्यायाः ॥ अवेति ॥ अवतोका ॥ ( १ ) ॥ स्रवद्गर्भा ॥ ( २ ) ॥ द्वे सहसाऽवगलितगर्भायाः ॥ अथेति ॥ "संधिनी वृषभाक्रान्ताकालदुग्धोस्रयोः स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ एकं कृतमैथुनायाः ॥ अथेति ॥ विहन्ति गर्भं वेहत् ॥ ( १ ) ॥ गर्भोपघातिनी ॥ ( २ ) ॥ द्वे वृषयोगेन गर्भपातिन्याः ॥ ६९ ॥ केति ॥ प्रजने गर्भग्रहणे प्राप्तकाला ॥ उपसर्या ॥ ( १ ) ॥ एकं गर्भग्रहणयोग्यायाः ॥ प्रेति ॥ प्रष्ठौही ॥ "पष्ठौही" इति पाठे रलोपः ॥ ( १ ) ॥ बालगर्भिणी ॥ ( २ ) ॥ द्वे प्रथमं गर्भं धृतवत्याः ॥ स्येति ॥ अचण्डी ॥ ( १ ) ॥ सुकरा ॥ ( २ ) ॥ द्वे सुशीलायाः ॥ बेति ॥ बहुसूतिः ॥ ( १ ) ॥ परेष्टुका ॥ ( २ ) ॥ द्वे बहुप्रसूतायाः ॥ ७० ॥ चीति ॥ चिरसूता ॥ ( १ ) ॥ वष्कयिणी ॥ "वष्कयस्त्वेकहायनो वत्सः" इति शाकटायनः ॥ तेन नीयते ( वष्क-

द्रोणक्षीरा द्रोणदुघा धेनुष्या बन्धके स्थिता । समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ । न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३॥
वैशाखमन्थमन्थानमन्थानो मन्थदण्डके । कुठरो दण्डविष्कम्भे मन्थनी गर्गरी समे ॥ ७४ ॥
उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः । करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥७५ ॥
अजा छागी स्तभच्छागवस्तच्छगलका अजे । मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् । चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ॥७७॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् । पण्याजीवो ह्यापणिकः क्रयविक्रयकश्च सः७८॥

यणी ) इकाररहितः ॥ ( २ ) ॥ द्वे चिरकालेन प्रसूतायाः ॥ धयिति ॥ "धेनुर्गोमात्रके दोग्ध्र्याम्" इति हैमः ॥ ( १ )॥ नवं सूतं प्रसवोऽस्याः नवसूतिका ॥ ( २ ) ॥ द्वे नवप्रसूतायाः ॥ स्विति ॥ सुव्रता॥(१)॥ सुखसंदोह्या ॥ ( २ ) ॥ द्वे सुखेन दोग्धुं योग्यायाः ॥ पीति ॥ पीनोध्नी ॥॥ ( १ )॥ पीवरः स्तनोऽस्याः पीवरस्तनी ॥ ( २ ) ॥ द्वे स्थूलस्तन्याः ॥ ७१ ॥ द्रविति ॥ द्रोणक्षीरा ॥ ( १ ) ॥ द्रोणदुघा ॥ ( २ ) ॥ द्वे द्रोणपरिमितक्षीरायाः ॥ धयिति ॥ धेनुष्या ॥ ( १ ) ॥ एकम् ऋणमोचनार्थं बन्धनस्थितायाः ॥ सेति॥समांसमीना ॥(१) ॥ एकं प्रतिवर्षं प्रसूतायाः ॥ ७२ ॥ विति॥ ऊधः॥( १ )॥ आपीनम् ॥ ( २ ) ॥ द्वे क्षीराशयस्य ॥ सेति ॥ शिवकः ॥ ( १ ) ॥ कीलकः ॥ ( २ )॥ द्वे पशुबन्धनकाष्ठस्य ॥ नेति ॥ दाम ॥ ( १ ) ॥ संदानम् ॥ ( २ ) ॥ द्वे दोहनकाले पादबन्धनरज्जोः ॥ पेति ॥ पशुरज्जुः ॥ ( १ ) ॥ दामनी ॥ "बन्धनी"—इति पाठः——इति कश्चित् ॥ ( २ ) ॥ द्वे पशुबन्धनरज्जोः ॥ ७३ ॥ वायिति ॥ "वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः" इति मेदिनी ॥ ( १ ) ॥ "मन्थो रवौ मथि । साक्तवे नेत्ररोगे च" इति हैमः ॥ ( २ ) ॥ मन्थानः ॥ ( ३ )॥ मन्थाः ॥ ( ४ ) ॥ मन्थदण्डकः ॥ ( ५ ) ॥ पञ्च मन्थनदण्डस्य ॥ क्विति ॥ कुठरः ॥ "कुटरः" इति च ॥ ( १ ) ॥ दण्डविष्कम्भः ॥ ( २ ) ॥ द्वे मन्थबन्धनकाष्ठस्य गर्गरीमुखस्य वा ॥ मन्थदण्डधारककाष्ठस्य वा ॥ मेति ॥ मन्थनी ॥(१)॥ 'गर्ग' इति शब्दं राति गर्गरी ॥ ( २ ) ॥ द्वे मन्थनपात्रस्य ॥ ७४ ॥ विति ॥ उष्ट्रः ॥ ( १ ) ॥ क्रमेलकः ॥ ( २ ) ॥ "मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च" इति मेदिनी ॥ ( ३ ) ॥ महाङ्गः ॥ ( ४ ) ॥ चत्वारि उष्ट्रस्य ॥ केति ॥ "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते" इति मेदिनी ॥ ( १ ) ॥ एकमुष्ट्रशिशोः ॥ केति ॥ शृङ्खलकाः ॥ ( १ ) ॥ एकं दारुविकारशृङ्खलाप्रायबन्धनयुक्तस्य करभस्य ॥ ७५ ॥ अजेति ॥ अजा ॥ "अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे" इति हैमः ॥ ( १ ) ॥ छागी ॥ ( २ ) ॥ द्वे अजायाः ॥ स्तेति ॥ स्तभः ॥ "तुभ" इति "शुभ" इति च ॥ ( १ ) ॥ छागः ॥ ( २ ) ॥ वस्तः ॥ ( ३ ) ॥ छगलकः ॥ ( ४ ) ॥ अजः ॥ ( ५ ) ॥ पञ्च छागस्य ॥ मयिति ॥ मेढ्रः ॥ ( १ ) ॥ उरभ्रः ॥ ( २ ) ॥ उरणः ॥ ( ३ ) ॥ ऊर्णायुः ॥ ( ४ ) ॥ मेषः ॥ ( ५ ) ॥ वृष्णिः ॥ ( ६ ) ॥ एडकः ॥ ( ७ ) ॥ सप्त मेषस्य ॥ ७६ ॥ विति ॥ उष्ट्राणाम् ( १ ), उरभ्राणाम् (१ ), अजानाम् ( १ ), च समूहः॥ औष्ट्रकम् ॥ ( १ )॥ औरभ्रकम् ॥ ( १ ) ॥ आजकम् ॥ ( १ ) ॥ प्रत्येकमुष्ट्रादिवृन्दस्य ॥ चेति ॥ चक्रीवान् ॥ ( १ ) ॥ "वालेयो गर्दभे पुंसि मृदौ बलिहिते त्रिषु" इति मेदिनी ॥ ( २ ) ॥ रासभः ॥ ( ३ ) ॥ "गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे, गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः" इति विश्वः ॥ ( ४ ) ॥ "खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च" इति हेमचन्द्रः ॥ ( ५ ) ॥ पञ्च गर्दभस्य ॥ ७७ ॥ वायिति ॥ "वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च" इति विश्वहेमचन्द्रौ ॥ ( १ ) ॥ सार्थवाहः ॥ ( २ ) ॥ "नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च" इति विश्वः । 'निगमः' अपि ॥ "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे" इति विश्वः ॥ ( ३ ) ॥ वाणिजः ॥ ( ४ )॥

**विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ। बाणिज्यं तु बणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः**
**नीवी परिपणो मूलधनं लाभोऽधिकं फलम् । परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥**
**पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् । क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥८१॥**
**विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु । क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ८२**
**विपणो विक्रयः संख्याः संख्ये ये ह्यादश त्रिषु। विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः**

"बणिक् स्त्रियाम् । बणिज्यायां पुमान् बाणिजके च करणान्तरे" इति विश्वः ॥ ( ५ )॥ पण्याजीवः ॥ ( ६ ) ॥ आपणिकः ॥ ( ७ ) ॥ क्रयविक्रयकः ॥ ( ८ ) ॥ **अष्टौ बाणिजस्य** ॥ ७८ ॥ वीति ॥विक्रेता ॥ ( १ ) ॥ विक्रयिकः ॥ ( २ ) ॥ **द्वे वस्त्रादिविक्रेतुः** ॥ क्रेति ॥ क्रायकः ॥ ( १ ) ॥ क्रयिकः ॥ ( २ ) ॥ **द्वे मूल्येन वस्तुग्राहकस्य** ॥ बेति ॥ बाणिज्यम् ॥ ( १ ) ॥ बणिज्या ॥ ( २ ) ॥ **द्वे वणिक्कर्मणः** ॥ म्विति ॥ मूल्यम् ॥ ( १ ) ॥ "वस्नं वस्त्रे धने मूल्ये भृतौ" इति हेमचन्द्रः ॥ ( २ ) ॥ अवक्रयः ॥ ( ३ ) ॥ **त्रीणि मूल्यस्य** ॥ ७९ ॥ नीति ॥ "नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे" इति हैमः ॥ ( १ ) ॥ परिपणः ॥ (२)॥ मूलधनम् ॥(३)॥ **त्रीणि मूलधनस्य** ॥ लेति ॥ लाभः ॥(१)॥ अधिकम् ॥(२)॥ "फलं जातीफले सस्ये हेतूत्थे व्युष्टिलाभयोः । त्रिफलायां च कक्कोले, प्रियङ्गौ तु फली स्मृता" इति विश्वः ॥ "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । फली फलिन्याम्" इति हैमः ॥ ( ३ ) ॥ **त्रीणि लाभस्य** ॥ पेति ॥ परिदानम्॥ क्वचित् "**प्रतिदानम्**" इति पाठः ॥ ( १ ) ॥ परीवर्तः ॥ ( २ ) ॥ नैमेयः ॥ ( ३ ) ॥ निमयः ॥ ( ४ ) ॥ **चत्वारि "अदलाबदला" इति ख्यातस्य** ॥ ८० ॥ प्विति ॥ उपनिधिः ॥ ( १ ) ॥ न्यासः ॥ ( २ ) ॥ **द्वे निक्षेपस्य** ॥ प्रेति ॥ प्रतिदानम् ॥ ( १ ) ॥ **एकं स्वामिने निक्षेपार्पणस्य** ॥ क्रेति ॥ क्रय्यम् ॥ ( १ ) ॥ **एकम् 'ग्राहका गृह्णीयुः' इति बुद्ध्याऽऽपणे प्रसारितस्य** ॥ क्रयिति ॥ क्रेयम् ॥ ( १ ) ॥ **एकं हट्टे प्रसारणयोग्यस्य** ॥ ८१ ॥ वीति ॥ विक्रेयम् ॥ (१) ॥ पणितव्यम् ॥ ( २ ) ॥ पण्यम् ॥ ( ३ ) ॥ **त्रीणि विक्रयक्रियाकर्मणः** ॥ क्रेति ॥ पण्यान्ताः ॥ क्लीति ॥ सत्यापनम् ॥ "**सत्यापना सत्याकृतिः**" इति बोपालितः ॥ ( १ ) ॥ सत्यंकारः ॥ ( २ ) ॥ सत्याकृतिः ॥ ( ३ ) ॥ **त्रीणि "साई" इति ख्यातायाः** ॥ ८२ ॥ वीति ॥ विपणः ॥ ( १ ) ॥ विक्रयः ॥ ( २ ) ॥ **द्वे विक्रयक्रियायाः** ॥ **समिति** ॥ दशशब्दमभिव्याप्य ॥ **एकादिका नवदशपर्यन्ताः संख्याः** संख्येये, त्रिलिङ्गाश्च ॥ तेन 'एको विप्रः' इत्यादि भवति, न तु 'विप्रस्यैकः' इत्यादि ॥ **वीति** ॥ 'विंशतिः' इत्याद्या यासां ताः संख्याः संख्येयसंख्ययोर्वर्तन्ते ॥ एकवचनान्ताश्च ॥ यथा 'विंशतिर्गावः'

---

१—एकाद्या दशान्ताः संख्याः संख्येयेषु वर्तमानास्त्रिलिङ्गाः । एका शाटी, एकः पटः, एकं कुण्डम् । दश स्त्रियः, दश पटाः, दश कुण्डानि आदशेति । अष्टादशान्ताः—इति क्षीरस्वामी ॥ आदशेति । दशशब्दश्रुतिपर्यन्तमष्टादशं यावत् संख्या एकादिकाः संख्येये द्रव्ये वर्तन्ते । ह्निरवधारणे । तेन सामानाधिकरण्येनैव तासां वृत्तिरित्यर्थः । यथा 'एको विप्रः' 'दश विप्राः' इति, न तु वैयाधिकरण्येन वृत्तिरिति, न तु 'एको विप्रस्य, दश विप्राणाम्' इत्यादिः ।—इति मुकुटः ॥ अत्र चैकाद्या अष्टादशान्ता संख्याः संख्येये वर्तन्ते । यदाह वाचस्पतिः । "अष्टादशभ्य एकाद्याः संख्याः संख्येयगोचराः" इति—इति स्वोपज्ञनाममालाव्याख्यायां हेमाचार्याः ॥ इदं च प्रायिकम् । "बहुषु बहुवचनम्" ( १।४।२१ ) इति सूत्रभाष्ये 'किंसम्बन्ध्येकत्वे, किंसम्बन्धिद्वित्वे किंसम्बन्धिबहुत्वे' इत्यर्थे "कस्यैकस्मिन्, कयोर्द्वयोः, केषां बहुषु" इति प्रयोगेण संख्यापरत्वस्यापि प्रतीतेः ॥ इदं त्वत्रावगन्तव्यम् । संख्यापरत्वेऽप्येषां स्वाश्रयद्रव्यगतसंख्याविशिष्टधर्ममात्रप्रतिपादकता । अत एवोक्तभाष्यप्रयोगे द्विवचनादि—इति ॥ २—विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां च नित्यमेकवचनान्ता एव वर्तन्ते ॥ यद्भाष्यम्—'आदशभ्यः संख्या संख्येये वर्तते । ऊर्ध्वं संख्याने संख्येये च' इति॥ विंशतिः पटाः । विंशतिः पटानाम् । शतं गावः, शतं गवाम्—इति क्षीरस्वामी ॥ विंशत्याद्यास्तु संख्याशब्दा एकत्वे वर्तमानाः संख्येये संख्याने वर्तन्ते । यथा 'विंशतिर्घटाः विंशतिर्घटानाम् । शतं गावः, शतं गवाम्' इति ॥ यदाह वाचस्पतिः—"ऊनविं

**संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः । पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥८४॥**
**यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् । मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ८५॥**
**ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥८६॥**
**तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः । आचितो दश भाराः स्युःशाकटो भार आचितः**
**कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः । अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः**

'गवां विंशतिः' ॥ ८३ ॥ **समिति** ॥ विंशत्यादीनां यदा संख्याऽर्थः, तदा द्विवचनबहुवचने अपि स्तः ॥ यथा 'द्वे विंशती, तिस्रो विंशतयः' इति ॥ **तेति** ॥ तासु विंशत्यादिषु नवतिमभिव्याप्य स्त्रीलिङ्गाः । यथा 'विंशत्या पुरुषैः कृतम्, विंशतिः कुण्डानि' इति ॥ **पेति** ॥ "**पङ्क्तिर्दशाक्षरच्छन्दोदशासंख्यावलीषु च**" इति विश्वः ॥ पङ्क्तेर्दशगुणोत्तरं क्रमात् शतसहस्रादि ज्ञेयम् ॥ यथा 'दश पङ्क्तयः शतम्, दश शतानि सहस्रम्, दश सहस्राण्ययुतम्' इत्यादि ॥ ८४ ॥ **याविति** ॥ यौतवम् ॥ ( १ ) ॥ द्रुवयम् ॥ ( २ ) ॥ पाय्यम् ॥ ( ३ ) ॥ **त्रयं मानार्थकम्** ॥ **मेति** ॥ मानभेदानाह ॥ **तुलेति** ॥ तुलाङ्गुलिप्रस्थैर्मानं त्रिविधं भवति॥ **ग्विति** ॥ "माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः" इति मेदिनी॥ आद्यमाषकः ॥ ( १ ) ॥ **एकं पञ्चानां गुञ्जानां परिमितस्य माषस्य** ॥ ८५ ॥ **तयिति** ॥ ते माषाः षोडश ॥ "अक्षो रथस्यावयवे व्यवहारे बिभीतके । सायके शकटे कर्षे ज्ञाने चात्मनि रावणौ ॥ अक्षं सौवर्चले तुत्थे हृषीके स्यात्" इति हेमचन्द्रः ॥ ( १ ) ॥ "कर्षो ना कर्षणे मानप्रभेदे पुंनपुंसकम्" इति मेदिनी ॥ ( २ ) ॥ **द्वे कर्षस्य** ॥ **पेति** ॥ "पलमुन्मानमांसयोः" इति हैमः ॥ ( १ ) ॥ कर्षचतुष्टयम् ॥ ( २ ) ॥ **द्वे पलस्य** ॥ **स्विति** ॥ रुद्रस्तु "सुवर्णं स्वर्णविस्तयोः" इति क्लीबमाह ॥ "सुवर्णो ना स्वर्णकर्षे सुवर्णा च मतान्तरे॥ स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने" इति विश्वः ॥ ( १ ) ॥ विस्तः ॥ ( २ ) ॥ **द्वे सुवर्णाक्षमानस्य** ॥ **क्विति** ॥ कुरुविस्तः ॥ ( १ ) ॥ तस्य हेमः पले ॥ **एकं हेमपलस्य** ॥ ८६ ॥ **त्विति** ॥ "तुला सादृश्यमान्योः । गृहाणां दारुबन्धाय पीठिकायामपीष्यते ॥ राशौ पलशते भाण्डे तुलं स्याद्गृहदारुणि॥ अकाशे च पिचौ न स्त्री" इति विश्वहेमचन्द्रौ ॥ ( १ ) ॥ पलानां शतम् ॥ **एकं तुलायाः** ॥ **भेति** ॥ "भारः सहस्रद्वितये पलानामपि वीवधे" इत्यजयः ॥ "भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके" इति मेदिनी ॥ 'भरः' इति च ॥ ( १ ) ॥ **एकं विंशतितुलापरिमितभारस्य** ॥ **आचीति** ॥ "भारैर्दशभिराचितः" इति रत्नकोषः ॥ "आचितः शकटोन्मेये पलानामयुतद्वये" इति विश्वमेदिन्यौ ॥(१)॥ **एकभाचितस्य** ॥**शेति**॥ शाकटः॥(१)॥ **एकम् आचितभारस्य**॥८७॥**केति**॥"कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च"इति मेदिनी॥(१)॥कार्षिकः ॥ (२)॥ **द्वे रजतरूप्यस्य** ॥ **केति** ॥ "पणो वराटमाने स्यान्मूल्ये

---

शत्यादिकास्तु सर्वाः संख्येयसंख्ययोः" इति--इति हेमचन्द्रः ॥ १—संख्यामात्रार्थे वर्तमानाया विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्त एकशेषेण । द्वे विंशती, तिस्रो विंशतयः । गवां विंशती, गवां विंशतयः ॥–इति क्षीरस्वामी ॥ यदा तु भेदविवक्षायां संख्यान्तरस्यार्थेऽभिधेये विंशत्यादयो वर्तन्ते, तदा तत्सामानाधिकरण्यादुपचारेण तेभ्यो द्विवचनबहुवचने अपि भवतः । यथा 'द्वे विंशती, तिस्रो विंशतयः' इति ॥ सामानाधिकरण्याभावेऽपि 'गवां विंशती गवां-विंशतयः' इति ।–इति मुकुटः ॥ द्वित्वबहुत्वयोर्वर्तमानास्तु विंशत्याद्याः संख्यायामेव वर्तन्ते–इति हेमचन्द्रः॥"पंक्ति–विंशति—" ( ५ । १ । ५९ ) इति सूत्रे भाष्यप्रदीपोते नागेशभट्टेन तु--विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि । तयोश्च भेदाभेदौ । विंशत्यादयः कदाचिद्भेदेन संख्यां वदन्ति 'गवां विंशतिः' इति । कदाचिदभेदेन 'विंशतिर्गावः' इति ॥ यदाऽप्यभेदेन तदाऽपि धर्मगतसंख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात् । यथा 'गावो धनम्' इत्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येनैव द्रव्यप्रतीतिर्धनशब्दात् ॥ इयांस्तु विशेषः, तत्र कदाचित्स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः ॥ अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथम्, इति चेत् । आरोपेण, इति गृहाण । द्व्यादयस्तु स्वगतवाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति शब्दशक्तिस्वभावात् इति न कदाचिदपि तत्रैकवचनम् ॥ नापि विंशत्यादिभ्यो बहुवचनम्॥ विंशतिप्रचये तु बहुवचनमिष्टमेव ॥"द्व्येकयोः–" (१।४।२२) इत्यादौ तु विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिः, इति द्विवचनम् । एवं प्रतीतिरीदृशवृत्तिविषयैव, इति नातिप्रसङ्गः—इति निष्कर्ष उक्तः ॥

**कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् । पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके ८९**
**द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥९०॥**
**स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ॥९१॥**
**गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः । शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९२॥**
**मुक्ताऽथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् । रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३॥**

कार्षापणे ग्रहे । क्रय्यशाकादिके द्यूते व्यवहारे भृतौ धने" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ एकं ताम्रकृतकार्षापणस्य ॥ तुलामानमुक्तम् ॥ अङ्गुलिमानं च हस्तादि नृवर्गे उक्तम् ॥ प्रस्थमानं त्वाह—अन्नीति ॥ आढकः ॥ "आढकी च तुवर्यां स्त्री परिमाणान्तरे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ एकं सर्वतो दशाङ्गुलिमानस्य ॥ "द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" इति विश्वः॥ ( १ ) ॥ खारी ॥ ( १ ) ॥ "वाहोऽश्वमानयोः । वृषे, वाहा तु वाही स्यात्" इति हेमचन्द्रः ॥ ( १ ) ॥ निकुञ्चकः ॥ ( १ ) ॥ ८८ ॥ कुडवः ॥ "कुटपः" इत्यपि पाठः—इति मुकुटः॥(१)॥"प्रस्थोऽस्त्रियां मानभेदे सानावत्युच्चवस्तुनि"इति मेदिनी ॥(१)॥ आद्यर्थेन मानीभविकाप्रवर्तिकादिग्रहः ॥ "वाहो विंशतिखारीभिर्भविका स्यादनेन तु । प्रवर्तः पञ्चखारीभिः सस्यमाने प्रकीर्तितः" ॥ "पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥ अष्टाढको भवेद् द्रोणो द्विद्रोणः सूर्प उच्यते । सार्धसूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृता ॥ तामेव भारं जानीयाद्वाहो भारचतुष्टयम्" ॥ पृथगेकैकं परिमाणानाम् ॥ पेति ॥ "पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च" इति मेदिनी ॥ ( १ ) ॥ एकं तुरीय ( चतुर्थ ) भागस्य ॥ अंशेति ॥ "अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः" इति हेमचन्द्रः ॥ ( १ ) ॥ "भागो रूपार्धके भाग्यैकदेशयोः" इति हैमः ॥ ( २ ) ॥ वण्टकः ॥ ( ३ ) ॥ त्रीणि भागस्य ॥ ८९ ॥ द्रेति ॥ "द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः । विनये भेषजे रीत्याम्" इति हैमः ॥ ( १ ) ॥ "वित्तं क्लीबं धने वाच्यलिङ्गं ख्याते विचारिते" इति मेदिनी ॥ ॥ ( २ ) ॥ स्वापतेयम् ॥ ( ३ ) ॥ रिक्थम् ॥ ( ४ ) ॥ ऋक्थम् ॥ ( ५ ) ॥ "धनं तु गोधने वित्ते" इति विश्वः ॥ ( ६ ) ॥ "वसुर्मयूखाग्निजनाधिपेषु योक्त्रे सुरे स्याद्वसुहाटके च । वृद्ध्यौषधस्थानधनेषु रत्ने वसु प्रदिष्टं मधुरेऽन्यवच्च" इति विश्वप्रकाशः ॥ ( ७ ) ॥ "हिरण्यं चे ( रे ) तसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्ये च नपुंसकम्" इति मेदिनी ॥ ( ८ ) ॥ "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे" इति विश्वः ॥ ( ९ ) ॥ "द्युम्नं वित्ते बलेऽपि च" इति हेमचन्द्रः ॥ ( १० ) ॥ "अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी ॥ ( ११ ) ॥ "रा द्वयोर्विभवे स्वर्णे" इति रुद्रः ॥ ( १२ ) ॥ "विभवो धननिर्वृत्त्योः" इति हैमः ॥ ( १३ ) ॥ त्रयोदश धनस्य ॥ ९० ॥ स्येति ॥ कोषः ॥ "तालव्या मूर्धन्याश्चेते" इत्यधिकारे "कोशविशदौ च" इति शभेदः ॥ ( १ ) ॥ हिरण्यम् ॥ ( २ ) ॥ हेम च रूप्यं च ॥ कृतं चाकृतं च घटिताघटिते ॥ द्वे घटिताघटितसुवर्णरूप्ययोः ॥ तेति ॥ कुप्यम् ॥ ( १ ) ॥ एकं हेमरूप्याभ्यामन्यस्य ताम्रादेर्धातोः ॥ रूप्यमिति ॥ "आहतं तु मृषार्थके । गुणिते ताडिते चापि" इति हैमः ॥ एकं ताडितहेमरूप्यादेः ॥ ९१ ॥ गेति ॥ गारुत्मतम् ॥ ( १ ) ॥ मरकतम् ॥ ( २ ) ॥ अश्मगर्भः ॥ ( ३ ) ॥ हरिन्मणिः ॥ ( ४ )॥ चत्वारि मरकतमणेः ॥ शोणेति ॥ शोणरत्नम् ॥ ( १ ) ॥ लोहितकः ॥ ( २ ) ॥ पद्मरागः ॥ ( ३ ) ॥ त्रीणि पद्मरागस्य ॥ अथेति ॥ मौक्तिकम् ॥ ( १ ) ॥ ९२ ॥ "मुक्ता मौक्तिकपुंश्चल्योः" इति हैमः ॥ ॥ ( २ ) ॥ द्वे मुक्ताफलस्य ॥ अथेति ॥ "विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्" इति मेदिनी ॥ ( १ ) ॥ "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इति विश्वः ॥ ( २ ) ॥ द्वे प्रवालस्य ॥ रेति ॥ "रत्नं स्वजातिश्रेष्ठे स्यान्मणौ" इति हैमः ॥ ( १ ) ॥ "मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च"

---

१—तद्द्वयं कुप्याकुप्यम्—इति क्षीरस्वामी ॥ तयोर्हेमरूप्ययोर्द्वयम्—इति मुकुटः ॥

**स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥**
**चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥**
**अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः। दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥**
**रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् । शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ९७**
**लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी। अश्मसारोऽथ मण्डूरं शिङ्घाणमपि तन्मले ९८**

इति विश्वः ॥ ( २ ) ॥ अश्मजातौ मरकतादौ ॥ द्वे रत्नस्य ॥ ९३ ॥ स्त्रेति ॥ स्वर्णम् ॥ ( १ ) ॥ सुवर्णम्॥(२)॥"कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च " इति मेदिनी ॥ ( ३ ) ॥ हिरण्यम् ॥ ( ४ ) ॥ हेम ॥ ( ५ ) ॥ हाटकम् ॥ ( ६ ) ॥ तपनीयम् ॥(७)॥ शातकुम्भम् ॥ "शातकौम्भम्" इति तु स्वामी ॥ ( ८ ) ॥ "गाङ्गेयः स्यात्पुमान्भीष्मे क्लीबं स्वर्णकसेरुणोः" इति मेदिनी ॥ ( ९ ) ॥ "भर्म स्यात्काञ्चने भृतौ" इति मेदिनी ॥ ( १० ) ॥ "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शवले पुनरन्यवत्" इति विश्वः ॥ ( ११ ) ॥ ९४ ॥ चामीकरम् ॥ ॥ ( १२ ) ॥ जातरूपम् ॥ ( १३ ) ॥ महारजतम् ॥ ( १४ ) ॥ काञ्चनम् ॥ ( १५ ) ॥ " रुक्मं लोहे सुवर्णे च " इति हेमचन्द्रः ॥ ( १६ ) ॥ कार्तस्वरम् ॥ ( १७ ) ॥ जाम्बूनदम् ॥ ( १८ ) ॥ अष्टापदः ॥ ( १९ ) ॥ एकोनविंशतिः सुवर्णस्य ॥ ९५ ॥ अलमिति॥अलंकारसंबन्धि सुवर्णम्॥ शृङ्गीकनकम्॥ 'शृङ्गी' इति पृथग् नाम वा॥"स्त्री शृङ्गी मण्डनसुवर्णम्" इति रत्नकोषः ॥ " भूषणं कनकं शृङ्गी " इति नाममाला च ॥ ( १ ) ॥ एकम् अलंकारसुवर्णस्य ॥ द्विति ॥ सुवर्णापेक्षया दुष्टो वर्णोऽस्य ॥ "दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः " इति मेदिनी ॥ ( १ ) ॥ " रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णे " इति विश्वः ॥ ( २ ) ॥ " रूप्यः स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम् " इति विश्वहेमचन्द्रौ ॥( ३ )॥ " खर्जूरं रूप्यफलयोः खर्जूरः कीट-वृक्षयोः " इति हैमः ॥ ( ४ ) ॥ "श्वेतो द्वीपाद्रिभेदयोः । श्वेता वाराटिकाकाष्ठपाटलाशङ्खिनीषु च ॥ क्लीबं रूप्येऽन्यवच्छुक्ले " इति मेदिनी ॥ ( ५ ॥ ) पञ्च रूप्यस्य ॥९६॥ "रीति ॥ रीतिः स्त्रियां स्यन्दप्रचारयोः। पित्तले लोहकिट्टे च" इति मेदिनी ॥ ( १ ) ॥ " आरकूटोऽस्त्रियां द्रव्यं रीतिस्तु रीतिकोमलम् " इति रभसः ॥ ( २ ) ॥ द्वे पित्तलस्य ॥ अथेति ॥ ताम्रकम् ॥ ( १ ) ॥ "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ" इति हेमचन्द्रः ॥ ( २ ) ॥ म्लेच्छमुखम् ॥ ( ३ ) ॥ द्व्यष्टम् ॥ ( ४ ) ॥ "वरिष्ठं ताम्रके क्लीबम् " इति टवर्गद्वितियान्ते रुद्रः ॥ " वरिष्ठं मारिचेऽपि च । ताम्रे क्लीबं तित्तिरौ ना वरोरुतमयोस्त्रिषु " इति विश्वः ॥ ( ५ ) ॥ " उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम् " इति मेदिनी ॥ प्रज्ञाद्यणि ( ५ । ४ । ३८ । ) तु " औदुम्बरं भवेत्ताम्रे फलादौ ( यज्ञादौ ) यज्ञशाखिनः" इत्य-जयः ॥ ( ६ ) ॥ षट् ताम्रस्य ॥ ९७ ॥ लोह इति ॥ " लोहोऽस्त्री शस्त्रके लोहं जोङ्गके सर्वतैजसे " इति मेदिनी ॥ प्रज्ञाद्यणि " लौहम् " ॥ ( १ ) ॥ शस्त्रकम् ॥ ( २ ) ॥ " तीक्ष्णं सामुद्रलवणे विषलोहाजि-मुष्कके । क्लीबं, यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु " इति मेदिनी ॥ ( ३ ) ॥ " पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि ॥ ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीव-नायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः " इति मेदिनी ॥( ४ )॥ कालायसम् ॥ ( ५ ) ॥ अयः ॥ ( ६ ) ॥ अश्मसारः ॥ " अश्मसारं च शस्त्रकम् " इत्यमरमाला ॥ ( ७ ) ॥ सप्त लोहस्य ॥ अथेति॥ मण्डूरम् ॥ ( १ ) ॥ " शिङ्घाणं काचपात्रे च लोहनासिकयोर्मले " इति मेदिनी ॥ " सिंहानम्" इति पाठे सिंहवदनीति ॥ सिंहमानयति वा ॥ ( २ ) ॥ तस्य लोहस्य मले ॥ द्वे लोहमलस्य ॥ ९८ ॥

---

१—शृङ्गिहेस्वान्ता च तथा च बाणः—"वर्षपर्वतसमूहमिवान्तःस्थितापरिमाणशृङ्गिहेमकूटं राजकुलम्" इति—इति मुकुटः ॥

सर्वं स्यात्तैजसं लोहं विकारस्त्वयसः कुशी । क्षारः काचोऽथ चपलो रसः सूतश्च पारदे॥९९॥
गवलं माहिषं शृङ्गमभ्रकं गिरिजामले । स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके । कर्परी दार्विका क्वाथोद्भवं तुत्थं रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धकः । सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका॥
रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम् । पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥

सेति ॥ तैजसम् ॥ (१)॥ एकं सर्वधातूनाम् ॥ वीति ॥ "कुशी फालेऽपि, वल्गायां कुशा, पापिष्ठमत्तयोः। कुशो वाच्यवदाख्यातः" इति विश्वः ॥ " कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः । कुशी लोहविकारे स्यात्कुशा वल्गा कुशं जले " इति हैमः ॥(१) ॥ एकं लोहविकारस्य ॥ क्षेति ॥ "क्षारः काचे रसे गुडे भस्मनि धूर्ते लवणे" इति हेमचन्द्रः ॥ (१) ॥ " काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे " इति विश्वः (२) ॥ द्वे काचस्य ॥ अथेति ॥ "चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे ॥ मीने च चपला तु स्यात् पिप्पल्यां विद्युति श्रियाम् ॥ पुंश्चल्यामपि " इति हेमचन्द्रः ॥ (१) ॥ " रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च ॥ रसा तु रसनापाठासल्लकीक्षितिकङ्गुषु " इति हैमः ॥ (२) ॥ "सूतस्तु सारथौ ताक्ष्णि क्षत्त्रियाद्ब्राह्मणीसुते । बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु " इति विश्वः ॥ (३) ॥ पारदः॥' पारेते ' इति पाठे पारं तनोति ॥ " रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते " इति तारपालः ॥ " पारतस्तु मनाक्पाण्डुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः " इति शब्दार्णवः ॥ (४) ॥ चत्वारि पारदस्य ॥ ९९ ॥ गेति ॥ गवलम् ॥(१) ॥ एकं महिषशृङ्गस्य ॥ अभ्रेति ॥ अभ्रकम् ॥ (१) ॥" गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरीमातुलुङ्ग्योश्च योषिति " इति मेदिनी ॥ (२) ॥ " अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु" इति मेदिनी ॥ (३) ॥ त्रीणि अभ्रकस्य ॥ स्रविति ॥ स्रोतोञ्जनम् ॥ (१) ॥ " सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले । ना तु नीवृति " इति विश्वः ॥ (२) ॥ कापोताञ्जनम् ॥(३)॥ यामुनम् ॥ (४) ॥ चत्वारि "सुर्मा" इति ख्यातस्य ॥ १०० ॥ त्विति ॥ तुत्थाञ्जनम् ॥ (१) ॥ शिखिग्रीवम् ॥ (२) ॥ वितुन्नकम् ॥(३) ॥ मयूरकम् ॥ (४) ॥ चत्वारि 'तूतिया' इति ख्यातस्य ॥ केति ॥ कर्परी ॥ (१) ॥ दार्विका ॥ (२) ॥ तत्तुत्थं क्वाथोद्भवमावर्तितं सदुक्तपर्यायम् ॥ तुत्थं चास्य नाम ॥ " तुत्थं स्यादमृतासङ्गं कर्परी तुन्नमित्यपि " इति रभसः ॥ (३) ॥ त्रीणि आवर्तननिष्पन्नस्य रसाञ्जनभेदस्य॥रेति॥ रसाञ्जनम्॥(१)॥ १०१ ॥ रसगर्भम् ॥(२) ॥ तार्क्ष्यशैलम्॥ (३)॥त्रीणि रसाञ्जनस्य ॥ स्वामी[3] तु-तुत्थाञ्जनादिपञ्चपर्यायानुक्त्वा दार्विकाक्वाथोद्भवादिपंचकं रसवतीपर्यायमाह ॥ गेति ॥ गन्धाश्मा ॥ (१) ॥ गन्धकः ॥ " गन्धिकः" इति च ॥ (२) ॥ सौगन्धिकः ॥ "आमोदलेशयोर्गन्धः स सुगन्धः सुगन्धकः" इति रभसः ॥ (३) ॥ त्रीणि गन्धकस्य ॥ चेति ॥ "चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे । कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्" इति मेदिनी ॥ (१) ॥ "चक्षुष्या कुम्भकारी च कुलाली च कुलत्थिका" इति रत्नकोषः ॥ (२) ॥ कुलत्थिका ॥ (३) ॥ त्रीणि कुलत्थिकायाः ॥ १०२ ॥ रीति ॥ रीतिपुष्पम् ॥ (१) ॥ "पुष्पकेतु कुसुमाञ्जनम्" इति रुद्रः ॥ (२) ॥ पौष्पकम् ॥ (३) ॥ कुसुमाञ्जनम् ॥ (४) ॥ चत्वारि रीतिकायां ध्मायमानायां जातस्य मलस्य ॥ पीति॥ "पिञ्जरोऽश्वान्तरे पीते क्लीबं स्वर्णे च पीतने" ॥ (१) ॥ "पीतनं पीतदारुणि । कुङ्कुमे हरिताले च पुमानाम्रातके मतः" इति विश्वः ॥ (२) ॥ " तालः कालक्रियामाने हस्तमानद्रुभेदयोः । करास्फोटे करतले हरिताले त्सरावपि" इति हैमः ॥ " तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कांस्यस्य त्सरौ ताली

---

१--रसः प्रायेण महिषशृङ्गे स्थाप्यतेऽतो रसानन्तरमस्य कथनम्--इति मुकुटः ॥ २--"गिरिजामलम्--" इत्येकं नाम--इति स्वामिमुकुटौ ॥ ३--स्वामी तु तुत्थाञ्जनादिपञ्चकं कर्पर्यन्तं तुत्थाञ्जनपर्यायमुक्त्वा दार्विकाक्वाथोद्भवे तुत्थरसाञ्जनादित्रयमाह--इति मुकुटः ॥

गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु । बोलगन्धरसप्राणपिण्डगोसरसाः समाः ॥ १०४ ॥
हिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् । नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् १०५
रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् । स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६॥
मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि।मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् १०७॥
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नैपाली कुनटी गोला यवक्षारो यवाग्रजः १०८

जटौषधौ । क्लीबं तु हरिताले स्यात्'' इति विश्वः ॥ ( ३ ) ॥ "आलं स्यादनल्पहरितालयोः'' इति हेमचन्द्रः ॥ ( ४ ) ॥ "हरितालमलं तालवर्णकं नटभूषणम् '' इति माधवः ॥ "हरिताले तु कर्वूरं गोदन्तो नटसंज्ञकः'' इति त्रिकाण्डशेषः ॥ ( ५ ) ॥ पञ्च हरितालस्य ॥ १०३ ॥ गैरयिति ॥ गैरेयम् ॥ ( १ ) ॥ "अर्थ्यौ विपाश्चिति न्याय्ये त्रिष्वर्थ्यं तु शिलाजतु'' इति यान्ते रुद्रः ॥ ( २ ) ॥ " गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरीमातुलुङ्ग्योश्च योषिति'' इति मेदिनी ॥ ( ३ ) ॥ अश्मजम् ॥ ( ४ ) ॥ शिलाजतु ॥ ( ५ ) ॥ पञ्च शिलाजतुनः ॥ बोलेति॥ बोलः ॥ ( १ ) ॥ गन्धरसः ॥ "रसगन्धः'' अपि—इति स्वामी ॥ ( २ ) ॥ "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु'' इति मेदिनी ॥ ( ३ ) ॥ "पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिल्हयोः । पिण्डं तु कवले वेश्मैकदेशे जीवनायसोः ॥ बले सान्द्रे पिण्डयलाबूखर्जूर्योस्तगरेऽपि च'' इति हेमचन्द्रः ॥ ( ४ )॥ गोसः—इति मुकुटः ॥ "गोपः'' इति स्वामी ॥ ( ५ ) ॥ रसः ॥ "गोपरसः'' इति समस्तमपि—इति स्वामी ॥ ( ६ ) ॥ षट् "बोर'' इति ख्यातस्य ॥ १०४ ॥ हीति ॥ हिण्डीरः ॥ ( डिण्डीरः ) डादिर्वा पाठः ॥ ( १ ) ॥ अब्धिकफः ॥ (२ ) ॥फेनः॥(३)॥ त्रीणि समुद्रफेनस्य ॥ सीति॥"सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तचूर्णके॥ सिन्दूरी रोचनारक्तचेलिकाधातकीषु च'' इति मेदिनी ॥ (१) ॥ नागसम्भवम् ॥(२) ॥ द्वे सिन्दूरस्य ॥ नेति ॥ "नागं नपुंसकं रङ्गे सीसके करणान्तरे । नागः पुन्नागमातङ्गक्रूराचारिषु तोयदे ॥ नागकेसरपुंनागनागदन्तप्रभेदके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः'' इति मेदिनी ॥ ( १ ) ॥ सीसकम् ॥ ( २ ) योगेष्टम् ॥ ( ३ ) ॥ वप्रम् ॥ 'वर्ध्रः' इति पाठः—इति मुकुटः ॥ "वर्ध्रः सीसवरत्रयोः'' इति हैमः ॥ ( ४ ) ॥ चत्वारि "सीसो'' इति ख्यातस्य ॥ त्रेति ॥ "रङ्गसीसकयोस्त्रपु'' इति रुद्रः ॥ ( १ ) ॥ "पिच्चटो नेत्ररोगे स्यात्क्लीबं सीसकरङ्गयोः'' इति विश्वः ॥ ( २ ) ॥ ॥ १०५ ॥ "रङ्गो ना रागे नृत्यरणक्षितौ । अस्त्री त्रपुणि'' इति मेदिनी ॥ ( ३ ) ॥ "वङ्गं सीसकरङ्गयोः । वार्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे'' इति मेदिनी ॥ "वङ्गः कार्पासे वृन्ताके वङ्गा जनपदान्तरे । वङ्गं त्रपुणि सीसे च'' इति हैमः ॥ ( ४ ) ॥ चत्वारि "राँग'' इति ख्यातस्य ॥ अथेति ॥ "पिचुर्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे'' इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "तूलं स्याद्ब्रह्मदारुणि । आकाशेऽथ पिचौ न स्त्री'' इति विश्वः ॥ "पिचुतूलः'' इति रभसात्संघातोऽपि ॥ (२) ॥ द्वे "रूई'' इति ख्यातस्य ॥ अथेति ॥ कमलोत्तरम् ॥ ( १ ) ॥ "कुसुम्भं हेमनि महारजने ना कमण्डलौ'' इति मेदिनी ॥ ( २ ) ॥ वह्निशिखम् ॥ ( ३ ) ॥ "महारजनमुद्दिष्टं शातकुम्भकुसुम्भयोः'' इति मेदिनी ॥ ( ४ ) ॥ चत्वारि "कुसुम्भ'' इति ख्यातस्य॥१०६॥ मेषेति ॥ मेषकम्बलः॥ (१) ॥ ऊर्णायुर्ना क्षणाभङ्गे मेषकम्बलमेषयोः'' इति विश्वः ॥ ( २ ) ॥ द्वे कम्बलस्य ॥ शेति ॥ शशस्य ऊर्णा ॥ "शशोर्णं कारणं करम्'' इति चन्द्रगोमिलिङ्गानुशासनात् क्लीबत्वम् ॥ ( १ ) ॥ शशलोम ॥ ( २ ) ॥ द्वे शशलोम्नः ॥ मेति ॥ "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति'' इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "क्षौद्रं तु मधुनीरयोः'' इति हेमचन्द्रः ॥ ( २ ) ॥ माक्षिकम् ॥ ( ३ ) ॥ आदिना भ्रामर—वाटक—पौत्तिकादिग्रहः ॥ त्रीणि माक्षिकस्य ॥ मेति ॥ मधूच्छिष्टम् ॥ ( १ ) ॥ सक्थिकम् ॥ ॥ ( २ ) ॥ द्वे "मोम'' इति ख्यातस्य ॥ मेति॥१०७॥ मनःशिला ॥ ( १ ) ॥ मनोगुप्ता ॥२॥

पाक्योऽथ स्वर्जिकाक्षारः कापोतः सुखवर्चकः।सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना१०९
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् । ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥
गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम्।त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् १११

इति वैश्यवर्गः ॥ ९ ॥

---

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः॥ १ ॥
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः । शूद्राक्षत्त्रिययोरुग्रो मागधः क्षत्त्रियाविशोः२

मनोह्वा॥(३)॥ नागजिह्विका ॥ (४) ॥ "नैपाली नवमालीमनःशिलासुवहासु च" इति विश्वः ॥ ( ५ ) ॥ कुनटी ॥(६)॥ "गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम् । पत्त्राञ्जने मण्डने चालिञ्जरे वालखेलने" इति मेदिनी ॥ ( ७ ) ॥ सप्त मनःशिलायाः ॥ येति ॥ यवक्षारः ॥ ( १ ) ॥ यवाग्रजः ॥ ( २ ) ॥ ॥ १०८ ॥ पाक्यः ॥ ( ३ ) ॥ त्रीणि यवक्षारस्य ॥ अथेति ॥ स्वर्जिकाक्षारः ॥ ( १ ) ॥ कापोतः ॥ ( २ ) ॥ सुखवर्चकः ॥ ( ३ ) ॥ "अथ सौवर्चलं सर्जक्षारं च लवणान्तरे" इति मेदिनी ॥(४)॥ "रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः ॥ सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च" इति मेदिनी ॥ ( ५ ) ॥पञ्च "साजीक्षार" इति ख्यातस्य ॥ त्वेति ॥ त्वक्क्षीरी ॥ ( १ ) ॥ "स्याद्वंशरोचना वांशी तुकाक्षीरी तुका शुभा । त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवी" इति शाश्वतः ॥ ( २ ) ॥ द्वे वंशरोचनायाः ॥ १०९ ॥ शीति ॥ शिग्रुजम् ॥ ( १ ) ॥ श्वेतमरिचम् ॥ ( २ ) ॥ द्वे शोभाञ्जनबीजस्य ॥ मोरेति ॥ मोरटम् ॥ ( १ ) ॥ इक्षोरिदम् ॥ एकम् इक्षोर्मूलस्य ॥ ग्रेति॥"ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः । करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे" इति विश्वः ॥ ( १ ) ॥ पिप्पलीमूलम् ॥ ( २ ) ॥ चटकाशिरः ॥ "शिरः" अपि पृथक् ॥ "शिरो ना पिप्पलीमूले" इति रभसः॥"शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति" इति रान्ते मेदिनी ॥ ( ३)॥ त्रीणि पिप्पलीमूलस्य ॥ ११० ॥ गवेति ॥ "गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः" इति विश्वः ॥ ॥ ( १ ) ॥ भूतकेशः ॥ ( २ ) ॥ द्वे "जटामांसी इति ख्यातायाः ॥ पेति ॥ "पत्त्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने" इति विश्वः ॥ ( १ ) ॥ रक्तचन्दनम् ॥ ( २ ) ॥ द्वे रक्तसारद्रव्यस्य "पतङ्ग" इति ख्यातस्य ॥ त्रीति ॥ त्रिकटु ॥ ( १ ) ॥ त्र्यूषणम् ॥ ( २ ) ॥ व्योषम् ॥ ( ३ ) ॥ त्रीणि शुण्ठमरिचपिप्पलीनाम् ॥ त्रीति ॥ त्रिफला ॥ "त्रिफला तृफला च" इति त्रिकाण्डशेषः ॥ ( १ ) ॥ फलत्रिकम् ॥ ( २ ) ॥ द्वे हरीतकीविभीतकामलकानाम् ॥ १११ ॥

इति वैश्यवर्गविवरणम् ॥

---

शिवाति॥शूद्रः॥(१) ॥ अवरोऽधमो वर्णोऽस्य अवरवर्णः॥(२)॥वृषलः ॥(३)॥जघन्यात् पादाज्जातः जघन्यजः ॥ ( ४ ) ॥ चत्वारि शूद्रवर्णस्य ॥ आचेति ॥ संकीर्णः ॥ ( १ ) ॥ अम्बष्ठश्च करणश्च अम्बष्ठकरणावादी येषां ते ॥ आदिना उग्रादिग्रहः ॥ एकं चण्डालमारभ्याम्बष्ठकरणादिसंकरजातीयानाम् ॥ १ ॥ श्विति ॥ "करणं हेतुकर्मणोः । वालवादौ हसे लेपे नृत्यगीतप्रभेदयोः ॥ क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते" इति विश्वः ॥ ( १ ) ॥ एकं वैश्याच्छूद्रायां जातस्य ॥ अम्बेति ॥ वैश्या च द्विजन्मा च तयोः सुतः ॥ "अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । अम्बष्ठाप्यम्ललोण्यां स्यात्पाठायूथिकयोरपि" इति विश्वः ॥ ( १ ) ॥ एकं वैश्यायां ब्राह्मणोत्पन्नस्यापत्यस्य ॥ श्विति ॥ शूद्रा च क्षत्त्रियश्च तयोः सुतः ॥"उग्रः शूद्रासुते क्षत्त्राद्रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचाक्षुतयोः" इति मेदिनी ॥ ( १ ) ॥ एकं शूद्रायां क्षत्त्रियोत्पन्नस्य ॥ मेति ॥ क्षत्त्रिया च विट् च तयोः सुतः ॥ "मागधो मगधोद्भूते शुक्लजीरकवन्दिनोः ॥ वैश्यतः क्षत्त्रियापुत्रे मागधी स्यात्तु पिप्पली ॥ यूथी भाषा-

माहिष्योऽर्याक्षत्रिययोः क्षत्ताऽर्याशूद्रयोः सुतः। ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ३
रथकारस्तु माहिष्यात्करण्यां यस्य संभवः। स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ४।।
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः। कुलकः स्यात्कुलश्रेष्ठो मालाकारस्तु मालिकः
कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः। तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः ६
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः । पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ।। ७ ।।
नाडिंधमः स्वर्णकारः कलादो रुक्मकारके। स्याच्छाङ्खिकः काम्बविकः शौल्विकस्ताम्रकुट्टकः
तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् । ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ।। ९ ।।

विशेषश्च'' इति हेमचन्द्रः ।। ( १ ) ।। एकं क्षत्रियायां वैश्योत्पन्नस्य ।। २ ।। मेति ।। अर्या च क्षत्रियश्च तयोः सुतः ।। माहिष्यः ।। ( १ ) ।। एकमर्यायां क्षत्रियोत्पन्नस्य ।। क्षेति ।। अर्या च शूद्रश्च तयोः सुतः ।। ''क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ ।। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान्'' इति मेदिनी ।। ( २ ) ।। अर्या स्वामिनी ।। सा च क्षत्रिया योग्यत्वात् । तेन ''क्षत्रियायां च शूद्रजे'' इत्यनेनाविरोधः ।। एकं वैश्यायां क्षत्रियाज्जनितस्य ।। ब्रेति ।। ''सूतः पारदसारथ्योः प्रसूतेरितवन्दिषु ।। ब्राह्मण्यां क्षत्रियाज्जाते तक्षिण'' इति हैमः ।। ( १ ) ।। एकं ब्राह्मण्यां क्षत्रियाज्जातस्य ।। तेति ।। ''वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च'' इति विश्वः ।। ( १ ) ।। एकं ब्राह्मण्यां वैश्योत्पन्नस्य ।। ३ ।। रेति ।। माहिष्याद्वैश्याक्षत्रियसुतात् करण्यां शूद्रायां वैश्यादुत्पन्नायाम् ।। ''रथकारस्तु माहिष्यात्करणीजे च तक्षणि'' इति मेदिनी ।। ( १ ) ।। एकं शूद्रायां माहिष्याज्जातस्य ।। स्येति ।। चण्डालः ।। (१) ।। एकं ब्राह्मण्यां शूद्रेण जनितस्य ।। ४ ।। केति ।। ''कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि'' इति हेमचन्द्रः ।। ( १ ) ।। ''शिल्पी तु वाच्यवत्कारौ स्त्रियां कोलदलौषधौ'' इति मेदिनी ।। ( २ ) ।। ''तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः'' ।। द्वे शिल्पिनः ।। समिति ।। ''श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ' इति मेदिनी ।। ( १ ) ।। एकं सजातीयशिल्पिसंघस्य ।। किति ।। ''कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते'' इति मेदिनी ।। ''कुलिकः'' इति च ।। ''कुलिको नागभेदे स्याद् द्रुभेदे कुलसत्तमे'' इति मेदिनी ।। ( १ ) ।। कुलश्रेष्ठः ।। ( २ ) ।। द्वे कारुसंघे मुख्यस्य ।। मेति ।। मालाकारः ।। ( १ ) ।। ''मालिका सप्तलापुत्री ग्रीवालंकरणेऽपि च । पुष्पमाल्ये नदीभेदे पक्षिभेदे च मालिकः'' इति मेदिनी ।। ( २ ) द्वे ''माली'' इति ख्यातस्य ।। ५।। किति ।। ''कुम्भकारी कुलटयां च पुंसि स्याद्घटकारके'' इति विश्वः ।। ( १ ) ।। ''कुलालः कुक्कुभे कुम्भकारे घूकेऽञ्जनान्तरे'' ।। ( २ ) ।। द्वे कुम्भकारस्य ।। पेति ।। पलगण्डः ।। ( १ ) ।। लेपकः ।। ( २ ) ।। द्वे लेपकर्त्तुः ।। तेति ।। तन्तुवायः ।। ''तन्त्रवायः'' इति ''तन्त्रवापः'' इति च ।। ( १ ) ।। कुविन्दः ।। ( २ ) ।। द्वे तन्तुवायस्य ।। त्विति ।। तुन्नं छिन्नं वयति तुन्नवायः ।। ( १ ) ।। सूची शिल्पमस्य सौचिकः ।। ( २ ) ।। द्वे तुन्नवायस्य ।। ६ ।। रेति ।। रङ्गाजीवः ।। ( १ ) ।। चित्रकरः ।। ( २ ) ।। द्वे रञ्जकस्य ।। शेति ।। शस्त्रमार्जकः ।। ( १ ) ।। असिधावकः ।। ( २ ) ।। द्वे शस्त्रमार्जकस्य ।। पेति ।। पादूकृत् ।। ( १ ) ।। चर्मकारः ।। ( २ ) ।। द्वे चर्मकारस्य ।। व्योकेति ।। ''व्यो'' इत्यव्ययं लोहबीजवाची—इति श्रीभोजः।। व्यो करोति । व्योकारः ।।(१)।। ''व्योकारोऽयस्करोऽयस्कारो लोहकारः स्यात् '' इति रत्नकोषः ।।(२)।। द्वे लोहकारस्य ।।७।। नेति ।। नाडीं वंशनलीं धमति नाडिंधमः।।(१)।। स्वर्णकारः ।।(२)।। कलादः ।। ( ३ ) ।। रुक्मकारकः ।। ( ४ ) ।। चत्वारि स्वर्णकारस्य ।। स्येति ।। शाङ्खिकः ।। ( १ ) ।। काम्बविकः ।। ( २ ) ।। द्वे शङ्खवादकस्य ।। शावेति ।। शुल्बघट्टनं शिल्पमस्य शौल्विकः ।। ( १ ) ।। ताम्रकुट्टकः ।। ( २ ) ।। द्वे ताम्रकर्त्तुः ।। ८ ।। तेति ।। तक्षा ।। ( १ ) ।। वर्धकिः ।। ( २ ) ।। ''त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि'' इति मेदिनी ।। ( ३ ) ।। रथकारः ।। ( ४ ) ।। काष्ठतट् ।। ( ५ ) ।। पञ्च रथकारस्य ।। ग्रेति ।। ग्रामाधीनः ।। ( १ ) ।। ग्रामतक्षः ।। ( २ ) ।। द्वे ग्रामत्वष्टुः ।। कौटेति ।।

क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः।निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः॥ १०॥
जावालः स्यादजाजीवो देवाजीवी तु देवलः। स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः ११
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः। भरता इत्यपि नटाश्चारणास्तु कुशीलवाः॥ १२॥
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः।वेणुध्माःस्युर्वैणविका वीणावादास्तु वैणिकाः १३
जीवान्तकःशाकुनिको द्वौ वागुरिकजालिकौ।वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥१४॥
भृतको भृतिभुक्कर्मकरो वैतानिकोऽपि सः । वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः॥१६॥
भृत्ये दासेयदासेरदासगोप्यकचेटकाः । नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ॥ १७ ॥
पराचितपरिस्कन्दपरजातपरैधिताः।मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः॥ १८॥

कुट्यां भवः ॥ कौटश्चासौ तक्षा च कौटतक्षः ॥ ( १ ) ॥ नाधीनः ॥ एकं स्वाधीनत्वष्टुः ॥ ९ ॥ क्षिवति ॥ क्षुरी ॥ ( १ ) ॥ मुण्डी ॥ ( २ ) ॥ "दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः" इति विश्वः ॥ ( ३ ) ॥ नापितः ॥ ( ४ ) ॥ "अन्तावसायी श्वपचे मुनिभेदे च नापिते" इति मेदिनी ॥ (५)॥ पञ्च नापितस्य ॥ नीति ॥ निर्णेजकः ॥ ( १ ) ॥ रजकः ॥ ( २ ) ॥ द्वे रजकस्य ॥ शाविति ॥ "शुण्डा पानगृहे मता । अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च" इति मेदिनी ॥ शुण्डा सुरा पण्यमस्य शौण्डिकः ॥ ( १ ) ॥ मण्डं सुराग्ररसं हरति मण्डहारकः ॥ ( २ ) ॥ द्वे शौण्डिकस्य ॥ १० ॥ जेति ॥ जावालः ॥ ( १ ) ॥ अजाजीवः ॥ ( २ ) ॥ द्वे अजां पालयितुः ॥ देवेति ॥ देवाजीवी ॥ "देवाजीवः" इति अदन्तपाठे देव आजीवोऽस्य ॥ ( १ ) ॥ देवलः ॥ ( २ ) ॥ द्वे देवपूजकस्य ॥ स्येति ॥ "माया स्याच्छाम्बरीबुद्धयोर्मायः पीताम्बरेऽसुरे" इति मेदिनी ॥ ( १ ) ॥ शम्बराख्यदैत्यस्येयं शाम्बरी ॥ ( २ ) ॥ द्वे इन्द्रजालादिमायायाः ॥ मेति ॥ मायाकारः ॥ ( १ ) ॥ प्रातिहारिकः ॥ ( २ ) ॥ द्वे इन्द्रजालिकस्य ॥ ११ ॥ शाथिति ॥ शैलाली ॥ ( १ ) ॥ "नटे बिल्वे च शैलूषः" इति तालव्यादिमूर्धन्यान्तेषु रभसः ॥ ( २ ) ॥ जायाजीवः ॥ ( ३ ) ॥ कृशाश्वी ॥ ( ४ ) ॥ भरतः ॥ ( ५ ) ॥ नटः ॥ ( ६ ) ॥ "रङ्गावतारी शैलूषो नटो भरतभारतौ" इति वाचस्पतिः ॥ षट् नटस्य ॥ चेति ॥ चारणः ॥ ( १ ) ॥ कुशीलवः ॥ ( २ ) ॥ द्वे वन्दिविशेषस्य ॥ १२ ॥ मेति ॥ मृदङ्गो लक्षणया तद्वादनं शिल्पमेषां मार्दङ्गिकाः ॥ ( १ ) ॥ मौरजिकाः॥ ( २ ) ॥ द्वे मृदङ्गवादननिष्णातानाम् ॥ पेति ॥ पाणिवादः ॥ ( १ )॥ पाणिघः ॥ ( २ ) ॥ द्वे पाणिना मृदङ्गवादनशीलस्य ॥ वयिति ॥ वेणुध्मः ॥ ( १ ) ॥ वैणविकः ॥(२)॥ द्वे वेणुवादनचतुराणाम् ॥ वीति ॥ वीणावादः॥(१)॥ वैणिकः॥(२)॥ द्वे वीणावादिनाम्॥१३॥ जीति ॥ जीवान्तकः ॥ ( १ ) ॥ शाकुनिकः ॥ ( २ ) ॥ द्वे जीवानां हन्तुः ॥ द्वाविति ॥ वागुरिकः ॥ ( १ ) ॥ जालिकः ॥ ( २ ) ॥ द्वे जालद्वारा मृगघातकस्य ॥ वायिति ॥ वैतंसिकः ॥ ( १ ) ॥ कौटिकः ॥ ( २ )॥ मांसिकः ॥(३)॥ त्रीणि मांसविक्रेतुः ॥१४॥ भ्रिति ॥ भृतकः ॥ ( १ ) ॥ भृतिभुक् ॥ ( २ ) ॥ कर्मकरः ॥ ( ३ ) ॥ वैतनिकः ॥ ( ४ ) ॥ चत्वारि वेतनेन कर्मकरस्य ॥ वेति ॥ वार्तावहः ॥ ( १ ) ॥ वैवधिकः ॥ ( २ ) ॥ द्वे वार्तावाहकस्य "कवडिया" इति ख्यातस्य ॥ भेति ॥ भारवाहः ॥ ( १ ) ॥ भारिकः॥ ( २ ) ॥ द्वे भारवाहस्य ॥ वीति ॥ विगतो वर्णो यस्य यस्माद्वा ॥ "वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे" इति विश्वः ॥ ( १ ) ॥ पामरः ॥ ( २ ) ॥ नीचः ॥ ( ३ ) ॥ प्राकृतः ॥ ( ४ ) ॥ पृथग्जनः ॥ ( ५ ) ॥ निहीनः ॥ ( ६ ) ॥ अपसदः ॥ ( ७ ) ॥ जाल्मस्तु पामरे । असमीक्ष्यकारिणि च" इति हैमः॥ (८)॥ क्षुल्लकः॥ कवर्गद्वितीयादिरपि ॥ "खुल्लकस्त्रिषु नीचेऽल्पे" इति रभसात् ॥ ॥ ( ९ ) ॥ इतरः ॥(१०)॥ दश नीचपुरुषस्य ॥ १६ ॥ भ्रिति॥ "भृत्यो दासे भृतौ भृत्या" इति विश्वः ॥ ( १ ) ॥ दास्या अपत्यं दासेयः ॥ ( २ ) ॥ दासेरः ॥ ( ३ ) ॥ दासः ॥ 'दाशः' इति तालव्यान्तश्च ॥ ( ४ ) ॥ गोप्यकः ॥ ( ५ ) ॥ चेटकः॥(६)॥ नियोज्यः ॥ ( ७ ) ॥ किंकरः॥(८)॥ प्रैष्यः ॥ (९) ॥ भुजिष्यः ॥ ( १० ) ॥ परिचारकः ॥ ( ११ ) ॥ एकादश भृत्यस्य ॥ १७ ॥ पेति ॥ पराचितः ॥ (१) ॥

**दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च । चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥**
**निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः । भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥२० ॥**
**व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः।कौलेयकः सारमेयः कुक्कुरो मृगदंशकः॥ २१ ॥**
**शुनको भषकः श्वा स्यादलर्कस्तु स योगितः । श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ॥२२॥**
**विट्चरः शूकरो ग्राम्यो वर्करस्तरुणः पशुः।आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्२३॥**

परिस्कन्दः ॥ (२)॥ परजातः ॥"पराजितः" इति च ॥ (३) ॥ परैधितः ॥ (४) ॥ चत्वारि औदासीन्येन परपोषितस्य ॥ मेति॥"मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ" इति विश्वः ॥ (१) ॥ तुन्दपरिमृजः ॥ (२) ॥ आलस्यः ॥ (३) ॥ शीतकः ॥ (४) ॥ अलसः ॥ (५) ॥ "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः" इति मेदिनी ॥ उष्णो दक्षः । उष्णादन्यः अनुष्णः ॥(६) ॥ षट् अलसस्य ॥ १८ ॥ देति ॥ "दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्याम्" इति विश्वः ॥ (१) ॥ चतुरः ॥ (२) ॥ पेशलः ॥ (३) ॥"पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान्क्लीबे छत्रालवणयोरपि" इति मेदिनी ॥ (४) ॥ सूत्थानः ॥ (५) ॥ "उष्णो ग्रीष्मे पुमान्दक्षशीतयोरन्यलिङ्गकः" इति मेदिनी ॥ (६) ॥ षट् चतुरस्य ॥ चेति ॥ चण्डालः ॥ (१) ॥ "प्लवः श्लक्ष्णे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेककमेलयोः क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि" इति हैमः । "प्लवः स्यात्प्लवने भेले भेकेऽशौ श्वपचे कपौ । जलकाके च कुलके प्रवणे पर्कटीद्रुमे । कारण्डवाख्यविहगे शब्दे प्रतिगतौ पुमान् । कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्" इति मेदिनी ॥ (२) ॥ मातङ्गः ॥ (३) ॥ दिवा कीर्तिरस्य ॥—दिवा अकीर्तिरस्य—इति मुकुटः॥ दिवाकीर्त्तिः ॥ (४) ॥ जनङ्गमः ॥ (५)॥ "निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे" इति मेदिनी ॥ (६) श्वपचः ॥ "श्वपाकः" अपि ॥ (७) ॥ अन्तेवासी ॥ (८) ॥ चाण्डालः ॥ (९) ॥ पुक्कसः ॥ "पुष्कसी कालिकानील्योः पुष्कसः श्वपचेऽधमे" इति विश्वे दर्शनात्पुष्कसोऽपि॥हैमे तु बुक्कसी-बुक्कस-शब्दावुपलभ्येते ॥ (१०) ॥ दश चण्डालस्य ॥ भयिति ॥ किरातादयस्त्रयो म्लेच्छजातयश्चण्डालभेदाः॥"किरातो म्लेच्छभेदे स्याद्भूनिम्बेऽल्पतनावपि । स्त्रियां चामरवाहिन्यां कुट्टनीदुर्गयोरपि" इति मेदिनी ॥ (१) ॥ "शबरो म्लेच्छभेदे च पानीये शङ्करेऽपि च" इति विश्वः ॥ (१) ॥ "पुलिन्दः कथ्यते म्लेच्छे पुलिन्द्रेऽपि निगद्यते" इति तारपालः ॥ "पुलिन्दः पत्रशबरः" इति रत्नकोषः ॥ (१) ॥ म्लेच्छानां जातयोऽवान्तरभेदाः ॥ "गोमांसभक्षको यस्तु लोकबाह्यं च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते" ॥ सूतसंहितायामपि- "ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः । अस्यामनेन चौर्येण म्लेच्छो विप्रात्प्रजायते" इति ॥ म्लेच्छविशेषाणां प्रत्येकमेकैकम् ॥२०॥ व्येति॥ व्याधः ॥(१)॥ मृगवधाजीवः ॥(२)॥ "मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि" इति मेदिनी ॥ (३) ॥ लुब्धकः ॥ (४) ॥ चत्वारि व्याधस्य॥काविति॥"कौलेयकः सारमेये कुलीने" इति हैमः ॥ (१) ॥ सारमेयः ॥ (२) ॥ "कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकम्" इति विश्वः ॥ (३) ॥ मृगदंशकः ॥ (४)॥२१॥ शुनकः ॥ (५) ॥ भषकः ॥ (६) ॥ श्वा ॥ (७) ॥ "कुक्कुरस्तु शुनिः श्वानः कपिलो मण्डलः शुनः" इति वाचस्पतिः ॥ सप्त कुक्कुरस्य ॥ अलेति॥"अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे" इति विश्वः ॥ (१) ॥ योगो मत्ततोपायो जातोऽस्य ॥ एकं मत्तशुनः॥ श्वेति ॥ विश्वकं सर्वं द्रवति ॥ "विश्वकद्रुस्त्रिषु खले ध्वानाखेटशुनोः पुमान्" इति मेदिनी ॥ (१) ॥ मृगयायां कुशलः ॥ एकं मृगयाकुशलस्य शुनः ॥ सेति ॥ "सरमा कुक्कुरीदेवशुन्योः स्याद्राक्षसीभिदि" इति मेदिनी ॥ (१) ॥ शुनी ॥ (२) ॥ द्वे शुन्याः ॥ २२ ॥ वीति ॥ विशं विष्ठां चरति विट्चरः ॥ (१) ॥ एकं ग्राम्यशूकरस्य ॥ वेति ॥ "वर्करः परिहासे स्याच्छागे युवपशावपि" इति विश्वः ॥ "वर्करा मेषशावकः" इति रक्षितः ॥ (१) ॥ एकं तरुणपशुमात्रस्य ॥ आच्छविति ॥ आच्छोदनम् ॥ (१)॥ मृगव्यम् ॥ (२) ॥ आखेटः ॥(३) ॥ मृगया ॥(४) ॥ चत्वारि "शिकार" इति ख्यातस्य ॥ २३ ॥

**दाक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः । चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥**
**प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः।चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम्॥२५॥**
**वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् । उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ॥ २६ ॥**
**शुल्वं वराटकः स्त्री तु रज्जुस्त्रिषु वटी गुणः।उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥**
**पुंसि वेमा वापदण्डः सूत्राणि नरि तन्तवः।वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि२८॥**
**पञ्चालिका पुत्त्रिका स्याद्वस्त्रदन्तादिभिः कृता॥पिटकःपेटकःपेटा मञ्जूषाऽथ विहंगिका ॥२९ ॥**

दोति ॥ दक्षिणेऽरुरस्य ॥ दाक्षिणे ईर्ममस्य ॥ दक्षिणेर्मा ॥ ( १ ) ॥ एकं लुब्धयोगाद्दक्षिणव्रणस्य कुरङ्गकस्य । चाविति ॥ "चौरः पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि" इति विश्वः ॥ पचाद्यचि "चोरः" अपि ॥ ( १ ) ॥ एकमसहायमगारं प्रयोजनमस्य ऐकागारिकः ॥ ( २ ) ॥ स्तेनः ॥ ( ३ ) ॥ "दस्युश्चौरे रिपौ पुंसि" इति हैमः ॥ ( ४ ) ॥ तस्करः ॥ ( ५ ) ॥ मोषकः ॥ ( ६ ) ॥ २४ ॥ प्रतिरोधी ॥ ( ७ )॥परान् आस्कन्तुं शीलमस्य परास्कन्दी ॥ ( ८ ) ॥ पाटयंश्चरति पाटच्चरः ॥ "चौरजीर्णपटयोः पटच्चरः" इति नामानुशासनम् ॥ ( ९ ) ॥ "मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान्" इति विश्वः ॥ ( १० ) ॥ दश चौरस्य ॥ चाविति ॥ चौरिका ॥ ( १ ) ॥ स्तैन्यम् ॥ ( २ ) ॥ चौर्यम् ॥ ( ३ ) ॥ स्तेयम् ॥ ( ४ ) ॥ "स्तेयं स्तैन्यं च चौर्ये स्याच्चौरिकाचोरिके स्त्रियाम्" इति वाचस्पतिः ॥ चत्वारि चोरकर्मणः ॥ लविति ॥ लोप्त्रम् ॥ 'लोत्रम्' अपि ॥ "लोत्रमश्रुणि चोरिते" इति विश्वः ॥ ( १ ) ॥ तस्य चोरस्य धनम् ॥ एकं चोरधनस्य ॥ २५ ॥ वीति ॥ "वीतंसो बन्धनोपाये मृगाणामपि पक्षिणाम् ॥ तेषामेव च विश्वासहेतोः प्रावरणेऽपि च" इति विश्वः ॥ ( १ ) ॥ एकं मृगादिबन्धनसाधनस्य ॥ विति ॥ "उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्" इति मेदिनी ॥ ( १ ) ॥ कूटयन्त्रम् ॥ ( २ ) ॥ द्वे मृगादिबन्धनयन्त्रस्य ॥ वेति ॥ वागुरा ॥ ( १ ) ॥ मृगबन्धनी ॥ ( २ ) ॥ द्वे जालविशेषस्य ॥ २६ ॥ श्विति ॥ "रज्जुः शुल्वा वराटो ना" इति रत्नकोषात्स्त्र्यपि ॥ "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ" इति विश्वः । स्वामी तु--"सुम्यं वटाकरः"--इति पठति ॥ वराटकः ॥ ( २ ) ॥ "रज्जुर्वेण्यां गुणे योषित्" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ "वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः" इति मेदिनी ॥ (४)॥ "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ॥ त्यागे शौर्यादिसंध्यादिसत्त्वाद्यावृत्तिरज्जुषु ॥ शुक्लादावपि वट्यां च" इति मेदिनी ॥ ( ५ ) ॥ पञ्च रज्जोः ॥ उद्घेति ॥ उद्घाटनम् ॥ ( १ ) ॥ घटीयन्त्रम् ॥ ( २ ) ॥ प्रहेः कूपात् ॥ सलिलमुद्वाह्यतेऽनेन ॥ द्वे 'अरट' इति ख्यातस्य ॥ २७ ॥ पुंसीति ॥ वेमा ॥ ( १ ) ॥ वापदण्डः ॥ "वायदण्डः" इति च ॥ ( २ ) ॥ द्वे वस्त्रमानदण्डस्य ॥ स्विति ॥ "सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः" इति हैमः ॥ ( १ ) ॥ नरि पुंसि ॥ तन्तुः ॥ "सूत्रतन्तुः" इति हारावल्याः संहतोऽपि ॥ ( २ ) ॥ द्वे सूत्रस्य ॥ वेति ॥ वाणिः ॥ ( १ ) ॥ व्यूतिः ॥ ( २ ) ॥ द्वे वस्त्रादिवानस्य ॥ स्त्रिवति ॥ पुस्तम् ॥ ( १ ) ॥ "मृदा वा दारुणा वाऽथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते"॥ लेप्यमादिर्यस्य तच्च तत्कर्म च ॥ आदिना काष्ठपुत्तालिकादि ॥ एकं लेप्यादिकर्मणः॥२८॥ पेति ॥ पञ्चालिका ॥ "पाञ्चालिका" इति पाठे "पाञ्चालिका स्त्रियां वस्त्रपुत्त्रिकागीतिभेदयोः" इति मेदिनी ॥ ( १ ) ॥ "स्यात्पुत्रिका पुत्तलिकादुहित्रोर्यावतूलिके । ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयोः" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ आदिना काष्ठमृच्छिलादिकृता ॥ द्वे वस्त्रादिकृतायाः कृत्रिमपुत्त्रिकायाः ॥ पीति॥ "पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान्" इति मेदिनी ॥ ( १ ) ॥ "पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति विश्वः ॥ ( २ ) ॥ पेटा ॥ "पेडा" इति मुकुटः ॥ "पीडा" इति स्वामी ॥ ( ३ ) ॥ मञ्जूषा॥ ( ४ )॥ चत्वारि"पेटि"इति ख्यातायाः॥मुकुटस्तु—आद्यद्वयम् "झायी" इति ख्यातायाः ॥

भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका।पादूरुपानत्स्त्री सैवानुपदीना पदायता ॥ ३० ॥
नध्री वर्ध्री वरत्रा स्यादश्वादेस्ताडनी कशा।चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ३१
नाराची स्यादेषणिका शाणस्तु निकषः कषः। वृश्चनः पत्त्रपरशुरेषिका तूलिका समे ॥ ३२ ॥
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका । आस्फोटनी वेधनिका कृपाणी कर्तरी समे ॥ ३३ ॥
वृक्षादनो वृक्षभेदी टङ्कः पाषाणदारणः । क्रकचोऽस्त्री करपत्त्रमारा चर्मप्रभेदिका ॥ ३४ ॥
सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलादिकम् ॥ ३५ ॥
प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ ३६ ॥

अन्त्यद्वयं "मञ्जूषा" इति ख्यातायाः इत्याह ॥ अथेति ॥ विहंगिका ॥ मुकुटस्तु----"विहंगमा"-- इति पठति ॥ ( १ ) ॥ २९ ॥ भारयष्टिः ॥ ( २ ) ॥ द्वे "कावडी" इति ख्यातायाः ॥ तेति ॥ तामालम्बितुं शीलमस्य ॥ शिक्यम् ॥ ( १ ) ॥ "काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ द्वे शिक्यस्य ॥ अथेति ॥ पादुका ॥ ( १ ) ॥ पादूः ॥ ( २ ) ॥ उपानत् ॥ ( ३ ) ॥ त्रीणि उपानहः ॥ सैवेति ॥ अनुपदीना ॥ ( १ ) ॥ एकं पादायामेन विस्तृताया उपानहः ॥ ३० ॥ नेति ॥ नध्री ॥ ( १ ) ॥ वर्ध्री ॥ ( २ ) ॥ वरत्रा ॥ ( ३ ) ॥ त्रीणि चर्ममयरज्जोः ॥ अश्वेति ॥ कशा ॥ ( १ ) ॥ आदिना उष्ट्रगर्दभचौरादिग्रहः ॥ एकमश्वादेस्ताडन्याः ॥ चेति ॥ "चाण्डालिका किंनरायामुमायामोषधीभिदि" इति मेदिनी ॥ ( १ ) ॥ कण्डोलस्य चण्डालस्य वीणा कण्डोलवीणा॥ "कटोलवीणा" इति च ॥ ( २ ) ॥ चण्डालवल्लकी ॥ ( ३ ) ॥ त्रीणि "किंगरी" इति ख्यातायाः ॥ ३१ ॥ नेति ॥ नाराची ॥ ( १ ) ॥ एषणिका ॥ ( २ ) ॥ द्वे सुवर्णतुलायाः ॥ शेति ॥ "पुंसि स्यात्, शाणो मासचतुष्टये । लोहादीनां च निकषे शाणी प्रावरणान्तरे" इति मेदिनी ॥ ( १ ) ॥ नेर्ग्रहणमुपसर्गान्तरीनवृत्त्यर्थम् ॥ "निकषः शाणफलके निकषा यातुमातरि" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ कषः ॥ ( ३ ) ॥ त्रीणि सुवर्णपरीक्षणपाषाणस्य ॥ खड्गादितीक्ष्णीकरणयन्त्रस्य—इत्यन्ये ॥ व्रिति ॥ वृश्चनः ॥ ( १ ) ॥ पत्त्रपरशुः ॥ ( २ ) ॥ द्वे सुवर्णादिच्छेदनद्रव्यस्य ॥—लघुकरवतस्य—इत्यन्ये ॥ एषीति ॥ एषिका॥ "ईषिका" इति च ॥ ( १ ) ॥ तूलिका ॥ ( २ ) ॥ द्वे वीरणादिशलाकायाः ॥ ३२ ॥ तैजेति ॥ तेजसो विकारः सुवर्णादिरावर्त्यतेऽस्यां तैजसावर्तनी ॥ ( १ ) ॥ मूषा ॥ ह्रस्वादिरपि ॥ ह्रस्वा मूषा मूषी । "मूषा । मुषा त्वावर्तनी मूषी" इति शब्दार्णवः ॥ ( २ ) ॥ द्वे मूषायाः ॥ भेति ॥ भस्त्रा ॥ ( १ ) ॥ चर्मणा प्रसीव्यते चर्मप्रसेविका ॥ ( २ ) ॥ द्वे भस्त्रायाः ॥ आस्फाविति ॥ आस्फोटनी॥ "लास्फोटनी" इति मुकुटः॥( १ )॥वेधनिका॥ "वेधनी तु लास्फोटन्यां स्फोटनी वृषदंशिका" इति वाचस्पतिः॥(२)॥ द्वे मुक्तादिवेधिन्याः ॥ कृिति ॥ कृपाणी ॥ ( १ ) ॥ कर्तरी ॥ ( २ ) ॥ द्वे स्वर्णपत्रविच्छेदिन्याः ॥ ३३ ॥ व्रिति ॥ वृक्षादनः ॥ ( १ ) ॥ वृक्षभेदी ॥ ( २ ) ॥ द्वे . काष्ठतनूकरणसाधनस्य ॥ टेति ॥ 'टम्' इति शब्दं कायति टङ्कः ॥ ( १ ) ॥ पाषाणो दार्यतेऽनेन पाषाणदारणः ॥ ( २ ) ॥ द्वे पाषाणभेदकस्य ॥ क्रेति ॥ "क्रकचः करपत्त्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान्" इति मेदिनी ॥ ( १ ) ॥ करपत्त्रकम् ॥ ( २ ) ॥ द्वे "करोत" इति ख्यातस्य ॥ आरेति ॥"आरा चर्मप्रभेदिन्यां पुंसि भौमशनैश्चरे" इति मेदिनी ॥ ( १ ) ॥ चर्मप्रभेदिका ॥ ( २ ) ॥ द्वे चर्मप्रभेदकस्य शस्त्रविशेषस्य ॥ ३४ ॥ स्विति ॥ सूर्मी ॥ "शूर्मी" तालव्यादिः---इत्ययुक्तम् । "सूर्म्यं सुषिरामिव" इति श्रुतिविरोधात् ॥ ( १ ) ॥ "स्थूणा सूर्म्यां स्तम्भे रुगन्तरे" इति हैमः ॥ ( २ ) ॥ अयःप्रतिमा ॥ ( ३ ) ॥ त्रीणि अयःप्रतिमायाः ॥ शीति ॥ "शिल्पं स्रुवे क्रियादिके" इति विश्वः ॥ ( १ ) ॥ कला नृत्यगीतादिरूपा चतुःषष्टिभेदभिन्ना॥ आदिना सुवर्णकारादिकर्मग्रहः ॥ एकं नृत्यगीतादिकर्मणः॥३५॥ प्रेति ॥ प्रतिमानम् ॥ ( १ ) ॥ प्रतिबिम्बम् ॥ ( २ ) ॥ "प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" इति

वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः ॥ ३७ ॥
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् । भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८ ॥
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा । गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् । शुण्डा पानं मदस्थानं मधुवारा मधुक्रमाः ॥ ४० ॥
मध्वासवो माधवको मधु माध्वीकमद्वयोः । मैरेयमासवः शीधुर्मेदको जगलः समौ ॥ ४१ ॥

मेदिनी ॥ ( ३ ) ॥ प्रतियातना ॥ ( ४ ) ॥ प्रतिच्छाया ॥ ( ५ ) ॥ प्रतिकृतिः ॥ ( ६ ) ॥ अर्चा ॥ (७) ॥ प्रतिनिधिः ॥ (८) ॥ अष्टौ प्रतिमायाः ॥ उपेति ॥ उपमा ॥ (१) ॥ उपमानम् ॥(२)॥ द्वे करणे भावे च येनोपमीयते, या चोपमितिः, तयोरेते नाम्नी ॥ केचित्तु—पूर्वान्विते—इत्याहुः ॥३६॥ वेति ॥ समः ॥ ( १ ) ॥ तुल्यः ॥ ( २ )॥ सदृक्षः ॥ ( ३ ) ॥ सदृशः ॥ ( ४ ) ॥ सदृक् ॥ ( ५ ) ॥ साधारणः ॥ ( ६ ) ॥ समानः ॥ ( ७ ) ॥ सप्त वाच्यलिङ्गाः ॥ सप्त तुल्यस्य ॥ स्युरिति ॥ अमी निभादय उत्तरपदस्था एव सदृशवचना वाच्यलिङ्गाः स्युः ॥ यथा 'पितृनिभः पुत्रः' 'मातृनिभा कन्या' 'देवानिभमपत्यम्' इति ॥ "निभस्तु कथितो व्याजे पुँल्लिङ्गः सदृशे त्रिषु" इति मेदिनी ॥ ( १ ) ॥ "संकाशः सदृशेऽन्तिके" इति हैमः ॥ ( २ ) ॥ "नीकाशो निश्चये तुल्ये" इति विश्वः ॥ ( ३ ) ॥ प्रतीकाशः ॥ ( ४ ) ॥ उपमा ॥ ५ ॥ आदिना भूतरूपकल्पादयः । यथा पितृभूतः, पितृरूपः, पितृकल्पः, ॥ पञ्च तुल्यस्य ॥ ३७ ॥ केति ॥ कर्मण्या ॥ ( १ ) ॥ विधा ॥ ( २ ) ॥ भृत्या ॥ ( ३ ) ॥ भृतिः ॥ ( ४ ) ॥ भर्म ॥ ( ५ ) ॥ वेतनम् ॥ ( ६ ) ॥ भरण्यम् ॥ ( ७ ) ॥ "भरणी घोषके ऋक्षे भरणं वेतने भृतौ" इति विश्वः ॥ ( ८ ) ॥ "मूल्यं स्याद्वेतने वस्ने" इति विश्वः ॥ ( ९ ) "निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपि च" इति मेदिनी ॥ ( १० ) ॥ "पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रय्यशाकादिके द्यूतव्यवहारे भृतौ धने" इति मेदिनी ॥ ( ११ ) ॥ एकादश वेतनस्य ॥ ३८ ॥ स्विति ॥ "सुरा चषकमद्ययोः । पुँल्लिङ्गस्त्रिदिवेशे स्यात्" इति मेदिनी ॥ ( १ ) ॥ हलिप्रिया ॥ ( २ ) ॥ "हालः सातवाहनपार्थिवे । हाला सुरायाम्" इति विश्वः ॥ ( ३ ) ॥ परिस्रुत् ॥ ( ४ ) ॥ वरुणात्मजा ॥ ( ५ ) ॥ गन्धोत्तमा ॥ ( ६ ) ॥ "प्रसन्ना स्त्री सुरायां स्यादच्छसंतुष्टयोस्त्रिषु" इति मेदिनी ॥ ( ७ ) ॥ इरा ॥ ( ८ ) ॥ "कादम्बरस्तु दध्यग्रे मद्यभेदे नपुंसकम् । स्त्री वारुणीपरभृताभारतीसारिकासु च" इति मेदिनी॥(९)॥भागुरिमते टापि 'परिस्रुता'॥ "परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत्" इति मेदिनी ॥ ( १० ) ॥ ३९ ॥ मदिरा ॥ ( ११ ) ॥ "मद्याश्रमध्ययोः कश्यम्" इति रन्तिदेवः ॥ "कश्यस्त्रिषु कशार्हे स्यात्क्लीबं मद्याश्रमध्ययोः" इति विश्वः ॥ ( १२ ) ॥ मद्यम् ॥ ( १३ ) ॥ त्रयोदश मद्यसामान्यस्य ॥ अवेति ॥ अवदंशः ॥ ( १ ) ॥ एकं पानरुचिजनकभक्षणस्य ॥ शिवति ॥ "शुण्डा पानगृहे मता ॥ अभ्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च" इति मेदिनी ॥ "शुण्डाऽपि जलहस्तिन्यां मदिराकरिहस्तयोः । नलिन्यां वारयोषायां शुण्डस्तु मदनिर्झरे" इति विश्वः ॥ ( १ ) ॥ "पानं पीतिभाजनरक्षणे" इति मेदिनी ॥ ( २ ) ॥ मदस्थानम् ॥ ( ३ ) ॥ त्रीणि पानगृहस्य ॥ मेति ॥ मधुवारः ॥ ( १ ) ॥ मधुक्रमः ॥ ( २ ) ॥ द्वे मधुपानावसरस्य ॥ ४० ॥ मेति ॥ मध्वासवः ॥ ( १ ) ॥ माधवकः ॥ ( २ ) ॥ "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ माद्वीकम् ॥ केचित्तु—"माध्वीकम्--" इति पठन्ति॥ तत्र पृषोदरादित्वम् ॥ ( ४ ) ॥ अद्वयोः क्लीबमित्यर्थः ॥ चत्वारि मधुकपुष्पकृतमद्यस्य ॥ स्वामी तु—द्वौ द्वौ पर्यायौ—इत्याह ॥ मायिति ॥ मिरायां देशविशेषे ओषधिविशेषे वा भवं मैरेयम् ॥ ( १ ) ॥ आसवः ॥ ( २ ) ॥ "पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः" इति त्रिकाण्डशेषः ॥ ( ३ ) ॥ यद्यपि "शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्" इति माधवः तथापि भेदमनादृत्योक्तम् ॥ त्रीणि आसवस्य ॥ मेदेति ॥ मेदकः ॥ ( १ ) ॥ "जगलो मदनद्रुमे । मेदके पिष्टमद्ये च"

संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः । कारोत्तरः सुरामण्ड आपानं पानगोष्ठिका ॥४२॥
चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् । धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥ ४३॥
स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः । द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥४४ ॥
पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते।परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम्॥४५॥
अष्टापदं शारिफलं प्राणिद्यूते समाह्वयः । उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः॥४६॥
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ।

इति शूद्रवर्गः ॥ १० ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने । भूम्यादिकाण्डो द्वितीयः साङ्ग एव समर्थितः ॥

इति मेदिनी ॥ ( २ ) ॥ द्वे सुराकल्कस्य ॥ ४१ ॥ समिति ॥ "संधानं स्यादभिषवे तथा संघट्टनेऽपि च" इति विश्वः ॥ ( १ ) ॥ "भवेदभिषवः स्नाने मद्यसंधानयज्ञयोः" इति विश्वः ॥ ( २ ) ॥ द्वे आम्रादिसंधानस्य ॥ कीति ॥ "किण्वं पापे सुराबीजे" इति विश्वः ॥ ( १ ) ॥ नग्नहूः ॥ ( २ ) ॥ द्वे नानाद्रव्यकृतसुराबीजस्य ॥—मत्तनग्नकृताह्वानस्य—इत्यन्ये ॥ केति ॥ कारोत्तरः ॥ "कारोत्तमः"—इति स्वामी ॥ ( १ ) ॥ सुरामण्डः ॥ ( २ ) ॥ द्वे सुरामण्डस्य ॥ आपेति ॥ आ संभूय पिबन्त्यत्र आपानम् ॥ ( १ ) ॥ पानगोष्ठिका ॥ ( २ ) ॥ द्वे पानगोष्ठ्याः ॥ ४२ ॥ चेति ॥ "चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः" इति मेदिनी ॥ ( १ ) ॥ पानपात्रम् ॥ ( २ ) ॥ द्वे सुरापात्रस्य ॥ सेति ॥ "सरकः शीधुपानेक्षुशीधुनोर्मद्यभाजने" इत्यजयः ॥ अपिशब्दात् सरकोऽप्यस्त्री ॥ "सरकं वा नाऽनुतर्षो ना" इति रत्नकोषः ॥ ( १ )॥ अनुतर्षणम् ॥ घञि "अनुतर्षः" अपि॥ "चषकश्चानुतर्षश्च सरकश्च" इति भागुरिः ॥ ( २ ) ॥ द्वे मद्यपानस्य ॥—चत्वारि मद्यपानपात्रस्य—इति मुकुटः ॥ धूर्वतीति ॥ "धूर्तं तु खण्ड-लवणे धत्तूरे ना विटे त्रिषु" इति मेदिनी ॥ "धार्तः" इति च॥(१)॥ अक्षदेवी ॥ (२)॥ "कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये" इति विश्वः ॥ ( ३ ) ॥ अक्षधूर्तः ॥ ( ४ ) ॥ द्यूतकृत्॥ ( ५ ) ॥ पञ्च द्यूतकर्मणि निपुणस्य॥४३॥स्युरिति ॥ लग्नकः ॥ ( १ ) ॥ प्रति प्रतिनिधिर्भवति प्रतिभूः ॥(२) ॥ द्वे "जामिन" इति ख्यातस्य॥सेति ॥ सभा द्यूतमाश्रयत्वेनास्यास्ति सभिकः । "सभा द्यूतं सभागृहम्" इति रुद्रः॥(१)॥ द्यूतं कारयति द्यूतकारकः ॥ ( २ ) ॥ द्वे द्यूतं कारयितुः ॥ द्यूत इति ॥ द्यूतः ॥ ( १) ॥ अक्षाः पाशकाः सन्त्यस्याम् अक्षवती ॥ ( २ ) ॥ "कैतवं तु छले द्यूते कैतवः कितवे रिपौ" इति मेदिनी ॥ ( ३ ) ॥ पणः ॥ ( ४ ) ॥ चत्वारि द्यूतक्रीडनस्य ॥ ४४ ॥ पेति ॥ पणः ॥ ( १ )॥ ग्लहः ॥ ( २ ) ॥ द्वे द्यूते लाप्यमानस्य ॥ अक्षा इति ॥ "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये" इति मेदिनी ॥ ( १ ) ॥ "देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु देवनः प्रोक्तः" इति विश्वः ॥ ( २ ) ॥ पाशकः ॥ ( ३ ) ॥ त्रीणि पाशकस्य ॥ पेति ॥ परितो वामदक्षिणतो नयनं परिणायः ॥ (१ ) ॥एकं शारीणामितस्ततो नयनस्य॥ ॥ ४५ ॥ अष्टेति ॥ पङ्क्तौ पङ्क्तौ अष्टौ पदान्यस्य अष्टापदम् ॥ "अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च ॥ अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान्" इति मेदिनी ॥ ( १ ) ॥ शारिफलम् ॥ (२) ॥ शारीणां खेलनाधारपट्टस्य द्वे ॥ प्रेति ॥ प्राणिभिः कृतं द्यूतं प्राणिद्यूतम्॥ ( १ ) ॥ सम्यगाहूयन्तेऽत्र समाह्वयः ॥ ( २ ) ॥ द्वे प्राणिद्यूतस्य ॥ सर्वलिङ्गासंग्रहादसंपूर्णतां परिहरति—उक्ता इति ॥ अत्र वर्गे ये यौगिकाः शब्दा मालाकार–मार्दङ्गिक–वैणविकादयः पुंसि प्रचुरप्रयोगदर्शनादेकस्मिंल्लिङ्गे पुंसि ये यौगिका उक्ताः ॥४६॥ ते ताद्धर्म्यात्तद्योगवशात्तेषामन्यतोऽन्यत्र जातौ वृत्तौ सत्यामन्यत्र स्त्रियां क्लीबे चोहनीयाः ॥ यथा 'मालाकारी स्त्री, मालाकारं कुलम्' इत्यादि ॥ येऽप्ययौगिकाः करण–मालिक–कुम्भकारादयः, ते जाति-वचनत्वाच्छूद्रादिवत् "जातेः–" ( ४।१।६३ ) इत्यादिना ङीषि लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि बोद्धव्याः ॥

इति शूद्रवर्गविवरणम् ॥

इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजपण्डितविष्णुदत्तविरचितायाममरव्याख्यायां नामचन्द्रिकाख्यायां द्वितीयः काण्डः संपूर्णतामगात् ॥ २ ॥

॥ श्रीः ॥

# श्रीमदमरसिंहविरचितः
# अमरकोषः ।

## नामचन्द्रिकाख्यया व्याख्यया समेतः ।



### तृतीयं काण्डम् ।

**विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि । लिङ्गादिसंग्रहैर्वर्गाः सामान्ये स्वर्गसंश्रयाः ॥ १ ॥**
**स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः । गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥२॥**
**सुकृती पुण्यवान्धन्यो महेच्छस्तु महाशयः । हृदयालुः सुहृदयो महोत्साहो महोद्यमः ॥ ३ ॥**
**प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः। वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥**
**पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः। दक्षिणेयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥५॥**
**स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे । जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित्[१]॥६॥**

विशेष्येति ॥ इह सामान्यकाण्डे एतैः कृत्वोपलक्षिता वर्गा उच्यन्ते ॥ कीदृशास्ते वर्गाः, स्वर्गादयः संश्रय आश्रयो येषां ते ॥ सुकृत्यादयो देवासुरमनुष्येष्वेव विशेषणत्वेन, कर्मपरायणादयो व्यापारतया, संबध्यन्ते ॥ लिङ्गान्यादौ येषां तानि ॥ तेषां संग्रहाः ॥ आदिना नामानि लङ्का–शेफालिका–इत्यादीनि ॥ १ ॥ अस्मिन्वर्गे लिङ्गज्ञानोपायमाह—**स्त्रीति** ॥ स्त्रीदारकलत्रादिभिः पदैर्यल्लिङ्गसंख्याविशिष्टैः स्त्रीदारकलत्रादिरूपं यद्विशेष्यं प्रक्रान्तम्, गुणादिशब्दास्तल्लिङ्गसंख्याविशिष्टास्तस्य विशेषणानि स्युः ॥ तथा हि 'सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कलत्रम्' । 'दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम्' ॥ 'पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रम्' ॥ २ ॥ **स्विति** ॥ सुकृती ॥ ( १ ) ॥ पुण्यवान् ॥ ( २ ) ॥ "**धन्या** धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु" इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ **त्रीणि सभाग्यस्य** ॥ **मेति** ॥ महेच्छः ॥ ( १ ) ॥ "**आशयः** स्यादभिप्राये मानसाधारयोरपि" इति मेदिनी ॥ महानाशयोऽस्य महाशयः ॥ ( २ ) ॥ **द्वे महाभिलाषस्य** ॥ **ह्निति** ॥ हृदयालुः ॥ ( १ ) ॥ सुहृदयः ॥ "**सहृदयः**" इति वा पाठः ॥ ( २ ) ॥ प्राणिमात्रस्य तथात्वादत्र प्रशस्तहृदयपरत्वं हृदयशब्दस्य ॥ **द्वे शुद्धमनसः** ॥ **मेति** ॥ महोत्साहः ॥ ( १ ) महोद्यमः ॥ ( २ ) ॥ **द्वे दुःसाध्यकृत्येऽपि साधनपरस्य** ॥ ३ ॥ **प्रेति** ॥ प्रवीणः ॥ ( १ ) ॥ निपुणः ॥ ( २ ) ॥ अभिज्ञः ॥ ( ३ ) ॥ विज्ञः ॥ ( ४ ) ॥ निष्णातः ॥ ( ५ ) ॥ शिक्षितः ॥ ( ६ ) ॥ वैज्ञानिकः ॥ "विज्ञानिकः" इत्यपि ॥ ( ७ ) ॥ कृतमुखः ॥ (८) ॥ कृती ॥ ( ९ ) ॥ "**कुशलः** शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्" इति विश्वमेदिन्यौ ॥ ( १० ) ॥ **दश निपुणस्य** ॥ ४ ॥ **प्विति** ॥ "**पूज्यः** श्वशुरवन्द्ययोः" इति हैमः ॥(१)॥ "**प्रतीक्ष्यः** प्रतिपाल्ये स्यात्पूज्ये च" इति हैमः ॥ ( २ ) ॥ **द्वे पूज्यस्य** ॥ **सांशेति** ॥ सांशयिकः ॥ ( १ ) ॥ संशयमापन्नं मानसं यस्य यस्मिन् वा संशयापन्नमानसः ॥ ( २ ) ॥ **द्वे संदेहविषयस्य** ॥ **संदेहाश्रयस्य वा** ॥ **देति** ॥ दक्षिणेयः ॥ ( १ ) ॥ दक्षिणार्हः ॥ ( २ ) ॥ दक्षिण्यः ॥ ( ३ ) ॥ **त्रीणि दक्षिणायोग्यस्य** ॥ ५ ॥ **स्युरिति** ॥ 'मां याचस्व' इति वदति ॥ "**वदान्यो** दान-

---

१––"वाणिरम्बुदे । व्यूतौ मूल्ये सरस्वत्याम्" इति हैमादिकोषेषु "यद्वाणिसद्वाणिनी" इत्यादिमहाकविप्रयोगेषु च ह्रस्वान्तस्यापि वाणिशब्दस्य दर्शनेन तेन समासे सिद्धोऽयं शब्दः ॥

परीक्षकः कारणिको वरदस्तु समर्धकः । हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥
अन्तर्मना दुर्मनाः स्याद्विमना उत्क उन्मनाः । दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥८॥
तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः । प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥
गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ । इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता १०॥
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः । अधिकर्धिः समृद्धः स्यात्कुटुम्बव्यापृतस्तु यः ११
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् । वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥१२॥
निर्वार्यः कार्यकर्ता यः संपतन् सत्त्वसंपदा । अवाचि मूकोऽथ मनोजवः स पितृसंनिभः १३

शौण्डे स्याचारुवादिनि वाच्यवत्'' इति मेदिनी ॥ ( १ ) ॥ स्थूलं कूटं लक्ष्यमस्य स्थूललक्ष्यः ॥ 'स्थूललक्षः' इति च ॥ ( २ ) ॥ दानशौण्डः ॥ ''शौण्डो मत्तेऽपि विख्याते'' इति विश्वः ॥ ( ३ ) ॥ बहुप्रदः ॥ ( ४ ) ॥ चत्वार्यतिदातुः ॥ जैवेति ॥ '' जैवातृकः पुमान्सोमे कृत्रकायुष्मतोस्त्रिषु'' इति विश्वमेदिन्यौ ॥ ( १ ) ॥ आयुष्मान् ॥ ( २ ) ॥ द्वे सायुषः ॥ अन्तेति ॥ अन्तर्वाणिः ॥ ( १ ) शास्त्रवित् ॥ ( २ ) ॥ द्वे शास्त्रविदः ॥ ६ ॥ पेति ॥ परीक्षकः ॥ ( १ ) ॥ ''करणं हेतुकर्मणोः'' इति मेदिनी ॥ करणैश्चरति कारणिकः ॥ ( २ ) ॥ द्वे परीक्षाकारकस्य ॥ वेति ॥ ''वरदः पुनः । प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका'' इति हैमः ॥ ( १ ) ॥ समर्धकः ॥ ( २ ) ॥ द्वे वरदातुः ॥ हेति ॥ हर्षमाणः ॥ ( १ ) ॥ विकुर्वाणः ॥ ( २ ) ॥ प्रमनाः ॥ ( ३ ) ॥ हृष्टमानसः ॥ ( ४ ) ॥ चत्वारि हर्षितमनसः ॥ ७ ॥ अन्तरिति ॥ अन्तर्मनाः ॥ ( १ ) ॥ दुर्मनाः ॥ ( २ ) ॥ विगतं विविधं वा मनोऽस्य विमनाः ॥ ( ३ ) ॥ त्रीणि दुःखितमनसः ॥ उत्क इति ॥ उत्कः ॥ ( १ ) ॥ उन्मनाः ॥ ( २ ) ॥ द्वे उत्कण्ठितमनसः ॥ देति ॥ ''दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्'' इति मेदिनी ॥ ( १ ) ॥ ''सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु'' इति मेदिनी ॥ ( २ ) ॥ ''उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्'' इति मेदिनी॥(३) ॥ त्रीणि ऋज्वाशयस्य॥ स्विति॥ शोभना कला यस्य, सुकलः॥(१)॥ एकं दातृभोक्तुः दत्त्वा भुञ्जानस्येत्यर्थः ॥८॥ तेति ॥ तत् परमुत्तमं यस्य तत्परः॥(१)॥ प्रसितः॥ ( २ )॥ आसक्तः ॥ ( ३ ) ॥ त्रीणि तात्पर्ययुक्तस्य ॥ इष्टेति ॥ इष्टश्चासावर्थश्च तत्र उद्युक्तः इष्टार्थोद्युक्तः ॥ ( १ ) ॥ उत्सुकः ॥ ( २ ) ॥ द्वे इष्टार्थोद्यमवतः ॥—त्र्याश्वापि तत्परपर्यायाः—इत्येके ॥ प्रेति ॥ प्रतीतः ॥ ( १ ) ॥ प्रथितः ॥ ( २ ) ॥ ख्यातः ॥ ( ३ ) ॥ वित्तः ॥ ( ४ ) ॥ विज्ञातः ॥ ( ५ ) ॥ विश्रुतः ॥ ( ६ ) ॥ षट् प्रसिद्धस्य ॥ ९ ॥ ग्विति ॥ कृतमुच्चारितं लक्षणं नामास्य कृतलक्षणः ॥ ''लक्षणं नाम्नि चिह्ने च'' इति विश्वः ॥ ( १ ) ॥ ''आहतं गुणितेऽपि स्यात्'' इति विश्वः ॥ आहतमभ्यस्तं लक्षणं यस्य आहतलक्षणः ॥ ( २ ) ॥ द्वे गुणैः प्रसिद्धस्य ॥ इभ्य इति ॥ ''इभ्यो धनवतीभ्या तु करेण्वां सल्लकीतरौ'' इति हेमचन्द्रः ॥ ( १ ) ॥ आढ्यः ॥ ( २ ) ॥ धनी ॥ ( ३ ) ॥ त्रीणि बहुधनस्य ॥ स्वेति ॥ ''स्वामी प्रभुविशाखयोः'' इति विश्वः ॥ ( १ ) ॥ ''ईश्वरो मन्मथे शंभौ नाऽऽढ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्'' इति विश्वमेदिन्यौ ॥ ( २ ) ॥ ''पतिर्धवे ना त्रिष्वीशे'' इति विश्वः ॥ ( ३ ) ॥ ईशिता ॥ ( ४ ) ॥ १० ॥ अधिभूः ॥ ( ५ ) ॥ ''नायको नेतरि श्रेष्ठे हारमध्यमणावपि'' इति विश्वहेमचन्द्रौ ॥ ( ६ ) ॥ नेता ॥ ( ७ ) ॥ प्रभुः ॥ ( ८ ) ॥ परिवृढः ॥ ( ९ ) ॥ अधिपः ॥ ( १० ) ॥ दश स्वामिनः ॥ अधीति ॥ अधिका ऋद्धिरस्य अधिकर्धिः ॥ ( १ ) ॥ समृद्धः ॥ ( २ ) ॥ द्वे अतिसंपन्नस्य ॥ क्विति ॥ कुटुम्बव्यापृतः ॥ ''व्यापृतस्तरुणो युवा'' इति बोपालितः ॥ ( १ ) ॥११॥ अभ्यागारिकः ॥ ( २ ) ॥ '' उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले'' इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ त्रीणि कुटुम्बव्यापृतस्य ॥ वरेति ॥ अङ्गानि च रूपं च, अङ्गरूपाणि वराणि च तान्यङ्गरूपाणि च ॥ तैरुपेतः ॥ सिंहं श्रेष्ठं संहननमस्य सिंहसंहननः ॥ ( १ ) ॥ एकं श्रेष्ठाङ्गरूपसनाथस्य ॥ १२ ॥ नीति ॥ निर्वार्यः ॥ ''निर्धार्यः'' इति च ॥ ( १ ) ॥ ''व्यसनेऽभ्युदये वापि ह्यविकारं सदा मनः । तत्तु सत्त्व-

सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः।लक्ष्मीवांल्लक्ष्मणःश्रीलःश्रीमान् स्निग्धस्तु वत्सलः
स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः। स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः १५
परतन्त्रः पराधीनः परवान्नाथवानपि । अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ १६॥
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः। जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः॥
कर्मक्षमोऽलंकर्मीणः क्रियावान् कर्मसूद्यतः । स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः १८॥
भरण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः । अपस्नातो मृतस्नात आमिषाशी तु शौष्कलः१९॥

मिति प्रोक्तम्" ॥ तत्संपदा संपतन् उद्यमं कुर्वन् ॥ "संयुतः" इति वा पाठः ॥ एकं निःशङ्कं कार्यकर्तुः ॥ अवेति ॥ अवाक् ॥ ( १ ) ॥ 'मूँ' इति कायति ॥"मूको दैत्यावाग्दीनेषु" इति हैमः ॥ ( २ ) ॥ द्वे मूकस्य ॥ अथेति ॥ "मनोजवपितृसधर्माणः" इति नाममाला ॥ स्वामी तु—"मनोजवसः" चमसादिवत्—इत्याह ॥ ( १ ) ॥ पितृसन्निभः ॥ ( २ ) ॥ द्वे पितृसमस्य ॥ १३ ॥ सेति ॥ कूकुदः ॥ ( १ ) ॥ एकं जामात्रे सादरावतंसितकन्याप्रदातुः ॥ लेति ॥ लक्ष्मीवान् ॥ ( १ ) ॥ "लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्" इति मेदिनी ॥ ( २ ) ॥ श्रीलः॥"श्लीलः" इत्यपि ॥ ( ३ ) ॥ श्रीमान् ॥ ( ४ ) ॥ चत्वारि श्रीमतः ॥ स्नीति ॥ स्निग्धः ॥ ( १ ) ॥ "वत्सः पुत्रादिवर्षयोः" इति मेदिनी ॥ वत्से पुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति वत्सलः ॥ ( २ ) ॥ द्वे स्नेहवतः ॥ १४ ॥ स्येति॥दयालुः ॥ ( १ ) ॥ कारुणिकः ॥ ( २ ) ॥ कृपालुः ॥ ( ३ ) ॥ सूरतः ॥ ( ४ ) ॥ चत्वारि दयालोः ॥ स्वेति ॥ स्वतन्त्रः ॥ ( १ ) ॥ "अपावृतस्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत्" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ स्वैरी ॥ ( ३ ) ॥ स्वच्छन्दः ॥ ( ४ ) ॥ निरवग्रहः ॥ ( ५ ) ॥ पञ्च स्वतन्त्रस्य ॥ १५ ॥ पेति ॥ परतन्त्रः ॥ ( १ ) ॥ पराधीनः ॥ ( २ ) ॥ परवान् ॥ ( ३ ) ॥ नाथवान् ॥ ( ४ ) ॥ चत्वारि परतन्त्रस्य ॥ अधीति ॥ अधीनः ॥ ( १ ) ॥ निघ्नः ॥ ( २ ) ॥ आयत्तः ॥ ( ३ ) ॥ अस्वच्छन्दः ॥ ( ४ ) ॥ "गृह्यको निघ्नके छेके" इति विश्वमेदिन्यौ ॥ ( ५ ) ॥ पञ्चाधीनसामान्यस्य ॥ एके तु नवभिः पर्यायमाहुः ॥ १६ ॥ खेति "खलं भूस्थानकल्केषु" इति विश्वः ॥ खलं पुनाति खलपूः ॥ ( १ ) ॥ बहुकरः ॥ ( २ ) ॥ द्वे भुवं मार्जयतः ॥ दीति ॥ "सूत्रं तन्तुव्यवस्थयोः" इति विश्वः ॥ दीर्घं सूत्रं व्यवस्था यस्य दर्घिसूत्रः ॥ ( १ ) ॥ चिरक्रियः ॥ ( २ )॥ द्वे अतिविलम्बेन क्रियासंपादकस्य ॥ जेति ॥ "जाल्मस्तु पामरे । असमीक्ष्यकारिणि च" इति हैमः ॥ ( १ ) ॥ असमीक्ष्याविचार्य कर्तुं शीलमस्य असमीक्ष्यकारी ॥ ( २ ) ॥ द्वे अविचार्यकारिणः ॥ किति ॥ "कुण्ठोऽकर्मण्यमूर्खयोः" इति मेदिनी ॥ ( १ ) ॥ एकं मन्दक्रियस्य ॥ १७ ॥ केति ॥ कर्मक्षमः ॥ ( १ ) ॥ कर्मणे क्रियायै अलं समर्थः अलंकर्मीणः ॥ ( २ ) ॥ द्वे क्रियाकरणे समर्थस्य ॥ क्रीति ॥ क्रियावान् ॥ ( १ ) ॥ एकं कर्मसूद्युक्तस्य ॥ स इति ॥ कर्म शीलमस्य कार्मः ॥ स्त्रियां कार्मी ॥ ( १ ) ॥ कर्मशीलः ॥ ( २ ) ॥ द्वे कर्मसु फलमनपेक्ष्य प्रवृत्तस्य ॥ केति ॥ कर्मशूरः ॥ ( १ ) ॥ कर्मठः ॥ ( २ ) ॥ द्वे प्रयत्नेन प्रारब्धकर्मपरिसमापकस्य॥१८॥ भेति ॥ भरण्यं वेतनं भुंक्ते भरण्यभुक् ॥ क्वचित् "कर्मण्यभुक्" इति पाठः॥ ( १ ) ॥कर्मकरः॥( २ ) ॥ द्वे मूल्येन कर्म कुर्वतः ॥ अयं शूद्रवर्गे उक्तोऽपि 'भरण्यभुक्' इति पर्यायान्तरकथनार्थमनूदितः ॥ केति ॥ कर्मकारः ॥ ( १ ) ॥ तत्क्रियः कर्मकारक्रियः, 'अभृतक्रियः' इत्यर्थः ॥ यो वेतनं विना कर्म करोति, तस्यैकम् ॥ अपेति ॥ अपस्नातः ॥ ( १ ) ॥ मृते स्नातः मृतस्नातः ॥ ( २ ) ॥ द्वे मृतमुद्दिश्य

---

१—"मनोजवाः" सान्तोऽपि। "मनोजवसा" इति पीयूषव्याख्या ॥

**बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः । परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः २०॥**
**आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते । उभौ त्वात्मंभरिः कुक्षिम्भरिः स्वोदरपूरके २१॥**
**सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः । लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ२२**
**उन्मदस्तून्मदिष्णुः स्यादविनीतः समुद्धतः । मत्ते शौण्डोत्कटक्षीबाः कामुके कमिताऽनुकः२३**
**कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः । विधेयो विनयग्राही वचनेस्थित आश्रवः २४**
**वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः । धृष्टे धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते २५**

स्नातस्य ॥ आमीति ॥ आमिषाशी ॥ ( १ ) "शुष्कलो शुष्कमांसेऽपि मांसपात्रेऽपि सा मता" ॥ तामत्ति शौष्कलः ॥ स्वामी तु **"शाष्कलः"** इति पठति ॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावोऽपि ॥ **"शुष्कलः** शुष्कमांसस्य फणिके पिशितांशिनि" इति हैमः ॥ ( २ ) ॥ **द्वे मांसभक्षकस्य ॥ १९ ॥ बिवति** ॥ बुभुक्षितः ॥ (१) ॥ क्षुधितः ॥ ( २ ) ॥ जिघत्सुः ॥ ( ३ ) ॥ अशनस्येच्छा अशनाया जाताऽस्य अशनायितः ॥ ( ४ ) ॥ **चत्वारि क्षुधितस्य ॥ पेति**॥ परान्नं नित्यमस्य परान्नः॥(१)॥"**पिण्डमाजीवने**"इति धरणिः॥परस्य पिण्डम् ॥ तदत्ति परपिण्डादः ॥ ( २ ) ॥ **द्वे परान्नजीवनस्य ॥ भेति** ॥ भक्षकः ॥ ( १ ) ॥ घस्मरः ॥ ( २ ) ॥ अद्मरः ॥(३)॥**त्रीणि भक्षणपरस्य ॥२०॥ आद्यून इति** ॥ आद्यूनः ॥(१)॥उदरे प्रसितः औदरिकः॥(२)॥ **द्वे विजिगीषाविवर्जितस्य ॥ विति** ॥ आत्मानं कुक्षिं च बिभर्ति ॥ आत्मंभरिः ॥ ( १ ) ॥ कुक्षिंभरिः ॥ ( २ ) ॥ **द्वे स्वोदरपूरकस्य ॥ २१ ॥ सेति** ॥ सर्वेषामन्नानि सर्वान्नानि भक्षयति सर्वान्नीनः ॥ ( १ ) ॥ सर्वान्नभोजी ॥ ( २ ) ॥ **द्वे सर्ववर्णान्नभक्षकस्य ॥ ग्रिति** ॥ गृध्नुः ॥ ( १ ) ॥ गर्धनः ॥ ( २ ) ॥ "**लुब्ध** आकाङ्क्षिणि व्याधे" इति हेमचन्द्रः ॥ ( ३ ) ॥ अभिलाषुकः॥ ॥(४)॥ तृष्णक्॥(५)॥**पञ्च लुब्धस्य ॥ सेति**॥ गर्हितं लुम्पति लोलुपः ॥(१) ॥ लोलुभः ॥(२)॥ **द्वे अतिलुब्धस्य ॥ २२ ॥ उन्मेति** ॥ उद्गतो मदो हर्षोऽस्य उन्मदः॥क्वचित्"**सोन्मादः** " इति पाठः॥"**सून्मादः**" इत्यपि॥(१)॥ उन्मदनशीलः उन्मदिष्णुः ॥(२)॥ **द्वे उन्मादशीलस्य॥ अवीति**॥अविनीतः ॥(१)॥"**समुद्धतं** समुद्गीर्णेऽप्यविनीते च वाच्यवत्" इति मेदिनी ॥ ( २ ) ॥ **द्वे उद्धतस्य ॥ मेति** ॥ मत्तः ॥ ( १ ) ॥ शुण्डायां पानागारे भवः ॥ " **शौण्डो** मत्ते च विख्याते पिप्पल्यां च भवेत् स्त्रियाम् " इति विश्वमेदिन्यौ ॥ ( २ ) ॥ उद्गतः कट आवरणमावारको वाऽस्य ॥ " **उत्कटस्तीव्रमत्तयोः** " इति हैमः ॥ ( ३ ) ॥ क्षीबः ॥ नान्तोऽप्ययम् ॥ " क्षीबाणो समबुध्यत " इति व्यासप्रयोगात् ॥ तत्र बाहुलकात् कानिन् ॥ ( ४ ) ॥ **चत्वारि मत्तस्य ॥केति**॥"**कामुकः** कमनेऽशोकपादपे चातिमुक्तके" इति मेदिनी ॥(१)॥ कमिता ॥ (२) ॥ अनुकः ॥ ( ३ ) ॥ २३ ॥ कम्रः ॥ ( ४ ) ॥ कामयिता ॥ ( ५ ) ॥ " **अभीकः** कामुके क्रूरे निर्भये त्रिषु ना कवौ " इति मेदिनी ॥ ( ६ ) ॥ "**कमनः** कामुके कामेऽभिरूपेऽशोकपादपे" इति मेदिनी ॥ (७)॥ कामनः ॥ ( ८ ) ॥अभिकः ॥ ( ९ ) ॥ **नव कामुकस्य ॥ वीति** ॥ विधेयः ॥ ( १ ) ॥ प्रवृत्तौ निवृत्तौ वा विनयं ग्रहीतुं शीलमस्य विनयग्राही ॥ ( २ ) ॥ वचनेस्थितः ॥ ( ३ ) ॥ " **आश्रवो** वचनास्थिते । प्रतिज्ञायां च क्लेशे च " इति हैमः ॥ ( ४ ) ॥ **चत्वारि प्रवृत्तिनिवृत्त्योर्विधातुं शक्यस्य ॥ २४ ॥ वेति** ॥ वश्यः ॥ ( १ ) ॥ प्रकर्षेण नेतुं शक्यः प्रणेयः ॥ ( २ ) ॥ **द्वे अधीनस्य ॥ नीति** ॥ निभृतः ॥ ( १ ) ॥ "**विनीतस्तु** निभृते निर्जितेन्द्रिये । वाणिजे साधुवाह्यश्वे विनयग्राहिते हिते " इति हैमः ॥ ( २ ) ॥ प्रश्रितः ॥ ( ३ ) ॥ **त्रीणि विनययुक्तस्य ॥ ध्रिति** ॥ धृष्टः ॥ ( १ ) ॥ धृष्णक् ॥ ' धृष्णुः ' इति च ॥ ( २ ) ॥ विरुद्धं यातं चेष्टितं यस्य वियातः ॥ ( ३ ) ॥ **त्रीणि निर्लज्जस्य ॥ प्रेति** ॥ प्रगल्भः ॥ ( १ ) ॥ " प्रज्ञा नवनवोन्मेषशालिनी **प्रतिभा** मता" इति रुद्रः॥प्रतिभयाऽन्वितः प्रतिभान्वितः ॥(२)॥ **द्वे प्रत्युत्पन्नमतेः॥२५॥**

---

१—तृष्णाशब्दात् "तत्करोति–" (वा० ३।१।२६) इति ण्यन्तात् ण्वुलि (३।१।३३) "**तृष्णकः**" अदन्तोऽपि, इति सर्वधरः—इति मुकुटः ॥

स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते । अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलुकाः २६
आशंसुराशंसितरि गृहयालुर्ग्रहीतरि । श्रद्धालुः श्रद्धया युक्ते पतयालुश्च पातुके ॥ २७ ॥
लज्जाशीलोऽपत्रपिष्णुर्वन्दारुरभिवादके । शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुश्च वर्धनः ॥२८॥
उत्पतिष्णुस्तूत्पतिताऽलंकरिष्णुस्तु मण्डनः । भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ ॥२९॥
निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु मेदुरः । ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः
विसृत्वरो विसृमरः प्रसारी च विसारिणि । सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ३१॥
क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः । जागरूको जागरिता घूर्णितः प्रचलायितः ३२॥
स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ । पराङ्मुखः पराचीनः स्यादवाङप्यधोमुखः ३३॥

स्योति ॥ अधृष्टः ॥ ( १ ) ॥ शालीनः ॥ ( २ ) ॥ द्वे सलज्जस्य ॥ वीति ॥ विलक्षः ॥ ( १ ) ॥ विस्मयान्वितः ॥ ( २ ) ॥ द्वे परकीयधर्मशीलादौ प्राप्ताश्चर्यस्य ॥ अधीति ॥ अधीरः ॥ ( १ ) ॥ कातरः ॥ ( २ ) ॥ द्वे रोगादिलक्षणेनाकुलमनसः ॥ त्रेति ॥ त्रस्नुः ॥ ( १ ) ॥ " भीरुरार्ते त्रिलिङ्गः स्याद्वरयोषिति योषिति " इति विश्वमेदिन्यौ ॥ ( २ ) ॥ भीरुकः ॥ ( ३ ) ॥ भीलुकः ॥ ( ४ ) ॥ चत्वारि भयशीलस्य ॥ २६ ॥ आशमिति ॥ आशंसुः ॥ (१) ॥ आशंसिता ॥ ( २ ) ॥ द्वे इष्टार्थप्राप्तीच्छोः ॥ ग्रिति ॥ गृहयालुः ॥ ( १ ) ॥ ग्रहीता ॥ ( २ ) ॥ द्वे ग्रहणशीलस्य ॥ श्रेति ॥ श्रद्धालुः ॥ ( १ ) ॥ एकं श्रद्धया युक्तस्य ॥ पेति ॥ पतयालुः ॥ ( १ ) ॥ पातुकः ॥ ( २ ) ॥ द्वे पतनशीलस्य ॥ ॥२७॥ लेति ॥ लज्जा शीलमस्य लज्जाशीलः ॥ ( १ ) ॥ अपत्रपिष्णुः ॥(२) ॥ द्वे लज्जाशीलस्य ॥ वेति ॥ वन्दारुः ॥ ( १ ) ॥ अभिवादकः ॥ ( २ ) ॥ द्वे वन्दनशीलस्य ॥ शेति ॥ शरारुः ॥ ( १ ) ॥ घातुकः ॥ ( २ ) ॥ " हिंस्रा काकादनीमांस्योः स्त्रियां स्याद्घातुकेऽन्यवत् " इति विश्वमेदिन्यौ ॥ ( ३ ) ॥ त्रीणि हिंसाशीलस्य ॥ स्योति ॥ वर्धिष्णुः ॥ ( १ ) ॥ वर्धनः ॥ " वर्धनं छेदने वृद्धौ वर्धनी तु गलन्तिका " इति हैमः ॥ ( २ ) ॥ द्वे वर्धनशीलस्य ॥ २८ ॥ उत्पेति ॥ उत्पतिष्णुः ॥ ( १ ) ॥ उत्पतिता ॥ ( २ ) ॥ द्वे ऊर्ध्वपतनशीलस्य ॥ अलमिति॥ अलंकरणशीलः अलंकारिष्णुः ॥ (१) ॥ मण्डनशीलः मण्डनः ॥ ( २ ) ॥ द्वे अलंकरणशीलस्य ॥ भ्वित्ति॥ भवनशीलः भूष्णुः ॥( १ ) ॥ भाविष्णुः ॥ ( २ ) ॥ भविता ॥ ( ३ ) ॥ त्रीणि भवनशीलस्य ॥ वेति ॥ वर्तनशीलः वार्तिष्णुः ॥ ( १ ) ॥ वर्तनः ॥ (२) ॥ द्वे वर्तनशीलस्य ॥ २९ ॥ नीति ॥ निराकरणशीलः निराकरिष्णुः ॥ ( १ ) ॥ क्षेपणशीलः क्षिप्नुः ॥(२)॥ द्वे निराकरणशीलस्य ॥ सेति ॥ सान्द्रो घनः स्निग्धश्चिक्कणः सान्द्रस्निग्धः ॥(१)॥मेदनशीलः मेदुरः॥(२)॥ द्वे मेदनशलिस्य ॥ ज्ञेति ॥ ज्ञाता ॥(१) ॥ विदुरः ॥(२)॥ विन्दुः ॥ ( ३ ) ॥ त्रीणि ज्ञानशीलस्य ॥ वीति ॥ "विकासः स्फुटने व्यक्तौ" इति दन्त्यान्ते धरणिः ॥ विकासी ॥(१) ॥ विकस्वरः ॥ ( २ ) ॥ द्वे विकसनशीलस्य ॥ ३० ॥ वीति ॥ विसृत्वरः ॥ ( १ ) ॥ विसृमरः ॥ ( २ ) ॥ प्रसारी ॥ ( ३ ) ॥ विसारी ॥ ( ४ ) ॥ चत्वारि विसरणशीलस्य ॥ सेति ॥ सहिष्णुः ॥ ( १ ) ॥ सहनः ॥ ( २ ) ॥ क्षन्ता ॥ ( ३ ) तितिक्षुः ॥ ( ४ ) ॥ क्षमिता ॥ ( ५ ) ॥ क्षमी ( ६ ) ॥ षट् सहनशीलस्य ॥३१ ॥ क्रुधिति ॥ क्रोधनः ॥ ( १ ) ॥ अमर्षणः ॥ ( २ ) ॥ कोपी ॥ ( ३ ) ॥ त्रीणि क्रोधनस्य ॥ चेति ॥ " चण्डस्तु यमदासेऽतिकोपने । तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति ॥ चण्डा धनहरीशङ्खपुष्प्योः" इति हेमचन्द्रः ॥ ( १ ) ॥ अत्यन्तकोपनः ॥ ( २ ) ॥ द्वे अतिक्रोधनस्य ॥ जेति ॥ जागरूकः ॥ ( १ ) ॥ जागरिता ॥(२)॥ द्वे जागरणशीलस्य ॥ घ्विति ॥ घूर्णितः ॥(१)॥ प्रचलाया जाताऽस्य इति प्रचलायितः॥ ( २ ) ॥ द्वे संजातघूर्णस्य ॥ ३२ ॥ स्वेति ॥ स्वप्नक् ॥ ( १ ) ॥ "शयालुः स्यादजगरे निद्राशीले च कुक्कुरे" इति विश्वमेदिन्यौ॥(२)॥निद्रालुः ॥ (३)॥ त्रीणि निद्राशीलस्य॥ नीति॥निद्राणः ॥ ( १ ) ॥ शयितः ॥ ( २ )॥ द्वे निद्रां प्राप्तस्य ॥ पेति ॥ पराऽञ्चत्यनभिमुखो भवति ॥ पराक् मुखमस्य पराङ्मुखः ॥ ( १ ) ॥ पराचीनः ॥ ( २ ) ॥ द्वे विमुखस्य ॥ स्येति ॥ अवाञ्चत्यधोमुखो भवति अवाङ् ॥ ( १ ) ॥ अधोमुखः ॥ ( २ ) ॥

देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति।यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति
वदो वदावदो वक्ता वागीशो वाक्पतिः समौ । वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ३५॥
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्। दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदे॥३६॥
लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः । समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः ॥३७॥
रवणः शब्दनो नान्दीवादी नान्दीकरः समौ । जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥३८॥
तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरः।निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः
आत्तगर्वोऽभिभूतः स्याद्दापितः साधितः समौ। प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः

द्वे अधोमुखस्य ॥ ३३ ॥ दयिति ॥ देवद्र्यङ् ॥ ( १ ) ॥ एकं देवपूजकस्य ॥ वीति ॥ मूर्धन्यमध्यः विष्वद्र्यङ् ॥(विश्वद्र्यङ्) ताल्व्यमध्यश्च ॥(१)॥ एकं सर्वतो गच्छतः ॥ य इति ॥ सध्र्यङ्, स्त्रियां सध्रीची॥(१)॥ एकं सहचरितस्य ॥ स इति ॥ तिर्यङ् ॥ (१) ॥ एकं वक्रं गच्छतः॥३४॥ वेति ॥ वदः ॥(१)॥ वदावदः ॥ ( २ ) ॥ "वक्ता तु पण्डितेऽपि स्याद्वाग्मिन्यप्यभिधेयवत्" इति विश्वः ॥ ( ३ ) ॥ त्रीणि वाग्मिनः ॥ वेति ॥ वागीशः ॥ ( १ ) ॥ वाक्पतिः ॥ ( २ ) ॥ द्वे पटुवचनस्य ॥ वेति ॥ वाचो युक्तिः सयुक्तिकत्वम् ॥ तत्र पटुः वाचोयुक्तिपटुः ॥ ( १ ) ॥ प्रशस्ता वागस्य ॥ "वाग्मी पटौ सुराचार्ये" इति विश्वमेदिन्यौ ॥ ( २ ) ॥ वावदूकः ॥ ( ३ ) ॥ अतिवक्ता ॥ ( ४ ) ॥ चत्वारि बहुभाषिणः ॥ ३५ ॥ स्येति ॥ जल्पाकः ॥ स्त्रियां जल्पाकी ॥ ( १ ) ॥ वाचालः ॥ ( २ ) ॥ वाचाटः ॥(३)॥ बहुगर्ह्या वागस्य बहुगर्ह्यवाक् ॥ ( ४ ) ॥ चत्वारि बहुगर्ह्यभाषिणः ॥ द्विति ॥ दुर्निन्दितं मुखमस्य ॥ "दुर्मुखः कपिभिन्नागाभिदोर्ना मुखरे त्रिषु" इति विश्वः ॥ ( १ ) ॥ निन्दितं मुखमस्य दुर्मुखः ॥ ( २ ) ॥ न बद्धं नियमितं मुखमस्य अबद्धमुखः ॥ ( ३ ) ॥ त्रीण्यप्रियवादिनः ॥ शेति ॥ शक्लः ॥ ( १ ) ॥ प्रियंवदः ॥ ( २ ) ॥ द्वे प्रियंवदस्य ॥ ३६ ॥ लविति ॥ "लोहलः शङ्खलाधार्येऽव्यक्तवाचिनि च त्रिषु" इति विश्वहेमचन्द्रौ ॥ ( १ ) ॥ न स्फुटा वागस्य अस्फुटवाक् ॥ ॥ ( २ ) ॥ द्वे अव्यक्तवाचिनः ॥ गेति ॥ गर्ह्यवादी ॥ ( १ ) ॥ कुत्सितं वदति कद्वदः ॥ ( २ ) ॥ द्वे कुत्सितवादिनः॥सेति ॥ कुत्सितो वादोऽस्य कुवादः ॥(१)॥ कुत्सितं चरति कुचरः ॥(२) ॥ द्वे कुकथनशीलस्य ॥ स्येति ॥ असौम्यो रूक्षः स्वरो यस्य असौम्यस्वरः ॥ ( १ ) ॥ अस्वरः ॥(२) ॥ द्वे काकादिवद्रूक्षस्वरस्य ॥ ३७ ॥ रेति ॥ रवणः ॥ ( १ ) ॥ शब्दनः ॥ (२) ॥ द्वे शब्दकरणशीलस्य॥ नेति ॥ नान्दीवदनशीलः नान्दीवादी ॥ ( १ ) ॥ नान्दीं करोति नान्दीकरः ॥ ( २ ) ॥ "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते" इति भरतः ॥ नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य द्वे ॥ जेति ॥ "इष्टं वाऽनिष्टं वा सुखं दुःखं वा न वेत्ति यो मोहात् । परवशगः स भवेदिह जडसंज्ञकः पुरुषः" ॥ "जडा स्त्रियाम् । शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु च त्रिषु" इति विश्वमेदिन्यौ॥(१)॥अज्ञः॥(२)॥द्वे महामूर्खस्य॥एडेति॥एडो बधिरश्चासौ मूकश्च॥"एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते" इति मेदिनी॥"अनेकमूकः"इति पाठान्तरे 'नास्त्येडमूकोऽस्मात्' इत्यर्थः॥"त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जिते" इति रभसः ॥ (१) ॥ एकं वाक्श्रुतिवर्जितस्य ॥३८॥ त्विति ॥ तूष्णीं शीलमस्य तूष्णींशीलः ॥ ( १ ) ॥ तूष्णीकः ॥ ( २ ) ॥ द्वे मौनशीलस्य ॥ नेति ॥ "नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि"इति विश्वः॥(१)॥न वासोऽस्य अवासाः॥(२)॥दिगेवाम्बरं यस्य॥"दिगम्बरः स्यात्क्षपणेऽथने तमसि शंकरे" इति मेदिनी॥(३)॥ त्रीणि नग्नस्य॥नीति॥ निष्कासितः॥(१)॥अवकृष्टः॥(२)॥ द्वे निष्कासितस्य ॥ अपेति॥"अपध्वस्तः परित्यक्ते निन्दितेऽप्यवचूर्णिते" इति मेदिनी॥(१) ॥ 'धिक्' इति कृतः धिक्कृतः॥(२)॥ द्वे तिरस्कृतस्य ॥ ३९ ॥ आत्तेति ॥ आत्तगर्वः ॥ "आत्तगन्धः" इति पाठान्तरम् ॥ "गन्धो गन्धक आमोदे संबन्धे लेशगर्वयोः" इति विश्वः ॥ "गन्धो गर्वो लवोऽपि च" इति त्रिकाण्डशेषः ॥ ( १ ) ॥ अभिभूतः ॥ ( २ ) ॥ द्वे अभिभूतस्य ॥—चत्वारः पर्यायाः—इत्येके ॥ देति ॥ दापितः ॥

निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः । मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥४१॥
अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ । आपन्न आपत्प्राप्तः स्यात्कांदिशीको भयद्रुतः ४२
आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे । व्यसनार्त्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ ४३
विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः । कश्यः कशार्हे संनद्धे त्वाततायी वधोद्यते ॥४४
द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ । विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः
शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ । दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः४६

"दायितः" इति पाठान्तरम् ॥ ( १ ) ॥ साधितः ॥ ( २ ) ॥ द्वे धनादिकं प्रदापितस्य—इति मुकुटः ॥ प्रदापितस्य धनादेर्वा ॥ प्रेति ॥ प्रत्यादिष्टः ॥ ( १ ) ॥ "निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ठ्यूते च प्रतिहते" इति हैमः ॥ ( २ ) ॥ प्रत्याख्यातः ॥ ( ३ ) ॥ निराकृतः ॥ (४) ॥ चत्वारि निराकृतस्य ॥ ४० ॥ नीति ॥ "निकृतं विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ विप्रकृतः ॥ ( २ ) ॥ द्वे निकृतस्य ॥ वीति ॥ विप्रलब्धः ॥ ( १ ) ॥ वञ्चितः ॥ ॥ ( २ ) ॥ द्वे वञ्चितस्य ॥ मेति ॥ मनो हतं यस्य मनोहतः ॥ ( १ ) ॥ "भवेत्प्रतिहतं द्विष्टे प्रतिस्खलितरुद्धयोः" इति मेदिनी ॥ ( २ ) ॥ प्रतिबद्धः ॥ ( ३ ) ॥ हतः ॥ ( ४ ) ॥ चत्वारि कृतमनोभङ्गस्य ॥ ४१ ॥ अधीति ॥ "अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु" इति विश्वहेमचन्द्रौ ॥ ॥ ( १ ) ॥ "प्रतिक्षिप्तं वारिते स्यात्प्रेषिते पञ्चकं त्रिषु" इति मेदिनी ॥ "प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते" इति विश्वः ॥ ( २ ) द्वे कृताक्षेपस्य ॥ बेति ॥ बद्धः ॥ ( १ ) ॥ कीलितः ॥ ( २ ) ॥ संयतः ॥ ( ३ ) ॥ त्रीणि बद्धस्य ॥ आपेति ॥ "आपन्नः सविपत्तौ च प्राप्तेऽपि वाच्यालिङ्गकः" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ आपत्प्राप्तः ॥ ( २ ) ॥ द्वे आपदं प्राप्तस्य ॥ केति ॥ "कां दिशं यामि" इत्याह कांदिशीकः ॥ ( १ ) ॥ भयाद् द्रुतः भयद्रुतः ॥ ( २ ) ॥ द्वे भयात्पलायमानस्य ॥ ४२ ॥ आक्षेति ॥ आक्षारो मैथुनं प्रत्याक्रोशो जातोऽस्य इति आक्षारितः ॥ ( १ ) ॥ "क्षारितः स्राविते क्षारे चाभिशस्तेऽपि च त्रिषु" इति मेदिनी ॥ ( २ ) ॥ अभिशस्तः ॥ ( ३ ) ॥ त्रीणि मैथुननिमित्तं मिथ्यादूषितस्य ॥ समिति ॥ संकसुकः ॥ ( १ ) ॥ अस्थिरः ॥(२)॥ द्वे चलस्वभावस्य ॥ व्येति ॥ व्यसनार्त्तः ॥ ( १ ) ॥ "उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः" इति विश्वः ॥ ( २ ) ॥ द्वे दैवमानुषपीडायुक्तस्य ॥ वीति ॥ " विहस्तस्तु विह्वले पण्डकेऽकरे" इति हैमः ॥ ( १ ) ॥ व्याकुलः ॥ ( २ ) ॥ द्वे शोकादिभिरितिकर्तव्यताशून्यस्य ॥ ४३ ॥ वीति ॥ विक्लवः ॥ ( १ ) ॥ विह्वलः ॥ ॥ ( २ ) ॥ द्वे स्वाङ्गान्येव धारयितुमशक्तस्य ॥ स्यादिति ॥ "विवशस्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि" इति मेदिनी ॥ ( १ ) ॥ अरिष्टेन दुष्टा अरिष्टदुष्टा धीर्यस्य अरिष्टदुष्टधीः ॥ ( २ ) ॥ द्वे आसन्नमरणलक्षणेन दूषितमतेः ॥ केति ॥ कशामर्हति ॥ "कश्यं कशार्हमद्ययोः । अश्वमध्येऽपि" इति हैमः ॥ ( १ ) ॥ कशार्हः ॥ ( २ ) ॥ द्वे ताडनार्हस्य ॥ समिति ॥ आततं यथा तथाऽयितुं शीलमस्य आततायी ॥ ( १ ) ॥ एकमाग्निदादेः ॥४४॥ द्वयिति ॥ द्वेष्यः ॥ ( १ ) ॥ अक्षिविषयं गतः अक्षिगतः ॥ (२) ॥ द्वे द्वेषार्हस्य ॥ वेति ॥ वधमर्हति स्म वध्यः ॥ ( १ ) ॥ शीर्षस्य शिरसश्छेदः ॥ तमर्हति शीर्षच्छेद्यः ॥ ( २ ) ॥ द्वे शिरश्छेदार्हस्य ॥ वीति ॥ विष्यः ॥ ( १ ) ॥ एकं विषेण वध्यस्य ॥ म्विति ॥ मुसल्यः ॥ ( १ ) ॥ एकं मुसलेन वध्यस्य ॥ ४५ ॥ शीति ॥ शिश्विदानः ॥ ( १ ) ॥ अकृष्णकर्मा ॥ ( २ ) ॥ द्वे अपापकर्मणः ॥ "कृष्णकर्मा" इति पाठान्तरम् ॥ द्वे पापकर्मणः ॥ चेति ॥ "चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे ॥ मीनेऽपि चपला तु स्यात्पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्याम्" इति हैमः॥

१—वध उपलक्षणम् । यत्स्मृतिः—"अग्निदो गरदश्चैव शस्त्रपाती धनापहः । क्षेत्रदारहरश्चैव षडेते त्वाततायिनः" —इति क्षीरस्वामी ॥ २—परिगत-प्रणिहित-पल्लवित-प्रतिहत-प्रतिक्षिप्तशब्दरूपम्—इति भाति ॥

**कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः। नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः॥४७॥**
**अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः । कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥**
**निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः । वनीयको याचनको मार्गणो याचकार्थिनौ**
**अहंयुः स्यादहंकारी शुभंयुस्तु शुभान्वितः। दिव्योपपादुका देवा नृगवाद्या जरायुजाः ५०॥**
**स्वेदजाः कृमिदंशाद्याः पक्षिसर्पाद्योऽण्डजाः । उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ५१**

॥ ( १ ) ॥ 'चि' इति अव्यक्तं कुरति ॥ "चिकुरोऽहौ गृहबभ्रौ केशे चञ्चलशैलयोः । पक्षिवृक्षाभिदोश्चापि" इति हैमः ॥ ( २ ) ॥ **द्वे दोषमनिश्चित्य वधादिकमाचरतः ॥ दविति** ॥ दोषे एकस्मिन् दृक् ज्ञानं यस्य दोषैकदृक् ॥ ( १ ) ॥ पुरोभागी ॥ ( २ ) ॥ **द्वे दोषैकग्राहकस्य ॥ नीति** ॥ "निकृतं विप्रलब्धे स्याच्छठे विप्रकृते त्रिषु" इति मेदिनी ॥(१) ॥ऋजुविरुद्धः अनृजुः ॥(२) ॥ "शठो मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च" इति हेमचन्द्रः ॥ ( ३ ) ॥ **त्रीणि वक्राशयस्य ॥ ४६ ॥ केति** ॥ कर्णे जपति कर्णेजपः ॥ ( १ ) ॥ "सूचकः श्वानि दुर्जने । कथके सीवनद्रव्ये मार्जारे वायसेऽपि च" इति हैमः ॥ ( २ ) ॥ **द्वे कर्णे परनिन्दां जपतः ॥ पीति** ॥ "पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु ॥ पृक्कायां पिशुना स्त्री स्यात्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ दुर्जनः ॥ ( २ ) ॥ "खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे" इति हैममेदिन्यौ ॥ (३) ॥ **त्रीणि परस्परभेदकस्य ॥ स्वामी तु सूचकपर्याय एवैतानाह ॥ त्रिति** ॥ नॄन् शंसति नृशंसः ॥ ( १ ) ॥ घातुकः ॥ ( २ ) ॥ "क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्" इति विश्वः ॥ ( ३ ) ॥ पापः ॥ ( ४ ) ॥ **चत्वारि परद्रोहकारिणः ॥ धिवति** ॥ "धूर्तं तु खण्डलवणे धूर्तो धत्तूर-मायिनोः" इति हेमचन्द्रः ॥ ( १ ) ॥ "वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके" इति विश्वमेदिन्यौ ॥ ॥ ( २ ) ॥ **द्वे परप्रतारकस्वभावस्य ॥ ४७ ॥ अज्ञ इति** ॥ "अज्ञस्तु जडमूर्खयोः" इति विश्वः ॥(१) ॥ "मूढस्तन्द्रितबालयोः" इति विश्वः ॥ ( २ ) ॥ जातं जन्मकालविशेषमनतिक्रम्य वर्तते यथाजातः ॥ ( ३ ) ॥ मूर्खः ॥ ( ४ ) ॥ वैधेयः ॥ ( ५ ) ॥ "बालिशस्तु शिशौ मूर्खे" इति मेदिनी॥(६) ॥ **षट् मूढस्य॥केति॥** कुत्सितोऽर्यः इति स्वामी॥ कदर्यः ॥ (१)॥ कृपणः ॥ ( २ ) ॥ "क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः ॥ क्षुद्रा व्याघ्रीनटीव्यङ्गावृहतीसरघासु च ॥ चङ्गेरिकायां हिंसायां मक्षिकामात्रवेश्ययोः" इति हेमचन्द्रः ॥ (३)॥ किंपचानः ॥ ( ४ ) ॥ मितंपचः ॥ ( ५ ) ॥ यद्वा "किंपचः" "अनमितंपचः" इति छेदः ॥ न मितंपचोऽमितंपचः तद्भिन्नोऽनमितंपचः ॥ **पञ्च कृपणस्य ॥ ४८ ॥ नीति** ॥ निर्गतं स्वमस्य निःस्वः ॥(१) ॥ "दुर्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च" इति मेदिनी॥(२)॥दीनः॥"दीना स्त्री मूषिकस्त्रियाम् । वाच्यवद् दुर्गते भीते" इति मेदिनी ॥ ( ३ ) ॥ दरिद्रः ॥ ( ४ ) ॥ दुर्गतः ॥ ( ५ ) ॥ **पञ्च दीनस्य ॥ वेति** ॥ वनीयकः ॥"वनीपकः" इति च ॥ (१) ॥ याचनकः ॥ ( २ ) ॥ मार्गणः ॥(३)॥ याचकः ॥ ( ४ ) ॥ अर्थी॥ (५)॥ **पञ्च याचकस्य ॥४९ ॥ अहेति** ॥ अहंकारोऽस्यास्ति अहंयुः॥(१)॥ अहंकारी ॥ ( २ ) ॥ **द्वे साहंकारस्य ॥ शिवति** ॥ शुभंयुः ॥(१) ॥ शुभान्वितः॥(२) ॥**द्वे शुभेनान्वितस्य॥ दीति** ॥ दिवि भवाः ॥ उपपद्यन्ते उपपादुकाः ते च ते च दिव्योपपादुकाः ॥ ( १ ) ॥ नारकव्यावृत्तये दिव्यपदम् ॥ मातापित्रादिदृष्टकारणनिरपेक्षा अदृष्टसहकृतेभ्योऽणुभ्यो जाता ये देवाः, ते दिव्योपपादुका उच्यन्ते॥ **एकं देवविशेषस्य ॥ त्रिति** ॥ ना च गौश्चाद्यौ येषाम् ॥ आद्यशब्देन खराश्वादीनां ग्रहणम् ॥ जरायोर्गर्भाशयाज्जाता जरायुजाः ॥ ( १ ) ॥ **एकं नृगवादीनाम् ॥ ५० ॥ स्वेदेति** ॥ स्वेदजनकत्वादूष्मा स्वेदः ॥ स्वेदाज्जाताः स्वेदजाः ॥ ( १ ) ॥ कृमिश्च दंशश्चाद्यौ येषाम् ॥ आद्यशब्देन मशकमत्कुणादिग्रहणम् ॥ **क्रिमिदंशादीनमेकम् ॥ पेति** ॥ पक्षी च सर्पश्चादी येषाम्॥ आदिशब्देन नक्रमत्स्यपिपीलिकादिग्रहः॥अण्डजाः॥ ( १ ) ॥ **एकं पक्षिसर्पादीनाम्** ॥ इति प्राणिवर्गः ॥ **उद्भीति** ॥ तरुश्च गुल्मश्चाद्यौ येषाम् ॥ आद्यशब्देन तृणौषधिलतादिग्रहः ॥ भुवमुद्भिन्दन्ति उद्भिदः ॥ ( १ ) ॥ उच्यन्ते इति शेषः ॥ **एकं तरुगुल्मादीनाम् ॥** उद्भित्पर्यायानाह–उद्भीति ॥ उद्भित् ॥ ( १ ) ॥ उद्भिज्जम् ॥ ( २ ) ॥ उद्भिदम् ॥ ( ३ ) ॥

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ५२
तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् । अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्५३॥
निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥ ५४ ॥
मलीमसं तु मलिनं कच्चरं मलदूषितम् । पूतं पवित्रं मेध्यं च वीध्रं तु विमलात्मकम् ॥५५॥
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् । असारं फल्गु शून्यं तु वाशिकं तुच्छरिक्तके॥
क्लीब प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः । मुख्यवर्यवरेण्याश्च प्रवर्हानवरार्ध्यवत् ॥ ५७ ॥

त्रीण्युद्भिदः॥५१॥ स्विति ॥ सुन्दरम् ॥(१)॥ रुचिरम् ॥(२)॥ "चारुर्बृहस्पतौ पुंसि शोभने त्वाभिधेयवत्" इति विश्वः ॥ (३) ॥ सुषमम् ॥ (४) ॥ "साधुर्जैने मुनौ वार्धुषिके सज्जनरम्ययोः" इति हेमचन्द्रः ॥ (५) ॥ "शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गकः" इति मेदिनी ॥ (६) ॥ "कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायात्तु शिलासु च" इति विश्वमेदिन्यौ ॥ (७) ॥ मनोरमम् ॥ "मनोहरम्" इति च ॥ (८) ॥ रुच्यम् ॥ (९) ॥ मनोज्ञम् ॥ (१०) ॥ मञ्जु (११)॥ मञ्जु मञ्जुत्वं लाति ॥ "मञ्जुलं च जलाच्छले । रम्ये कुञ्जे मञ्जुलस्तु दात्यूहे" इति हैमः ॥ (१२) ॥ द्वादश शोभनस्य ॥ ५२ ॥ तेति ॥ न सिच्यते मनोऽत्र असेचनकम् ॥ "आसेचनकम्" इति दीर्घादिपाठे आङ् बोध्यः ॥ (१) ॥ एकं यस्य दर्शनात् तृप्तेरन्तो न भवति तस्य ॥ अभीति ॥ अभित इष्यते स्म अभीष्टम् ॥ (१) ॥ अभीप्सितम् ॥ (२) ॥ "हृदस्य प्रियम् ॥ हृद्यं धवलजीरे च हृत्प्रिये हृद्भवेऽपि च । वशकृद्वेदमन्त्रे च हृद्या वृद्ध्याख्यभेषजे" इति विश्वः ॥ (३) ॥ दयितम् ॥ (४) ॥ "वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरंगमे" इति विश्वः ॥ (५) ॥ "प्रियो वृद्ध्यौषधे हृद्ये धवे" इति हैमः ॥ (६) ॥ षट् अभीप्सितस्य ॥ ५३ ॥ नीति ॥ निकृष्टः ॥ (१) ॥ प्रतिकृष्टः ॥ (२) ॥ "अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी ॥ (३) ॥ "रेफो रवर्णे पुंसि स्यात्कुत्सिते वाच्यवत् पुनः" इति विश्वः ॥ 'रेपः'[1] इति पाठे "रेपः स्यान्निन्दिते क्रूरे" इति विश्वः ॥ (४) ॥ "याप्यं तु यापनीये स्यान्निन्दितेऽप्यभिधेयवत्" इति मेदिनी ॥ (५) ॥ अवमः ॥ (६) ॥ "अधमः स्याद्गर्ह्ये ऊने" इति विश्वः ॥ (७) ॥ कुपूयः॥ 'कपूयः' इत्यपि ॥ (८) ॥ कुत्सितः ॥ (९) ॥ अवद्यः ॥ (१०) ॥ "खेटः कफे ग्रामभेदे चर्मण्यस्त्र्यर्थवति त्रिषु" इति मेदिनी ॥ (११) ॥ गर्ह्यः ॥ (१२) ॥ अणकः ॥ (१३) ॥ त्रयोदश अधमस्य ॥ ५४ ॥ मेति ॥ "मलीमसं तु मलिने पुष्पकासीसलोहयोः" इति विश्वमेदिन्यौ ॥ (१) ॥ "मलिनं कृष्णदोषयोः । मलिनी रजस्वलायाम्" इति हैमः ॥ (२) ॥ कुत्सितं चराति कच्चरम् ॥ (३) ॥ मलेन दूषितं मलदूषितम् ॥ (४) चत्वारि मलिनस्य ॥ प्विति ॥ "पूतं त्रिषु पवित्रे च शाठिते बहुलीकृते" इति मेदिनी ॥ (१) ॥ "पवित्रं तु मेध्ये ताम्रे कुशे जले । अर्घोपकरणे चापि पवित्रा तु नदीभिदि" इति हैमः ॥ (२) ॥ "मेध्यं त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम्" इति मेदिनी ॥ (३) ॥ "पवित्रः प्रयतः पूतः" इति प्राणिविषय उक्तम् । इह त्वप्राणिनि ॥ त्रीणि पवित्रस्य ॥ वीति ॥ वीध्रम् ॥ (१) ॥ विमल आत्मा स्वभावो यस्य विमलात्मकम् ॥ (२) ॥ द्वे स्वभावनिर्मलस्य ॥ ५५ ॥ नीति ॥ निर्णिक्तम् ॥ (१) ॥ शोधितम् ॥ (२) ॥ मृष्टम् ॥ (३) ॥ निष्क्रान्तं शोध्यमस्मात् निःशोध्यम् ॥ (४) ॥ अनवस्करम् ॥ (५) ॥ पञ्चापनीतमलस्य ॥ असेति ॥ असारम् ॥ (१) ॥ "फल्गुः काकोदुम्बरिके वृक्षे निरर्थकेऽपि च" इति हैमः ॥ "फल्ग्वसारेऽभिधेयवत् । नदीभेदे मलय्वां स्त्री" इति विश्वः ॥ (२) ॥ द्वे साररहितस्य ॥ श्विति ॥ "शून्यं विन्दौ च निर्जने । शून्या तु नालिका" इति हैमः ॥ (१) ॥ वाशीकम् ॥ (२) ॥ तुच्छम् ॥ (३) ॥ रिक्तकम् ॥ (४) ॥ चत्वारि शून्यस्य ॥ ५६ ॥ क्लीति ॥ "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" इति मेदिनी ॥ (१)॥ प्रकृष्टं मुखमस्य ॥ "प्रमुखं प्रथमे मुख्ये" इति हैमः ॥ (२) ॥ प्रवेकः ॥ (३) ॥ नोत्तमोऽस्मात् अनुत्तमः ॥ (४) ॥ अतिशयेनोत्कृष्टः

[1] —'रेपाः' सान्तोऽपि । "प्रापे रूपी पुरारेपाः" इति माघस्य द्व्यक्षरयमकम्—इति मुकुटः ॥

**पराध्यग्रिप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् । श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ५८॥**
**स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥**
**अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने । विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥ ६० ॥**
**वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे । स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु ६१॥**
**स्त्रियां मात्रात्रुटी पुंसि लवलेशकणाणवः । अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ६२**
**प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च ॥ ६३ ॥**

उत्तमः ॥ ( ५ ) ॥ मुख्यः ॥ ( ६ ) ॥ वर्यः ॥ ( ७ ) ॥ वरेण्यः ॥ ( ८ ) ॥ प्रवर्हः ॥ ( ९ ) ॥ अवरस्मिन्नर्धे भवः ॥ न अवरार्ध्यः अनवरार्ध्यः ॥ ( १० ) ॥ ५७ ॥ परस्मिन्नर्धे भवः परार्ध्यः ॥ (११) ॥ "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ॥ अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी ॥ ( १२ ) ॥ प्रकृष्टमग्रम् ॥ प्राग्रे हरति प्राग्रहरः ॥ ( १३ ) ॥ प्राग्रे भवः प्राग्र्यः ॥ ( १४ ) ॥ अग्र्यः ॥ ( १५ ) ॥ अग्रीयः ॥ ( १६ ) ॥ अग्रियः ॥ (१७) ॥ **सप्तदश मुख्यस्य** ॥ **श्रयिति** ॥ अतिशयेन प्रशस्यः ॥ "**श्रेयो** मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् । **श्रेयसी** करिपिप्पल्यामभयापाठयोरपि" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ "**श्रेष्ठो** वरे कुबेरे च" इति हैमः ॥ ( २ ) ॥ "**पुष्कलस्तु** पूर्णे श्रेष्ठे" इति हैमः ॥ ( ३ ) ॥ अतिशयेन सन् ॥ "**सत्तमः** स्यात्पूज्यतमे साधीयस्युत्तमे त्रिषु" इति मेदिनी ॥ ( ४ ) ॥ अतिशोभनः ॥ ( ५ ) ॥ **पञ्च**, "वर्यं प्रधानं युक्तमनुत्तमं सत्तमं प्रवर्हणं च" इति नाममालायां सत्तमस्य, "अग्रं प्राग्रहरं श्रेष्ठं मुख्यवर्यप्रवर्हणम्" इति त्रिकाण्डशेषे च श्रेष्ठस्य पाठादेकविंशतिरेव शोभनस्य—इत्यन्ये ॥ ५८ ॥ **स्युरिति** ॥ उत्तरपदे वर्तमाना व्याघ्रादयः शब्दाः पुंसि श्रेष्ठार्थगोचरा भवेयुरित्यर्थः ॥ पुमांश्चासौ गौश्च ॥ श्रेष्ठस्यार्थः ॥ श्रेष्ठार्थो गोचरो येषां ते ॥ क्वचित् "वाचकाः" इति पाठः ॥ **अष्टौ श्रेष्ठस्य** ॥ ५९ ॥ **अप्रेति** ॥ अप्राग्र्यम् ॥ ॥ ( १ ) ॥ अप्रधानम् ॥ ( २ ) ॥ उपसर्जनम् ॥ ( ३ ) ॥ **त्रीणि अप्रधानस्य** ॥ **वीति** ॥ विशङ्कटम् ॥ ( १ ) ॥ "पृथुर्विशाले भूपाले वाष्पिकाकृष्णजीरयोः" इति हेमचन्द्रः ॥ ( २ ) ॥ बृहत् ॥(३)॥ "**विशाला** त्विन्द्रवारुण्यामुज्जयिन्यां च योषिति । नृपद्रक्षभिदोः पुंसि पृथुले त्वभिधेयवत्" इति विश्वमेदिन्यौ ॥ ( ४ ) ॥ पृथुलम् ॥ ( ५ ) ॥ महत् ॥ ( ६ ) ॥ ६० ॥ वड्रम् ॥ ( ७ ) ॥ उरु ॥ ( ८ ) ॥ "विपुलः पृथुलेऽगाधे मेरुपश्चिमभूधरे" इति विश्वमेदिन्यौ ॥ ( ९ ) ॥ **नव विपुलस्य** ॥ **पीति** ॥ पीनम् ॥ ( १ ) ॥ पीव ॥ ( २ ) ॥ "**स्थूलः** पीने जडे" इति हैमः ॥ (३) ॥ "**पीवरः** स्थूलकूर्मयोः" इति हेमचन्द्रः ॥ ( ४ ) ॥ **चत्वारि स्थूलस्य** ॥ **स्तविति** ॥ "**स्तोकस्त्रिष्वल्पे** चातके पुमान्" इति मेदिनी ॥ ( १ ) ॥ अल्पः ॥ ( २ ) ॥ "**क्षुल्लकस्त्रिषु** नीचेऽल्पे" इति विश्वः ॥ ( ३ ) ॥ श्लक्ष्णम् ॥ ( ४ ) "**सूक्ष्मं** स्यात्कतकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके" इति विश्वः ॥ ( ५ ) ॥ दभ्रम् ॥ (६) ॥ कृशम् ॥(७) ॥"**तनुः** काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे"इति विश्वमेदिन्यौ ॥(८) ॥६१॥ "**मात्रं** त्ववधृतौ स्वार्थे कात्स्न्र्ये **मात्रा** परिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते च" इति हैमः ॥ ( ९ ) ॥ त्रुटी ॥ ( १० ) ॥ "**लवः** कालभिदि च्छिदि । विलासे रामजे लेशे" इति हैमः ॥ ( ११ ) ॥ लेशः ॥ ( १२ ) ॥ "**कणो** धान्यांशलेशयोः । **कणा** जीरकपिप्पल्योः" इति हेमचन्द्रः ॥ ( १३ ) ॥ "**अणुर्व्रीह्यल्पयोः**" इति हैमः ॥ ( १४ ) ॥ **चतुर्दश अल्पस्य** ॥ **अत्येति** ॥ अत्यल्पः ॥ ( १ ) ॥ अल्पिष्ठम् ॥ ( २ ) ॥ अल्पीयः ॥ ( ३ ) ॥ कनीयः ॥ ( ४ ) ॥ अणीयः ॥ ( ५ ) ॥ **पञ्च अतिशयेनाल्पस्य** ॥ ६२ ॥ **प्रेति** ॥ "**प्रभूतमुद्गते** प्राज्ये" इति हैमः ॥ ( १ ) ॥ प्रचुरम् ॥ ( २ ) ॥ प्राज्यम् ॥ ( ३ ) ॥ अदभ्रम् ॥ ( ४ ) ॥ "**बहुला** नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः" इति विश्वमेदिन्यौ ॥ ( ५ ) ॥ ॥ "**बहु** स्यात्त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्" इति विश्वः ॥ (६) ॥

**परश्शताद्यास्ते येषां परा संख्या शतादिकात् ॥ ६४ ॥**
**गणनीये तु गणेयं संख्यातं गणितमथ समं सर्वम्।विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ॥ ६५ ॥**
**समग्रं सकलं पूर्णमखण्डं स्यादनूनके। घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ॥**
**समीपे निकटासन्नसंनिकृष्टसनीडवत् ॥ ६६ ॥**
**सदेशाभ्याशसविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ६७॥**
**संसक्ते त्वव्यवहितमपटान्तरमित्यपि । नेदिष्ठमन्तिकतमं स्याद् दूरं विप्रकृष्टकम् ॥ ६८ ॥**
**दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् । वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् ॥ ६९ ॥**

पुरुहम् ॥ ( ७ ) ॥ "पुरु प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः" इति हैमः ॥ ॥ ( ८ ) ॥ भूयिष्ठम् ॥ ( ९ ) ॥ स्फिरम् ॥ **'स्फारम'** इत्यपि पाठः ॥ **"स्फारस्तु स्फरकादीनां** बुद्बुदे विपुलेऽपि च" इति हेमचन्द्रः ॥ ( १० ) ॥ भूयः ॥ ( ११ ) ॥ **"भूरि स्यात्प्रचुरे स्वर्णे"** इति हैमः ॥ **"भूरिर्ना** वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ ( १२ ) ॥ **द्वादश प्रचुरस्य** ॥ ६३ ॥ **पेति** ॥ परश्शताः ॥ ( १ ) ॥ आद्येन परस्सहस्राः ॥ **एकं शतात्परस्य** ॥ ६४ ॥ **गेति** ॥ आर्या छन्दः॥ गणनीयम् ॥ ( १ ) ॥ गणेयम् ॥ (२)॥**द्वे गणयितुं शक्यस्य॥ समिति॥**संख्यातम् ॥(१)॥ गणितम् ॥ (२) ॥**द्वे गणितस्य** ॥ **अथेति॥** **"समा** संवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु **समं** स्यादभिधेयवत्" इति विश्वः ॥ ( १ ) ॥ सर्वम् ॥ ( २ ) ॥ "विश्वं कृत्स्ने च भुवने विश्वेदेवेषु नागरे । **विश्वाऽ**प्यतिविषायां स्यात्" इति विश्वः ॥ ( ३ ) ॥ न शेषोऽस्य अशेषम् ॥ ( ४ ) ॥ **"कृत्स्नं** सर्वाम्बुकुक्षिषु" इति मेदिनी ॥ ( ५ ) ॥ समस्तम् ॥ ( ६ ) ॥ निखिलम् ॥ ( ७ ) ॥ अखिलम् ॥ ( ८ ) ॥ निःशेषम् ॥ ( ९ ) ॥ ६५ ॥ समग्रम् ॥ ( १० ) ॥ सकलम् ॥ ( ११ ) ॥ **"पूर्णः** शब्दे ( शक्ते ) समग्रे ना पूरिते त्वभिधेयवत्" इति मेदिनी ॥ "पूर्वम्" इति पाठः—इति स्वामी ॥ ( १२ ) ॥ अखण्डम् ॥ ( १३ ) ॥ अनूनकम् ॥ ( १४ ) ॥ **चतुर्दश पूर्णस्य ॥ घेति ॥ "घनः** सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते **घनं** मध्ये नृत्यवाद्यप्रभेदयोः" इति हेमचन्द्रः ॥ ( १ ) ॥ निर्गतमन्तरात् निरन्तरम् ॥ ( २ ) ॥ सान्द्रम् ॥ ( ३ ) ॥ **त्रीणि घनस्य ॥ पेलेति ॥** पेलवम् ॥ ( १ ) ॥ विरलम् ॥ ( २ ) ॥ "तनुर्वपुस्त्वचोः । विरलेऽल्पे कृशे" इति हैमः ॥ ( ३ ) ॥ **त्रीणि विरलस्य ॥ सेति ॥** समीपः ॥ ( १ ) ॥ निकटः ॥ ( २ ) ॥ आसन्नः ॥ ( ३ ) ॥ संनिकृष्टः ॥(४)॥ समानं नीडं वासस्थानमस्य सनीडः ॥ ( ५ ) ॥६६॥ सदेशः ॥ ( ६ ) ॥ अभ्याशः ॥ मुकुटस्तु दन्त्यसमाह ॥ **"अभ्यासोऽभ्यसनेऽन्तिके"** इति दन्त्यान्तेषु विश्वमेदिन्यौ ॥ ( ७ ) ॥ सविधः ॥ ( ८ ) ॥ समर्यादः ॥ ( ९ ) ॥ सवेशः ॥ ( १० ) ॥ उपकण्ठम् ॥ ( ११ ) ॥ **"अन्तिकं** निकटे वाच्यलिङ्गं स्त्री शोभनौषधौ । चुल्लयां ज्येष्ठभगिन्यां च नाट्योक्त्यां कीर्त्यतेऽन्तिका" इति विश्वमेदिन्यौ ॥ ( १२ ) ॥ अभ्यर्णः ॥ ( १३ ) ॥ अभ्यग्रः ॥ ( १४ ) ॥ अभितः ॥ (१५) ॥ **पञ्चदश निकटस्य** ॥६७॥ **समिति** ॥ संसक्तम् ॥ ( १ ) ॥ अव्यवहितम् ॥ (२) ॥ अपटान्तरम् ॥ मुकुटस्तु—'अपदान्तरम्' । इत्याह ॥ ( ३ ) ॥ **त्रीणि अव्यवहितस्य॥** नेदीति ॥ आतिशयेनान्तिकं नेदिष्ठम् ॥ ( १ ) ॥ अन्तिकतमम् ॥ ( २ ) ॥ **द्वे अतिनिकटस्य ॥ स्यादिति** ॥ दूरम् ॥ ( १ ) ॥ विप्रकृष्टकम् ॥ ( २ ) ॥ **द्वे दूरस्य** ॥ ६८ ॥ **देति** ॥ अत्यन्तं दूरं दवीयः ॥ ( १ ) ॥ दविष्ठम् ॥ ( २ ) ॥ सुदूरम् ॥ ( ३ ) ॥ **त्रीणि अत्यन्तदूरस्य ॥ दीति** ॥ दीर्घम् ॥ ॥ ( १ ) ॥ आयतम् ॥ ( २ ) ॥ **द्वे दीर्घस्य ॥ वेति** ॥ वर्तुलम् ॥ ( १ ) ॥ **"निस्तलं** वर्तुले चले"

१—"भ्यग्राभिपतिता ह्यमी" इति क्वचित्पाठः—इति पीयूषव्याख्या ॥

**उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने । न्यग्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानते ॥ ७० ॥ अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥७१॥ ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ । शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥७२॥ स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः । कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः ७३ चरिष्णुर्जङ्गमचरं त्रसमिङ्गं चराचरम् । चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥७४॥**

इति विश्वः ॥ ( २ ) ॥ "वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दःस्वतीताधीतयो र्वृते" इति हैमः ॥ ( ३ ) ॥ त्रीणि वर्तुलस्य ॥ बेति ॥ "बन्धुरं मुकुटे पुंसि स्त्री चङ्गतैलकल्कयोः । बन्धूके बधिरे हंसि त्रिषु स्याद्रम्यनम्रयोः। बन्धुरा पण्ययोषायां स्त्रियां भूम्नि च सक्तुषु" इति मेदिनी ॥ "बन्धूरबन्धुरौ रम्ये नम्रे, हंसे तु बन्धुरः। बन्धूके च विडङ्गे च बन्धुरा पण्ययोषिति" इति विश्वाद्दीर्घोपधोऽपि॥(१)॥ उन्नतं च तदानतं च उन्नतानतम् ॥ ( २ ) ॥ द्वे उन्नतानतस्य ॥ ६९ ॥ उच्चेति ॥ उच्चः ॥ ( १ ) ॥ प्रांशुः ॥(२)॥ उन्नतः ॥ ( ३ ) ॥ उदग्रः ॥ ( ४ ) ॥ "उच्छ्रितं त्रिषु संजाते समुन्नद्ध ( त ) प्रवृद्धयोः" इति मेदिनी ॥ ( ५ ) ॥ "तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां बर्बरायामपीष्यते" इति हैमः ॥ ( ६ ) ॥ षट् उच्चस्य ॥ अथेति ॥ वामयति मदं वामनः ॥ ( १ ) ॥ न्यक् ॥ ( २ ) ॥ "नीचः पामरखर्वयोः" इति हेमचन्द्रः ॥ ( ३ ) ॥ "खर्वं संख्यान्तरे क्लीबं नीचे वामनके त्रिषु" इति मेदिनी ॥ ( ४ ) ॥ "खर्वह्रस्वौ न्यग्वामनौ" इति हैममेदिन्यौ ॥ ( ५ ) ॥ पञ्च वामनस्य ॥ अवेति ॥ अवाग्रम् ॥ ( १ ) ॥ अवनतम् ॥ ( २ ) ॥ आनतम् ॥ ( ३ ) ॥ त्रीण्यधोमुखस्य ॥ ७० ॥ अरेति ॥ "अरालः कुटिले सर्जरसे च समदन्तिनि" इति विश्वः ॥ ( १ ) ॥ "वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु" इति मेदिनी ॥ ( २ ) ॥ "जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे" इति हैमः ॥ ( ३ ) ॥ "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपि" इति मेदिनी ॥ ऊर्मिरस्यास्ति ऊर्मिमत् ॥ ( ४ ) ॥ कुञ्चितम् ॥ ( ५ ) ॥ "नतं तगरपाट्यां स्यात् क्लीबं, कुटिलनम्रयोः । त्रिषु" इति मेदिनी ॥ ( ६ ) ॥ "आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते" इति मेदिनी ॥ ( ७ ) ॥ "कुटिला त्वापगायां स्त्री भुग्ने तु वाच्यलिङ्गकः" इति मेदिनी ॥ ( ८ ) ॥ भुग्नम् ॥ ( ९ ) ॥ "वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु" इति मेदिनी ॥ ( १० ) ॥ "वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः" इति हैमः ॥ ( ११ ) ॥ एकादश कुटिलस्य ॥ ७१ ॥ ऋजुरिति ॥ ऋजुः ॥ ( १ ) ॥ भिन्नो जिह्मात् अजिह्मः ॥ ( २ ) ॥ प्रगुणः ॥ ( ३ ) ॥ त्रीणि सरलस्य ॥ व्यस्ते इति ॥ "व्यस्तं तु व्याकुले व्याप्ते" इति विश्वः॥( १)॥ भिन्नः प्रगुणात् अप्रगुणः॥( २)॥आकुलः॥(३)॥ त्रीणि व्याकुलस्य ॥ शेति ॥शाश्वतः ॥(१)॥ "ध्रुवो वटे।वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे॥स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः।ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि" इति हैमः ॥ ( २ ) ॥"नित्यं स्यात्संततेऽपि च । शाश्वते त्रिषु" इति मेदिनी ॥ (३) ॥ सदातनः ॥ ( ४ ) ॥ "सनातनोऽच्युते । पितॄणामतिथौ रुद्रवेधसोः शाश्वते स्थिरे" इति हेमचन्द्रः ॥ (५) ॥ पञ्च सनातनस्य ॥ ७२ ॥ स्थेति ॥ स्थास्नुः ॥ ( १ ) ॥ स्थिरतरः ॥ ( २ ) ॥ स्थेयान् ॥ ( ३ ) ॥ त्रीण्यतिस्थिरस्य ॥ एकेति ॥ कूटवत् तिष्ठति कूटस्थः ॥ "कूटोऽस्त्री निश्चले राशौ" इति मेदिनी ॥ ( १ ) ॥ एकं कूटस्थस्य ॥ स्येति ॥ स्थावरः ॥ ( १ ) ॥ जङ्गमादितरः जङ्गमेतरः ॥ ( २ ) ॥ द्वे स्थावरस्य ॥ ७३ ॥ चेति ॥ चरिष्णु ॥ ( १ ) ॥ जङ्गमम् ॥ ( २ ) ॥ "चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले" इति मेदिनी ॥ ( ३ ) ॥ त्रसम् ॥ ( ४ ) ॥ "इङ्गः स्यादिङ्गितेऽद्भुते । ज्ञानजङ्गमयोश्चापि" इति हेमचन्द्रः ॥ ( ५ ) ॥ "चराचरं जङ्गमे स्यादिङ्गविष्टपयोरपि" इति हैमः ॥ ( ६ ) ॥ षट् जङ्गमस्य ॥ चेति ॥ "चलनं भ्रमणे कम्पे कम्प्रे तु वाच्यलिङ्गकम् । चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ कम्पनशीलम् ॥ "कम्पनं न द्वयोः कम्पे कम्प्रे स्यादभिधेयवत्" इति मेदिनी ॥ ॥ ( २ ) ॥ कम्प्रम् ॥ ( ३ ) ॥ चलम् ॥ ( ४ ) ॥ लोलम् ॥ ( ५ ) ॥ चलाचलम् ॥ ( ६ ) ॥ ७४ ॥

१—वृत्तौ वर्तने यथा—"ऋतेन वृत्तं प्रवदन्ति मुख्यम्" इति ॥ २—वृते यथा—"कण्टकैर्विटपी वृतः" इति चानेकार्थकैरवाकरकौमुदी ॥

चञ्चलं तरलं चैव पारिप्लवपरिप्लवे । अतिरिक्तः समधिको दृढसंधिस्तु संहतः ॥ ७५ ॥
कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् । जरठं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥
पुराणे प्रतनप्रत्नपुरातनचिरंतनाः । प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु । अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥
प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् । एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि च । पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ८०
अन्तो जघन्यं चरममन्त्यपाश्चात्त्यपश्चिमम् । मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्वणम् ८१

"चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलश्चपले (कामुके) ऽनिले" इति मेदिनी ॥ ( ७ ) ॥ "तरलं चञ्चले षिङ्गे भास्करेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्" इति विश्वमेदिन्यौ ॥ ( ८ ) ॥ "पारिप्लवश्चाकुले स्याच्चञ्चले च" इति हैमः ॥ ( ९ ) ॥ परिप्लवम् ॥ ( १० ) ॥ दश चञ्चलस्य ॥ अतीति ॥ अतिरिक्तः ॥ ( १ ) ॥ समधिकः ॥ ( २ ) ॥ द्वे अधिकभूतस्य ॥ द्रिति ॥ दृढः संधिः संधानमस्य दृढसंधिः ॥ ( १ ) ॥ "संहतं संगते दृढे" इति हैमः ॥ ( २ ) ॥ द्वे दृढसंधानस्य ॥ ७५ ॥ केति ॥ कक्खटम् ॥ "खक्खटम्" इति कवर्गद्वितीयादिः—इत्यन्ये ॥ ( १ ) ॥ "कठिनमपि निष्ठुरे स्यात् स्तब्धेऽपि त्रिषु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायां च" इति विश्वः ॥ ( २ ) ॥ "क्रूरा नृशंसघोरोष्णकठिनाः" इति हैमः ॥ ( ३ ) ॥ "कठोरौ पूर्णकठिनौ" इति हैमः ॥ ( ४ ) ॥ निष्ठुरम् ॥ ( ५ ) ॥ "दृढं स्थूले नितान्ते च प्रगाढे बलवत्यपि" इति मेदिनी ॥ ( ६ ) ॥ "जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत्" इति विश्वः ॥ ( ७ ) ॥ मूर्तिः काठिन्यमस्यास्ति मूर्त्तिमत् ॥ ( ८ ) ॥ "मूर्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि" इति विश्वः ॥ ( ९ ) ॥ नव कठिनस्य ॥ प्रेति ॥ प्रवृद्धम् ॥ ( १ ) ॥ प्रौढम् ॥ ( २ ) ॥ एधितम् ॥ ( ३ ) ॥ त्रीणि प्रवृद्धस्य ॥ ७६ ॥ प्विति ॥ "पुराणं प्रत्नशास्त्रयोः । पुराणः षोडशपणे" इति हैमः ॥ ( १ ) ॥ प्रतनम् ॥ ( २ ) ॥ प्रत्नम् ॥ ( ३ ) ॥ पुरातनम् ॥ ( ४ ) ॥ चिरन्तनम् ॥ ( ५ ) ॥ पञ्च पुराणस्य ॥ प्रेति ॥ प्रत्यग्रः ॥ ( १ ) ॥ अभिनवः ॥ ( २ ) ॥ नव्यः ॥ ( ३ ) ॥ नवीनः ॥ ( ४ ) ॥ नूतनः ॥ ( ५ ) ॥ नवः ॥ ( ६ ) ॥ ७७ ॥ नूत्नः ॥ ( ७ ) ॥ सप्त नवीनस्य ॥ स्विति ॥ सुकुमारम् ॥ ( १ ) ॥ "कोमलं मृदुले जले" इति विश्वः ॥ ( २ ) ॥ मृदुलम् ॥ ( ३ ) ॥ "मृद्वतीक्ष्णे च कोमले" इति हैमः ॥ ( ४ ) ॥ चत्वारि सुकुमारस्य ॥ अन्वेति ॥ अन्वक् ॥ ( १ ) ॥ अन्वक्षम् ॥ ( २ ) ॥ अनुगम् ॥ ( ३ ) ॥ अनुपदम् ॥ ( ४ ) ॥ चत्वारि पश्चादित्यर्थस्य ॥ ७८ ॥ प्रेति ॥ अक्षमिन्द्रियं प्रतिगतं प्रत्यक्षम् ॥ ( १ ) ॥ इन्द्रियेणानुभूयते ऐन्द्रियकम् ॥ ( २ ) ॥ द्वे इन्द्रियज्ञातस्य ॥ अप्रेति ॥ अप्रत्यक्षम् ॥ "अनध्यक्षम्" इति पाठः—इत्यन्ये ॥ ॥ ( १ ) ॥ अतीन्द्रियम् ॥ ( २ ) ॥ द्वे इन्द्रियेणाज्ञातस्य ॥ एकेति ॥ एकं तानयति एकतानः ॥ ( १ ) ॥ अनन्यवृत्तिः ॥ ( २ ) ॥ एकाग्रः ॥ ( ३ ) ॥ एकायनः ॥ ( ४ ) ॥ ७९ ॥ एकसर्गः ॥ ( ५ ) ॥ एकाग्र्यः ॥ "ऐकाग्र्यः" अपि ॥ ( ६ ) ॥ एकस्मिन्नयने गतं ज्ञानमस्य एकायनगतः ॥ ( ७ ) ॥ सप्त एकाग्रस्य ॥ पुमिति ॥ आ प्रथमं दीयते गृह्यते आदिः ॥ ( १ ) ॥ "पूर्वं तु पूर्वजे । प्रागयं श्रुतभेदेषु" इति हैमः ॥ ( २ ) ॥ पौरस्त्यः ॥(३)॥ "प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्" इति मेदिनी ॥(४)॥ आद्यः ॥(५)॥ पञ्च प्रथमस्य ॥ अथेति॥८०॥ "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ॥अवयवेऽपि" इति हेमचन्द्रः ॥ ( १ ) ॥ "जघन्यं मेहने क्लीबं चरमे गर्हितेऽन्यवत्" इति मेदिनी॥(२)॥ चरमम् ॥(३)॥

---

१—प्रथमम् आदीयते गृह्यते—इति मुकुटपाठ एव साधीयान् । व्याख्योल्लिखितपाठे 'आ' इत्यस्य 'प्रथमम्' इत्यर्थकत्वसम्भवेऽपि 'दीयते' इत्यस्य 'गृह्यते'इत्यर्थकताया लक्षणां विना सर्वसुबोध्यत्वाभावात् ॥

साधारणं तु सामान्यमेकाकी त्वेक एककः । भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥८२॥
उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ।अरुंतुदं तु मर्मस्पृगबाधं तु निरर्गलम् ॥ ८३ ॥
प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च। वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणे ॥ ८४ ॥
संकटं ना तु संबाधः कलिलं गहनं समे । संकीर्णं संकुलाकीर्णे मुण्डितं परिवापितम्॥८५॥
ग्रन्थितं संदितं दृब्धं विसृतं विस्तृतं ततम्। अन्तर्गतं विस्मृतं स्यात्प्राप्तप्रणिहिते समे ॥८६॥

"अन्त्यस्त्वन्तभवेऽधमे" इति हैमः ॥ ( ४ ) ॥ पाश्चात्त्यम् ॥ ( ५ ) ॥ पश्चिमम् ॥ ( ६ ) ॥ षट् अन्त्यस्य ॥ मविति ॥ "मोघो दीने निष्फले च मोघा स्यात्पाटलातरौ" इति हैमः ॥ ( १ ) ॥ निरर्थकम् ॥ ( २ ) ॥ द्वे निष्प्रयोजनस्य ॥ स्पेति ॥ स्पष्टम् ॥ ( १ ) ॥ "स्फुटो व्यक्तप्रफुल्लयोः । सिते[४] व्याप्ते" इति हैमः ॥ ( २ ) ॥ प्रव्यक्तम् ॥ ( ३ ) ॥ उल्वणम् ॥ ( ४ ) ॥ चत्वारि स्फुटस्य ॥८१॥ सेति ॥ साधारणम् ॥ ( १ ) ॥ सह मानेन ॥ समानस्य भावः सामान्यम् ॥ ( २ ) ॥ द्वे अनेकसंबन्धिन एकस्य ॥ एकेति ॥ एकाकी ॥ ( १ ) ॥ "एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी ॥ ( २ ) ॥ एककः ॥ ( ३ ) ॥ त्रीण्यसजातीयासहायस्य ॥ भीति ॥ भिन्नः ॥ ( १ ) ॥ अन्यतरः ॥ क्वचित् 'एकतरः' इति पाठः ॥ ( २ ) ॥ एकः ॥ ( ३ ) ॥ त्वः ॥ ( ४ ) ॥ "अन्योऽसदृशेतरयोः" इति हैमः ॥ ( ५ ) ॥ "इतरः पामरेऽन्यस्मिन्" इति हेमचन्द्रः ॥ ( ६ ) ॥ षट् अन्यार्थकाः ॥ ८२ ॥ उच्चेति ॥ उच्चावचम् ॥ ( १ ) ॥ नैकभेदम् ॥ ( २ ) ॥ द्वे अनेकप्रकारस्य ॥ विति ॥ उच्चण्डम् ॥ ( १ ) ॥ अविलम्बितम् ॥ ( २ ) ॥ स्वामी––अवलम्बनम्––इति पठति ॥ ( २ ) ॥ द्वे उत्तालस्य ॥ अर्विति ॥ अरुंतुदम् ॥ ( १ ) ॥ मर्मस्पृक् ॥ ( २ ) ॥ द्वे मर्मपीडकस्य ॥ अबेति ॥ अबाधम् ॥ ( १ ) ॥ निरर्गलम् ॥ ( २ ) ॥ द्वे अबाधितस्य ॥८३॥ प्रेति ॥ "प्रसव्यं वाच्यलिङ्गः स्यात् प्रतिकूलानुकूलयोः" इति मेदिनी ॥ ( १ ) ॥ प्रतिकूलम् ॥ ( २ ) ॥ अपसव्यं त्रिलिङ्गं तु दक्षिणप्रतिकूलयोः" इति विश्वः ॥ ( ३ ) ॥ "अपष्ठुः पुंसि काले च वामे स्यादन्यलिङ्गकः" इति मेदिनी ॥ ( ४ ) ॥ चत्वारि विरुद्धार्थस्य ॥ वेति ॥ "सव्यं वामे च दक्षिणे" इत्यजयः ॥ "सव्यं तु दक्षिणे[५] । वामे च प्रतिकूले च" इति विश्वः ॥ ( १ ) ॥ एकं वामशरीरस्य ॥ अपेति ॥ अपसव्यम् ॥ ( १ ) ॥ एकं दक्षिणशरीरस्य ॥ ८४ ॥ समिति ॥ संकटम् ॥ ( १ ) ॥ "संबाधः संकटे भगे[६]" इति विश्वः ॥ ( २ ) ॥ द्वे संकीर्णस्य ॥ केति ॥ कलिलम् ॥ ( १ ) ॥ "गहनं वनदुःखयोः । गह्वरे कलिले चापि" इति विश्वहैमौ ॥ ( २ ) ॥ द्वे दुष्प्रवेशस्य ॥ समिति ॥ संकीर्णं निचितेऽपि स्यादशुद्धे त्वभिधेयवत्" इति मेदिनी ॥ ( १ )॥ संकुलम् ॥ ( २ ) ॥ आकीर्णम् ॥ ( ३ ) ॥ त्रीणि नानाजातीयसंमिलितस्य ॥ यथा संकीर्णवर्गः ॥ केचित्तु एतान्पूर्वपर्यायानाहुः ॥ "संकीर्णमृषिपत्नीनाम्" इति प्रयोगात् ॥ म्विति॥ मुण्डितम् ॥ ( १ ) ॥ परिवापितम् ॥ ( २ ) ॥ द्वे मुण्डितस्य ॥ ८५ ॥ ग्रेति ॥ ग्रथितम् ॥ "ग्रन्थितम्" इति पाठान्तरम् ॥ "ग्रन्थितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्" इति मेदिनी ॥

---

१—**एकलः** इत्यपि पाठः—"शांभवी शक्तिरेकला"—इति पीयूषव्याख्या ॥ २—"**गुन्थितम्**" इति क्वचित्—इति पीयूषव्याख्या ॥—"**मथितं मर्दितम्**" इति पाठे 'मृद क्षोदे' (क्र्या० ) अनेकार्थत्वात् ग्रन्थने, इति स्वामी—इति मुकुटः ॥ ३–वपेः क्तः '**प्रोप्तम्**' इत्यत्र पाठ इति तु गोवर्धनः—इति मुकुटः ॥ ४—सितव्याप्तयोर्यथा—"सुधांशुरोचिः स्फुटकुट्टिमेषु"—इत्यनेकार्थकैरवाकरकौमुदी ॥ ५—दक्षिणे यथा—"वामो बाहुर्मृडान्याः करकलितरणत्कङ्कणालीकरालो यस्मिन्सव्यो भुजगवलयवान्" इत्यनेकार्थकैरवाकरकौमुदी ॥ ६—भगे योनौ यथा—"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते । उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजिते " इत्यनेकार्थकैरवाकरकौमुदी ॥ ७—'सप्तैकार्थानि' इत्येके—इति पीयूषाख्यव्याख्या ॥

वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते । नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ८७ ॥
परिक्षिप्तं तु निवृतं मूषितं मूषितार्थकम् । प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते ॥ ८८ ॥
निदिग्धोपचिते गूढगुप्ते गुण्डितरूषिते । द्रुतावदीर्णे उद्गूर्णोद्यते काचितशिक्यिते ॥ ८९ ॥
घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे । वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥
रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानि तेजिते । स्याद्विनाशोन्मुखं पक्कं ह्रीणह्रीतौ तु लज्जिते९१

॥ ( १ ) ॥ संदितम् ॥ "गुम्फितम्" इति पाठान्तरम् ॥ ( २ ) ॥ दृब्धम् ॥ ( ३ ) ॥ त्रीणि ग्रथितस्य ॥ वीति ॥ विसृतम् ॥ ( १ ) ॥ विस्तृतम् ॥ ( २ ) ॥ "ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ" इति मेदिनी ॥ ( ३ ) ॥ त्रीणि विस्तृतस्य ॥ अन्तेति ॥ "अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत्" इति विश्वः ॥ ( १ ) ॥ विस्मृतम् ॥ ( २ ) ॥ द्वे विस्मृतस्य ॥ प्रेति ॥ "प्राप्तं लब्धे समञ्जसे" इति मेदिनी ॥ ( १ ) ॥ प्रणिहितम् ॥ ( २ ) ॥ द्वे स्थापितस्य ॥ ८६ ॥ वेल्लीति ॥ "वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु" इति मेदिनी ॥ ( १ ) ॥ प्रेङ्खितः ॥ ( २ ) ॥ आधूतः ॥ ( ३ ) ॥ चलितः ॥ ( ४ ) ॥ आकम्पितः ॥ ( ५ ) ॥ "धुतम् । त्यक्ते विधूते" इति हैमः ॥ ( ६ ) ॥ षट् कम्पितस्य ॥ न्विति ॥ नुत्तः ॥ ( १ ) ॥ नुन्नः ॥ ( २ ) ॥ "अस्तः क्षिप्ते पश्चिमाद्रौ" इति हैमः ॥ ( ३ ) ॥ निष्ठ्यूतः ॥ ( ४ ) ॥ "आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते" इति मेदिनी ॥ ( ५ ) ॥ क्षिप्तः ॥ ( ६ ) ॥ ईरितः ॥ ( ७ ) ॥ सप्त प्रेषितस्य ॥ ८७ ॥ पेति ॥ परिक्षिप्तम् ॥ ( १ ) ॥ निवृतम् ॥ ( २ ) ॥ द्वे परिखादिना वेष्टितस्य ॥ म्विति ॥ मूषितम् ॥ ( १ ) ॥ "मुषितं हृतखण्डिते" इति विश्वः ॥ ( २ ) ॥ द्वे चोरितस्य ॥ प्रेति ॥ प्रवृद्धम् ॥ ( १ ) ॥ प्रसृतम् ॥ ( २ ) ॥ द्वे प्रसृतस्य ॥ न्येति ॥ न्यस्तम् ॥ ( १ ) ॥ निसृष्टम् ॥ ( २ ) ॥ द्वे त्यक्तस्य ॥ ग्विति ॥ गुणितम् ॥ ( १ ) ॥ आहतम् ॥ ( २ ) ॥ द्वे गुणितस्य ॥ ८८ ॥ नीति ॥ निदिग्धम् ॥ ( १ ) ॥ "भवेदुपचितं दिग्धे समृद्धे वाच्यलिङ्गकम्" इति मेदिनी ॥ ( २ ) ॥ द्वे पुष्टिं प्रापितस्य ॥ ग्विति ॥ "गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु" इति मेदिनी ॥ ( १ ) ॥ "गुप्तं गूढे त्राते" इति हैमः ॥ ( २ ) ॥ द्वे कृतगोपनस्य ॥ ग्विति ॥ गुण्डितम् ॥ 'गुण्ठितम्' इति च ॥ ( १ ) ॥ रूषितम् ॥ ( २ ) ॥ द्वे रजोलिप्तस्य 'गुण्डालित' इति ख्यातस्य ॥ द्रुतेति ॥ "द्रुतं शीघ्रविलीनयोः" ॥ इति हैमः ॥ ( १ ) अवदीर्णम् ॥ ( २ ) ॥ द्वे प्रापितद्रवीभावस्य ॥ विति ॥ उद्गूर्णम् ॥ ( १ ) ॥ उद्यतम् ॥ ( २ ) ॥ द्वे उत्तोलितस्य ॥ केति ॥ काचितम् ॥ ( १ ) ॥ शिक्यितम् ॥ ( २ ) ॥ द्वे शिक्ये स्थापितस्य ॥ ८९ ॥ घ्रेति ॥ "घ्राणं तु घ्रातघोणयोः" इति हैमः ॥ ( १ ) ॥ घ्रातम् ॥ ( २ ) ॥ द्वे आघ्रातस्य ॥ दीति ॥ "दिग्धो विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः" इति मेदिनी ॥ ( १ ) ॥ "लिप्तं भुक्तविलिप्तयोः । विषाक्ते" इति हैमः ॥ ( २ ) ॥ द्वे 'लिप्त' इति ख्यातस्य ॥ सेति ॥ समुदक्तम् ॥ ( १ ) ॥ "उद्धृतं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च" इति मेदिनी ॥ ( २ ) ॥ द्वे कूपादेर्निष्कासितजलादेः ॥ सेति ॥ समे इति प्रवृद्धप्रसृते इत्यादिषु अन्वेति ॥ वेष्टीति ॥ "वेष्टितं रुद्धे लासके करणान्तरे" इति मेदिनी ॥ ( १ ) ॥ वलयितम् ॥ ( २ ) ॥ संवीतम् ॥ ( ३ ) रुद्धम् ॥ ( ४ ) ॥ आवृतम् ॥ ( ५ ) ॥ पञ्च नद्यादिवेष्टितस्य ॥ ९० ॥ विति ॥ रुग्णम् ॥ ( १ ) ॥ भुग्नम् ॥ ( २ ) ॥ द्वे वक्रस्य ॥ अथेति ॥ निशितम् ॥ ( १ ) ॥ क्ष्णुतम् ॥ ( २ ) ॥ शातम् ॥ ( ३ ) ॥ तेजितम् ॥ ( ४ ) ॥ चत्वारि शाणादिना तीक्ष्णीकृतस्य ॥ स्यादिति ॥ विनाशे उन्मुखं विनाशोन्मुखम् ॥ ( १ ) ॥ "पक्वं परिणते नाशाभि-

**वृते तु वृत्तवावृत्तौ संयोजित उपाहितः । प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्नुते ९२**
**संगूढः स्यात्संकुलितोऽवगीतः ख्यातगर्हणः । विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ९३**
**अवरीणो धिक्कृतश्चाप्यवध्वस्तोऽवचूर्णितः । अनायासकृतं फाण्टं स्वनितं ध्वनितं समे ९४॥**
**बद्धे संदानितं मूतमुद्दितं संदितं सितम् । निष्पक्कं क्वथितं पाके क्षीराज्यपयसां शृतम्॥९५ ॥**
**निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतानिले । पक्वं परिणते गूनं हन्ने मीढं तु मूत्रिते ९६ ॥**
**पुष्टे तु पुषितं सोढे क्षान्त उद्वान्तमुद्गते । दान्तस्तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः॥९७॥**

मुखे" इति हैमः ॥ ( २ ) ॥ द्वे **प्रत्यासन्नविनाशस्य** ॥ **ह्वीति** ॥ ह्रीणः ॥ ( १ ) ॥ ह्रीतः ॥ ( २ ) ॥ लज्जितः ॥ ( ३ ) ॥ **त्रीणि लज्जितस्य** ॥ ९१ ॥ **त्रिति** ॥ वृतः ॥ ( १ ) ॥ "वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दःस्वतीताधीतयोर्वृते" इति हेमचन्द्रः ॥ ( २ ) ॥ वावृत्तः ॥ ( ३ ) ॥ **त्रीणि स्वयंवरादौ स्वीकृतस्य वरादेः** ॥ **समिति** ॥ संयोजितः ॥ ( १ ) ॥ "उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु" इति मेदिनी ॥ ( २ ) ॥ **द्वे मेलितस्य** ॥ **प्रेति** ॥ प्राप्यम् ॥ ( १ ) ॥ गम्यम् ॥ ( २ ) ॥ समासाद्यम् ॥ ( ३ ) ॥ **त्रीण्याप्तुं शक्यस्य** ॥ **स्येति** ॥ स्यन्नम् ॥ ( १ ) रीणम् ॥ ( २ ) ॥ स्नुतम् ॥ ( ३ ) ॥ स्नुतम् ॥ ( ४ ) ॥ **चत्वारि प्रस्नुतस्य** ॥ ९२ ॥ **समिति** ॥ संगूढः ॥ ( १ ) ॥ संकुलितः ॥ ( २ ) ॥ **द्वे अङ्कान्तरेणैकीकृतस्याङ्कादेः** ॥ **अवेति** ॥ "अवगीतं तु निर्वादे दृष्टगर्हितयोरपि" इति विश्वमेदिन्यौ ॥ ( १ ) ॥ ख्याता गर्हणा यस्य ख्यातगर्हणः ॥ ( २ ) ॥ **द्वे प्रसिद्धनिन्दस्य** ॥ **वीति** ॥ विविधः ॥ ( १ )॥ बहुविधः ॥ ( २ ) ॥ नानारूपः ॥ ( ३ ) ॥ पृथग् विधा यस्य पृथग्विधः ॥ ( ४ ) ॥ **चत्वारि नानारूपस्य** ॥ ९३ ॥ **अवेति** ॥ अवरीणः ॥ ( १ ) ॥ धिक्कृतः ॥ ( २ ) ॥ पर्यायान्तरं दर्शयितुमुक्तस्यैव धिक्कृतस्यानुवादः ॥ यद्वा निर्भर्त्सित उक्तः, अत्र तु निन्दितमात्रे ॥ **द्वे धिक्कृतस्य** ॥ **अवेति** ॥ "अवध्वस्तं परित्यक्ते निन्दितेऽप्यवचूर्णिते" इति विश्वः ॥ "**अपध्वस्तः**" इत्यपि पाठः ॥ ( १ ) ॥ अवचूर्णितः ॥ ( २ ) ॥ **द्वे क्षिप्तसुधादिचूर्णस्य** ॥ **अनेति** ॥ अनायासकृतम् ॥ ( १ ) फाण्टम् ॥ ( २ ) ॥ **द्वे अनायासेन कृतस्य क्वाथविशेषस्य** ॥ **स्वेति** ॥ स्वनितम् ॥ ( १ ) ॥ ध्वनितम् ॥ ( २ ) ॥ **द्वे कृतशब्दस्य** ॥ ९४ ॥ **वेति** ॥ बद्धम् ॥ ( १ ) ॥ संदानितम् ॥ ( २ ) मूतम् ॥ ( ३ ) ॥ उद्दितम् ॥ ( ४ ) ॥ संदितम् ॥ (५) ॥ सितम् ॥ ( ६ ) ॥ **षट् बद्धस्य** ॥ **नीति** ॥ निष्पक्कम् ॥ ( १ ) ॥ क्वथितम् ॥ ( २ ) ॥ **द्वे निश्चयेन पक्वस्य** ॥ **पेति** ॥ शृतम् ॥ ( १ ) ॥ **एकं क्षीरादीनां पाकस्य** ॥ ९५ ॥ **नीति** ॥ आदिना 'निर्वाणो हस्ती' ॥ 'निमग्नः' इत्यर्थः ॥ "**निर्वाणमस्तंगमने** निर्वृतौ गजमज्जने ॥ संगमेऽप्यपवर्गे च" इति विश्वः ॥ ( १ ) ॥ **एकं मुन्यादौ प्रयुक्तस्य** ॥ **निर्वेति** ॥ निर्वातः ॥ ( १ ) ॥ **एकं गतस्यानिलस्य** ॥ **पेति** ॥ पक्वम् ॥ ( १ ) ॥ परिणतम् ॥ ( २ )॥ **द्वे परिणामं प्राप्तस्य** ॥ **ग्विति** ॥ गूनम् ॥ ( १ ) ॥ हन्नम् ॥ ( २ ) ॥ **द्वे गुदनिष्कासितपुरीषस्य** ॥ **मीति** ॥ मीढम् ॥ ( १ ) ॥ मूत्रितम् ॥ ( २ ) ॥ **द्वे उपस्थनिष्कासितमूत्रस्य** ॥ ९६ ॥ **प्विति** ॥ पुष्टम् ॥ ( १ ) ॥ भौवादिकस्य क्विट् ॥ पुषितम् ॥ ( २ ) ॥ **द्वे यस्य पोषणं कृतं तस्य** ॥ **सविति** ॥ सोढम् ॥ ( १ ) ॥ क्षान्तम् ॥ ( २ ) ॥ **द्वे क्षान्तस्य** ॥ **उद्वेति** ॥ उद्वान्तम् ॥ ( १ ) ॥ उद्गतम् ॥ ( २ ) ॥ **द्वे वमित्वा त्यक्तस्यान्नादेः** ॥ **देति** ॥ "दान्तस्तु दमितेऽपि स्यात्तपःक्लेशसहे त्रिषु"

---

१—'**मूर्णम्**' इति पाठे 'मुर्व बन्धने' (भ्वा० प० से०)। क्तः(३।२।१०२) "राल्लोपः"(६।४।२१) इति रलोपः । "हलि च" ( ८।२।७७ ) इति दीर्घः । निष्ठानत्वम् ( ८।२।४२ )—इति मुकुटः ॥२—ओहाङः क्ते "**उद्धानम्**" इति 'ओ वै शोषणे' इत्यस्मात् क्ते " **उद्धानम्** " इति वा क्वचित्पाठः—इति मुकुटरहस्यम् ॥ ३—"उपाहितां वक्षसि पीवरस्तने" इति भारविः—इति मुकुटः ॥

ज्ञप्तस्तु ज्ञपिते छन्नश्छादिते पूजितेऽञ्चितः । पूर्णस्तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः९८ ॥
प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते । वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते ॥ ९९॥
निष्प्रभे विगतारोकौ विलीने विद्रुतद्रुतौ । सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ १००॥
ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ॥१०१॥

स्यादर्हिते नमस्यितनमसितमपचायितार्चितापाचितम् ।
वरिवसिते वरिवस्यितमुपासितं चोपचरितं चासंतापितस्तु तप्तो धूपितधूपायितौ च दूनश्च
हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः। छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्१०३

इति मेदिनी ॥(१)॥ दमितः॥(२)॥द्वे कृतं दमनं यस्य वृषभादेस्तस्य ॥ शेति ॥ "शान्तोऽतिमुक्तरसयोः पुंसि त्रिषु शमान्विते। अव्ययं धारणे शान्तम्" इति मेदिनी॥(१)॥शमितः॥(२)॥द्वे शान्तस्य॥ प्रेति॥ प्रार्थितः ॥ (१) ॥ "अर्दितं याचितेऽपि स्याद्गातव्याधौ च हिंसिते" इति मेदिनी॥(२)॥द्वे याचितस्य ॥९७॥ ज्ञेति॥ ज्ञप्तः ॥ (१) ज्ञपितः ॥ (२)॥ द्वे ज्ञानं प्रापितस्य ॥ छेति ॥ " छन्नं रहश्छादितयोः " इति हैमः ॥(१)॥ छादितः ॥ ( २ ) ॥ द्वे आच्छादितस्य॥ प्विति ॥ पूजितः ॥ ( १ ) ॥ आञ्चितः॥ " अर्चितः" इति च ॥ ( २ ) ॥ द्वे पूजितस्य ॥ प्विति ॥ "पूर्णः कृत्स्ने पूरिते च" इति हैमः ॥ ( १ ) ॥ पूरितः ॥ ( २ ) ॥ द्वे पूरितस्य ॥ क्लीति ॥ क्लिष्टः ॥ ( १ ) ॥ क्लिशितः ॥( २ )॥ द्वे प्राप्तक्लेशस्य ॥ अवेति ॥ अवसितः ( १ ) ॥ " सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा " इति हैमः ॥ ( २ ) ॥ द्वे समाप्तस्य॥९८॥ प्रिति॥ प्रुष्टः ॥ ( १ ) ॥ प्लुष्टः ॥ ( २ ) ॥ " उषितं व्युषिते प्लुष्टे " इति हैमः ॥ ( ३ ) ॥ दग्धः ॥ ( ४ )॥ चत्वारि दग्धस्य ॥ तेति ॥ तष्टः ॥ ( १ ) ॥ त्वष्टः ॥ ( २ ) ॥ अतनुस्तनुरकारि तनूकृतः ॥ ( ३ ) ॥ त्रीणि तनूकृतस्य ॥ वेधीति ॥ वेधितः ॥ ( १ ) ॥ छिद्रितः ॥ ( २ ) ॥ " विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु " इति विश्वः ॥ ( ३ ) ॥ त्रीणि विद्धस्य ॥ वीति ॥ " विन्नं विचारिते लब्धे" इति विश्वः ॥ ( १ ) ॥ "वित्तं क्लीबं धने, वाच्यलिङ्गं ख्याते विचारिते " इति मेदिनी ॥ ( २ ) ॥ विचारितः ॥ ( ३ ) ॥ त्रीणि विचारितस्य ॥ ९९ ॥ नीति ॥ निष्प्रभः ॥ ( १ ) ॥ "विगतौ वीतनिष्प्रभौ " इति रुद्रः ॥ ( २ ) ॥ अरोकः ॥ ( ३ ) ॥ त्रीणि प्रभाहीनस्य ॥ वीति ॥ विलीनः ॥ ( १ ) ॥ विद्रुतः ॥ ( २ ) ॥ " द्रुतं शीघ्रविलीनयोः " इति हैमः ॥ ( ३ ) ॥ त्रीणि स्वतःप्राप्तद्रवीभावस्य ॥ सीति ॥ "सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे " इति हैमः ॥ ( १ ) ॥ निर्वृत्तः ॥ ( २ ) ॥ निष्पन्नः ॥ ( ३ ) ॥ त्रीणि सिद्धस्य॥ देति ॥ दारितः ॥ ( १ ) ॥ भिन्नः ॥ ( २ ) ॥ भेदितः ॥ ( ३ ) ॥ त्रीणि भिन्नस्य॥१००॥ विति ॥ ऊतम् ॥ (१)॥ "स्यूतिः सीवनसंतत्योः स्त्रियां स्यूतः प्रसेवके । ना त्रिषूते " इति मेदिनी ॥ ( २ ) ॥ उतम् ॥( ३ )॥ तन्तुभिः संततं तन्तुसंततम् ॥ ( ४ ) ॥ चत्वारि तन्तुसंततस्य ॥१०१॥ स्येति ॥ आर्हितम् ॥ (१)॥ नमस्कृतं नमस्यितम् ॥(२)॥ नमसितम् ॥ (३) ॥ अपचायितम् ॥ ( ४ ) ॥ आर्चितम् ॥ ( ५ ) ॥ अपाचितम् ॥ ( ६ ) ॥ षट् नमस्कृतस्य ॥ वेति ॥ वारिवासितम् ॥ ( १ ) ॥ वरिवास्यितम् ॥ ( २ ) ॥ उपासितम् ॥ ( ३ ) ॥ उपचरितम् ॥( ४ )॥ चत्वारि पूजितस्य ॥ समिति ॥ संतापितम् ॥ ( १ ) ॥ तप्तम् ॥ ( २ ) ॥ धूपितम् ॥ ( ३ )॥ धूपायितम् ॥ ( ४ ) ॥ दूनम् ॥ ( ५ ) ॥ एभ्योऽकर्मकेभ्यः कर्तरि क्तेऽप्येतान्येव रूपाणि ॥ पञ्च संतापितस्य ॥ १०२ ॥ हृिति ॥ "हृष्टो रोमाञ्चितेऽपि च । जातहर्षे प्रतिहते[1] विस्मितेऽप्यभिधेयवत्" इति मेदिनी॥ ( १ ) ॥ मत्तः ॥ ( २ ) ॥ तृप्तः ॥ ( ३ ) ॥ प्रह्लन्नः ॥ (४) ॥ प्रमुदितः॥ ( ५ ) ॥ प्रीतः ॥ ( ६ ) ॥ षट् हृष्टस्य ॥ छीति ॥ "छिन्नं कृत्ते त्रिलिङ्गं स्याद्दुर्च्यामपि योषिति " इति मेदिनी ॥ ( १ ) ॥ छातम् ॥( २ ) ॥ लूनम् ॥ ( ३ ) ॥ कृत्तम् ॥ ( ४ ) ॥ दातम् ॥ ( ५ ) ॥ दितम् ॥ ( ६ ) ॥ छितम् ॥

१—प्रतिहते यथा—"शीतहृष्टरदनैः सवेपथुः" इत्यनेकार्थकैरवाकरकौमुदी ॥

स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्। लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्। आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च त्राणं त्रातं रक्षितमवितं गोपायितं गुप्तम्। अवगणितमवमतावज्ञाते अवमानितं च परिभूते १०६ त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टम्। उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते। ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् । ईलितशस्तपणायितपनायितप्रणुतपणित- पनितानि ॥ १०९ ॥

अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि। भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम् अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते । क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥१११॥

(७) ॥ वृक्णम् ॥ (८) ॥ अष्टौ छिन्नस्य ॥ १०३ ॥ स्रेति ॥ स्रस्तम् (१) ॥ ध्वस्तम् ॥ (२) ॥ भ्रष्टम् ॥ (३) ॥ स्कन्नम् ॥ (४) ॥ पन्नम् ॥ (५) ॥ च्युतम् ॥ (६) ॥ गलितम् ॥ (७) ॥ एभ्यः कर्तरि क्ते एतान्येव रूपाणि ॥ सप्त गलितस्य ॥ लेति ॥ लब्धम् ॥ (१) ॥ प्राप्तम् ॥ (२) ॥ विन्नम् ॥ (३) ॥ भावितम् ॥ (४) ॥ आसादितम् ॥ (५) ॥ भूतम् ॥ (६) ॥ षट् लब्धस्य ॥ १०४ ॥ अन्वयिति ॥ अन्वेषितम् ॥ (१) ॥ गवेषितम् ॥ (२) ॥ अन्विष्टम् ॥ (३) ॥ मार्गितम् ॥ (४) ॥ मृगितम् ॥ (५) ॥ पञ्च अन्वेषितस्य ॥ आर्द्रमिति ॥ "आर्द्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयवत्" इति मेदिनी ॥ (१) ॥ सार्द्रम् ॥ (१) ॥ क्लिन्नम् ॥ (३) ॥ तिमितम् ॥ (४) ॥ "स्तिमितस्तरले क्लिन्ने" इति रुद्रः ॥ (५) ॥ समुन्नम् ॥ (६) ॥ उत्तम् ॥ (७) ॥ सप्त आर्द्रस्य ॥ १०५ ॥ त्रेति ॥ "त्राणं त्राते रक्षणे च त्रायमाणौषधावपि" इति हैमः ॥ (१) ॥ त्रातम् ॥ (२) ॥ रक्षितम् ॥ (३) ॥ अवितम् ॥ (४) ॥ गोपायितम् ॥ (५) ॥ "गुप्तं गूढे त्राते" इति हैमः ॥ (६) ॥ षट् रक्षितस्य ॥ अवेति ॥ अवगणितम् ॥ (१) ॥ अवमतम् ॥ (२) ॥ अवज्ञातम् ॥ (३) ॥ अवमानितम् ॥ (४) ॥ परिभूतम् ॥ (५) ॥ पञ्च परिभूतस्य ॥१०६॥ त्येति ॥ त्यक्तम् ॥ (१) ॥ हीनम् ॥ (२) ॥ विधुतम् ॥ (३) ॥ समुज्झितम् ॥ (४) ॥ "धूतौ कम्पितभर्त्सितौ" इति हेमचन्द्रः ॥ (५) ॥ उत्सृष्टम् ॥ (६) ॥ षट् त्यक्तस्य ॥ उक्तमिति ॥ उक्तम् ॥ (१) ॥ भाषितम् ॥ (२) ॥ उदितम् ॥ (३) ॥ जल्पितम् ॥ (४) ॥ आख्यातम् ॥ (५) ॥ अभिहितम् ॥ (६) ॥ लपितम् ॥ (७) ॥ सप्त उक्तस्य ॥ १०७ ॥ बिवति ॥ "बुद्धः पण्डिते बोधिते जिने" इति हैमः ॥ (१) ॥ बुधितम् ॥ (२) ॥ मनितम् ॥ (३) ॥ विदितम् ॥ (४) ॥ प्रतिपन्नम् ॥ (५) ॥ अवसितम् ॥ (६) ॥ अवगतम् ॥ (७) ॥ सप्त विदितस्य ॥ विति ॥ ऊरीकृतम् ॥ (१) ॥ उररीकृतम् ॥ (२) ॥ अङ्गीकृतम् ॥ (३) ॥ आश्रुतम् ॥ (४) ॥ प्रतिज्ञातम् ॥ (५) ॥ १०८ ॥ संगीर्णम् ॥ (६) ॥ "विदितं बुधिताश्रुतयोः" इति मेदिनी ॥ (७) ॥ संश्रुतम् ॥ (८) ॥ समाहितम् ॥ (९) ॥ उपश्रुतम् ॥ (१०) ॥ उपगतम् ॥ (११) ॥ एकादश अङ्गीकृतस्य ॥ ईलीति ॥ ईलितम् ॥ (१) ॥ "शस्तं क्षेमे प्रशस्ते च" इति हैमः ॥ (२) ॥ पणायितम् ॥ (३) ॥ पनायितम् ॥ (४) ॥ प्रणुतम् ॥ (५) ॥ पणितम् ॥ (६) ॥ पनितम् ॥ (७) ॥ १०९ ॥ गीर्णम् ॥ (८) ॥ वर्णितम् ॥ (९) ॥ अभिष्टुतम् ॥ (१०) ॥ ईडितम् ॥ (११) ॥ स्तुतम् ॥ (१२) ॥ द्वादश स्तुतमर्थो येषां तेषाम् ॥ भेति ॥ भक्षितम् ॥ (१) ॥ चर्वितम् ॥ (२) ॥ लिप्तम् ॥ "लीढम्" इति पाठः ॥ (३) ॥ प्रत्यवसितम् ॥ (४) ॥ गिलितम् ॥ (५) ॥ खादितम् ॥ (६) ॥ प्सातम् ॥ (७) ॥ ११० ॥ अभ्यवहृतम् ॥ (८) ॥ अन्नम् ॥ (९) ॥ जग्धम् ॥ (१०) ॥ ग्रस्तम् ॥ (११) ॥ ग्लस्तम् ॥ (१२) ॥ अशितम् ॥ (१३) ॥ भुक्तम् ॥

**क्षिप्रक्षुद्राभीप्सितपृथुपीवबहुप्रकर्षार्थाः । साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥**
**बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ॥**

इति विशेष्यानिघ्नवर्गः ।

---

**प्रकृतिप्रत्ययाद्यर्थैः संकीर्णे लिङ्गमुन्नयेत् । कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ॥१॥**
**साकल्यासङ्गवचने पारायणतुरायणं । यदृच्छा स्वैरिता हेतुशून्या त्वास्था विलक्षणम् ॥२॥**
**शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः । अवदानं कर्मवृत्तं काम्यदानं प्रवारणम् ॥३॥**

( १४ ) ॥ **चतुर्दश भक्षितस्य** ॥ क्षेपोति ॥ अतिशयेन क्षिप्रः क्षेपिष्ठः ॥ ( १ ) ॥ अतिशयेन क्षुद्रः क्षोदिष्ठः ॥ ( १ ) ॥ अतिशयेन प्रियः प्रेष्ठः ॥ ( १ ) ॥ अतिशयेन उरुः वरिष्ठः ॥ ( १ ) ॥ अतिशयेन स्थूलः स्थविष्ठः ॥ ( १ ) ॥ अतिशयेन बहुलः बंहिष्ठः ॥ ( १ ) ॥ १११ ॥ "पीवर" इति पाठस्त्वयुक्तः छन्दोभङ्गात् ॥ 'पीव' इति नान्तो युक्तः ॥ क्षेपिष्ठादीनां क्षिप्रादिभिर्यथासंख्यं ज्ञेयम् ॥ **एकैकमतिशयेन क्षिप्रादेः** ॥ सेति ॥ अतिशयेन बाढः साधिष्ठः ॥ ( १ ) ॥ अतिशयेन दीर्घः द्राघिष्ठः ॥ ( १ ) ॥ अतिशयेन स्फिरः स्फेष्ठः ॥ ( १ ) ॥ अतिशयेन गुरुः गरिष्ठः ॥ ( १ ) ॥ अतिशयेन ह्रस्वः ह्रसिष्ठः ॥ ( १ ) ॥ अतिशयेन वृन्दारकः वृन्दिष्ठः ॥ ( १ ) ॥ ११२ ॥ साधिष्ठादीनां बाढादिभिर्यथासंख्यं बोध्यम् ॥ **एकैकमतिशयेन बाढादेः** ॥

इति विशेष्यनिघ्नवर्गविवरणम् ॥

---

प्रेति ॥ संकीर्णार्थैः संकीर्णलिङ्गैश्चारब्धत्वात्संकीर्णे वर्गे प्रकृत्यर्थादिभिर्लिङ्गमूहेत ॥ यथा "अपरस्पराः" ॥ अयं हि लिङ्गविशेषाभिधायिप्रत्ययस्याविधानात्प्रकृतिः ॥ अस्य च "परवल्लिङ्गम्–" ( २।४।२६ ) इत्यतिदेशात्परशब्दस्यैव लिङ्गं भवति ॥ परशब्दस्य च सर्वनामत्वात्त्रिलिङ्गत्वम् ॥ प्रत्ययार्थेन यथा––शान्तिः ॥ स्त्रियां क्तिनो विधानात् ॥ विधूननम् ॥ नपुंसके ल्युटो विहितत्वात् ॥ आद्यशब्देन रूपभेदादिग्रहः ॥ रूपभेदेन कर्मादेः क्लीबत्वादि ॥ साहचर्येण डिम्बादेः पुंस्त्वादि ॥ यद्वा भिन्नजातीयेन लिङ्गेन संसर्गे सति अत्र वर्गे वर्गान्तरे च प्रकृत्यर्थाद्यैर्लिङ्गं ज्ञेयम् ॥ लिङ्गसंग्रहे वक्ष्यमाणमपि लिङ्गमुन्नेयत्वेनेहोक्तम् ॥ **केति** ॥ **"कर्म** व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्" इति रुद्रः ॥ ( १ ) ॥ क्रिया ॥ ( २ ) ॥ **द्वे क्रियायाः** ॥ तेति ॥ तत्सातत्ये क्रियायाः क्रियावतां च नैरन्तर्ये ॥ अपरे च परे च, इति द्वन्द्वः ॥ क्रियासातत्ये 'अपरस्परं गच्छति' ॥ "निर्दिष्टं कर्मसातत्ये सुधीभिरपरस्परम्" इति भागुरिः ॥ क्रियावतां सातत्ये तु लिङ्गत्रयम्॥ 'अपरस्पराः सार्थाः स्त्रियश्चागच्छन्ति' ॥ 'अपरस्पराणि कुलानि'॥(१)॥**एकं नैरन्तर्येण क्रियायाः क्रियावतश्च सातत्ये** ॥ १ ॥ **सेति** ॥ साकल्यं च आसङ्गश्च तौ वक्तः ॥ पारस्य अयनं पारायणम् ॥–क्लीबलिङ्गमेव–इत्येके ॥ **"परायणम्"** इति वा पाठः ॥ परमयनम् ॥ "आश्रय तत्पराभोष्टे **परायणपदं** विदुः" इति शाश्वतः ॥ ( १ ) ॥ तुरायणम् ॥ ( १ ) ॥ **एकैकं क्रमेण साकल्यवचनस्यासंगवचनस्य च** ॥ **येति** ॥ यदृच्छा ॥ ( १ ) ॥ स्वैरिता ॥ ( २ ) ॥ **द्वे स्वातन्त्र्यस्य** ॥ **ह्रयेति** ॥ हेतुना कारणेन शून्या आस्था स्थितिः ॥ विगतं लक्षणमालोचनं यत्र ॥ "**विलक्षणं** मतं स्थानं यद्भवेन्निष्प्रयोजनम्" इति भागुरिः ॥ ( १ ) ॥ **एकं हेतुशून्यास्थायाः** ॥ २ ॥ **शेति** ॥ शमथः ॥ ( १ ) ॥ शमः ॥ (२)॥ शान्तिः ॥ ( ३ ) ॥ **त्रीणि कामक्रोधाद्यभावस्य** ॥ **देति** ॥ दान्तिः ॥ ( १ ) ॥ दमथः ॥ ( २ ) ॥ दमः ॥ ( ३ ) ॥ त्रीणि तपःक्लेशसहनस्य ॥ **अवेति** ॥ अवदानम् ॥ क्वचित् "अपदानम्" इति पाठः ॥ ( १ ) ॥ कर्मणः कर्माणि वा वृत्तं कर्मवृत्तम् ॥ ( २ ) ॥ **द्वे प्रशस्तकर्मणः** ॥ **केति** ॥ काम्येनेच्छया, काम्यस्य वरस्त्रीहस्त्यश्वादेर्वा दानं काम्यदानम् ॥ ( १ ) "**प्रवारणं** महा-

---

१—"रत्नपारायणं नाम लङ्केयं मम मैथिली" इति भट्टिः—इति मुकुटः ॥ २—"प्रवारणम्" दन्तोष्ठ्यमध्यम् । '**प्रचारणम्**' चवर्गाद्यमध्यं वा—इति पीयूषाख्यव्याख्या ॥

**वशक्रिया संवननं मूलकर्म तु कार्मणम् । विधूननं विधुवनं तर्पणं प्रीणनावनम् ॥ ४ ॥**
**पर्याप्तिः स्यात्परित्राणं हस्तवारणमित्यपि । सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ॥ ५ ॥**
**आक्रोशनमभीषङ्गः संवेदो वेदना न ना । संमूर्छनमभिव्याप्तिर्याच्ञा भिक्षाऽर्थनाऽर्दना ॥६॥**
**वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने । आप्रच्छनमथाम्नायः संप्रदायः क्षये क्षिया ॥ ७ ॥**
**ग्रहे ग्राहो वशः कान्तौ रक्षणस्त्राणे रणः क्वणे । व्यधो वेधे पचा पाके हवो हूतौ वरो वृतौ ८॥**
**ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ।स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिःपृक्तौ स्नवःस्रवे**

दानम्'' इति त्रिकाण्डशेषः ॥ ''प्रवारणं निषेधे स्यात्काम्यदाने च न द्वयोः'' इति मेदिनी ॥ ( २ ) ॥ द्वे पुष्कलदानस्य ॥ ३ ॥ वेति ॥ वशक्रिया ॥ ( १ ) ॥ संवननम् ॥ ( २ ) ॥ द्वे वशीकरणस्य ॥ म्विति ॥ ओषध्यादिमूलेन कर्म मूलकर्म ॥ ( १ ) ॥ ''कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च'' इति मेदिनी ॥ ( २ ) ॥ द्वे ''कार्मण'' इति ख्यातस्य ॥ वीति ॥ विधूननम् ॥ ( १ ) ॥ विधुवनम् ॥ ( २ ) ॥ द्वे कम्पनस्य ॥ तेति ॥ तर्पणम् ॥ ( १ ) ॥ प्रीणनम् ॥ ( २ ) ॥ अवनम् ॥ ( ३ ) ॥ त्रीणि तृप्तेः ॥ ४ ॥ पेति ॥ पर्याप्तिः ॥ ( १ ) ॥ परित्राणम् ॥ ( २ ) ॥ हस्तेन हस्तस्य वा वारणं हस्तवारणम् ॥ क्वचित् ''हस्तधारणम्'' इति पाठः ॥ ( ३ ) ॥ त्रीणि मारणोद्यतनिवारणस्य ॥ सायिति ॥ सेवनम् ॥ ( १ ) ॥ सीवनम् ॥ ( २ ) ॥ स्यूतिः ॥ ( ३ ) ॥ ''सेवस्तु सेवनं स्यूतिः--'' इति पाठस्तु न्याय्यः ॥ त्रीणि सूचीकर्मणः ॥ वीति ॥ विदरः ॥ ( १ ) ॥ स्फुटनम् ॥ ( २ ) ॥ भिदा ॥ ( ३ ) ॥ त्रीणि द्विधाभावस्य ॥ ५ ॥ आक्रविति ॥ आक्रोशनम् ॥ ( १ ) ॥ अभीषङ्गः ॥ ( २ ) ॥ द्वे शापस्य ॥ समिति । संवेदः ॥ ( १ ) ॥ वेदना ॥ ( २ ) ॥ द्वे अनुभवस्य ॥ समिति ॥ संमूर्च्छनम् ॥ ( १ ) ॥ अभिव्याप्तिः ॥ ( २ ) ॥ द्वे सर्वतोव्याप्तेः ॥ येति ॥ याच्ञा ॥ ( १ ) ॥ भिक्षा ॥ ( २ ) ॥ अर्थना ॥ ( ३ ) ॥ अर्दना ॥ ( ४ ) ॥ चत्वारि भिक्षायाः ॥ ६ ॥ वेति ॥ ''वर्धनं छेदने वृद्धौ'' इति दन्तोष्ठ्यादावजयः ॥ ( १ ) ॥ छेदनम् ॥(२)॥ द्वे छेदनस्य ॥ अथेति ॥ आनन्दनम् ॥ ''आमन्त्रणम्'' इति क्वचित्पाठः ॥ ( १ ) ॥ सभाजनम् ॥ ( २ ) ॥ आप्रच्छनम् ॥ ( ३ ) ॥ त्रीण्यालिङ्गनकुशलप्रश्नादिनाऽऽनन्दनस्य ॥ अथेति ॥ आम्नायः ॥ ( १ ) ॥ संप्रदायः ॥ ( २ ) ॥ द्वे गुरुपरम्परागतसदुपदेशस्य ॥ क्षेति ॥ क्षयः ॥ ( १ ) ॥ क्षिया ॥ ( २ ) ॥ द्वे अपचयस्य ॥ ७ ॥ ग्रेति ॥ ग्रहः ॥ ( १ ) ॥ ग्राहः ॥ ॥ ( २ ) ॥ द्वे ग्रहणस्य ॥ वेति ॥ वशः ॥ ( १ ) ॥ कान्तिः ॥ ( २ ) ॥ द्वे इच्छायाः ॥ रेति ॥ रक्षणः ॥ ( १ ) ॥ त्राणः ॥ ( २ ) ॥ द्वे रक्षणस्य ॥ रेति ॥ रणः ॥ ( १ ) ॥ क्वणः ॥ ( २ )॥ द्वे शब्दकरणस्य ॥ व्येति ॥ व्यधः ॥ ( १ ) ॥ वेधः ॥ ( २ ) ॥ द्वे वेधनस्य ॥ पेति ॥ पचा ॥ ( १ ) ॥ पाकः ॥ ( २ ) ॥ द्वे पचनस्य ॥ होति ॥ हवः ॥ ( १ ) ॥ हूतिः ॥ ( २) ॥ द्वे आह्वानस्य ॥ वेति ॥ ''तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः'' ॥ ( १ ) ॥ वृतिः ॥ ( २ ) ॥ द्वे वरस्य ॥ ८ ॥ ओषेति ॥ ओषः ॥ ( १ ) ॥ प्लोषः ॥ ( २ ) ॥ द्वे दाहस्य ॥ नेति ॥ नयः ॥ (१)॥ नायः ॥ ( २ ) ॥ द्वे नीतेः ॥ ज्येति ॥ ज्यानिः ॥ ( १ ) ॥ जीर्णः ॥ ( २ ) ॥ द्वे जीर्णत्वस्य ॥ भ्रेति ॥ भ्रमः ॥ ( १ ) ॥ भ्रमिः ॥ ( २ ) ॥ द्वे भ्रमणस्य ॥ स्फेति ॥ ''स्फातिर्वृद्धिः प्रसारो ना'' इति बोपालितः ॥ ( १ ) ॥ वृद्धिः ॥ ( २ ) ॥ द्वे वृद्धेः ॥ प्रेति ॥ प्रथा ॥ ( १ ) ॥ ख्यातिः ॥ ( २ ) ॥ द्वे ख्यातेः ॥ स्प्रिति ॥ स्पृष्टिः ॥ ( १ ) ॥ पृक्तिः ॥ ( २ ) ॥ द्वे स्पर्शनस्य ॥ स्नोति ॥ स्नवः ॥

१—''संवननम्'' तृतीयस्तवर्गपञ्चमः । ''संवपनम्'' पवर्गाद्यः इत्येके । ''संवदनम्'' तवर्गतृतीयः, इत्यपरे । ''जयश्रियः संवदनं यतस्तत् '' इति मणौ रघुवंशः—इति मुकुटपीयुषौ ॥

वेधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा । प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे १०
उत्कर्षोऽतिशये संधिः श्लेषे विषय आशये । क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ॥११॥
उन्नाय उन्नये श्रायः श्रयणे जयने जयः । निगादो निगदे मादो मद उद्वेग उद्भ्रमे ॥१२॥
विमर्दनं परिमलेऽभ्युपपत्तिरनुग्रहः । निग्रहस्तु निरोधः स्यादभियोगस्त्वभिग्रहः ॥ १३ ॥
मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ । बन्धनं प्रसितिश्चारः स्पर्शः स्प्रष्टोपतप्तरि ॥ १४॥
निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् । परिणामो विकारो द्वे समे विकृतिविक्रिये१५

॥ ( १ ) ॥ स्रवः ॥ ( २ ) ॥ द्वे प्रस्रवणस्य ॥ ९ ॥ वधेति ॥ वेधा ॥ "विधा गजान्ने ऋद्धौ च" इति मेदिनी ॥ क्वचित् "एधा" इति पाठः ॥ ( १ ) ॥ समृद्धिः ॥ ( २ ) ॥ द्वे धनसंपत्तेः ॥ स्फ्वेति ॥ स्फुरणम् ॥ "स्फरणम्" अपि ॥ ( १ ) ॥ स्फुरणा ॥ ( २ ) ॥ द्वे स्फुरणस्य ॥ प्रेति ॥ प्रमितिः ॥ ॥ ( १ ) ॥ प्रमा ॥ ( २ ) ॥ द्वे प्रमाज्ञानस्य ॥ प्रेति ॥ प्रसूतिः ॥ ( १ ) ॥ प्रसवः ॥ ( २ ) ॥ द्वे प्रसवस्य ॥ प्रेरणस्य वा ॥ श्च्यविति ॥ श्च्योतः ॥ ( १ ) ॥ प्राघारः ॥ ( २ ) ॥ द्वे क्षरणस्य ॥ क्लेति ॥ क्लमथः ॥ ( १ ) ॥ क्लमः ॥ ( २ ) ॥ द्वे ग्लानेः ॥ १० ॥ उदिति ॥ उत्कर्षः ॥ ( १ ) ॥ अतिशयः ॥ ( २ ) ॥ द्वे आधिक्यस्य ॥ समिति ॥ संधिः ॥ ( १ ) ॥ श्लेषः ॥ ( २ ) ॥ द्वे संधानस्य ॥ वीति ॥ विषयः ॥ ( १ ) ॥ आशयः ॥ "आश्रयः" इति च ॥ ( २ ) ॥ द्वे आश्रयस्य ॥ क्षिपेति ॥ क्षिपा ॥ ( १ ) ॥ क्षेपणम् ॥ ( २ ) ॥ द्वे प्रेषणस्य ॥ गीति ॥ गीर्णिः ॥ ( १ ) ॥ गिरिः ॥ ( २ ) ॥ द्वे गिलनस्य ॥ गुरेति ॥ गुरणम् ॥ ( १ ) ॥ उद्यमः ॥ ( २ ) ॥ द्वे भाराद्युद्यमनस्य ॥ ११ ॥ विति ॥ उन्नायः ॥ ( १ ) ॥ उन्नयः ॥ ( २ ) ॥ द्वे उन्नयनस्य ॥ श्रेति ॥ श्रायः ॥ ( १ ) ॥ श्रयणम् ॥ ( २ ) ॥ द्वे सेवायाः ॥ जयेति ॥ जयनम् ॥ ( १ ) ॥ जयः ॥ ( २ ) ॥ द्वे जयस्य ॥ निगेति ॥ निगादः ॥ ( १ ) ॥ निगदः ॥ ( २ ) ॥ द्वे गदनस्य ॥ मेति ॥ मादः ॥ ( १ ) ॥ मदः ॥ ( २ ) ॥ द्वे हर्षस्य ॥ उदिति ॥ उद्वेगः ॥ ( १ ) ॥ उद्भ्रमः ॥ ( २ ) ॥ द्वे उद्वेजनस्य ॥ १२ ॥ वीति ॥ विमर्दनम् ॥ ( १ ) ॥ परिमलः ॥ ( २ ) ॥ द्वे कुङ्कुमादिमर्दनस्य ॥ अभीति ॥ अभ्युपपत्तिः ॥ ( १ ) ॥ अनुग्रहः ॥ ( २ ) ॥ द्वे हितसंपादनाहितनिवारणप्रवृत्तेः ॥ नीति ॥ निग्रहः ॥ ( १ ) ॥ निरोधः ॥ (२)॥ द्वे निरोधस्य ॥ अभीति ॥ अभियोगः ॥(१)॥ "अभिग्रहोऽभिग्रहणेऽप्यभियोगे च गौरवे" इति रुद्रः ॥(२)॥ द्वे अभिग्रहणस्य॥१३॥मुष्टीति॥ मुष्टिबन्धः॥(१)॥संग्राहः॥(२)॥ द्वे मुष्टिबन्धनस्य॥डिम्बे इति॥"भयाध्वपुष्कसेऽपि डिम्बः प्लीहनि विप्लवे" इति रभसः ॥ ( १ ) ॥ डमरः ॥ ( २ ) ॥ विप्लवः ॥ ( ३ ) ॥ त्रीणि धाडकलुण्ठनादेः ॥—अशस्त्रकलहस्य—इति स्वामी ॥ बेति ॥ बन्धनम् ॥ ( १ ) ॥ प्रसितिः ॥ ( २ ) ॥ "बन्धापसर्पयोश्चारः" इति रुद्रः ॥ ( ३ ) ॥ त्रीणि बन्धनस्य ॥ मुकुटस्तु—बन्धनसाधनरज्जुनिगडादेः—इत्याह ॥ स्वामी तु चारस्थाने 'स्त्वारम्' पठित्वा स्त्वारादीनां चतुर्णां पर्यायतामाह ॥ स्पेति ॥ स्पर्शः॥ 'स्पशः' इति रेफहीनपाठः ॥ ( १ ) ॥ स्प्रष्टा ॥ ( २ ) ॥ उपतप्ता ॥ ( ३ ) ॥ त्रीणि संतप्तस्य ॥ संतापस्य वा ॥ १४ ॥ नीति ॥ "निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च" इति धरणिः ॥ ( १ ) ॥ विप्रकारः ॥ ( २ ) ॥ द्वे अपकारस्य ॥ एति ॥ आकारः ॥ ( १ ) ॥ इङ्गः ॥ ( २ ) ॥ इङ्गितम् ॥ ( ३ ) ॥ त्रीणि अभिप्रायानुरूपचेष्टायाः ॥ परीति ॥ परिणामः ॥ ( १ ) ॥ विकारः ॥ ( २ ) ॥ विकृतिः ॥ ( ३ ) ॥ विक्रिया ॥ ( ४ ) ॥ द्वयोः

---

१—दैवादिकस्य दीर्घादि 'गूरी' धातोः "गूरणम्" इति स्वामी—इति मुकुटः ॥—चुरादेः "गोरणम्" अपि—इति स्वामी ॥ पीयूषव्याख्यायामपि—गुरणं ह्रस्वादि । गूरणं दीर्घादीत्येके । गोरणमित्यपरे—इति प्रकटितम् ॥

२—"विग्रहस्तु विरोधः—"इति वा पाठः—इति स्वामी ॥

अपहारस्त्वपचयः समाहारः समुच्चयः । प्रत्याहार उपादानं विहारस्तु परिक्रमः ॥ १६ ॥
अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् । अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः १७॥
प्रवाहस्तु प्रवृत्तिः स्यात्प्रवहो गमनं बहिः । वियामो वियमो यामो यमः संयामसंयमौ १८ ॥
हिंसाकर्माभिचारः स्याज्जागर्या[1] जागरा द्वयोः । विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये
निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया । विधुरं तु प्रविश्लेषोऽभिप्रायश्छन्द आशयः ॥२०॥
संक्षेपणं समसनं पर्यवस्था विरोधनम् । परिसर्या परीसारः स्यादास्या त्वासना स्थितिः २१॥
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः। संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम्२२
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् । नीवाकस्तु प्रयामः स्यात्संनिधिः[2] संनिकर्षणम्२३

साम्यं स्त्रीत्वात्॥ चत्वारि प्रकृतेरन्यथाभावस्य ॥ १५ ॥ अपेति ॥ अपहारः ॥ ( १ ) ॥ अपचयः ॥ ( २ ) ॥ द्वे अपहरणस्य ॥ समिति ॥ समाहारः ॥ ( १ ) ॥ समुच्चयः ॥ ( २ ) ॥ द्वे राशीकरणस्य ॥ प्रतीति ॥ प्रत्याहारः ॥ ( १ ) ॥ उपादानम् ॥ ( २ ) ॥ द्वे स्वविषयेभ्य इन्द्रियपरावर्तनस्य ॥ वीति ॥ विहारः ॥ ( १ ) ॥ परिक्रमः ॥ ( २ ) ॥ द्वे क्रीडार्थसंचरणस्य ॥ १६ ॥ अभीति ॥ अभिहारः ॥ ( १ ) ॥ अभिग्रहणम् ॥ ( २ ) ॥ द्वे आभिमुख्येन ग्रहणस्य ॥ निरिति ॥ निर्हारः ॥ ( १ ) ॥ अभ्यवकर्षणम् ॥ ( २ ) ॥ शल्यादेर्युक्त्या निःसारणस्य द्वे ॥ अन्विति ॥ अनुहारः ॥ ( १ ) ॥ अनुकारः ॥ ( २ ) ॥ द्वे सदृशकरणस्य ॥ एति ॥ व्ययः ॥ ( १ ) ॥ एकम् अर्थापगमस्य ॥ १७ ॥ प्रेति ॥ प्रवाहः ॥ ( १ ) ॥ प्रवृत्तिः ॥ ( २ ) ॥ द्वे अविच्छेदेन जलादिप्रवृत्तेः ॥ प्रेति ॥ "प्रवहस्तु बहिर्यात्रामातरिश्वप्रभेदयोः" इति विश्वः ॥ ( १ ) ॥ एकं बहिर्गमनस्य ॥ वीति ॥ वियामः ॥ ( १ ) ॥ वियमः ॥ ( २ ) ॥ यामः ॥ ( ३ ) ॥ यमः ॥ ( ४ ) ॥ संयामः ॥ ( ५ ) ॥ संयमः ॥ ( ६ ) ॥ षट् संयमनस्य ॥ स्वामी तु—द्वे विविधयमनस्य । द्वे उपरतिमात्रस्य । द्वे संयमनस्य—इत्याह ॥ १८ ॥ हिंसेति ॥ हिंसाफलं कर्म हिंसाकर्म ॥ ( १ ) ॥ अभिचारः ॥ ( २ ) ॥ द्वे मारणादिक्रियायाः ॥ जेति ॥ जागर्या ॥ ( १ ) ॥ जागरा ॥ ( २ ) ॥ भावे घञि पुंसि ॥ द्वे जागरणस्य ॥ वीति ॥ विघ्नः ॥ ( १ ) ॥ अन्तरायः ॥ ( २ ) ॥ प्रत्यूहः ॥ ( ३ ) ॥ त्रीणि विघ्नस्य ॥ स्यादिति ॥ उपघ्नः ॥ ( १ ) ॥ अन्तिके आश्रीयते, अन्तिकाश्रयः ॥ ( २ ) ॥ द्वे संनिहिताश्रयस्य ॥ आश्रयणस्य वा ॥ १९ ॥ निरिति ॥ निर्वेशः ॥ ( १ ) ॥ उपभोगः ॥ ( २ ) ॥ द्वे उपभोगस्य ॥ परीति ॥ परिसर्पः ॥ ( १ ) ॥ परिक्रिया ॥ ( २ ) ॥ द्वे परिजनादिना वेष्टनस्य ॥ वीति ॥ विधुरम् ॥ ( १ ) ॥ "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" इति त्रिकाण्डशेषः ॥ ( २ ) ॥ द्वे विश्लेषस्य ॥ अभीति ॥ अभिप्रायः ॥ ( १ ) ॥ छन्दः ॥ ( २ ) ॥ आशयः ॥ ( ३ ) ॥ त्रीणि आशयस्य ॥ २० ॥ समिति ॥ संक्षेपणम् ॥ ( १ ) ॥ समसनम् ॥ ( २ ) ॥ द्वे संक्षेपस्य परीति ॥ पर्यवस्था ॥ ( १ ) ॥ विरोधनम् ॥ ( २ ) ॥ द्वे विरोधस्य ॥ ॥ परीति ॥ परिसर्या ॥ ( १ ) ॥ परीसारः ॥ ( २ ) ॥ द्वे सर्वतो गमनस्य ॥ स्यादिति ॥ आस्या ॥ ( १ ) ॥ आसना ॥ ( २ ) ॥ स्थितिः ॥ ( ३ ) ॥ त्रीण्यासनस्य ॥ २१ ॥ वीति ॥ विस्तारः ॥ ( १ ) ॥ विग्रहः ॥ ( २ ) ॥ व्यासः ॥ ( ३ ) ॥ त्रीणि विस्तारस्य ॥ स इति ॥ सः व्यासः ॥ विस्तरः ॥ ( १ ) ॥ एकं शब्दसंबन्धिनी विस्तारस्य ॥ समिति ॥ संवाहनम् ॥ ( १ ) ॥ मर्दनम् ॥ ( २ ) ॥ द्वे पादमर्दनादेः ॥ वीति ॥ विनाशः ॥ ( १ ) ॥ अदर्शनम् ॥ ( २ ) ॥ द्वे तिरोधानस्य ॥ २२ ॥ समिति ॥ संस्तवः ॥ ( १ ) ॥ परिचयः ॥ ( २ ) ॥ द्वे परिचयस्य ॥ प्रेति ॥ प्रसरः ॥ ( १ ) ॥

१—गुणात्परत्वाद्विडादेशे 'जाग्रिया' इति धातुपारायणम् ॥ क्तिनि ( ३।३।९४ ) 'जागर्तिः' अपीति सुभूतिः—इति मुकुटः ॥ २—संनिधं च "संनिधं समीपमुपकण्ठम्" इति बोपालितः—इति मुकुटः ॥

लवोऽभिलावो लवने निष्पावः पवने पवः । प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥ २४ ॥
प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ । धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥२५॥
प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः। स्यादभ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा२६॥
प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निपातनम् । उपलम्भस्त्वनुभवः समालम्भो विलेपनम् २७॥
विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम् । विश्रावस्तु प्रविख्यातिरवेक्षा प्रतिजागरः २८
निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने । आदीनवास्रवौ क्लेशे मेलके सङ्गसंगमौ ॥ २९ ॥
संवीक्षणं[1] विचयनं मार्गणं मृगणा[2] मृगः । परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥

विसर्पणम् ॥ ( २ ) ॥ द्वे व्रणादिविसरणस्य ॥ नीति ॥ नीवाकः ॥ ( १ ) ॥ प्रयामः ॥ ( २ ) ॥ द्वे धान्यसंचयस्य क्रयादरस्य वा ॥ समिति ॥ संनिधिः ॥ ( १ ) ॥ संनिकर्षणम् ॥ ( २ ) ॥ द्वे संनिधानस्य ॥ २३ ॥ लव इति ॥ लवः ॥ ( १ ) ॥ अभिलावः ॥ ( २ ) ॥ लवनम् ॥ (३)॥ त्रीणि छेदनस्य ॥ निरिति ॥ निष्पावः ॥(१)॥ पवनम् ॥ ( २ ) ॥ पवः ॥( ३ ) ॥त्रीणि धान्यादीनां बहुलीकरणस्य ॥ प्रेति ॥ प्रस्तावः ॥ ( १ ) ॥ अवसरः ॥ ( २ ) ॥ द्वे प्रसङ्गस्य ॥ त्रसेति ॥ त्रसरः ॥ "तसरः" इति च ॥ ( १ ) ॥ सूत्रवेष्टनम् ॥ ( २ ) ॥ द्वे सूत्रस्य वेष्टनक्रियायाः ॥ ॥ २४ ॥ प्रेति ॥ प्रजनः ॥ ( १ ) ॥ उपसरः ॥ ( २ ) ॥ प्रथमगर्भग्रहणस्य द्वे ॥ प्रेति ॥ प्रश्रयः ॥"प्रसरः" इति च ॥ "प्रसरः प्रणये वेगे" इति मेदिनी ॥ ( १ ) ॥ प्रणयः ॥ ( २ ) ॥ द्वे प्रीत्या प्रार्थनस्य ॥ धीति ॥ धीशक्तिः । साऽष्टधा—"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः" ॥ ( १ ) ॥ "निष्क्रमो निर्गमे ख्यातो बुद्धिसंपादि निष्क्रमः" इति रुद्रः ॥ ( २ )॥ द्वे बुद्धिसामर्थ्यस्य ॥ अस्त्रीति ॥ संक्रमः ॥ ( १ ) ॥ दुर्गस्य संचरः, दुर्गसंचरः ॥ घञि तु 'संचारः' ॥ "संचारो निर्गमो भ्रमाम्बुपथः" इति रत्नकोषः ॥ ( २ ) ॥ द्वे दुर्गप्रवेशनक्रियायाः ॥ २५ ॥ प्रतीति ॥ प्रत्युत्क्रमः ॥ ( १ ) ॥ प्रयोगार्थः ॥ "प्रयुद्धार्थः" इति च ॥"प्रत्युत्क्रमः प्रयुद्धार्थः" इति भागुरिः ॥ ( २ ) ॥ द्वे कर्मारम्भे प्रथमप्रयोगस्य ॥ प्रेति ॥ प्रक्रमः ॥ ( १ ) ॥ उपक्रमः ( २ ) ॥ अभ्यादानम् ॥ ( ३ ) ॥ उद्घातः ॥ ( ४ ) ॥ आरम्भः ॥ ( ५ ) ॥ पश्चारम्भस्य ॥—आद्यौ प्रथमारम्भस्य । त्रीणि आरम्भमात्रस्य—इत्यन्ये ॥ समिति ॥ संभ्रमः ॥ ॥ ( १ ) ॥ "आवेगस्तु त्वरा त्वरिः" इति वाचस्पतिः ॥ ( २ ) द्वे त्वरायाः ॥ २६ ॥ प्रतीति ॥ प्रतिबन्धः ॥ ( १ ) ॥ प्रतिष्टम्भः ॥ ( २ ) ॥ द्वे रोधस्य ॥ अवेति ॥ अवनायः ॥ ( १ ) ॥ निपातनम् ॥ "नियातनम्" इति च ॥ ( २ ) ॥ द्वे अधोनयनस्य ॥ उपेति ॥ उपलम्भः ॥ ( १ ) ॥ अनुभवः ॥ ( २ ) ॥ द्वे अनुभवस्य ॥ समिति ॥ समालम्भः ॥ ( १ ) ॥ विलेपनम् ॥ ( २ ) ॥ द्वे कुङ्कुमादिनोपलेपस्य ॥ २७ ॥ विप्रेति ॥ विप्रलम्भः ॥ ( १ ) ॥ विप्रयोगः ॥ ( २ ) ॥ द्वे रागिणोर्वियोजनस्य ॥ वीति ॥ विलम्भः ॥ ( १ ) ॥ अतिसर्जनम् ॥ ( २ ) ॥ द्वे दानस्य ॥ वीति ॥ विश्रावः ॥ ( १ ) ॥ प्रविख्यातिः ॥ ( २ ) ॥ द्वे अतिप्रसिद्धेः ॥ अवेति ॥ अवेक्षा ॥ ( १ ) ॥ प्रतिजागरः ॥ ( २ ) ॥ द्वे अवेक्षणस्य ॥ २८ ॥ नीति ॥ निपाठः ॥ ( १ ) ॥ निपठः ॥ ( २ ) ॥ पाठः ॥ ( ३ ) ॥ त्रीणि पठनस्य ॥ तेम इति ॥ तेमः ॥ ( १ ) ॥ स्तेमः ॥ ( २ ) ॥ समुन्दनम् ॥ ( ३ ) ॥ त्रीण्यार्द्रीभावस्य ॥ आदीति ॥ आदीनवः ॥ ( १ ) ॥ आस्रवः ॥ ( २ ) ॥ क्लेशः ॥ ( ३ ) ॥ त्रीणि क्लेशस्य ॥ मेलेति ॥ मेलकः ॥ ( १ ) ॥ सङ्गः ॥ ( २ ) ॥ "ना मेलः संगमो ना वा" इत्यमरमाला ॥ ( ३ ) ॥ त्रीणि संगमस्य ॥ २९ ॥ समिति ॥ संवीक्षणम् ॥ ( १ ) ॥ विचयनम् ॥ ( २ ) ॥

---

१-"अन्वीक्षणम्" "अन्वेषणम्" इत्येके पेठुः—इति स्वामी ॥ २—"परिचर्यापरिसर्यामृगया" ( वा० ३।३।१०१ ) इत्यादिना निपातनात् "मृगया" इति मुकुटः ॥

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् । प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ३१॥
उपशायो विशायश्च पर्यायशयनार्थकौ । अर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥
स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये । पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ३३ ॥
प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् । स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ३४
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः । स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ३५
आविधो विध्यते येन तत्र विष्वक्समे निघः । उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ३६
निगारोद्गारविक्षावोद्ग्राहा निगरणादिषु ॥ ३७ ॥
आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः । निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि
जवने जूतिःसातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः।उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ३९
गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् । आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम्॥
माणवानां तु माणव्यं सहायानां सहायता ॥ ४०॥

मार्गणम् ॥ ( ३ ) ॥ मृगणा ॥ ( ४ ) ॥ मृगः ॥ ( ५ ) ॥ पञ्चान्वेषणस्य ॥ परीति ॥ परिरम्भः ॥ ( १ ) ॥ परिष्वङ्गः ॥ ( २ ) ॥ संश्लेषः ॥ ( ३ ) ॥ उपगूहनम् ॥ ( ४ ) ॥ चत्वार्यालिङ्गनस्य ॥ ३० ॥ निरिति ॥ निर्वर्णनम् ॥ ( १ ) ॥ निध्यानम् ॥ ( २ ) ॥ दर्शनम् ( ३ ) ॥ आलोकनम् ॥ ( ४ ) ॥ ईक्षणम् ॥ ( ५ ) ॥ पञ्च दर्शनस्य ॥ प्रतीति ॥ प्रत्याख्यानम् ॥ ( १ ) ॥ निरसनम् ॥ ( २ ) ॥ प्रत्यादेशः ॥ ( ३ ) ॥ निराकृतिः ॥ ( ४ )॥ चत्वारि निराकरणस्य ॥ ३१ ॥ उपेति ॥ उपशायः ॥ ( १ ) ॥ विशायः ॥ ( २ ) ॥ द्वे पर्यायेण शयनम् ॥ पर्यायशयनमर्थो ययोस्तयोः ॥ अर्तेति ॥ अर्तनम् ॥ ( १ ) ॥ ऋतीया ॥ ( २ ) ॥ हृणीया ॥ (३)॥ "मोहो वीज्या जुगुप्सा च हृणीया हृणिया घृणा" इति वाचस्पतिः ॥(४)॥ चत्वारि जुगुप्सनस्य ॥ ३२ ॥ स्यादिति ॥ व्यत्यासः ॥ ( १ ) ॥ विपर्यासः ॥ ( २ ) ॥ व्यत्ययः ॥ ( ३ ) ॥ विपर्ययः ॥ ( ४ ) ॥ चत्वारि व्यतिक्रमस्य ॥ पर्येति ॥ पर्ययः ॥ ( १ ) ॥ अतिक्रमः ॥ ( २ ) ॥ अतिपातः ॥ ( ३ ) ॥ उपात्ययः ॥ ( ४ ) ॥ चत्वार्यतिक्रमस्य ॥ ३३ ॥ प्रेषेति ॥ प्रतिशासनम् ॥ ॥ (१) ॥ एकं भृत्यादिप्रेषणस्य ॥ स इति ॥ संस्तावः ॥ ( १ ) ॥ एकं यज्ञे स्तावकद्विजावस्थानभूमेः ॥ ३४ ॥ नीति ॥ उद्घनः ॥ ( १ ) ॥ एकं यत्र काष्ठं निधाय तक्ष्यते तस्य ॥ स्तम्बेति ॥ स्तम्बघ्नः ॥ ( १ ) ॥ स्तम्बघनः ॥ ( २ ) ॥ द्वे तृणादिगुच्छोन्मूलनसाधनस्य ॥--नीवारादिग्रहणार्थं कृतवंशपात्रस्य—इत्यन्ये ॥ ३५ ॥ आवीति ॥ आविधः ॥ ( १ ) ॥ एकं भ्रमरसूच्यादेः 'वर्मा' इति ख्यातस्य ॥ तत्रेति ॥ निघः ॥ ( १ ) ॥ एकं तुल्यारोहपरिणाहवृक्षादेः ॥ उदिति ॥ उत्कारः ॥( १ ) ॥ निकारः ॥(२)॥ द्वे धान्यानामूर्ध्वक्षेपणस्य ॥ ३६ ॥ नीति ॥ निगारः ॥ ( १ ) ॥ उद्गारः ॥ ( १ ) ॥ विक्षावः ॥ ( १ ) ॥ उद्ग्राहः ॥( १ )॥ आदिना उद्गरणम्, विक्षवणम्, उद्ग्रहणम् ॥ क्रमेणैकैकं निगरणादीनाम् ॥३७॥ आरेति ॥ आरतिः ॥ ( १ ) ॥ अवरतिः ॥ ( २ ) ॥ विरतिः ॥ ( ३ ) ॥ उपरामः ॥ ॥(४)॥चत्वार्युपरमणस्य ॥अथेति॥निष्ठेवः ॥ (१) ॥ निष्ठ्यूतिः ॥ ( २ ) ॥ निष्ठेवनम् ॥(३) ॥ निष्ठीवनम् ॥( ४ ) ॥ चत्वारि मुखेन श्लेष्मनिरसनस्य॥३८॥जवेति ॥ जवनम् ॥(१)॥ जूतिः ॥ ( २ ) ॥ द्वे वेगस्य॥ सातिरिति ॥ सातिः ॥ ( १ ) ॥ अवसानम् ॥ ( २ ) ॥ द्वे समापनस्य ॥ अथेति ॥ ज्वरः ॥(१)॥जूर्तिः ॥ ( २ ) ॥ द्वे ज्वरणस्य ॥ उदिति ॥ उदजः ॥ ( १ ) ॥ पशुप्रेरणम् ॥ (२) ॥ द्वे गवादीनां प्रेरणस्य ॥ अकेति ॥ अकरणिः ॥ ( १ ) ॥ आदिना अजननिः, अवग्राहः, निग्राहः ॥ एकमाक्रोशनस्य॥३९॥ गोत्रेति॥औपगवकम्॥(१)॥ आदिना "गार्गकम्" "दाक्षकम्"॥एकमपत्यान्तात् वृन्दस्य॥आपेति ॥ अचेतसां वृन्दः ॥ अपूपानां समूहः आपूपिकम् ॥ (१) ॥ शष्कुलीनां समूहः शाष्कुलिकम् ॥(१)॥ आदिना 'साक्तुकम्' ॥ एकैकमचेतसां वृन्दस्य ॥ माणेति॥ माणवानां समूहः माणव्यम् ॥ ( १ ) ॥ एकं माणववृन्दस्य ॥ सहेति ॥ सहायानां समूहः सहायता ॥ एकं सहायसमूहस्य ॥ ४०॥

हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् । द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमिति क्रमात् खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम् । ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् अपि साहस्रकारीषचार्मणाथर्वणादिकम् ।

इति संकीर्णवर्गः ॥ २ ॥

नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः । भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते १॥
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने । पद्ये यशसि च श्लोकः शरे खड्गे च सायकः॥२॥
जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ । आलोकौ दर्शनोद्द्योतौ भेरीपटहमानकौ ॥३॥
उत्सङ्गचिह्नयोरङ्कः कलङ्कोऽङ्कापवादयोः । तक्षको नागवर्धकयोरर्कः स्फटिकसूर्ययोः ॥ ४ ॥
मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः । स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके
उलूके करिणः पुच्छमूलोपान्ते च पेचकः । कमण्डलौ च करकः सुगते च विनायकः ॥६॥
किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः । प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥७॥
स्याद्भूतिकं तु भूनिम्बे कट्फले भूस्तृणेऽपि च । ज्यौत्स्निकायां च घोषे च कोशातक्यथ कट्फले

हल्येति ॥ हलानां समूहः हल्या ॥ (१)॥ एकं हलसमूहस्य ॥ ब्राह्मेति ॥ ब्राह्मणानां वाडवानां च समूहः ॥ ब्राह्मण्यम् ॥ ( १ ) ॥ वाडव्यम् ॥ ( २ ) ॥ द्वे ब्राह्मणसमूहस्य ॥ द्वे इति ॥ पर्शूनां समूहः पार्श्वम् ॥ ॥(१)॥पृष्ठानां समूहः पृष्ठ्यम्॥(१)॥यज्ञविषय इदं स्मरन्ति॥ एकैकं पर्शुपृष्ठवृन्दस्य॥४१॥ खलेति ॥ खलानां समूहः खलिनी ॥ ( १ ) ॥ खल्या ॥ ( २ ) ॥ द्वे खलवृन्दस्य ॥ अथेति ॥ मनुष्याणां समूहः मानुष्यकम् ॥ ( १ ) ॥ एकं मनुष्यवृन्दस्य ॥ ग्रामेति ॥ ग्रामाणां समूहः ग्रामता ॥ ( १ ) ॥ जनानां समूहः जनता ॥ ( १ ) ॥ धूमानां पाशानां गलानां च समूहः ॥ धूम्या ॥ ( १ ) ॥ पाश्या ॥ ( १ ) ॥ गल्या ॥ ( १ ) ॥ एकैकं ग्रामादिसमूहस्य ॥ ४२ ॥ अपीति ॥ सहस्राणाम्, करीषाणाम्, चर्मणाम्, अथर्वणाम् च समूहः ॥ साहस्रम् ॥ ( १ ) ॥ कारीषम् ॥ ( १ ) ॥ चार्मणम् ॥ ( १ ) ॥ आथर्वणम् ॥(१)॥ आदिना 'वार्मणम्' 'आङ्गारम्' ॥ एकैकं सहस्रादिसमूहस्य ॥ संकीर्णार्थत्वं च घञादीनां कर्तृभिन्ने कारके भावे च विधानात्, उणादीनां भावकारकेषु विधानात्, भावे प्रायेण विग्रहो दर्शितः, कारकेषु तु यथासंभवमूह्यः ॥

इति संकीर्णवर्गविवरणम् ॥

नानेति ॥ अनेकार्थाः केचिदत्रैव वर्गे कान्ता आदयो येषां खान्तगान्तादीनां तेषु वर्गेषु कथिताः । यथा 'क'शब्दः ॥ ये कान्तादयो तेषु पर्यायेषु प्रचुरप्रयोगाः, ते तेषु कथिताः ॥ अपिशब्दादिहापि । यथा 'नाक' शब्दः ॥ अतः पुनरुक्तिर्नोद्भाव्या, इति भावः ॥ १ ॥ जम्ब्विति ॥ "जम्बुकः फेरवे नीचे पाश्चिमाशापतावपि" इति मेदिनी ॥ प्रिति ॥ "पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्" इति मेदिनी ॥ आलविति ॥ "आलोकस्तु पुमान्द्योते दर्शने वन्दिभाषणे" इति मेदिनी ॥ भेरीति ॥ "आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे" इति मेदिनी ॥ ३ ॥ उदिति ॥ "अङ्को रूपकभेदागश्चिह्नरेखाजिभूषणे" इति मेदिनी ॥ कलेति "कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" इति मेदिनी ॥ अर्केति ॥ "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" इति मेदिनी ॥ ४ ॥ मार्विति ॥ "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजले तु कम्" इति मेदिनी ॥ ५ ॥ कमेति ॥ "करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ" इति मेदिनी ॥ स्विति ॥ "विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" इति मेदिनी॥६॥ कीति ॥ "किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च" इति मेदिनी ॥ शूकेति ॥ "वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः" इति मेदिनी ॥ प्रतीति ॥ "प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः" इति मेदिनी ॥७॥ स्यादिति ॥ "स्या-

सिते च खदिरे सोमवल्कः स्यादथ सिल्हके। तिलकल्के च पिण्याको बाह्लिकं रामठेऽपि च महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः। रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु १० जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः।व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ११ शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम्। पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते शीलान्वयावनूके द्वे शल्के शकलवल्कले। साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥१३॥ दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री समलैनसोः। दम्भेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः धेनुका तु करेण्वां च मेघजाले च कालिका। कारिका यातनाकृत्योः कर्णिका कर्णभूषणे १५॥ करिहस्ताङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे। वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ॥१६॥ स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः। लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः १७

ङ्कातिकं तु भूनिम्बे दीप्य-भूस्तृण-कत्तृणे" इति मेदिनी ॥ ज्याविति ॥ "कोशातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम्" इति मेदिनी ॥ "जोत्स्ना चन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता" इत्यजयः ॥ "जौत्स्नी पटोलीज्योत्स्नावन्निशोः" इति हैमः ॥ ज्यौत्स्निका—पटोलिका, घोषः—अपामार्गः—इति स्वामी ॥ ८ ॥ तिलेति ॥ "पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीककिह्लके" इति मेदिनी ॥ बेति ॥ "बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाऽश्वदेशयोः" इति रभसः ॥ ९ ॥ महेति ॥ "कौशिको नकुले व्यालग्राहिगुग्गुलुशक्रयोः। विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिकः ॥ कौशिकी चण्डिकायां च नदीभेदे च कौशिकी" इति विश्वः ॥ रुगिति ॥ "आतङ्को रोगसंतापशङ्कासु मुरजध्वनौ" इति मेदिनी ॥ स्वेति ॥ "क्षुल्लकस्त्रिषु नीचेऽल्पे" इति मेदिनी ॥१०॥जैवेति॥"जैवातृकः पुमान्सोमे दीर्घायुःकृशयोस्त्रिषु" इति मेदिनी॥खुरे इति ॥ "वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयोः" इति मेदिनी ॥ व्येति ॥ "पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च" इति मेदिनी ॥ यवेति ॥ "दीपकं वागलंकारे वाच्यवद्दीप्तिकारके। दीपकश्चाजमोदायां यवानीबर्हिचूडयोः" इति मेदिनी ॥ ११ ॥ स्वर्णे इति ॥ "गैरिकं धातुरुक्मयोः" इति मेदिनी ॥ पीडेति ॥ "व्यलीको नागरे स्मृतः। व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने" इति विश्वः ॥ अलीति ॥ "अलीकमप्रियेऽपि स्याद्दिव्य (स्याद्भोध्य) सत्ये नपुंसकम्" इति मेदिनी ॥ १२ ॥ शलेति ॥ "अनूकं तु कुले शीले पुंसि स्याद्गतजन्मनि" इति मेदिनी ॥ साष्ट इति ॥ "निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः। वक्षोऽलंकरणे हेममात्रे हेमपलेऽपि च" इति मेदिनी ॥ १३ ॥ दीनारः सांव्यवहारिकं रूपकम् ॥ कल्क इति ॥ "त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टेभदन्तयोः"॥ "कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि" इति विश्वः ॥ "कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः" इति मेदिनी॥अथेति॥"पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः" इति मेदिनी ॥ १४ ॥ धेन्विति ॥ "स्याद्धेनुका करिण्यां च धेनावपि ना तु दानवविशेषे" इति मेदिनी ॥ मेघेति ॥ "धूसरीयोगिनीभेदमानवाब्देषु कालिका। क्रमदेयवस्तुमूल्ये कार्ष्ण्ये काकयां घनेषु च" इति रभसः ॥ "कालिका चण्डिकाभेदे कार्ष्ण्ये वृश्चिकपत्त्रयोः। क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः ॥ पटोलशाखारोमालीमांसीकाकीशिवासु च। मेघावलौ च" इति मेदिनी ॥ कारीति ॥ "कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि ॥ नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु" इति मेदिनी ॥ 'कृत्योः' इति पाठे विवरणश्लोके ॥ कर्णीति ॥ १५ ॥ "कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि। क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे" ॥ इति मेदिनी ॥ त्रिष्विति ॥ लान्तेभ्यः प्राक् ॥ वृन्देति ॥ "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" इति मेदिनी ॥ एक इति ॥ "एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी ॥ १६ ॥ लालेति ॥ "लालाटिकः प्रभोर्भालदर्शिन्याश्लेषणान्तरे। कार्याक्षमे" इति मेदिनी ॥ "भावदर्शी" इति वा पाठः ॥ "लालाटिकः सदालस्यप्र-

मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ । शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री न्द्रियेऽपि खम् ॥ १८ ॥

घृणिज्वाले अपि शिखे शैलवृक्षौ नगावगौ । आशुगौ वायुविशिखौ शरार्कविहगाः खगाः १९

पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः । पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥ २० ॥

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि । गजेऽपि नागमातङ्गावपाङ्गस्तिलकेऽपि च॥२१॥

सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु । योगः संनहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः । चातके हरिणे पुंसि सारङ्गः शबले त्रिषु॥२३॥

कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे । यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥२४॥

स्वर्गेषुपशुवाग्वज्रादिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः॥२५॥

शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः । भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु २६ ॥

शुभावनिदर्शिनि'' इत्यजयः ॥ १७ ॥ इति कान्तवर्गः ॥ मेति ॥''मयूखः किरणेऽपि च । ज्वालायामपि शोभायाम्'' इति मेदिनी ॥ अलीति ॥ शिली शल्यं मुखे यस्य ॥ शङ्ख इति ॥ ''शङ्खः कम्बौ न योषिन्ना भालास्थ्नि निधिभिन्नखे'' इति मेदिनी ॥ इन्द्रीति ॥''खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि। संवेदने देवलोके शर्मण्यपि नपुंसकम्'' इति मेदिनी ॥ १८ ॥ घृणीति ॥ ''शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च'' इति मेदिनी ॥ इति खान्ताः ॥ शैलेति॥ ''नगो महीरुहे शैले भास्करे पवनाशने'' ॥ ''अगः स्यान्नगवत्तरौ । शैले सरीसृपे भानौ'' इति हैमः ॥ शरेति ॥ ''खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे'' इति मेदिनी ॥ १९ ॥ पेति ॥ ''पतङ्गः शलभे शालीप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते'' इति मेदिनी ॥ पतेति ॥ ''मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणायां याच्ञायां मृगी तु वनितान्तरे'' इति मेदिनी ॥ वेग इति ॥ ''वेगो रयप्रवाहयोः । रेतःकिंपाकयोश्चापि'' इति हैमः ॥ २० ॥ परेति ॥ ''परागः कौसुमे रेणौ धूलिस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने'' इति मेदिनी ॥ गेति ॥ ''नागं नपुंसकं रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूराचारिषु तोयदे । नागकेसरपुंनागनागदन्तकमुस्तके ॥ देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः'' इति मेदिनी ॥ ( १ ) ॥ ''मातङ्गः श्वपचे गजे'' इति मेदिनी ॥ ( २ ) ॥ अपेति॥ ''अपाङ्गो नयनस्यान्ते स्याच्चित्रकप्रधानयोः'' इत्यजयः ॥ ''अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च'' इति मेदिनी ॥ २१ ॥ सर्ग इति ॥ ''सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु'' इति मेदिनी ॥ निर्मोक्षस्त्यागः, मोक्षाभावो वा ॥ योग इति ॥ ''योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कुम्भादिषु भेषजे ॥ विश्रब्धघातके द्रव्योपायसंनहनेष्वपि । कार्मणेऽपि च'' इति मेदिनी ॥ संनहनं कवचम् । उपायः सामादिः ॥ २२ ॥ भोग इति ॥ ''भोगः सुखे धने चाहेः शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादिभृतावपि'' इति मेदिनी ॥ भृतिर्भाडिः ॥ आदिना हस्त्यश्वादिकर्मकाराणां च भृतिः ॥ ''पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम्'' इति विश्वः ॥ चातेति ॥ ''सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु'' इति मेदिनी ॥ २३ ॥ केति ॥ ''प्लवगो वानरे भेके सारथौ चोष्णदीधितेः'' इति मेदिनी ॥ शाप इति ॥ ''अभिषङ्गः पुँल्लिङ्गः पराभवाक्रोशशपथेषु'' इति मेदिनी ॥ यानेति ॥ ''युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च'' इति मेदिनी ॥ २४ ॥ स्वेति ॥ ''गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु'' इति केशवः ॥ ''गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च'' इति मेदिनी ॥ लिङ्गमिति ॥ ''लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्'' इति मेदिनी ॥ २५ ॥ शृङ्गमिति ॥ ''शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके ।

**परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये । मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम् २७**
**त्रिष्विष्टेऽल्पे लघुः काचाः शिक्यमृद्भेददृग्रुजः । विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः २८**
**मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु । अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्**
**कैकिताक्ष्यावहिभुजौ दन्तविप्राण्डजा द्विजाः । अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ३०**
**धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम् । बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना ॥ ३१ ॥**
**समक्ष्मांशे रणेऽप्याजिः प्रजा स्यात्संततौ जने । अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु**
**पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः । संज्ञा स्याच्चेतना नामहस्ताद्यैश्चार्थसूचना ॥ ३३ ॥**
**काकेभगण्डौ करटौ गजगण्डकटी कटौ । शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥**
**देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः । रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३५ ॥**
**रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे । मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३६ ॥**

विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेदयोऋर्षभौषधौ'' इति मेदिनी ॥ **वरेति** ॥ "वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि" इति मेदिनी ॥ **भगमिति** ॥ "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ" इति मेदिनी ॥ २६ ॥ इति गान्ताः ॥ **परीति** ॥ "परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः" इति मेदिनी ॥ "पलिघः काचकलशे घटे प्राकारगोपुरे" इति हैममेदिन्यौ ॥ **ओघ इति** ॥ "ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः" इति मेदिनी ॥ २७ ॥ **त्रिष्विति** ॥ "कृष्णागुरुणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु । निःसारे च मनोज्ञे च पृक्कायां च लघुः स्त्रियाम्" इति रभसः ॥ "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि पृक्कानामौषधौ तु स्त्री" इति मेदिनी ॥ इति घान्ताः ॥ **केति** ॥ "काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे" इति मेदिनी ॥ **वीति** ॥ "प्रपञ्चः संचयेऽपि स्याद्विस्तरे च प्रतारणे" इति मेदिनी ॥ **पावेति** ॥ "शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी ॥ २८ ॥ उपधामुत्कोचमतिक्रान्तेऽमात्ये ॥ **अभीति** ॥ "रुचिः स्त्री दीप्तिशोभायामभिष्वङ्गाभिलाषयोः" इति मेदिनी ॥ २९ ॥ इति चान्ताः ॥ **दन्तेति** ॥ "द्विजः स्याद्ब्राह्मणक्षत्त्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्ग्यां हरेणौ च" इति मेदिनी ॥ **एति** ॥ "अजो हरौ हरे कामे विधौ छागे रघोः सुते" इति विश्वः ॥ ३० ॥ **धर्मेति** ॥ "धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्" इति मेदिनी ॥ **किति** ॥ "कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्" इति मेदिनी ॥ **बलेति** ॥ "बलजं गोपुरे क्षेत्रे सस्यसंगरयोरपि । बलजा वरयोषायां यूथ्याम्" इति मेदिनी ॥ ३१ ॥ **समेति** ॥ "अथाजिः स्त्री समभूमौ च सङ्ग्रामे" इति मेदिनी ॥ **अबिति** ॥ "अब्जोऽस्त्री शङ्खे, ना निचुले धन्वन्तरौ च हिमाकिरणे । क्लीबं पद्मे" इति मेदिनी ॥ ३२ ॥ इति जान्ताः ॥ **संज्ञेति** ॥ "संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति" इति मेदिनी ॥ ३३ ॥ इति ञान्ताः ॥ **कोति** ॥ "करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे ॥ करटो वाद्यभेदे" इति मेदिनी ॥ **गजेति** ॥ "कटः श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि विप्पल्यां च कटो मता" इति विश्वः ॥ "कटः श्रोणौ द्वयोः पुंसि कलिञ्जेऽतिशये शवे" इति मेदिनी ॥ **शिपेति** ॥ शिपिषु रश्मिषु पशुषु वा विष्टः ॥ "शिपिविष्टः शिवः शौरिर्दुश्चर्मा खलतिस्तथा" ॥ ३४ ॥ **देवेति** ॥ "त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि" इति मेदिनी ॥ **दीति** ॥ "दिष्टं दैवे पुमान्काले" इति मेदिनी ॥ **रस इति** ॥ "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके ॥ त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च" इति मेदिनी ॥ ३५ ॥ **रीति** ॥ "रिष्टं स्यादशुभेनसोः" इत्यजयः ॥ "रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले" इति मेदिनी ॥ **अरीति** ॥

अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्। सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा
अत्युत्कर्षाश्रयः कोटयो मूले लग्नकचे जटा । व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने
इष्टिर्यागेच्छयोः सृष्टिर्निश्चिते बहुनि त्रिषु । कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु तु ॥ ३९ ॥
पटुर्द्वौ वाच्यलिङ्गौ च नीलकण्ठः शिवेऽपि च । पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ४०
निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि । त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽति-
युवाल्पयोः ॥ ४१ ॥
दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः। सर्पमांसात्पशू व्याडौ गोभूवाचास्त्विडा इला
क्ष्वेडा वंशशलाकाऽपि नाडी कालेऽपि षट्क्षणे।काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु४३॥
स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने । भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥ ४४ ॥
शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ । भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे४५॥

न रिष्टम् ॥ "अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभ तक्रे सूतिकागार आसवे ॥ शुभे मरणचिह्ने च" इति मेदिनी ॥ मायेति ॥ माया विपरीतदर्शनम् ॥ यन्त्रं मृगबन्धनविशेषः ॥ ॥ ३६ ॥ सीराङ्गे फालाधारे ॥ कूटम् ॥ स्त्रिति ॥ "त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः" इति मेदिनी ॥ ३७ ॥ अर्तीति ॥ "कोटिः स्त्री धनुषोऽग्रेऽश्री संख्याभेदप्रकर्षयोः" इति मेदिनी ॥ म्विति ॥ " जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी " इति मेदिनी ॥ ३८ ॥ इति ॥"इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयोः " इति मेदिनी ॥ त्रिति ॥"मुक्तनिर्मितयोः प्राज्ये त्रिषु सृष्टं तु निश्चिते " इति रुद्रः ॥ दक्षेति ॥ ३९ ॥ "पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च " इति रुद्रः ॥ " पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्त्रालवणयोरपि " इति मेदिनी ॥ इति टान्ताः ॥ नीलेति ॥ नीलः कण्ठो यस्य ॥ " कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ॥ सितापाङ्गे हरे पीतसारके नीलकण्ठवत् " इति विश्वः ॥ पुंसीति ॥ "कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च " इति मेदिनी ॥ ४० ॥ नीति ॥ "निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च " इति मेदिनी॥काष्ठेति॥"काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि स्त्री च दारुणि स्यान्नपुंसकम्" इति मेदिनी ॥ त्रिष्विति॥अतिशयेन प्रशस्तः॥"ज्येष्ठः श्रेष्ठे च वृद्धे च त्रिषु, मासान्तरे पुमान् । ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः" इति मेदिनी ॥ कनीति ॥ "अतिशयेन युवा,अल्पो वा ॥ कनिष्ठोऽतियुवाल्पानुजे स्त्री दुर्बलाङ्गुली" इति मेदिनी॥४१॥इति ठान्ताः॥ देति ॥ " दण्डो यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके " इति विश्वः॥ ग्विति॥"गुडः स्याद्गोलके हस्तिसंनाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति ॥" इति मेदिनी ॥ सर्पेति ॥ " व्याडो व्याघ्रे खले सर्पे " इति रभसः ॥ गविति ॥ डलयोरेकत्वस्मरणादिडा ॥ " इडा तु बुधयोषिति । सौरभेय्यां च वचने वसुमत्यामपि स्त्रियाम् " इति मेदिनी ॥ ( १ ) ॥ " इला कलत्रे सौम्यस्य धरिण्यां गवि वाचि च " इति मेदिनी ॥ ( २ ) ॥ ॥ ४२ ॥ क्ष्वेडेति ॥ " क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ॥ लोहितार्के पर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः " इति मेदिनी ॥ नाडीति ॥ " नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च । तथा षट्क्षणकालेऽपि " इति मेदिनी ॥ केति ॥ " काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनम् । स्तम्बे रहसि वर्गे च " इति धरणिः ॥ "काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम्" इति मेदिनी ॥ ४३ ॥ स्यादिति ॥ "भाण्डं भूषणमात्रे स्यात् " इति धरणिः ॥ " भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः " इति मेदिनी ॥ इति डान्ताः ॥ प्रेति ॥ " प्रगाढं स्याद् दृढे कृच्छ्रे " इति धरणिः॥४४॥ शक्तेति ॥ " दृढः

१—प्रचुरे—इति मुकुटः ॥ २—द्वौ कष्टपटू—इति स्वामिपीयूषौ । ३—अर्वा कुत्सितः—इति मुकुटः ॥

कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः । पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ४६ ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ४७
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे । अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ४८
स्थाणुः शर्वेऽपि च द्रोणः काकेऽपि च रवे रणः । ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपे त्रिषु ४९
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ । हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ५०
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः । तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ५१
वणिक्पथे च विपणिः सुरा प्रत्यक् च वारुणी । करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ५२
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च । विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५३ ॥
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु । करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५४ ॥

स्थूले नितान्ते च प्रगाढे बलवत्यपि " इति मेदिनी ॥ व्यूढाविति ॥ " व्यूढः संहतविन्यस्ते पृथुलेऽप्यभिधेयवत् " इति मेदिनी ॥ इति डान्ताः ॥ भ्रूण इति ॥ " भ्रूणः स्त्रीगर्भडिम्भयोः " इति मेदिनी ॥ स्त्रिया अयम् ॥ स्त्रैणश्चासौ गर्भश्च ॥ शाल्यादिगर्भव्यावृत्त्यर्थं विशेषणम् ॥ बेति ॥ " बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः " इति मेदिनी ॥ ४५ ॥ कण इति ॥ " कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे " इति मेदिनी ॥ समिति ॥ " गणः स्यात्प्रमथे संघे संख्यासैन्यप्रभेदयोः " इति मेदिनी ॥ पेति ॥ " पणो माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ ग्लहे भृतौ " इति धरणिः ॥ ४६ ॥ माविति ॥ " गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्यां च" इति मेदिनी ॥ निरिति ॥ "क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु " इति रुद्रः ॥ ४७ ॥ वर्ण इति ॥ "वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने " इति मेदिनी ॥ अर्विति ॥ "अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च " इति मेदिनी ॥ ४८ ॥ स्थेति ॥ "स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे" इति मेदिनी ॥ द्रविति ॥ "द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे ॥ स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते" इति मेदिनी ॥ रण इति ॥ "रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम्" इति मेदिनी ॥ ग्रामेति ॥ ग्रामं नयति ॥ "ग्रामणीर्भोगिके पत्यौ प्रधाने नापितेऽपि च । ग्रामणीर्नीलिकायां च ग्रामेयीपण्ययोषितोः" इति विश्वः[2] ॥ ४९ ॥ ऊर्णेति ॥ आदिना शशोष्ट्रमृगादिग्रहः ॥ हरीति ॥ हरिणस्य स्त्री ॥ "हरिणी हरितायां च नारीभिद्वृत्तभेदयोः ॥ सुवर्णप्रतिमायां च" इति मेदिनी ॥ ५० ॥ त्रिष्विति ॥ "हरिणः पुंसि सारङ्गे शबले त्वभिधेयवत्" इति मेदिनी ॥ स्थूणेति ॥ "स्थूणा स्यात् सूर्म्या स्तम्भेऽपि वेश्मनः" इति मेदिनी ॥ ५१ ॥ वणिगिति ॥ "आपणे पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम्" इति रुद्रः ॥ सुरेति ॥ "वारुणी गण्डदूर्वायां प्रतीचीसुरयोः स्त्रियाम् " इति मेदिनी ॥ कोति ॥ इभे हस्तिनि करेणुः पुँल्लिङ्गः ॥ " करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे " इति मेदिनी ॥ " करेणुश्च गरेणुश्च करिणीकर्णिकारयोः " इति रन्तिदेवः ॥ द्रेति ॥ "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे" इति मेदिनी ॥ ५२ ॥ शरेति ॥ " शरणं गृहरक्षित्रोर्वधरक्षणयोरपि " इति मेदिनी ॥ श्रीति ॥ " श्रीपर्णी कुम्भीगम्भार्योः क्लीबे पद्माग्निमन्थयोः" इति रभसः ॥ विषेति ॥ "तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं य (ज) वाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु" इति मेदिनी ॥ "भवेदभिमरो युद्धे बले स्वबलसाध्वसे" इति मेदिनी ॥ ५३ ॥ प्रमेति ॥ "प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि ॥ इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि" इति मेदिनी ॥ करेति ॥ "करणं कारणे काये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः ।

१—'भ्रुवौ' इत्यत्र "अन्तरान्तरेण युक्ते" (२।३।४) इति द्वितीया—इति स्वामी ॥ २—विश्वे नकारात्प्राक् रेफादर्शनेन ग्रामोऽस्त्यस्याः—इत्यनेकार्थकैरवाकरकौमुदीदर्शनेन "ग्रामिणी" इत्यव पाठोऽनुमीयते ॥

प्राण्युत्पादे संसरणमसंबाधचमूगतौ । घण्टापथेऽथ वान्तान्ने समुद्धरणमुन्नये ॥ ५५ ॥
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः। प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥५६ ॥
संकीर्णौ निचिताशुद्धावीरिणं शून्यमूषरम् । देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ ॥ ५७॥
पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ । अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ॥५८॥
हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ । यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥ ५९ ॥
यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते । ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥६०॥
स्थपतिः कालभेदेऽपि भूभृद्भूमिधरे नृपे । मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्रीकुसुमेऽपि च ६१॥
विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ । व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभे शास्त्रनिदर्शने ६२
क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे।वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः

पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते" इत्यजयः ॥ ५४ ॥ अथेति ॥ "भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमुन्नये" इति रभसः ॥ ५५ ॥ अत इति ॥ आणान्तम् ॥ विषेति ॥ "विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधौ क्लीवं त्रिषु शृङ्गेभदन्तयोः" इति मेदिनी ॥ प्रेति ॥ "प्रवणः क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षीणे प्रगुणे समुदाहृतः" इति धरणिः ॥ "प्रवणो ना चतुष्पथे । क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु" इति मेदिनी ॥ ५६ ॥ समिति ॥ "संकीर्णं संकटे व्याप्ते कुत्रचिद्वर्णसंकरे" इत्यजयः ॥ "संकीर्णं निचितेऽपि स्यादशुद्धे चाभिधेयवत्" इति मेदिनी ॥ ईरीति ॥ "ईरिणं तूषरे शून्ये" इति मेदिनी ॥ इदादिरपि ॥ "इरिणं निराश्रये भूभागे कथितमूषरे" इति ह्रस्वादावजयः ॥ इति णान्ताः ॥ देवेति ॥ विवस्तेजोऽस्यास्ति ॥ "विवस्वांस्तु सुरे सूर्ये तन्नगर्यां विवस्वती" इति मेदिनी ॥ सरेति ॥ सरो गमनमस्यास्ति ॥ "सरस्वांस्तु नदे चाब्धौ ना, ऽन्यवद्रसिके, स्त्रियाम् । वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि" इति मेदिनी ॥ ५७ ॥ शाकिति ॥ "भासो भासि समाख्यातो गोष्ठकुक्कुटगृध्रयोः" इति विश्वः ॥ अग्नीति ॥ धूमः केतुश्चिह्नमस्य ॥ "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः" इति विश्वः ॥ जीति ॥ "जीमूतोऽद्रौ धृतिकरे देवताडे पयोधरे" इति मेदिनी ॥ ५८ ॥ होति ॥ "हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते" इति मेदिनी ॥ मर्विति ॥ "मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्" इति मेदिनी ॥ भर्तेति ॥"भर्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि"इति मेदिनी॥५९॥यानेति॥"पोतः शिशौ वहित्रे च गृहस्थाने च वाससि"इति मेदिनी॥प्रयिति॥"प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः"इति मेदिनी॥ ग्रहेति ॥ "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी ॥ पेति ॥ "सुतः स्यात्पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता" इति मेदिनी ॥ ६० ॥ स्थपेति ॥ "स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु"इति मेदिनी ॥मूर्धेति॥मूर्धनि अभिषिच्यते स्म ॥ "मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च" इति मेदिनी ॥ रिति ॥ "ऋतुर्मासि वसन्तादौ धीरे स्त्रीकुसुमेऽपि च" इति धरणिः ॥ ६१ ॥ विष्णाविति ॥ "अजितो ना हरौ त्रिषु । अनिर्जिते च" इति विश्वः ॥ "अव्यक्तः शंकरे विष्णावव्यक्तं महदादिके । आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्" इति विश्वः ॥ स्विति॥ "सूतस्तु सारथौ तक्ष्णि क्षत्रियाद्ब्राह्मणीसुते । बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु" इति मेदिनी ॥ व्येति ॥ "व्यक्तः स्फुटमनीषिणोः" इति मेदिनी ॥ दृष्टेति ॥ दृष्टोऽन्तोऽत्र ॥ "अन्तः प्रान्तेऽन्तिके नाशे" इति विश्वः ॥ "दृष्टान्त उदाहृतौ । शास्त्रे च मरणे" इति मेदिनी ॥ ६२ ॥ क्षत्तेति ॥ "क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजि" इति विश्वः॥

---

१—स्वतो न तु वाच्यालिङ्गतया—इति स्वामिग्रन्थावलोकनेन 'स्वतः' इति पाठोऽनुमीयते ॥ तथा च 'त्रिषु' इति विषाणशब्दस्यैव विशेषणम् ॥ अत एव प्रवणशब्दव्याख्यायां—त्रिष्वित्येके संकीर्णं यावत्—इत्युक्तं स्वामिना संगच्छते॥

आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः । कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ६४ ॥
श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः॥६५॥
कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे । कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः॥६६
विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः । क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥ ६७ ॥
अर्तिः पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनोः।प्रचारस्यन्दयो रीतिरीतिर्डिम्बप्रवासयोः॥६८
उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे । वीणाभेदेपि महती भूतिर्भस्मनि संपदि ॥ ६९ ॥
नदीनगर्योर्नागानां भोगवत्यथ संगरे । सङ्गे सभायां समितिः क्षयवासावपि क्षितिः ॥ ७० ॥
रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः । जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥७१॥
पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः । पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ७२
प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः । सिकताः स्युर्वालुकाऽपि वेदे श्रवसि च श्रुतिः

वृत्तेति ॥ "वृत्तान्तोऽवसरे भावे कार्त्स्न्यवार्ताविशेषयोः । वृत्तान्तः प्रक्रियायां च" इति विश्वः ॥६३॥ आनेति ॥ "आनर्तो नृत्यशालायां जने जनपदान्तरे" इत्यजयः ॥ "आनर्तो देशभेदेऽपि नृत्यस्थाने जने रणे" इति मेदिनी ॥ ६४ ॥ श्लेष्मेति ॥ आदिना पित्तादिग्रहः ॥ रसः प्रथम आहारस्य विकारः ॥ आदिना वसामज्जशुक्रादिग्रहः ॥ तद्गुणा गन्धादयः ॥ गैरिकादिः ॥ ६५ ॥ कक्षेति ॥ "शुद्धान्तोऽन्तःपुरे गुह्यकक्षाभेदे च भूपतेः" इत्यजयः ॥ कास्विति ॥ "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति मेदिनी॥"कासूर्विकलवाचि स्यात्कासूः शक्त्यायुधेऽपि च"इति विश्वः ॥ ६६ ॥वसेति ॥ "वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने"इति मेदिनी॥क्षयेति॥"भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु" इति मेदिनी॥६७ ॥अर्तिरिति॥अर्तिः॥"आर्तिः"इति कश्चित् ॥जातिरिति "जातिश्छन्दसि सामान्ये मालत्या गोत्रजन्मनोः । जातिर्जातीफले धात्र्यां चुल्लीकाम्पिल्लयोरपि" इति विश्वः ॥ "जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि ॥ जातीफले च मालत्याम्" इति मेदिनी ॥ प्रचेति ॥"रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयोः" इति विश्वः ॥ ईति ॥ डिम्बो विप्लवः ॥ "ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम्" इति मेदिनी ॥ ६८ ॥ उदेति ॥ "प्राप्तिर्महोदये । लाभेऽपि च स्त्रियाम्" इति मेदिनी ॥ त्रयेति ॥ त्रीन्भेदानिता ॥ वीणेति ॥ "महती वल्लकीभेदे प्राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्" इति महती ॥ भूतिरिति ॥ "भूतिर्भस्मनि संपत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनी ॥ ६९ ॥ नदीति ॥ "अथ भोगवती नागपुरीनद्योरहौ पुमान्" इति मेदिनी ॥ क्षयेति ॥ "क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्" इति मेदिनी ॥ ७० ॥ जगेति ॥ "जगत्स्याद्विष्टपे क्लीबं ना वायौ जंगमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च" इति मेदिनी॥द्वादशाक्षरपादे॥७१॥पङ्क्तिरिति ॥दशमं छन्दः दशाक्षरपादम्॥"पङ्क्तिर्दशाक्षरच्छन्दोदशसंख्यालिषु स्त्रियाम्"इति मेदिनी॥स्यादिति ॥ आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोः " इति विश्वः ॥ पत्तिरिति ॥ "पत्तिर्ना पदगे स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके " इति मेदिनी ॥ मूल इति ॥ पक्षस्य मूलम् ॥ " पक्षात्तिः " ( ५ । २ । २५ ) ॥ प्रतिपादि, गरुन्मूले च ॥ ७२ ॥ प्रेति ॥ " प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे " इति मेदिनी ॥ कायिति ॥ "भारती सात्वती चैव कैशिक्यारभटी तथा । चतस्रो वृत्तयश्चैता यासु नाट्यं प्रतिष्ठितम् " इति भरतः ॥ " वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु

१—"उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च" इत्यनुक्तोक्तिषु दशमं छन्दः पङ्क्तिः ॥ " पङ्क्तिश्छन्दो दशापि स्यात " इति क्वचित्पाठः—इति पीयूषव्याख्या ॥
२—"अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः " इति स्वामिमुकुटौ ॥
३—पक्षभेदौ द्वौ । एको मासार्धः । अपरः पक्ष्यवयवः । तयोर्मूले पक्षतिः—इति पीयूषव्याख्या ॥

वनिता जनितात्यर्थानुरागायां च योषिति । गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः॥७४॥
बृहती क्षुद्रवार्ताकीच्छन्दोभेदे महत्यपि । वासिता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ७५॥
वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते । कलधौतं रूप्यहेम्नोर्निमित्ते हेतुलक्ष्मणोः ७६ ॥
श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् । अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७७॥
युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु । वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७८॥
महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु । श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु ७९ ॥
त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्यादि रागि च ।अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ८०
युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ संस्कृतम् । कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि ८१॥
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे । विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ८२॥

चेष्यते " इति विश्वः ॥ सिकेति ॥ "सिकता स्त्री सिकतिले वालुकायां तु भूमनि " इति मेदिनी ॥ वेद इति ॥ " श्रुतिः श्रोत्रे तथाऽऽम्नाये वार्तायां श्रोत्रकर्मणि " इति विश्वः ॥ ७३ ॥ वनीति ॥ " वनिता जातरागस्त्रीस्त्रियोः स्त्री त्रिषु याचिते" इति मेदिनी॥ गिवति ॥ "गुप्तिः कारा च रक्षा च दीर्णं च विवरं भुवः" इति शाश्वतः ॥ " गुप्तिस्त्र्यवकरस्थाने कारागारे च रक्षणे " इति मेदिनी ॥ धृतिरिति ॥ " धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु " इति विश्वः ॥ ७४ ॥ बृहेति ॥ " बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः " इति विश्वः ॥ वासीति ॥ " वासिता करिणीनार्योर्वासितं सुरभीकृते । ध्वानमात्रे खगारावे वासितं वस्त्रवेष्टिते " इति विश्वः ॥ स्वामी तु " वाशिता " इति तालव्यमध्यपाठमाह ॥ वार्तेति ॥ " वार्ता वातिङ्गणे वृत्तौ वार्ता कृष्याद्युदन्तयोः । वृत्तिमन्नीरुजोर्वार्ता वार्तमारोग्यफल्गुनोः " इति विश्वः॥७५॥" वार्तं फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि " इति धरणिः॥अप्स्विति ॥ " घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् " इति मेदिनी ॥ न मृतं मरणमत्र ॥ " अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च ना धन्वन्तरिदेवयोः " इति मेदिनी ॥ कलेति॥ कलो मलो धौतोऽस्य॥"कलधौतं सुवर्णे स्याद्रजते च नपुंसकम्"इति मेदिनी ॥७६॥ युगेति॥ "शक्तौ निवारणे तृप्तौ पर्याप्तं स्याद्यथेप्सिते " इति रुद्रः ॥ " कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु " इति मेदिनी ॥ ७७ ॥ युक्त इति ॥ " भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना ॥ कुमारेऽपि" इति मेदिनी ॥ वृत्तमिति॥"वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते वृते । वृत्तेऽन्यलिङ्गं वा क्लीबे छन्दश्चारित्रवृत्तिषु"इति मेदिनी ॥७८॥महेति ॥ "महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमाञ्श्रेष्ठे वाच्यवत्" इति मेदिनी ॥ अवेति ॥ " अवगीतस्तु निर्वादे दुष्टगर्हितयोरपि" इति मेदिनी ॥ जन्ये जनापवादे ॥ श्वयिति ॥ "श्वेतो द्वीपाद्रिभेदयोः । श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च ॥ क्लीबं रूप्येऽन्यवच्छुक्ले" इति मेदिनी ॥ रजेति ॥ "रजतं रञ्जने रूप्ये शोणिते हृदहारयोः" इत्यजयः ॥ ७९ ॥ त्रिष्विति ॥ आतान्तम् ॥ जगेति ॥ "जगत्स्याद्विष्टपे क्लीबं वायौ ना जंगमे त्रिषु" इति मेदिनी ॥ रक्तमिति॥ "रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि" इति मेदिनी ॥ वेति ॥ "सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री" इति मेदिनी ॥ ८० ॥ अथेति ॥ "संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः । क्लीबं तु लक्षणोपेते" इति मेदिनी ॥ लक्षणेन उपेते पाणिन्यादिसूत्रव्युत्पादिते ॥ अनेति॥ न अन्तोऽस्य॥ "अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि ॥ कणादुरालभापथ्यापार्वत्यामलकीषु च । विश्वंभरागुडूच्योः स्यादनन्तं सुरवर्त्मनि" इति मेदिनी ॥ ८१ ॥ ख्येति ॥ "प्रज्ञातज्ञातहृष्टेषु प्रतीतः सादरे त्रिषु" इति रभसः ॥ अभीति ॥ "अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु" इति मेदिनी ॥ बुधे पण्डिते ॥ विवीति ॥ "विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिषु" इति मेदिनी ॥ म्विति "मूर्छितमपि सोच्छ्रये च मूढे च" इति मेदिनी ॥८२॥

द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्॥
पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतःकृते । निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ ८४ ॥
जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी । वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ॥
अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु । निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥ ८६ ॥
समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च । दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥८७॥
आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः। अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ८८
अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ।पादा रश्म्यङ्घ्रितुर्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः ८९॥
निर्वादो जनवादेऽपि शादो जम्बालशष्पयोः। सारावे[1] रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ९० ॥
स्यात्प्रसादोऽनुरोधेऽपि सूदः स्याद्व्यञ्जने त्रिषु । गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः ९१॥
प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् । स्त्री[2] संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु॥९२॥
धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् । पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ ९३ ॥

द्वाविति ॥ "शुक्तं पूताम्लनिष्ठुरे " इति मेदिनी ॥ " मृन्मयादिशुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते " इति वैद्यकम् ॥ शिती इति ॥ "निशितिऽपि, शितिर्भूर्जे ना सितासितयोस्त्रिषु " इति मेदिनी ॥ सत्ये इति ॥ " सन् साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम् " इति मेदिनी ॥ ८३ ॥ पुरेति ॥ " पुरस्कृतोऽभिशस्तारिग्रस्ताग्रेकृतपूजिते " इति मेदिनी ॥ निवेति ॥ निरुद्धो निवृत्तो वा वातोऽस्मात् ॥ " निवातो दृढसंनाहे निवासे वातवर्जिते" इत्यजयः ॥ ८४ ॥ जेति ॥ "उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयोः" इति मेदिनी ॥ उत्थीति ॥ "उत्थितं स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि" इति मेदिनी ॥ ८५ ॥ इति तान्ताः ॥ अर्थ इति ॥ "अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां, निवृत्तौ च प्रयोजने" इति मेदिनी ॥ निपेति ॥ "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी ॥ निपानं जलावतारः ।—निदानमुपायः—इति मुकुटः ॥ ८६ ॥ दशेति ॥ दशम्यां तिष्ठति ॥ "दशमीस्थो नष्टबीजे स्थविरेऽप्यन्यलिङ्गकः" इति मेदिनी ॥ वीथीति ॥ "वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः" इति मेदिनी ॥ ८७ ॥ आस्थेति ॥ "आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति" इति मेदिनी ॥ प्रेति ॥ "प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि" इति मेदिनी ॥ इति थान्ताः ॥ अब्दाविति ॥ "अब्दः संवत्सरे मेघे गिरिभेदे च मुस्तके" इति विश्वः ॥८८॥ अपेति॥"अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि" इति ॥ मुकुटस्तु 'अववादः' इति पठित्वा "अववादस्तु निन्दायामाज्ञाविश्रम्भयोरपि" इति विश्वमुदाजहार ॥ दायेति ॥ दायस्य आदः ॥ "दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च" इति मेदिनी ॥ पादा इति ॥ "पादो बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते । चरणे च मयूखे च" इति मेदिनी ॥ ८९ ॥ निरिति ॥ "निर्वादः स्याल्लोकवादपरिनिष्ठितवादयोः" इति मेदिनी ॥ शेति ॥ जम्बालः पङ्कः ॥ शष्पं बालतृणम् ॥ सारेति ॥ "आक्रन्दः क्रन्दने ह्वाने मित्त्रदारुणयुद्धयोः" इति मेदिनी ॥ ९० ॥ स्यादिति ॥ "प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसक्तिषु" इति मेदिनी ॥ स्विति ॥ " सूदस्तु सूपवत्सूपकारे च व्यञ्जनेऽपि च" इति विश्वः ॥ गविति ॥ "गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ" इति मेदिनी ॥ हर्षे इति ॥ "आमोदो गन्धहर्षयोः" इति मेदिनी ॥ "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति विश्वः ॥ ९१ ॥ प्रेति ॥ "ककुद्वत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि" इति विश्वः ॥ स्त्रीति ॥ "संवित् स्त्रियां प्रतिज्ञायामाचारे ज्ञानसंगरे । संभाषणे क्रियाकारे संकेते नाम्नि तोषणे" इति मेदिनी ॥ क्रियायाः कारो नियमः पणबन्धो वा ॥ आजिर्युद्धम् ॥ ९२ ॥ धर्म इति ॥ "भवे-

१—"सारावे" इति रुदितविशेषणम् ॥ त्रातरि पार्ष्णिग्राहाक्रान्तस्य विजिगीषो रक्षितरि—इति पीयूषव्याख्या ॥
२—'स्त्री' इति संविदुपनिषच्छरद्भिः संबध्यते—इति मुकुटः ॥

गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् । त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥९४॥
मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ । प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ९५॥
व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः । पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥९६॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके । बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥ ९७ ॥
स्युः समर्थननीवाकनियमाश्च समाधयः । दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥ ९८ ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने । विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः॥९९॥
विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे। बुधवृद्धौ पण्डितेऽपि स्कन्धः समुदयेऽपि च १००॥
देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् । विधा विधौ प्रकारे च साधु रम्येऽपि च त्रिषु १०१
वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही । संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा १०२
मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि । अतस्त्रिषु समुन्नद्धौ पण्डितंमन्यगर्वितौ ॥ १०३ ॥

दुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम्" इति मेदिनी ॥ स्यादिति ॥ "शरत् स्त्री वत्सरेऽप्यृतौ" इति मेदिनी ॥ पदमिति ॥ "पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः" इति विश्वः ॥ "श्लोकपादेऽपि च क्लीबं पुंलिङ्गः किरणे पुनः" इति मेदिन्यां विशेषः ॥ ९३ ॥ गविति ॥ "गोष्पदं गोपदे श्वभ्रे गवां च गतिगोचरे" इति विश्वः ॥ प्रतीति ॥ "आस्पदं पदकृत्ययोः" इति मेदिनी ॥ त्रिष्विति ॥ आदान्तात् ॥ इष्टेति ॥ "स्वादु मिष्टमनोज्ञयोः" इति मेदिनी ॥ ९४ ॥ मूढेति ॥ "मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ" इति मेदिनी ॥ द्वाविति ॥ "शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः । शस्ये क्लीबं शरज्जातनूतनाप्रतिभे त्रिषु" इति मेदिनी ॥ वीति ॥ "विशारदः पण्डिते च धृष्टे" इति मेदिनी ॥ ९५ ॥ इति दान्ताः ॥ व्येति ॥ "न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ" इति विश्वः ॥ पर्येति ॥ "विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः" इति विश्वः ॥ परित आह्रियतेऽनेन पर्याहारः उभयतोबद्धशिक्यं स्कन्धवाह्यं काष्ठं "कावडी" इति ख्यातम् ॥ ९६ ॥ बन्धेति ॥ "आधिः पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च । व्यसने चाप्यधिष्ठाने" इति मेदिनी ॥ ९७ ॥ स्युरिति ॥ नीवाको वचनाभावः, मूलोत्कर्षार्थं धान्यादिसंग्रहो वा ॥ "समाधिर्ध्याननीवाकनियमेषु समर्थने" इति विश्वः॥ "समाधिर्ना समर्थने । ध्याने वैरस्य (ध्याननीवाक) नियमे काव्यस्य च गुणान्तरे" इति मेदिनी ॥ दविति ॥ "अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे । मुख्यानुयायिबाले च प्रकृतस्यानिवर्तने । अनुबन्धी तु हिक्कायां तृष्णायामपि" इति मेदिनी ॥ ९८ ॥ मुख्यं पित्रादिकमनुयाति यः शिशुः ॥ प्रकृतस्य प्रारब्धस्यानुवर्तनेऽनिवर्तने ॥ विधुरिति ॥ "विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे" इति विश्वः ॥परीति॥ "अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान्" इति मेदिनी ॥ ९९ ॥ विधिरिति ॥ "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी ॥ प्रेति ॥ " प्रणिधिर्याचने चरे " इति हैमः ॥ प्राणिधिरवधानेऽपि ॥ बुधेति ॥ "बुधः कवौ रौहिणेये" इति विश्वः ॥ "वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे" इति मेदिनी ॥ स्कन्ध इति ॥ "स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः । काये सरुप्रकाण्डे च भद्रादौ छन्दसो भिदि" इति मेदिनी ॥ १०० ॥ देश इति ॥ "सिन्धुः समुद्रे नद्यां च नदे देशेभदानयोः" इति विश्वः ॥ " सिन्धुर्वमथुदेशाब्धिनदे ना सारिति स्त्रियाम् " इति मेदिनी॥ विधेति ॥ "विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ" इति विश्वः ॥ विधौ विधाने ॥ साध्विति ॥ "साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्" इति विश्वः ॥१०१॥ वधूरिति॥ "वधूः स्नुषा नवोढा स्त्री भार्याप्रकाङ्गनासु च । शट्यां च शारिवायां च" इति विश्वः ॥ सुधेति ॥ "सुधा गङ्गेष्टकाचूर्णं स्नुही चामृतसूर्ययोः" इत्यजयः ॥ श्रदिति ॥ 'श्रद्धाऽऽदरे च काङ्क्षायाम्" इति मेदिनी॥ सम्प्रत्यय आदरः ॥१०२॥मध्विति॥ "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे" इति

ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः । अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ॥ १०४॥
सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ । भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥१०५॥
ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ । तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ॥१०६॥
प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ । द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ॥१०७॥
कुलेऽप्यभिजनो जन्मभूम्यामप्यथ हायनाः । वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः१०८
केशेऽपि वृजिनो विश्वकर्माऽर्कसुरशिल्पिनोः।आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च१०९
शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः। अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः ॥ ११०॥
घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे । इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ॥१११॥
वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि वाहिनी । ह्लादिन्यौ वज्रताडितौ वन्दायामपि कामिनी ११२
त्वग्देहयोरपि तनुः सूनाऽधोजिह्विकाऽपि च । क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ॥११३॥

विश्वः॥अन्धमिति॥"अन्धं तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्"इति मेदिनी ॥ अत इति ॥ आधान्तात् ॥ सम्बिति ॥ "समुन्नद्धः समुद्धूते पण्डितंमन्यदृप्तयोः" इति विश्वः ॥ १०३ ॥ ब्रह्मेति ॥ ब्रह्मैव ब्राह्मणजातिः बन्धुरस्य ॥ "ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्" इति विश्वः ॥ अथेति ॥ अवलम्बित आश्रितः, वस्त्रादिरुद्धो वा ॥ अवष्टभ्यते स्म ॥ "अवष्टब्धोऽविदूरे स्यादाक्रान्ते चावलम्बिते" इति मेदिनी ॥ १०४ ॥ इति धान्ताः ॥ सूर्येति ॥ चित्रा भानवो रश्मयोऽस्य ॥ भूतेति ॥ भूतानामात्मा ॥ भूतानि आत्मा स्वभावो यस्य इति च ॥ मूर्खेति ॥ पृथक्कार्यो जनः ॥ १०५ ॥ पत्त्रीति ॥ "पत्त्री श्येने रथे काण्डे खगद्रुरथिकाद्रिषु" इति विश्वः ॥ शिखीति ॥ "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः" इति मेदिनी ॥ १०६ ॥ प्रतीति ॥ "प्रतियत्नश्च संस्कार-लिप्सोपग्रहणेषु च" इति मेदिनी ॥ उपग्रहो वन्दीग्रहणादिः ॥ अथेति ॥ "सादी तुरङ्गमताङ्गरथारोहेषु दृश्यते" इति मेदिनी ॥ वाजीति ॥ वाजाः पक्षाः सन्त्यस्य ॥ १०७ ॥ कुल इति ॥ "अभिजनः कुले ख्यातौ जन्मभूम्यां कुलध्वजे" इति विश्वः ॥ अथेति ॥ "हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभे-दयोः" इति मेदिनी ॥ वर्षोऽब्दम् । अर्चीः रश्मिः । व्रीहिभेदो नीवारादिः, इति मुकुटः ॥ षष्टिकः, इति स्वामी ॥ चन्द्रेति ॥ "विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः" इति मेदिनी ॥ १०८ ॥ केश इति ॥ "वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु" इति रभसः ॥ विश्वेति ॥ "विश्वकर्मा सहस्रांशौ मुनिभिदेवशिल्पिनोः" इति मेदिनी ॥ आत्मेति ॥ "आत्मा कलेवरे यत्ने स्वभावे परमा-त्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च" इति धरणिः ॥ १०९ ॥ शक्र इति॥ "अन्योऽन्य-घट्टने चैव घातुके च घनाघनः" इति धरणिः ॥ अभीति ॥ आदिना कुलपद्मगुणादिग्रहः ॥ ११० ॥ घन इति ॥ "घनं सान्द्रं घनं वाद्यं घनो मुस्तो घनोऽम्बुदः । घनः काठिन्यसंघातो विस्तारो लोहमुद्गरौ" इति धरणिः ॥ मूर्तिगुणे काठिन्ये ॥ राजेति ॥ "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी ॥ १११ ॥ वाणीति ॥ बवयोरैक्यम् ॥ वाणिनी नर्तकी मत्ताविदग्धवनितासु च" इति मेदिनी ॥ स्रवेति ॥ "वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः" इति वन्देति ॥ "कामिनी भीरुवन्दयोः । कामी तु कामुके चक्रवाके पारावतेऽपि च" इति मेदिनी ॥ वन्दा वृक्षे विजातीयप्ररोहः ॥ ११२ ॥ त्वगिति ॥ "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति मेदिनी ॥ सूनेति ॥ "सूनाख्या पुष्पिते पुष्पे जिह्वातले वधालये" इत्यजयः ॥ "सूनं प्रसवपुष्पयोः ॥ सूना पुल्यां वधस्थानगलशुण्डिकयोरपि" इति विश्वः ॥ क्रत्विति ॥ "वितानो यज्ञवि-स्तारोल्लोचेषु क्रतुकर्मणि । वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः" इति विश्वः ॥ "वितानो यज्ञ उल्लोचे

१—वाणिनीशब्दो मेदिन्यां पवर्गीयादौ पठितः । हैमे तु अन्तःस्थादौ पठितः ॥ एवं वाहिनीशब्दोऽपि ॥

मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रणे । वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ ११४ ॥
उत्साहने च हिंसायां सूचने चापि गन्धनम् । आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ॥ ११५ ॥
व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपि । स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ११६
स्यादुद्यानं निःसरणे वनभेदे प्रयोजने । अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम् ॥ ११७ ॥
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च । व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ॥ ११८ ॥
मारणे मृतसंस्कारे गतौ द्रव्योपपादने । निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ॥ ११९ ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च । व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ १२० ॥
पक्ष्माक्षिलोम्नि किंजल्के तन्त्वाद्यंशेऽप्यणीयसि । तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि १२१
अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते । प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः ॥ १२२ ॥
प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः । क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥ १२३ ॥
गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे । संनिवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ॥ १२४ ॥
आच्छादने संपिधानमपवारणमित्युभे । आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥ १२५ ॥
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि । रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने ॥ १२६ ॥

विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः" इति मेदिनी ॥ ११३ ॥ मन्दे मूढे ॥ अथेति ॥ "केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोः" इत्यजयः ॥ वेद इति ॥ "ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे" इति मेदिनी ॥ ११४ ॥ उत्सेति ॥ "गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने" इति विश्वः ॥ आतेति ॥ प्रतीवापो दुग्धादौ दध्यादिभावार्थं तक्रादिप्रक्षेपः, निक्षेपो वा॥जवनं वेगः॥आप्यायनं तर्पणम्॥११५॥व्यञ्जेति॥"व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च"इति मेदिनी॥निष्ठानं तेमनम् ॥ स्यादिति॥"कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः"इति धरणिः ॥११६॥ स्यादिति ॥ "उद्यानं वनभेदे स्यान्निःसृतौ च प्रयोजने" इति धरणिः॥अवेति॥ "स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे" इति मेदिनी॥क्रीडेति॥"देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि ।अक्षेषु देवनः प्रोक्तः"इति विश्वः ॥ ११७ ॥ उदिति ॥ "उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे । प्राङ्गणोद्गमहर्षेषु मलवेगेऽपि न द्वयोः" इति मेदिनी ॥ "तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाने च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके" इति मेदिनी ॥ व्युदिति ॥ "स्वतन्त्रता च व्युत्थानम्" इति त्रिकाण्डशेषः ॥ ११८ ॥ मारेति ॥ "साधनं मृतसंस्कारे सैन्ये सिद्धौषधे गतौ । निर्वर्तनोपायमेढ्रदापनेऽनुगमे धने" इति मेदिनी॥ उपकरणं साधनसामग्री ॥११९॥ व्यसेति॥"व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति विश्वः॥ कामजे दोषे मृगयाक्षपानादौ ॥ कोपजे वाक्पारुष्यदण्डपारुष्यार्थदूषणादौ ॥ १२० ॥ पक्ष्मेति ॥ "पक्ष्म सूत्रादिसूक्ष्मांशे किंजल्के नेत्रलोमनि" इति विश्वः ॥ तिथीति ॥ "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु । दर्शप्रतिपदोः संधौ स्यात्तिथेः पञ्चकान्तरे" इति धरणिः ॥ १२१ ॥ अकेति॥"कौपीनं स्यादकार्येऽपि चीरगुह्यप्रदेशयोः" इति विश्वः ॥ मायिति ॥ मिथुनमेव । प्रज्ञाद्यण् (५।४।३८) । मिथुनस्येदं वा ॥ "संबन्धे सुरते युग्मे राशौ मिथुनमिष्यते" इति व्याडिः ॥ प्रेति ॥ "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा" इति मेदिनी ॥ १२२ ॥ वर्ष्मेति ॥ "वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम्" इति मेदिनी ॥ १२३ ॥ गृहेति ॥ "धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु" इति विश्वः ॥ अथेति ॥ "संस्थानमाकृतौ मृत्यौ संनिवेशे चतुष्पथे" इति मेदिनी ॥ १२४ ॥ आच्छेति ॥ "आच्छादनं संविधाने वस्त्रेऽपवृतिमात्रके" इति धरणिः ॥ १२५ ॥ अधीति ॥ "अधिष्ठानं रथस्याङ्गे प्रभावेऽध्यासने पुरे" इत्यजयः ॥ रत्नमिति ॥ 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी ॥ वने इति ॥

तलिनं विरलं स्तोके वाच्यलिङ्गास्तथोत्तरे। समानाः सत्समैके स्युः पिशुनौ खलसूचकौ १२७॥
हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ । अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गता अपि ॥१२८॥
कलापो भूषणे बर्हे तूणीरे संहतेऽपि च। परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥ १२९ ॥
गोधुग् गोष्ठपतिर्गोपौ हरौ विष्णुर्वृषाकपिः। बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् १३०
तल्पं शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम् । प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः॥१३१॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी । रवर्णे पुंसि रेफःस्यात्कुत्सिते वाच्यलिङ्गकः१३२
अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने । कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ॥१३३॥
पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान्।कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ
स्तम्भौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ । कुक्षिभ्रूणार्भका गर्भा विस्रम्भः प्रणयेऽपि च
स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम्।स्यान्महारजने क्लीबं कुसुम्भं करके पुमान्
क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम्। सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः

"क्लीबं स्यात् कानने नीरे निवासे निलये वनम्" इति रभसः ॥ १२६ ॥ तलीति ॥ "तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्" इति मेदिनी ॥ वाच्येति ॥ तथा तालिनवत् ॥ उत्तरे आनान्तात् ॥ समेति ॥ "समानं सत्समैकेषु त्रिषु, ना नाभिमारुते" इति मेदिनी ॥ पिश्चिति ॥ "पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात्" इति मेदिनी ॥ १२७ ॥ हीनेति ॥ "हीनं गर्ह्योनयोस्त्रिषु" इति मेदिनी ॥ "न्यूनं गर्ह्योनयोः" इति मेदिनी ॥ वेगीति ॥ तरो बलं जवो वाऽस्यास्ति ॥ अभीति ॥ "अभिपन्नोऽपराद्धेऽभिद्रुते ग्रस्ते विपद्गते" इति विश्वः ॥ १२८ ॥ इति नान्ताः ॥ कलेति ॥ "कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः" इत्यजयः ॥ "चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः" इति मेदिन्यां विशेषः ॥ परीति ॥ परिच्छदः परिवारः ॥ १२९ ॥ गविति ॥ "गोपो ग्रामौघगोष्ठाधिकृतयोर्बल्लवे" इति विश्वः ॥ हर इति ॥ वृषं धर्मं न कम्पयति ॥ "वृषाकपिः पुमान्कृष्णे शंकरे जातवेदसि" इति मेदिनी ॥ कशीति ॥ "एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयोः पृथक्" इति विश्वः ॥ १३० ॥ तल्पमिति ॥ अट्टोऽट्टालिका ॥ स्तेति ॥ "विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः" इति विश्वः ॥ प्राप्तेति ॥ "प्राप्तरूपो ज्ञरम्ययोः" इति मेदिनी ॥ स्वमेव रूपं यस्य ॥ अभिलक्ष्यं रूपमस्य ॥ "अभिरूपो बुधे रम्ये" इति मेदिनी ॥ १३१ ॥ कूर्मीति ॥ कच्छे कच्छं वा पिबति ॥ "कच्छपी वल्लकीभेदे डुलौ क्षुद्रगदान्तरे" इति विश्वः ॥ इति पान्ताः ॥ रवेति ॥ १३२ ॥ इति फान्ताः ॥ अन्तरा मरणजन्मनोर्मध्ये भवं सत्त्वं यातनाशरीरम् ॥ "गन्धर्वः पशुभेदे स्यात्पुंस्कोकिलतुरंगयोः । अन्तराभवसत्त्वे च गायने खेचरेऽपि च" इति मेदिनी ॥ केति ॥ "कम्बुः शङ्खे स्त्रियां पुंसि शम्बूके वलये गजे" इति मेदिनी ॥ द्वीति ॥ द्वे जिह्वे यस्य ॥ १३३ ॥ पृविति ॥ "पूर्वे तु पूर्वजेषु स्युः पूर्वप्रागाद्ययोस्त्रिषु" इति मेदिनी ॥ "प्राक् पूर्वमग्रतः" इति धरणिः ॥ इति वान्ताः॥ किति॥ "कुम्भः स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे । राशिभेदे द्विपाङ्गे च कुम्भं त्रिवृति गुग्गुले" इति विश्वः ॥ १३४ ॥ शमिति ॥ "शंभुः पुंसि महादेवे परमेष्ठिनि चार्हति" इति मेदिनी ॥ कुक्षीति ॥ "गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके" इति मेदिनी ॥ वीति ॥ "विस्रम्भः केलिकलहे विश्वासे प्रणये वधे" इति विश्वः ॥ "परिचयप्रार्थनयोः प्रणयः परिकीर्तितः" इत्यमरमाला ॥ १३५ ॥ स्यादिति ॥ "दुन्दुभिः पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षे बिन्दुत्रिकद्वये" इति मेदिनी ॥ स्यादिति ॥ "कुसुम्भं हेमनि महारजने ना कमण्डलौ" इति मेदिनी ॥ १३६ ॥ क्षेति ॥ "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां

१--बाष्पं मेदिन्यामन्तःस्थादौ पठ्यते । अत एव गोवर्धनाचार्यैरपि "बाष्पाकुलम्" ( ५२८ ) इत्यार्याऽन्तःस्थादिव्रज्यायां लिखिता । हैमे तु स्पर्शादिषु पठ्यते ॥ २--पूर्वगन्धर्वशब्दौ विश्वमेदिन्योरपि स्पर्शान्तेष्वेवोपलभ्येते । हैमे तु दन्तोष्ठ्यान्तेष्वेव ॥ ३--अक्षे बिन्दुत्रिकद्वये यथा "दुन्दुभ्या किल तत्कृतं पतितयाद्द्रौपदी हारिता " इति स्वामिमुकुटानेकार्थकरवाकरकौमुद्यः ॥

किरणप्रग्रहौ रश्मी कपिभेकौ प्लवंगमौ । इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ१३८॥
धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः । उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ॥ १३९॥
वणिक्पथः पुरं वेदो निगमो नागरो वणिक् । नैगमौ द्वौ[1] बले रामो नीलचारुसिते त्रिषु १४०
शब्दादिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः।स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्मस्तु कुटिलेऽलसे
गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः। क्षितिक्षान्त्योः क्षमा युक्ते क्षमं[2] शक्ते हिते त्रिषु॥
त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशाः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु
सूक्ष्ममध्यात्ममप्यादौ प्रधाने प्रथमस्त्रिषु । वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ १४४
जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् । तुरंगगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ॥१४५॥

कस्तूरिकामदे'' इति मेदिनी ॥ सुरेति ॥ ''सुरभिः शल्लकीमातृभित्सुरगोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान् ॥ स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्'' इति मेदिनी ॥ सभेति ॥ ''स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दिरयोः सभा'' इति रभसः ॥ त्रिष्विति ॥ ''वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरंगमे'' इति मेदिनी ॥ १३७ ॥ इति भान्ताः ॥ किरेति ॥ ''रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि'' इति मेदिनी ॥ इच्छेति ॥ ''कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्'' इति मेदिनी ॥ शाविति ॥ ''पराक्रमः स्यात्सामर्थ्ये विक्रमोद्यमयोरपि'' इति मेदिनी ॥ १३८ ॥ धर्मा इति ॥ ''धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे'' इति मेदिनी ॥ उपेति ॥ उपधा उत्कोचः ॥ ''उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे'' इति विश्वः॥१३९॥ वणीति ॥ ''निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे''इति विश्वः ॥ नागेति ॥ ''नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च'' इति विश्वः॥बल इति॥ ''रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे च सितश्वेतमनोज्ञेषु च वाच्यवत्'' इति विश्वः ॥१४०॥शब्देति॥ ''ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः''इति विश्वः॥ क्रेति ॥ ''विक्रमः शक्तिसंपत्तिः क्रान्तिमात्रं च विक्रमः'' इति धरणिः ॥१४१॥ ग्विति ॥ ''गुल्मः स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे '' इति विश्वः ॥ रुग् उदररोगः ॥ स्तम्बोऽप्रकाण्डः ॥ जामिरिति ॥ ''जिह्मः कुटिले मन्दे जामिः स्वसृकुलस्त्रियोः '' इति चवर्गादावजयः ॥मुकुटस्तु—''प्रहरे समये यामो यामिः स्वसृकुलस्त्रियोः '' इति रभसादन्तःस्थादितामाह ॥ '' यामिः कुलस्त्रीस्वस्रोः स्त्री '' इति मेदिनी ॥ क्षितीति ॥ '' क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम् '' इति धरणिः ॥ १४२ ॥ त्रिष्विति ॥ '' श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरिते पुंसि स्यात्तद्वति त्रिषु ॥ मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ । अप्रसूताङ्गनायां च प्रियङ्गावपि चोच्यते ॥ यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ । नीलिकायाम् '' इति मेदिनी ॥ ललेति ॥ बाहुलकात्कनिनि नान्तोऽपि[3] ॥ '' प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजिप्रभावेषु ललामं स्याल्ललाम च '' इति रुद्रः ॥ पुण्ड्रमश्वादीनां ललाटचित्रम् ॥ अश्वो वाजी ॥ भूषा सामीप्यादश्वस्यैव ॥ १४३ ॥ स्विति ॥ ''सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके'' इति मेदिनी ॥ आदाविति ॥ '' प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत् '' इति मेदिनी ॥ त्रिष्विति ॥ आमान्तम् ॥ वेति ॥ ''वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे । पयोधरे हरे कामे विद्याद्वामामपि स्त्रियम् । वामी शृगालीवडवारासभीकरभीषु च '' इति विश्वः ॥ १४४ ॥ जीति ॥ यातो गतो याम उपभोगकालो यस्य ॥ '' यातयामोऽन्यवज्जीर्णे परिभुक्तोज्झितेऽपि च '' इति मेदिनी ॥ इति मान्ताः ॥ तुरमिति ॥ तार्क्ष्यस्य कश्यपस्यापत्यम् ॥ '' तार्क्ष्योऽश्वसर्पयोः । गरुडाग्रजे सुपर्णे च पुंसि क्लीबं रसाञ्जने '' इति मेदिनी ॥

---

१–द्वाविति ब्राह्मणस्य नैगमत्वे निषेधः–इति स्वामी॥–'द्वौ' इत्युक्तेरुपनिषद्ब्राह्मणयोर्नायम्,इत्येके–इति पीयूषव्याख्या ॥ २—युक्ते मान्तमव्ययम् , इत्येके । शक्ताहितयोस्त्रिषु । क्षमः, क्षमा, इति पीयूषव्याख्या ॥ ३—यथा ''कन्याललाम कमनीयमजस्य लिप्सोः'' इति रघुः—इति स्वामिमुकुटौ ॥

श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ। पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः१४६
तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ॥ १४७ ॥
रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः । स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते१४८॥
समयाः शपथाचारकालसिद्धान्तसंविदः । व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥ १४९ ॥
अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि । युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च॥
पश्चादवस्थायिबलं समवायश्च संनयौ । संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी ॥१५१॥
विश्रम्भयाच्ञाप्रेमाणो विरोधेऽपि समुच्छ्रयः। विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि१५२
निर्यासेऽपि कषायोऽस्त्री सभायां च प्रतिश्रयः । प्रायो भून्म्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि॥
रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः । वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये १५४॥
धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् । कशेरुहेम्नोर्गाङ्गेयं विशल्या दन्तिकाऽपि च
वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः। आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम्॥
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः। छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः

निलेति ॥ "क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च" इति मेदिनी ॥१४५॥ पेति॥ "पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः" इति विश्वः ॥१४६॥ तिष्य इति ॥ "तिष्यः कलियुगे ऋक्षे तिष्या धात्री च कीर्त्यते" इति धरणिः ॥ पर्येति ॥ "पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे" इति विश्वः ॥प्रत्येति॥ "प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु । प्राथितत्वे च सन्नादावधीनज्ञानयोरपि" इति विश्वः ॥ १४७ ॥ अथेति ॥ "भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः" इति विश्वः ॥ स्थ्वेति ॥ "स्थूलोच्चयस्त्वसाकल्ये गण्डोपलकरण्डयोः" इति विश्वः ॥ १४८ ॥ समेति ॥ "समयः शपथाचारसिद्धान्तेषु तथा धिथि । क्रियाकारे च निर्देशे संकेते कालभाषयोः" इति मेदिनी ॥ व्यसेति ॥ व्यसनं स्त्रीद्यूतपानादि ॥ अशुभं दैवविशेषणम् ॥ विरोधे नञ् । अयाच्छुभावहाविधेरन्यः ॥ "अनयस्तु विपद्दैवाशुभयोर्व्यसनेषु च" इति मेदिनी॥१४९॥अत्येति॥ "अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः" इति धरणिः ॥ अथेति ॥ "संपरायः समीके स्यादापदुत्तरकालयोः" इति मेदिनी ॥ प्वेति ॥ "पूज्यौ श्वशुरपूजार्हौ" इति धरणिः ॥ १५० ॥ समिति ॥ "संस्त्यायः संनिवेशे च संघाते विस्तृतावपि" इति मेदिनी ॥ प्रणेति ॥ "प्रणयः प्रसरे प्रेम्णि याच्ञाविश्रम्भयोरपि । निर्वाणेऽपि" इति मेदिनी ॥ १५१ ॥ "विश्रम्भः स्यात्परिचये विश्वासविप्रलम्भयोः" इत्यजयः ॥ वीति ॥ "वैरोन्नत्योः समुच्छ्रयः" इति रभसः ॥ विषेति ॥ "विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्" इति मेदिनी॥१५२॥ निर्येति॥निर्यासः क्वाथः॥ "कषायो रसभेदे स्यादङ्गरागे विलेपने। निर्यासे च कषायोऽथ सुरभौ लोहितेऽन्यवत्" इति विश्वः॥सभेति॥ "प्रतिश्रयः सभायां चाश्रयेऽभ्युपगमेऽपि च" इति मेदिनी॥ प्रेति॥ "प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः" इति विश्वः॥ मन्युरिति ॥ "मन्युः पुमान् क्रुधि । दैन्ये शोके च यज्ञे च" इति मेदिनी ॥ १५३ ॥ रहेति ॥ "गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः" इति विश्वः ॥ सत्यमिति ॥ "सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति" इति मेदिनी ॥ वीर्यमिति ॥ "वीर्यं प्रभावे शुक्रे च तेजःसामर्थ्ययोरपि" इति मेदिनी ॥ द्रव्यमिति ॥ "द्रव्यं स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले । भेषजे च विलेपे च जतुद्रुमविशेषयोः" इति विश्वः॥१५४॥ धिष्ण्यमिति ॥ "धिष्ण्यं स्थानाग्निसद्मसु । शक्तावृक्षेऽपि" इति मेदिनी ॥ भाग्यमिति ॥ "भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि" इति विश्वः ॥ कशेयेति ॥ "गाङ्गेयः स्यात्पुमान्भीष्मे क्लीबं स्वर्णकशेरुणोः" इति मेदिनी ॥ विशेति ॥ "विशल्याऽग्निशिखादन्तीगुडूचीत्रिपुटासु च" इति मेदिनी ॥ १५५ ॥ वृषेति ॥ वृषाकपेः स्त्री ॥ "वृषाकपायी श्रीगौरीवरीजीवन्तिकासु च" इति मेदिनी ॥ अभीति ॥ "अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि" इति मेदिनी ॥ आरेति ॥ निष्कृतिः प्रायश्चित्तम् ॥ संप्रधारणं विचारः ॥ १५६ ॥ उपायः सामादिः ॥ चेष्टा परिस्पन्दः ॥

कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभवन्धने ।कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः
जन्यो जनापवादेऽपि जघन्योऽन्तेऽधमेऽपि च । गर्ह्याधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ
आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि । रूप्यं प्रशस्ते रूपेऽपि वदान्यो वल्गुवागपि१६०
न्याय्येऽपि मध्यं सौम्ये तु सुन्दरं सोमदैवते । निवहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ १६१
गुरू गीर्षतिपित्राद्यौ द्वापरौ युगसंशयौ । प्रकारौ भेदसादृश्ये आकाराविङ्गिताकृती ॥१६२॥
किंशारू धान्यशूकेषू मरू धन्वधराधरौ । अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ१६३॥
ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः । प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि
अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूवरौ । स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः १६५

"क्रिया कर्मणि चेष्टायां करणे संप्रधारणे । आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि" इति विश्वः ॥ छायेति ॥ "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः" इति मेदिनी ॥ १५७ ॥ कक्ष्येति ॥ "कक्ष्या बृहतिकायां स्यात् काञ्च्यां मध्येभवन्धने । हर्म्यादीनां प्रकोष्ठे च" इति यान्तेषु मेदिनी ॥ कृत्येति ॥ "कृत्यो विद्विषि कार्ये च कृत्या क्रियादिवौकसोः" इति रभसः॥१५८ ॥ जन्य इति ॥ जनानां वादः ॥ "जन्या मातृवयस्या स्याज्जन्या जनीवरप्रिया । जननीजनयित्रोश्च जन्यं निर्वादयुद्धयोः" इति धरणिः ॥ जघेति ॥"जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्" इति विश्वः ॥ गर्ह्येति ॥ "वक्तव्यं कुत्सिते हीने वचनार्हे च वाच्यवत्"इति मेदिनी॥केति ॥ कलासु साधुः ॥"कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवार्जिते । सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च । उपायवचनेऽपि स्यात् त्रिषु, मद्ये तु योषिति"इति मेदिनी ॥ सज्जो बद्धसंनाहादिः ॥ १५९ ॥ आत्मेति ॥ आत्मवान् ज्ञानी ॥ अर्थादनपेतः ॥ "अर्थ्यौ विज्ञार्थशालिनोः" इत्यजयः ॥ "अर्थ्यं शिलाजतुन्यर्थ्यो बुधे न्याय्ये च वाच्यवत्" इति मेदिनी ॥पुण्यमिति ॥ "पुण्यस्त्रिषु मनोज्ञे स्यात्क्लीवं सुकृतधर्मयोः" इति विश्वः ॥ रूप्यमिति ॥ आहतं प्रशस्तं वा रूपमस्यास्ति ॥ "रूप्यः स्यात्सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्" इति मेदिनी ॥ वदेति ॥ "वदान्यो दातृवाग्मिनोः" इत्यजयः ॥ १६० ॥ न्येति ॥ "न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु" इति रभसः ॥ साविति ॥ "सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते ॥ इल्वलासु च सौम्याः स्युः" इति विश्वः ॥ इति यान्ताः ॥ निवेति ॥ "वारः सूर्यादिदिवसे वारोऽवसरवृन्दयोः । कुब्जवृक्षे हरे द्वारे, वारं मद्यस्य भाजने" इति विश्वः ॥ समिति॥ "संस्तर-प्रस्तरावेतौ प्रस्तराध्वरयोरपि । मणिपाषाणयोश्चापि यथाक्रममुदीरितौ" इति विश्वः ॥ प्रस्तरः शय्या ॥ १६१ ॥ गिविति ॥ "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि" इति मेदिनी ॥ द्वेति ॥ द्वाभ्यां परः द्वौ परावत्र वा ॥ प्रेति ॥ "प्रकारस्तुल्यभेदयोः" इति मेदिनी ॥ आकेति ॥ इङ्गितं चेष्टा ॥ आकृतिरवयवसंस्थानम् ॥ १६२ ॥ किंशेति॥"किंशारुर्ना शस्यशूके विशिखे कङ्कपत्त्रिणि"इति मेदिनी ॥ मरू इति ॥ "मरुर्ना गिरिधन्वनोः"इति मेदिनी ॥ स्त्रीति ॥ "पयोधरः कोषकारे नारिकेले स्तनेऽपि च । कशेरुमेघयोः पुंसि" इति मेदिनी ॥१६३॥ ध्वान्तेति ॥ "वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे" इति मेदिनी ॥ बलीति ॥ बली राजग्राह्यो भागः ॥ अंशुर्मयूखः ॥ "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" इति मेदिनी ॥ प्रदेति ॥ "प्रदरो रोगभेदे स्याद्विदारे शरभङ्गयोः" इति मेदिनी ॥ एति ॥ "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" इति मेदिनी ॥ १६४ ॥ अजेति ॥ 'काले' इत्युभाभ्यां संबध्यते ॥ तूश्रासौ वैरश्चाच्छादकः ॥ "तूवरोऽश्मश्रुपुरुषे प्रौढाश्रृङ्गगवेऽपि च । पुरुषे व्यञ्जनत्यक्ते स्यात्कषायरसेऽपि च" इति मेदिनी ॥ स्वेति ॥ "राः पुंसि स्वर्णवित्तयोः" इति मेदिनी ॥ परीति ॥ "भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि" इति विश्वः ॥ "यत्नारम्भौ परिकरौ" इति त्रिकाण्डशेषः ॥ १६५ ॥

---

१—तूवरो दन्त्योष्ठ्यमध्यो ग्रन्थकृता पठितः । वस्तुतस्तु पवर्गाद्यमध्यः । वेदे तथा दर्शनात् । "अश्वस्तूपरो गोमृगः" इति—इति पीयूषव्याख्या ॥

मुक्ताशुद्धौ च तारः स्यात् शारो वायौ स तु त्रिषु।कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः।१६६
वेदभेदे गुह्यवादे मन्त्रो मित्रो रवावपि । मखेषुयूपखण्डेऽपि स्वरुर्गुह्येऽप्यवस्करः ॥ १६७ ॥
आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते । अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ॥१६८॥
स्याज्जंगमे परीवारः खड्गकोशे परिच्छदे । विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥१६९॥
द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे। विपुले नकुले विष्णौ बभ्रुः स्यात्पिङ्गले त्रिषु १७०
सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु। दुरोदरो द्यूतकारे पणे, द्यूते दुरोदरम् १७१
महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम् । मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ १७२ ॥
देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये । वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना१७३॥
ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु॥१७४॥
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु । शर्करा कर्परांशेऽपि यात्रा स्याद्यापने गतौ १७५॥

मुक्तेति ॥ "तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके । तारं च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम् ॥ ऋक्षाक्षि-मध्ययोस्तारा सुग्रीवगुरुयोषितोः । बुद्धदेव्यां मता तारा" इति विश्वः ॥ शार इति ॥ शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे" इति तालव्यादौ मेदिनी ॥ अथेति ॥ "संगरो युधि चापदि । क्रियाकारे विषे चाङ्गीकारे क्लीबं शमीफले" इति मेदिनी ॥ १६६ ॥ वेदेति ॥ "मन्त्रो वेदविशेषे स्याद्देवादीनां च साधने । गुह्यवादेऽपि च पुमान्" इति मेदिनी ॥ मीति ॥ "मित्त्रं सुहृदि न द्वयोः । सूर्ये पुंसि" इति मेदिनी॥मखयिति॥इषुर्बाणः ॥ "स्वरुः पुमान्यूपखण्डे भिदुरेऽप्यध्वरे शरे" इति मेदिनी ॥ यूपखण्डे यूपे तक्ष्यमाणे प्रथमपतिते शकले ॥ ग्विति ॥ "अवस्करोऽपि वर्चस्के गुह्ये" इति मेदिनी ॥ गुह्य उपस्थे ॥ १६७ ॥ आडेति ॥ "आडम्बरः समारम्भे गजगार्जिततूर्ययोः" इति विश्वः ॥ अभीति ॥ अभिगम्याक्रमणमभियोगः ॥ संनहनं कवचादिधारणम् ॥ १६८ ॥ स्यादिति ॥ जंगमे परिजने ॥ "परीवारः परिजने खड्गकोशे परिच्छदे" इति मेदिनी ॥ परिच्छद उपकरणम् ॥ १६९ ॥ द्वारीति ॥ "प्रतीहारो द्वारि द्वाःस्थेः द्वाःस्थितायां तु योषिति" इति मेदिनी ॥ अनन्तरे द्वाःस्थे ॥ वीति ॥ "बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु" इति बलशर्मा ॥ "बभ्रुर्विशाले नकुले कृशाना-वजे मुनौ शूलिनि पिङ्गले च" इति विश्वः ॥ १७० ॥ सार इति ॥ "सारो बले स्थिरांशे च मज्ञि पुंसि जले धने । न्याय्ये क्लीवं त्रिषु वरे" इति मेदिनी ॥ दुरत्रिति ॥ दुष्टमासमन्तादुदरमस्य ॥ "दुरोदरो द्यूतकारे द्यूताक्षपणयोः पुमान्" ॥ पणो ग्लहः ॥ १७१ ॥ महेति ॥ "कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि । पुंसि स्यादिक्षुभेदे" इति मेदिनी ॥ मत्सेति ॥ "मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयवत्" इति मेदिनी ॥ तद्वानन्यशुभद्वेषवान् ॥ १७२ ॥ देवादिति ॥ "वरो जामातरि वृतौ देवतादेरभीप्सिते । पिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुं-सकम् ॥ वरी प्रोक्ता शतावर्यां वरा च स्यात्फलत्रिके । मनागिष्टे वरं क्लीवं केचिदाहुस्तदव्ययम्" इति मेदिनी ॥ वंशेति ॥ "वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायां च दन्त-मूले च दन्तिनाम्" इति मेदिनी ॥ १७३ ॥ नेति ॥ "भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले ॥ आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः" इति मेदिनी ॥ यमेति ॥ १७४ ॥ "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च ॥ हरिर्वा-च्यवदाख्यातो हरित्कपिलवर्णयोः" इति विश्वः ॥ शर्केति ॥ "शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च" इति मेदिनी ॥ यात्रेति ॥ "यात्रा तु यापनोपाये गतौ

१—"आश्रित्य दुर्गं गिरिकंदरोदरं क्रीडन्त्यमुष्मिन् सजतं दरोदरम्" इति यमकान्निरुकारोऽपि, इति गोवर्धनः— इति मुकुटपीयूषौ ॥ २—आधुनिकमेदिनीपुस्तके तु "दुरोदरं द्यूतभेदे द्यूतकृपणयोः पुमान्" इति पाठो लभ्यते ॥

इरा भूवाक्सुराप्सु स्यात्तन्द्री निद्राप्रमीलयोः।धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि१७६
क्षुद्रा व्यङ्गा नटी वेश्या सरसा कण्टकारिका । त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्रो मात्रा परिच्छदे
अल्पे च परिमाणे स्यान्मात्रं कात्स्न्येऽवधारणे । आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः
योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः । निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ॥१७९॥
स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः। मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं च नाम्नि च १८०॥
सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च । अजिरं विषये कायेऽप्यम्बरं व्योम्नि वाससि१८१
चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च । स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रे तु गोपुरम् ॥
गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे । पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम् ॥ १८३ ॥
मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ।दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ१८४

देवार्चनोत्सवे" इति विश्वः ॥ १७५ ॥ तन्द्रीति ॥ प्रमीला अत्यन्तश्रमादिना मोहप्राया ॥ धात्रीति ॥ "धात्री जनन्यामलकीवसुमत्युपमातृषु" इति मेदिनी ॥ १७६ ॥ क्षुद्रेति ॥ "क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च ॥ चाङ्गेरीवेश्ययोर्हिंस्रामाक्षिकामात्रयोरपि" इति विश्वः ॥ व्यङ्गाऽङ्गहीना । सरघा मधुमक्षिका ॥ मात्रेति ॥ "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कात्स्न्येऽवधारणे" इति मेदिनी ॥ १७७ ॥ आलेति ॥ "चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् ॥ तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि । तद्युक्तयोर्वाच्यलिङ्गं चित्री झिल्ल्यां नपुंसकम् ॥ गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः" इति मेदिनी ॥ कलेति ॥ "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः" इति रभसः ॥ १७८ ॥ योग्येति ॥ "पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे । पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति विश्वः ॥ पत्रमिति ॥ "पत्त्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः" इति विश्वः ॥ नीति ॥ निदेश आज्ञा ॥ शस्त्रमिति ॥ "शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति" इति मेदिनी ॥ १७९ ॥ स्यादिति ॥ "नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्रो नेतरि भेद्यवत्" इति विश्वः ॥ "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां च नेत्री नाड्यां च योषिति" इति मेदिनी ॥ क्षेत्रमिति ॥ "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी ॥ मुखेति ॥ "पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च" इति विश्वः ॥ गोत्रमिति ॥ "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु" इति मेदिनी ॥ १८० ॥ सत्त्रमिति ॥ "सत्त्रं यज्ञे सदादानच्छादनारण्यकैतवे" इति मेदिनी ॥ अजीति ॥ "अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ । स्त्री चण्डयाम्" इति मेदिनी ॥ अम्बेति ॥ "अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके" इति विश्वः ॥ १८१ ॥ चक्रमिति ॥ "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः ॥ जलावर्तेऽपि" इति मेदिनी ॥ अक्षेति ॥ "मोक्षेऽपवर्गे ऑब्रह्मण्यच्युतेऽक्षरम्" इत्यनेकार्थकोषः ॥ क्षीरमिति ॥ "क्षीरं दुग्धे जले" इति मेदिनी ॥ स्वर्ण इति ॥ "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः" इति मेदिनी ॥ "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी ॥ द्वारेति ॥ गवां पुरम् ॥ "गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च" इति मेदिनी ॥ १८२ ॥ गुहेति ॥ "गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि" इति विश्वः ॥ रह इति ॥ "उपह्वरं समीपे स्यादेकान्ते च नपुंसकम्" इति मेदिनी ॥ पुर इति ॥ "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ॥ आधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी ॥ अगेति ॥ "पुरं शरीरमित्याहुर्गृहोपरिगृहे पुरम् । पुरो गुग्गुलुराख्यातो नगरेऽपि पुरं पुरी" इति धरणिः ॥ १८३ ॥ "मन्दिरं नगरेऽगारे क्लीबं ना मकरालये" इति मेदिनी ॥ अथेति ॥ "राष्ट्रं स्यादुपवर्तने । उपद्रवे क्लीबपुंसोः" इति मेदिनी ॥ दर इति ॥ "दरोऽस्त्री साध्वसे गर्ते कन्दरे तु दरी स्मृता । दराऽव्ययं मनागर्थे" इति मेदिनी ॥ वज्र इति ॥ "वज्रं स्याद्बाधके धात्र्यां क्लीबं योगान्तरे पुमान् । वज्रा स्नुह्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकेऽप्यस्त्री

तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे । औशीरं चामरे दण्डेऽप्यौशीरं शयनासने१८५॥
पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः॥१८६॥
अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च
मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् । शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ॥१८८॥
गौरोऽरुणे सिते पीते व्रणकार्येऽप्यरुष्करः । जठरः कठिनेऽपि स्यादधस्तादपि चाधरः॥१८९॥
अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले । उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः१९०॥
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः परः । स्वादुप्रियौ च मधुरौ क्रूरौ कठिननिर्दयौ ॥१९१॥
उदारो दातृमहतोरितरस्त्वन्यनीचयोः । मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ॥१९२॥
चूडा किरीटं केशाश्च संयता मौलयस्त्रयः । द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १९३॥
कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः । स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः॥
करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् । स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः॥

वज्रं त्रपुवरत्रयोः'' इति दन्तोष्ठ्यादौ मेदिनी ॥ १८४ ॥ तन्त्रमिति ॥ ''तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके । इतिकर्तव्यतायां च तन्त्री वीणागुणे मता । अमृतादेहशिरयोः'' इति मेदिनी ॥ औशीति ॥ ''औशीरं चामरे दण्डे औशीरं [२]स्वापपीठयोः'' इत्यजयः ॥ १८५ ॥ पुष्केति ॥ ''पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । ओषधिद्वीपविहगतीर्थरागोरगान्तरे ॥ पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च'' इति विश्वः ॥ १८६ ॥ मुस्त इति ॥ ''स्थाल्यां ना पिठरः क्लीबं मुस्तामन्थानदण्डयोः'' इति मेदिनी ॥ राजेति ॥ ''नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे'' इति मेदिनी॥ राजकशेरुः कन्दविशेषः॥ १८८ ॥ गौर इति ॥ ''गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे॥ गौरी त्वसंजातरजःकन्याशंकरभार्ययोः । रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च ॥ आपगाया विशेषे च यादसांपतियोषिति'' इति मेदिनी ॥ व्रणेति ॥ ''अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्'' इति मेदिनी ॥ जठेति ॥ ''जठरो न स्त्रियां कुक्षौ बद्धकक्खटयोस्त्रिषु'' इति मेदिनी ॥ अधेति ॥ ''अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्'' इति मेदिनी ॥ ॥ १८९ ॥ अनेति ॥ ''एकाग्रमन्यलिङ्गः स्यादेकतानेऽप्यनाकुले'' इति मेदिनी ॥ उपेति ॥ ''उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् । उत्तरस्तु विराटस्य तनये दिशि चोत्तरा'' इति विश्वः ॥ अन्विति ॥ उत्तरस्याभावः ॥ १९० ॥ दूरेति ॥ ''परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले'' इति मेदिनी ॥ स्वाद्विति ॥ ''मधुरौ स्वादुशोभनौ'' इति व्याडिः ॥ ''मधुरस्तु रसे विषे ॥ मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत्'' इति विश्वः ॥ क्रूराविति ॥ ''क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्'' इति विश्वः ॥ १९१ ॥ उदेति ॥ ''उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्'' इति मेदिनी ॥ शुभ्रमिति ॥ ''शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु'' इति मेदिनी ॥ १९२ ॥ इति रान्ताः ॥ चूडेति ॥ ''किरीटे मौलिरक्लीबे चूडासंयतकेशयोः'' इति रभसः ॥ ''मौलिः किरीटे धाम्मिल्ले चूडायामनपुंसकम् । [३]अशोकपादपे पुंसि'' इति मेदिनी ॥ द्रुमेति ॥ मातङ्गो हस्ती ॥ काण्डो बाणः ॥ ''पीलुः पुमान् प्रसूने स्यात्परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः'' इति मेदिनी॥१९३॥कृतेति ॥ कृतान्तो यमः॥ ''कालो मृत्यौ महाकाले समये यमकृष्णयोः''इति मेदिनी ॥ चत्विति ॥ ''कलिः स्त्री कलिकायां ना शूराजिकलहे युगे'' इति मेदिनी ॥ स्यादिति ॥ ''कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः'' इति मेदिनी ॥ प्रावेति ॥ ''कम्बलो नागराजे स्यात्सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्'' इति मेदिनी ॥ १९४ ॥ करो राजग्राह्यः ॥

१-'आद्य ओष्ठ्यादिः, अन्त्यो दन्तोष्ठ्यादिः' इति विशेषो न गणितः--इति क्षीरस्वामी ॥ २--शयनासनयोः समुदितयोः संज्ञेयम्--इति स्वामी॥--शयनं चासनं च शयनासनम् । तत्र युगपद्वर्तते॥तत्र यथा ''राजाभिधानाक्षरमुद्रितं तदौशीरमालोक्य न कस्य भीतिः''--इत्यनेकार्थकैरवाकरकौमुदी ॥--सुभूतिस्तु पृथगेवाह--इति मुकुटः ॥
३--आधुनिकमेदिनीपुस्तके तु ''नाऽशोकद्रौ स्त्रियां भूमौ'' इति पाठ उपलभ्यते ॥

वातूलः[1] पुंसि वात्यायामपि वातासहे त्रिषु । भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः १९६॥
मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम्।शङ्कावपि द्वयोः कीलः पालिः स्त्र्यस्त्र्यङ्कपङ्क्तिषु
कला शिल्पे कालभेदेऽप्याली सख्यावली अपि । अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि
बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु । लीला विलासक्रिययोरुपला शर्कराऽपि च १९९
शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः । जालं समूह आनायो गवाक्षक्षारकावपि२००
शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् । छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना २०१॥
अधःस्वरूपयोरस्त्री तलं स्याच्चामिषे पलम् । और्वानलेऽपि पातालं चेलं वस्त्रेऽधमे त्रिषु२०२॥
कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले । निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः२०३
पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु । प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च २०४॥

उपहारः पूजासामग्री ॥ प्राण्यङ्गजस्त्वक्संकोचः॥ "बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि ॥ गृहदारुप्रभेदे च जठरावयवेऽपि च" इति मेदिनी ॥ स्थावीति ॥ "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । बलो हलायुधे दैत्यभेदे वालिनि वायसे" इति विश्वः ॥ १९५ ॥ वात्विति ॥ "वातूलो वातुलोऽपि स्यात्" इति द्विरूपकोषाद्ध्रस्वमध्योऽपि॥ भेद्येति॥ "व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः" इति हैमः ॥ १९६ ॥ मेति ॥ "मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्" इति मेदिनी ॥ विट् विष्ठा ॥ किट्टं तैलाद्यधोभागस्थं शिंघाणादि च ॥ "वसा शुक्रमसृग् मज्जा मूत्रं विट्कर्णत्वङ्नखाः । श्लेष्माश्रु दूषिका स्वेदो द्वादशैते मला नृणाम्" ॥ अस्त्रीति ॥ "शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति" इति मेदिनी ॥ शङ्काविति ॥ "कीलः कफोणिकाघाते स्थाणौ च ज्वलनार्चिषि" इति धरणिः ॥ "कीलो लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु" इति विश्वः॥ "कीलोऽग्नितेजसि । कफोणिस्तम्भयोः शङ्कौ कीला रतहतावपि" इति हैमः॥ पेति॥ "पालिः कर्णलतायां स्यात्प्रदेशे पंक्तिचिह्नयोः" इत्यजयः॥ "सश्मश्रुयुवती पालिः प्रस्थः ( पङ्क्तिः ) कर्णलताऽपि च" इति त्रिकाण्डशेषः ॥ "पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः । छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः" इति मेदिनी ॥ १९७ ॥ कलेति ॥ "कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः" इति मेदिनी ॥ "तालेषु च गुरुः कला" ॥ आलीति ॥ "आलिर्विशदाशये । त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ च कीर्तिता" इति मेदिनी ॥ अब्धीति ॥ "वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने" इति मेदिनी ॥ १९८ ॥ बह्विति ॥ "बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् ॥ पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः" इति मेदिनी ॥ शितौ कृष्णे ॥ लीलेति ॥ "लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु" इति विश्वः ॥ उपेति ॥ "शर्कराशकले ज्ञेया सितोपला रजःस्वपि" इत्यजयः ॥ "उपलः प्रस्तरे रत्ने शर्करायां तु योषिति" इति मेदिनी ॥ १९९ ॥ शोणेति ॥ कीलेन प्रतिबन्धेनाल्यते वार्यते॥ मूलमिति ॥ आद्ये प्रथमे ॥ शिफा जटा ॥ भं नक्षत्रम् ॥ "मूलं शिफाद्ययोः। मूलवित्तेऽन्तिके ना भे" इति मेदिनी ॥ जालमिति ॥ "जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः ॥ जालो नीपद्रुमे" इति मेदिनी ॥ २०० ॥ सस्य इति ॥ "फलं हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः । जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि" इति विश्वः ॥ छदिरिति ॥ "अथ पटलं पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं, वृन्दे पुनर्न ना" इति मेदिनी ॥ २०१ ॥ अध इति ॥ "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे ॥ चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" इति मेदिनी ॥ स्यादिति ॥ "पलमुन्मानमांसयोः" इति रुद्रः ॥ और्वेति ॥ "पातालं नागलोके स्याद्विवरे वडवानले" इति मेदिनी ॥२०२॥ पर्येति ॥ पर्याप्तिः सामर्थ्यम् ॥ पुण्यं सुकृतम् ॥ प्रवेति ॥ अङ्कुरे किसलये । "प्रवालोऽस्त्री किसलये

१—वातलवातुलौ च दृश्येते—इति क्षीरस्वामी ॥

करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः। मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः॥२०५
दवदावौ वनारण्यवह्नी जन्महरौ भवौ । मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः॥२०६॥
अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः । भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु॥ २०७॥
स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने । अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ॥२०८॥
उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः । अनुभावः प्रभावे च सतां च मतिनिश्चये ॥२०९॥
स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये। शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ॥२१०॥
ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने
स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च । शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः॥२१२॥
द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु । क्लीबं नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे ॥ २१३॥

वीणादण्डे च विद्रुमे'' इति मेदिनी ॥ त्रिष्विति "स्थूलं कूटे च निष्प्रज्ञे पीवरेऽप्यन्यलिङ्गकम्'' इति मेदिनी ॥ २०४ ॥ करेति ॥ "करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । स सर्जरसतैले ना क्लीबं कृष्णकुठेरके'' इति मेदिनी ॥ "दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु'' इति रान्तेषु मेदिनी ॥ म्विति ॥ "बालः कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयोः'' इति विश्वः ॥ "बालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् ॥ अलंकारान्तरे मेधौ बाली बाला त्रुटिस्त्रियोः'' इति मेदिनी ॥ लविति ॥ "लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः'' इति हैमः ॥ २०५ ॥ इति लान्ताः ॥ जन्मेति ॥ "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः'' इति मेदिनी ॥ पतीति ॥ "धवः पुमान्नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च'' इति मेदिनी ॥ २०६ ॥ अवेति "अविर्नाऽर्वे रवौ मेषे शैले मूषिककम्बले'' इति मेदिनी॥"अविर्भूपुष्पवत्योः स्त्री वायुप्राकारभास्सु ना '' इति वैजयन्ती ॥ भेति ॥ "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबन्धुजन्तुषु । रत्यादौ च'' इति मेदिनी ॥२०७॥ स्यादिति ॥"प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च''इति मेदिनी ॥ अवीति॥"निह्नवः पुंसि निकृतौ स्याद्विश्वासापलापयोः'' इति मेदिनी॥२०८॥उत्सयिति ॥ उत्सेक उद्रेकः ॥ इच्छायाः प्रसव उत्पत्तिः ॥ मह उद्भवः ॥ "उत्सवो मह उत्सेक इच्छाप्रसवकोपयोः'' इति मेदिनी ॥ अन्विति ॥ "अनुभावः प्रभावे स्यान्निश्चये भावसूचके'' इति विश्वः ॥ २०९ ॥ स्यादिति ॥ जन्मनो हेतुः ॥ प्रभवत्यस्मात् ॥ "प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने'' इति मेदिनी ॥ आद्योपलब्धये प्रथमज्ञानार्थम् ॥ शूद्रेति ॥ "पारशवः पुमान् । परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च'' इति मेदिनी ॥ २१० ॥ ध्रुविति ॥ "ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ । ध्रुवा मूर्वाशालिपर्ण्यां गीतिस्रुग्भेदयोरपि ॥ ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्'' इति विश्वः ॥ भभेदे नक्षत्रविशेषे ॥ स्व इति॥ "स्वो ज्ञात्यात्मनोः स्वं निजे धने'' इति हेमचन्द्रः ॥ "स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने'' इति मेदिनी ॥ २११ ॥ स्त्रीति ॥ स्त्रियाः कट्यां वस्त्रस्य बन्धने ॥ परिपणे राजपुत्रादेर्बन्धके ॥ "नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे'' इति हैमः ॥ शिवेति ॥ "पुण्डरीके[1]द्रुमे चापि शिवा झाटामलौषधौ । अभयामलकीगौरीक्रोष्ट्री[2]सक्तुफलासु च '' इति विश्वः ॥ द्वेति ॥"द्वंद्वं रहस्ये कलहे तथा मिथुनयुग्मयोः'' इति मेदिनी ॥ २१२ ॥ द्रव्येति ॥ द्रव्यं वित्तम् ॥ असुः प्राणः ॥ व्यवसायो निश्चयः ॥ "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु''इति मेदिनी ॥ क्लीति ॥ षण्ढे तृतीयप्रकृतौ ॥ "अस्त्री नपुंसके क्लीबं वाच्यलिङ्गमविक्रमे'' इति रुद्रः ॥ अयमोष्ठ्योऽत्र [3]भ्रमात्पठितः ॥

१—इदं तु पूर्वान्वयि 'पुण्डरीकद्रुमे पुमान्' इति मेदिन्युक्तेः ॥ २—क्रोष्ट्री शृगाली । पुंश्शृगालेऽपि 'शिवा' इति मुकुटः ॥ ३—विश्वहैममेदिनीष्वपि यणन्तेष्वेवः पठित इति सर्वेषां भ्रमकल्पनं तु सम्यक् ॥

द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ।द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ२१४
रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः । कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु २१५
पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च। दशाऽवस्थाऽनेकविधाऽप्याशा तृष्णाऽपि चायता
वशा स्त्री करिणी च स्याद्दृग्ज्ञाते ज्ञातरि त्रिषु । स्यात्कर्कशः साहसिकः कठोरामसृणावपि ॥
प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः। सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ २१८॥
काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ तु तृणवीरुधौ । अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने २१९
पक्षः सहायेऽप्युष्णीषं शिरोवेष्टकिरीटयोः । शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥२२०॥
कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः। द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये॥

पूर्वगन्धर्वजिह्वास्त्वोष्ठ्येषु ॥ २१३ ॥ इति वान्ताः ॥ द्वाविति ॥ "विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिः" इति विश्वः ॥ द्वौ चेति ॥ अभिमरो युद्धम् ॥ "स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम्" इति मेदिनी ॥ द्वौ वमिति ॥ "वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च" इति विश्वः ॥ २१४ ॥ रह इति ॥ "वीकाशो विजने व्यक्ते" इति विश्वः ॥ "वीकाशः पुंसि विजने प्रकाशे" इति मेदिनी ॥ निरिति ॥ "निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपि च" इति मेदिनी ॥ कृतेति ॥ "कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना" इति मेदिनी ॥ २१५ ॥ पद इति ॥ पदे स्थाने ॥ "अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि" इति विश्वः ॥ किति ॥ "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले" इति विश्वः॥ दशेति ॥ "अनेकविधा बाल्यादिरूपा ॥ " दशाऽवस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि, योषिति" इति मेदिनी ॥ आशेति ॥ "आशा ककुभि तृष्णायाम्" इति हैमः ॥ २१६ ॥ वशेति ॥ "वशा वन्ध्यासुतायोषास्त्रीगवीकारिणीषु च" इति विश्वः ॥ द्रिति ॥ " दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके" इति मेदिनी ॥ स्येति ॥ "कर्कशः परुषे क्रूरे कृपणे निर्दये दृढे । इक्षौ साहसिके कासमर्दकाम्पिल्लयोरपि" इति विश्वः ॥ अमसृणो दुःस्पर्शः ॥ २१७ ॥ प्रेति ॥ "प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे" इति विश्वः ॥ इति शान्ताः ॥ पुर्विति ॥ "पुरुषः पूरुषे सांख्ये ज्ञे च पुंनागपादपे" इति मेदिनी॥२१८॥ केति॥मत्स्यानत्ति॥ मत्स्याचासौ खगश्च ॥ "ध्वाङ्क्षा मत्स्यात्खगे काके भिक्षुक तक्षकेऽपि च" इति मेदिनी ॥ कक्षाविति ॥ "कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि । कक्षः शुष्कतृणे प्रोक्तः कक्षः कच्छ उदाहृतः ॥ कक्षा स्पर्धापदे काञ्च्यां रथगेहप्रकोष्ठयोः । गजरज्जौ परीधानपश्चादञ्चलपल्लवे" इति धरणिः ॥ वीरुल्लता ॥ अभीति ॥ प्रग्रहेऽश्वादिरज्जौ ॥ रश्मौ किरणे ॥ प्रायिति ॥ " प्रैषः प्रेषणपीडयोः" इत्यजयः ॥ "प्रैषः स्यात्प्रेषणे क्लेशे मर्दनोन्मादयोरपि" इति विश्वः ॥ २१९ ॥ पेति ॥ "पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः ॥ चुल्लीरन्ध्रे पतत्त्रे च वाजिकुञ्जरपार्श्वयोः" इति मेदिनी ॥ उष्णीति ॥ "उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे" इति विश्वः ॥ शिरसो वेष्टने वस्त्रादिरूपे ॥ किरीटे मुकुटे ॥ शुक्रेति ॥ "वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः । श्रेष्ठे स्याद्उत्तरस्थश्च वासमूषिकशुक्रले" इति मेदिनी ॥ शुक्रले बहुवीर्यवति वृष्यप्रयोगे वा ॥ २२० ॥ कविति ॥ "कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽर्थसंघाते पेश्यां शब्दादिसंग्रहे" इति मेदिनी ॥ दिव्ये शपथे ॥ शब्दादिसंग्रहेऽमरादौ ॥ तालव्यान्तोऽपि ॥ "विष्वक्सेनोऽप्रेषः कोषाविषदौ च" इत्यूष्मविवेकात् ॥ "कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके" इति श्लोकस्य ( मेदिन्याम् ) तालव्यान्तेऽपि पाठः ॥ द्यूत इति ॥ अक्षे पाशके ॥ शारिफलमक्षपीठिका ॥ "नाऽऽकर्षो द्यूत इन्द्रिये । पाशके शारिफलके कोदण्डाभ्यासवस्तुनि ॥ आकर्षणेऽपि पुंसि स्यात्" इति मेदिनी ॥ अथेति ॥ "अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः । आत्मज्ञे पाशके चाक्षं तुत्थे सौवर्चलेन्द्रिये" इति विश्वः ॥ २२१ ॥

---

१--'अभीशुस्तालव्यान्तोऽपि' इति मुकुटपीयूषे ॥ २--'प्रेष एजादिरपि' इति पीयूषव्याख्या ॥

**ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे । कर्षूर्वार्ता करीषाग्नि कर्षूः कुल्याभिधायिनी२२२**
**पुंभावे तत्क्रियायां च पौरुषं विषमप्सु च।उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम्२२३**
**स्याद्वर्षो लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्।प्रेक्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवाऽर्थना भृतिः२२४**
**त्विट् शोभाऽपि त्रिषु परे न्यक्षं कार्त्स्न्यनिकृष्टयोः।प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे**
**रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू । वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥२२६॥**
**शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः । पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥२२७॥**
**देवभेदेऽनले रश्मौ वसू रत्ने धने वसु । विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः२२८**
**लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च।प्रसूरश्वाऽपि भूद्यावौ रोदस्यौ रोदसी च ते२२९**
**ज्वालाभासोर्न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु । पापापराधयोरागः खगबाल्यादिनोर्वयः२३०॥**

व्यवहारे आयव्ययचिन्तायाम् ॥ कर्षे मानभेदे ॥ चक्रे रथावयवे ॥ केति ॥ "करीषाग्निः पुमान्कर्षूः कुल्यायामपि च स्त्रियाम्" इति रभसः ॥ वार्ता जीविका ॥ २२२ ॥ पुंमिति ॥ "पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्" इति विश्वः ॥ वीति ॥ "विषं तु गरले तोये" इति विश्वः ॥ उपेति ॥"आमिषं पुंनपुंसकम् । भोज्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च"इति मेदिनी ॥ उपादानमुत्कोचः ॥ अपेति ॥ "किल्बिषं पापरोगयोः" इति मेदिनी ॥ २२३ ॥ स्यादिति।।लोकधातुर्जम्बूद्वीपादिः।।तदंशे भारतादौ।।"वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि"इति मेदिनी ।। प्रेति।।"प्रेक्षा धीनृत्यदर्शयोः"इत्यजयः।।"प्रेक्षा नृत्यक्षणे बुद्धौ" इति मेदिनी।। भीति ॥ "भिक्षा भृतौ च याञ्चायां सेवाभिक्षितवस्तुनोः" इति विश्वः ॥ भृतिर्वेतनम् ॥ २२४ ॥ त्विडिति ॥ "कान्तौ वाचि रुचौ त्विट् स्त्री" इति रभसः ॥ त्रीति ॥ वक्ष्यमाणास्त्रयो वाच्यलिङ्गाः ॥ न्येति ॥ "न्यक्षः परशुरामे स्यान्न्यक्षः कार्त्स्न्यनिकृष्टयोः" इति विश्वः ॥ प्रत्येति ॥ अक्षेषु व्यवहारेषु अधिकृतः ॥ अधिकृतान्यक्षाण्यस्य ॥ अध्यक्ष्णोति वा ॥ पचाद्यच् ॥ ( ३ । १ । १३४ ) ॥ वीति ॥ अप्रेम्णि निःस्नेहे ॥ अचिक्कणेऽमसृणे ॥ २२५ ॥ इति षान्ताः ॥ रवीति ॥ "हंसो विहंगभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे ॥ निर्लोभनृपतौ हंसः शारीरमरुदन्तरे" इति विश्वः ॥ सूर्येति ॥ "विभावसुः पुमान्सूर्ये हारभेदे च पावके" इति मेदिनी ॥ वेति ॥ "वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी ॥ तर्णको गोः पुत्रः ॥ वर्षो वत्सरः ॥ सारेति ॥ सारमङ्गमस्य ॥ मृगचातकहरिणाः ॥ द्यौरोको यस्य ॥ "दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके" इति मेदिनी ॥ २२६ ॥ शृति ॥ "रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥ रसा तु शल्लकीपाठाजिह्वाधरणिकङ्गुषु" इति विश्वः ॥ पुमिति ॥ "उत्तंसः कर्णपूरेऽपि शेखरे चावतंसवत्" इति विश्वः ॥ कर्णपूरः कर्णाभरणम् ॥ शेखरः शिरोभूषणम् ॥ २२७ ॥ देवेति ॥ "वसुर्ना देवभेदाग्निभायोक्त्रवकराजसु । क्लीबं वृद्ध्यौषधे स्याले रैरत्ने मधुरे त्रिषु" इति मेदिनी ॥ वीति ॥ "वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि" इति मेदिनी ॥ स्त्रीति ॥ "आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति" ॥ हितस्याशंसा ॥ अहेर्दंष्ट्रा ॥ २२८ ॥ लालेति ॥ "लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः" इति मेदिनी ॥ हिंसेति ॥ "हिंसा चौर्यादिघातयोः" इति मेदिनी ॥ चोरस्य कर्म ॥ आदिना बन्धनत्रासनताडनादि ॥ चाद्वधोऽपि ॥ प्रेति।।"प्रसूरश्वाजनन्योश्च कदलीवीरुधोरपि" इति विश्वः ॥ भ्विति।।"द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च" ॥ विगृहीतयोरप्येते नामनी ॥ "रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी" इति विश्वः ॥ २२९ ॥ ज्वालेति ॥ "अथार्चिर्मयूखशिखयोर्न ना" इति मेदिनी ॥ ज्यविति ॥ "ज्योतिरग्नौ दिवाकरे । पुमान्, नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः" इति

१—कुल्या नदीमात्रे च । "कुल्या धुनी द्वीपवती तटिनी ह्रदिनी सरित् । रोधोवक्राऽऽपगा कर्षूः स्रवन्ती निम्नगा नदी" इति रत्नकोषः—इति मुकुटः ॥

तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः । रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः२३१॥
छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च । सहो बलं सहा मार्गो नभः खं श्रावणो नभाः
ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च । ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये
तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु । विद्वान् विदंश्च बीभत्सौ हिंस्रोऽप्यतिशये त्वमी॥
वृद्धप्रशस्ययोर्ज्यायान्कनीयांस्तु युवाल्पयोः । वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः२३५
दलेऽपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः । द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके २३६ ॥
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च । पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥॥२३७
दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः। व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोऽपहाः ॥

मेदिनी ॥ खगेति ॥ "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी ॥ २३० ॥ तेज इति ॥ "वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये" इति मेदिनी ॥ रज इति॥ "रजः क्लीवं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते" इति मेदिनी ॥ अदन्तोऽपि "रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु" इत्यजयः ॥ रेति ॥ "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे" इति मेदिनी ॥ २३१ ॥ छन्द इति ॥ "छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः" इति मेदिनी ॥ पद्येऽनुष्टुबादौ ॥ तप इति ॥ "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमाञ्शिशिरमाघयोः" इति मेदिनी ॥ सह इति ॥ "सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः"इति मेदिनी ॥ लिङ्गभेदार्थो द्विः पाठः ॥ एवमग्रेऽपि ॥ नभ इति ॥ " नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः" इति विश्वः ॥२३२॥ ओक इति॥ "ओका आश्रयमात्रे च मन्दिरे च नपुंसकम्" इति मेदिनी ॥ ओज इति ॥ "ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि" इति मेदिनी ॥ स्रविति ॥ "स्रोतोऽम्बुवेग इन्द्रिये" इति मेदिनी ॥ २३३ ॥ तेज इति ॥ "तेजो धाम्नि पराक्रमे । प्रभावरेतसोश्च" इति विश्वः ॥ "तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः" इति मेदिनी ॥ चादसहने ॥ "अधिक्षेपावमानादेः प्रत्युक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" इति भरतः ॥ अत इति ॥ वक्ष्यमाणाः सान्तास्त्रिलिङ्गाः ॥ वीति ॥ "विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्" इति विश्वः ॥ विदन् पण्डितः ॥ बीति ॥ "बीभत्सो विकृते पार्थे क्रूरे पापघृणात्मनोः" इत्यजयः ॥ अतीति॥ वक्ष्यमाणाश्चत्वारः ॥ २३४ ॥ वृद्धेति ॥ अतिशयेन वृद्धः प्रशस्यो वा ॥ "ज्यायान्वृद्धे प्रशस्ये च" इति हैमः ॥ कनीति ॥ अतिशयितो युवाऽल्पो वा ॥ "कनीयानतियूनि स्यादत्यल्पानुजयोस्त्रिषु" इति मेदिनी ॥ वरीति ॥ अतिशयित उरुर्वरो वा ॥ "वरीयान् योगभिच्छ्रेष्ठवरिष्ठेष्वतियूनि च" इति मेदिनी ॥ २३५ ॥ इति सान्ताः ॥ दल इति ॥ दले पत्त्रे ॥ "बर्हं पिच्छे दलेऽस्त्रियाम्" इति मेदिनी ॥ नीति ॥ "ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः" इति विश्वः ॥ द्वेति ॥ आपीडे शिरोभूषणे ॥ क्वाथरसे क्वथितद्रव्यरसे ॥ नागदन्तके भित्तिस्थकीलके ॥ "निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके" इति विश्वः ॥ २३६ ॥ तुलेति ॥ "प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बन्धने" इति हैमः ॥ "प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णहलिपादपे" इति विश्वः ॥ पत्नीति ॥ "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" इत्यजयः ॥ २३७ ॥ देति ॥ "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी ॥ श्रविति ॥ "आरोहस्त्ववरोहे च वरारोहाकटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये" इति मेदिनी ॥

---

१—'महः' अदन्तोऽपि—इति मुकुटः ॥ "मही नद्यन्तरे भूमौ मह उत्सवतेजसोः" इति मेदिनी ॥ २—अदन्तोऽपि ग्रीष्मार्थः । यथा "तपेन वर्षाः शरदा हिमागमः"—इति स्वामी ॥ ३—एवं सति 'पयः क्षीरं पयोऽम्बु च' इत्यग्रे समानलिङ्गस्य द्विः पाठो व्यर्थ एव स्यात् । छन्दोऽनुरोधादेवान्यकोशेष्विव बोध्यः ॥

परिच्छदे नृपार्हेऽर्थे परिवर्होऽव्ययाः परे । आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे २३९॥
आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः। पापकुत्सेषदर्थे कु धिङ्निर्भर्त्सननिन्दयोः॥
चान्वाचयसमाहारेतरेतरसमुच्चये । स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ॥ २४१ ॥
स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे । सकृत् सहैकवारे चाप्याराद्दूरसमीपयोः २४२
प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः । पुनःसहार्थयोः शश्वत्साक्षात् प्रत्यक्षतुल्ययोः ॥
खेदानुकम्पासंतोषविस्मयामन्त्रणे वत । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः॥२४४ ॥
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः । इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ २४५ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि । यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे॥२४६॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ । वृथा निरर्थकाविध्योर्नानाऽनेकोभयार्थयोः २४७॥
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु । प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४८॥
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि । उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २४९ ॥

व्यूह इति ॥ "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" इति विश्वः ॥ अहिरिति ॥ "अहिर्वृत्रासुरे सर्पे" इति विश्वः॥ अग्नीति ॥ "तमोपहः सहस्रांशुमृगाङ्काजिनवह्निषु" इति विश्वः ॥ २३८ ॥ परीति ॥"परिवर्हस्तु राजार्हवस्तुन्यापि परिच्छदे" इति विश्वः ॥ इति हान्ताः ॥ अव्येति ॥ इतः परेऽनेकार्था अव्यया उच्यन्ते ॥ आङिति ॥ सीमा मर्यादा ॥ धातुना योगे सति योऽर्थो जायते तस्मिन् ॥ २३९ ॥ आप्रेति ॥ स्मरणे वाक्यारम्भे च ॥ "आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये" इति मेदिनी ॥ आस्त्विति ॥ "आः स्मरणेऽप्याकरणे कोपसंतापयोरपि" इति मेदिनी ॥ पापेति ॥ "कु पापे चेषदर्थे च कुत्सायां च निवारणे" इति विश्वः ॥ धिगिति ॥ अपकारशब्दैर्भयोत्पादनं भर्त्सनम् ॥ निन्दा दोषकीर्तनम् ॥ २४० ॥ चेति ॥ चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये" इति त्रिकाण्डशेषः ॥ स्वेति ॥ "स्वस्ति मङ्गलाशीर्वादपापनिर्णेजनादिषु" इति भागुरिः ॥ प्रकेति ॥"अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि च" इति विश्वः ॥२४१ ॥ स्वीति ॥ "स्वित् प्रश्ने च वितर्के च तथैव पादपूरणे" इति मेदिनी ॥ त्विति ॥ "तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे" इति मेदिनी ॥ सेति ॥ "सकृत् सहैकवारयोः" इत्यजयः ॥ २४२ ॥ विति॥अप्यर्थः समुच्चयः प्रश्नश्च॥"उतापी द्वौ च बाढार्थौ"इत्यजयः॥प्विति॥'शश्वत् सहसहार्थयोः" इत्यजयः॥ सेति ॥ "साक्षात्तुल्यसमक्षयोः" इत्यजयः ॥ २४३ ॥ खयिति ॥ "वत खेदेऽनुकम्पायां हर्षे संबोधनेऽद्भुते" इति दन्तोष्ठ्यादावजयः ॥ हेति ॥ "हन्त वाक्यारम्भखेदविषादहर्षसंभ्रमे" इति मेदिनी ॥ २४४ ॥ प्रतीति ॥ मुख्यसदृशः प्रतिनिधिः ॥ व्याप्तुमिच्छा वीप्सा ॥ आदिना इत्थंभूताख्यानभागप्रातिदानस्तोकेषु ॥ इतीति ॥ "इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे स्यादनुकर्षे च संमतम्" इति विश्वः ॥ ॥ २४५ ॥ प्रेति ॥ "प्राच्यां पुरः पुरस्तादग्रप्रथमव्यतीतेषु" इति बोपालितः ॥ 'अग्रे' इति अग्रतः ॥ यावेति ॥ यत्, तत्, परिमाणमस्य ॥ "यावत् कार्त्स्न्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधिकारसंभ्रमे । पक्षान्तरे च" इति मेदिनी ॥ २४६ ॥ मङ्गेति ॥ "अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये" इति मेदिनी ॥ व्रिति ॥ "वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते" इति विश्वः ॥ नेति ॥ "नानाशब्दो विनार्थेऽपि तथाऽनेकोभयार्थयोः" इति मेदिनी ॥ २४७ ॥ न्विति ॥ "नु स्यात्प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः" इति विश्वः ॥ पश्चेति ॥ "अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि । आयामे च समीपे च लक्षणादावनुक्रमे" इति विश्वः ॥ प्रश्नेति ॥ "ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे । आमन्त्रणे चापि ननु" इति विश्वः ॥ २४८ ॥ गेति ॥ "अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च" इति विश्वः ॥ विति ॥ "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च" इति मेदिनी ॥ "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये"

अमा सह समीपे च कं वारिणि च मूर्धनि । इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २५० ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने । नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने २५१
अलं भूषणपर्याप्तिशक्तिवारणवाचकम् । हुं वितर्के परिप्रश्ने समयाऽन्तिकमध्ययोः ॥ २५२॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः । स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५३ ॥
ऊर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् । स्वर्गे परे च लोके स्वर्वार्तासंभाव्ययोः किल ॥
निषेधवाक्यालंकारे जिज्ञासानुनये खलु । समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः॥२५५ ॥
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योऽन्यं रहस्यपि।तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु २५६
अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ २५७ ॥

इति नानार्थवर्गः ॥ ३ ॥

---

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः । मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत् समाः ॥ १ ॥
स्राग्झटित्यञ्जसाऽह्नाय द्राङ् मङ्क्षु सपदि द्रुते । बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे॥२॥

इति विश्वः ॥ २४९ ॥ कमिति ॥ "कं शिरःसुखवारिषु" इति विश्वः ॥ "कं पादपूरणे तोये" इति मेदिनी ॥ इवेति ॥ "एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" इति धरणिः ॥ २५० ॥ त्विति ॥ "जोषं सुखे प्रशंसायां तूष्णींलङ्घनयोरपि" इति मेदिनी ॥ किमिति ॥ "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी ॥ नामेति॥"नाम कामे (कोपे)ऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते" इति मेदिनी॥संभाव्यं संभावना॥२५१॥अलमिति॥"अलं भूषणपर्याप्तिवारणेषु निरर्थके। अलं शक्तौ च निर्दिष्टम्" इति विश्वः॥२५२॥त्विति ॥ "पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षान्तरेऽपि च"इति मेदिनी ॥ निरिति॥निर्निश्चये क्रान्ताद्यर्थे निर्निःशेषनिषेधयोः"इति विश्वः॥स्येति॥प्रबन्धे अविच्छेदेन क्रियाकरणे ॥ "पुरा पुराणे निकटे प्रबन्धातीतभाविषु" इति मेदिनी ॥ २५३ ॥ ऊरेति ॥ "ऊररी चोररी चौरी विस्तारेऽङ्गीकृते त्रयम्" इत्यजयः ॥ स्वेति ॥ 'परे' इति लोकविशेषणम् ॥ वार्तेति ॥ "किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोः" इति विश्वः ॥ "वार्तायामरुचौ किल" इति त्रिकाण्डशेषः ॥ २५४ ॥ नीति ॥ "खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने । वीप्सामाऽननिषेधेषु पूरणे पादवाक्ययोः" इति मेदिनी ॥ २५५ ॥ नामेति ॥ नामशब्दार्थे ॥ मिथ इति ॥ अन्योऽन्यार्थे ॥ हेति ॥ "हा विषादे च शोके च कुत्सादुःखार्थयोरपि" इति मेदिनी ॥ २५६ ॥ अहेति ॥ "अहहा" दीर्घान्तमपि— इति मुकुटः । "अहहेत्यद्भुते खेदे परिक्लेशप्रहर्षयोः । संबोधनेऽपि" इति मेदिनी ॥ हीति ॥ "हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च संभ्रमासूययोरपि" इति मेदिनी ॥ २५७ ॥

इति नानार्थवर्गाविवरणम् ॥

---

चिरेति ॥ चिराय ॥ ( १ ) ॥ चिररात्राय ॥ ( २ ) ॥ चिरस्य ॥ ( ३ ) ॥ आद्यपदेन 'चिरम्' 'चिरेण' 'चिरात्' 'चिरे' इति गृह्यन्ते ॥ चिरोऽर्थो येषाम् ॥ त्रीणि दीर्घकालस्य ॥ म्विति ॥ मुहुः ॥ ( १ ) ॥ पुनःपुनः ॥ ( २ ) ॥ शश्वत् ॥ ( ३ ) ॥ अभीक्ष्णम् ॥ ( ४ ) ॥ असकृत् ॥ ( ५ ) ॥ समास्तुल्यार्थाः ॥ अजयस्तु अभीक्ष्णशब्दमनव्ययमप्याह— "अभक्ष्णिं तु पौनःपुन्ये सर्वदार्थे च दृश्यते" इत्यनव्ययप्रकरणे पाठात् ॥ पञ्च पौनःपुन्यस्यार्थस्य॥१॥ स्रेति ॥ स्राक् ॥ ( १ ) ॥ झटिति ॥ ( २ ) ॥ अञ्जसा ॥ ( ३ ) ॥ अह्नाय ॥ ( ४ ) ॥ द्राक् ॥ ( ५ ) ॥ मङ्क्षु ॥ ( ६ ) ॥ सपदि ॥ ( ७ ) ॥ सप्त तत्क्षणार्थस्य ॥ बलेति ॥ बलवत् ॥ ( १ ) ॥ सुष्ठु ॥ ( २ ) ॥ किं च तद् उत च, किमुत ॥ ( ३ ) ॥ सु ॥

---

१—अत्र ह्रस्वादौ पाठात् 'उरी' ह्रस्वादिरपि—इति मुकुटपीयूषव्याख्ये ॥

पृथग्विनाऽन्तरेणर्ते हिरुङ् नाना च वर्जने । यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह । आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा॥४॥
आहो उताहो किमुत विकल्पे किं किमूत च । तु हि च स्म ह वै पादपूरणे पूजने स्वती५॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति । तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥६॥
स्युः पाट् प्याडङ्ग हे है भोः समया निकषा हिरुक्।अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः॥
स्वाहा देवहविर्दाने श्रौषड्वौषड्वषट् स्वधा । किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ८॥

( ४ ) ॥ अति ॥ ( ५ ) ॥ अतीव ॥ ( ६ ) ॥ षट् अतिशयस्य ॥ २ ॥ प्रिति ॥ पृथक् ॥ ( १ ) ॥ विना ॥ ( २ ) ॥ अन्तरेण ॥ ( ३ ) ॥ ऋते ॥ ( ४ ) ॥ हिरुक् ॥ ( ५ ) ॥ नाना ॥ ( ६ ) ॥ षट् वर्जनस्य ॥ येति ॥ यत् ॥ ( १ ) ॥ तत् ॥ ( २) ॥ यतः ॥ ( ३ ) ॥ ततः ॥ (४) ॥ चत्वारि हेतोः ॥ असेति ॥ चित् ॥(१)॥चन ॥(२)॥ द्वे असकलार्थस्य ॥ ३ ॥ कदेति ॥ कदाचित् ॥(१)॥ जातु ॥ (२) ॥ द्वे कस्यचित् कालस्य ॥ सेति ॥ सार्धम् ॥ (१)॥ साकम् ॥ (२)॥ सत्रा ॥ ( ३ ) ॥ समम् ॥ ( ४ ) ॥ सह ॥ ( ५ ) ॥ 'सजुष्' शब्दोऽप्यत्र ॥ पञ्च सहार्थस्य ॥ आन्विति ॥ "प्राध्वं तु प्रणते चातिदूरे वर्त्मनि बन्धने" ॥ ( १ ) ॥ एकम् आनुकूल्यस्य ॥ व्येति ॥ "वृथा बन्ध्ये निष्कारणे" इति मेदिनी ॥ ( १ ) ॥ मुधा ॥ ( २ ) ॥ द्वे व्यर्थस्य ॥ ४ ॥ आहो इति ॥ आहो ॥ ( १ ) ॥ उत च आहो च, अनयोः समाहारः, उताहो ॥ ( २ ) ॥ "किमुतातिशये प्रश्ने विकल्पे च प्रयुज्यते" इति विश्वः ॥ ( ३ ) ॥ किम् ॥ ( ४ ) ॥ "किमु संभावनायां स्याद्विमर्शे चापि दृश्यते" इति मेदिनी ॥ ( ५ ) ॥ "उत प्रश्ने वितर्के च उताप्यर्थविकल्पयोः" इति विश्वः ॥ ( ६ ) ॥ षट् वितर्कस्य ॥ त्विति ॥ तु ॥ ( १ ) ॥ हि ॥ ( २ ) ॥ च ॥ ( ३ ) ॥ स्म ॥ ( ४ ) ॥ "ह स्यात्संबोधने पादपूरणे च विनिग्रहे । नियोगे च क्षिपायां स्यात्कुत्सायामपि दृश्यते" इति मेदिनी ॥ ( ५ ) ॥ वै ॥ ( ६ ) ॥ षट् पादपूरणस्य ॥ स्विति ॥ "सु पूजायां भृशार्थेऽनुमतिकृच्छ्रसमृद्धिषु" इति मेदिनी ॥ ( १ ) ॥ अति ॥ ( २ ) ॥ द्वे पूजनस्य ॥ ५ ॥ दीति ॥ दिवा ॥ ( १ ) ॥ अह्नि दिवसे ॥ इतिना अधिकरणार्थप्रधानतां दर्शयति ॥ एकं दिनस्य ॥ अथेति ॥ "दोषा रात्रिमुखे रात्रावत्रानव्ययमप्यसौ" इति विश्वः ॥ ( १ ) ॥ नक्तम् ॥ ( २ ) ॥ रजनौ रात्रौ इत्यर्थे॥ द्वे रात्रेः ॥ तीति ॥ साचि ॥ ( १ ) ॥ तिरः ॥ ( २ ) ॥ द्वे तिरश्चः ॥ अथेति ॥ ६ ॥ पाट् ॥ ( १ ) ॥ प्याट् ॥ ( २ ) ॥ अङ्ग ॥ ( ३ ) ॥ हे ॥ ( ४ ) ॥ है ॥ ( ५ ) ॥ भोः ॥ ( ६ ) ॥ षट् संबोधनार्थस्य ॥ समेति ॥ "समयाऽन्तिकमध्ययोः" इति मेदिनी ॥ ( १ ) ॥ "निकषाऽन्तिकमध्ययोः" इति मेदिनी ॥ ( २ ) ॥ "हिरुङ् मध्ये विनार्थे च" इति रुद्रः ॥ "हिरुगुक्तं च सामीप्ये" इत्यमरमाला ॥ ( ३ ) ॥ त्रीणि सामीप्यस्य ॥ अतेति ॥ सहसा ॥ ( १ ) ॥ अतर्कितेऽविचारिते ॥ एकमतर्कितस्य ॥ स्येति ॥ पुरः ॥ ( १ ) ॥ पुरतः ॥ ( २ ) ॥ अग्रतः ॥ ( ३ ) ॥ त्रयोऽग्रार्थाः ॥ ७ ॥ स्वेति ॥ स्वाहा ॥ ( १ ) ॥ श्रौषट् ॥ ( २ ) ॥ वौषट् ॥ ( ३ ) ॥ वषट् ॥ ( ४ ) ॥ स्वधा ॥ ( ५ ) ॥ पञ्च देवहविर्दानस्य ॥

---

१--येनतेनादि च । यथा 'वितर गिरमुदारां येन मूकाः पिकाः स्युः'—इति स्वामी ॥ २--अहो ह्रस्वादिरपि ॥ "विकल्पे विस्मयेऽप्यहो" इति रुद्रवचनात्--इति मुकुटः ॥ ३-चकारादुषाऽपि---इति स्वामिमुकुटौ॥ "उषा रात्रौ तदन्ते च" इति मेदिनी ॥ ४-साचिः स्त्रीलिङ्गोऽपि प्रकृत्यन्तरमस्ति ॥ "भित्तौ साची परिणतमुखी" इति सप्तकुमारिका ॥ "तिर्यक् साचिरपि स्त्रियाम्" इति रत्नकोषः—इति मुकुटः ॥ तथा च "जूसः सहार्थे" इति त्रिकाण्डशेषः ॥

व वा यथा तथैवैवं साम्येऽहो ह्री[2] च विस्मये । मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे
दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् १०
युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते । अभावे नह्य नो नापि मास्म मालं च वारणे ११
पक्षान्तरे चेद्यादि च तत्त्वे त्वद्धा[3]ऽञ्जसा द्वयम् । प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते १२॥
समन्ततस्तु परितः सर्वतो विष्वगित्यपि । अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १३ ॥
ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने । निःषमं दुःषमं गर्ह्ये यथास्वं तु यथायथम् ॥१४॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् । स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ॥ १५ ॥

किमिति ॥ किंचित् ॥ ( १ ) ॥ ईषत् ॥ ( २ ) ॥ मनाक् ॥ ( ३ ) ॥ त्रीणि अल्पस्य ॥ प्रयिति ॥ प्रेत्य ॥ ( १ ) ॥ अमुत्र ॥ ( २ ) ॥ भवान्तरे जन्मान्तरे द्वे ॥ ८ ॥ वेति ॥ "वं प्रचेतसि जानीयादिवार्थे तु तदव्ययम्" इति मेदिनी ॥ ( १ ) ॥ वा ॥ ( २ ) यथा ॥ ( ३ ) ॥ तथा ॥ ( ४ ) ॥ "एवौपम्ये परिभवे ईषदर्थेऽवधारणे" इति हैमः ॥ ( ५ ) ॥ एवम् ॥ ( ६ ) षट् साम्यस्य ॥ अहो इति ॥ अहो ॥ ( १ ) ॥ ही ॥ ( २ ) ॥ अद्भुते ॥ द्वे विस्मयस्य ॥ माविति ॥ तूष्णीम् ॥ ( १ ) ॥ तूष्णीकाम् ॥ ( २ ) ॥ द्वे मौनस्य ॥ सेति ॥ सद्यः ॥ ( १ ) ॥ सपदि ॥ ( २) ॥ स चासौ क्षणश्च ॥ तत्काले द्वे॥९॥ दीति॥दिष्ट्या॥(१)॥समुपजोषम्॥ मुकुटस्तु "शम्""उँपजोषम्"च–इति पठति॥ कल्याणार्थे त्रीणि ॥ अथेति ॥ अन्तरे ॥ ( १ ) ॥ अन्तरा ॥ ( २ ) ॥ अन्तरेण ॥ ( ३ ॥ त्रीणि मध्यस्य ॥ प्रेति ॥ प्रसह्य ॥ ( १ ) ॥ एकं हठार्थस्य ॥ १० ॥ यित्रति ॥ सांप्रतम् ॥ ॥ ( १ ) ॥ स्थाने ॥ ( २ ) ॥ युक्ते उचितार्थे ॥ "स्थाने तु कारणार्थे स्याद्युक्तसादृश्ययोरपि" इति मेदिनी ॥ द्वे युक्तस्य ॥ अभीति ॥ अभीक्ष्णम् ॥ ( १ ) ॥ शश्वत् ॥ ( २ ) ॥ द्वे अनारते ॥ अभेति ॥ नहि ॥ ( १ ) ॥ अ ॥ ( २ ) ॥ नो ॥ ( ३ ) ॥ न ॥ (४) ॥ चत्वारि अभावस्य ॥ मेति ॥ मास्म ॥ ( १ ) ॥ मा ॥ ( २ ) ॥ अलम् ॥ ( ३ ) ॥ त्रीणि वारणस्य ॥ ११ ॥ पक्षेति ॥ चेत् ॥ ( १ ) ॥ यदि ॥ ( २ )॥ द्वे पक्षान्तरस्य ॥ तेति ॥ अद्धा ॥ ( १ ) ॥ अञ्जसा ॥ ( २ ) ॥ द्वे तत्त्वार्थस्य ॥ प्रेति ॥ प्रादुः ॥ (१) ॥ आविः ॥ ( २ ) ॥ द्वे स्फुटार्थे ॥ ओमिति ॥ ओम् ॥ ( १ ) ॥ एवम् ॥ ( २ ) ॥ "ओमेवं परमं भवेत्" इत्यव्ययकाण्डे व्याडिः ॥ ( ३ ) ॥ त्रीण्यनुमतौ ॥ १२ ॥ समेति ॥ समन्ततः ॥ ( १ ) ॥ परितः ॥ ( २ ) ॥ सर्वतः ॥ ( ३ ) ॥ विष्वक् ॥ ( ४ ) ॥ 'अभितः' 'विश्वतः' 'समन्तात्' इत्याद्यपि ॥ चत्वारि सर्वत इत्यर्थे ॥ अकेति ॥ "अकामानुमतौ काममसूयोपगमेऽपि च" इति रुद्रः ॥ 'आकामानुमतौ कामम्' इति क्वचित्पाठः ॥ "कामं कामाभ्यनुज्ञयोः" इति त्रिकाण्डशेषः ॥ एकमकामानुमतेः ॥ आस्विति ॥ "अस्तु स्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि" इति मेदिनी ॥ ( १ ) ॥ चान्नामशब्दोऽप्यत्र ॥ एकमसूयोपगमे ॥ १३ ॥ केति ॥ कच्चित् ॥ ( १ ) ॥ इष्टप्रश्ने एकम् ॥ निःषेति ॥ निःषमम् ॥ ( १ ) ॥ दुःषमम् ॥ ( २ ) ॥ द्वे निन्दितेऽर्थे॥ यथेति ॥ यथास्वम् ॥ ( १ ) ॥ यथायथम् ॥ ( २ ) ॥ द्वे यथायोग्यस्य ॥ १४ ॥ म्रिति ॥ मृषा ॥ ( १ ) ॥ मिथ्या ॥ ( २ ) ॥ विगतं तथा = सत्यमस्मात्तत्र ॥ द्वे असत्ये ॥ यथेति ॥ यथार्थम् ॥ ( १ )॥ सत्यमनतिक्रम्य ॥ यथातथम् ॥ ( २ )॥ द्वे सत्यस्य ॥ स्युरिति ॥

---

१—स्वामिमुकुटाभ्यां तु 'इव' शब्दो गृहीतः॥ २—'ही' शब्दो दीर्घान्तः । "ही विचित्रो विपाकः" इति माघ इति स्वामिमुकुटौ ॥ ३—"रवावद्धाः" इति कप्फिणाभ्युदये भाषासमावेशः । तत्र प्राकृतपक्षे "रवाः शब्दाः बद्धाः संयताः ॥ 'बन्ध बन्धने' क्तः ॥ संस्कृते तु "रवौ सूर्ये अद्धा तत्त्वम्' इत्यर्थः—इति मुकुटः ॥ ४—"उपजोषम्" चवर्गतृतीयतृतीयम् । अन्तःस्थाद्यतृतीयम् इत्येके–इति पीयूषव्याख्या ॥

प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् । संवद्वर्षेऽवरे त्ववागामेवं स्वयमात्मना ॥ १६ ॥
अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः । सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने॥१७॥
अस्ति सत्त्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि । हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ॥१८॥
पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने । सायं साये प्रगे प्रातः प्रभाते निकषाऽन्तिके॥१९॥
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति । अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥
तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः । उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २१ ॥
ह्योऽतीतेऽनागतेऽह्नि श्वः परश्वश्च परेऽहनि । तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥

एवम् ॥ ( १ ) ॥ तु ॥ ( २ ) ॥ पुनः ॥ ( ३ ) ॥ वै ॥ ( ४ ) ॥ वा ॥ ( ५ ) ॥ सुभूतिस्तु "स्युरेवं तु पुनर्वा च" इति पठति ॥ "चान्वाचये समाहारे अन्योऽन्यार्थे समुच्चये । पक्षान्तरे तथा पादपूरणेऽप्यवधारणे" इति रुद्रः ॥ पञ्च निश्चयार्थकस्य ॥ १५ ॥ प्रेति ॥ प्राक् ॥ ( १ ) ॥ एकम् अतीतार्थस्य ॥ न्विति ॥ नूनम् ॥ ( १ ) ॥ अवश्यम् ॥ ( २ ) ॥ द्वे निश्चयस्य ॥ संवेति ॥ संवत् ॥ ( १ ) ॥ एकं वर्षस्य ॥ अवेति ॥ अर्वाक् ॥ ( १ ) ॥ एकम् अवरकालस्य ॥ आमिति ॥ "आम् ज्ञानविनिश्चये" इति बोपालितः ॥ ( १ ) ॥ एवम् ॥ ( २ ) ॥ द्वे निश्चये ॥ स्वेति ॥ स्वयम् ॥ ( १ ) ॥ 'आत्मना' इत्यत्रार्थे एकम् ॥ १६ ॥ अल्प इति ॥ नीचैः ॥ ( १ ) ॥ एकम् अल्पस्य ॥ मेति ॥ उच्चैः ॥ ( १ ) ॥ एकं महतः ॥ प्रेति ॥ प्रायः ॥ ( १ ) ॥ एकं बाहुल्यस्य ॥ अद्रिति ॥ शनैः ॥ ( १ ) ॥ एकम् अद्रुतेऽशीघ्रार्थे ॥ सेति ॥ सना ॥ ॥ ( १ ) ॥ 'सनात्' 'सनत्' ॥ एकं नित्यस्य ॥ बेति ॥ बहिः ॥ ( १ ) ॥ एकं बाह्यस्य ॥ स्मेति ॥ स्म ॥ ( १ ) ॥ एकम् अतीतस्य ॥ अस्तेति ॥ अस्तम् ॥ ( १ ) ॥ एकम् अदर्शनस्य ॥ १७ ॥ अस्तीति ॥ "अस्त्याह कालसामान्ये तिङन्तप्रतिरूपकौ" इति त्रिकाण्डशेषः ॥ र्विति ॥ उ ॥ ( १ ) ॥ एकं रुषा कोपेनोक्तौ वचने ॥ ऊमिति ॥ ऊम् ॥ 'उम्' इति च ॥ ( १ ) ॥ एकं 'रुषा प्रश्ने' इति स्वामी ॥ अन्विति ॥ अयि ॥ ( १ ) ॥ एकम् अनुनये सान्त्वने ॥ हुमिति ॥ हुम् ॥ ( १ ) ॥ एकं तर्कस्य ॥ उषेति ॥ "उषा स्याद्रजनीशेषे उष इत्यपि दृश्यते" इति रभसः ॥ ( १ ) ॥ एकं रात्रेश्चरमभागस्य ॥ नेति ॥ नमः ॥ ( १ ) ॥ एकं नतेः ॥ १८ ॥ ग्विति ॥ अङ्ग ॥ ( १ ) ॥ एकं पुनरर्थस्य॥ नीति ॥ दुष्ठु ॥ ( १ ) ॥ एकं निन्दायाः ॥ स्विति ॥ सुष्ठु ॥ ( १ ) ॥ एकं प्रशंसनस्य ॥ सेति ॥ सायम् ॥ (१) ॥ एकं साये दिनान्ते ॥ प्रेति ॥ प्रगे ॥ (१) ॥ प्रातः ॥ (२) ॥ द्वे प्रभाते ॥ नीति ॥ निकषा ॥ ( १ ) ॥ एकम् अन्तिकस्य ॥ १९ ॥ पेति ॥ पूर्वे वर्षे परुत् ॥ ( १ ) ॥ पूर्वतरे वर्षे, यति गच्छाति ( वर्तमाने ) वर्षे च 'परारि' (१) 'ऐषमस्' (१) शब्दौ ( क्रमेण ) ॥ अद्येति ॥ अत्रास्मिन् अहनि अद्य ॥ ( १ ) ॥ एकं वर्तमानदिनस्य ॥ अथेति ॥ पूर्वोत्तरापरेभ्योऽधरान्यान्यतरेभ्यश्च 'पूर्वेऽह्नि' इत्यादावर्थे पूर्वेद्युरादयः शब्दा भवन्तीत्यन्वयः ॥ आदिना 'उत्तरेऽह्नि, अपरेऽह्नि, अन्यस्मिन्नह्नि, अन्यतरस्मिन्नह्नि, इतरस्मिन्नह्नि' ॥ २० ॥ द्वितीयेनादिशब्देन 'उत्तरेद्युः' 'अपरेद्युः' 'अधरेद्युः' 'अन्येद्युः' 'अन्यतरेद्युः' 'इतरेद्युः' ॥ "पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे" इति रुद्रः ॥ क्रमेणैकैकं पूर्वेऽह्नीत्यादौ ॥ उभेति ॥ उभयस्मिन्नहनि उभयद्युः ॥ (१) ॥ उभयेद्युः ॥(२)॥ द्वे उभयस्मिन्नहनि॥पेति॥परस्मिन्नहनि परेद्यवि॥(१)॥एकं परेऽहनि॥२१॥ह्य इति ॥ ह्यः ॥ ( १ ) ॥ एकम अतीतदिनस्य ॥ अनेति ॥ श्वः ॥ ( १ ) ॥ एकम् अनागतस्याह्नः ॥ परेति ॥ परश्वः ॥ ( १ ) ॥ एकं श्वोदिनात्परेऽहनि॥तेति॥तदा॥(१)॥तदानीम् ॥(२)॥द्वे तस्मिन् काले॥युगेति॥युगपत् ॥ ( १ ) ॥ एकदा ॥( २ ) ॥ द्वे एकस्मिन् काले ॥ सेति ॥ सर्वदा ॥ ( १ ) ॥ सदा ॥ ( २ ) द्वे सर्वस्मिन्काले ॥ २२॥

एतर्हि संप्रतीदानीमधुना सांप्रतं तथा । दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥

इत्यव्ययवर्गः ॥ ४ ॥

---

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः । अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः । स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥२॥
नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् । अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥
तल्वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् । स्त्रीभावादावनिक्तिण्ण्वुल्ण्णच्ण्वुच्क्यब्युजि-
जङ्निशाः ॥ ४ ॥

एतेति ॥ एतर्हि ॥ ( १ ) ॥ संप्रति ॥ ( २ ) ॥ इदानीम् ॥ ( ३ ) अधुना ( ४ ) ॥ साम्प्रतम् ॥(५)॥ पञ्च अस्मिन् काले॥ दीति ॥ प्राच्यां दिशि, प्राच्या दिशः, प्राची दिग् वा, प्राचि देशे काले च, प्राचो देशात् कालाच्च, प्राङ् देशः कालो वा ॥ " एवम् अवाच्यां दिशि, अवाचो देशात्, अवाङ् देशः आवाक् ॥ "पूर्वादौ " इत्यादिपदेनोत्तरदक्षिणाधरादीनां ग्रहः ॥ ' प्रत्यगादयः ' इत्यादिशब्देन ' उत्तरात् ' 'अधरात्' ' दक्षिणात् ' ' उत्तरेण ' ' अधरेण ' ' दक्षिणेन ' ' दक्षिणा ' ' दक्षिणाहि ' ' दक्षिणतः ' 'उत्तरतः' इत्यादयो बोध्याः ॥ २३ ॥

इत्यव्ययवर्गविवरणम् ॥

---

सलीति ॥ लिङ्गविधानसहितानि यानि सूत्राणि शास्त्राणि " स्त्रियां क्तिन् " ( ३ । ३ । ९४ )"पुंसि संज्ञायां घः प्रायेण " ( ३ । ३ । ११८ )" नपुंसके भावे क्तः "( ३ । ३ । ११४ )" स नपुंसकम् "(२।४। १७) "अदन्तोत्तरपदो द्विगुः स्त्रियाम् " ( वा २ । ४ । ३० ) इत्यादीनि, सन्नादिर्येषां क्यजादीनां ते सन्नादयश्च कृतश्च तद्धिताश्च समासाश्च जायन्ते येभ्यो यैर्वा, तानि शास्त्राणि, तैरिहास्मिन्वर्गे ' संगृह्यन्ते लिङ्गान्यस्मिन् लिङ्गादिसंग्रहवर्गे तस्मिन् संकीर्णवर्ग इव लिङ्गमुन्नयेदूहेत ॥ कीदृशैः शास्त्रैः, प्रागनुक्तैः ॥ क्वचित् ' अनुक्तौ ' इति पाठः ॥ तत्रेहानुक्तमपि सलिङ्गशास्त्रैरूह्यम् ॥ यद्वा सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासेभ्यो जातैः शब्दैश्चेति प्रत्येकमूहे करणत्वं बोध्यम् ॥ संकीर्णवर्गे यथा प्रकृतिप्रत्ययार्थाद्यैर्लिङ्गोहनमनुक्तलिङ्गशब्दविषयम्, तथाऽत्रापि सलिङ्गशास्त्रादिभिर्लिङ्गोहनमनुक्तलिङ्गशब्दविषयं बोध्यम् ॥ १ ॥ लिङ्गेति ॥ लिङ्गस्य शेषोऽवशेषः तस्य विधिः व्याप्नोति पूर्वोक्तकाण्डत्रयस्य व्यापकः ; उत्सर्गत्वात् । विशेषैरत्रोक्तैः प्रागुक्तैश्च यदि न बाध्यते । 'अपवादविषयं विहाय सर्वत्र प्रवर्तते ' इत्यर्थः ॥ स्त्रीति ॥ ' स्त्रियाम् ' इत्यधिकारः ॥ ईच्च ऊच्च तौ, विरामे विरामावन्तौ वा यस्य तच्च तदेकाच्च 'श्रीः' 'धीः' 'ह्रीः' 'भ्रूः', ' सूः ', ' द्रूः ', ' जूः ', ॥ लवनं लूः, भवनं भूः, नयति नीः, लुनाति लूः इत्यादौ तु परत्वात् " कृतः कर्तरि ' इति त्रिलिङ्गत्वम् ॥ योनिर्भगम्, तत्सहितानां प्राणिनां नाम स्त्रियां स्यात् । माता, दुहिता, याता, स्त्री ॥ ' दाराः पुंभूम्नि ' इति विशेषः ॥ २ ॥ नामेति ॥ विद्युदादीनामष्टानां नाम स्त्रियाम् ॥ विद्युत्, तडित् ॥ रात्रिः, रजनिः ॥ वल्लिः वीरुत् ॥ वीणा, विपञ्ची " केचित्तु वीणास्थाने वाणीं पठन्ति ॥ वाक् गौः, गीः, ॥ दिक्, हरित् ॥ भूः, भूमिः, कुः ॥ सरित्, त्रिस्रोताः, विपाट् ॥ केचित्तु ' धियाम् ' इति पठन्ति । संवित्, चित्, प्रतिपत् ॥ अदेति॥अदन्तेनोत्तरपदेन सह यो द्विगुः स स्त्रियाम् ॥ कीदृशः सः एकोऽर्थो यस्य सः ॥ 'द्विगुरेकवचनम् ' ( २ । ४ । १ ) इत्यनेन समाहारे एकत्वविधानात् ॥ दशमूली, त्रिलोकी पञ्चाक्षरी ॥ अदन्तैः किम् ॥ पञ्चकुमारि, दशधेनु ॥ एकार्थः किम् ॥ पञ्चकपालः, पञ्चकपालौ, पञ्चकपालाः ॥ नेति ॥ पात्रयुगादिभिरदन्तैर्यो द्विगुः स स्त्रियां न स्यात् ॥ पञ्चपात्रम्, चतुर्युगम्, त्रिभुवनम्, त्रिपुरम् ॥ ३ ॥ तलिति ॥ तलन्तं स्त्रियाम् ॥ ग्रामता, गोता, ब्राह्मणता ॥

---

१—"सूः स्त्रियां निर्झरे स्रुवे" इति मेदिनी ॥ स्रुवो यज्ञपात्रम् ॥ २—"क्विब्वचि—" (उ० २।५७) इत्यादिना क्विन्दीर्घौ । "द्रूर्हिरण्यरक्षसोर्द्रूः कामचारः, जूः पिशाची पिशाचाश्च पुंसि" इति रूपमञ्जरी—इति मुकुटः ॥ ३—"जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम् । जूराकाशसरस्वत्यां पिशाच्यां, जवने त्रिषु" इति मेदिनी ॥

**उणादिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम् । तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णदिक् ॥५॥ घञो ञः सा क्रियाऽस्यां चेद्दाण्डपाता हि फाल्गुनी।श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि।लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी**

वृन्दे समूहे, यश्च इनिकस्यत्राश्च, तदन्तं स्त्रियाम् ॥ पाश्या, खलिनी, शाकिनी, गोत्रा रथकट्या ॥ वृन्दे किम् । मुखे भवो 'मुख्यः' दण्डोऽस्यास्तीति 'दण्डी' ॥ वैरमैथुनादौ वुनन्तं स्त्रियाम् ॥ अश्वमहिषिका, काकोलूकिका, अत्रिभरद्वाजिका, कुत्सकुशिका ॥ अदिना "पादशतस्य-" (५।४।१) "दण्डव्यवसर्गयोश्च" (५।४।२) इति वुनो ग्रहणम् । द्विपदिकां ददाति, द्वौ द्वौ दण्डितो द्विपादिकाम् ॥ वैरेत्यादि किम् ॥ "वासुदेवार्जुनाभ्यां वुन्" (४।३।९८) वासुदेवो भक्तिरस्य वासुदेवकः ॥ वुनो ग्रहणं वुञ उपलक्षणम् ॥ क्वचित् 'वुः' इति पाठः । "गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु" (५।१।१३४) वुञ् । गार्गिकया श्लाघते, काठिकया । "द्वन्द्वमनोज्ञादिभ्यश्च" (५।१।१३३) वुञ् । शैष्योपाध्यायिका ॥ "स्त्रियाम्" (३।३।९४) इत्यधिकारे भावे, आदिना अकर्तरि कारके च ये अन्यादयः प्रत्ययास्तदन्तं स्त्रियां स्यात् । "आक्रोशे नञ्यनिः" (३।३।११२) अकरणिः, अजननिः । "स्त्रियां क्तिन्" (३।३।९४) कृतिः, भूतिः, "रोगाख्यायां ण्वुल्बहुलम्" (३।३।१०८) । प्रच्छर्दिका, प्रवाहिका । "धात्वर्थनिर्देशे ण्वुल् वक्तव्यः" (वा० ३।३।१०८) । आसिका, शायिका ॥ "कर्मव्यतिहारे णच् स्त्रियाम्" (३।३।४३) । "णचः स्त्रियामञ्" (५।४।१४) स्वार्थिकः । व्यावक्रोशी, व्यात्युक्षी ॥ "पर्यायार्हर्णोत्पत्तिषु ण्वुच्" (३।३।१११) । भवतः शायिका, इक्षुभक्षिका ॥ "व्रजयजोर्भावे क्यप्" (३।३।९८) । व्रज्या, इज्या ॥ "समजनिषद-" (३।३।९९) इति क्यप् । समज्या, निषद्या । स्त्रीभावादौ किम् । "वदः सुपि क्यप् च" (३।१।१०६) मृषोद्यम् । "भुवो भावे" (३।१।१०७) ब्रह्मभूयम् ॥ "ण्यासश्रन्थो युच्" (३।३।१०७) कारणा, कामना ॥ "विभाषाख्यानपरिप्रश्नयोरिञ्च" (३।३।११०) । कां त्वं कारिं गणिं वाऽकार्षीः ॥ "षिद्भिदादिभ्योऽङ्" (३।३।१०४) पचा, त्रपा, भिदा, छिदा । "अ प्रत्ययात्" (३।३।१०२) चिकीर्षा, पुत्रीया । "गुरोश्च हलः" (३।३।१०३) ईहा, ऊहा । "ग्लाम्लाज्याहाभ्यो निः" (वा० ३।३।९५) ग्लानिः ॥ "कृञः श च" (३।३।१००) । क्रिया । "इच्छा" (३।३।१०१) ॥ ४ ॥ उणादौ न्यन्तम्, ऊदन्तम्, ईदन्तं च ॥ "वीज्याज्वरिभ्यो निः" (उ० ४।४८) । "सृवृषिभ्यां कित्" (उ० ४।४९) श्रेणिः, श्रोणिः, द्रोणिः ॥'अनिः' इति पाठान्तरम् ॥"अर्तिसृधृधम्यश्यवितॄभ्योऽनिः" (उ० २।१०२) धरणिः, धमनिः, सरणिः ॥ "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः-" (उ० १।८०) । कर्षूः, चमूः ॥ "अवितॄस्तृतन्त्रिभ्य ईः"(उ०३।१५८)।अवीः, तरीः॥ङी च आप् च ऊङ् च अन्ते यस्य तत् कदली,कन्दली, रमा,गङ्गा,वामोरूः,करभोरूः,चलं जंगमम् ।स्थिरं स्थावरम्—नाडी,खट्वा,अलाबूः॥चरस्थिरग्रहणं चिन्त्यप्रयोजनम्, अन्यस्य व्यवच्छेद्यस्याभावात् ॥ तेति ॥ 'तदस्यां प्रहरणमिति क्रीडायां णः'(४।२।५७) । मुष्टिः प्रहरणमस्याम् ॥ पल्लवाः प्रहरणमस्याम् ॥ णस्य दिगुदाहरणम् । न तु परिगणनम् ॥ तेन 'मौसला, दाण्डा'इत्यादि बोध्यम् ॥५॥ घञ इति ॥ "घञः साऽस्यां क्रियेति ञः" (४।२।५८) ॥ घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे ञः स्यात्, तदन्तं स्त्रियाम् ॥ दण्डपातोऽस्यां तिथौ वर्तते ॥ श्येनपातोऽस्याम् । तिलपातोऽस्याम् । "श्येनतिलस्य पाते ञे" (६।३।७१) इति मुम् ॥ "पितृदाने स्वधा मतम्" इत्यमरमाला ॥ वररुचिना तु "स्वधा क्रिया प्रवेणी" इति स्त्रीलिङ्गोक्ता॥इति दिक् उदाहरणम्, तेन मौसलपाता भूमिरित्यादि ज्ञेयम् ॥ ६ ॥ स्त्रीति ॥ अल्पं मृणालम् । गौरादित्वात् (४।१।४१) ङीष् ॥ आदिना कुम्भी, प्रणाली, मुशली, छत्री, पटी,

---

१—"लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च" इति मेदिनी ॥

**सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका। तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् । सातिः कन्था तथाऽऽसन्दी नाभी राजसभाऽपि च ॥ ९ ॥**

**झल्लरी चर्चरी पारी होरा लट्टा च सिध्मला । लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी १०**

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥**

तटी, मठी ॥ काचिदिति किम् । अल्पो वृक्षो वृक्षकः ॥ लंकेति ॥ 'ङ्याबूङन्तम्' इति सिद्ध नामानुशासनार्थो लङ्कादीनां पाठः ॥ भङ्ग्यादीनामुभयानुशासनार्थः ॥ शेफालिकादीनां तु व्यर्थः, स्वपर्यायपठितत्वात् ॥ लङ्का ॥ ( १ ) ॥ शेफालिका पुष्पविशेषः ॥ ( १ ) ॥ टीका विषमपदव्याख्या[1] ॥ ( १ ) ॥ धातकी 'धव' इति प्रसिद्धो वृक्षभेदः ॥ ( १ ) ॥ पिञ्ज्यतेऽर्थोऽस्यां पञ्जिका ॥ सकलपदव्याख्या[2] ॥ ( १ ) ॥ आढकी तुवरिका ॥ ( १ ) ॥ ७ ॥ सीति ॥ सिध्रका 'साध' इति प्रसिद्धो वृक्षभेदः ॥ ( १ ) ॥ सारिका ॥ "शारिका" इति तालव्यादिश्च पक्षिभेदे ॥ ( १ ) ॥ हिक्का ऊर्ध्वे वातप्रवृत्तौ शब्दविशेषः ॥ ( १ ) ॥ प्राचिका "वनमक्षिका" इति मुकुटः । 'पक्षिभेदः' इति स्वामी ॥ ( १ ) ॥ उल्का तेजःपुञ्जः ॥ ( १ ) ॥ पिपीलिका ॥ "शनैर्याति पिपीलकः" इति पुंस्त्वमपि–इति स्वामी ॥ ( १ ) ॥ तिन्दुकी ॥ ( १ ) ॥ कणिका ॥ ( १ ) ॥ विच्छित्तिः, कौटिल्यभेदो वा ॥ "व्याजच्छलनिभे भङ्गिर्वैदर्भीतनमीलिका" इति रभसः ॥ ( १ ) ॥ सुरङ्गा तिर्यग्भूखातः ॥ ( १ ) ॥ "स्त्री सूचिर्नृत्यभेदे च व्यधनीशिखयोरपि" इति रत्नकोषः ॥ ( १ ) ॥ "माढिः पत्रशिरा" इति रत्नकोषः ॥ "माढिः स्त्री पत्रभङ्गौ च दैन्यस्यापि प्रकाशने" इति मेदिनी ॥ ८ ॥ पीति ॥ पिच्छा शाल्मलिनिर्यासः, भक्तादिमण्डश्च ॥ ( १ ) ॥ वितंडा ॥ ( १ ) ॥ "पणगण्डकयोस्तुर्य उदमानस्य काकिणी" इति रुद्रः ॥ रभसस्तु नान्तेष्वप्याह—"पणोदमानगण्डानां तुर्यांशेऽपि च काकिनी" इति ॥ आढकस्य पञ्चाशत्तमो भाग उदमानः ॥ उक्तं च गणितावल्याम्—"कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः । अतोऽर्धशतिको भाग उदमानमुदाहृतम्" इति ॥ ( १ ) ॥ चूर्णिः ॥ ( १ ) ॥ शाणी ॥ प्रावरणभेदः ॥—निकषः—इति स्वामी ॥ "शाणः" इत्यन्ये ॥ ( १ ) ॥ "द्रुण्यम्बुद्रोणीकच्छप्योः" इति मेदिनी ॥ ( १ ) ॥ "दरत् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि" इति मेदिनी ॥ ( १ ) ॥ "सातिर्दानावसानयोः" इति हैमः ॥ ( १ ) ॥ "कन्था मृन्मयभित्तौ स्यात्तथा प्रावरणान्तरे" इति मेदिनी ॥ ( १ ) ॥ "स्त्री वेत्रासनमासन्दी वृषी च व्रतिकासनम्" ॥ ( १ ) ॥ "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे" इति मेदिनी ॥ ( १ ) ॥ राजसभा ॥ ( १ ) ॥ ९ ॥ "झल्लरी झिल्लरी च द्वे हुडुके वालचक्रके" इति मेदिनी ॥ ( १ ) ॥ "चर्चरी गीतभेदे च केशभित्करशब्दयोः" ॥ ( १ ) ॥ "कर्क ( गर्ग ) रीपूरयोः पारी पादरज्ज्वां च हस्तिनः" इति विश्वः ॥ ( १ ) ॥ "होरा तु लग्ने राश्यर्धे रेखाशास्त्रभिदोरपि" इति मेदिनी ॥ ( १ ) ॥ "लट्टा करञ्जभेदे च फलेऽवद्ये खगान्तरे" इति मेदिनी ॥ ( १ ) ॥ "सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि" इति मेदिनी ॥ ( १ ) ॥ लाक्षा ॥ ( १ ) ॥ लिक्षा ॥ ( १ ) ॥ गण्डूषा ॥ पुंस्यपि ॥ "गण्डूषो मुखपूर्तीभपुष्करप्रसृताञ्जलिः" इति रुद्रः ॥ "उन्नतनाभिस्तु गण्डूषा नापि मुखपूर्तिः" इति बोपालितः ॥ ( १ ) ॥ गृध्रसी ऊरुसंधौ वातरोगः ॥ (१) ॥ चमसी ॥ "चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ "मेला मसीजलं पत्राञ्जनं च स्यान्मासिर्द्वयोः" इति त्रिकाण्डशेषः ॥ १० ॥ इति स्त्रीलिङ्गशेषः ॥ पुमिति ॥ 'पुंस्त्वे'

---

१–हैमस्तु "टीका निरन्तरव्याख्या" इति मूलम् 'सुगमानां विषमाणां च निरन्तरं व्याख्या यस्यां सा' इत्येवंरीत्या व्याख्यातवान् ॥ २—हेमचन्द्रस्तु "पञ्जिका' पदभञ्जिका" इति मूलम् 'पच्यन्ते व्यक्तीक्रियन्ते पदार्था अनया 'पञ्चिका' । पृषोदरादित्वाज्जत्वे पञ्जिका 'अर्थाद्विषमाण्येव पदानि भनक्ति पदभञ्जिका' इत्येवंरीत्या व्याख्यातवान् ॥ प्रयुज्यते स्म च 'पञ्चिका'शब्दोऽपि वक्रोक्तिपञ्चाशिकाव्याख्यायां वल्लभदेवेन 'पञ्चिका क्रियते लघुः' ॥ इति 'आयव्ययलिखनार्था च' इति मुकुटः ॥

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः । अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः १२**
**श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः । कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३॥**
**कषणभमरोपान्ता यद्यदन्ता अमी अथ । पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥**
**नाम्न्यकर्तरि भावे च घञजन्नङ्णघाथुचः । ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः**

इत्यधिकारः ॥ सह भेदैरनुचरैश्च वर्तमानाः, सह पर्यायैर्वर्तमानाः, सुराश्चासुराश्च देवदैत्याः ॥ अमरा निर्जरा देवाः । सुरभेदाः=तुषिताः, साध्याः, आभास्वराः, इन्द्रः, शक्रः, सूर्यः, आदित्यः । देवानुचराः—हाहाः, हूहूः, तुम्बुरुः, नारदः, मातलिः ॥ असुरपर्यायाः दैत्याः, दैतेयाः दानवाः । दैत्यभेदाः—बलिः, नमुचिः, जम्भः । दैत्यानुचराः——कूष्माण्डमुण्डकुम्भाण्डादयः ॥ 'देवतानि' 'देवताः' इत्यादौ बाधोऽस्य ॥ स्वर्गादय एकोनविंशतिः सभेदाः सपर्यायाश्च पुंसि स्युः ॥ स्वर्गः, नाकः, त्रिदिवः । 'द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' इति विशेषैर्बाधितः ॥ यज्ञः, मखः, क्रतुः ॥ तद्भेदाः——उक्थातिरात्राग्निष्टोमाश्वमेधाः ॥ अद्रिः, गिरिः, पर्वतः, । भेदाः——मेरुः, हिमवान्, सह्यः । 'गन्धमादनम्' इति बाधः ॥ मेघः, घनः, जलदः । भेदाः—पुष्करावर्तकादयः । 'अभ्रम्' इति तु बाधः ॥ अब्धिः, समुद्रः, सागरः । भेदाः—क्षीरोदः, लवणोदः ॥ द्रुः, वृक्षः, शाखी । भेदाः——प्लक्षः, वटः, आम्रः ॥ पाटलशिंशपादेर्बाधः ॥ कालः, दिष्टः समयः । भेदाः——मासः, पक्षः, ऋतुः । दिनतिथ्यादौ बाधः ॥ असिः, खड्गः, मण्डलाग्रः । भेदाः——नन्दकः, चन्द्रहासः । 'कटित्रम्' इत्यादौ बाधः ॥ शरः, बाणः विशिखः । भेदाः——नाराचः, काण्डः, मल्लः । 'इषुर्द्वयोः' इति बाधः ॥ अरिः, शत्रुः, अरातिः । भेदाः——आततायी ॥ ११ ॥ **करेति** ॥ करो राजग्राह्यो भागः, रश्मिः, पाणिश्च । मरीच्यादीनां तु बाधः ॥ गण्डः, कपोलः ॥ ओष्ठः, दन्तच्छन्दः, अधरः ॥ दोः, प्रवेष्टः । भुजादेः 'द्वयोः' इति बाधः ॥ दन्तः, दशनः, रदः । भेदः—जम्भः ॥ कण्ठः, गलः ॥ "समीपगलशब्देषु कण्ठं त्रिषु विदुर्बुधाः" इति शाश्वतः ॥ केशः, कचः ॥ नखः, पुनर्भवः । "नखरोऽस्त्रियाम्" इति बाधः ॥ स्तनः, कुचः, पयोधरः॥ अह्नश्च अहश्च अन्ते येषां ते पुंसि स्युः । परवल्लिङ्गापवादोऽयम्॥अह्नः पूर्वम्—पूर्वाह्णः, अपराह्णः । द्वयोरह्नोः समाहारो द्व्यहः,त्र्यहः॥क्ष्वेडो विषम्॥ तद्भेदाः पुंसि स्युः॥सौराष्ट्रिकः,शौक्लिकेयः, ब्रह्मपुत्रः॥ रात्रोऽन्तो येषां ते, प्राक् पूर्वपदं न संख्या येषां ते पुंसि स्युः । परवल्लिङ्गतापवादोऽयम् । परत्वात्समाहारनपुंसकतामपि बाधते । तेन 'अहोरात्रः' । सर्वरात्रः, पूर्वरात्रः । 'प्रागसंख्यकाः' इति किम् । पञ्चरात्रम् ॥ १२ ॥ श्रीति ॥ श्रीवेष्ट आद्यो येषां ते निर्यासा वृक्षद्रवाः पुंसि स्युः ॥ श्रीवेष्टः, सरलः, द्रवः । 'श्रीपिष्टः' इति काचित्पाठः ॥ आद्येन श्रीवासः, वृकधूपः, गुग्गुलुः, सिह्लकः, इत्यादयः पुंसि बोध्याः ॥ असन्ता अन्नन्ताश्च पुंसि स्युः । अङ्गिराः, वेधाः, चन्द्रमाः ॥ कृष्णवर्त्मा, प्रतिदिवा, मघवा ॥ अबाधिताः किम् । अप्सरसः, जलौकसः, सुमनसः, लोम, साम, वर्म ॥ तुश्च रुश्च तुरू । तौ विरामौ विरामे वा येषां ते पुंसि स्युः कशेर्वादीनि विहाय ॥ हेतुः, सेतुः, धातुः, । कुरुः, मेरुः, त्सरुः, ॥ "कशेरुजतुवस्तूनि हित्वा" इति व्यर्थम् । 'अबाधिताः' इत्यस्यान्वयसंभवात् ॥ वस्तुतस्तु 'अबाधिताः' इत्यपि व्यर्थम् । 'विशेषैर्यद्यबाधितः' इत्यनेन निर्वाहात् ॥ अत एव दार्वादिषु निर्वाहः ॥ १३ ॥ **कषेति** ॥ ककारादिद्वादशवर्णोपधा अदन्ताः पुंसि स्युः ॥ अङ्कः, लोकः, अर्कः, । माषः, तुषः, रोषः । पाषाणः, गुणः, घुणः । दर्भः, रसभः, गर्दभः । होमः, ग्रामः, धूमः । झर्झरः, शीकरः, समीरः । यूपः, कूपः, सूपः, कलापः । सार्थः, नाथः, शपथः । इनः, अपघनः, जनः । अपनयः, विनयः, प्रणयः । रसः, हासः, पनसः । पटसरटकरटाः, ॥ मुकुटस्तु—पोपान्तादिषु 'अदन्ताः' इति न संबध्यते, अथादित्वात्——इत्याह ॥ गोमायुपाय्वादीनुदाहरति च ॥ गोत्रं वंशमाख्यायते व्यपदिश्यते यैस्ते । "अन्येभ्योऽपि—" ( वा० ३।२।१०१ ) इति डः । गोत्रस्यादिपुरुषाः प्रवराश्च पुंसि स्युः ॥ स्वामी तु——'अपत्यप्रत्ययान्ताः' इति व्याख्यत् ॥ तदसत् । 'अपत्यप्रत्ययान्ताः' इत्यनेन पुनरुक्तिप्रसङ्गात् । गौतमः, भरद्वाजः, वसिष्ठः ॥ चरणानां वेदशाखानामाह्वया नामानि ॥ कठः, कलापः, बह्वृचः ॥ १४ ॥ **नेति** ॥ घञादयः सप्त प्रत्ययाः संज्ञायां विषये, कर्तृभिन्ने कारके, भावे च ये विहिताः, तदन्ताः पुंसि स्युः ॥ प्रासीदन्त्यस्मिन्मनांसि प्रासादः । "हलश्च"

**द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते । कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥ १६ ॥**
**वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः । पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥१७॥**
**कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् । गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥१८॥**

( ३।३।१२१ ) इति घञ् ॥ प्रास्यते प्रासः, विदन्त्यनेन वेदः, प्रपतन्त्यस्मात्प्रपातः ॥ भावे पाकः, त्यागः, रोगः ॥ चकारात् "पदरुज—" ( ३।३।१६ ) इति घञ्, दायो धायः, इत्यादयोऽसंज्ञायां विहिता अपि गृह्यन्ते ॥ चयः, जयः, "एरच्" ( ३।३।५६ ) ॥ करः, गरः, लवः, स्तवः, "ऋदोरप्" ( ३।३।५७ ) ॥ "यजयाचयत—" ( ३।३।९० ) इति नङ् । यज्ञः, यत्नः । 'नङ्' इत्युपलक्षणम् । "स्वपो नन्" ( ३।३।९१ ) अपि गृह्यते । 'स्वप्नः संवेश इत्यपि' इति वा पुंस्त्वसिद्धिर्बोध्या ॥ न्यादनम्— न्यादः । "नौ ण च" ( ३।३।६० ) इति णः ॥ "पुंसि संज्ञायाम्—" ( ३।३।११८ ) इति घः । उरश्छदः, प्रच्छदः ॥ "ट्वितोऽथुच्" ( ३।३।८९ ) ॥ श्वयथुः, वेपथुः ॥ "नन्दिग्रहि—" ( ३।१।१३४ ) इति नन्द्यादिभ्यो विहितो ल्युः पुंसि स्यात् । नन्दनः, रमणः, मधुसूदनः । संज्ञायामिदम् । असंज्ञायां तु "कृतः कर्तर्यसंज्ञायाम्" इति सिद्धम् ॥ इमनिजन्ताः पुंसि ॥ "पृथ्वादिभ्य इमनिज्वा" ( ५।१।१२२ ) । प्रथिमा, महिमा ॥ इह 'भावे' इति न संबध्यते । कर्मार्थस्येमनिचोऽसंग्रहापत्तेः । चण्डस्य कर्म भावो वा चण्डिमा, महतः कर्म भावो वा महिमा ॥ स्वामिमुकुटौ तु 'वरिमा' 'तरिमा' इत्याद्यौणादिकेमनिज्वारणाय 'भावे' इति संबबन्धतुः, तन्न । 'कृतः कर्तर्यसंज्ञायाम्' इत्यनेन तत्र सिद्धत्वात् ॥ प्रीधातोरौणादिकमनिनन्तः प्रेमशब्दः ॥ "सुपि स्थः" ( ३।२।४ ) इति योगविभागाद्भावे कः, "घञर्थे कः" ( वा० ३।३।५८ ) इति, च । आखूत्थः, प्रस्थः ॥ उपसर्गादन्यस्माच्च सुबन्तात् परो यो घुस्तस्माद्विहितो यः किप्रत्ययस्तदन्तः पुंसि स्यात् । "उपसर्गे घोः किः" ( ३।३।९२ ) "कर्मण्यधिकरणे च" ( ३।३।९४ ) निधिः, आदिः, विधिः, उदधिः, जलधिः, ॥ अत्र 'प्रादितोऽन्यतः' इति व्यर्थम् । 'घोः किः' इत्यनेनैवेष्टसिद्धेः ॥ १५ ॥

द्वन्द्व इति ॥ अश्वश्च वडवा च । "पूर्ववदश्ववडवौ" ( २।४।२७ ) इति परवल्लिङ्गतापवादः । द्वित्वमविवक्षितम् । तेन 'अश्ववडवान्' । असमाहृते किम् । अश्ववडवम् । "विभाषा वृक्षमृग—" (२।४।१२) इति चैकवद्भावः ॥ सूर्येन्दुनामपूर्वः कान्तशब्दः पुंसि ॥ सूर्यकान्तः, चन्द्रकान्तः ॥ अयस्कान्तः ॥१६॥

वटेति ॥ वटकः माषपिष्टविकारः ॥ ( १ )॥ अनुवाकः ऋग्यजुःसमूहः ॥ ( १ ) ॥ रल्लकः पक्ष्मकम्बलम् ॥ ॥ ( १ ) ॥ "कुडङ्गको ना छदिः पिटम्" इति बोपालितः । 'वृक्षलतागृहम्' इति स्वामी ॥ "कुटङ्गकः" इति क्वचित् पाठः ॥ ( १ ) ॥ पुङ्खः काण्डमूलम् ॥ ( १ ) ॥ "न्युङ्खः सम्यग्मनोज्ञे च साम्नः षट् प्रणवेषु च" इति मेदिनी ॥ 'न्यूङ्खः' इति दीर्घश्च ॥ ( १ ) ॥ समुद्गः संपुटकः ॥ ( १ ) ॥ "विटोऽद्रौ धवले विङ्गे मूषिके खदिरेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः" इति मेदिनी ॥ ( १ ) ॥ "परीक्षार्थतुलायां च घटः सूरिभिरिष्यते" इति विश्वः ॥ "घटो दिव्यतुलायां स्याद् घटी चीरे च वाससः" इति मेदिनी ॥ ( १ ) ॥ "खटोऽन्धकूपखपयोः प्रहारान्तरढङ्कयोः" इति मेदिनी ॥ १७ ॥

कविति ॥ "कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके" इति रभसः ॥ ( १ ) ॥ घट्टः 'घाट' इति प्रसिद्धः ॥ ( १ ) ॥ केचित्तु "कोट्ट" "अरघट्ट" इति छित्वा "कोट्टो दुर्गपुरम्, अरघट्टः कूपभेदः" इति व्याचख्युः ॥ अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्यते रच्यते—अरघट्टः कूपाञ्जलिनिःसारणार्थं घटीयन्त्रमित्यन्ये ॥ ( १ ) ॥ हट्ट आपणः ॥ ( १ ) ॥ "पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि । ओड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः" इति मेदिनी॥(१)॥गोरण्ड इव॥ "गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति"

---

१—'कोट्टः' पुंक्लीबलिङ्गः—, इत्यभिधानचिन्तामणौ हैमः ॥

दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः । कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सपूपकौ ॥१९॥
आतपः क्षत्रिये नाभिः कणपक्षुरकेदराः । पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥
वेतालमल्लभल्लाश्च पुरोडाशोऽपि पट्टिशः । कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥

इति मेदिनी ॥ ( १ ) ॥ पिचण्डः ॥ ( १ ) ॥ पिचण्डवत् कोट्टारादयः पुंसि इत्यन्वयः । 'गडुः पृष्ठगुडे कुब्जे" इति विश्वः ॥ ( १ ) ॥ "करण्डो मधुकोषासिकारण्डवदलाढके" इति मेदिनी॥ ॥ ( १ ) ॥ लगुडो यष्टिः ॥ ( १ ) ॥ "वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः" इति मेदिनी ॥ ( १ ) ॥ किणो मांसग्रन्थिः व्रणजं चिह्नं च ॥ ( १ ) ॥ "घुणः स्यात्काष्ठवेधके" इति रत्नकोषः ॥ १८ ॥ दृतीति ॥ "दृतिश्चर्मपुटे मत्स्ये ना" इति मेदिनी ॥ ( १ ) ॥ सीमन्तः केशविन्यासः ॥ ( १ ) ॥ "हरिर्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे च" इति मेदिनी ॥ ( १ ) ॥ रोमन्थः पशूनां चर्वितस्य चर्वणम् ॥ ( १ ) ॥ "उद्गीथः प्रणवः सामवेदध्वनिः" इत्यरुणः ॥ ( १ ) ॥ बुद्बुदो जलविकारः ॥ ( १ ) ॥ कासमर्दः वेसवारभेदः ॥ (१) ॥ "अर्बुदो मांसकीलेऽस्त्री परुषे दशकोटिषु । महीधरविशेषे ना" इति मेदिनी ॥ 'अर्दनिः' इति पठित्वा 'अग्निः' इति व्याख्यत् मुकुटः ॥ ( १ ) ॥ "कुन्दो माध्येऽस्त्री, मुकुन्दभ्रमिनिध्यन्तरेषु ना" इति मेदिनी ॥ ( १ ) ॥ फेनः ॥ ( १ ) ॥ स्तूपः ॥ ( १ ) ॥ पूपकः ॥ स्वामी तु यूपशब्दं पठति ॥ १९ ॥ आतेति ॥ आतपः ॥ ( १ ) ॥ कणपः प्रासविशेषः ॥क्वचित् 'कुणपः' इति पाठः ॥ "कुणपः पूतिगन्धौ शवेऽपि च" इति मेदिनी ॥ ( १ ) ॥ "क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे" इति मेदिनी ॥ ( १ ) ॥ केदरः । संव्यवहारपदार्थः । 'तरुभेदः' इत्यन्ये ॥ ( १ ) ॥ "पूरो जलप्रवाहे स्याद् व्रणसंशुद्धिखाद्ययोः" इति मेदिनी ॥ ( १ ) ॥ क्षुरप्रः ॥ मुकुटस्तु 'खुरप्रः' इति कवर्गद्वितीयादिं पठति ॥ बाणभेदः ॥ ( १ ) ॥ "चुक्रं वृक्षाम्ले, चाङ्गेर्यां स्त्री, पुंस्यम्लेऽम्लवेतसे" इति मेदिनी ॥ ( १ ) ॥ "गोलः स्यात्सर्ववर्तुले" इति हेमः ॥ १ ॥ "हिंगुलो वर्णकद्रव्ये ना भण्टाक्यां तु हिंगुली" इति मेदिनी । मुकुटस्तु "हिंगुलु स्यात्तु हिंगुलम्" इति पठति ॥ ( १ ) ॥ "पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः" इति मेदिनी ॥ ( २० ) ॥ वेतेति ॥ वेतालः भूताविष्टः शवः ॥ ( १ ) ॥ "मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी ॥ ( १ ) ॥ "भल्लः स्यात्पुंसि भल्लूके शस्त्रभेदे पुनर्द्वयोः । भल्लातक्यां स्त्रियां भल्ली" इति मेदिनी ॥ ( १ ) ॥ "पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः" इति विश्वः ॥ ( १ ) ॥ "पट्टिः स्त्री पटभेदे स्याल्ललाटे कुम्भिकाद्रुमे" इति मेदिनी ॥ पाट्टिं स्यति पट्टीशः ॥'पट्टिसः' इति दन्त्यसान्त इति मुकुटः॥शस्त्रभेदः ॥ ( १ ) ॥ "कुल्माषो यावके प्रोक्तः कुल्माषं काञ्जिकेऽपि च" इति मूर्धन्यान्ते विश्वः ॥ "कुल्माषं काञ्जिके यावके पुमान्" इति मूर्धन्यान्ते मेदिनी ॥ धातुपारायणे 'कुल्मासः' इति दन्त्यान्तः ॥ कुल्मासो माषादिमिश्रमर्धस्विन्नमोदनम् 'खिचुडम्' इति ख्यातम्—इति मुकुटः ॥ ( १ ) ॥ "रभसो वेगहर्षयोः" इति विश्वः ॥ ( १ ) ॥ कटेनातिशयेनाहन्यते गम्यते ॥ "कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाहः कूर्मपृष्ठे च स्तूपे च महिषीशिशौ" इति विश्वः ॥ "कटाहः कूर्मकर्परे । द्वीपस्य च प्रभेदे च तथा स्यान्महिषीशिशौ । तैलादिपाकपात्रे च" ॥ ( १ ) ॥ पतद्ग्रहः पततस्ताम्बूलादेर्ग्रहः 'पीकदान'

१—"अर्बुदो मांसपरुषि दशकोटिषु न स्त्रियाम्" इति बहुत्र पाठ आसीत्॥ २—यथा"दशाननक्षिप्तखुरप्रखण्डितः क्वचिद्गतार्धो हिमदीधितिर्यथा" इति हरविलासः—इति च लिखति ॥ ३—"वैश्यवर्गे क्लीबलिङ्गमुदन्तमदन्तं च पठयते" इत्यादिकम् ॥ हेमचन्द्रोऽपि स्वोपज्ञनाममालाव्याख्यायाम्—वाचस्पतिस्तु "हिङ्गुलस्त्वस्त्रियाम्" इति क्लीबेऽप्याह—इत्यभिहितवान् ॥ ४—"असितोमरकुन्तमहापट्टिस—" इति भट्टि, भाषासमावेशात्-इति च ॥

द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् । शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् २२ ॥
फलहेमशुल्वलोहं सुखदुःखशुभाशुभम् । जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिः संख्याऽन्या वा लक्षा नियुतं च तत्।द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥
त्रान्तं सलोपधं शिष्टं, रात्रं प्राक्संख्ययाऽन्वितम् । पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः२५॥

इति ख्यातः ॥ ( १ ) ॥ २१ ॥ इति पुँल्लिङ्गसंग्रहः ॥ द्वीति ॥ द्वाभ्यां हीने क्लीबे । अधिकारोऽयम् ॥ अन्यदवशिष्टम् । उक्तात्संग्रहाच्छेषः क्लीबे स्यात्, बाधकविषयादन्यः ॥ तत्र कांश्चिद्दर्शयति—खमिति ॥ "खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्" इति मेदिनी ॥ (१) ॥ अरण्यम् ॥ ( १ ) ॥ "पर्णं पत्त्रे पलाशे ना" ॥ ( १ ) ॥ श्वभ्रम् ॥ ( १ ) ॥ "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः" इति मेदिनी ॥ (१) ॥ उदकम् ॥ ( १ ) ॥ "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना" इति मेदिनी ॥ ( १ ) ॥ "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः" इति मेदिनी ॥ ( १ ) ॥ "मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्" इति मेदिनी॥(१)॥ "रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः" इति मेदिनी॥(१)॥ "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि । संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् " इति मेदिनी ॥ ( १ ) ॥ अक्षि ॥ ( १ ) ॥ "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे" इति मेदिनी ( १ ) ॥ "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः ॥ पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च ।। बल्युक्तेऽन्यलिङ्गः स्याद्वाट्यालके तु योषिति" इति मेदिनी ॥ ( १ ) ॥ २२ ॥ फलेति ॥ "फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः" इति हैमः ॥ क्वचित्तु 'हलम्' इति पाठः ॥ ( १ ) ॥ हेम ॥ ( १ ) ॥ "शुल्वं ताम्रे यज्ञकर्मण्याधारे जलसंनिधौ"-इति मेदिनी ॥ ( १ ) ॥ "लोहोऽस्त्री शस्त्रके लौहे जोङ्गके सर्वतैजसे" इति मेदिनी ॥ ( १ ) ॥ सुखम् ॥ ( १ ) ॥ दुःखम् ॥ ( १ ) ॥ शुभम् ॥ ( १ ) ॥ अशुभम् ॥ ( १ ) ॥ जलभवानि पुष्पाणि कुमुदकमलकल्हारोत्पलानि ॥ ( १ ) ॥ "लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम्" इति मेदिनी ॥(१)॥ "व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽहनि" इति मेदिनी ॥ ( १ ) ॥ अनुलेपनम् ॥ ( १ ) ॥ दुःखादि सपर्यायं सविशेषं च क्लीबे भवति, इति मुकुटः ॥ २३ ॥ कवित ॥ कोटेर्भिन्ना शतादिका संख्या क्लीबे ॥ शतम् । सहस्रम् । अयुतम् । अर्बुदम् ॥ "लक्षा न पुंसि संख्यायां क्लीबे व्याजशरव्ययोः" इति मेदिनी ॥ ( १ ) ॥ नियुतम् ॥ ( १ ) ॥ "शतं सहस्र, मयुतं नियुक्तं प्रयुतं मतम् । स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम्" इति रत्नकोषः ॥ असन्तमिसन्तमुसन्तमन्नतं यद् द्व्यच्कं तत्क्लीबे ॥ यशः, पयः, तेजः ॥ "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे" इति मेदिनी ॥ सर्पिः, हविः, शोचिः । वपुः, यजुः, धनुः । चर्म, वर्म ॥ कर्तृवर्जितेऽर्थे यदनान्तं नाम तत् क्लीबे स्यात् ॥ गमनम् ,रमणम् , दानम् ॥ अकर्तरीति किम् । नन्दनः, रमणः ॥ २४ ॥ त्रेति ॥ त्रशन्दातं सकारलकारोपधं च क्लीबं स्यात् ॥ दात्रम्, पात्रम्, वस्त्रम् । विसम्, बुसम्, अन्धतमसम् ,। कूलम्, मूलम्, शूलम्, तूलम् ॥ शिष्टमवशिष्टम् । 'अबाधितम्' इति यावत् । शिष्टं किम् । पुत्रः वृत्रः, मन्त्रः । हंसः, कंसः । शालः, कालः । संख्यापूर्वपदं रात्रान्तं क्लीबम् ॥ त्रिरात्रम्, पञ्चरात्रम् ॥ संख्ययेति किम् । अर्धरात्रः, पूर्वरात्रः ॥ पात्रादिभिरदन्तैरेकार्थो द्विगुः क्लीबे स्यात्, शिष्टप्रयोगात् ॥ पञ्चपात्रम्, त्रिभुवनम् ॥ एकार्थः किम् । पञ्चकपालः पुरोडाशः । तद्धितार्थे द्विगुरयम् ॥ लक्ष्यानुसारत

---

१—'तत् लक्षं नियुतशब्दवाच्यमपि' इति मुकुटः ॥ २—मुकुटस्तु पर्यायपरत्वेन व्याचष्टे ॥ क्षीरस्वाम्यपि—खादि सपर्यायविशेषं तृतीये-इत्येव व्याचष्ट ॥ ३—"कृत्यल्युटो बहुलम्" ( ३।३।११३ ) इत्यनान्तानां त्रिलिङ्गत्वं स्मरन्ति । राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजनं भक्तम्, इत्यादि-क्षीरस्वामी ॥

**द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः । षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥
शालार्थाऽपि परा राजामनुष्यार्थादराजकात् । दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥२७॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने । कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ २८ ॥
भावे नणकचिद्व्द्योऽन्ये समूहे भावकर्मणोः । अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः॥२९॥**

इति किम् । त्रिपुरी, पञ्चपूली, त्रिवली ॥ २५ ॥ द्वेति ॥ एकत्वे द्वन्द्वो द्वन्द्वैकत्वम् । राजदन्तादिः ( २।२।३१ ) । षष्ठीतत्पुरुषे तु, एकत्वस्य प्राधान्यात्तस्यैव लिङ्गान्वयः स्यात्, न तु द्वन्द्वस्य । एकार्थको द्वन्द्वः समाहारद्वन्द्वः, अव्ययीभावश्च क्लीबे स्यात् ॥ पाणिपादम् । अधिहरि ॥ कृतसमासान्तः पथिन्शब्दः क्लीबे ॥ द्विपथम् । त्रिपथम्, विपथम्, कापथम् ॥ संख्याव्ययात्परः किम् । धर्मपथः ॥ कृतसमासान्तः किम् । अतिपन्थाः, सुपन्थाः ॥ षष्ठ्यन्तात्परा तत्पुरुषे छाया क्लीबे, सा चेद्बहूनां संबन्धिनी स्यात् ॥ वीनां छाया । "छाया बाहुल्ये" ( २।४।२२ ) इति क्लीबत्वम् ॥ बहूनां किम् । कुड्यच्छाया, कुड्यच्छायम् । "विभाषा सेना—" ( २।४।२५ ) इति क्लीबत्वम् ॥ समूहे वर्तमानो यः सभाशब्दस्तदन्तस्तत्पुरुषः क्लीबे, षष्ठ्यन्तात्परा चेत् ॥ स्त्रीसभम् । स्त्रीसंघातः । "अशाला च" ( २।४।२४ ) इति क्लीबत्वम् ॥ संहतौ किम् । धर्मसभा धर्मशाला ॥ २६ ॥ शालेति ॥ शाला गृहमर्थो यस्याः सा सभा राजशब्दवर्जितराजपर्यायात्, अमनुष्यात् रक्षःपिशाचादिवाचकाच्च षष्ठ्यन्तात्परा तत्पुरुषे क्लीबे स्यात् ॥ अपिना संहत्यर्था सभा गृह्यते ॥ इनसभम्, प्रभुसभम्, पिशाचसभम् ॥ इमा दिश उदाहरणानि ॥ अराजकात् किम् । राजसभा ॥ राजपर्यायग्रहणान्नेह चन्द्रगुप्तसभा । राजविशेषोऽयम्॥ षष्ठ्यन्तात् किम् । ईश्वरा सभा = ईश्वरसभा । न सभा = असभा ॥ तत्पुरुषे इति किम् । ईश्वरस्य सभेव सभा यस्य स ईश्वरसभः । "सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च" (वा० २।२।२४ ) इति बहुव्रीहिः ॥ २७ ॥ उपेति ॥ उपज्ञा उपक्रमश्चान्ते यस्य स तत्पुरुषः क्लीबे स्यात्, उपज्ञोपक्रमयोः प्राथम्ये द्योत्ये ॥ उपज्ञायते । 'आतश्चोपसर्गे' ( ३ । ३ । १०६ ) इति कर्मण्यङ् ॥उपक्रम्यते, इति । कर्मणि घञ् ( ३ । ३ । १९ )॥ कस्य प्रजापतेः, उपज्ञा, उपक्रमश्च ॥ सृष्टिस्तेनादौ ज्ञाता प्रक्रान्ता च ॥ षष्ठ्यन्तात्परा या कन्था तदन्तस्तत्पुरुषः क्लीबे स्यात्, उशीनरदेशस्थसंज्ञासु चेद्वर्तते ॥ सौशमीनां कन्था सौशमिकन्थम्, आह्निकन्थम् ॥ 'उशीनर—' इति किम् । दाक्षिकन्था । बाह्लिकेष्वियं संज्ञा ॥ नामसु किम् । वीरणकन्था । कुत्रापि नेयं संज्ञा ॥ २८ ॥ भाव इति ॥ नश्च णश्च कश्च चितः ( च् इद्येषां ते ) च । एभ्योऽन्येऽदन्तप्रत्ययाः कृतो ये भावे विहिताः, तथा समूहेऽर्थे भावकर्मणोर्विहिता येऽकारान्तप्रत्ययास्तद्धिताः, तदन्तं नाम क्लीबे स्यात् ॥ भूतम्, "नपुंसके भावे क्तः" ( ३ । ३ । ११४ ) भवितव्यम्, भवनीयम्, भव्यम् । "तयोरेव—" ( ३ । ४ । ७० ) इति भावे तव्यादयः । "भुवो भावे" ( ३।१।१०७ ) क्यप्, ब्रह्मभूयम् ॥ "अभिविधौ भाव इनुण्" ( ३।३।४४ ) । "अणिनुणः" ( ५।४।१५ ) । सांराविणम्, सांकूटिनं वर्तते ॥ नणकेति किम् । "यजयाच—" ( ३।३।९० ) इति नङ् । यज्ञः, यत्नः ॥ "स्वपो नन्" ( ३।३।९१ ) । स्वप्नः ॥ "नौ ण च" ( ३।३।६० ) । न्यादः ॥ "सुपि" ( ३।२।४ ) । इति "घञर्थे—" ( वा० ३।३।५८ ) इति च कः । आखूत्थः, विघ्नः ॥ चित् "एरच्" ( ३।३।५६ ) । चयः, जयः ॥ "ण्यासश्रन्थो युच्" ( ३।३।१०७ ) । कारणा ॥ यत्तु—"ट्वितोऽथुच्" ( ३।३।८९ ) । श्वयथुः—इति मुकुट उदाहरत् तन्न । अदन्तत्वाभावात् ॥

---

१—अव्ययीभावशब्दस्य पुंलिङ्गत्वेन द्वन्द्वैकत्वस्य नपुंसकत्वेऽपि द्वन्द्वे परवल्लिङ्गत्वस्यैव जायमानत्वेन प्रयोगानुपपत्त्यभावस्य, लक्ष्येषु "स नपुंसकम्" ( २।४।१७ ) इति नपुंसकत्वस्यैवेष्टत्वेन लक्ष्यासिद्ध्यभावस्य च सत्त्वेन को दोषः ॥ २—अत्र नपुंसकत्वफलस्य स्वरभिन्नस्य वक्तुमशक्यत्वेन स्वरभेदस्य त्वयाऽनङ्गीकृतत्वेन चिन्त्यमेतत् । तस्मात् "आधिस्त्रि" इत्यादिष्वपि "गोस्त्रियोः—" ( १।२।४८ ) इत्यनेन ह्रस्वस्य सिद्धौ "अधिगोपम्" इत्याद्येव फलं वक्तव्यम्॥

क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके । चोचं पिच्छं गृहस्थूणं तिरीटं मर्मयोजने ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः । माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलं स्थालबाल्हवम् । पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥३२ ॥
मोदकस्तण्डकष्टङ्कः[1] शाटकः खर्वटोऽर्बुदः । पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

समूहे तद्धिताः । "भिक्षादिभ्योऽण्" ( ४।२।३८ ) । भैक्षम् ॥ "गोत्रोक्षोष्ट्र–" ( ४।२।३९ ) इति वुञ् । औपगवकम् । "तस्य समूहः" ( ४।२।३७ ) । काकम् ॥ "केदाराद्यञ्च" ( ४।२।४० ) । कैदार्यम्, कैदारकम् । भावे—गोत्वम् । "इगन्ताच्च–" ( ५।१।१३१ ) । मौनम्, मार्दवम् ॥ मनोज्ञादिवुञ् ( ५।१।१३३ ) । मानोज्ञकम् ॥ "स्तेनाद्यन्नलोपश्च" ( ५।१।१२५ ) । स्तेयम् । "गुणवचन–" ( ५।१।१२४ ) इति ष्यञ् । शौक्ल्यम् ॥ कृतसमासान्तोऽहश्शब्दः क्लीबे स्यात् ॥ पुण्यं च तदहश्च । "राजाहःसखिभ्यष्टच्" ( ५।४।९१ ) । सुदिनशब्दः प्रशस्तवाची । सुदिनं च तदहश्च । पुण्याहम्, सुदिनाहम् ॥ कृतसमासान्त इति किम् । पुण्यानि अहानि यास्मिन् स पुण्याहा मासः ॥ २९ ॥ क्रियेति ॥ अपिशब्दात् क्लीबे ॥ मृदु पचति । प्रातः कमनीयम् ॥ उच्यते । 'वच भाषणे' ( अ० प० अ० ) । "पातॄतुदि–" ( उ० २१७ ) इति थक् ॥–"वसिकाशि–" इत्यादिना थक्—इति मुकुटश्चिन्त्यः ॥ तादृशसूत्राभावात् ॥ उक्थं सामविशेषः ॥ तोटकम् ॥ "फलावशिष्टं तालफलं च चोचं कदल्याः फलं भवेत्" इत्यार्षकोषः ॥ (१) ॥ "पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसंभूतमण्डे च पङ्क्तावश्वपदामये । स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः" इति मेदिनी ॥ ( १ ) ॥ गृहस्थूणम् ॥ ( १ ) ॥ तिरीटं वेष्टनम् । 'शिरोभूषणम्' इत्यन्ये ॥ ( १ ) ॥ मर्म॥अन्नन्तत्वादेव सिद्धे पुनर्मर्मग्रहणमन्नन्तस्य क्लीबत्वानित्यत्वज्ञापनार्थम्, इति मुकुटः ॥ ( १ ) ॥ "योजनं परमात्मानि । चतुष्कोश्यां च योगे च" इति मेदिनी ॥ ( १ ) ॥ ३० ॥ राजेति ॥ राज्ञा सोतव्योऽभिषेकद्वारा निष्पादयितव्यः ॥ यद्वा राजा लतात्मकः सोमः सूयतेऽत्र राजसूयम् ॥ ( १ ) ॥वाजमन्नं पैष्टी सुरा पेयमत्र वाजपेयम् ॥ ( १ )॥ गद्यम् ॥ ( १ ) ॥ "पद्यं श्लोके पुमाञ्शूद्रे पद्या वर्त्मनि कीर्तिता" इति मेदिनी ॥ कवेः कृतौ किम् । गद्या वार्ता । पद्यः पङ्कः, पद्यं रजः ॥ ( १ ) ॥ मणिके मणिपूराख्ये नगरे भवं माणिक्यम् ॥ भाष्यते सूत्रार्थो येन ॥ "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥ ( १ ) ॥ "सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके । सिन्दूरी रोचनीरक्तवेल्लिकाधातकीषु च" इति मेदिनी ॥ ( १ ) ॥ "चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालिखनभेदयोः" इति मेदिनी ॥ ( १ ) ॥ चीवरं मुनिवासः । 'शाक्यभिक्षुप्रावरणम्' इति सुभूतिः ॥ ( १ ) पञ्जरम् । क्वचित्तु 'पिञ्जरम्' इति पाठः ॥ "पिञ्जरोऽश्वान्तरे, क्लीबं स्वर्णे, पीते च वाच्यवत्" इति मेदिनी ॥ कायास्थिवृन्दं पक्षादिबन्धनगृहं च ॥ ( १ ) ॥ ३१ ॥ लोकेति ॥ लोके आयतन्ते चार्वाकाः । तेषामिदं शास्त्रम्–लोकायतम् ॥ ( १ ) ॥ "हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः" इति मेदिनी ॥ ( १ ) ॥ विदलं वंशकृतपात्रभेदः ॥ ( १ ) ॥ "स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः" इति मेदिनी ॥ ( १ ) ॥ बल्हदेशे भवं बाल्हवम् ॥ ॥ ( १ ) ॥ इति क्लीबसंग्रहः ॥ पुमिति ॥ "पुंनपुंसकयोः" इत्यधिकारः ॥ शेष उक्तादन्यः ॥ ऋचोऽर्धम् अर्धर्चः ॥ ( १ ) ॥ "पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिल्हके" इति मेदिनी ॥ ॥ ( १ ) ॥ "कण्टकः क्षुद्रशत्रौ च कर्मस्थानकदोषयोः । रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च" इति विश्वः ॥ "कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः" इति मेदिनी ॥ ( १ ) ॥ ३२ ॥ मवेति ॥ "मोदकः खाद्यभेदेऽस्त्री

१—'तङ्कः' इत्येके । तङ्को भयम्—इति पीयूषव्याख्या ॥

कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् । संगमं शतमानार्मशम्बलाव्ययताण्डवम् ३४॥
कवियं कन्दकर्पासं पारावारं युगंधरम् । यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् । तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ३६
स्त्रीपुंसयोरपत्यान्ता, द्विचतुःषट्पदोरगाः । जातिभेदाः, पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥

हर्षके पुनरन्यवत्'' इति मेदिनी ॥ ( १ ) ॥ ''तण्डकः खञ्जने फेने समासप्रायवाचि च । गृहदारुतरुस्कन्धमायाबहुलकेष्वपि'' इति मेदिनी ॥ ''दण्डकः'' इत्यपि ॥ ( १ ) ॥ ''टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् । जङ्घायां स्त्री पुमान् कोपे कोषासिग्रावदारणे'' इति मेदिनी ॥ ( १ ) ॥ शाटकः ॥ ( १ ) ॥ ''यत्रैकतो भवेद् ग्रामो नगरं चैकतः स्मृतम् । मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम्'' ॥ ( १ ) ॥ ''अर्बुदो मांसकीलेऽस्त्री पर्वते दशकोटिषु । महीधरविशेषे ना'' इति मेदिनी ॥ ( १ ) ॥ पातकम् ॥ ( १ ) ॥ उद्योगः ॥ ( १ ) ॥ चरकं वैद्यकशास्त्रभेदः ॥ 'वरकम्' इति पाठे स्यूतवस्त्रम् ॥ ( १ ) ॥ '' तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे'' इति मेदिनी ॥ ( १ ) आमलक्याः फलम् आमलकः ॥ ( १ ) ॥ नडोऽन्तरविवरं तृणभेदश्च ॥ ३३ ॥ क्विति ॥ ''कुष्ठं रोगे पुष्करेऽस्त्री'' इति मेदिनी ॥ ( १ ) ॥ मुण्डं शिरः ॥ ( १ ) ॥ शीधु मद्यम् ॥ ( १ ) ॥ बुस्तं मांसशष्कुली, भृष्टमांसम्, पनसादिफलासारभागश्च ॥ ( १ ) ॥ क्ष्वेडितं वीरगर्जनम् ॥ ( १ ) ॥ ''जानीयान्मङ्गलं क्षेमं क्षेमं लब्धार्थरक्षणम्'' ॥ ( १ ) ॥ ''कुट्टिमोऽस्त्री निबद्धा भूः'' ॥ ( १ ) ॥ संगमम् ॥ (१) ॥ शतं मानमस्य शतमानं रूप्यपलम् ॥ ( १ ) ॥ अर्मम् अक्षिरोगः ॥(१)॥ शम्बलं पाथेयम्॥ ''सम्बलम्'' इति दन्त्यादिपाठः ॥ ( १ ) ॥ ''अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु'' इति मेदिनी ॥(१)॥ तण्डुना प्रोक्तं ताण्डवम् ॥ ( १ ) ॥ ३४ ॥ कवीति ॥ ''नार्यां कवी खलीनं कवियं वा ना तुरंगमुखभाण्डम्''इति वोपालितः ॥(१)॥ '' कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्'' इति मेदिनी॥(१)॥ क्वचित् ''कर्म'' इति पाठः ॥ ( १ ) ॥ कर्पासम् ॥ ( १ ) ॥ पारः ॥ ( १ ) ॥ अवारम् ॥ ( १ ) ॥ युगन्धरं कूबरः ॥ ( १ ) ॥ यूपम् ॥ ( १ ) ॥ प्रग्रीवं वातायनम्, मुखशाला वा, द्रुमशीर्षं वा ॥ ( १ ) ॥ पात्रीवं यज्ञोपकरणपात्रभेदः ॥ ( १ ) ॥ ''मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः'' ॥ ( १ ) ॥ चमसं सोमपानपात्रम् ॥ ( १ ) ॥ चिक्कसः पात्रविशेषः ॥ ( १ ) ॥ ३५ ॥ अर्धर्चादाविति ॥ सुगमम् ॥ ३६ ॥ इति पुंनपुंसकसंग्रहः ॥ स्त्रीति ॥ ''स्त्रीपुंसयोः'' इत्यधिकारः ॥ अपत्यार्थे विहिता येऽणादयस्तदन्ताः सर्वे स्त्रीपुंसयोः स्युः ॥ औपगवः, औपगवी । गार्ग्यः, गार्गी ॥ द्विपदचतुष्पदषट्पदवाचिनः उरगवाचिनश्च जातिविशेषाः स्त्रीपुंसयोः ॥ मानुषः, मानुषी । विप्रः, विप्रा । शूद्रः, शूद्रा । अजादित्वाट्टाप् ( ४।१।४ ) बकः, बकी । हंसः, हंसी ॥सिंहः, सिंही ॥ भ्रमरः, भ्रमरी ॥ उरगः, उरगी ॥ ''जातेरस्त्रीविषयात्—'' ( ४।१।६३ ) इति ङीष् ॥ अबाधिता इत्येव । मक्षिका, शिवा, लूता ॥ जातिवाचिनः स्त्रीपुंसयोः स्युः ॥ द्रुणः, द्रुणी । मत्स्यः, मत्सी ॥ केचित्तु 'षट्पदादिभिरस्यैकवाक्यतां वदन्ति ॥ पुरुषाख्याः स्त्रीयोगैः सह वर्तमानाः स्त्रीपुंसयोः स्युः ॥ ब्राह्मणः ब्राह्मणी । शूद्री ॥ मल्लते । 'मल्ल धारणे' ( भ्वा० आ० से० ) । ण्वुल् ( ३ । १ । १३३ ) ॥ '' मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः '' इति मेदिनी ॥ ( १ ) ॥ ३७ ॥

---

१—दुर्गोक्तलिङ्गानुशासने त्रयं पठ्यते—''पुस्तं बुस्तं वास्तु चुस्तं व्रतं रजतम्'' इति—इति मुकुटः ॥ 'बुस्तः पवर्गतृतीयादिः'।'बुस्तं दन्तोष्ठ्यादि' इत्येके।'चुस्तं चवर्गादि'इत्यपरे।'पुस्तं पवर्गादि' इति केचित्-इति पीयूषव्याख्या॥
२—''शूद्रा चामहत्पूर्वा जातिः'' ( वा० ४।१।४ ) इत्यनेन टाब् बोध्यः ॥

मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः । मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥३८॥
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् कचिच्च वुञ्।औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः
षष्ठयन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः।स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक्॥४०
आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप्।त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि॥४१॥
त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ।परलिङ्गं स्वप्रधाने द्वन्द्वे, तत्पुरुषेऽपि तत् ॥ ४२ ॥
अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः । तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥४३॥

मुनिरिति ॥ "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने" इति मेदिनी ॥ ( १ ) ॥ वराटकः ॥ ( १ ) ॥ स्वातिः नक्षत्रभेदः ॥ ( १ ) ॥ "विलेपने चन्दने च वर्णकं पुंनपुंसकम्" इति रभसः ॥ "वर्णकश्चारणे स्त्री तु चन्दने च विलेपने । द्वयोर्नील्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च" इति मेदिनी ॥ ( १ ) ॥ झाटलिः वृक्षभेदः ॥ ( १ ) ॥ मनुः ॥ ( १ ) मूषा स्वर्णादिविलेपनभाण्डम् ॥ ( १ ) ॥ सृपाटी परिमाणभेदः ॥ ( १ ) ॥ कर्कन्धूः ॥ ( १ ) ॥ यष्टिः ॥ ( १ ) ॥ शाटिः ॥ (१)॥ कटी ॥ ( १ )॥ कुटी ॥ ( १ ) ॥ इति स्त्रीपुंससंग्रहः ॥ ३८ ॥ स्त्रीति ॥ 'स्त्रीनपुंसकयोः' इत्यधिकारः ॥ "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( ५ । १ । १२४ ) इति चकाराद्भावे च विहितः ष्यञ् स्त्रीनपुंसकयोः स्यात् ॥ वुञ् च ॥ "कचित्" इति ष्यञ्वुञ्भ्यां संबध्यते ॥ उचितस्य कर्म भावो वा । "षिद्गौरा"–( ४ । १ । ४१ ) इति ङीष् । "हलस्तद्धितस्य" ( ६ । ४ । १५० ) इति यलोपः ॥ ( १ ) ॥ एवम्—सामग्र्यम्, सामग्री । आर्हन्त्यम्, आर्हन्ती ॥ "अर्हतो नुम् च" ( ग० ५ । १ । १२४ ) इति नुम् ॥ प्राग् द्वितीयकाण्डे । आहोपुरुषिका, शैष्योपाध्यायिका, गार्गिका ॥ कचिन्न । मानोज्ञकम्, रामणीयकम् ॥ "भाव–" इति किम् । चातुर्वर्ण्यम् । स्वार्थे ष्यञ् (वा०५।१।१२४) न स्त्री ॥३९॥ षेति ॥ षष्ठ्यन्तात्पराः सेनादयस्तत्पुरुषे स्त्रीनपुंसकयोः स्युः॥ नृणां सेना = नृसेना । शुनां निशा श्वनिशम् । गवां शाला = गोशालम् । वृक्षस्य छाया = वृक्षच्छाया । यवानां सुरा = यवसुरा॥ पक्षे–"विभाषा सेनासुराच्छायाशालानिशानाम्"(२।४।२५)इति क्लीबता ॥ एवमितरेऽपि बोध्याः ॥ दिक् उदाहरणमिदम् ॥ ४० ॥ आबेति ॥ आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च द्विगुरपुंसि स्त्रीनपुंसकयोः स्यात् ॥ अनो नकारस्य च लुप् लोपः । संपदादित्वात् ( वा० ३।३।१०८ ) भावे क्विप् ॥ यत्तु मुकुटः— 'लुक्' इति छन्दोऽनुरोधात् लोपस्यार्थेऽदर्शने वर्तते—इत्याह तच्चिन्त्यम् । 'लुप्' इति पाठात् ॥ यदपि—प्रत्ययादर्शनस्यैव लुक्संज्ञाविधानात्—इति तदपि न । अत्र यौगिकस्य प्रयोगात् संज्ञाया ग्रहणे प्रमाणाभावात् ॥ 'लुग्' इति पाठेऽपि नात्र संज्ञाग्रहणम् ॥ 'लुञ्च अपनयने' ( भ्वा० प० से० ) इत्यस्य संपदादि ( वा० ३।३।१०८) क्विबन्तस्य ग्रहणात् ॥ तिसृणां खट्वानां समाहारः त्रिखट्वम् । त्रिखट्वी॥(१)॥ त्रयाणां तक्ष्णां समाहारः, त्रितक्षम् । त्रितक्षी ॥ ( १ ) ॥ ४१ ॥ इति स्त्रीनपुंसकसंग्रहः ॥ त्रिष्विति ॥ 'त्रिषु' इत्यधिकारः ॥ "पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये" ॥ ( १ ) ॥ पुटी ॥ ( १ ) ॥"वाटः पथि वृतौ वाटं वरण्डेऽङ्गान्नभेदयोः । वाटी वास्तौ गृहोद्यानेत्कट्योः" इति हैमः ॥ "वाटो मार्गवृतिस्थानेष्वित्कटीवास्तुनोः स्त्रियाम्" इति मेदिनी ॥ ( १ ) ॥ पेटी ॥ स्त्रीलिङ्गप्रदर्शनं तु ङ्यन्ततासूचनार्थम् ॥ वेत्रादिरचिता ॥ ( १ ) ॥ "कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले" इति मेदिनी ॥ ॥ ( १ ) ॥ दाडिमः ॥ ( १ ) ॥ इति त्रिलिङ्गसंग्रहः ॥ परेति ॥ स्वे समस्यमानाः पदार्थाः प्रधानं यत्र तस्मिन्नितरेतरयोगद्वन्द्वे परपदस्य लिङ्गम् ॥ कुक्कुटमयूर्यौ, मयूरीकुक्कुटौ ॥ तत् परलिङ्गम् ॥ कुलब्राह्मणः, ब्राह्मणकुलम् । अर्धपिप्पली । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" ( २।४।२६ ) ॥ ४२ ॥ अस्यापवादमाह— अर्थान्ता इति ॥ अर्थोऽन्ते येषां ते । प्राद्यादि पूर्वं येषां ते, परं विशेष्यमुपगच्छन्ति विशेष्यलिङ्गाः ॥ द्विजार्था माला, द्विजार्थः सूपः, द्विजार्थं पयः । "अर्थेन नित्यसमासः सर्वलिङ्गता च" ( वा० २ । १।३६ )॥ आचार्य

---

१—एवं च "उतो वृद्धिर्लुकि—" (७।३।८७ ) इति सूत्रे ककारश्रवणानुपपत्त्या चिन्त्यमेतत् ॥

बहुव्रीहिरदिग्नाम्नामुन्नेयं तदुदाहृतम् । गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥
कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि । अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥४५॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् । परं विरोधे, शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इति लिङ्गादिसंग्रहवर्गः ॥ ५ ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने । सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥

---

प्रगतः=प्राचार्यः ॥ "अत्यादयः क्रान्ताद्यर्थे द्वितीया" ( वा० २।२।१८ ) इति समासः । खट्वामतिक्रान्ता । पूर्ववत् ॥ यत्तु मुकुटेन 'प्रगत आचार्योऽस्याः' इति विग्रहप्रदर्शनं कृतम्, यच्च 'अतिखट्वः' इत्यत्र "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" ( वा० २।२।२४ ) इति वार्तिकमुपन्यस्तम् । तच्चिन्त्यम् ॥ उभयोरपि बहुव्रीहिविषयत्वात् । अत्र च तत्पुरुषत्वात् ॥ बहुव्रीहौ तु "बहुव्रीहिरदिग्नाम्नाम्" इत्यनेन गतार्थत्वाच्च॥ एवं प्राप्तजीविकः, आपन्नजीविकः ॥ अलं जीविकायै=अलंजीविकः, अस्मादेव ज्ञापकात्समासः ॥ तद्धितार्थे यो द्विगुः स वाच्यलिङ्गः ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाला ॥ "संख्यापूर्वो द्विगुः" ( २।१।५२ )। "संस्कृतं भक्षाः" ( ४।२।१६ ) इत्यण् । "द्विगोर्लुगनपत्ये" ( ४ । १ । ८८ ) इत्यणो लुक् ॥ संख्या सर्वनामानि च संख्यासर्वनामान्ताश्च शब्दा वाच्यलिङ्गाः ॥ एकः, एका, एकम् । द्वौ, द्वे २ । त्रयः, तिस्रः, त्रीणि । चत्वारः, चतस्रः, चत्वारि । बहवः, बह्व्यः, बहूनि ॥ सर्वः, सर्वा, सर्वम् इत्यादि ॥ ऊनत्रयः, ऊनतिस्रः, ऊनत्रीणि ॥ परमसर्वः, परमसर्वा, परमसर्वम् ॥ ४३ ॥ वेति ॥ बहुव्रीहिसमासो वाच्यलिङ्गः स्यात् ॥ बहुधनः, बहुधना, बहुधनम् ॥ 'अदिग्नाम्नाम्' इति किम् । उत्तरपूर्वा । "दिङ्नामान्यन्तराले" ( २ । २ । २६ ) इति बहुव्रीहिः ॥ गुणद्रव्यक्रियाणां योग उपाधिर्निमित्तं येषां ते ॥ शुक्ला शाटी, शुक्लः पटः, शुक्लं वस्त्रम् । दण्डी, दण्डिनी, दण्डि । पाचिका, पाचकः, पाचकम् ॥ ४४ ॥ कृत इति ॥ "कर्तरि कृत्" ( ३ । ४ । ६७ ) इत्यादिना विहिताः ॥ असंज्ञायां किम् । "संज्ञायां भृतॄ--" ( ३ । २ । ४६ ) इति विहिता वाच्यलिङ्गा न ॥ कर्ता, कर्त्री, कर्तृ । कुम्भकारः, कुम्भकारी, कुम्भकारम् ॥ संज्ञायां धनंजयः। कृत्याः कर्तरि भव्यः, भव्या, भव्यम्, । "भव्यगेय--" ( ३ । ४ । ६८ ) इति कर्तरि यत् ॥ कर्मणि ण्यत् । कार्यः, कार्या, कार्यम् ॥ कर्तरीत्यादि किम् । भवितव्यम् ॥ असंज्ञायामित्येव ॥ भिद्यो नदः, उध्यः ॥ "तेन रक्तं रागात्" ( ४ । २ । १ ) इत्याद्यर्थे विहिता ये अणादयस्तदन्ताः शब्दा नानार्थानां भेदका विशेषणानि, नानार्था वा भेदका विशेष्या येषां ते वाच्यालिङ्गाः स्युः ॥ कौङ्कुमं वस्त्रम्, कौङ्कुमी शाटी, कौङ्कुमः पटः । लाक्षिकी शाटी, लाक्षिकं वस्त्रम् । कृत्तिकाभिर्युक्ता कार्त्तिकी । वसिष्ठेन दृष्टं वासिष्ठं साम, वसिष्ठेन दृष्टो मन्त्रः वासिष्ठः, वासिष्ठी ऋक् । प्रजापतिना प्रोक्तः प्राजापत्यः ॥ ४५ ॥ षडिति ॥ "ष्णान्ता षट्" ( १ । १ । २४ ) "डति च" ( १ । १ । २५ ) इति सूत्राभ्यां कृतषट्संज्ञाः, युष्मदस्मदी, तिङन्तम्, अव्ययानि च त्रिषु लिङ्गेषु समा लिङ्गकृतविशेषाभावात् । 'त्रिषु' इत्यधिकारे 'त्रिषु समाः' इति वचनं लिङ्गसंबन्धाभावेन समानत्वप्रतिपादनार्थम् । पूर्वं हि लिङ्गवत्त्वं प्रतिपादितम् ॥ पञ्च नराः पञ्च नार्यः, पञ्च फलानि । षट् स्त्रियः, षट् नराः, षट् कुलानि । कति घटाः, कति स्त्रियः, कति गृहाणि । त्वं स्त्री, त्वं पुरुषः, त्वं फलम् ॥ एवम् अहं स्त्री, अहं पुरुषः, अहं फलम् । पुरुषः पचति, स्त्री पचति, कुलं पचति । उच्चैः प्रासादः, उच्चैः शाला, उच्चैर्गृहम् ॥ यत्तु मुकुटः--'षट्संज्ञकस्यापि संख्यान्तर्गतत्वादेव त्रिलिङ्गत्वे लब्धे 'संख्यासर्वनामतदन्तकाः' इत्यस्यैवायं प्रपञ्चः--इत्याह तन्न । डत्यन्तानां संख्यान्तर्गतत्वाभावात् । तेषां संख्याकार्यनिर्वाहाय पाणिनिना स्वशास्त्रे संख्यासंज्ञा विहिता, न तु सकलसाधारण्येन ॥ किं च संख्यासर्वनाम्नां लिङ्गत्रययोगः प्रतिपाद्यते, षट्संज्ञानां तु लिङ्गत्रयराहित्यमतः कथं तेनास्य गतार्थता । 'लिङ्गकृतविशेषरहिताः' इत्यर्थः--इति स्वयमेव व्याख्यातम् । नहीदं संख्यादिषु संभवति, इति कथं गतार्थता ॥ लिङ्गविधायकवचनविरोधे सति परं वचनं ग्राह्यम् । यथा "स्त्रियामीदूद्विरामैकाच्" इत्य-

स्यावकाशः—धीः, भ्रूः । "कृतः कर्तर्यसंज्ञायाम्" इत्यस्यावकाशः—कर्ता, पाचकः । नीः, लूः,इत्यादावुभयप्रसङ्गे परत्वात्त्रिलिङ्गता भवति ॥ मुकुटस्तु—'असुरपर्यायाः पुंस्त्वे' इत्यस्य विषयः—नैर्ऋतः, राक्षसः । 'द्व्यच्कमसिसुसन्नतं क्लीबे' इत्यस्य विषयः—ओजः, यशः । इहोभयं प्राप्नोति—रक्षः । परत्वात्तु क्लीबम् —इत्युदाजहार तन्न । 'विशेषैर्यद्यबाधितः' इत्यनेन गतार्थत्वात् । 'असुरपर्यायाः पुंस्त्वे' इत्यस्य 'यातुरक्षसी' इति निर्देशस्यैवापवादत्वात् । उत्सर्गापवादभिन्ने विरोधप्रदर्शनस्यौचित्यात् ॥ शेषमिहानुक्तं शिष्टानां प्रयोगाज्ज्ञातव्यम् । यथा—'चालनी तितउः पुमान्' इत्युक्तम् । इह 'तितउ परिपवनं भवति' इति (पस्पशा) भाष्यप्रयोगान्नपुंसकमपि बोध्यम् ॥ तथा "ताटङ्कस्ते" इत्याचार्यप्रयोगात्ताटङ्कशब्दस्य पुंस्त्वम् ॥ यथा वा "कलिका कोरकः पुमान्" इतीहोक्तम् । 'कोरकाणि' इति माघप्रयोगान्नपुंसकत्वमपि ॥ यत्तु 'गोधा, पोटा' इत्युदाहृतवान्मुकुटः तन्न । 'ङ्याबूङन्तम्' इत्युक्तत्वेन शेषत्वाभावात् ॥ ४६ ॥

इति लिङ्गादिसंग्रहवर्गविवरणम् ॥

---

इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजपण्डितविष्णुदत्तशास्त्रिविरचितायाममरटीकायां नामचन्द्रिकाख्यायां तृतीयः काण्डः समाप्तिमगात् ॥

**समाप्तश्चायममरकोषः ॥**

---



॥ श्रीः ॥

अथ

# सटीकत्रिकाण्डशेषकोषस्य

## प्रथमः काण्डः ।

नमः सम्यक्सम्बुद्धाय ।

जयन्ति सन्तः कुशलं प्रजानां नमो मुनीन्द्राय सुराः स्मृताश्च ।
स्तुताऽसि वाग्देवि दयस्व मातर्विधेहि विघ्नाधिप मङ्गलानि ॥ १ ॥
अलौकिकत्वादमरः स्वकोशे न यानि नामानि समुल्लिलेख ।
विलोक्य तैरप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य ॥ २ ॥
वर्गक्रमस्तथा नामलिङ्गयोस्तूपदेशता । परिभाषादिकं सर्वमत्राप्यमरकोषवत् ॥ ३ ॥
स्वर्लोको देवलोकः स्यादवरोहः फलोदयः । मन्दरः सैरिभः शक्रभवनं खं दिवं नभः ॥ ४ ॥
स्वाहाभुजस्तु वसुलाः पूजिताश्च चिरायुषः । शोभा निलिम्पा द्युषदः स्वर्गिणश्च नभःसदः ॥५॥

नमः श्रीदधिमथ्यै ॥

प्रणम्य श्रीदधिमथीं वाञ्छितार्थप्रपूरिणीम् ।
व्याख्यां त्रिकाण्डशेषस्य कुर्वेऽहं नामचन्द्रिकाम् ॥

इह खलु श्रीमान् **पुरुषोत्तमदेवः** सुधीवर आचार्यामरसिंहकृते **नामलिङ्गानुशासने** अभिधानशास्त्रे प्रायेणानुपदिष्टानां संज्ञाशब्दानां परिदीपनाय स्वचिकीर्षितस्याऽस्य त्रिकाण्डशेषकोषस्य निर्विघ्नपरिसमाप्त्यर्थं विहितं प्रणामादिकं मङ्गलसूचनं शिष्यशिक्षार्थं ग्रन्थादौ दर्शयति—**जयन्तीत्यादिना** ॥ तत्र सन्तः जयन्ति सर्वोत्कर्षेण वर्तन्ते । प्रजानां सत्त्वानां कुशलं कल्याणम् आरोग्यं वा । अस्त्विति क्रियापदमध्याहार्यम् । मुनीन्द्राय नमोऽस्तु । हे सुराः देवाः स्मृताः अनुस्मरणपथं नीताः । मयेति शेषः । क्वचित् 'स्थ' इति पाठः । एवं सति भवथेत्यर्थः । यूयमिति शेषः । वाग्देवि हे सरस्वति त्वं भवती स्तुता असि स्तवं कृता भवसि । मयेत्यन्वयः । वागधिकृते ग्रन्थारम्भे सरस्वत्याः अनुस्मरणं शिष्यशिक्षकयोर्ज्ञानसमृद्ध्यै हिताय च सर्वथैव प्रयोजनं भवति । मातः हे अम्ब त्वं दयस्व अनुकम्पां कुरु । मयीति शेषः । विघ्नाधिप हे गणेश त्वं भवान् मङ्गलानि शुभानि । अभीष्टार्थसिद्धिकराणीत्यर्थः । विधेहि कुरु॥१॥ अमरः आचार्यामरसिंहः स्वकोशे स्वनिर्मिते नामलिङ्गानुशासने अभिधानग्रन्थे यानि नामानि अभिधानानि । अलौकिकत्वात् सकलशब्दप्रयोगस्य इष्टसाधनत्वज्ञानेऽपि कृतिसाध्यत्वज्ञानाभावेनोदासीनत्वात् । लोको हि कृत्यसाध्ये चन्द्रानयनादौ न प्रवर्तते । न समुल्लिलेख न समुद्दीप्तानि कृतवान् । तैः अमरसिंहन अनुक्तैर्नामभिरपि । अपिशब्दः समुच्चये । अधुना अस्मिन् काले प्रचारं प्रसरणम् । महर्षीणां तेषु तेषु वाक्यरचनादिषु प्रायः प्रयोगमिति भावः । विलोक्य विशेषेण समीक्ष्य । न श्रुतिवशात् स्वचक्षुषैव दृष्ट्वेत्यर्थः । पुरुषोत्तमस्य तन्नामकस्य विदुषः अयं प्रयत्नः परिशिष्टनामसङ्कलने कार्यानुकूलः प्रयासः । भवतीत्यन्वयः ॥ २ ॥ वर्गेति॥ स्पष्टार्थकम् ॥ ३ ॥ अथाभिधानकथनमारभते—**स्वर्लोक इति**॥स्वर्लोकः १ देवलोकः २ अवरोहः ३ फलोदयः ४ मन्दरः ५ सैरिभः ६ शक्रभवनम् ७ खम् ८ दिवम् ९ नभः १० **इति दश नामानि स्वर्गस्य**॥अत्र शक्रभवनं खं दिवं नभः इति इमे शब्दाः नपुंसकाः । शेषाः पुँल्लिङ्गाः ॥ ४ ॥ स्वाहाभुजः १ वसुलाः, "सुबलाः" इति केशवे, "सुबालाः" इति

ऋनामा त्वदितिर्देवमाता स्यादथ पूर्वजाः पितरश्चन्द्रगोलस्था न्यस्तशस्त्राः स्वधाभुजः ॥६॥
कव्यवालादयस्ते च दैत्यास्तु प्रघसाः खराः । क्रतुद्विषश्चेष्टिमुषो दैत्यमाता दितिर्दनुः ॥७॥
बुद्धोऽकनिष्ठगमहामुनिधर्मचक्रा रागाशनिस्त्रिशरणः खसमो दशार्हः ।
तापी गुणाकरमहासुखवज्रिणश्च मैत्रीबलासमजितारिसमन्तभद्राः ॥ ८ ॥
महाबोधिर्धर्मधातुः श्वेतकेतुर्जिनः खजित् । त्रिमूर्तिर्दशभूमीशः पञ्चज्ञानो बहुक्षमः ॥ ९ ॥
सम्बुद्धः करुणाकूर्चः सर्वदर्शी महाबलः । विश्वबोधो धर्मकायः संगुप्तोऽर्हन्मुनिश्चितः ॥१०॥
व्यामाभो द्वादशाख्यश्च वीतरागः सुभाषितः । सर्वार्थसिद्धस्तु महाश्रमणः कलिशासनः ॥११॥
गोपेशश्चाथाऽस्य यशोधरेयो राहुलः सुतः । देवदत्तोऽनुजोऽथ स्युः श्रावकाः शिष्यसंज्ञिनः ॥
प्रत्येकबुद्धाः खड्गाः स्युः सुदान्ताश्चैकचारिणः ।स्वयम्भुवोऽथ मारीची त्रिमुखा वज्रकालिका ॥

हैमे २ पूजिताः ३ चिरायुषः ४ शोभाः ५ निलिम्पाः ६ द्युषदः ७ स्वर्गिणः ८ नभःसदः ९ इति नव देवानाम् ॥ अत्र सर्वे पुँल्लिङ्गाः । व्यक्तिबाहुल्याद्बहुवचनप्रयोगः ॥ ५ ॥ ऋनामा १ अदितिः २ देवमाता ३ इति त्रीणि अदित्याः ॥ सर्वाः स्त्रीलिङ्गकाः,॥ पूर्वजाः "पूर्वजाः" १ पितरः २ चन्द्रगोलस्थाः ३ न्यस्तशस्त्राः ४ स्वधाभुजः ५ इति पञ्च पितृदेवानाम् ॥ ६ ॥ कव्यवालाः, "काव्यवालाः" १, आदिशब्देन—"कव्यवालोऽनलः सोमो यमश्चैवार्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥" एते ग्राह्याः ॥ इत्येकं पितृदेवभेदस्य ॥ गणवाचकत्वादत्र बहुवचनप्रयोगः ॥ दैत्याः १ प्रघसाः २ खराः, क्वचित्तु "क्षराः" " क्षराः " इति च पाठौ ३ क्रतुद्विषः ४ इष्टिमुषः, " इष्टिमृषः " ५ इति पञ्च असुराणाम् ॥ दैत्यमाता १ दितिः २ दनुः ३ इति त्रीणि असुरमातुः ॥ ७ ॥ बुद्धः १ अकनिष्ठगः, अकं पापं तस्य निष्ठम् अवसानम् अगमदिति सः २ महामुनिः ३ धर्म्मचक्रः "धर्म्मचक्रः" ४ रागाशनिः, "रागारिः" ५ त्रिशरणः, त्रिषु लोकेषु शरणं रक्षणं यस्य सः ६ खसमः, खेन आकाशेन समाः तुल्याः गुणाः यस्य सः ७ दशार्हः ८ तापी ९ गुणाकरः १० महासुखः ११ वज्री, वज्रं ज्ञानवज्रमस्यास्तीति सः १२ मैत्रीबलः १३ असमः, नास्ति समोऽस्येति सः १४ जितारिः, जिताः पराजिताः अरयः रागादिक्लेशाः येन सः १५ समन्तभद्रः १६ ॥ ८ ॥ महाबोधिः १७ धर्मधातुः १८ श्वेतकेतुः, श्वेतः शुक्लः केतुः ध्वजो यस्य सः १९ जिनः २० खजित् २१ त्रिमूर्तिः, तिस्रो मूर्तयः शारीरिकपारिभोगिकोद्देशिकाः प्रतिमाः यस्य सः २२ दशभूमीशः २३ पञ्चज्ञानः, पञ्च ज्ञानानि यस्य सः २४ बहुक्षमः, बह्वी क्षमा यस्य सः २५ ॥ ९ ॥ सम्बुद्धः २६ करुणाकूर्चः, करुणा एव कूर्चो यस्य सः, " समन्तभद्रः संगुप्तो दयाकूर्चो विनायकः " इति हैमः, अथवा करुणः, करुणा दया अस्यास्तीति सः, कूर्चः, कूर्चं भ्रुवोर्मध्ये स्थितं लोम, "कूर्चमस्त्री भ्रुवोर्मध्यम्" इत्यमरः, "कूर्चमस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे" इति कोषान्तरम् , तदस्यास्तीति सः २७ सर्वदर्शी २८ महाबलः २९ विश्वबोधः ३० धर्मकायः ३१ संगुप्तः ३२ अर्हन् ३३ मुनिश्चितः ३४ ॥ १० ॥ व्यामाभः, तिर्यक् पार्श्वतो विस्तृतयोर्बाह्वोरन्तरालपरिमाणे स्थाने आभा प्रभा यस्य सः, क्वचित्तु "व्योमाभः", व्योम्ना आकाशेन आभाः तुल्याः गुणाः यस्य सः ३५ द्वादशाख्यः, द्वादश आख्या अस्य, द्वादशाख्यः सूर्य इति नाम यस्य स वा ३६ वीतरागः, वीतः अपगतः रागः आलयो यस्मात् सः ३७ सुभाषितः, शोभनानि भाषितानि यस्य सः ३८ इति अष्टात्रिंशन्नामानि बुद्धस्य ॥ सर्वार्थसिद्धः १ महाश्रमणः २ कलिशासनः, कलौ युगे शासनम् अनुशासनं यस्य सः, अथवा कलौ पापे विवादे वा शासनं हितसाधनं यस्य सः, " कुलिशासनः " ३ ॥११॥ गोपेशः, गोपानाम् ईशः स्वामी ४ इति चत्वारि शाक्यमुनेः॥ यशोधरेयः १ राहुलः २ इति द्वे शाक्यमुनिसुतस्य ॥ देवदत्तः १ इत्येकं शाक्यमुनिभ्रातुः ॥ श्रावकाः १ शिष्यसंज्ञिनः २ इति द्वे शिष्याणाम् ॥ १२ ॥ प्रत्येकबुद्धाः १ खड्गाः २ सुदान्ताः ३ एकचारिणः, एकाकिचरणशीलमेषां ते ४ स्वयम्भुवः ५ इति पञ्च प्रत्येकबुद्धानाम् ॥ मारीची १ त्रिमुखा २ वज्र-

विकटा वज्रवाराही गौरी पौत्रिरथा च सा । लोकनाथस्तु लोकेशः सरोजो गुणसागरः१४॥
लोकेश्वरः कृपाद्वैतः सुधावर्षी हलाहलः । सुखावतीश्वरः कन्यारामोऽसिताभ्रशेखरः ॥ १५ ॥
चिन्तामणिः पद्मपाणिर्बहुरूपः खसर्पणः । अनीचदर्शी कारण्डव्यूहः पोतलकप्रियः ॥ १६ ॥
जटाधरो महावीर्यो वक्रसूर्योऽवलोकितः । तारा महाश्रीरोङ्कारा स्वाहाश्रीश्च मनोरमा ॥१७॥
तारिणी च जयाऽनन्ता शिवा लोकेश्वरात्मजा । खदूरवासिनी भद्रा वेश्याली च सरस्वती१८
शङ्खिनी च महातारा वसुधारा धनन्ददा । त्रिलोचना लोचना स्यान्मणिभद्रस्तु जम्भलः१९
पूर्वयक्षो जलेन्द्रोऽथ मञ्जुश्रीर्ज्ञानदर्पणः । मञ्जुभद्रो मञ्जुघोषः कुमारोऽष्टारचक्रवान्॥२०॥
स्थिरचक्रो वज्रधरः प्रज्ञाकायश्च वादिराट् । नीलोत्पली महाराजो नीलः शार्दूलवाहनः २१॥
धियांपतिः पूर्वजिनः खड्गी दण्डी विभूषणः । बालव्रतः पञ्चवीरः सिंहकेलिः शिखाधरः॥२२॥
वागीश्वरोऽथ हेवज्रो हेरुकश्चक्रसंवरः । देवो वज्रकपाली च निशुम्भः शशिशेखरः ॥ २३ ॥
वज्रकीटोऽथ मैत्रेयो युवराज्ञोऽजितश्च सः । चीवरी श्रमणो भिक्षुर्बल्यश्चैत्रोऽथ चेलुकः ॥२४॥
श्रामणेरः प्रव्रजितो महापासकगोमिनौ । अथ हंसरथो ब्रह्मा विरिञ्चोऽष्टश्रवाः सनत् ॥ २५ ॥
कञ्जः माणश्च वेदीशवेदगर्भौ पुराणगीः । अब्जजो विश्वरेताश्च कमलः प्रपितामहः ॥ २६ ॥

कालिका, वज्रमिव कालो वर्णोऽस्त्यस्याः सा ३ ॥ १३ ॥ विकटा ४ वज्रवाराही ५ गौरी ६ पौत्रिरथा ७ इति सप्त मायादेव्याः ॥ लोकनाथः १ लोकेशः २ सरोजः ३ गुणसागरः ४ ॥ १४ ॥ लोकेश्वरः ५ कृपाद्वैतः, कृपया अद्वैतं द्विधा भेदगतभावो नास्ति यस्य सः ६ सुधावर्षी ७ हलाहलः ८ सुखावतीश्वरः ९ कन्यारामः १० असिताभ्रशेखरः, असितः कृष्णवर्णः अभ्रः मेघ इव शेखरः शिखा यस्य सः ११ ॥ १५ ॥ चिन्तामणिः १२ पद्मपाणिः, पद्मं पाणौ यस्य सः १३ बहुरूपः १४ खसर्पणः १५ अनीचदर्शी १६ कारण्डव्यूहः १७ पोतलकप्रियः १८ ॥ १६ ॥ जटाधरः १९ महावीर्यः २० वक्रसूर्यः, "वज्रसूर्यः" २१ अवलोकितः २२ इति द्वाविंशतिर्बुद्धविशेषस्य ॥ तारा १ महाश्रीः २ ओङ्कारा ३ स्वाहाश्रीः ४ मनोरमा ५ ॥ १७ ॥ तारिणी ६ जया ७ अनन्ता ८ शिवा ९ लोकेश्वरा १० आत्मजा ११ खदूरवासिनी १२ भद्रा १३ वेश्याली, "वेश्या" १४ सरस्वती, "नीलसरस्वती" १५ ॥ १८ ॥ शङ्खिनी १६ महातारा १७ वसुधारा १८ धनन्ददा १९ त्रिलोचना, त्रीणि लोचनानि यस्याः सा २० लोचना २१ इत्येकविंशतिरुपदेवताविशेषस्य ॥ मणिभद्रः १ जम्भलः २ ॥ १९ ॥ पूर्वयक्षः ३ जलेन्द्रः ४ इति चत्वारि पूर्वयक्षस्य ॥ मञ्जुश्रीः १ ज्ञानदर्पणः, ज्ञानमेव दर्पणं यस्य सः २ मञ्जुभद्रः, "मञ्जुवक्त्रः" ३ मञ्जुघोषः ४ कुमारः ५ अष्टारचक्रवान् ६ ॥ २० ॥ स्थिरचक्रः ७ वज्रधरः ८ प्रज्ञाकायः ९ वादिराट् १० नीलोत्पली ११ महाराजः १२ नीलः १३ क्वचित् "महोराजनीलः" इति, शार्दूलवाहनः, शार्दूलो व्याघ्रविशेषः वाहनं यानं यस्य सः १४ ॥ २१ ॥ धियांपतिः १५ पूर्वजिनः १६ खड्गी १७ दण्डी १८ विभूषणः १९ बालव्रतः २० पञ्चवीरः २१ सिंहकेलिः, सिंहस्येव केलिः क्रीडा यस्य सः २२ शिखाधरः, शिखां चूडां धरतीति सः २३ ॥ २२ ॥ वागीश्वरः, वाचाम् ईश्वरः प्रधानः २४ इति चतुर्विंशतिः "पूर्वजिनः" इति ख्यातस्य उपास्यदेवभेदस्य ॥ हेवज्रः, "हेरम्बः" १ हेरुकः २ चक्रसंवरः ३ देवः ४ वज्रकपाली ५ निशुम्भः, "निशुम्भी" ६ शशिशेखरः ७ ॥ २३ ॥ वज्रकीटः ८ इत्यष्टौ वज्रकीटस्य ॥ मैत्रेयः १ युवराज्ञः २ अजितः ३ इति त्रीणि भाविबुद्धस्य ॥ चीवरी, चीवरमस्याऽस्तीति १ श्रमणः २ भिक्षुः ३ बल्यः ४ क्वचित् "बन्ध्यः" इति, ४ चैत्रः ५ इति पञ्च बौद्धभिक्षोः ॥ चेलुकः १ ॥ २४ ॥ श्रामणेरः २ प्रव्रजितः ३ महापासकः ४ गोमी, क्वचित् "मेलिकः" "गोमिकः" इति पाठौ ५ इति पञ्च भिक्षुशिष्यस्य श्रमणोद्देशस्य ॥ हंसरथः १ ब्रह्मा २ विरिञ्चः ३ अष्टश्रवाः ४ सनत् ५॥ २५ ॥ कञ्जः, कमित्यव्ययं तस्मिन् के पद्मे जातः ६ प्राणः ७ वेदीशः वेदीनाम् ईशः स्वामी ८ वेदगर्भः ९

नाभिजन्मा शतधृतिर्ब्राह्मी तु ब्रह्मकन्यका । वाग्देवी शारदा शुक्ला महाश्वेता सरस्वती २७॥
अथ हरिशतबिन्दुश्रीकरश्रीवराहाजितपरपुरुषश्रीगर्भषड्बिन्द्वनन्ताः ।
नरकजिदृतधामा केशवो जन्मकीलः क्रतुपुरुषनृसिंहश्रन्थजह्नूच्चदेवाः ॥ २८ ॥
कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणपुनर्वसुविश्वरूपाः ।
अः श्रीनिवासधरणीधरवामनैकशृङ्गाश्च वृष्णिवृषशत्रुदशावताराः ॥ २९ ॥
सोमगर्भादिदेवादिवराहस्वर्णबिन्दवः । गदाग्रजो मुञ्जकेशी सदायोगी सनातनः ॥ ३० ॥
रन्तिदेवशिवकीर्तनौ त्रिपात्सोमसिन्धुरपि राहुमूर्धच्छित् ।
कालनेमियवनारिपाण्डवाभीलसिन्धुवृषकृष्णकेशिनः॥ ३१ ॥
हेमशङ्खः शतावर्त्ती मनुसात्वतवारिशाः । वर्द्धमानः सतानन्दो जगन्नाथः सुयामुनः ॥३२॥
पूतनाधेनुकारिष्टके=शिचाणूरसूदनः । भूकश्यपस्त्वस्य पिता दुन्दुक्षित्यदितिः प्रसूः ॥ ३३ ॥
स्यन्दनस्तु शतानन्दः सारथिश्चास्य दारुकः । तुरङ्गाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ ३४॥

पुराणगीः, "पुराणगः" १० अब्जजः, अब्जे पद्मे जायत इति ११ विश्वरेताः, विश्वं रेतो जन्यं यस्य सः १२ कमलः १३ प्रपितामहः १४ ॥२६॥ नाभिजन्मा, नाभौ विष्णुनाभौ जायत इति १५ शतधृतिः १६ इति षोडश ब्रह्मणः ॥ ब्राह्मी १ ब्रह्मकन्यका २ वाग्देवी ३ शारदा ४ शुक्ला ५ महाश्वेता ६ सरस्वती ७ इति सप्त सरस्वत्याः ॥ २७ ॥ हरिः १ शतबिन्दुः, शतानि बिन्दवो यस्य सः २ श्रीकरः ३ श्रीवराहः ४ अजितः ५ परपुरुषः, पुरुषेषु परः उत्तमः, अथवा परः श्रेष्ठश्चाऽसौ पुरुषः ६ श्रीगर्भः, श्रीर्गर्भेऽस्य सः ७ षड्बिन्दुः, षट् बिन्दवो यस्य सः ८ अनन्तः ९ नरकजित्, नरकं नरकासुरं जितवान् १० ऋतधामा, ऋतं सत्यं धाम यस्य सः ११ केशवः १२ जन्मकीलः १३ क्रतुपुरुषः, "ऋतुपुरुषः" १४ नृसिंहः, ना चाऽसौ सिंहश्च, अथवा ना सिंह इव शौर्यादिमत्त्वात् १५ श्रन्थजह्नुः१६उच्चदेवः१७ ॥ २८ ॥ कोकः १८ पुराणपुरुषः, पुराणैरुपस्तुत्यः पुरुषः १९ नलिनेशयः, नलिने पद्मे शेते सः २० वासुः २१ नरायणः, "नारायणः" २२ पुनर्वसुः २३ विश्वरूपः २४ अः, "अः स्यादभावे स्वल्पार्थे विष्णावेष त्वनव्ययम्" इति विश्वः २५ श्रीनिवासः २६ धरणीधरः २७ वामनः २८ एकशृङ्गः २९ वृष्णिः ३० वृषशत्रुः, वृषस्य कामस्य शत्रुः ३१ दशावतारः ३२ ॥ २९ ॥ सोमगर्भः सोमस्य तदात्मकामृतरूपमोक्षस्य गर्भः स्थानं यस्य सः ३३ आदिदेवः, आदौ दीव्यति स्वयं राजते सः ३४ आदिवराहः, आद्यो वराहः तस्यादिवराहरूपत्वात् ३५ स्वर्णबिन्दुः, स्वर्णवर्णाः बिन्दवो यस्य सः ३६ गदाग्रजः ३७ मुञ्जकेशी ३८ सदायोगी ३९ सनातनः ४० ॥ ३० ॥ रन्तिदेवः ४१ शिवकीर्तनः ४२ त्रिपाद्, त्रयः पादाः यस्य सः ४३ सोमसिन्धुः ४४ राहुमूर्धच्छित्, राहोः सिंहिकासुतस्य मूर्धानं छिनत्ति सः, क्वचित् "राहुमूर्धभिद्" इति पाठः ४५ कालनेमिः ४६ यवनारिः ४७ पाण्डवः ४८ आभीलः ४९ सिन्धुवृषः ५० कृष्णः ५१ केशी ५२ ॥ ३१ ॥ हेमशङ्खः ५३ शतावर्ती ५४ मनुः ५५ "शतावर्त्यासन्दः" इति क्वचित् पाठः, सात्वतः ५६ वारिशः, वारिणि समुद्रे शेते ५७ वर्धमानः ५८ सतानन्दः ५९ जगन्नाथः ६० सुयामुनः ६१ ॥ ३२॥ पूतनासूदनः ६२ धेनुकसूदनः ६३ अरिष्टसूदनः ६४ केशिसूदनः, "केशिनिसूदनः" अन्यत्र ६५ चाणूरसूदनः, "चानूरसूदनः" ६६ "द्वन्द्वात्परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायात् परास्थितः सूदनशब्दः पूतनादिभिः शब्दैः पृथक् पृथक् सम्बन्धनीयः । न तु केवलैः पूतनादिशब्दैर्विष्णुनामावगम्यते ॥ इति षट्षष्टिर्विष्णोः ॥ अस्येति प्रत्येकं सम्बध्यते ॥ भूकश्यपः १ इत्येकं विष्णोः पितुः ॥ दुन्दुक्षिती १ अदितिः २ इति द्वे विष्णोर्मातुः ॥ ३३ ॥ शतानन्दः, शतमानन्दयति सः १ इत्येकं विष्णो रथस्य ॥ दारुकः १ इत्येकं विष्णोः सारथेः ॥ शैब्यः १ सुग्रीवः २ मेघपुष्पः ३ बलाहकः ४ इति चत्वारि विष्णोस्तुरङ्गाणाम् ॥ ३४ ॥

ध्वजो भुजङ्गहा मन्त्री पवनव्याधिरुद्धवः। शैनेयस्तु शिनेर्नप्ता युयुधानश्च सात्यकिः ॥३५॥
बलभद्रस्तु हालः स्यात्सौनन्दी हलतालभृत्। संवर्तकी गुप्तचरो रुक्मिदार्य्येककुण्डलः॥३६॥
मधुप्रियोऽथ प्रद्युम्नो जराभीरुः शमातकः। प्रसूनाशनिपञ्चेषू कञ्जनो मधुसारथिः। रागरज्जुः कलाकेलिमधुदीपरवीषवः ॥ ३७ ॥
इः केतुर्मकराङ्कः सङ्कल्पभवोऽङ्गजश्च रूपास्त्रः। रणरणको रतिरमणः संसारगुरुर्मनोजन्मा॥
कार्ष्णिश्चास्य प्रिया रागलता केलिकला रतिः।सेः केलती चास्य बाणा मोहनोन्मादनौ तथा॥
सन्तापनः शोषणश्च निश्चेष्टीकरणोऽपि च। सुतोऽनिरुद्धः स्याद्विश्वकेतुः प्रीतितृषौ सुते॥४०॥
श्री च लक्ष्मी चला सा मा रमा जलधिजेन्दिरा।मणिः स्यमन्तको हस्ते विष्णोरुरसि कौस्तुभः
तार्क्ष्यः शिलौकः कामायुररुणो वरजश्चिरात्। पक्षिसिंह उलूतीशो वज्रतुण्डः सुधाहरः।
स्वर्णपक्षः सुमुखसूः शाल्मली भुजगाशनः॥४२॥

शम्भुर्भगाली कपिशाञ्जनश्च हीरः कटप्रूर्भरुरेरिहाणौ ।
पुरारिपञ्चाननभैरवाट्टहासप्रहासाश्च खकुन्तलश्च ॥ ४३ ॥

कण्ठेकालजयन्तगुह्यगुरवो जोतिङ्गगोपालकौ पिङ्गाक्षः कटमर्दरैवतजटाटङ्काव्ययाः कूटकृत्।
चन्द्रापीडमहानटौ च शमिरो हः शैलधन्वा जटाचीरोऽथर्वणनन्दिवर्धनगुडाकेशाग्रकालञ्जराः॥

भुजङ्गहा १ इत्येकं विष्णोर्ध्वजस्य ॥ पवनव्याधिः, पवनेन जनितो व्याधिर्यस्य सः १ उद्धवः २ इति द्वे विष्णोर्मन्त्रिणः ॥ शैनेयः १ शिनेर्नप्ता २ युयुधानः ३ सात्यकिः, सत्यकस्य वृष्णिवंश्यनृपस्यापत्यम् ४ इति चत्वारि सात्यकेः ॥ ३५ ॥ बलभद्रः १ हालः २ सौनन्दी ३ हलभृत् ४ तालभृत् ५ संवर्तकी ६ गुप्तचरः ७ रुक्मिदारी ८ एककुण्डलः ९ ॥ ३६ ॥ मधुप्रियः १० इति दश बलभद्रस्य ॥ प्रद्युम्नः १ जराभीरुः २ शमातकः ३ प्रसूनाशनिः, "प्रसूनासमः" ४ पञ्चेषुः ५ कञ्जनः ६ मधुसारथिः ७ रागरज्जुः ८ कलाकेलिः ९ मधुदीपः १० रवीषुः ११ ॥ ३७ ॥ इः १२ केतुः, "कन्तुः" १३ मकरांकः १४ सङ्कल्पभवः १५ अङ्गजः १६ रूपास्त्रः १७ रणरणकः १८ रतिरमणः, रत्याः रमणः पतिः १९ संसारगुरुः, संसारस्य गुरुर्महान् २० मनोजन्मा, मनसि जायते सः २१ कार्ष्णिः २२ इति द्वाविंशतिः अनङ्गस्य ॥ ३८ ॥ रागलता १ केलिकला २ रतिः ३ "केलिकलावती" इति क्वचित्। सेः ४ केलती ५ इति पञ्च कामभार्यायाः ॥ मोहनः १ उन्मादनः २ ॥ ३९ ॥ सन्तापनः ३ शोषणः ४ निश्चेष्टीकरणः, "निश्चेष्टाकरणः" ५ इति पञ्च कामबाणानाम् ॥ अनिरुद्धः १ विश्वकेतुः २ इति द्वे अनङ्गसुतस्य ॥ प्रीतिः १ तृट् २ इति द्वे अनङ्गसुतायाः ॥ ४० ॥ श्री १ लक्ष्मी २ ई ३ चला ४ सा ५ मा ६ रमा ७ जलधिजा ८ इन्दिरा ९ इति नव लक्ष्म्याः ॥ स्यमन्तकः १ इत्येकं विष्णोर्हस्तमणेः ॥ कौस्तुभः १ इत्येकं विष्णोः उरोमणेः ॥ ४१ ॥ तार्क्ष्यः १ शिलौकः २ कामायुः ३ अरुणः ४ वरजः ५ चिरात् ६ पक्षिसिंहः ७ उलूतीशः, "उन्नतीशः" ८ वज्रतुण्डः, वज्रमिव तुण्डं मुखं यस्य सः ९ सुधाहरः १० स्वर्णपक्षः, स्वर्णमिव पीतौ पक्षौ यस्य सः ११ सुमुखसूः १२ शाल्मली १३ भुजगाशनः, भुजगान् सर्पान् अश्नाति १४ इति चतुर्दश गरुडस्य ॥ ४२ ॥ शम्भुः १ भगाली २ कपिशाञ्जनः ३ हीरः ४ कटप्रूः ५ भरुः ६ रेरिहाणः ७ पुरारिः ८ पञ्चाननः ९ भैरवः १० अट्टहासः ११ प्रहासः १२ खकुन्तलः १३ ॥ ४३ ॥ कण्ठेकालः १४ जयन्तः १५ गुह्यः १६ गुरुः १७ जोतिङ्गः, "जोटिङ्गः" १८ गोपालकः १९ पिङ्गाक्षः २० कटमर्दः २१ रैवतः २२ जटाटङ्कः २३ अव्ययः, नास्ति व्ययो विनाशो यस्य सः २४ कूटकृत् २५ चन्द्रापीडः २६ महानटः २७ शमिरः, "शशिधरः" २८ हः २९ शैलधन्वा ३० जटाचीरः, "जटाटीनः" ३१ अथर्वणः ३२ नन्दिवर्द्धनः ३३ गुडाकेशः ३४ अग्रः ३५ कालञ्जरः ३६ ॥ ४४ ॥

१—श्रीलक्ष्मीशब्दौ "कृदिकारादक्तिनः" इति ङीषन्तौ ॥

मिहिराणो जगद्योनिष्टङ्कटीकोऽञ्जवाहनः । कृतङ्करो वरो बुद्धः सुप्रतापोऽकृतश्वलः ४५॥
उः स्थाणुः शिपिविष्टश्च मः कीलो धर्मवाहनः । विरूपविषमत्र्यक्षाः सन्ध्यानटी वृषाञ्जनः ४६
एकपाद्भौतिको भद्रोर्ध्वरेताः पांशुचन्दनः । अस्थिमाली शिवश्चाऽस्य खट्वाङ्गस्तु सुखंवुणः४७
अजगवोऽजगावश्च वृषो भृङ्गी रिटिस्त्वसौ । भृङ्गरिटः शलो भृङ्गी नाडीदेहोऽस्थिविग्रहः ४८
महाकालो महाभीमो महाकायो वृषाणकः । द्वाःस्थस्तु नन्दी शालङ्कायनस्ताण्डवतालिकः४९
स्यान्नन्दिकेश्वरोऽथार्या हिण्डी शिखरवासिनी । शक्तिः सिंहरथा गोला सिनीवाली दृषद्वती ५०
सौः कृष्णपिङ्गला लम्बा शैलेयी गणनायिका । वारालिकैकानंशा च शिवदूती यमस्वसा ५१
कोटवी बाभ्रवी कैटभी कैटभा यादवी कर्बुरी चेश्वरी चेश्वरा ।
भ्रामरी दक्षकन्या च बर्हिध्वजी नन्दपुत्री च मारी च कालञ्जरी ॥ ५२ ॥
गौतमी तामसी षष्ठी जयन्ती शूलधृक् सती । सिंहस्तस्या मनस्तालः सख्यौ च विजयाजये ५३
वज्रशुण्डः करिमुखः पृष्णिशृङ्गो गणाग्रणीः । त्रिधातुरेकदन्तश्च द्विदेहो मूषिकाञ्चनः ॥ ५४ ॥
विघ्नहारी कुमारस्तु स्वामी द्वादशलोचनः । बालचर्यः सिद्धसेनः कुकवाकुध्वजश्च सः ॥५५॥
देवराजस्तु लः कौशिकोऽसन्महाबाहुदन्तेयदल्मीवराणोऽद्रिभित् ।
वज्रपाणिर्महेन्द्रः सुरग्रामणीर्यामनेमिर्वृषा नाकनाथो हरिः ॥ ५६ ॥

मिहिराणः ३७ जगद्योनिः ३८ टङ्कटीकः, "कङ्कटीकः" ३९ अञ्जवाहनः ४० कृतङ्करः, "कृष्करः" ४१ वरः ४२ बुद्धः ४३ क्वचित् "वरबुद्धः" "वरवृद्धः" इति च पाठौ, सुप्रतापः, "सुप्रसादः" ४४ अकृतश्वलः, "अद्भुतस्वनः" ४५ ॥ ४५ ॥ उः ४६ स्थाणुः ४७ शिपिविष्टः ४८ मः ४९ कीलः ५० धर्मवाहनः ५१ विरूपः ५२ विषमः ५३ त्र्यक्षः ५४ सन्ध्यानटी, "सन्ध्यानाटी" ५५ वृषाञ्जनः ५६ ॥ ४६ ॥ एकपाद्, एकं पदं पदगतियोग्यकालो यस्य सः ५७ भौतिकः ५८ भद्रः ५९ ऊर्ध्वरेताः ६० पांशुचन्दनः ६१ अस्थिमाली ६२ शिवः ६३ इति त्रिषष्टिः महादेवस्य ॥ खट्वांगः १ सुखंवुणः, क्वचित् "सुखंखणः" इति पाठः २ इति द्वे शिवखट्वाङ्गस्य ॥ ४७ ॥ अजगवः १ अजगावः २ क्वचित् "अजकवः" "अजकावः" इति पाठः ॥ इति द्वे शिवधनुषः ॥ वृषः १ भृङ्गी २ इति द्वे शिववृषभस्य ॥ रिटिः १ भृङ्गरिटः, "भृङ्गरिटिः" २ शलः ३ भृङ्गी, "भृङ्गिः" ४ नाडीदेहः ५ अस्थिविग्रहः ६ इति षट् शिवपार्श्वानुचरस्य भृङ्गिणः ॥ ४८ ॥ महाकालः १ महाभीमः २ महाकायः ३ वृषाणकः ४ इति चत्वारि नन्दिनः ॥ नन्दी १ शालङ्कायनः २ ताण्डवतालिकः ३ नन्दिकेश्वरः ४ इति चत्वारि शिवद्वारस्थस्य ॥ ४९ ॥ आर्या १ हिण्डी २ शिखरवासिनी ३ शक्तिः ४ सिंहरथा ५ गोला ६ सिनीवाली, सिनीं श्वेतां चन्द्रकलां वलति धारयति ७ दृषद्वती ८ ॥ ५० ॥ सौः ९ "सोः" कृष्णपिंगला १० लम्बा ११ शैलेयी १२ गणनायिका १३ वारालिका १४ एकानंशा १५ शिवदूती १६ यमस्वसा १७ ॥ ५१ ॥ कोटवी १८ बाभ्रवी १९ कैटभी २० कैटभा २१ यादवी २२ कर्बुरी २३ ईश्वरी २४ ईश्वरा २५ भ्रामरी २६ दक्षकन्या २७ बर्हिध्वजी २८ नन्दपुत्री २९ मारी ३० कालञ्जरी ३१ ॥ ५२ ॥ गौतमी ३२ तामसी ३३ षष्ठी ३४ जयन्ती ३५ शूलधृक् ३६ सती ३७ इति सप्तत्रिंशत् पार्वत्याः ॥ मनस्तालः १ इत्येकं पार्वत्याः सिंहस्य ॥ विजया १ जया २ इति द्वे पार्वत्याः सख्योः ॥ ५३ ॥ वज्रशुण्डः १ करिमुखः २ पृष्णिशृङ्गः ३ गणाग्रणीः ४ त्रिधातुः ५ एकदन्तः ॥ एको दन्तोऽस्य ६ द्विदेहः ७ मूषिकाञ्चनः ८ ॥ ५४ ॥ विघ्नहारी ९ इति नव गणेशस्य ॥ कुमारः १ स्वामी २ द्वादशलोचनः ३ बालचर्यः, बालानां चर्या यस्य सः ४ सिद्धसेनः ५ कुकवाकुध्वजः ६ इति षट् कार्त्तिकेयस्य ॥ ५५ ॥ देवराजः १ लः २ कौशिकः ३ असन्, "असत्" इत्यपि पाठः ४ महाबाहुः ५ दन्तेयः ६ दल्मी, "दाल्मी" ७ वराणः ८ अद्रिभित्, अद्रिं पर्वतं भिनत्ति ९

प्राचीनबर्हिः खदिरः कपिलाश्वो वरक्रतुः । प्राचीपतिस्तपस्तङ्कः पुलोमारिश्च माहिरः ॥ ५७॥
पृतनाषाट् प्रिया त्वस्य चारुधारा शतावरी । शची सुता देवसेना मातलिस्तु हयङ्कषः ५८॥
उच्चैःश्रवाः श्वेतहयो वृषणाश्वोऽमरावती । वृषभासा सुरपुरी वनमैन्द्रं वृषण्वसु ॥ ५९ ॥
नन्दनं कन्दसारं स्यान्मिश्रकावनमित्यपि । हस्तिमल्लश्चतुर्दन्तो भद्ररेणुर्मदांवरः ॥ ६० ॥
श्वेतद्विपः सुदामाऽथ वज्रोऽस्त्री गिरिकण्टकः । वज्राशनिर्भिदुर्भिद्रो जम्भारिस्त्रिदशायुधम् ६१
शतधारं शतारं चाभ्रोत्थं भिदिरमम्बुजम् । मार्जारकर्णी चामुण्डा कर्णमोटिश्च चर्चिका ६२॥
विद्याधरः कामरूपी खेचरः स्थिरयौवनः । स्पर्शानन्दा रतिमदाऽप्सरसः सुमदात्मजा ॥ ६३ ॥
देवोद्यानानि वैभ्राजं मिश्रकं सिध्रकावणम् । चैत्ररथं च नासिक्यौ युजौ दस्रौ गदागदौ ६४॥

शुष्मं घासि घसवोऽश्वतिर्जुहूर्वाण ईषिरतुषग्रहाशिराः ।
छागवाहनपृदाकुबर्हिषौ स्वर्णसप्तघृतमन्त्रदीधितिः ॥ ६५ ॥
पर्परीकहवनात्मनिपीथाः सप्तजिह्वसमिधावसितार्चिः ।
नाचिकेतभुजिभारतविश्वप्साः शुचिः पचिसमन्तभुजौ च ॥ ६६ ॥

वडवाग्निस्तु सलिलेन्धनः स्याद्वडवामुखम् । काकध्वजो वाणिजश्च स्कन्धाग्निः स्थूलकाष्ठधृक् ६७

वज्रपाणिः १० महेन्द्रः ११ सुरग्रामणीः १२ यामनेमिः १३ वृत्रा १४ नाकनाथः १५ हरिः १६ ॥ ५६ ॥ प्राचीनवर्हिः १७ खदिरः १८ कपिलाश्वः १९ वरक्रतुः २० प्राचीपतिः २१ तपः २२ तङ्कः २३ पुलोमारिः, "पुलोमशत्रुः, पुलोमरिपुः पुलोमवैरी" प्रभृतयोऽप्यत्र २४ माहिरः २५ ॥ ५७ ॥ पृतनाषाड्, "पृतनासाट्" अप्यत्र, पृतनां सेनां साहयते २६ इति षड्विंशतिः इन्द्रस्य ॥ चारुधारा१ शतावरी २ शची, "शचिः" ३ इति त्रीणि इन्द्रपत्न्याः ॥ देवसेना १ इत्येकम् इन्द्रसुतायाः ॥ मातलिः १ इत्येकं हयङ्कषस्य इन्द्रसारथेः ॥ ५८ ॥ उच्चैःश्रवाः, उच्चैरुन्नतं श्रवोऽस्य १ श्वेतहयः २ वृषणाश्वः ३ इति त्रीणि इन्द्राश्वस्य ॥ अमरावती १ वृषभासा २ सुरपुरी ३ इति त्रीणि इन्द्रपुरस्य ॥ वृषण्वसु १ ॥ ५९ ॥ नन्दनम् २ कन्दसारम् ३ मिश्रकावनम् ४ इति चत्वारि इन्द्रवनस्य ॥ हस्तिमल्लः१ चतुर्दन्तः २ भद्ररेणुः ३ मदांवरः ४ ॥ ६० ॥ श्वेतद्विपः ५ सुदामा ६ इति षट् ऐरावतस्य ॥ वज्रः १ गिरिकण्टकः २ वज्राशनिः ३ भिदुः ४ भिद्रः ५ जम्भारिः, "जम्भाग्नी" ६ त्रिदशायुधम् ७ ॥ ६१ ॥ शतधारम् ८ शतारम् ९ अभ्रोत्थम् १० भिदिरम् ११ अम्बुजम् १२ इति द्वादश वज्रायुधस्य ॥ मार्जारकर्णी १ चामुण्डा २ कर्णमोटिः, क्वचित् "कर्ममोटिः" ३ चर्चिका ४ इति चत्वारि चामुण्डायाः ॥ ६२ ॥ विद्याधरः १ कामरूपी २ खेचरः ३ स्थिरयौवनः ४ इति चत्वारि विद्याधरस्य ॥ स्पर्शानन्दा १ रतिमदा २ अप्सरसः ३ सुमदात्मजा, "सुदमात्मजा" ४ इति चत्वारि अप्सरसः ॥ ६३ ॥ वैभ्राजम् १ मिश्रकम् २ सिध्रकावणम् ३ चैत्ररथम् ४ इति चत्वारि दिव्योद्यानानाम् ॥ नासिक्यौ १ युजौ २ दस्रौ ३ गदागदौ ४ इति चत्वारि अश्विनीकुमारयोः स्वर्वैद्ययोः ॥ ६४ ॥ शुष्म, "शुष्मा" अप्यत्र १ घासि २ घसवः, "घासिसधयः" ३ अश्वतिः, "अञ्जतिः" अप्यत्र ४ जुहूः५ वाणः ६ ईषिः ७ अतुषः ८ ग्रहः ९ अशिरः १० छागवाहनः ११ पृदाकुवर्हिषः, "सुदाकुवर्हिषः"१२ स्वर्णदीधितिः १३ सप्तदीधितिः १४ घृतदीधितिः १५ मन्त्रदीधितिः १६ ॥ ६५ ॥ पर्परीकः १७ हवनम् १८ आत्मा १९ निपीथः २० सप्तजिह्वः २१ समिधः २२ असितार्चिः, "असितकार्चिः" अप्यत्र २३ नाचिकेतभुजिः, "नाचिकेताः" अप्यत्र २४ भारतः २५ विश्वप्सः, विश्वं प्साति भयति सः २६ शुचिः २७ पचिः २८ समन्तभुक्, समन्तात् भुंक्ते सः २९ इति एकोनत्रिंशत् अग्नेः ॥ ६६ ॥ वडवाग्निः, वडवायाः शिवसङ्घाश्वाया मुखस्थोऽग्निः, "वडवानलः" इत्यादयोऽप्यत्र १ सलिलेन्धनः २ वडवामुखम् ३ काकध्वजः ४

छागणस्तु करीषाग्निस्तृणाग्निः स्यात्तरत्समः। तुषानलः कुकूलः स्यान्मुर्मुरोऽथाग्निकुक्कुटः६८
सङ्किलो दहनोल्का स्यादङ्गारः कोकिलाज्झुलौ। धूमोऽम्भसूर्मरुद्वाहखतमालशिखिध्वजाः ६९
अग्निवाहस्तरीः स्वाहा त्वग्नायी दहनप्रिया। जीवितेशो यमः शीर्णपादश्च महिषध्वजः॥७०॥
मन्दोऽस्य कान्ता धूमोर्णा चित्रगुप्तस्तु लेखकः। भृत्यौ चण्डमहाचण्डौ कालीमी तु विचारभूः
पञ्जिका त्वग्रसन्धानी नृचक्षास्तु खसात्मजः। कीलालपः पलाशी च क्षपाटो नरविश्वणः७२॥
सन्ध्याबलो रात्रिमटो हनूषः शमनीषदः। पलाशो विखुरः शङ्कुः कापीशेयस्तु पिण्डकः७३
पिशाचो मेघनादस्तु वरुणो वः परञ्जयः। दैत्यदेवश्च वातिस्तु नभःप्राणो जगद्बलः ॥ ७४ ॥
भोगिकान्तः कम्पलक्ष्मा यश्च धारावलिश्च वाः। खश्वासः क्षिपणुर्धूलिध्वजः सरयुरङ्कतिः ७५
वातुलो वातगुल्मः स्याच्चरवायुर्निदाघजः। झञ्झानिलः प्रावृषिजो वासन्तो मलयानिलः ७६

श्रीदधनकेलिमयुराट्श्वेतोदररत्नगर्भनिधिनाथाः।
कुतनुकुहेच्छावसवः पिशाचकी सत्यसङ्गरस्त्रिशिराः ॥ ७७ ॥

अस्त्री पद्मो महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वाः स्युर्निधयो नव ॥७८॥
सुतोऽस्य मायुराजः स्यात्तथा वर्णकविर्निधौ। आसङ्गिनी च वाताली स्याद्वात्या वातमण्डली

इति स्वर्गवर्गः ॥ १ ॥

---

वाणिजः ५ स्कन्धाग्निः ६ स्थूलकाष्ठधृक्, "तृणकाष्ठधृक्" ७ इति सप्त वडवानलस्य ॥ ६७ ॥ छागणः १ करीषाग्निः २ इति द्वे करीषाग्नेः ॥ तृणाग्निः १ तरत्समः, "वत्सलः" अप्यत्र २ इति द्वे तृणाग्नेः ॥ तुषानलः १ कुकूलः २ मुर्मुरः ३ इति त्रीणि तुषानलस्य ॥ अग्निकुक्कुटः, अग्नेः कुक्कुट इव रक्तवर्णस्फुलिङ्गत्वात् ज्वलदग्निव्याप्ततृणपुञ्जः १ ॥ ६८ ॥ सङ्किलः २ दहनोल्का, दहनस्य उल्का पतत्तेजःपुञ्जः ३ इति त्रीणि अग्निकणायाः ॥ अङ्गारः १ कोकिलः २ अज्झुलः ३ इति त्रीणि अङ्गारस्य ॥ धूमः १ अम्भसूः २ मरुद्वाहः ३ खतमालः ४ शिखिध्वजः ५ ॥ ६९ ॥ अग्निवाहः ६ तरीः, "स्तरी" इति सप्त धूमस्य ॥ स्वाहा १ अग्नायी २ दहनप्रिया ३ इति त्रीणि अग्नियोषितः ॥ जीवेतेशः १ यमः २ शीर्णपादः ३ महिषध्वजः ४ ॥ ७० ॥ मन्दः ५ इति पञ्च यमस्य ॥ धूमोर्णा १ इत्येकं यमपत्न्याः ॥ चित्रगुप्तः १ इत्येकं यमलेखकस्य ॥ चण्डः १ महाचण्डः २ इति द्वे यमभृत्ययोः ॥ कालीमी, "कालीची" इति क्वचित्पाठः १ इत्येकं विचारभुवः ॥ ७१ ॥ पञ्जिका १ अग्रसन्धानी २ इति द्वे यमपञ्जिकायाः ॥ नृचक्षाः, नॄन् चष्टे पश्यति भक्ष्यत्वेन १ खसात्मजः २ कीलालपः ३ पलाशी ४ क्षपाटः ५ नरविश्वणः ६ ॥ ७२ ॥ सन्ध्याबलः ७ रात्रिमटः ८ हनूषः ९ शमनीषदः १० पलाशः ११ विखुरः १२ शंकुः १३ इति त्रयोदश यमदूतस्य राक्षसस्य ॥ कापीशेयः १ पिण्डकः, "पिङ्गकः" २ ॥ ७३ ॥ पिशाचः ३ इति त्रीणि पिशाचस्य ॥ मेघनादः, मेघस्येव नादो यस्य सः १ वरुणः २ वः ३ परञ्जयः ४ दैत्यदेवः ५ इति पञ्च वरुणस्य ॥ वातिः १ नभःप्राणः २ जगद्बलः ३ ॥ ७४ ॥ भोगिकान्तः ४ कम्पलक्ष्मा ५ यः ६ धारावलिः, "धारावनिः" ७ वाः ८ खश्वासः ९ क्षिपणुः १० धूलिध्वजः ११ सरयुः १२ अङ्कतिः, "अञ्चतिः" अप्यत्र १३ इति त्रयोदश वायोः ॥ ७५ ॥ वातुलः १ वातगुल्मः २ इति द्वे वातगुल्मस्य ॥ चरवायुः १ इत्येकं निदाघवायोः ॥ झञ्झानिलः १ इत्येकं प्रावृड्वायोः ॥ मलयानिलः १ इत्येकं वसन्तकालभववायोः ॥ ७६ ॥ श्रीदः १ धनकेलिः २ मयुराट्, "मनुराट्" ३ श्वेतोदरः ४ रत्नगर्भः ५ निधिनाथः ६ कुतनुः ७ कुहेच्छः ८ आवसुः ९ पिशाचकी १० सत्यसङ्गरः ११ त्रिशिराः १२ इति द्वादश कुबेरस्य ॥ ७७ ॥ पद्मः १ महापद्मः १ शंखः १ मकरः १ कच्छपः १ मुकुन्दः १ कुन्दः १ नीलः १ खर्वाः, कश्चित्तु "चर्चा" इति पाठान्तरम् १ इति प्रत्येकमेकैकं नवानां महानिधीनाम् ॥ ७८ ॥ मायुराजः १ वर्णकः २ विर्निधः ३ इति त्रीणि कुबेरसूनोः ॥ आसङ्गिनी १ वाताली २ वात्या ३ वातमण्डली ४ इति चत्वारि वातभ्रमस्य ॥ ७९ ॥

इति स्वर्गवर्गः ॥ १ ॥

कुनाभिः स्याद्विहायस्तु खं मरुन्मेघवर्त्म च । अक्षरं चाथ पाथोदः खतमालो गदाम्बरः ॥१॥
मदयित्नुर्वायुदारुर्व्योमधूमो नभोगजः । गडेरः कन्धरो वातरथो वारिमसिः स्त्रियाम् ॥ २ ॥
करका स्याद्घनकफो बीजोदकमिराचरम् । मेघास्थि वर्षणं तु स्याद्गोघृतं च परामृतम् ॥
सौदाम्नी त्वशानिर्विद्युदणुभा वाऽचिरद्युतिः ॥३॥
तिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्रचूडामणिरत्रिनेत्रभूः ।
सुधाङ्गमौ द्वौ मृगपिप्लुपक्षजौ दशाश्वसिप्रग्रहनेमिचन्दिराः ॥ ४ ॥
छायामृगधरो राजा माः परिज्ञो बलक्षगुः । द्विजदाक्षायणीतुङ्गीरोहिणीयज्वनाम्पतिः ॥ ५ ॥
उडुपः पर्वधिः क्लेदो जयन्तस्तपसो हरिः । तारापीडः खचमसो विकसः सिन्धुनन्दनः ॥ ६ ॥
चन्द्रिका चन्द्रशाला स्यान्नीहारः खनिशाजलम् । शीतं तु शीतलं पत्रहिमं तु हिमदुर्दिनम् ॥७॥
कुज्झुटिर्धूममहिषी रतांध्री च कुहेलिका । धूमिका च नभोरेणुरथागस्त्याग्निमारुती ॥ ८ ॥
सत्याग्निर्वारुणिर्विन्ध्यकूटो वातापिसूदनः । दीप्ताग्निरौर्वशेयश्च समुद्रचुलुकोऽस्य तु ॥ ९ ॥

कुनाभिः १ विहायः, "विहायसम्" २ खम् ३ मरुत् ४ मेघवर्त्म, मेघस्य वर्त्म मार्गो यस्मिन् ५ अक्षरम्, नास्ति क्षरो नश्वरं यस्य ६ इति षट् आकाशस्य ॥

इति व्योमवर्गः ॥ २ ॥

पाथोदः१ खतमालः, खे तमाल इव सः २ गदाम्बरः३॥१॥ मदयित्नुः ४ वायुदारुः ५ व्योमधूमः, व्योम्नः धूम इव नीलभावात् ६ नभोगजः, नभसि गज इव ७ गडेरः"गाडवः" ८ कन्धरः, कं जलं धारयति९ वातरथः, वातस्य रथः१०वारिमसिः,वारि जलं मसिरिव नीलतापादकं यस्य११इत्येकादश मेघस्य॥२॥करका,"करकः", स्त्रियां गौरादित्वात् ङीप् "करकी" १ घनकफः, घनस्य मेघस्य कफ इव, "घनककः" २ बीजोदकम् ३ इराचरम्, इरासु चरति ४ मेघास्थि, मेघानामस्थीव संहतकठिनत्वात् ५ इति पञ्च वर्षोपलस्य ॥ वर्षणम् १ गोघृतम् २ परामृतम् ३ इति त्रीणि वृष्टेः ॥ सौदाम्नी, "सौदामनी" "सौदामिनी" १ अशनिः २ विद्युत् ३ अणुभा, अण्वी सूक्ष्मा भा दीप्तिर्यस्याः ४ वा ५ अचिरद्युतिः, अचिरा बहुकालास्थायिनी द्युतिर्यस्याः ६ इति षट् विद्युतः ॥ ३ ॥ तिथिप्रणीः, तिथीन् प्रणयति स्वगत्या निष्पादयति १ दर्शविपत्, "दर्शवियत्" २ निशामणिः ३ त्रिनेत्रचूडामणिः ४ अत्रिनेत्रभूः ५ सुधाङ्गः, सुधेवाप्यायनमङ्गमस्य ६ मः ७ मृगपिप्लुः, मृगः शशः पिप्लुः कृष्णचिह्नं यस्य, "मृगपिप्लुः" ८ पक्षजः ९ दशाश्वः, दश अश्वा रथे यस्य १० सिप्रः ११ ग्रहनेमिः, "ग्रहणेमिः" १२ चन्दिरः १३ ॥ ४ ॥ छायाधरः, "छायाभृद्" इत्यादयोऽप्यत्र १४ मृगधरः, "शशभृद्" इत्यादयोऽप्यत्र १५ राजा १६ माः १७ परिज्ञः १८ बलक्षगुः, बलक्षाः शुक्लवर्णाः गावः रश्मयः यस्य सः १९ द्विजपतिः २० दाक्षायणीपतिः २१ तुङ्गीपतिः २२ रोहिणीपतिः २३ यज्वनाम्पतिः २४ ॥ ५ ॥ उडुपः, "उडूपः", उडूनि नक्षत्राणि पाति २५ पर्वधिः, "पर्वधिः" २६ क्लेदः, "क्लेदुः" २७ जयन्तः २८ तपसः २९ हरिः ३० तारापीडः, ताराऽऽपीडमिव यस्य ३१ खचमसः, खे आकाशे चमसः पात्रविशेष इव ३२ विकसः, "विकुसः" ३३ सिन्धुनन्दनः, सिन्धोः सागरस्य नन्दनः सुतः ३४ इति चतुस्त्रिंशत् चन्द्रस्य ॥ ६ ॥ चन्द्रिका, चन्द्रः स्वाश्रयत्वेनास्या अस्तीति १ चन्द्रशाला, चन्द्रः शालेवाधारो यस्याः २ इति द्वे चन्द्रकिरणस्य ॥ नीहारः १ खनिशाजलम् २ इति द्वे हिमस्य ॥ शीतम् १ शीतलम् २ इति द्वे शीतलस्य ॥ पत्रहिमम् १ हिमदुर्दिनम् २ इति द्वे हिमदुर्दिनस्य ॥ ७ ॥ कुज्झुटिः, "कुज्झुटी" १ धूममहिषी २ रतांध्री, "रतार्थी" ३ कुहेलिका, "कुहेधिका" ४ धूमिका ५ नभोरेणुः६ इति षट् कुहेलिकायाः ॥ अगस्त्याग्निः १ मारुतिः २ ॥ ८ ॥ सत्याग्निः ३ वारुणिः, वरुणस्यापत्यम् ४ विन्ध्यकूटः ५ वातापिसूदनः, वातापिं सूदयति

१—इति व्योमवर्गः ॥ २ ॥

प्रिया कौषीतकी लोपामुद्राख्या च विदर्भजा । प्राक्फाल्गुनेयस्तूतथ्यानुजः पारुष्यगोरथौ॥
दीदिविर्द्वादशकरश्चक्षाः सुरगुरुर्गुरुः । शुक्रो भः शतपर्वेशो मघाभूर्भृगुरास्फुजित् ॥ ११ ॥
षोडशार्चिर्नवार्चिस्तु मङ्गलः खोल्मुकः कुजः । बुधो हेमा राजपुत्र एकदेहः प्रहर्षणः ॥१२॥
स्यात्पञ्चार्चिः श्रविष्ठाजः श्यामाङ्गैकाङ्गरोधनाः। शनैश्चरो नीलवासा मन्दश्छायात्मजः शनिः॥
राहुस्तु ग्रहकल्लोलोऽभ्रपिशाचोऽप्यथाहिकः । केतुर्ज्योतिरथस्तु स्याद् ग्रहाधारो ध्रुवश्च सः ॥
तत्क्षणं सूर्य्यमुक्ता दिग्बुधैरङ्गारिणी स्मृता । आसन्नास्तया धीरैरुच्यते सोपधूपिता ॥ १५ ॥
सुनीतिर्ध्रुवमाता स्यान्माता दक्षस्य मारिषा । छायापथो देवपथः सोमधारा नभःसरित् १६॥
दिनप्रणीस्त्वव्यधिषौ भानेमिरवरव्रतः । गभस्तिहस्तोंऽशुधरः खरांशुर्भा रविर्भगः ॥
वेदोदयः प्रतिदिवा मातुः पितुस्तमोऽपहः ॥ १७ ॥

दिनमणिहरिहेलिब्रध्नभाकोषभाभृदरथिखगपतङ्गेनाद्रयः सप्तसप्तिः ।
मिहिरमहिरपीथाः कालकृत्पद्मपाणिः खमणिररुणशूरावंशुमानंशुमाली ॥ १८ ॥

छाया स्यात्तपती मन्दजननी भूमयी वरी । संज्ञा तु यमकालिन्दीरेवन्तमनुदस्रसूः ॥ १९ ॥

हिनस्ति ६ दीप्ताग्निः, दीप्तः अग्निर्जठरानलो यस्य ७ और्वशेयः ८ समुद्रचुलुकः, समुद्रः चुलुकः गण्डूषमितजलमिव अनायासेन पीतत्वाद्यस्य ९ इति नव अगस्तिमुनेः ॥ ९ ॥ कौषीतकी, "कौशीतकी" १ लोपामुद्रा २ विदर्भजा, विदर्भे कुण्डिननगरे जायते ३ इति त्रीणि अगस्तिमुनिपत्न्याः ॥ प्राक्फाल्गुनेयः १ उतथ्यानुजः, "उतथ्यावरजः" इत्यादयोऽप्यत्र २ दारुष्यः ३ गोरथः ४ ॥ १० ॥ दीदिविः ५ द्वादशकरः, द्वादश कराः हस्ताः यस्य ६ चक्षाः ७ सुरगुरुः ८ गुरुः ९ इति नव बृहस्पतेः ॥ शुक्रः १ भः २ शतपर्वेशः ३ मघाभूः ४ भृगुः ५ आस्फुजित् ६ ॥ ११ ॥ षोडशार्चिः ७ इति सप्त शुक्रस्य ॥ नवार्चिः १ मङ्गलः २ खोल्मुकः ३ कुजः ४ इति चत्वारि कुजस्य ॥ बुधः १ हेमा २ राजपुत्रः, राज्ञश्चन्द्रस्य पुत्रः ३ एकदेहः ४ प्रहर्षणः, "प्रहर्षुलः" अप्यत्र ५॥१२॥पञ्चार्चिः६ श्रविष्ठाजः, श्रविष्ठानक्षत्रे जायते७ श्यामाङ्गः,श्यामं हरिद्वर्णमङ्गमस्य८ एकाङ्गः,"एकान्धः"९ रोधनः१०इति दश बुधस्य॥शनैश्चरः१ नीलवासाः२ मन्दः ३ छायात्मजः, छायायाः सूर्य्यभार्यायाः आत्मजः पुत्रः ४ शनिः ५ इति पञ्च शनैश्चरस्य ॥ १३ ॥ राहुः१ ग्रहकल्लोलः, ग्रहाणां ग्रहेषु वा कल्लोलः महातरङ्गः २ अभ्रपिशाचः ३ इति त्रीणि राहोः ॥ आहिकः १ केतुः २ इति द्वे केतोः ॥ ज्योतिरथः, ज्योतीनां नक्षत्राणां रथः, "ज्योतीरथः" १ ग्रहाधारः २ ध्रुवः ३ इति त्रीणि ध्रुवस्य ॥ १४ ॥ अङ्गारिणी १ इत्येकं तत्क्षणसूर्य्यत्यक्तदिशायः ॥ उपधूपिता १ इत्येकं निकटसूर्यास्तमयदिशायाः ॥ १५ ॥ सुनीतिः, सुष्ठु नीतिर्यस्याः १ इत्येकं ध्रुवमातुः॥ मारिषा१ इत्येकं दक्षमातुः॥ छायापथः १ देवपथः, देवैरर्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः २ सोमधारा३ नभः सरित् ४ इति चत्वारि देवपथस्य॥ १६ ॥ दिनप्रणीः १ अविः २ अधिषः, "अधिपः", क्वचित् "अव्यतिषः"३ भानेमिः ४ अवरव्रतः ५ गभस्तिहस्तः, गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य६ अंशुधरः ७ खरांशुः, खराः कठिनाः अंशवः किरणाः यस्य ८ भाः ९ रविः १० भगः ११ वेदोदयः, वेदस्य ज्ञानस्य उदयः वृद्धिर्येन सः, क्वचित्तु "वेदादयः" इति पाठः १२ प्रतिदिवा१३ मातुः १४ पितुः१५ तमोऽपहः,तमोऽन्धकारमज्ञानं वा अपहन्ति १६ ॥ १७ ॥ दिनमणिः १७ हरिः १८ हेलिः १९ ब्रध्नः२० भाकोषः २१ भाभृत् , "भानुः"२२ अरथिः, "उदरथिः"२३ खगः२४ पतङ्गः, पतन् सन् गच्छति२५ इनः २६ अद्रिः २७ सप्तसप्तिः, सप्त सप्तयः अश्वा यस्य २८ मिहिरः २९ महिरः ३० पीथः ३१ कालकृत् ३२ पद्मपाणिः, पद्मं पाणौ यस्य३३ खमणिः, खे आकाशे मणिरिव ३४ अरुणः ३५ शूरः, "सूरः"अप्यत्र ३६ अंशुमान् ३७ अंशुमाली ३८ इत्यष्टात्रिंशत् सूर्यस्य ॥ १८ ॥ छाया १ तपती २ मन्दजननी ३ भूमयी ४ वरी ५ इति पञ्च छायानाम्न्याः सूर्यपत्न्याः ॥ संज्ञा १ यमसूः २ कालिन्दीसूः ३ रेवन्तसूः ४ मनुसूः ५ दस्रसूः ६ ॥ १९॥

त्रसरेणुर्महावीर्या स्वातिः सूर्या सुवर्चला । सुरेणुर्द्युमयी त्वाष्ट्री प्रिये चैते विवस्वतः ॥ २० ॥
अश्मनो रमणोऽनूरुर्जटायुस्त्वरुणात्मजः ।

इति दिग्वर्गः ॥ ३ ॥

---

कालस्त्वपष्टुर्जहको भवन्तो भसदित्यपि । पीथः पीयुस्तिथश्चाथ वास्त्रो व्युष्टांशके दिनम् ॥
उषा प्रभातं गोसर्गः सायोत्सूरौ विकालके ॥ १ ॥
रात्री रक्षोजननी निषत्वरी चक्रभेदनी घोरा । श्यामा याम्या दोषा तुङ्गी भौती शताक्षी च २
वासुरोषा निशाख्या च वासतेयी तमस्विनी॥ ३॥
श्वस्यां मत्ता निशि श्वानः श्वनिशं श्वनिशा च सा । निःसम्पातोऽर्धरात्रः स्यात्सर्वावसर इत्यपि
उच्चन्द्रापररात्रौ द्वौ दर्शोऽमाऽमावसी च सा । भूता कृष्णचतुर्दश्यां पौर्णम्यां धर्मवासरः ॥५॥
शक्रोत्सवो ध्वजोत्थानं शारदी द्यूतपूर्णिमा । कोजागरः शरत्पर्व कौमुदीचारमस्त्रियाम् ॥ ६॥
यक्षरात्रिस्तु दीपाली चैत्रावल्यां मधूत्सवः । सुवसन्तः काममहो वासन्ती कर्दमी स्त्रियौ ॥७॥
श्रामस्तु मासो वर्षांशो वत्सरस्तु युगांशकः । ऋतुवृत्तिर्मासमालः स्यात्कालग्रन्थिरुर्वटः ॥८॥
कालप्रभातं शरदा प्रावृषा तु जलार्णवः । कौमुदः कार्त्तिको मासः फाल्गुनालस्तु फाल्गुनः

त्रसरेणुः ७ महावीर्या ८ स्वातिः ९ सूर्या १० सुवर्चला ११ सुरेणुः, "स्वरेणुः" १२ द्युमयी, "द्युः मही" इति च पाठाः १३ त्वाष्ट्री १४ इति चतुर्दश संज्ञानाम्न्याः सूर्यपत्न्याः ॥ एते छाया संज्ञेति द्वे विवस्वतः सूर्यस्य प्रिये भार्ये ॥ २० ॥ अश्मनः १ रमणः २ अनूरुः, न स्तः ऊरू यस्य ३ इति त्रीणि सूर्यसारथेः अरुणस्य ॥ जटायुः, "जटायुस्" इति क्वचित् सान्तः, जटं संहतमायुरस्य १ अरुणात्मजः २ इति द्वे अरुणसूनोः ॥ इति दिग्वर्गः ॥ ३ ॥

---

कालः १ अपष्टुः २ जहकः ३ भवन्तः, "भसन्तः" ४ भसत् ५ पीथः ६ पीयुः ७ तिथः ८ इत्यष्टौ कालस्य ॥ वास्त्रः १ व्युष्टम् २ अंशकम् ३ दिनम् ४ इति चत्वारि दिवसस्य ॥ उषा, "ऊषः" "उषः" १ प्रभातम् २ इति द्वे प्रभातस्य ॥ गोसर्गः १ सायः २ उत्सूरः, "अस्तवः" ३ इति त्रीणि विकालस्य ॥१॥ रात्री, "रात्रिः" १ रक्षोजननी २ निषत्वरी, "सत्वरी" ३ चक्रभेदनी, चक्रौ भिनत्ति परस्परं वियोजयति ४ घोरा ५ श्यामा ६ याम्या ७ दोषा ८ तुंगी ९ भौती १० शताक्षी, शतमक्षिणीव पुष्पाण्यस्याः ११ ॥ २ ॥ वासुरा १२ उषा १३ क्वचित् "वास्तवोषा" इति पाठः, निशाख्या १४ वासतेयी, वसतेर्हिता १५ तमस्विनी, तमस् अस्ति, "तमा निशा" इति क्वचित् पाठः १६ इति षोडश रात्रेः ॥ ३ ॥ श्वनिशम् १ श्वनिशा २ इति द्वे कुक्कुरमादकरात्रेः ॥ निःसम्पातः, निर्गतः सम्पातो गतागतं यस्मात् १ अर्धरात्रः, "धर्मरात्रः" २ सर्वावसरः ३ इति त्रीणि अर्धरात्रस्य॥४॥ उच्चन्द्रः, उच्छिष्टः स्वल्पावशिष्टश्चन्द्रो यत्र १ अपररात्रः, अपरं रात्रेः २ इति द्वे रात्रिशेषस्य ॥ दर्शः, दृश्यते शास्त्रे चन्द्रार्कसङ्गमो यत्र १ अमा २ अमावसी, अमा सह वसतश्चन्द्रार्कौ यत्र, "अमावासी" ३ इति त्रीणि अमावस्याः ॥ भूता, "भूतः" १ इत्येकं कृष्णचतुर्दश्याः ॥ धर्मवासरः, धर्मार्थं वासरः १ इत्येकं पौर्णमास्याः ॥ ५ ॥ शक्रोत्सवः, शक्रस्य तद्ध्वजस्य उत्सवः १ ध्वजोत्थानम्, ध्वजस्य शक्रध्वजस्य उत्थानम् २ इति द्वे शक्रध्वजोत्थानमङ्गलस्य ॥ शारदी १ द्यूतपूर्णिमा २ कोजागरः ३ शरत्पर्व ४ कौमुदीचारम् ५ इति पञ्च कोजागरपूर्णिमानिमित्तोत्सवस्य ॥ आश्विनपौर्णमास्या वा ॥ ६ ॥ यक्षरात्रिः १ दीपाली २ इति द्वे कार्त्तिकपूर्णिमारात्रेः ॥ मधूत्सवः १ सुवसन्तः २ काममहः ३ वासन्ती ४ कर्दमी, "कूर्दमा" ५ इति पञ्च चैत्रपौर्णमास्याः ॥ ७ ॥ श्रामः १ मासः २ वर्षांशः, वर्षस्य अंशः भागः ३ इति त्रीणि मासस्य ॥ वत्सरः १ युगांशकः २ ऋतुवृत्तिः, ऋतूनां वृत्तिः पर्यायेणावर्तना यत्र ३ मासमालः, "मासमानः" ४ कालग्रन्थिः ५ उर्वटः, "उवेटः" ६ इति षट् वर्षस्य ॥ ८ ॥ कालप्रभातम् १ शरदा २ इति द्वे शरदृतोः ॥ प्रावृषा, "प्रावृट्" १ जलार्णवः २ इति द्वे वर्षर्तोः ॥ कौमुदः १ कार्त्तिकः २ इति द्वे कार्त्तिकस्य ॥

ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् । कृतं सत्ययुगं त्रेताऽग्नायी द्वापरयज्ञियौ ॥ १० ॥
कलिर्झर्झरकः कर्मयुगं पापं तु पातकम् । शल्यं तूस्तं च कल्कोऽथ भद्रं मैल्लं शिवं तथा ॥ ११ ॥
शं शुभं चाव्यये प्राणी सत्त्वी रूपं चतुष्पदः । अथात्मा कर्मभुग्देही जीवः पुरुषपुद्गलौ ॥ १२ ॥
अन्तर्यामीश्वरश्चान्तःकरणं तु मनो निगु ॥ १३ ॥

इति कालवर्गः ॥ ४ ॥

---

बुद्धिः पण्डा विदा चार्वी विचारस्तर्कनिश्चयौ । गुञ्जा चर्चाऽथ सिद्धान्तोत्तरपक्षसमाधयः ॥ १ ॥
कृतान्तः पूर्वपक्षस्तु चोद्यं गीर्भणितिर्गिरा । वाचा छन्दस्तु निगमः साम्न्युक्थं स्वरपत्तनम् २
ब्रह्माक्षरं स्यादोंकारः प्रश्नदूती प्रहेलिका । संज्ञाऽधिवचनं सद्यःकृतं लक्षणनामनी ॥ ३ ॥
व्यपदेशः प्रसिद्धस्तु टङ्कारोऽथ नवः स्तवः ॥ ४ ॥

इति धीवर्गः ॥ ५ ॥

---

शब्दाभिलापौ त्वभिधाऽभिधानं वाचको ध्वनिः । हासः कुहरितश्चाऽथ मन्मनो गद्गदध्वनौ ॥ १ ॥
तूरं तु तूर्यं स्यात्ताडचमानास्तु पटहादयः । कर्वर्दिः करताली स्याद् ध्वनिनाला तु काहला ॥ २ ॥

फाल्गुनालः १ फाल्गुनः २ इति द्वे फाल्गुनस्य ॥ ९ ॥ ज्येष्ठामूलीयम् १ आषाढपूर्वजम् २ इति द्वे ज्येष्ठमासस्य ॥ कृतम् १ सत्ययुगम् २ इति द्वे कृतयुगस्य ॥ त्रेता १ अग्नायी २ इति द्वे त्रेतायुगस्य ॥ द्वापरः १ याज्ञियः २ इति द्वे द्वापरयुगस्य ॥ १० ॥ कलिः १ झर्झरकः २ कर्मयुगम् ३ इति त्रीणि कलियुगस्य ॥ पापम् १ पातकम् २ शल्यम् ३ ऊस्तम् ४ कल्कः ५ इति पञ्च पापस्य ॥ भद्रम् १ भल्लम् , "भन्दम्" २ शिवम् ३ ॥ ११ ॥ शम् ४ शुभम् ५ इति पञ्च शुभस्य ॥ शं शुभम् इति द्वयम् अव्यये च भवाति ॥ प्राणी १ सत्त्वः २ रूपम् ३ चतुष्पदः ४ इति चत्वारि प्राणिमात्रस्य ॥ आत्मा १ कर्मभुक् २ देही ३ जीवः ४ पुरुषः ५ पुद्गलः, "पुंगलः" ६ ॥ १२ ॥ अन्तर्यामी ७ ईश्वरः ८ इत्यष्टौ आत्मनः ॥ अन्तःकरणम् १ मनः २ निगु ३ इति त्रीणि मनसः ॥ १३ ॥

इति कालवर्गः ॥ ४ ॥

---

बुद्धिः १ पण्डा २ विदा ३ चार्वी ४ इति चत्वारि बुद्धेः ॥ विचारः १ तर्कः २ निश्चयः, "निर्णयः" ३ गुञ्जा ४ चर्चा ५ इति पञ्च विचारस्य ॥ सिद्धान्तः, सिद्धो निश्चितोऽन्तो यस्मात् १ उत्तरपक्षः उत्तरमुत्तीर्यमाणं पक्षो यस्य वादे पूर्वपक्षस्य मर्दनक्षमः २ समाधिः ३ ॥ १ ॥ कृतान्तः, कृतः अन्तो विपर्ययनाशो निश्चयो विषयपरिच्छेदो वा येन ४ इति चत्वारि सिद्धान्तस्य ॥ पूर्वपक्षः १ चोद्यम् २ इति द्वे प्रश्नस्य ॥ गीः १ भणितिः २ गिरा ३ वाचा, "वाञ्छा" ४ इति चत्वारि वचनस्य ॥ छन्दः १ निगमः २ इति द्वे निगमस्य ॥ साम्नी १ उक्थम् २ स्वरपत्तनम्, स्वराणां निषादादीनां, गानध्वनिविशेषाणां पत्तनमाश्रयः ३ इति त्रीणि सामवेदस्य ॥ २ ॥ ब्रह्माक्षरम्, ब्रह्मणः अक्षरम् १ ओङ्कारः २ इति द्वे प्रणवस्य ॥ प्रश्नदूती, प्रश्नस्य दूती १ प्रहेलिका २ इति द्वे दुर्बोधार्थज्ञानाय प्रश्नस्य ॥ संज्ञा १ अधिवचनम् २ सद्यःकृतम्, सद्यस्तत्क्षणात् कृतम् ३ लक्षणम् ४ नाम ५ ॥ ३ ॥ व्यपदेशः ६ इति षड् नाम्नः ॥ प्रसिद्धः १ टङ्कारः २ इति द्वे प्रसिद्धस्य ॥ नवः १ स्तवः २ इति द्वे स्तवकरणस्य ॥

इति धीवर्गः ॥ ५ ॥

---

शब्दः १ अभिलापः २ अभिधा ३ अभिधानम् ४ वाचकः ५ ध्वनिः ६ हासः ७ कुहरितः ८ इत्यष्टौ ध्वनेः ॥ मन्मनः १ गद्गदध्वनिः २ "मिन्मिनः" "गंगदः" "मूकः" "अवाक्" इत्यादयोऽन्यत्र, इति द्वे कफादिनाऽव्यक्तशब्दस्य गद्गदध्वनेः ॥ १ ॥ तूरम् १ तूर्यम् २

मड्डुको मर्दलो मन्त्री ढक्का विजयमर्दलः । द्रगडः प्रतिपत्तूर्यं डमरुः सूत्रकोणकः ॥ ३ ॥
नाली घटी यामनाली दण्डढक्का यमेरुका।यामघोषोऽथ ताम्री स्यान्मानरन्ध्रा विकालिका॥४॥
भवरुत्प्रेतपटहो मृत्युदण्डकरश्च सः । रणतूर्यं तु संग्रामपटहो भयडिण्डिमः ॥ ५ ॥
भुक्ततूर्यं नृपाभीलं मल्लतूर्यं महास्वनः । मुखवाद्यं वक्रतालं वेणौ विवरनालिका ॥ ६ ॥
वारवाणिः प्रगाता स्यात्कथकैकनटौ समौ ॥ ७ ॥

इति शब्दादिवर्गः ॥ ६ ॥

सर्ववेशी लयारम्भः स्यात्तालावचरो नटः । लयपुत्री नटी नर्तूः खड्गधारादिनर्त्तके ॥ १ ॥
प्लवकः केलकश्चाथ भण्डश्चाटुपटुः समौ । गायनो गाथकः स्त्रीणां हल्लीषं सहनर्तनम् ॥ २ ॥
वात्सल्यशान्तौ तु रसौ शृङ्गारः कौशिकः स्मृतः । सम्भोगो विप्रयोगश्च तद्भेदौ वर्णिका मसी
मसिर्ना ध्यामलं तु स्याद्व्यामोऽवज्ञा तु पांसनम् । डमरुस्तु चमत्कारः प्रौढिस्तु कियदेतिका॥

इति द्वे ताड्यमानपटहादेः ॥ कर्वदिः, "करर्धिः" १ करताली २ इति द्वे करतालस्य ॥ ध्वनिनाला १ काहला २ इति द्वे काहलध्वनेः ॥ २ ॥ मड्डुकः, मज्जन्ति अन्ये शब्दा अत्रेति १ मर्दलः, "मर्दनः" २ मन्त्रः, "मन्द्रः" ३ इति त्रीणि मृदङ्गस्य ॥ केचित्तु "विपुलडमरोः" इति वदन्ति ॥ ढक्का १ विजयमर्दलः २ इति द्वे विजयढक्कायाः ॥ द्रगडः १ प्रतिपत्तूर्यम् २ इति द्वे प्रतिवादिततूर्यविशेषस्य ॥ डमरुः १ सूत्रकोणकः २ इति द्वे कापालिकायाः ॥ ३ ॥ नाली १ घटी २ यामनाली, यामे नाल्यस्य ३ दण्डढक्का, दण्डाकारा ढक्का ४ यमेरुका ५ यामघोषः, "यामघोषी" यामे घोषोऽस्य ६ इति षट् दण्डढक्कायाः घटीयन्त्रभेदस्य वा ॥ ताम्री १ मानरन्ध्रा २ विकालिका ३ इति त्रीणि कालज्ञानार्थं ताम्रेण निर्मितस्य यन्त्रविशेषस्य ॥ ४ ॥ भवरुत् १ प्रेतपटहः २ मृत्युदण्डकरः, "मृत्युभंगुरकः" ३ इति त्रीणि प्रेतपटहस्य ॥ रणतूर्यम्, रणे युद्धे नादितं तूर्यम् १ संग्रामपटहः २ भयडिण्डिमः, भये परतः स्वानिष्टसम्भावनरूपके डिण्डिमः ३ इति त्रीणि रणतूर्यस्य ॥५॥ भुक्ततूर्यम् १ नृपाभीलम्, "नृपाहारम्" "नृपाभारम्" २ इति द्वे अन्नकालविज्ञापनार्थं नादिततूर्यस्य॥मल्लतूर्यम् १ महास्वनः२ इति द्वे मल्लवाद्यस्य ॥ मुखवाद्यम्१ वक्रतालम्, वक्रे तालं यस्य, "वक्रनालम्" २ इति द्वे मुखवाद्यस्य ॥ विवरनालिका, विवरयुक्तं नालमस्त्यस्याः १ ॥ ६॥ वारवाणिः, वारं समूहं वाणते २ इति द्वे वेणुवादकस्य ॥ प्रगाता १ इत्येकं वंशीवादकस्य ॥ कथकः १ एकनटः २ इति द्वे तत्त्वनिर्णयार्थं वादरूपकथाकर्तुः ॥ ७ ॥

इति शब्दादिवर्गः ॥ ६ ॥

सर्ववेशी, सर्वेषां वेशो भार्यत्वेनास्त्यस्य १ लयारम्भः, "लयालम्भः" २ तालावचरः ३ नटः ४ इति चत्वारि नटस्य ॥ लयपुत्री १ नटी २ नर्तूः ३ इति त्रीणि नटयोषितः ॥ १ ॥ प्लवकः १ केलकः २ इति द्वे खड्गधारिणः नर्तकस्य ॥ भण्डः १ चाटुपटुः, चाटौ मिथ्यापरितोषणे वाक्ये पटुः, "चाटुवटुः" २ इति द्वे चाटूक्तिभाषकनटस्य विदूषकस्य ॥ गायनः १ गाथकः २ इति द्वे गायकस्य ॥ हल्लीषम् १ सहनर्तनम् २ इति द्वे स्त्रीभिः सह नर्तकस्य स्त्रीणां मण्डलिकाकारनृत्यस्य वा ॥ २ ॥ वात्सल्यः, वत्सलस्य भावः १ शान्तः २ इति द्वे पुत्रादिस्नेहानुगुणयोः रसभेदयोः ॥ शृङ्गारः १ कौशिकः २ इति द्वे नाट्योक्तरसभेदयोः पृथगेकैकस्य ॥ सम्भोगः १ विप्रयोगः, "विप्रलम्भः" २ इति द्वे शृङ्गाराद्यवस्थाभेदस्य ॥ वर्णिका १ मसी २ ॥ ३ ॥ मासिः, "माशिः" ३ इति त्रीणि पत्रलेखनद्रव्यभूतायाः मस्याः ॥ ध्यामलम्, "व्यामनम्" १ व्यामः, "व्यामः" २ इति द्वे बाह्वोरन्तरालपरिमाणस्य ॥ अवज्ञा १ पांसनम् २ इति द्वे अनादरस्य ॥ डमरुः १ चमत्कारः २ इति द्वे चमत्कारस्य ॥ प्रौढिः १ कियदेतिका, कियत् एतत् आरभ्यमाणं करोति, "अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका" इति हैमः । कचित्तु "कियदेहिका" इति पाठः २ इति द्वे उत्साहस्य ॥ ४ ॥

स्वेदः प्रश्रवणं सिप्रो द्वयोर्व्रीडो नटार्थिका । भामः क्रोधे निःसमस्तु शोके वीर्यं शुटीरता ५॥
छलं मिषं च वैदग्धी भङ्गिश्चेभनिमीलिका । उत्कण्ठा रुहरुहिका हव्यासस्त्वतिचिन्तिया ६॥
स्याच्चिन्ता चिन्तयाऽथोद्वाहनं रणरणं च तत् । सोत्कण्ठा स्मृतिराध्यानं हेवाकोऽध्यवसायिता
परिहासः केलिमुखः केलिर्देवननर्मणी । आटोपारोपटङ्कारा भवेदारभटी स्त्रियाम् ॥ ८ ॥
रोमोद्गमस्तु पुलकस्त्वक्पुष्पं च त्वगङ्कुरः । स्वदोषगूहनं म्रक्षो रागसङ्गौ तु गृध्रता ॥ ९ ॥
कामचारः स यच्चित्ते पापमाधाय शंसनम् । कौकृत्यं विप्रतीसारो विबाधा तु विहेठनम् ॥१०॥
दुःखलोको भवश्चैव संसारः कष्टचारकः । निर्वाणमन्तको मोक्षः शीतिभावः शमोऽमृतम् ॥११॥

इति नाट्यवर्गः ॥ ७ ॥

---

अधोऽव्ययं स्यात्पाताले सप्तधा तदुदीरितम् । अतलं सुतलं चैव वितलं च गभस्तिमत् ॥१॥
तलं प्रतलपाताले विरोकं श्वभ्रमस्त्रियाम् । तमसं तु निशाचर्म नीलपङ्कं रजोबलम् ॥ २ ॥
दिक्कण्टको वियद्भूतिः खत्वग्वृत्रोऽथ नागभित् । दम्भूः स्त्री स्याद्वलूताजगरावथ हलाहलः ३
ब्रह्मसर्पोऽश्वलाला च द्विमुखाहिरहीरणिः । राजाहिरलगर्दस्तु कालसर्पो महाविषः ॥ ४ ॥

स्वेदः १ प्रश्रवणम्, "प्रस्रवणम्" २ सिप्रः, "स्विप्रः" ३ इति त्रीणि स्वेदजलस्य॥व्रीडः १ नटार्थिका, "नटान्धिका" २ इति द्वे लज्जायाः ॥ भामः १ क्रोधः २ इति द्वे क्रोधस्य ॥ निःसमः, "निःशमः" १ शोकः २ इति द्वे शोकस्य ॥ वीर्यम् १ शुटीरता २ इति द्वे वीर्यस्य ॥ ५ ॥ छलम् १ मिषम् २ इति द्वे शठस्य ॥ वैदग्धी, विदग्धस्य भावः १ भङ्गिः, "भङ्गी" २ इभनिमीलिका, इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति ३ इति त्रीणि भङ्ग्याः ॥ उत्कण्ठा १ रुहरुहिका २ इति द्वे औत्सुक्यस्य ॥ हव्यासः १ अतिचिन्तिया २ ॥ ६ ॥ चिन्ता ३ चिन्तया ४ इति चत्वारि चिन्तायाः ॥ उद्वाहनम् १ रणरणम् २ इति द्वे विवाहस्य ॥ सोत्कण्ठा १ स्मृतिः २ आध्यानम् ३ हेवाकः ४ अध्यवसायिता ५ इति पञ्च औत्सुक्यान्वितस्य ॥ ७ ॥ परिहासः, " परीहासः " १ केलिमुखः २ इति द्वे क्रीडायाः ॥ केलिः १ देवनम् २ नर्म ३ इति त्रीणि परिहासस्य ॥ आटोपः १ आरोपः २ टङ्कारः ३ आरभटी ४ इति चत्वारि दर्पस्य ॥ ८ ॥ रोमोद्गमः, " रोमोद्भेदः " १ पुलकः २ त्वक्पुष्पम् ३ त्वगङ्कुरः ४ इति चत्वारि पुलकस्य ॥ स्वदोषगूहनम् १ म्रक्षः, " मृक्षः " २ इति द्वे स्वदोषगूहनस्य ॥ रागः १ सङ्गः २ गृध्रता ३ इति त्रीणि गृध्रतायाः ॥ ९ ॥ कामचारः, "कामाचारः," "काम्यकारः" १ इत्येकं सपापकथनस्य ॥ कौकृत्यम् १ विप्रतीसारः २ इति द्वे कुकृत्यस्य ॥ विबाधा१ विहेठनम् २ इति द्वे पीडायाः ॥ १० ॥ दुःखलोकः १ भवः २ संसारः ३ कष्टचारकः, "कष्टकारकः" ४ इति चत्वारि संसारस्य ॥ निर्वाणम् १ अन्तकः, "अस्तुकः" २ मोक्षः ३ शीतिभावः ४ शमः ५ अमृतम् ६ इति षट् निर्वाणस्य ॥ ११ ॥

इति नाट्यवर्गः ॥ ७ ॥

---

अधः १ इति एकं पातालस्य ॥ अतलम् १ सुतलम् २ वितलम् ३ गभस्तिमत् ४ ॥ १ ॥ तलम् ५ प्रतलम् ६ पातालम् ७ इति सप्त पातालभेदस्य ॥ एतानि सप्त पातालानि ग्रन्थान्तरे एवं निर्दिष्टानि । यथा—"अतलं वितलं चैव नितलं च क्रमादधः । महातलं च सुतलं पातालं सप्त कीर्तितम्" इति ॥ विरोकम् १ श्वभ्रम् २ इति द्वे श्वभ्रस्य ॥ तमसम् १ निशाचर्म २ नीलपङ्कम् ३ रजोबलम् ४ ॥ २ ॥ दिक्कण्टकः, "दिनान्तकः" ५ वियद्भूतिः ६ खत्वक्, "खलुक्" ७ वृत्रः ८ इत्यष्टौ अन्धकारस्य ॥ नागभित्, "नागभूत्" १ दम्भूः, "दम्फूः", 'डुण्डुः' २ इति द्वे सर्पभेदस्य ॥ वलूतः १ अजगरः २ इति द्वे अजगरस्य ॥ हलाहलः १ ॥ ३ ॥ ब्रह्मसर्पः २ अश्वलाला ३ इति त्रीणि ब्रह्मसर्पस्य ॥ द्विमुखाहिः, द्विमुखश्चासौ अहिश्च, "द्विमुखः"अप्यत्र १ अहीरणिः, अहीन् ईरयति दूरीकरोति २

भाण्डपुष्पस्तु भुजगो भवेत्कौक्कुटिकन्दलः । गोनासगोनसौ हालाहलं हालहलं विषम् ॥ ५ ॥
अथाम्भक्षो द्विरसनः समकोलश्च भेकभुक् । कुम्भीनसो मण्डली च गरलं जङ्गमं विषम् ॥६॥
अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः।कर्कोटिः कुलिकः शङ्ख इत्यष्टौ नागनायकाः॥७॥
तद्बन्धवस्तु कुमुदकम्बलाश्वतरादयः । पुरी भोगवती चैषां भोगिन्यो नागकन्यकाः ॥ ८ ॥

इति पातालभोगिवर्गः ॥ ८ ॥

अकं दुःखमघं चैन्द्री त्वलक्ष्मीः कालकर्णिका ॥ १ ॥

इति नरकवर्गः ॥ ९ ॥

पाथोधिसिन्धुमकरालयवारिराशिगङ्गाधरेन्दुजनकास्तिमिरूर्मिमाली ।
वार्धिर्मितद्रुतिमिकोषमहाशयाश्च क्लीबं च शैलशिविरं धरणीप्लवश्च ॥ १ ॥
पुमान् कचंगलो वाङ्कः कूलंकषपरंगवौ । तरन्तो दारदः पेरुर्महीप्राचीरमद्वयोः ॥ २ ॥

राजाहिः ३ इति त्रीणि "राजसर्पः" इति ख्यातस्य द्विमुखसर्पस्य ॥ अलगर्दः, "अलगर्धः" अन्यत्र १ कालसर्पः २ महाविषः ३ इति त्रीणि कालसर्पस्य ॥ ४ ॥ भाण्डपुष्पः १ भुजगः २ इति द्वे भाण्डपुष्पाख्यसर्पविशेषस्य ॥ कौक्कुटिकन्दलः १ गोनासः २ गोनसः ३ इति त्रीणि "तिलित्सः" इति ख्यातस्य सर्पस्य ॥ "घोणसः" अन्यत्र, "भवेत्तिलित्सो गोनासो गोनसो घोणसोऽपि च" इति हैमः ॥ हालाहलम् १ हालहलम् २ विषम् ३ इति त्रीणि विषस्य ॥ ५ ॥ अम्भक्षः १ द्विरसनः २ समकोलः ३ भेकभुक् ४ कुम्भीनसः ५ मण्डली ६ इति षट् सर्पस्य ॥ गरलम् १ इत्येकं गतिशक्तियुक्तस्य जङ्गमविषस्य ॥ ६ ॥ अनन्तः १ वासुकिः १ पद्मः १ महापद्मः १ तक्षकः १ कर्कोटिः १ कुलिकः १ शङ्खः १ एकैकं नागराजानाम् ॥ तेषामाकारविशेषोऽप्येवं ज्ञेयः । अनन्तः द्विसहस्राक्षः श्यामवर्णः । अथवा शुक्लः श्वेतपङ्कजलाञ्छनः । वासुकिः श्वेतो नीलः पद्मलाञ्छनवान् । पद्मः बिन्दुसमुदायाङ्कितमस्तकः शुक्लवर्णः । महापद्मः अतिशुक्लः दशबिन्दुमस्तकः । तक्षकः लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः । कर्कोटिः मिश्रवर्णः दृष्टिविषः । तथा चोक्तम् । "कर्कोटिर्नाम सर्पो यः स दृष्टिविष उच्यते" इति । कुलिकः अर्धचन्द्रमौलिः ज्वालाधूमसदृशवर्णः । शङ्खः श्वेतवर्णधरः चन्द्राभरेखान्वितगलः । तथा चोक्तं नाममालायाम्–"शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः । स च श्यामोऽथ वा शुक्लः सितपङ्कजलाञ्छनः ॥ वासुकिस्तु सर्पराजः श्वेतो नीलः सरोजवान् । तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ॥ महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः । शङ्खस्तु श्वेतो बिभ्राणो रेखा बिन्दुसितो गले ॥ कुलिकोऽर्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः" इति ॥ ७ ॥ कुमुदः १ कम्बलः २ अश्वतरः ३ आदिना इहानुक्ता अन्ये च । इति त्रीणि तन्नागराजबान्धवानाम् ॥ भोगवती, भोगः सर्पशरीरः भूम्नाऽस्त्यस्याम् १ इत्येकं सर्पनगरस्य ॥ भोगिन्यः १ नागकन्यकाः २ इति द्वे नागकन्यकानाम् ॥ ८ ॥

इति पातालभोगिवर्गः ॥ ८ ॥

अकम् १ दुःखम् २ अघम् ३ इति त्रीणि दुःखस्य॥ऐन्द्री १ अलक्ष्मीः २ कालकर्णिका ३ इति त्रीणि अलक्ष्म्याः॥१॥

इति नरकवर्गः ॥ ९ ॥

पाथोधिः, पाथांसि जलानि धीयन्तेऽत्र १ सिन्धुः २ मकरालयः, मकराणां तन्नामकजलजन्तूनाम् आलयः वासो यस्मिन् ३ वारिराशिः ४ गङ्गाधरः ५ इन्दुजनकः ६ तिमिः ७ ऊर्मिमाली, ऊर्मिमालाऽस्त्यस्य ८ वार्धिः, वारि जलानि धीयन्तेऽत्र ९ मितद्रुः, मितं द्राति द्रवति वा, "सितद्रुः" १० तिमिकोषः, तिमीनां मत्स्यानां कोषः उत्पत्तिर्यस्मिन् ११ महाशयः १२ शैलशिविरम्, शैलानां नगानां शिबिरमिव । नं० । १३ धरणीप्लवः १४ ॥ १ ॥ कचङ्गलः १५ वाङ्कः १६ कूलङ्कषः, १७ परङ्गः "परङ्गवः" १८ तरन्तः १९ दारदः, दरद्देशसन्निकृष्टः २० पेरुः । पु० । २१ महीप्राचीरम्, मह्याः प्राची-

नदीनश्चाथ कमलं नीरं नाराः स्त्रियामिरा। कं दकं जलमस्थानमगाधेऽथाम्भसांभ्रमः ॥३॥
तारूरो वायुगुल्मश्च कललाभः कलङ्कुरः। पुरोटिः पत्रझङ्कारे दरणिः कूलचुण्डकः॥ ४॥
चुलुको घनजम्बाले दलाढचे पङ्ककर्वटः। तरणो भेलके वारिरथो नौस्तरिकः प्लवः॥ ५॥
होडस्तरान्धुर्वहनतरण्डो वार्वटः पुमान्। पादारकः स्यात्पोलिन्दः पत्रबाले तुलाघटः॥ ६॥
समुद्रकफडिण्डीरजलहासास्तु फेणके। कैवर्ते जालिकश्छोटी कुपिनी स्यादथ प्लवः॥ ७॥
पलवः पञ्जराखेटः कण्टकी तु जलेशयः। आत्माशी शम्बरो मूकोऽनिमिषो वल्कवानपि॥८॥
मीने वदालः पाठीनो मत्स्यराजस्तु रोहितः। भालाङ्कश्चाथ कुलिशं कटं काष्ठील इत्यपि॥९॥
फलकी स्याच्चित्रफली वाजग्रीवो मदार्मदः। कवयी क्रकचपृष्ठी कङ्कत्रोटी जलव्यधः॥१०॥
शफरः श्वेतकोलः स्यात्खशेटस्तु खलेशयः। इल्लिशे वारिकर्पूरगाङ्गेयशफराधिपाः॥११॥
जलतालोऽप्यथ चलत्पूर्णिमाचन्द्रचञ्चलौ। जलवृश्चिक इश्चाके गङ्गाटेयो गलानिलः॥१२॥
शालः शकुलगण्डः स्यादन्धाहिः कूर्चिका द्वयोः। ब्राह्मी तु पङ्कगण्डको लघुगर्गस्त्रिकण्टकः॥

रमिवावरकम्। न० ॥ २२ ॥२॥ नदीनः, नदीनाम् इनः प्रभुः २३ इति त्रयोविंशतिः समुद्रस्य॥ कमलम् १ नीरम् २ नाराः, "आपो नारा इति प्रोक्ताः" इति ३ इरा ४ कम् ५ दकम् ६ जलम् ७ इति सप्त जलस्य ॥ अस्थानम्, नास्ति स्थानं तलस्पर्शो यस्य, क्वचित् "अस्थायम्" "अस्थाघम्" इति पाठौ १ अगाधः, नास्ति गाधः प्रतिष्ठा यस्य २ इति द्वे अतलस्पर्शजलस्य ॥ अम्भसांभ्रमः १ ॥ ३ ॥ तारूरः, "तानूरः" २ वायुगुल्मः ३ कललाभः, "कलमाभः" "कणलाभः" ४ कलङ्कुरः, "कुलङ्कुरः" ५ इति पञ्च जलभ्रमस्य ॥ पुरोटिः १ इत्येकम् "पत्रझङ्कारः" इति ख्यातस्य पत्रचलननादस्य ॥ दरणिः, "वदालः"१ कूलचुण्डकः, "कूलहण्डकः"२इति द्वे तीरस्थमत्स्यभेदस्य॥४॥ चुलुकः १इत्येकम् "निबिडपङ्कः" इति प्रसिद्धस्य घनजम्बालस्य॥पङ्ककर्वटः१इत्येकं पङ्कबहुलस्य दलाढयस्थानस्य॥तरणः १इत्येकं "डोङ्गा" इति ख्यातस्य भेलकस्य ॥ वारिरथः १ नौः २ तरिकः ३ प्लवः ४ इति चत्वारि नौकायाः ॥५॥ होडः १ तरान्धुः २ वहनः ३ इति त्रीणि समुद्रगामिनौकाभेदस्य ॥ तरण्डः, "वहित्रम्" १ वार्वटः २ इति द्वे पोतजलयानस्य ॥ पादारकः१ पोलिन्दः २ इति द्वे पोलिन्दस्य ॥ तुलाघटः१ इत्येकं पत्रबालस्य ॥ केचित्तु "तुलाधरः" इति वदन्ति ॥ ६ ॥ समुद्रकफः १ डिण्डीरः, "डिण्डरः" २ जलहासः ३ इति त्रीणि समुद्रफेणस्य ॥ जालिकः १ छोटी, "कोटिः" २ कुपिनी ३ इति त्रीणि कैवर्तस्य ॥ प्लवः १ ॥ ७ ॥ पलवः २ पञ्जराखेटः ३ इति त्रीणि पञ्जराखेटस्य ॥ कण्टकी, "कण्डी" १ जलेशयः २ आत्माशी ३ शम्बरः ४ मूकः ५ अनिमिषः, नास्ति निमिषः चक्षुःस्पन्दनं यस्य, "अनिमेषः" अप्यत्र ६ वल्कवान् ७ इति सप्त मत्स्यस्य॥८॥वदालः १ पाठीनः २ इति द्वे पाठीनमत्स्यस्य ॥ मत्स्यराजः १ रोहितः २ भालाङ्कः, भालस्येवाङ्को यस्य, "लालाङ्गः" ३ इति त्रीणि रोहितमत्स्यस्य ॥ कुलिशम्, कौ जले लिशति क्लिश्यति १ कटम् २ काष्ठीलः३इति त्रीणि मत्स्यविशेषस्य॥९॥फलकी १ चित्रफली २ इति द्वे फलक्याः ॥ वाजग्रीवः, "राजग्रीवः"१ मदार्मदः२इति द्वे मत्स्यभेदस्य॥कवयी१क्रकचपृष्ठी २ इति द्वे "कवयी" इति ख्यातस्य मत्स्यविशेषस्य॥कङ्कत्रोटः,कङ्कस्य त्रोट इव चञ्चुरस्य,"कङ्कत्रोटिः"१ जलव्यधः२इति द्वे मत्स्यविशेषस्य ॥१०॥ शफरः १ श्वेतकोलः २ इति द्वे मत्स्यविशेषस्य ॥ खशेटः, "खेटकः" १ खलेशयः २ इति द्वे खलेशयस्य ॥ वारिकर्पूरः १ गाङ्गेयः २ शफराधिपः ३ ॥ ११ ॥ जलतालः ४ इति चत्वारि "इल्लिशः" इति ख्यातस्य मत्स्यविशेषस्य ॥ चलत्पूर्णिमा १ चन्द्रचञ्चलः २ इति द्वे "चन्द्रमत्स्य" इति ख्यातस्य मत्स्याविशेषस्य ॥ जलवृश्चिकः १ इत्येकं इश्चाकस्य ॥ गङ्गाटेयः १ गलानिलः २ इति द्वे मत्स्यविशेषस्य ॥ १२ ॥ शालः १ शकुलगण्डः२ इति द्वे "शाल" इति ख्यातस्य क्षुद्रमत्स्य-विशेषस्य ॥ अन्धाहिः, अन्धे जले अहिः नागः १ कूर्चिका २ इति द्वे "जलनागः" इति ख्यातस्य

तिर्यग्यानः कुलीरः स्यान्मुखास्त्रो हरिलोचनः। बहिःकुटीचरः पोताधानं तु स्याज्जलाण्डकम्॥
जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः । मीनरस्तन्तुनागस्तु नक्रवाडवहारकौ ॥ १५ ॥
नक्रस्तु वार्भटः स्यादम्बुकिण्टोऽम्बुकण्टकः । जलशूकरमायादझषाशनह्रदग्रहाः ॥ १६ ॥
जलकूर्मस्त्वम्बुकीशो वसाढ्यः शिशुकश्च सः। उद्रस्तु जलमार्जारजलाखुनकुलप्लवाः ॥१७॥
मृत्किरा घुर्घुरी वारिकृमिस्तु जलमक्षिका। पटालुका जलौकाऽम्बुसर्पिणी वेणिवेधिनी॥१८॥
व्यङ्गस्तु नन्दको भेको गूढवर्चाः क्षतालयः। कोकोऽजिह्वोऽथ पञ्चाङ्गगुप्ते क्रोडांघ्रिकच्छपौ ॥
गडुः किञ्चुलुकोऽथाऽम्बुर्विकिरश्चूडकश्च सः । चुण्टा चुण्टी च लूताऽथान्धकूपः कर्करान्धुकः
पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका । अवघट्टावटौ तुल्यौ तल्लं विल्लं तलं च तत् ॥
द्विजप्रपालवाले स्यात्केदारः पांशुमर्दनः । नदी निर्झरिणी रोधोवक्रा सागरगामिनी ॥ २२ ॥
तलोदा चाम्पिला सिन्धुर्ऋषिकुल्या वहा च सा । अध्वगा गान्दिनी गङ्गा हैमवत्युग्रशेखरा॥
धर्मद्रवी सिद्धसिन्धुस्तापी तु यमुना यमी । रेवा तु पूर्वगङ्गा स्यान्मुरला च मुरन्दला ॥२४॥
स्यादर्द्धगङ्गा कावेरी वाशिष्ठी गोमती समे। अथ गोदावरी भीमोपला गोला च गौतमी॥२५॥

कूर्चिकस्य ॥ अत्र "जलसर्पः" "उदकनागः" "उदकाहिः" अपि सङ्गृह्यते ॥ व्राह्मी १ पङ्कगण्डकः २ इति द्वे पङ्कगण्डस्य ॥ लघुगर्गः १ त्रिकण्टकः २ इति द्वे त्रिकण्टकस्य ॥ १३ ॥ तिर्यग्यानः १ कुलीरः २ मुखास्त्रः ३ हरिलोचनः ४ बहिःकुटीचरः ५ इति पञ्च कुलीरस्य ॥ पोताधानम्, पोतानां शिशूनामण्डजातमत्स्यानामाधानम् १ जलाण्डकम् २ इति द्वे जलाण्डकस्य क्षुद्रमत्स्यसंघस्य ॥ १४ ॥ जलरूपः १ मकरः २ मरोलिः ३ असिदंष्ट्रकः ४ मीनरः ५ इति पञ्च मकरस्य ॥ तन्तुनागः १ नक्रहारकः २ वाडवहारकः ३ इति त्रीणि "हाङ्गर" इति ख्यातस्य जलजन्तुभेदस्य ॥ १५ ॥ नक्रः १ वार्भटः २ अम्बुकिण्टः, "अम्बुकिरातः" ३ अम्बुकण्टकः ४ जलशूकरः ५ मायादः ६ झषाशनः ७ ह्रदग्रहः ८ इत्यष्टौ कुम्भीरस्य ॥१६॥ जलकूर्मः १ अम्बुकीशः २ वसाढ्यः ३ शिशुकः ४ इति चत्वारि शिशुमारस्य ॥ उद्रः १ जलमार्जारः २ जलाखुः ३ नकुलः ४ प्लवः ५ इति पञ्च जलविडालस्य ॥१७॥ मृत्किरा १ घुर्घुरी २ इति द्वे घुर्घुर्याः ॥ वारिकृमिः १ जलमक्षिका २ पटालुका ३ जलौका ४ अम्बुसर्पिणी ५ वेणिवेधिनी ६ इति षट् जलौकायाः ॥ १८ ॥ व्यङ्गः, विगतं विकलं वा अङ्गं यस्य १ नन्दकः २ भेकः ३ गूढवर्चाः, गूढं केनाप्यदृश्यं वर्चो विष्ठा शुक्रं वा यस्य, "गूढवर्चाः" ४ क्षतालयः, "कृतालयः" ५ कोकः, "रेकः" ६ अजिह्वः, नास्ति जिह्वा रसना यस्य ७ इति सप्त भेकस्य ॥ क्रोडांघ्रिः, क्रोडे अंघ्रिर्यस्य १ कच्छपः २ इति द्वे "पंचाङ्गगुप्त" इति ख्यातस्य कूर्मस्य ॥ १९ ॥ गडुः १ किञ्चुलुकः २ इति द्वे महीलताख्यस्य कीटभेदस्य ॥ अम्बुः १ विकिरः २ चूडकः ३ चुण्टा ४ चुण्टी ५ लूता, "चूडा" ६ इति षट् कूपस्य ॥ अन्धकूपः, अन्धयतीत्यन्धः स चासौ कूपः १ कर्करान्धुकः, कर्करः कठोरः अतिशयितान्धकारवत्त्वात् अन्धुः कूपो यत्र २ इति द्वे अत्यन्धकारवतः कूपस्य ॥ २० ॥ पल्वलम् १ दीर्घिका २ वापी ३ यष्टिका ४ मीनगोधिका ५ इति पञ्च वाप्याः ॥ अवघट्टः १ अवटः "तलम्" अन्यत्र २ इति द्वे गर्तस्य ॥ तल्लम् १ विल्लम् २ तलम् ३ ॥ २१ ॥ द्विजप्रपम् ४ आलवालम् ५ इति पञ्च आलवालस्य ॥ केदारः १ पांशुमर्दनः, पांशून् शष्पार्थं चिरसञ्चितान् गोमयान् मर्दयते, "पांसुमर्दनः" २ इति द्वे क्षेत्रस्य ॥ नदी १ निर्झरिणी, पर्वतान्निःसृतजलप्रवाहः कारणत्वेनास्त्यस्याः २ रोधोवक्रा ३ सागरगामिनी ४ ॥ २२ ॥ तलोदा ५ चाम्पिला ६ सिन्धुः ७ ऋषिकुल्या ८ वहा ९ अध्वगा, "त्र्यध्वगा" १० गान्दिनी, "गान्धिनी" ११ गङ्गा १२ हैमवती १३ उग्रशेखरा १४ ॥२३॥ धर्मद्रवी १५ सिद्धसिन्धुः १६ इति षोडश गङ्गायाः ॥ तापी १ यमुना २ यमी ३ इति त्रीणि यमुनाया नद्याः ॥ रेवा १ पूर्वगङ्गा २ मुरला ३ मुरन्दला ४ इति चत्वारि नर्मदायाः नद्याः ॥ २४ ॥ अर्द्धगङ्गा १ कावेरी २ इति द्वे कावेर्याः

सप्तगोदावरं तत्र कुवलं तूत्पलं कुवम्। कैरवं गन्धसोमं स्यात्कन्दोटश्च निशाहसः ॥ २६ ॥
श्रीकरं कृष्णकन्दं च रक्तोत्पलमलिप्रियम्। लक्ष्मीगृहं कुमुच्चाथ शालूकः पङ्कशूरणः ॥२७॥
प्रैश्नी तु कुम्भिका वारिमूली पर्णी खमूलिका। स्याद्वारिचत्वरोऽथाम्बुतालः सलिलकुन्तलः२८
शैवलो हठपर्णी स्त्री कावारं वारिचामरम्। पद्मे कवारं पंकेजं बिसनाभिस्तु पद्मिनी ॥ २९ ॥
पुटकिन्येवमेवाऽन्याः कुन्दिनीतालिनीमुखाः। विषण्डं तन्तुलविषे शृङ्गाटो वारिकुब्जकः ॥ ३० ॥

इति वारिवर्गः ॥ १० ॥

इति सटीकत्रिकाण्डशेषकोषे प्रथमः काण्डः समाप्तः ॥ १ ॥

---

नद्याः ॥ वाशिष्ठी, "वासिष्ठी" १ गोमती २ इति द्वे गोमत्याः नद्याः ॥ गोदावरी १ भीमोपला २ गोला ३ गौतमी ४ ॥ २५ ॥ सप्तगोदावरम् ५ इति पञ्च गोदावर्या नद्याः ॥ कुवलम् १ उत्पलम् २ कुवम् ३ इति त्रीणि उत्पलस्य ॥ कैरवम् १ गन्धसोमम्, गन्धार्थं सोमो विधुर्यस्य, चन्द्रोदये हि तस्य गन्धः २ कन्दोटः ३ निशाहसः ४ ॥ २६ ॥ श्रीकरम् ५ कृष्णकन्दम् ६ इति षट् कुमुदस्य ॥ रक्तोत्पलम् १ अलिप्रियम्, अलीनां प्रियमधिकमोदकत्वात् २ लक्ष्मीगृहम् ३ कुमुद् ४ इति चत्वारि रक्तोत्पलस्य ॥ शालूकः १ पंकशूरणः २ इति द्वे कुमुदमूलस्य ॥ २७ ॥ प्रश्नी, "पृश्नी" १ कुम्भिका २ वारिमूली ३ पर्णी, "वारिपर्णी" अन्यत्र ४ खमूलिका, "खमूली" अन्यत्र ५ वारिचत्वरः ६ इति षट् कुम्भिकायाः ॥ अम्बुतालः १ सलिलकुन्तलः, सलिलस्य कुन्तलाः केशा इव २ ॥२८॥ शैवलः ३ हठपर्णी, हठं प्लवमानं पर्णं यस्याः ४ कावारम् ५ वारिचामरम् ६ इति षट् शैवालस्य ॥ पद्मम् १ कवारम् २ पंकेजम्, "पंकजम्" ३ इति त्रीणि पद्मस्य ॥ बिसनाभिः १ पद्मिनी २ ॥ २९ ॥ पुटकिनी ३ इति त्रीणि "पुटकिनी" इति ख्यातायाः पद्मिन्याः ॥ कुन्दिनी, "कुण्टिनी" १ तालिनी, "अम्लानिनी" २ मुखा ३ इति त्रीणि पद्मिनीभेदस्य ॥ विषण्डम्, "विषडम्" १ तन्तुलम्, "तन्तुरम्" २ विषम् ३ इति त्रीणि मृणालस्य ॥ शृङ्गाटः १ वारिकुब्जकः २ इति द्वे जलकण्टकयाः ॥ अन्याः शेषसंज्ञाः एवमेव उक्तानुक्रमेणैव बोध्याः ॥ ३० ॥

इति वारिवर्गः ॥ १० ॥

इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजविष्णुदत्तविरचितायां नामचन्द्रिकाख्यायां त्रिकाण्डशेषकोषटीकायां प्रथमः काण्डः समाप्तः ॥ १ ॥

---



अथ

# सटीकत्रिकाण्डशेषकोषस्य

## द्वितीयः काण्डः ।

भूर्भूतधात्री गिरिकर्णिकाब्धिद्वीपा समुद्राम्बरमेखला कुः । क्षमाऽद्रिकीला च जगद्वहा च पुंसि स्मृतौ मध्यमलोकमर्त्यौ ॥ १ ॥
सहा कान्ता गन्धवती रत्नगर्भा च मेदिनी । स्वस्थली भारताख्यं तु वर्षं हैमवतं विदुः ॥२॥
भारतं नरभूः किंपूरुषं हरिवर्षं ततः । भद्राश्वमुत्तरकुरुर्हिरण्मयमिलावृतम् ॥ ३ ॥
केतुमालममूनि स्युर्भुवो वर्षाणि वै नव । जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्करैः ॥ ४ ॥
द्वीपाः सप्ताथ सप्तैव समुद्रा अपि कीर्त्तिताः । लवणेक्षुसुरासर्पिर्दधिदुग्धपयोमयाः ॥ ५ ॥
ऊषरं तूषवानूषो ब्रह्मावर्तस्तपोवटः । कुरुक्षेत्रं प्रयागं च हिमाद्रिं विन्ध्यमन्तरा ॥ ६ ॥
मध्यदेशोऽथ पुण्ड्राः स्युर्वरेन्द्री गौडनीवृतिः । प्रभासः सोमतीर्थं स्यादन्तर्वेदी कुशस्थली ॥७॥
प्राग्ज्योतिषं कामरूपे तीरभुक्तिस्तु निच्छविः।विदेहाश्चाथ काश्मीरे कीराः स्युः शास्त्रशिल्पिनः ॥
तुरुष्काः खशयष्टका बाह्लिकाश्च त्रिगर्तकाः । दशेरका मरुभुवो मालवाः स्युरवन्तयः ॥ ९ ॥

श्रीगणेशाय नमः । अथ द्वितीयकाण्डो व्याख्यायते । भूः १ भूतधात्री, भूतानि जन्तून् धारयति २ गिरिकर्णिका ३ अब्धिद्वीपा ४ समुद्राम्बरा, समुद्रः अम्बरमिव वेष्टनाकारः यस्याः ५ समुद्रमेखला, "समुद्ररसना" इत्यादयोऽप्यत्र ६ कुः ७ क्षमा ८ अद्रिकीला, अद्रयः कुलाचलाः कीलाः शंकव इव यस्याः ९ जगद्वहा १० मध्यमलोकः, "मध्यलोकः" अप्यत्र ११ मर्त्यः, "मर्तः" १२ ॥ १ ॥ सहा, "महा" १३ कान्ता १४ गन्धवती १५ रत्नगर्भा १६ मेदिनी १७ स्वस्थली, "खस्थली" "खस्तनी" १८ इति अष्टादश पृथिव्याः ॥ भारतम् १ वर्षम्, "भारतवर्षम्" अप्यत्र २ "हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता । तस्माच्च भारतं वर्षम्" इति २ हैमवतम् ३ इति त्रीणि हिमवत्खण्डस्य ॥ २ ॥ भारतम् १ नरभूः २ किंपूरुषम्, "किंपुरुषम्" ३ हरिवर्षम् ४ भद्राश्वम् ५ उत्तरकुरुः ६ हिरण्मयम् ७ इलावृतम् ॥ ३ ॥ केतुमालम् ९ इति नव भुवो नववर्षात्मकस्य जम्बूद्वीपस्य नवानां वर्षाणां पृथगेकैकमेकैकस्य ॥ जम्बु, "जम्बू" १ प्लक्षः २ कुशः ३ क्रौञ्चः ४ शाकः ५ शाल्मलिः ६ पुष्करः ७ इति सप्त जम्ब्वादिभिर्वृक्षैश्चिह्नितानां सप्तानां द्वीपानां पृथगेकैकमेकैकस्य ॥ ४ ॥ लवणः १ इक्षुः २ सुरा ३ सर्पिः ४ दधिः ५ दुग्धः ६ पयोमयः:, "जलान्तकः" ७ इति सप्त सप्तसमुद्राणां पृथगेकैकमेकैकस्य ॥ ५ ॥ ऊषरम्, "उषरः" १ ऊषवान् २ ऊषः, "उषः" अप्यत्र ३ इति त्रीणि क्षारमृत्तिकायुक्तायाः ऊषरभूम्याः ॥ ब्रह्मावर्तः १ तपोवटः २ इति द्वे "ब्रह्मावर्त" इति ख्यातस्य सरस्वतीदृषद्वत्योर्देवनद्योरन्तर्भूतस्य देशभेदस्य ॥ मध्यदेशः १ इत्येकं कुरुक्षेत्रप्रयागयोर्हिमाद्रिविन्ध्ययोश्च मध्यवर्तिनो मध्यदेशस्य ॥ ६ ॥ पुण्ड्राः, "पुडाः" १ वरेन्द्री २ गौडनीवृतिः ३ इति त्रीणि गौडदेशस्य ॥ प्रभासः १ सोमतीर्थम् २ इति द्वे प्रभासतीर्थस्य ॥ अन्तर्वेदी १ कुशस्थली २ इति द्वे अन्तर्वेद्याः ॥ ७ ॥ प्राग्ज्योतिषम्, क्वचित्तु "प्राग्ज्योतिषः" १ इत्येकं कामरूपदेशस्य ॥ तीरभुक्तिः १ निच्छविः २ विदेहाः ३ इति त्रीणि विदेहस्य ॥ कीराः १ शास्त्रशिल्पिनः २ इति द्वे काश्मीरस्य ॥ ८ ॥ तुरुष्काः १ खशयः २ टकाः, "थस्काः" ३ बाह्लिकाः ४ त्रिगर्त्तकाः,

डाहलाश्चेदयश्चैद्याः कारुषास्तु बृहद्गृहाः । यदवस्तु दशार्हाः स्युः सात्वताः कुकुराश्च ते १०॥
ओड्रा उत्कलनामानो मगधाः कीकटा मताः । वेलाकूलं तामलिप्तं तामलिप्ती तमालिका॥११॥
एकचक्रं हरिगृहं शम्भुपुर्यथ वर्तनिः । पूर्वदेशोऽथ साकेतमयोध्योत्तरकोशलाः ॥ १२ ॥
कुशस्थलं कान्यकुब्जं नागाह्वं हस्तिनापुरम् । गजाह्वं हास्तिनं चाथ श्रावस्ती धर्मपत्तनम् १३
कुरुक्षेत्रं विनशनं कौशाम्बी वत्सपत्तनम् । प्राजापत्यः प्रयागः स्याद् द्वारका वनमालिनी १४
द्वारवत्यब्धिनगरी विदेहामिथिले समे । मथुरा तु मधूपघ्नं जित्वरी तु तपस्स्थली ॥ १५ ॥
वाराणसी तीर्थराजी विशालोज्जयिनी समे । चम्पा तु मालिनी पुष्पपुरं पाटलिपुत्रकम् ॥१६॥
देवीकोटं बाणपुरं कोटीवर्षमुषावनम् । स्याच्छोणितपुरं चाथ योजनं मार्गधेनुकम् ॥ १७ ॥
क्रिमिशैलस्तु वल्मीकः शक्रमूर्धाऽथ सञ्चरः । धरणः पिण्डलः सेतुः पन्थास्तु क्षुल्लमो वहः १८
वाटः पथश्च माथश्च खपुरं तूर्ध्वगं पुरम् । हरिश्चन्द्रपुरं शौभमुद्रङ्गः प्रतिमार्गकः ॥ १९ ॥

" त्रिगर्तकाः " ५ दशेरकाः ६ मरुभुवः ७ मालवाः ८ अवन्तयः ९ इति नव देशभेदानां पृथगेकैकमेकैकदेशस्य ॥ ९ ॥ डाहलाः १ चेदयः २ चैद्याः ३ इति त्रीणि चैद्यस्य ॥ जनपदनामत्वादत्र बहुवचनम् ॥ कारुषाः १ बृहद्गृहाः २ इति द्वे कारुषस्य ॥ यदवः १ दशार्हाः २ सात्वताः ३ कुकुराः ४ इति चत्वारि दशार्हस्य ॥ १० ॥ ओड्राः, " ओण्ड्राः " १ उत्कलाः २ इति द्वे जगन्नाथप्रान्तदेशवर्तिनः ओड्रदेशस्य ॥ मगधाः १ कीकटाः २ इति द्वे मगधदेशस्य ॥ वेलाकूलम् १ तामलिप्तम् २ तामलिप्ती ३ तमालिका ४ इति चत्वारि तामलिप्तिदेशस्य ॥ ११ ॥ एकचक्रम् १ हरिगृहम् २ शम्भुपुरी, क्वचित् " सुम्भपुरी " ३ इति त्रीणि शम्भुपुर्याः ॥ वर्तनिः १ पूर्वदेशः, " पूर्वदेशः " २ इति द्वे प्राच्यामवस्थितस्य जनपदस्य ॥ साकेतम् १ अयोध्या २ उत्तरकोशला ३ इति त्रीणि सरयूतीरवर्तिनः " अयोध्या" इति प्रसिद्धस्य नगरस्य ॥ १२ ॥ कुशस्थलम् १ कान्यकुब्जम्, कन्याः कुब्जा यत्र, तत्र हि वायुना कन्याशतस्य कुब्जत्वं कृतमिति २ इति द्वे कान्यकुब्जदेशस्य॥ नागाह्वम्, "नागाङ्कम्"१ हस्तिनापुरम् २ गजाह्वम् ३ हास्तिनम् ४ इति चत्वारि हस्तिनापुरस्य॥ श्रावस्ती, "श्रावन्ती" १ धर्मपत्तनम्, धर्माणां पत्तनं पुरम् २ इति द्वे धर्मपत्तनाख्यपुरस्य ॥ १३ ॥ कुरुक्षेत्रम्, कुत्सितं रौति कुरु पापं कर्म, तस्य क्षेपणादपाकरणात् क्षेत्रम् १ विनशनम् २ इति द्वे कुरुपाण्डवानां युद्धभूमिसंख्यातस्य कुरुक्षेत्रस्य ॥ कौशाम्बी १ वत्सपत्तनम् २ इति द्वे उत्तरदेशस्थस्य कौशाम्बीनगरस्य ॥ प्राजापत्यः १ प्रयागः २ इति द्वे गङ्गायमुनयोः सङ्गमजातस्य "प्रयागः" इति प्रसिद्धस्य तीर्थभेदस्य ॥ द्वारका १ वनमालिनी २ ॥ १४ ॥ द्वारवती ३ अब्धिनगरी ४ इति चत्वारि समुद्रसन्निकृष्टस्य "द्वारका" इति ख्यातस्य तीर्थभेदस्य ॥ विदेहा १ मिथिला २ इति द्वे मिथिलाराजधान्याः ॥ मथुरा १ मधूपघ्नम् २ इति द्वे मथुरायाः ॥ जित्वरी १ तपस्थली २ ॥ १५ ॥ वाराणसी, "ब्राराणसी", वरणा च असी च सीमात्वेनास्त्यस्याः ३ तीर्थराजी, "तीर्थराज्ञी" ४ इति चत्वारि काश्याः ॥ विशाला १ उज्जयिनी, "उज्जयनी" अप्यत्र २ इति द्वे विक्रमादित्यराजधान्या अवन्तिपुर्याः ॥ चम्पा १ मालिनी २ इति द्वे चम्पानगर्याः ॥ पुष्पपुरम् १ पाटलिपुत्रकम् २ इति द्वे पाटलिपुत्रनगरस्य ॥ १६ ॥ देवीकोटः, "देवीकोठः"१ बाणपुरम्, "वाणपुरम्" २ कोटीवर्षम् ३ उषावनम् ४ शोणितपुरम् ५ इति पञ्च शोणितपुरस्य ॥ योजनम् १ मार्गधेनुकम् २ इति द्वे योजनस्य ॥ १७ ॥ क्रिमिशैलः १ वल्मीकः २ शक्रमूर्धा, शक्रस्येव शिखावान् मूर्धा यस्य ३ इति त्रीणि वल्मीकस्य ॥ सञ्चरः, "सञ्चारः" १ धरणः २ पिण्डलः, "पिण्डिलः" ३ सेतुः ४ इति चत्वारि सेतोः ॥ पन्थाः १ क्षुल्लमः, "खुलमः" २ वहः ३ ॥ १८ ॥ वाटः ४ पथः ५ माथः, "मार्गः"६ इति षण्मार्गस्य ॥ खपुरम्, खमिन्द्रियमाकाशं वा विपार्त्ति १ इत्येकम् ऊर्ध्वगपुरस्य ॥ हरिश्चन्द्रपुरम् १

त्रङ्गा त्रङ्गो निर्मुटस्तु पण्याजीवकचङ्गलौ । पुंसि हट्टक्रयारोहौ जन्यं ग्राममुखं च तत् ॥ २० ॥
स्यादभिस्यन्दनगरं शाखानगरमित्यपि । शासनं धर्मकीलः स्यान्मकुतिः शूद्रशासनम् ॥२१॥
पट्टोलिका क्लृप्तकीला पांशुकीलं न कस्यचित् । षड्भिर्यवैः स्यादङ्गुष्ठ एतैर्द्वादशभिर्भवेत् २२॥
वितस्तिः स्यादतो द्वाभ्यां हस्तः स्यात्तच्चतुष्टयम् । दण्डो धन्वन्तरं तस्य सहस्रद्वितयेन तु२३॥
क्रोशस्ताभ्यां तु गव्यूतिस्तद्द्वयं योजनं मतम् । चतुरष्टशतग्रामान्तर्द्रोणमुखकर्वटौ ॥ २४ ॥

इति भूमिवर्गः ॥ १ ॥

गर्भागारापवरके वास्तु स्याद् गृहपोतकः । स्यात्प्रासादो देवकुलं पुत्रिका शालभञ्जिका ॥१॥
ओको गृहं पिटं चालो वडभी चन्द्रशालिका । कूटागारं चाथ कपिशीर्षं घोटकशीर्षकम् ॥२॥
क्रमशीर्षं चाथ खरकुटी नापितशालिका । कुलायिका पक्षिशाला कारावेश्म वधाङ्ककम् ॥३॥
कायमानं तृणकुटी दर्भटं निभृतं गृहम् । कुडङ्गोद्धाटपिठरा इन्द्रकोषस्तु मञ्चकः ॥ ४ ॥

शोभम् २ इति द्वे शोभपुरस्य ॥ उद्रङ्गः १ प्रतिमार्गकः २ ॥ १९ ॥ त्रङ्गा ३ त्रङ्गः ४ इति चत्वारि प्रतिमार्गस्य ॥ निर्मुटः १ पण्याजीवकः २ चङ्गलः ३ इति त्रीणि वणिग्जनस्य ॥ हट्टक्रयः १ आरोहः २ जन्यम् ३ ग्राममुखम् ४ इति चत्वारि क्रयविक्रयस्थानस्य ॥ २० ॥ अभिस्यन्दनगरम्, अभिस्यन्देन प्रधाननगरातिवृद्ध्या तदतिवाहेन कृतं नगरम्, क्वचित् "अभिस्यन्दरमणम्" इति पाठः १ शाखानगरम् २ इति द्वे शाखानगरस्य ॥ शासनम् १ धर्मकीलः २ इति द्वे राजशासनस्य ॥ मकुतिः, "मङ्कुतिः" १ शूद्रशासनम् २ इति द्वे शूद्रशासनस्य ॥ २१ ॥ पट्टोलिका १ क्लृप्तकीला २ इति द्वे व्यवस्थापत्रस्य ॥ पांशुकीलम्, "पांसुकीलम्" १ इत्येकम् अनामपट्टोलिकायाः ॥ अङ्गुष्ठः १ इत्येकं वृद्धाङ्गुल्याः ॥ स च षड्भिर्यवैः प्रयामः स्यात् । अन्ये तु अष्टयवोदरपरिमाण इति च पठन्ति । तथोक्तं भास्कराचार्येण—"यवोदरैरङ्गुलमष्टसङ्ख्यैः" इति ॥ वितस्तिः १ इत्येकं वितस्त्याः ॥ सा तु एतैर्द्वादशभिरङ्गुलैः परिमिता भवेत् ॥ २२ ॥ हस्तः १ इत्येकं हस्तस्य ॥ अतो वितस्त्या द्वाभ्यां हस्तः स्यात् ॥ दण्डः १ धन्वन्तरम् २ इति द्वे हस्तचतुष्टयात्मकस्य दण्डस्य ॥ २३ ॥ क्रोशः १ इत्येकं हस्तद्विसहस्रपरिमितस्य क्रोशस्य ॥ गव्यूतिः, "गोयूतिः" १ इत्येकं क्रोशद्वयपरिमाणायाः गव्यूत्याः ॥ योजनम् १ इत्येकं चतुष्क्रोशपरिमाणस्य योजनस्य ॥ केचित्तु "चतुर्गव्यूतिर्योजनम्" इति पठन्ति ॥ द्रोणमुखः १ कर्वटः १ इत्येकैकं चतुरष्टशतग्राममध्ये यत्र सुन्दरस्थाने गत्वा सन्निहितजनपदवासिनो जनाः क्रयविक्रयादिना जीवन्ति तादृशस्य ग्रामस्य पुरस्य नगरमात्रस्य वा ॥ इह तु केचित् "द्विशतग्राममध्ये" इति पठन्ति ॥ २४ ॥

इति भूमिवर्गः ॥ १ ॥

---

गर्भागारम् १ अपवरकम् २ इति द्वे मध्यवर्त्तिनो वासगृहस्य ॥ वास्तु १ गृहपोतकः २ इति द्वे वासगृहभूमेः ॥ प्रासादः १ देवकुलम् २ इति द्वे राज्ञां देवानां वा गृहभेदस्य ॥ पुत्रिका १ शालभञ्जिका २ इति द्वे काष्ठनिर्मितपुत्तलिकायाः ॥ १ ॥ ओकः १ गृहम् २ इति द्वे गृहस्य ॥ पिटम् १ चालः २ इति द्वे गृहाच्छादनतृणादेः ॥ वडभी, "वलभी", "वडभिः" १ चन्द्रशालिका २ कूटागारम् ३ इति त्रीणि गृहचूडायाः प्रासादाग्रस्थगृहस्य च॥कपिशीर्षम् १ घोटकशीर्षकम्, "खोडकशीर्षकम्"२ ॥२॥ क्रमशीर्षम् ३ इति त्रीणि कपिशीर्षस्य प्राकाराग्रस्य च ॥ खरकुटी १ नापितशालिका २ इति द्वे क्षुरकर्मकारकगृहस्य ॥ कुलायिका, कुलायः पक्षिवासस्थानं विद्यतेऽस्याम्, "कुशालिका" १ पक्षिशाला २ इति द्वे पक्षिशालायाः ॥ कारावेश्म १ वधाङ्ककम् २ इति द्वे बन्धनागारस्य ॥ ३ ॥ कायमानम् १ तृणकुटी २ इति द्वे तृणच्छन्नगृहस्य ॥ दर्भटम्, "दर्भटः", "दर्भतः" १ इत्येकं निभृतगृहस्य गुप्तागारस्य ॥ कुडङ्गः, "कुद्रङ्कः" १ उद्घाटः २ पिठरः ३ इति त्रीणि गृहभेदस्य ॥ इन्द्रकोषः, इन्द्रस्य कोष इव सुखदायक-

वासागारं भोगगृहं कन्यापल्यापल्याटनिष्कुटाः । देवीगृहं तु वलभी लयनं सौगतालयः ॥ ५ ॥
शिवस्य वृषमण्डप्यां बुधैर्गोपिटकं स्मृतम् । वातायनं गृहाक्षं स्याद्वधूटशयनं तथा ॥ ६ ॥
उपशल्योपकण्ठे द्वे कपाटो द्वारकण्टकः । कवाटश्चाररं कन्थावाटः प्राकार इत्यपि ॥ ७ ॥

इति पुरवर्गः ॥ २ ॥

---

शैलः स्थावरधातुभृद्धरकुकीलौ व्यङ्ककः सानुमा
ञ्जीमूतः पृथुशेखरश्च कटकी दन्ती नगो निर्झरी ।
कुट्टारोऽथ हिमालयो नगपतिर्मेनाधवोमागुरू
कैलासो गणपर्वतश्च रजतप्रस्थः कुबेराचलः ॥ १ ॥

हिरण्यनाभमैनाकसुनाभा हिमवत्सुते । शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भारमित्यपि ॥ २ ॥
पूर्वाद्रिर्दिनमूर्धा स्यादस्ताद्रिश्चरमाचलः । चन्दनाद्रिस्तु मलयः क्रौञ्चः क्रौञ्चश्च माल्यवान् ३
महेन्द्रो मलयः सह्यः शुक्तिमान् गन्धमादनः । विन्ध्यश्च पारियात्रश्च सप्तैते च कुलाचलाः॥
अश्मा पञ्जरुकः पाटः पारटीटश्च मृन्मरुः । घर्षणालः शिलापुत्रो गृहाश्मा गृहकच्छपः ॥५॥

त्वात् १ मचकः २ इति द्वे मञ्चस्य ॥ ४ ॥ वासागारम् १ भोगगृहम् २ कन्याटः ३ पल्याटः ४ निष्कुटः ५ इति पञ्च वासयोग्यगृहस्य ॥ देवीगृहम् १ वलभी २ इति द्वे देवायतनस्य ॥ लयनम् १ सौगतालयः २ इति द्वे बुद्धार्थं कृतस्य गृहस्य ॥ ५ ॥ गोपिटकम्, "गोपुटिकम्" १ इत्येकं शिवस्य वृषमण्डप्याः ॥ वातायनम्, वातस्य अयनं गतिर्येन १ गृहाक्षम्, गृहस्य अक्षमिन्द्रियम् २ वधूटशयनम् ३ इति त्रीणि गवाक्षस्य ॥ ६ ॥ उपशल्यम् १ उपकण्ठम्, उपगतं कण्ठम् अस्थिस्थानम् २ इति द्वे ग्रामान्तस्य ॥ कपाटः १ द्वारकण्टकः २ कवाटः ३ अररम् ४ इति चत्वारि कवाटस्य ॥ कन्थावाटः १ प्राकारः २ इति द्वे प्राकारस्य ॥ ७ ॥

इति पुरवर्गः ॥ २ ॥

---

शैलः १ स्थावरः २ धातुभृत् ३ धरः ४ कुकीलः ५ व्यङ्ककः, "व्यंशकः" ६ सानुमान् ७ जीमूतः ८ पृथुशेखरः ९ कटकी १० दन्ती, दन्तः शिखरमस्त्यस्य, अथवा दन्तः सानुरस्त्यस्य ११ नगः १२ निर्झरी १३ कुट्टारः १४ इति चतुर्दश पर्वतस्य ॥ हिमालयः १ नगपतिः २ मेनाधवः, मेनायाः हिमालयपत्न्याः धवः स्वामी ३ उमागुरुः, उमायाः गुरुः पिता ४ इति चत्वारि हिमालयस्य ॥ कैलासः १ गणपर्वतः २ रजतप्रस्थः ३ कुबेराचलः ४ इति चत्वारि कैलासस्य ॥ १ ॥ हिरण्यनाभः १ मैनाकः २ सुनाभः ३ इति त्रीणि हिमवत्सुतस्य मैनाकस्य ॥ शिखरम् १ शृङ्गम् २ दन्तः ३ प्राग्भारम् ४ इति चत्वारि शैलाग्रस्य पर्वतशिखरस्य ॥ २ ॥ पूर्वाद्रिः १ दिनमूर्धा २ इति द्वे उदयपर्वतस्य ॥ अस्ताद्रिः १ चरमाचलः २ इति द्वे अस्तपर्वतस्य ॥ चन्दनाद्रिः १ मलयः २ इति द्वे मलयपर्वतस्य ॥ क्रौञ्चः १ क्रौञ्चः २ माल्यवान् ३ इति त्रीणि माल्यवत्पर्वतस्य ॥ कौञ्चक्रौञ्चशब्दयोः पृथक् प्रयोगौ दृष्टौ । उदाहरणे यथा "सस्मार नूनं दृढक्रौञ्चकुञ्जमागच्छिदो भार्गवमार्गणस्य" इति जानकीहरणम् । "स शैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्मणा । केतुतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" इति पुराणम् ॥ ३ ॥ महेन्द्रः १ मलयः २ सह्यः ३ शुक्तिमान्, "शक्तिमान्"४ गन्धमादनः, "ऋक्षः" ५ विन्ध्यः ६ पारियात्रः,७"पारियात्रकः" "पारिपात्रिकः"७ इति सप्त पृथगेकैकमेकैकस्य कुलाचलस्य ॥ तथाप्याह ग्रन्थान्तरे–" महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः" इति ॥४॥ अश्मा १ पञ्जरुकः, "पवारुकः" २ पाटः, "काटः" ३ पारटीटः ४ मृत् ५ मरुः ६ इति षट् अश्मनः ॥ घर्षणालः, घर्षणाय अलाति पर्याप्नोति १ शिलापुत्रः, शिलायाः पुत्र इव २ इति द्वे "शिलापुत्रः" इति ख्यातस्य प्रस्तरखण्डस्य ॥ गृहाश्मा १ गृहकच्छपः, गृहे कच्छप

गैरिकं तु वनालक्तं रक्तधातुर्गवेरुकम् । प्रत्यश्मा गिरिमृच्चाथ शिलाधातुः शितोपलः ॥६॥
मृत्कोलो वर्णलेखा तु कठिनी कक्खटी खटी ॥ ७ ॥

इति शैलवर्गः ॥ ३ ॥

---

वार्क्षं वनं तलं तल्कं गुहिलं समजं त्रसम् । लीलोद्यानं देवनं स्याद्वीथ्याली पङ्क्तिरावली॥१॥
वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः । चैत्यो देवतरुर्देवावासे करिभकुञ्जरौ ॥ २ ॥
छायातरुः स्थिरच्छायो वन्दा काकरुहा स्मृता । वनस्पतिर्निर्लुटः स्यात्फुल्लोन्निद्रविकस्वराः॥
स्मितोन्मुद्रौ किलिञ्जस्तु सूक्ष्मदार्वथ पल्लवः । किशलं किसलं चाथोत्कलिकाङ्गारिते समे ॥
गुच्छो गुलुच्छः क्षेपः स्याच्चमरी मञ्जरं न ना । मञ्जिश्च गोन्दी गुन्दी च मकरन्दो मरन्दवत् ५
वेधकः कण्टके पत्रसूचिद्रुनखवङ्किलाः । पिप्पलो वादरङ्गः स्याच्चैत्यद्रुः केशवालयः ॥ ६ ॥
यक्षोऽस्योडुम्बरं तु स्यात्फलेऽथ ग्रहनाशनः। देववृक्षो दलेगन्धिः सप्तपर्णः शिरोरुजा ॥ ७ ॥
दन्तकर्षणजम्बीरौ कतकोऽम्बुप्रसादनः । वरुणस्त्वश्मरीघ्नोऽथाध्वगभोग्यो मधुद्रुमः ॥ ८ ॥
कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकी । पिकबन्धुस्तु चूतः स्यात्स्त्रीप्रियः षट्पदातिथिः॥९॥

इव २ इति द्वे "शिलापट्टः" इति प्रसिद्धायाः पेषणशिलायाः ॥ ५ ॥ गैरिकम् १ वनालक्तम्, वनस्य अलक्त इव २ रक्तधातुः ३ गवेरुकम् ४ प्रत्यश्मा ५ गिरिमृद्, गिरेर्मृदिव ६ इति षट् गैरिकस्य ॥ शिलाधातुः १ शितोपलः, "सितोपलः", "श्वेतोपलः" २ ॥ ६ ॥ मृत्कोलः, "मक्कोलः" ३ इति त्रीणि पीतवर्णस्य गैरिकभेदस्य ॥ वर्णलेखा १ कठिनी २ कक्खटी ३ खटी ४ इति चत्वारि वर्णलेखनसाधनायाः खटिकायाः ॥ ७ ॥

इति शैलवर्गः ॥ ३ ॥

---

वार्क्षम् १ वनम् २ तलम् ३ तल्कम् ४ गुहिलम्, "गुहिनम्", "गहनम्" इत्यादयोऽप्यत्र ५ समजम् ६ त्रसम् ७ इति सप्त वनस्य ॥ लीलोद्यानम्, लीलार्थमुद्यानम् १ देवनम् २ इति द्वे क्रीडोद्यानस्य ॥ वीथी, "रिञ्छः" १ आली २ पङ्क्तिः ३ आवली ४ इकारान्ताः "वीथिः" "आलिः" "आवलिः" अप्यत्र ॥ इति चत्वारि पङ्क्तेः ॥ १ ॥ वृक्षः १ कारस्करः २ गच्छः, "गक्षः" ३ पलाशी ४ विष्टरः ५ स्थिरः ६ इति षट् वृक्षस्य॥ चैत्यः १ देवतरुः २ करिभः ३ कुञ्जरः ४ इति चत्वारि ग्रामादिप्रसिद्धस्य देवावासवृक्षस्य ॥ २ ॥ छायातरुः, छायार्थमाश्रितः तरुः १ स्थिरच्छायः २ इति द्वे छायार्थं निषेवितस्य तरोः ॥ वन्दा १ काकरुहा, काकवत् रोहति अन्तरिक्षे मूल्यशून्यतया जायते २ इति द्वे वन्दावृक्षस्य ॥ वनस्पतिः १ निर्लुटः, "निर्मुटः" २ इति द्वे अपुष्पवृक्षस्य ॥ फुल्लः १ उन्निद्रः २ विकस्वरः ३ ॥ ३ ॥ स्मितः ४ उन्मुद्रः ५ इति पञ्च कुसुमितवृक्षस्य ॥ किलिञ्जः १ सूक्ष्मदारुः २ इति द्वे सूक्ष्मकाष्ठस्य ॥ पल्लवः १ किशलम्, "विसलम्" २ किसलम्, "किसलयम्" अप्यत्र ३ इति त्रीणि पल्लवस्य ॥ उत्कलिका १ अङ्गारिता २ इति द्वे पलाशोत्कलिकायाः ॥ ४ ॥ गुच्छः १ गुलुच्छः २ क्षेपः ३ इति त्रीणि कलिकाकुसुमादिसमूहवतः स्तवकस्य ॥ चमरी १ मञ्जरम् २ मञ्जिः ३ इति त्रीणि पुष्पमञ्जर्याः ॥ गोन्दी १ गुन्दी २ इति द्वे पुष्परेणोः ॥ मकरन्दः १ मरन्दः २ इति द्वे पुष्पमधोः ॥ ५ ॥ वेधकः १ पत्रसूचिः २ द्रुनखः ३ वङ्किलः ४ इति चत्वारि कण्टकस्य ॥ पिप्पलः १ वादरङ्गः २ चैत्यद्रुः, "चैत्यदुः" ३ केशवालयः ४ ॥ ६ ॥ यक्षः ५ इति पञ्च पिप्पलस्य ॥ उडुम्बरम्, "उदुम्बरम्" १ इत्येकं तत्फलस्य ॥ ग्रहनाशनः, ग्रहं ग्रहजन्यारिष्टं नाशयति, "गृहनाशनः" १ देववृक्षः २ दलेगन्धिः, "दानगन्धिः" ३ सप्तपर्णः ४ शिरोरुजा ५ इति पञ्च सप्तपर्णवृक्षस्य ॥ ७ ॥ दन्तकर्षणः, "दन्तहर्षणः" १ जम्बीरः, "जम्भिरः" २ इति द्वे दन्तशठवृक्षस्य ॥ कतकः १ अम्बुप्रसादनः, अम्बूनि प्रसीदन्त्यनेन, "अम्बुप्रसादः" अप्यत्र २ इति द्वे "निर्मली" इति ख्यातस्य कतकवृक्षस्य ॥ वरुणः १ अश्मरीघ्नः २ इति द्वे वरुणवृक्षस्य ॥ अध्वगभोग्यः १ मधुद्रुमः २ ॥ ८ ॥ कपिचूतः ३ अम्रातकः ४ इति चत्वारि आम्रातकवृक्षस्य ॥ पशुहरीतकी, पशूनां हरीतकीव हितकारित्वात् १ इत्येकम् आम्रातकफलस्य ॥ पिकबन्धुः, पिकानां कोकिलानां बन्धुः १

मधुदूतो वसन्तद्रुर्महाकालोरुकालकौ। शोभाञ्जनस्तु स्त्रीचित्तहारी विद्रधिनाशनः॥ १० ॥
प्रभाञ्जनोऽथ प्राचीनपनसो गोहरीतकी। महाकपित्थो बिल्वश्च कोलिर्गृध्रनखी स्मृता॥११॥
स्यात्पिच्छिलदला स्वादुफलाऽथो नागरङ्गकः। चक्राधिवासी नारङ्गः किर्मीरस्त्वक्सुगन्धकः१२
स्याद्वर्मणः पिच्छिलत्वग्धवस्तु मधुरत्वचः। पिशाचद्रुः पीतफलः शाकोटः कर्कशच्छदः १३
अर्शोहितस्तु रक्षोघ्नो भल्लातक्यथ शाल्मली। दुरारोहा स्मृता पिण्डीतगरः कफवर्धनः॥१४॥
काकचिञ्ची तुलाबीजं खदिरो बालपत्रकः। यूपद्रुः कुष्ठहृच्चाथ करञ्जो घृतपूर्णकः॥ १५ ॥
रसायनफला पथ्या शक्रसृष्टा सुधोद्भवा। सरलो धूपवृक्षः स्याच्छोणको न्यङ्गुभूरुहः॥१६॥
चम्पकोषस्तु मुरजफलः स्यात्पनसश्च सः। डहुः क्षुद्राम्लपनसो निचुलो रक्तमञ्जरः॥ १७॥
निम्बोऽर्कपादपः पुण्यगन्धस्तु कुसुमाधिराट्। चयको वरलब्धश्च बकुलः सिंहकेशरः ॥१८॥
सीधुगन्धोऽथ कङ्केलिर्नटः कान्ताङ्घ्रिदोहदः। अशोकः पिण्डपुष्पस्तु दाडिमः फलशाडवः
दाडिम्बः पर्वरुट् च स्यात्स्वाद्वम्लः शुकवल्लभः। पिण्डीरोऽथ सुवर्णभनागाख्यो नागकेशरः॥

१ चूतः २ स्त्रीप्रियः, स्त्रीणां प्रियः ३ षट्पदातिथिः ४॥ ९॥ मधुदूतः ५ वसन्तद्रुः ६ इति षट् आम्रस्य॥ महाकालः १ उरुकालकः २ इति द्वे महाकालस्य ॥ शोभाञ्जनः, शोभायै आज्यते १ स्त्रीचित्तहारी, स्त्रियाश्चित्तं हराति २ विद्राधिनाशनः, विद्रधिं नाशयति ३॥ १०॥ प्रभाञ्जनः ४ इति चत्वारि शोभाञ्जनवृक्षस्य ॥ प्राचनिपनसः १ गोहरीतकी, गोः हरीतकीव हितकारित्वात् २ महाकपित्थः, महांश्चासौ कपित्थश्च ३ विल्वः ४ इति चत्वारि बिल्ववृक्षस्य ॥ कोलिः १ गृध्रनखी, गृध्रस्य नख इव पत्रादि अस्याः २॥ ११॥ पिच्छिलदला ३ स्वादुफला, स्वादु मधुररसं फलमस्याः ४ इति चत्वारि बदर्याः॥ नागरङ्गकः १ चक्राधिवासी २ नारङ्गः ३ किर्मीरः, किर्मीरं चित्रवर्णो यस्य ४ त्वक्सुगन्धकः ५॥ १२ ॥ वर्मणः ६ पिच्छलत्वक् ७ इति सप्त नागरङ्गकस्य॥ धवः १ मधुरत्वचः २ पिशाचद्रुः ३ पीतफलः, पीतं पाण्डुवर्णं फलमस्य ४ इति चत्वारि धवस्य॥ शाकोटः १ कर्कशच्छदः २ इति द्वे शाकोटस्य॥ १३ ॥ अर्शोहितः, अर्शसः हितः पथ्यम् १ रक्षोघ्नः २ भल्लातकी ३ इति त्रीणि भल्लातक्याः॥ शाल्मली १ दुरारोहा २ इति द्वे शाल्मल्याः॥ पिण्डीतगरः १ कफवर्धनः २ इति द्वे पिण्डीतगरस्य ॥ १४ ॥ काकचिञ्ची, काकवर्णा चिञ्चा प्रान्तभागः फले यस्याः, "काकचिञ्चिः", "काकचिञ्चा" १ तुलाबीजम्, तुलायाः बीजं मूलम् २ इति द्वे काकचिञ्च्याः॥ खदिरः १ बालपत्रकः २ यूपद्रुः ३ कुष्ठहृत् ४ इति चत्वारि खदिरस्य ॥ करञ्जः१ घृतपूर्णकः २ इति द्वे करञ्जस्य ॥ १५ ॥ रसायनफला, रसायनमौषधविशेष इव फलं व्याधिघातकं यस्याः १ पथ्या २ शक्रसृष्टा, शक्रेण सृष्टा निर्मिता ३ सुधोद्भवा ४ इति चत्वारि हरीतक्याः॥ सरलः १ धूपवृक्षः २ इति द्वे सरलवृक्षस्य ॥ शोणकः १ न्यङ्गुभूरुहः, न्यङ्गुरिव भूरुहः, तस्य बहुशृङ्गाकारत्वात्, "न्यङ्कुभूरुहः" २ इति द्वे शोणकवृक्षस्य॥ १६ ॥ चम्पकोषः, "चम्पकालुः", "चम्पकोल्वः" १ मुरजफलः, मुरज इव फलं यस्य २ पनसः३ इति त्रीणि पनसवृक्षस्य॥डहुः, "डहूः"१ क्षुद्राम्लपनसः, आम्लः आम्लरसः पनसः, क्षुद्रश्चासौ आम्लपनसश्च२ इति द्वे लकुचस्य॥ निचुलः१रक्तमञ्जरः, रक्तवर्णा मञ्जरी अस्त्यस्य२ इति द्वे हिज्जलवृक्षस्य ॥ १७ ॥ निम्बः १ अर्कपादपः, अर्कः अर्कवृक्ष इव तीक्ष्णः पादपः २ इति द्वे निम्बवृक्षस्य ॥ पुण्यगन्धः, पुण्यः पवित्रो गन्धो यस्य १ कुसुमाधिराट्, कुसुमानां कुसुमेषु वा अधिराट्, "कुसुमाधिपः" अप्यत्र २ चयकः ३ वरलब्धः, वरः उत्कर्षः पुष्पेषु लब्धो येन ४ इति चत्वारि चम्पकवृक्षस्य ॥ बकुलः, "वकुलः" १ सिंहकेशरः २ ॥ १८ ॥ सीधुगन्धः ३ इति त्रीणि बकुलस्य ॥ कङ्केलिः, "कङ्केल्लिः" "कङ्केलम्" अप्यत्र १ नटः २ कान्ताङ्घ्रिदोहदः कान्ताङ्घ्रिः नारीपादस्पर्शः दोहदं पुष्पोद्गमौषधं यस्य ३ अशोकः ४ इति चत्वारि अशोकवृक्षस्य॥ पिण्डपुष्पः, पिण्डं संहतं पुष्पं यस्य १ दाडिमः २ फलशाडवः ३ ॥ १९॥ दाडिम्बः ४ पर्वरुट् ५

स्यात्पुष्परोचनश्चाऽपि चूर्णं तस्य हरिद्रवः। निशिपुष्पा तु शेफाली कुटजः पाण्डुरद्रुमः ॥२१
लताशङ्कुतरुः शालो नीपो धाराकदम्बकः। कटङ्कटेरी हरिद्रा शिंशपा युग्मपत्रिका॥२२॥
पटोलं स्याद्राजफलं तस्य मूले तु रम्यकम्। सूत्रपुष्पस्तु कार्पासे जीर्णपर्णं कदम्बकम् ॥२३
प्रहसन्ती तु यूथी स्याद्दमनः पुष्पचामरः। मालतीं पुष्पकलिकां सौमनस्यायनीं विदुः ॥२४॥
कुन्दे स्याद्बोरटः पुंसि ग्रैष्मी तु नवमालिका। रक्तपिण्डस्त्वोड्रपुष्पः स्यादम्लानः कुरण्टकः ॥
कन्दलशिलीन्ध्रपुष्पे श्लेष्मघ्ना त्रिपुरमालिका प्रोक्ता।एरण्डहस्तिकर्णौ प्राचीनामलकवारिबदरे द्वे
बृहत्पाटलिधुस्तूरौ कदली त्वायतच्छदा। स्यात्तन्तुविग्रहा मञ्जिफला वारणवल्लभा ॥ २७ ॥
वातिङ्गणस्तु वार्ताकुर्वार्ताकः शाकबिल्वकः। क्लीबे वङ्गं च वार्त्ताकी स्यान्महाबृहतीत्यपि ॥२८
कुष्ठं गदाह्वयं मूलं त्वस्य पुष्करमूलकम्। वङ्गसेनस्त्वगस्तिद्रुः शुकनासो मुनिद्रुमः ॥ २९ ॥
अनलिः कुनली पुत्रजीवस्तु श्लीपदापहः। छत्रको मल्लिपत्रं स्यात्कुब्जको वारिकण्टकः॥३०॥

स्वाद्वम्लः, स्वादुः अम्लः यस्य, "स्वादूम्लः" ६ शुकवल्लभः, शुकानां वल्लभः प्रियः ७ पिण्डीरः, पिण्डं पिण्डाकारं फलमीरयति, "दाडिम्बसारपिण्डीरस्वाद्वम्लशुकवल्लभाः" इति रभसः८ इत्यष्टौ दाडिमस्य॥ सुवर्णाख्यः, "सुपर्णाख्यः" सुष्ठु पर्णं पत्रं तदाख्या यस्य १ इभाख्यः २ नागाख्यः ३ नागकेशरः ४ ॥ २० ॥ पुष्परोचनः ५ इति पञ्च नागकेशरस्य ॥ हरिद्रवः, हरिवर्णः द्रवः गुणो यस्य १ इत्येकं नागकेशरचूर्णस्य ॥ निशिपुष्पा, निशि रात्रौ पुष्पाणि यस्याः १ शेफाली २ इति द्वे शेफाल्याः ॥ कुटजः १ पाण्डुरद्रुमः, पाण्डुरश्चासौ द्रुमश्च २ इति द्वे कुटजवृक्षस्य ॥ २१ ॥ लताशङ्कुतरुः १ शालः २ इति द्वे शालवृक्षस्य ॥ नीपः १ धाराकदम्बकः २ इति द्वे नीपवृक्षस्य प्रावृषेण्यकदम्बभेदस्य च ॥ कटङ्कटेरी १ हरिद्रा २ इति द्वे हरिद्रायाः ॥ शिंशपा १ युग्मपत्रिका, "गुरुपत्रिका" २ इति द्वे शिंशपायाः ॥ २२ ॥ पटोलम् १ राजफलम् २ इति द्वे पटोलस्य ॥ रम्यकम् १ इत्येकं पटोलमूलस्य ॥ सूत्रपुष्पः, सूत्रगर्भं पुष्पं यस्य १ इत्येकं कार्पासस्य ॥ जीर्णपर्णम्, जीर्णानि पर्णान्यस्य १ कदम्बकम् २ इति द्वे कदम्बवृक्षस्य ॥ २३ ॥ प्रहसन्ती, "प्रहसन्तिनी" १ यूथी २ इति द्वे यूथिकायाः ॥ दमनः १ पुष्पचामरः, पुष्पं चामर इव यस्य २ इति द्वे मदनस्य ॥ मालती, मां लक्ष्मीं शोभां वा लतति वष्टे १ इत्येकं सौमनस्यायन्याः मालतीपुष्पकलिकायाः ॥ २४ ॥ बोरटः, "बोरवः" १ इत्येकं कुन्दस्य ॥ ग्रैष्मी, ग्रीष्मे भवा १ नवमालिका, "नवमल्लिका" २ इति द्वे नवमल्लिकायाः ॥ रक्तपिण्डः, रक्तः पिण्डः यस्य १ ओड्रपुष्पः, "ओण्डपुष्पः" ओण्ड्रं पुष्पमस्य २ इति द्वे जवावृक्षस्य ॥ अम्लानः १ कुरण्टकः २ इति द्वे "महामहा" इति प्रसिद्धस्य कुरण्टकवृक्षस्य ॥२५॥ कन्दलम् १ शिलीन्ध्रपुष्पम् २ः इति द्वे कन्दलीलतापुष्पस्य ॥ श्लेष्मघ्ना, "श्लेष्मघ्नी" १ त्रिपुरमल्लिका २ इति द्वे त्रिपुरमल्लिकायाः ॥ एरण्डः १ हस्तिकर्णः, हस्तिनः कर्ण इव पर्णमस्य २ इति द्वे एरण्डस्य ॥ प्राचीनामलकम्, प्राचीनं च तत् आमलकं च १ वारिबदरा २ इति द्वे "पानीयामलक" इति ख्यातस्य प्राचीनामलकस्य ॥ २६ ॥ बृहत्पाटलिः १ धुस्तूरः २ इति द्वे धुस्तूरवृक्षस्य ॥ कदली १ आयतच्छदा, आयताः दीर्घाः छदाः पत्राणि यस्याः २ तन्तुविग्रहा ३ मञ्जिफला, मञ्जिः मञ्जरी फले यस्याः ४ वारणवल्लभा, वारणानां हस्तिनां वल्लभा प्रिया ५ इति पञ्च कदलीवृक्षस्य ॥ २७ ॥ वातिङ्गणः १ वार्ताकुः २ वार्ताकः ३ शाकबिल्वकः, शाकोऽपि बिल्व इव ४ वङ्गम् ५ वार्ताकी ६ महाबृहती ७ "वातिङ्गणस्तु बार्तागो वार्ताकः शाकबिल्वकः" इति रभसः। "वार्ता वातिङ्गणे वृत्तौ" इति विश्वः। इति सप्त वार्ताकोः ॥ २८ ॥ कुष्ठम् १ गदाह्वयम् २ इति द्वे कुष्ठस्य ॥ पुष्करमूलकम् १ इत्येकं कुष्ठमूलस्य॥वङ्गसेनः वङ्गमिव शुभ्रा सेना पुष्पमस्य१अगस्तिद्रुः, अगस्तिप्रियः द्रुर्वृक्षः २ शुकनासः, शुकस्य नासेव पत्रमस्य ३ मुनिद्रुमः, मुनीनां प्रियो मुनिनामको वा द्रुमः ४ ॥ २९ ॥ अनलिः ५ कुनली ६ इति षट् मुनिवृक्षस्य ॥ पुत्रजीवः, "पुत्रजीविः", "पुत्रजीवका" अप्यत्र १ श्लीपदापहः, श्लीपदं रोगमपहन्ति २ इति द्वे

वास्तूकष्टक्कदेशीयः शाकवीरो घनामलः । शोथजिद्गरहा कालशाकोऽप्यथ महौषधी ॥ ३१ ॥
मही विषघ्नी चक्राङ्गी मत्स्याक्षी हिलमोचिका । जलब्रह्मी च शालिञ्चे पत्तूरो लोहमारकः॥३२॥
पेचुकं पेचुली पेचुर्नाडीचो विश्वरोचनः । केशराजो नागमारः वपरुर्भृङ्गसोदरः ॥ ३३ ॥
सुनिषण्णं चुचुः पुंसि छत्रपत्रं तमालकम् । स्थलपद्ममथो देवपली मध्वालुकं विदुः ॥ ३४॥
फलपुच्छो वरण्डालुः स्याद्रङ्गेष्टालुकं तु यत् । श्रीमस्तकः स्वस्तिकः स्याद्राहूच्छिष्टो रसोनकः॥३५
कुष्माण्डस्तु घृणावासस्तिमिषो ग्राम्यकर्कटी । वालुकी कर्कटी वारुर्मूत्रला रोमशा च सा॥३६॥
स्याच्चेलानश्चित्रफलः सुखाशो राजतेनिशः । लतापनसनाटाम्लौ सेटुरूर्ध्वासितस्तु यः॥३७॥
परारुः कारवेल्लोऽसौ गोडुम्बा राजचिर्भटः । मृत्युबीजस्तु वंशः स्यात्केतकः क्रकचच्छदः॥३८॥
दक्कटो बहुमूलः स्यात्करीरे वेणुकर्करः । काशोऽश्ववालः काकेक्षुर्वनहासश्च जन्तुला ॥ ३९ ॥
गुडदारुर्मधुतृणं स्यादिक्षुरसिपत्रकः । खारोदको नारिकेलः करकाम्भाः शिरःफलः ॥ ४० ॥

पुत्रञ्जीववृक्षस्य ॥ छत्रकः १ मल्लिपत्रम्, मल्लिरिव पत्रमस्य २ इति द्वे छत्रकवृक्षस्य ॥कुब्जकः १ इत्येकं "महसह" इति ख्यातस्य पुष्पप्रधानवृक्षस्य ॥ "अशोकात्पुष्पसाहस्रात्सेवतीपुष्पमुत्तमम् । सेवतीपुष्पसाहस्रात्कुब्जकं पुष्पमुत्तमम्"इति नारसिंहम् ॥वारिकण्टकः, वारिणः कण्टक इव१इत्येकं शृङ्गाटकस्य ॥ ३० ॥ वास्तूकः १ टक्कदेशीयः २ शाकवीरः, शाकेषु वीरः वीर्याधायकत्वात् ३ घनामलः, घनश्चासौ अमलश्च ४ । इति चत्वारि वास्तूकशाकस्य॥शोथजित्, शोथं जयति, "शोथजिद्धः" "शोथघ्नः" "शोथ-हृत्"इत्यादयोऽप्यत्र १ इत्येकं पुनर्नवायाः ॥ गरहा १ कालशाकः २ इति द्वे श्राद्धीयस्य कालशाकस्य ॥ महौषधी १ ॥ ३१ ॥ मही २ विषघ्नी ३ चक्राङ्गी, "चक्राङ्गा", चक्रमङ्गमस्याः ४ । इति चत्वारि कटु-रोहिण्याः ॥ मत्स्याक्षी, मत्स्याक्षीव पुष्पमस्याः १ हिलमोचिका २ जलब्रह्मी ३ इति त्रीणि "हिलमोचिका" इति ख्यातायाः जलब्रह्म्याः ॥ पत्तूरः, "पक्कूरः" १ लोहमारकः, लोहं मारयति जारयति २ इति द्वे शालि-ञ्चशाकस्य ॥ ३२ ॥ पेचुकम्"केचुकम्"पेचुली २ पेचुः ३ नाडीचः, "नारीचः" ४ विश्वरोचनः ५ इति पञ्च नाडीचशाकस्य ॥ केशराजः, केशा राजन्तेऽनेन १ नागमारः, नागं हस्तिनं मारयाति २ वपरुः, "वररुः" ३ भृङ्गसोदरः, "मङ्गसोदरः"४ इति चत्वारि भृङ्गराजस्य ॥ ३३ ॥ सुनिषण्णम् १ चुचुः २ इति द्वे सुनि-षण्णशाकस्य ॥ छत्रपत्रम्, छत्रमिव पत्रमस्य १ तमालकम् २ स्थलपद्मम् ३ इति त्रीणि स्थलपद्मस्य ॥ देवपली, "देवपत्री" १ मध्वालुकः, मधुर्मधुर आलुर्यस्य २ इति द्वे "मध्वालु इति ख्यातस्य मूलभेदस्य ॥ ३४ ॥ फलपुच्छः, फलं पुच्छमिव यस्य १ वरण्डालुः २ इति द्वे "वरण्डालु" इति प्रसिद्धस्य एरण्डवृक्ष-विशेषस्य॥रङ्गेष्टालुकम् १ श्रीमस्तकः२स्वस्तिकः ३ इति त्रीणि"रङ्गेष्टालु"इति ख्यातस्य सितावरशाकस्य ॥ राहूच्छिष्टः १ रसोनकः २ इति द्वे लशुनस्य ॥ ३५ ॥ कुष्माण्डः, "कूष्माण्डः" अप्यत्र १ घृणावासः २ तिमिषः ३ ग्राम्यकर्कटी, ग्राम्या च सा कर्कटी च ४ इति चत्वारि कुष्माण्डस्य ॥ वालुकी १ कर्कटी २ वारुः ३ मूत्रला ४ रोमशा ५ इति पञ्च कर्कटयाः ॥ ३६ ॥ चेलानः, "चेलालः" १ चित्रफलः, चित्रं फलं यस्य २ सुखाशः, "सुखेनाऽश्यते"३ राजतेनिशः, "राजतामिषः", "राजतेमिषः" ४ लतापनसः, लतायां पनसमिव स्थूलं फलमस्य ५ नाटाम्लः, "नाटाम्रः" ६ सेटुः "सेंदुः" ७ इति सप्त "राजतिनिश" इति ख्यातस्य सुखाशवृक्षस्य ॥ ऊर्ध्वासितः, ऊर्ध्वमुपरिभागे असितः कृष्णः आसितो वा १ ॥ ३७ ॥ परारुः१ "पवारुः" २ कारवेल्लः ३ गोडुम्बा ४ राजचिर्भटः, "राजचिर्चिटः", "राजचिर्भटी" अप्यत्र ५ इति पञ्च कारवेल्लस्य ॥ मृत्युबीजः १ वंशः २ इति द्वे वंशस्य ॥ केतकः १ क्रकचच्छदः २ इति द्वे केतकस्य ॥३८॥ दक्कटः १ बहुमूलः २ इति द्वे "बहुमूलः" इति प्रसिद्धस्य शिग्रोः ॥ वेणुकर्करः "वेणुकर्कटः"१इत्येकं करीरस्य॥काशः १ अश्ववालः२काकेक्षुः३ वनहासः, "वनहारः"४जन्तुला, "चुर्णला" ५ इति पञ्च"काशः"इति ख्यातस्य काशतृणस्य॥३९॥गुडदारुः१मधुतृणम्,२इक्षुः ३असिपत्रकः इति४ चत्वारि इक्षोः ॥ खरोदकः, "खानोदकः"१ नारिकेलः २ करकाम्भाः, करकायाः अम्भ इवाम्भो यस्य ३ शिरःफलः ४

सुरञ्जनो गोपदलो राजतालश्छटाफलः । करमट्टस्तन्तुसारो गुवाकः कोटि इत्यपि ॥ ४१ ॥
रामपूगस्तु कामीनो मुनिपूगः सुरेवटः । पूगरोटस्तु हिन्तालः क्लीबं किरीटि तत्फलम् ॥४२॥
घनामयः स्यात्खर्जूरो द्वौ तु काचिमभञ्जरू । तरौ देवकुलोद्भूते दूर्वा तु हरितालिका ॥ ४३ ॥

इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहः कण्ठीरवो भीमविक्रान्तः करिमाचलः । पञ्चशिखश्च शैलाटः पारीन्द्रः श्वेतपिङ्गलः॥१॥
मरुत्प्लवश्च नादोऽस्य चुकारः क्ष्वेडितं च तत् । उत्पादकस्तु शरभः शार्दूलोऽष्टापदश्च सः ॥
अथ हिंस्रपशुर्व्याडः श्वापदः शिबिरित्यपि । बाध्नीणसस्त्वेकचरो गणोत्साहश्च गण्डकः॥३॥
हिंसारुः श्वापदो व्याघ्रे महिषस्तु रजस्वलः । दंशभीरुर्जरन्तश्च लालिको यमवाहनः ॥ ४ ॥
अथ शूकरे वनाहिरदन्तायुधवक्रवज्रदीर्घरदाः।सूचीरोमा बहुसूराखनिकः स्थूलनासिको भूक्षित्
एणः कुरङ्गमो रिश्यः स्यादृश्यश्चारुलोचनः । गोलाङ्गूले कपित्थास्यदधिशोणनगाटनाः॥६॥
किखिश्च हूरवस्तु स्याच्छृगालो घोररासनः । लोपाशो मृतमत्तश्च वनश्वाऽथ शृगालिका ॥७॥
लोपाशिका दीप्तजिह्वा किखिरुल्कामुखी च सा । विडालः कुन्दमो नक्तचारी दीप्ताक्षजाहकौ॥

इति चत्वारि नारिकेलस्य ॥ ४० ॥ सुरञ्जनः १ गोपदलः २ राजतालः ३ छटाफलः ४ करमट्टः ५ तन्तुसारः ६ गुवाकः ७ कोटः, "झोरः" ८ इत्यष्टौ पूगवृक्षस्य ॥ ४१ ॥ रामपूगः, रामः अभिरामः पूगः १ कामीनः २ मुनिपूगः ३ सुरेवटः ४ इति चत्वारि "रामपूग" इति ख्यातस्य पूगभेदस्य ॥ पूगरोटः १ हिन्तालः २ इति द्वे हिन्तालस्य ॥ किरीटि, "तिरीटि" १ इत्येकं हिन्तालफलस्य ॥ ४२ ॥ घनामयः १ खर्जूरः २ इति द्वे खर्जूरस्य ॥ काचिमः १ भञ्जरुः २ इति द्वे देवकुलोद्भूतस्य तरोः ॥ दूर्वा १ हरितालिका २ इति द्वे दूर्वायाः ॥ ४३ ॥

इति वनौषधिवर्गः ॥ ४ ॥

---

सिंहः १ कण्ठीरवः २ भीमविक्रान्तः ३ करिमाचलः ४ पञ्चशिखः ५ शैलाटः ६ पारीन्द्रः, "पारिन्द्रः" ७ श्वेतपिङ्गलः, देहेन श्वेतः जटया पिङ्गलः ८ ॥ १ ॥ मरुत्प्लवः, "मरुत्लवः" ९ इति नव सिंहस्य ॥ चुकारः १ क्ष्वेडितम् २ इति द्वे सिंहनादस्य ॥ उत्पादकः, ऊर्ध्वस्थिताः पादाः यस्य, अस्य पृष्ठस्थचतुश्चरणत्वादूर्ध्वपादत्वम् । तस्य लक्षणम्—"अष्टपादूर्ध्वनयन ऊर्ध्वपादचतुष्टयः" इत्युक्तम् १ शरभः २ शार्दूलः ३ अष्टापदः ४ इति चत्वारि "शरभमृग" इति ख्यातस्य गजारातेः ॥ २ ॥ हिंस्रपशुः १ व्याडः २ श्वापदः, शुन इवापदस्मात् ३ शिबिः ४ इति चत्वारि हिंस्रपशोः ॥ बाध्नीणसः, "बाध्रीनसः" १ एकचरः २ गणोत्साहः ३ गण्डकः ४ इति चत्वारि गण्डकपशोः ॥ ३ ॥ हिंसारुः १ श्वापदः २ व्याघ्रः ३ इति त्रीणि व्याघ्रस्य ॥ महिषः १ रजस्वलः २ दंशभीरुः, दंशात् वनमक्षिकायाः भीर्यस्य ३ जरन्तः ४ लालिकः, "नालिकः" ५ यमवाहनः, यमं वाहयति ६ इति षट् महिषस्य ॥ ४ ॥ वनाहिरः १ दन्तायुधः, दन्ता आयुधा इव यस्य २ वक्ररदः ३ वज्ररदः, "वज्रदन्तः" इत्यादयोऽप्यत्र ४ दीर्घरदः, दीर्घौ रदौ यस्य, "दीर्घरतः" ५ सूचीरोमा, सूची इव रोमाणि यस्य ६ बहुसूः ७ आखनिकः ८ स्थूलनासिकः ९ भूक्षित् १० इति दश शूकरस्य ॥ ५ ॥ एणः १ कुरङ्गमः, कौ रङ्गं मिमीते २ रिश्यः ३ ऋश्यः ४ चारुलोचनः ५ इति पञ्च कुरङ्गस्य ॥ गोलाङ्गूलः, गोरिव कृष्णं लाङ्गूलमस्य १ कपित्थास्यः २ दधिशोणः ३ नगाटनः ४ ॥ ६ ॥ किखिः ५ इति पञ्च वानरस्य ॥ हूरवः, "हूहू" इति रवो यस्य १ शृगालः २ घोररासनः, "घोरवाशनः" ३ लोपाशः, "लोपाकः" ४ मृतमत्तः ५ वनश्वा ६ इति षट् शृगालस्य ॥ शृगालिका १ ॥ ७ ॥ लोपाशिका, "लोमालिका" २ दीप्तजिह्वा ३ किखिः ४ उल्कामुखी ५ इति पञ्च शृगालिकायाः ॥ विडालः १ कुन्दमः २ नक्तचारी ३ दीप्ताक्षः ४

शशकस्तु वनाखुः स्यात्खट्टाशी पूतिशालिका । गवयस्तु गवानूक एडकः शिशुवाह्यकः॥९॥
वनच्छागोऽथ गन्धौतुः खट्टाशो वनवासनः । उन्दुरुस्तुटुमो रन्ध्रबभ्रुर्दीना तु मूषिका ॥१०॥
स्याच्चिकी वेश्मनकुलः पुंवृषो गन्धमूषिकः । स्याद्वेदारः क्रकचपात्कृकलाशस्तृणाञ्जनः ॥११॥
प्रतिसूर्योऽप्याञ्जिनस्तु चित्रकोलो हलाहलः । कारस्कराटिका कर्णजलौका स्यादथो वटिः १२॥
उत्पादिको देहिका स्यादष्टपादस्तु किन्तनुः । प्रासादकुक्कुटो झिल्लीकण्ठो गृहकपोतकः ॥१३॥
पारावतोऽथ शक्राख्यो दिवान्धो वक्रनासिकः । हरिनेत्रो दिवाभीतो नखाशी पीयुवर्घरौ ॥१४॥
काकभीरुर्नक्तचारी कणाटीनस्तु खञ्जनः । काकच्छदः खञ्जखेलस्ततालो मुनिपुत्रकः ॥१५॥
भद्रनामा रतनिधिः काष्ठकुट्टः शतच्छदे । दीर्घपादस्तु कङ्कः स्याद्गलेगण्डस्तु मर्कटः ॥ १६ ॥
चातके बभ्रुवापीहघनतोलत्रिशङ्कवः । वर्षप्रियोऽथ मेधावी चिरिः कीरः पलाशनः ॥१७॥
कुक्कुटस्तु विवृत्ताक्षो रात्रिवेदी कलाविकः । उषाकलोऽथ ताम्राक्षः काकपुष्टः कुहूमुखः॥१८॥
मधुकण्ठो घोषयित्नुः कामतालः सुतार्दनः। काको रतज्वरः सूत्री श्रावको गूढमैथुनः॥१९॥
कारवः परभृत्युश्च ध्रुण्टाको मौकुलिर्द्विकः । शक्रजः सत्यवाक्काणोऽपकृष्टो नगरीवकः ॥२०॥

जाहकः ५ इति पञ्च विडालस्य ॥ ८ ॥ शशकः १ वनाखुः २ इति द्वे शशकस्य ॥ खट्टाशी, "खट्टासी" १ पूतिशालिका, "पूतिशारिजा" २ इति द्वे खट्टाश्याः ॥ गवयः १ गवानूकः, "गवालुकः" २ इति द्वे गवानूकस्य ॥ एडकः १ शिशुवाह्यकः २ ॥ ९ ॥ वनच्छागः ३ इति त्रीणि एडकस्य ॥ गन्धौतुः १ खट्टाशः २ वनवासनः ३ इति त्रीणि खट्टाशस्य ॥ उन्दुरुः, "उन्दुरः" "उन्दूरः" "उन्दरुः" चाप्यत्र १ तुटुमः, "तुटुमो हारमहार्यवेपथुः" इति जानकीहरणम् २ रन्ध्रबभ्रुः ३ इति त्रीणि मूषिकस्य ॥ दीना १ मूषिका २ इति द्वे मूषिकायाः ॥ १० ॥ चिकः, "चिक्कः" १ वेश्मनकुलः, वेश्मनि नकुलः २ पुंवृषः ३ गन्धमूषिकः ४ इति चत्वारि छुछुन्दर्याः ॥ वेदारः १ क्रकचपाद्, क्रकचमिव पादौ यस्य, "क्रकचपादः" २ कृकलाशः ३ तृणाञ्जनः ४ ॥ ११ ॥ प्रतिसूर्यः ५ इति पञ्च कृकलाशस्य ॥ आञ्जनः, "अञ्जिनामा" १ चित्रकोलः २ हलाहलः ३ इति त्रीणि "गृहगोधिका" इति ख्यातायाः पल्ल्याः ॥ कारस्कराटिका १ कर्णजलौका, "कर्णजलूका" अप्यत्र २ इति द्वे "कर्णजलौका" इति ख्यातायाः शतपद्याः ॥ वटिः १ ॥ १२ ॥ उत्पादिकः २ देहिका ३ इति त्रीणि उत्पादिकस्य ॥ अष्टपादः, "अष्टपाद्" "अष्टपदः" अप्यत्र १ किन्तनुः २ इति द्वे "लूता" इति ख्यातस्य कीटभेदस्य ॥ प्रासादकुक्कुटः १ झिल्लीकण्ठः २ गृहकपोतकः ३ ॥१३॥ पारावतः ४ इति चत्वारि पारावतस्य ॥ शक्राख्यः, शक्रस्येवाख्या यस्य १ दिवान्धः २ वक्रनासिकः ३ हरिनेत्रः ४ दिवाभीतः ५ नखाशी ६ पीयुः ७ घर्घरः ८॥१४॥ काकभीरुः ९ नक्तचारी १० इति दश उलूकस्य ॥ कणाटीनः १ खञ्जनः २ काकच्छदः, काकस्य च्छदः पक्ष इव छदो यस्य, "काकच्छादिः" ३ खञ्जखेलः ४ ततालः, "तातनः" ५ मुनिपुत्रकः ६ ॥ १५ ॥ भद्रनामा ७ रतनिधिः ८ इत्यष्टौ खञ्जनस्य ॥ काष्ठकुट्टः १ इत्येकं "शतच्छदः" इति प्रसिद्धस्य काष्ठकुट्टपक्षिणः ॥ दीर्घपादः १ कङ्कः २ इति द्वे कङ्कस्य ॥ गलेगण्डः १ मर्कटः २ इति द्वे गलेगण्डपक्षिणः॥ १६॥ बभ्रुः १ वापीहः २ घनतोलः ३ त्रिशङ्कुः ४ वर्षप्रियः ५ इति पञ्च चातकपक्षिणः ॥ मेधावी १ चिरिः, "चिमिः" २ कीरः ३ पलाशनः, "फलाशनः" "पलादनः" अप्यत्र, "कीरस्तु शुको रक्तपादः पलादनः" इति हैमः ४ इति चत्वारि कीरपक्षिणः ॥ १७ ॥ कुक्कुटः १ विवृत्ताक्षः २ रात्रिवेदी ३ कलाविकः ४ उषाकलः ५ इति पञ्च "उषाकलः" इति ख्यातस्य कुक्कुटस्य ॥ ताम्राक्षः १ काकपुष्टः, काकेन पुष्टः यः २ कुहूमुखः, कुहूरिति शब्दः मुखे यस्य ३ ॥ १८ ॥ मधुकण्ठः, मधुः मधुरः कण्ठो यस्य ४ घोषयित्नुः ५ कामतालः ६ सुतार्दनः, सुतस्य अर्दनं यस्य, "सुतर्दनः" ७ इति सप्त कोकिलपक्षिणः ॥ काकः १ रतज्वरः, रते रमणे ज्वरः यस्य "रतजरः" २ सूत्री ३ श्रावकः ४ गूढमैथुनः, गूढं केनाप्यदृश्यं मैथुनं यस्य ५ ॥ १९ ॥ कारवः, का इति रवो यस्य ६ परभृत्युः ७ ध्रुण्टाकः ८ मौकुलिः, "मौद्गलिः" ९ द्विकः १०

ऐन्द्रिश्च नाडीजङ्घोऽथ गृध्रः स्याद् दूरदर्शनः । शितिकण्ठस्तु दात्यूहः काकमद्गुः कगेट्टुरः ।
चिरम्भणस्तु चिल्लः स्यात्खभ्रान्तिः कण्ठनीडकः ॥ २१ ॥
सूक्ता मदनशलाका चित्राक्षी शालिकोऽवचण्डा चाशकुनज्ञा तु ज्येष्ठा गृहोलिकाऽटाट्टनी मूली
दीर्घजङ्घो निशैडः स्याद्वकोटः शुक्लवायसः । कंकरुर्द्वारबलिभुक्छिखी चन्द्रविहङ्गमः २३॥
बकेरुका बलाका स्यात्कुररो मत्स्यनाशनः । द्वन्द्वचारी चक्रवाकः सारसस्तु कलाङ्कुरः २४
गोनर्दश्चित्रपक्षस्तु तित्तिरिः स्यात्कपिञ्जलः । लघुमांसो मयूरस्तु चन्द्रकी चित्रमेखलः २५॥
प्रचलाकी सितापाङ्गशिखावलगलव्रताः । मार्जारकण्ठोऽथ तिलमयूरः स्यात्कुरुण्टकः ॥२६॥
झम्पाशनो मीनरङ्को नासाच्छिन्ना तु पूर्णिका । पिपीलिका तु हारी स्याद्यमकीटस्तु घुर्घुरः२७
स्यान्मर्कटस्तु शलक आशबान्धोऽस्य जालके । फालखेला गरुद्रोधा भारती व्योमनासिका२८
चञ्चुसूचिस्तु सुगृहः पीततुण्डोऽथ सर्षपी । हापुत्रिका खञ्जनिका तुलिकास्फोटिके समे२९॥
करटुर्व्याधनः कर्चूनेरः कूणिश्च वाग्गुदः । वर्तिका विष्णुलिङ्गी स्याल्लावको लघुजङ्गलः३०
सरःकाकस्तु हंसः स्याज्जालपात्पुरुदंशकः । गोभण्डीरः पङ्ककीरः कोयष्टिर्जलकुक्कुभः ३१॥
जीवञ्जीवो विषमृत्युर्जीवजीवोऽथ मक्षिका।माचिका भम्भराली च दंशः स्याद्भाम्भरालिकः३२

शक्रजः ११ सत्यवाक् १२ काणः १३ अपकृष्टः, " अपकृष्णः " १४ नगरीवकः १५ ॥ २० ॥ ऐन्द्रिः १६ नाडीजङ्घः १७ इति सप्तदश काकस्य ॥ गृध्रः १ दूरदर्शनः , " दूरदर्शिनिः " " दूरदृग् " अप्यत्र २ इति द्वे गृध्रस्य ॥ शितिकण्ठः १ दात्यूहः २ काकमद्गुः ३ कगेट्टुरः, " कचाटुरः "४ इति चत्वारि दात्यूहस्य ॥ चिरम्भणः १ चिल्लः, " चिल्लुः " २ खभ्रान्तिः ३ कण्ठनीडकः ४ इति चत्वारि चिल्लस्य ॥ ॥ २१ ॥ सूक्ता १ मदनशलाका २ चित्राक्षी ३ शालिका, " शारिका " अप्यत्र४ अवचण्डा ५ इति पञ्च शारिकायाः॥ शकुनज्ञा१ ज्येष्ठा २ गृहोलिका३ अटाट्टनी, "अट्टनी "४ मूली ५ इति पञ्च गृहगोधिकायाः ॥ ॥२२॥दीर्घजङ्घः१निशैडः,"निशैतः"२वकोटः३ शुक्लवायसः४कङ्केरुद्,"कङ्केरुः"५ वारबलिभुक्, "दारुबलिभुक्" ६ शिखी ७ चन्द्रविहङ्गमः ८ इत्यष्टौ बकस्य ॥ २३ ॥ बकेरुका १ बलाका २ इति द्वे बलाकायाः ॥ कुररः १ मत्स्यनाशनः २ इति द्वे कुररस्य ॥ द्वन्द्वचारी १ चक्रवाकः २ इति द्वे चक्रवाकस्य ॥ सारसः १ कलाङ्कुरः २ ॥ २४ ॥ गोनर्दः, "गोमर्दः" ३ इति त्रीणि सारसपक्षिणः ॥ चित्रपक्षः १ तित्तिरिः, "तित्तिरः" अप्यत्र २ कपिञ्जलः ३ लघुमांसः ४ इति चत्वारि तित्तिरपक्षिणः ॥ मयूरः १ चन्द्रकी २ चित्रमेखलः ३ ॥ २५ ॥ प्रचलाकी ४ सितापाङ्गः, "शिखापाङ्गः" ५ शिखावलः ६ गलव्रतः ७ मार्जारकण्ठः, "मार्जारकः" "मार्जालकः" अप्यत्र८ इत्यष्टौ मयूरस्य ॥ तिलमयूरः १ कुरुण्टकः, "गुरण्डकः" २ इति द्वे तिलमयूरस्य ॥ २६ ॥ झम्पाशनः, "मत्स्याशनः" १ मीनरङ्कः २ इति द्वे मीनरंकस्य ॥ नासाच्छिन्ना १ पूर्णिका २ इति द्वे पूर्णिकायाः ॥ पिपीलिका १ हारी, "हारा", इति द्वे पिपीलिकायाः ॥ यमकीटः१ घुर्घुरः, घुरित्यव्यक्तं ध्वानिं घुरति २ इति द्वे घुर्घुरस्य ॥ २७ ॥ मर्कटः १ शलकः २ इति द्वे मर्कटस्य ॥ आशाबन्धः १ इत्येकं मर्कटजालस्य ॥ फालखेला १ गरुद्रोधा, "गरुद्योधी" २ भारती ३ व्योमनासिका, "व्योमलासिका" ४ इति चत्वारि भारत्याः ॥ एषा भारती तु पक्षिभेदे स्यात् ॥ २८ ॥ चञ्चुसूचिः, चञ्चुः सूचिरिव यस्य १ सुगृहः २ पीततुण्डः, "पीतमुण्डः" ३ इति त्रीणि कारण्डवपक्षिणः ॥ सर्षपी, "सर्षपा" १ हापुत्रिका ३ खञ्जनिका ३ तुलिका ४ स्फोटिका, "स्कोटिका" ६ इति पञ्च हापुत्रिकायाः॥ ॥ २९ ॥ करटुः, "करटः" १ व्याधनः २ कर्चूनेरः ३ इति त्रीणि करटपक्षिणः ॥ कूणिः १ वाग्गुदः, "वागदः" २ इति द्वे वाग्गुदस्य॥ वर्तिका १ विष्णुलिङ्गी २ इति द्वे वर्तिकायाः ॥ लावकः १ लघुजङ्गलः २ इति द्वे लावकस्य ॥ ३० ॥ सरःकाकः १ हंसः २ जालपाद्, जाल इव पादावस्य, "जलपादिः" ३ पुरुदंशकः ४ इति चत्वारि हंसस्य ॥ गोभण्डीरः १ पङ्ककीरः २ कोयष्टिः ३ जलकुक्कुभः ४ इति चत्वारि जलकुक्कुभस्य ॥ ३१ ॥ जीवञ्जीवः १ विषमृत्युः २ जीवजीवः ३ इति त्रीणि चकोरपक्षिणः ॥ मक्षिका १

भाङ्कारी चर्मचटयां तु जतुनी गृहमाचिका । विषस्रक्को भृङ्गरोलो वरोलस्तृणषट्पदः ॥३३॥
वरटी तु वरोली स्याद्ब्राह्मण्यथ तमोमणिः । ध्वान्तोन्मेषश्च खद्योतो ज्योतिर्बीजो निमेषरुक्॥३४
भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुंदो मधुकेशटः ॥ ३५ ॥
रेणुवासोऽथ मशको घोषो रणरणश्च सः। पक्षी तु नाडीचरणः स्याच्चञ्चुभृदनेकजः ॥ ३६॥
स्युः खगोत्पतवारङ्ककण्ठाग्निर्व्योमचारिणः । युगलद्वन्द्वयुग्मानि युगं यमलयामले ॥ ३७ ॥

इति सिंहादिवर्गः ॥ ५ ॥

स्त्री वधूर्योषिता रामा मण्डयन्ती वधूजनः। कन्यकाऽलकनन्दा सा दूषिता धर्मकारिणी ॥१॥
सस्वेदा चाथ तरुणी दिक्करी धनिका च सा ।मरुण्डोच्चललाटा स्यात्सश्मश्रुर्नरमानिनी॥२॥
स्नुषा वधूटी मधुरनिस्वना हंसगद्गदा । सुखोष्णशीता तुहिनग्रीष्मयोर्वरवर्णिनी ।
क्रोधना भामिनी चण्डी दारुस्त्री शालभञ्जिका ॥ ३ ॥
विरक्ता दुर्भगा सप्तपुत्रसूः सुतवस्करा । पतिव्रतैकपत्नी स्याद्विधवा जालिका मता ॥ ४ ॥
विश्वस्ता लञ्जिनी तु स्याल्लञ्जिका कलकूंजिका। वेश्या शूला वारवाणिर्झर्झराऽप्यथ कुट्टिनी५

माचिका २ भम्भराली ३ इति त्रीणि मक्षिकायाः ॥ दंशः १ भाम्भरालिकः, "भ्रमरालिका" २ ॥ ३२ ॥ भाङ्कारी, "भङ्कारी" ३ इति त्रीणि दंशस्य ॥ चर्मचटी १ जतुनी २ गृहमाचिका ३ इति त्रीणि चर्मचटयाः ॥ विषस्रक्कः १ भृङ्गरोलः २ वरोलः ३ तृणषट्पदः ४ इति चत्वारि भृङ्गरोलस्य ॥ ३३ ॥ वरटी १ वरोली, "वराली" २ ब्राह्मणी ३ इति त्रीणि वरटयाः ॥ तमोमणिः, तमसि अन्धकारे मणिरिव १ ध्वान्तोन्मेषः २ खद्योतः ३ ज्योतिर्बीजः ४ निमेषरुक् ५ इति पञ्च खद्योतस्य ॥ ३४ ॥ भ्रमरः १ चञ्चरीकः २ रोलम्बः ३ मधुसूदनः, मधु माध्वीकं सूदयति भक्षयति ४ इन्दिन्दिरः ५ पुष्पकीटः ६ मधुदः, "मधुद्रोक्" ७ मधुकेशटः ८ ॥ ३५ ॥ रेणुवासः, "वेणुवासः" ९ इति नव भ्रमरस्य ॥ मशकः १ घोषः २ रणरणः ३ इति त्रीणि मशकस्य ॥ पक्षी १ नाडीचरणः २ चञ्चुभृत् ३ अनेकजः ४ ॥ ३६ ॥ खगः ५ उत्पतः ६ वारङ्कः ७ कण्ठाग्निः, कण्ठे अग्निः पाकाग्निर्यस्य ८ व्योमचारी ९ इति नव पक्षिणः ॥ युगलम् १ द्वन्द्वम् २ युग्मम् ३ युगम् ४ यमलम् ५ यामलम् १ इति षड् युग्मस्य ॥ ३७ ॥

इति सिंहादिवर्गः ॥ ५ ॥

स्त्री १ वधूः २ योषिता ३ रामा ४ मण्डयन्ती ५ वधूजनः ६ इति षट् स्त्रियाः ॥ कन्यका, "कन्यका दशमे प्रोक्ता" इति स्मृतिवचनात् अयं कन्यकाशब्दो दशवर्षायां कुमार्यां वर्तते १ अलकनन्दा २ इति द्वे कन्यायाः ॥ दूषिता, "भूषिता" १ धर्मकारिणी २ ॥ १ ॥ सस्वेदा ३ इति त्रीणि दूषितादिस्त्रीविशेषाणाम् ॥ तरुणी १ दिक्करी २ धनिका ३ इति त्रीणि तरुण्याः ॥ मरुण्डा १ उच्चललाटा २ इति द्वे उच्चललाटायाः ॥ सश्मश्रुः, सह श्मश्रुणा या वर्तते १ नरमानिनी २ इति द्वे सश्मश्र्वाः ॥ २ ॥ स्नुषा १ वधूटी २ इति द्वे स्नुषायाः ॥ मधुरनिस्वना १ हंसगद्गदा, "हंसगङ्गदा" २ इति द्वे मधुरनिस्वनायाः ॥ वरवर्णिनी १ इत्येकं शीतग्रीष्मकालयोः सुखोष्णायाः सुखशीतायाः स्त्रियाः ॥ तथाऽप्युक्तम्—"शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला ॥ तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्तिता" इति ॥ क्रोधना १ भामिनी २ चण्डी ३ इति त्रीणि क्रोधनायाः ॥ दारुस्त्री, दारु इव स्त्री १ शालभञ्जिका, शालेन भज्यते निर्मीयते २ इति द्वे दारुस्त्रियाः ॥ ३ ॥ विरक्ता, "विवृक्ता" १ दुर्भगा २ इति द्वे पतिस्नेहशून्यायाः दुर्भगायाः स्त्रियाः ॥ सप्तपुत्रसूः १ सुतवस्करा २ इति द्वे सप्तपुत्रायाः ॥ पतिव्रता, पातिः पतिसेवनं व्रतं यस्याः १ एकपत्नी, एकः समानः अनन्यो वा पतिर्यस्याः २ इति द्वे पतिव्रतायाः ॥ विधवा, विगतो धवो यस्याः १ जालिका २ ॥ ४ ॥ विश्वस्ता ३ इति त्रीणि विधवायाः ॥ लञ्जिनी, "वाञ्छिनी" १ लञ्जिका २ कलकूजिका, "कलतूलिका" ३

इज्या स्याद्रतताली च घटदासी गणेरुका । मलिष्ठा सरजाः षाण्मातुरद्वैमातुरौ समौ ॥ ६ ॥
समदुर्दुहिता पुत्रो द्वितीयः कुलधारकः । पिता जनयिता वप्ता शिशुकः क्षीरकण्ठकः ॥ ७ ॥
बालो मुष्टिन्धयश्चाथ श्यालिका केलिकुञ्चिका । नागरो देवलः श्यालो वारकीरोऽथ साश्रुधीः॥
श्वश्रूर्वृद्धः शतानीको जरन्तः स्यादथांशकः । सगन्धज्ञातिदायादा मातुलो मातुकेशटः ॥९॥
भर्ता भरुर्नर्मकीलः प्राणनाथः सुखोत्सवः । हृदयेशो रतगुरुर्जारः पापपतिः समौ ॥ १० ॥
कुमारभृत्या स्याद्बालतन्त्रं गर्भिण्यवेक्षणम् । गर्भाष्टमो देवमासो नाभिनालाऽमला स्मृता ॥
आधानिकं पुंसवनं सीमन्तोन्नयनं च तत् । खल्लीटः खलितिः कल्लो बधिरः खोरखञ्जकौ॥१२॥
दोर्गडुर्बाहुकुण्टः स्यादौषधं तु भिषग्जितम् । त्वक्पुष्पिका किलासं स्याच्छ्लीपदं पादगण्डिरः
योन्यर्शः कन्दसंज्ञः स्यात्किणः शुष्कव्रणोऽपि च । अजीर्णे वायुगण्डोऽन्तर्वमिश्चपलताशयः॥
पापरोगो रक्तवटी मसूर्यथ तमोव्रणः । वल्मीकोऽथातिसारोऽन्नगन्धिः स्यादुदरामयः ॥ १९॥

इति त्रीणि लञ्जिन्याः ॥ वेश्या १ शूला २ वारवाणिः, "वारवाणी" अप्यत्र ३ झर्झरा ४ इति चत्वारि वेश्यायाः ॥ कुट्टिनी, "कुट्टनी" १ ॥ ५ ॥ इज्या २ रतताली, रते स्त्रीपुंसयोः सङ्गमे मैथुने ताली तालजातसुरेव ३ घटदासी ४ गणेरुका ५ इति पञ्च कुट्टिन्याः ॥ मलिष्ठा १ सरजाः २ इति द्वे म्लानाङ्ग्याः ॥ षाण्मातुरः, षण्णां मातॄणामपत्यम् १ द्वैमातुरः, द्वयोर्मात्रोरपत्यम् २ इति द्वे षाण्मातुरस्य द्वैमातुरस्य च ॥ षाण्मातुरद्वैमातुराविति द्वौ शब्दौ कार्त्तिकेये गणेशे च स्तः— "षाण्मातुरः शक्तिधरः" इति अमरोक्तत्वात् कृत्तिकात्रिकं गङ्गा पृथिवी पार्वती चेति षण्मातरः कार्त्तिकेयस्य सन्ति । तथा "विनायको विघ्नराजद्वैमातुरगणाधिपाः" इति अमरोक्तत्वात् गणेशस्य दुर्गा चामुण्डेति द्वौ मातरौ भवतः ताभ्यां गणेशः पालित इति पुराणेषु प्रसिद्धिः । जरासन्धस्य नृपस्यापि द्वौ मातरौ स्तः इति प्रतीतः ॥ ६ ॥ समदुः १ दुहिता २ इति द्वे दुहितुः ॥ पुत्रः १ द्वितीयः २ कुलधारकः ३ इति त्रीणि पुत्रस्य ॥ पिता १ जनयिता २ वप्ता ३ इति त्रीणि पितुः ॥ शिशुकः १ क्षीरकण्ठकः, क्षीरं कण्ठे यस्य २ ॥ ७ ॥ बालः ३ मुष्टिन्धयः, मुष्टिं धयति ४ इति चत्वारि बालस्य॥ श्यालिका १ केलिकुञ्चिका २ इति द्वे श्यालिकायाः ॥ नागरः, "वागारः" १ देवलः २ इति द्वे देवरस्य ॥ श्यालः १ वारकीरः २ इति द्वे शालस्य ॥ साश्रुधीः, "साश्नुधीः" १ ॥ ८ ॥ श्वश्रूः २ इति द्वे श्वश्र्वाः ॥ वृद्धः १ शतानीकः २ जरन्तः ३ इति त्रीणि वृद्धस्य ॥ अंशकः १ सगन्धः २ ज्ञातिः ३ दायादः ४ इति चत्वारि ज्ञातेः ॥ मातुलः १ मातुकेशटः, "मातुकेशरः" २ इति द्वे मातुलस्य ॥ ९ ॥ भर्ता १ भरुः २ नर्मकीलः ३ प्राणनाथः ४ सुखोत्सवः, सुखकर उत्सवो यस्मात् ५ हृदयेशः ६ रतगुरुः ७ इति सप्त भर्तुः ॥ जारः १ पापपतिः २ इति द्वे जारस्य ॥ १० ॥ कुमारभृत्या १ बालतन्त्रम् २ गर्भिण्यवेक्षणम् ३ इति त्रीणि प्रसवकाले गर्भिणीपरिचर्यायाः ॥ गर्भाष्टमः १ देवमासः २ इति द्वे गर्भग्रहणावधिकस्य अष्टममासस्य ॥ नाभिनाला १ अमला २ इति द्वे नाभिनालायाः ॥ ११ ॥ आधानिकम् १ पुंसवनम्, पुमान् सूयतेऽनेन २ सीमन्तोन्नयनम्, सीमन्तस्य तदाख्यगर्भसंस्कारस्य उन्नयनमुद्भावनम् ३ इति त्रीणि संस्काराणाम् एकैकमेकैकस्य ॥ खल्लीटः १ खलितिः, "खलतिः" २ इति द्वे खल्लीटस्य ॥ कल्लः १ बधिरः २ इति द्वे बधिरस्य ॥ खोरः १ खञ्जकः २ इति द्वे खञ्जस्य ॥ १२ ॥ दोर्गडुः १ बाहुकुण्टः २ इति द्वे बाहुकुण्टस्य ॥ औषधम् १ भिषग्जितम् ॥ २ इति द्वे औषधस्य ॥ त्वक्पुष्पिका १ किलासम् २ इति द्वे किलासस्य ॥ श्लीपदम् १ पादगण्डिरः, "पादगण्डीरः" २ इति द्वे श्लीपदस्य ॥ १३ ॥ योन्यर्शः १ कन्दसंज्ञः २ किणः ३ शुष्कव्रणः ४ इति चत्वारि योन्यर्शसः ॥ वायुगण्डः १ अन्तर्वमिः २ चपलताशयः, "पललाशयः" ३ इति त्रीणि अजीर्णस्य ॥ १४ ॥ पापरोगः १ रक्तवटी २ मसूरी ३ इति त्रीणि "वसन्तरोग" इति ख्यातायाः मसूरिकायाः ॥ तमोव्रणः १ वल्मीकः २ इति द्वे वल्मीकस्य ॥ अतिसारः, "अतीसारः" अप्यत्र १

कुरण्डवृद्धः सिङ्घानंशेटौ स्कन्दनरेचने । गर्भण्डो नाभिगुडकोऽभिमन्थो लोचनामये॥१६॥
युवगण्डोऽवगण्डः स्यात्पित्तं मायुः पलङ्करः । श्लेष्मा बलाशो मांसं तु जरूथमथ शोणितम् ॥
पलक्षारोऽथ मास्तिष्को मस्तुलुङ्गोऽप्यथ स्नसा । वस्नसाऽथाधरमधु क्लीबे वक्त्रासवः पुमान्१८॥
जिह्वामलं तु कुलुकं पिप्पिका दन्तजे मले ।पिण्डोऽस्त्रियां कुलं क्षेत्रं शरीरं स्कन्धपञ्जरौ॥१९॥
शस्तं वपुः पुद्गलं स्यादाङ्गमङ्गं तु कोमलम् । पायुस्तनुहृदो मार्ग उच्चारस्तु पुरीषणः ॥२०॥
भगं गुह्यं वराङ्गं च कलत्रं जन्मवर्त्म च । स्मरागारं रतिगृहमधोऽधस्तान्निपातितौ ॥ २१ ॥
ना सन्धिरधरोऽवाच्यदेशश्च स्मरकूपकः । संसारमार्गश्च रतिकुहरं प्रकृतिः स्त्रियाम् ॥ २२ ॥
पुष्पापत्यपथौ चाथ नितम्बः स्यात्कटीरकः । लिङ्गं तु लाङ्गलं शेफः साधनं मदनाङ्कुशः॥
स्मरस्तम्भश्च कन्दर्पमुषलो ध्वज इत्यपि । स्त्रियां नागलता चाण्डकोषस्तु फलकोषकः॥२४॥
नाभिर्द्वयोस्तुन्दकूपी तुन्दिस्तुन्दीकरः पुमान् । अधोमर्म शकृद्द्वारमूलः सक्थि च जाघनी ॥
भुजा बाहा च बाहौ स्यात्कुलिर्हस्तो भुजादलः । कुचौ वक्षोरुहौ प्रोक्तौ हस्तपुच्छं तु कल्पुषम्
नखं पुनर्भवः कामाङ्कुशः स्यात्करकण्टकः । करेटुः करशूकश्च पुच्छटयङ्गुलिमोटनम् ॥

अन्नगन्धिः, अन्नस्य गन्ध इव गन्धो यस्य २ उदरामयः ३ इति त्रीणि अतिसारस्य ॥ १५ ॥ कुरण्डवृद्धः १ सिङ्घानः, "सिङ्घाणः" अप्यत्र २ शेटः, "खेटः" ३ इति त्रीणि नासिकामलस्य ॥ केचित् कुरण्डस्य इति वदन्ति ॥ स्कन्दनम् १रेचनम् २ इति द्वे विरेचनस्य ॥ गर्भण्डः १ नाभिगुडकः २ इति द्वे नाभिगुडस्य ॥ अभिमन्थः १ इत्येकं नेत्ररोगस्य ॥ १६ ॥ युवगण्डः १ अवगण्डः २ इति द्वे अवगण्डस्य ॥ पित्तम् १ मायुः २ पलङ्करः, "पलज्वरः" ३ इति त्रीणि पित्तस्य ॥ श्लेष्मा १ बलाशः, "वलाशः" "खलाशः" २ इति द्वे श्लेष्मणः ॥ मांसम् १ जरूथम् २ इति द्वे मांसस्य ॥ शोणितम् १ ॥ १७ ॥ पलक्षारः २ इति द्वे रक्तस्य ॥ मस्तिष्कः १ मस्तलुङ्गः, "मस्तुलुङ्गः"२ इति द्वे मस्तकस्थस्य स्नेहाकारद्रव्यस्य ॥ स्नसा १ वस्नसा २ इति द्वे स्नायोः॥ अधरमधु, अधरे ओष्ठे सम्भूतं मधु १ वक्त्रासवः, वक्त्रे मुखे जातः आसवः २ इति द्वे अधरमधुनः ॥ १८ ॥ जिह्वामलम् १ कुलुकम् २ इति द्वे जिह्वामलस्य ॥ पिप्पिका १ इत्येकं दन्तजस्य मलस्य ॥ पिण्डः १ कुलम् २ क्षेत्रम् ३ शरीरम् ४ स्कन्धः ५ पञ्जरः, "पिञ्जरः" अप्यत्र ६ ॥ १९ ॥ शस्तम् , "जस्तम्" ७ वपुः ८ पुद्गलम् ९ आङ्गम् १० इति दश शरीरस्य ॥ अङ्गम् १ इत्येकं कोमलाङ्गस्य ॥ पायुः १ तनुहृदः २ मार्गः ३ इति त्रीणि गुदस्य ॥ उच्चारः १ पुरीषणः २ इति द्वे उच्चारस्य ॥ २० ॥ भगम् १ गुह्यम् २ वराङ्गम् ३ कलत्रम् ४ जन्मवर्त्म ५ स्मरागारम् ६ रतिगृहम्, "रतगृहम्" ७ अधः ८ अधस्तात् ९ ॥ २१ ॥ सन्धिः १० अधरः ११ अवाच्यदेशः १२ स्मरकूपकः १३ संसारमार्गः १४ रतिकुहरम् १५ प्रकृतिः १६ ॥ २२ ॥ पुष्पपथः १७ अपत्यपथः १८ इत्यष्टादश स्त्रीचिह्नस्य ॥ नितम्बः १ कटीरकः २ इति द्वे नितम्बस्य ॥ लिङ्गम् १ लाङ्गलम् २ शेफः ३ साधनम् ४ मदनाङ्कुशः ५ ॥ २३ ॥ स्मरस्तम्भः ६ कन्दर्पमुषलः, "कन्दर्पमुसलः" "कन्दर्पमुशलः"७ ध्वजः ८ नागलता ९ इति नव "लिङ्ग" इति ख्यातस्य पुरुषचिह्नस्य ॥ अण्डकोषः १ फलकोषकः २ इति द्वे पुंसोऽङ्गावयवस्य ॥ २४ ॥ नाभिः, अयं तु नाभिशब्दः पुंस्त्रियोर्वर्त्तते, "नाभी" १ तुन्दकूपी, "तुन्दकूपिका" अप्यत्र २ तुन्दिः, "तुन्दिकः" "तुन्दी" अप्यत्र, क्वचित् "तुन्दः, तुन्दिगडुः" इति पाठः३ तुन्दीकरः ४ इति चत्वारि नाभेः ॥ अधोमर्म १ शकृद्द्वारम् २ इति द्वे विष्ठामार्गस्य ॥ ऊरुः १ सक्थि, "शक्थि" २ जाघनी ३ इति त्रीणि ऊरोः ॥ २५ ॥ भुजा १ बाहा, "बाहः", "बाहोऽश्वभुजयोः पुमान्" इति दामोदरः २ इति द्वे भुजस्य ॥ कुलिः १ हस्तः २ भुजादलः ३ इति त्रीणि "भुजादलः" इति ख्यातस्य हस्तस्य॥ कुचः १ वक्षोरुहः, "वक्षोजः" अप्यत्र २ इति द्वे स्तनस्य ॥ हस्तपुच्छम् १ कल्पुषम्, "कल्मषम्" २ इति द्वे हस्तपुच्छस्य ॥ २६ ॥ नखम् १ पुनर्भवः२ कामाङ्कुशः ३ करकण्टकः ४ करेटुः,

स्यात्काँकलं कण्ठमणिर्नसा नस्या च नासिका। गन्धनाली च नासिक्यं वाग्दलं दन्तवाससि॥
दन्तः खरुर्वक्रखुरो जम्भो हानुर्द्विजस्तथा । राजदन्तास्तु चत्वारो दशनानां पुरःस्थिताः॥२९॥
गोधिभालौ महाशङ्खो देवदीपस्तु लोचनम् । अम्बकं चाथ नेत्राम्बु बाष्पो ना लोतमस्त्रियाम्
कटाक्षकाक्षौ काकुस्तु जिह्वाऽथ प्रतिजिह्विका । सुधास्रवा च कर्णस्तु श्रोतः क्लीबे ध्वनिग्रहः ॥
स्याच्छब्दाधिष्ठानमथ कबरः केशगर्भकः । कबरी जूटकश्चाथ कौटीरः स्याज्जटा सटा ॥३२॥
करारोटोऽङ्गुलीकः स्यात्ताडङ्कः कर्णदर्पणः । अन्दुकः पादकटकोऽभिषेकः स्नानमित्यपि३३
पटच्चरो जीर्णवस्त्रं सिचयप्रोथशाटकाः । पटवापः पटमयं दूष्यं वस्त्रगृहं स्थलम् ॥ ३४ ॥
खरग्रहः खरगृहं कुँवा तु स्थूलशाटकः । चोलोण्डुकः शिरोवेष्टे विरिङ्गिन्यवगुण्ठिका ॥ ३५ ॥
पाठी यवनिका सूर्यरक्तसंज्ञं तु कुङ्कुमम् । जागुडं दीपनं घस्रं सौरभं सुघृणं च तत् ॥३६॥
स्याद्रङ्गमातृका लाक्षा गन्धकाष्ठं तु गोङ्ककम् । कपिचैञ्चलतैलाख्यः सिह्लोऽथ सरलद्रवः३७॥
दधिक्षीरघृताह्वः स्याद् धूनको वह्निवल्लभः । शालवेष्टः सर्जमणिः कस्तूरी गन्धचेलिका॥३८॥

"कारटः" ५ करशूकः ६ इति षट् नखानाम् ॥ पुच्छटी, "पुच्छटिः" १ अङ्गुलिमोटनम्१ इति द्वे अङ्गुलिमोटनस्य ॥ २७ ॥ काकलम्, "काकलकः" अप्यत्र १ कण्ठमणिः २ इति द्वे ग्रीवायामुन्नत-प्रदेशस्य ॥ नसा १ नस्या २ नासिका३ गन्धनाली ४ नासिक्यम् ५ इति पञ्च नासिकायाः ॥ वाग्दलम् १ इत्येकं "दन्तवासः" इति ख्यातस्य ओष्ठस्य ॥ २८ ॥ दन्तः १ खरुः २ वक्रखुरः, वक्रः खुरो यस्य ३ जम्भः ४ हानुः ५ द्विजः ६ इति षट् दन्तानाम् ॥ राजदन्ताः १ इत्येकं पुरःस्थितानां चतुर्णां महादन्तानाम् ॥ २९ ॥ गोधिः १ भालः २ महाशङ्खः, "महाशङ्खम्" ३ इति त्रीणि भालस्य ॥ देवदीपः, देवेषु इन्द्रियेषु दीप इव १ लोचनम् २ अम्बकम् ३ इति त्रीणि लोचनस्य ॥ नेत्राम्बु १ बाष्पः, "बास्पः" २ लोतम् ३ इति त्रीणि अश्रुणः ॥ ३० ॥ कटाक्षः १ काक्षः २ इति द्वे कटाक्षस्य ॥ काकुः १ जिह्वा २ इति द्वे जिह्वायाः ॥ प्रतिजिह्विका १ सुधास्रवाः "सुधाश्रवा" इति द्वे जिह्वामूलस्थमांसपिण्डस्य ॥ कर्णः १ श्रोतः २ ध्वनिग्रहः ३ ॥ ३१ ॥ शब्दाधिष्ठानम् ४ इति चत्वारि कर्णस्य ॥ कबरः १ केशगर्भकः, केशानां गर्भकः केशाः गर्भे यस्य वा २ कबरी ३ जूटकः, "कूटकः" ४ इति चत्वारि "केशपाशः" इति ख्यातायाः कबर्याः ॥ केशविन्यासस्य इत्यन्ये॥ कौटीरः १ जटा २ सटा ३ इति त्रीणि व्रतिनां "केशसङ्घातः" इति ख्यातायां जटायाः ॥ ॥ ३२ ॥ करारोटः १ अङ्गुलीक, "अङ्गुलीटः २ इति द्वे अङ्गुलीयकस्य ॥ ताडङ्कः १ कर्णदर्पणः २ इति द्वे ताडङ्कस्य ॥ अन्दुकः १ पादकटकः २ इति द्वे पादकटकस्य ॥ अभिषेकः १ स्नानम् २ इति द्वे स्नानस्य ॥ ३३ ॥ पटच्चरः १ जीर्णवस्त्रम् २ इति द्वे जीर्णवस्त्रस्य ॥ सिचयः १ प्रोथः २ शाटकः ३ इति त्रीणि शाटकस्य ॥ पटवापः १ पटमयम् २ दूष्यम् ३ वस्त्रगृहम् ४ स्थलम् ५ इति पञ्च वस्त्रगृहस्य ॥ ३४ ॥ खरग्रहः १ खरगृहम् २ इति द्वे खरगृहस्य ॥ कुवा, "शिवा" १ स्थूलशाटकः, "स्थूलशाटिका" इत्यादयोऽप्यत्र २ इति द्वे स्थूलवस्त्रस्य सुगहनावृतेश्च ॥ चोलोण्डुकः, "चेलोण्डकः" १ इत्येकम् "उष्णीषः" इति ख्यातस्य शिरोवेष्टस्य ॥ विरिङ्गिनी, "निरिङ्गिनी" १ अवगुण्ठिका २ ॥३५॥ पाठी, "पठा"३ यवनिका, "जवनिका" अप्यत्र४ इति चत्वारि "जवनिका" इति प्रसिद्धायाः तिरस्करिण्याः॥ सूर्यरक्तसंज्ञम्, सूर्यपर्यायनामानि रक्तपर्यायनामानि च । रक्तम्१ शोणितम्, "रविः" अप्यत्र२ कुङ्कुमम्३ जागुडम्४ दीपनम् ५ घस्रम् ६ सौरभम् ७ सुघृणम्, "सुघृणैयत्र जलाशयोदरे" इति नैषधम् ८ इति अष्ट कुङ्कुमस्य ॥३६॥ रङ्गमातृका १ लाक्षा २ इति द्वे लाक्षायाः॥ गन्धकाष्ठम्, गन्धयुक्तं काष्ठम्१ गोङ्ककम् २ इति द्वे "अगुरुचन्दनम्" इति ख्यातस्य अगरुकाष्ठस्य ॥ कपिचञ्चलम्, "कपिचन्दनम्"१ तैलम् २ सिह्लः ३ इति त्रीणि सिह्लकस्य॥ सरलद्रवः १ ॥ ३७ ॥ दधि २ क्षीरम् ३ घृतम् ४ इति चत्वारि सरलद्रवस्य ॥ धूनकः १ वह्निवल्लभः, वह्नेर्वल्लभ उद्दीपकत्वात् २ शालवेष्टः ३ सर्जमणिः ४ इति चत्वारि

मदाह्वश्चाथ सञ्चारी धूपो गन्धपिशाचिका । रेणुसारस्तु कर्पूरश्चन्द्रभस्म हिमाह्वयः ॥ ३९ ॥
वेधको मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च सः । विच्छित्तिस्तु कषायः स्यात्समालम्भनमित्यपि
ललाटिका शङ्खचरी विष्टरः पीठमास्त्रियाम् । निषद्या खट्टिका सन्दी चातुरस्तु मसूरकः ४१
प्रतियत्नस्तु रचना कटकोलः पतद्ग्रहः । पूगपीठं च दीपस्तु स्नेहाशः कज्जलध्वजः ॥ ४२ ॥
दशेन्धनो गृहमणिर्दोषातिलक इत्यपि । शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः ॥४३॥
कज्जले स्यादिरिपके कन्दुकश्चोदनागुडः । निश्चुक्कणं दन्तशाणं पिष्टातो धूलिगुच्छकः ॥४४॥

इति मनुष्यवर्गः ॥ ६ ॥

---

वंश्यः कुल्यश्च बीज्यः स्याद्ब्रह्मचारी वटुः समौ । स्याद्वटूकरणं तूपनयनं गृहमेधिनि ॥ १॥
ज्येष्ठाश्रमी गृही वानप्रस्थो वैखानसोऽग्रहः । वक्त्रजस्त्वनमो विप्रो वर्णज्येष्ठः कठो द्विजः ॥२॥
मैत्रः पुनरुक्तजन्मा स्यादथ स्यद्ब्राह्मणायनः । शुद्धसन्तानजो विप्रः श्रौत्रं श्रोत्रियतां विदुः ॥३॥

"धूनकः" इति प्रसिद्धस्य सर्जरसस्य ॥ केचित्तु धूनकः १ वह्निवल्लभः २ इति द्वे धूनकस्य ॥ शालवेष्टः १ सर्जमणिः २ इति द्वे शालवेष्टस्य ॥ इति वदन्ति ॥ कस्तूरी १ गन्धचेलिका २ ॥ ३८ ॥ मदः, "मदाह्वः" ३ इति त्रीणि कस्तूर्याः ॥ संचारी १ धूपः २ गन्धापिशाचिका ३ इति त्रीणि धूपस्य ॥ रेणुसारः, "वेणुसारः" १ कर्पूरः, "कर्पूरम्" २ चन्द्रभस्म, चन्द्र इव शुभ्रं भस्म यस्य, अथवा चन्द्रपर्यायनामकाः—चन्द्रः, शीतरश्मिः, शीतांशुः, इत्यादयश्च ३ हिमाह्वयः—हिमपर्यायनामकाः हिमः, शिशिरः, इत्यादयश्च ४ ॥ ३९ ॥ वेधकः ५ इति पञ्च कर्पूरस्य ॥ मालयः, मलये तन्नामकपर्वते भवः १ श्रीखण्डः २ रौहिणः ३ इति त्रीणि चन्दनस्य ॥ विच्छित्तिः १ कषायः २ समालम्भनम् ३ इति त्रीणि कषायस्य ॥ ॥ ४० ॥ ललाटिका १ शङ्खचरी २ इति द्वे ललाटभूषणस्य ललाटस्थस्य चिह्नस्य वा ॥ विष्टरः, "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः" इति "वामावृत्तिस्तु विष्टरः" इति च १ पीठम् २ इति द्वे पीठस्य ॥ निषद्या १ खट्टिका २ सन्दी ३ इति त्रीणि खट्वायाः ॥ चातुरः १ मसूरकः २ इति द्वे उपबर्हणस्य ॥ ॥ ४१ ॥ प्रतियत्नः १ रचना २ इति द्वे रचनायाः ॥ कटकोलः १ पतद्ग्रहः, पतत् मुखादिभ्यः स्रवत् जलादि गृह्णाति २ पूगपीठम् ३ इति त्रीणि पतद्ग्रह इति ख्यातस्य पात्रभेदस्य ॥ दीपः१ स्नेहाशः २ कज्जलध्वजः ३ ॥ ४२ ॥ दशेन्धनः, दशा वर्त्तिकैव इन्धनं यस्य ४ गृहमणिः ५ दोषातिलकः ६ इति षट् प्रदीपस्य ॥ शिखातरुः १ दीपवृक्षः २ ज्योत्स्नावृक्षः ३ इति त्रीणि दीपवृक्षस्य ॥ लोचकः १ ॥४३॥ इत्येकं कज्जलस्य ॥ कन्दुकः १ चोदनागुडः २ इति द्वे इरिपकस्य ॥ क्वचित् "गिरिपके" इति पाठः ॥ निश्चुक्कणम् १ दन्तशाणम् २ इति द्वे दन्तशाणस्य ॥ पिष्टातः १ धूलिगुच्छकः, "धूलिगुत्सकः" २ इति द्वे पटवासनार्थं कृतस्य चूर्णगन्धद्रव्यस्य ॥ ४४ ॥

इति मनुष्यवर्गः ॥ ६ ॥

---

वंश्यः १ कुल्यः, कुले भवः कुलाय हितो वा २ बीज्यः ३ इति त्रीणि वंश्यस्य ॥ ब्रह्मचारी १ वटुः २ इति द्वे ब्रह्मचारिणः॥ वटूकरणम् १ उपनयनम् २ इति द्वे उपनयनस्य ॥ १ ॥ ज्येष्ठाश्रमी १ गृही २ इति द्वे गृहिणः गृहमेधिनश्च ॥ यो गृहे दारैर्मेधते संगच्छते स गृहमेधी तस्य ॥ वानप्रस्थः, "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा" इति १ वैखानसः, "वैखानसेभ्यः श्रुतरामवार्ता" इति भट्टिः, "वैखानशः" २ अग्रहः, "अग्रहः" ३ इति त्रीणि "वानप्रस्थः" इति ख्यातस्य तापसभेदस्य॥वक्त्रजः, वक्त्रात् मुखाज्जायते १ अनमः २ विप्रः ३ वर्णज्येष्ठः ४ कठः ५ द्विजः, द्विर्जायते, प्रथमं मातृगर्भाद्द्वितीयमुपनयनसंस्कारादिति वचनात् ६॥२॥मैत्रः ७ पुनरुक्तजन्मा ८ इत्यष्टौ विप्रस्य ॥ ब्राह्मणायनः १ इत्येकं शुद्धकुलोत्पन्नस्य विप्रस्य॥श्रौत्रम् १ श्रोत्रियता २ इति द्वे वेदाध्ययनानुरतस्य ब्राह्मणस्य॥तदुक्तम्—"एकां

स्यादक्षरमुखः कालाक्षरिकः शिक्षिताक्षरः। काव्यस्य कर्ता भविनी गुणनी शीलनं स्मृतम् ४॥
क्रियाकरो नवच्छात्रः कार्पटिकः स मर्मवित्। पर्षत्परिषदो गोष्ठी राजसूयो नृपाध्वरः ॥ ५ ॥
क्रतूत्तमश्चाथ चान्द्रायणमिन्दुव्रतं स्मृतम्। हवनी होमकुण्डं स्यान्महावीरो मखानलः ॥६॥
होमधूमस्तु निगणो होमभस्म तु वैष्टुभम्। आर्यकं पिण्डदानादिपितृकार्यमथो हविः ॥ ७ ॥
हौत्रं हविष्यं सान्नाय्यं पाठको धर्मभाणकः। सभ्यास्तु प्राश्निका देवद्रोणी यात्रा दिवौकसाम्
इष्टापूर्तं तदेकोक्त्या यागखातादि कर्म्म यत्। यज्ञद्रव्यं तु पात्रीयं प्राघुणस्त्वतिथिर्द्वयोः९॥
कौशली कुशलप्रश्नः समीची वन्दना मता। उपोषणं तूपवासो रोगाद्यैर्लङ्घनं च तत्॥१०॥
द्व्यन्तरे त्र्यन्तरे भुक्तमाहुः षष्ठान्नकालिकम्। राद्धं सिद्धमथो चारुव्रता मासोपवासिनी ॥११॥
स्याद्गायत्री तु सावित्री ब्रह्मारण्यं तु पाठभूः। पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनी ॥ १२ ॥
कच्छा कच्छटिका कक्षापटी कौपीनमित्यपि। बैडालव्रतिकः सर्वाभिसन्धी छद्मतापसः॥१३॥
कमण्डलुश्चैत्यमुखो जोतिण्टा तु महाव्रती। उरस्कटः पञ्चवटो बालयज्ञोपवीतकम् ॥ १४ ॥
भाले तिस्रो भस्मरेखास्त्रिपुण्ड्रकमथर्षयः। शापास्त्राः सत्यवचसो व्यासाद्यास्तु महर्षयः१५॥

शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्'' इति॥३॥ अक्षरमुखः १ कालाक्षरिकः २ शिक्षिताक्षरः ३ काव्यस्य कर्ता ४ इति चत्वारि शिक्षिताक्षरस्य ॥ भविनी, "भविनः" १ गुणनी २ शीलनम् ३ इति त्रीणि पाठनिश्चयस्य ॥ ४ ॥ क्रियाकरः १ नवच्छात्रः २ इति द्वे नवच्छात्रस्य ॥ कार्पटिकः, कर्पटेन काषायवस्त्रेण चरति १ मर्मविद् २ इति द्वे तीर्थयात्रोद्यतस्य ॥ पर्षत् १ परिषदः २ गोष्ठी, गावोऽनेका वाचः तिष्ठन्त्यत्र ३ इति त्रीणि सभायाः ॥ राजसूयः १ नृपाध्वरः २ ॥ ५ ॥ क्रतूत्तमः, "क्रतुतमः" ३ इति त्रीणि राजमात्रकर्तव्ययज्ञभेदस्य ॥ चान्द्रायणम्, चान्द्रस्य चन्द्रलोकस्यायनं यस्मात् १ इन्दुव्रतम् २ इति द्वे "चान्द्रायणम्" इति प्रसिद्धस्य व्रतस्य ॥ हवनी १ होमकुण्डम् २ इति द्वे यज्ञकुण्डस्य ॥ महावीरः १ मखानलः २ इति द्वे यज्ञाग्नेः ॥ ६ ॥ होमधूमः १ निगणः २ इति द्वे होमधूमस्य ॥ होमभस्म १ वेष्टुभम् २ इति द्वे होमभस्मनः ॥ आर्यकम् १ इत्येकं पिण्डदानादिपितृकार्यस्य ॥ हविः १ ॥ ७ ॥ हौत्रम् २ हविष्यम् ३ सान्नाय्यम् ४ इति चत्वारि हविषः ॥ पाठकः १ धर्मभाणकः २ इति द्वे पाठकस्य ॥ सभ्याः १ प्राश्निकाः २ इति द्वे सभ्यानाम् ॥ देवद्रोणी १ इत्येकं देवयात्रायाः ॥ ८ ॥ इष्टापूर्तम्, इष्टं च पूर्तं च द्वयोः समाहारः, पूर्वपददीर्घः, यागखातादि यत् कर्म भवेत् तत् एकोक्त्या एकवचनेन इष्टापूर्तमिति कथ्यते। पूर्तं यथा—"वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते" इति १ इत्येकम् अग्निहोत्रादेरिष्टकर्मणः ॥ यज्ञद्रव्यम् १ पात्रीयम् २ इति द्वे यज्ञद्रव्यस्य॥ प्राघुणः १ अतिथिः २ इति द्वे अतिथेः ॥९॥ कौशली १ कुशलप्रश्नः २ इति द्वे कुशलप्रश्नस्य ॥ समीची १ वन्दना २ इति द्वे वन्दनायाः ॥ उपोषणम् १ उपवासः २ इति द्वे उपवासस्य ॥ लङ्घनम् १ इत्येकं रोगोपवासस्य ॥ १० ॥ षष्ठान्नकालकम्, षष्ठे दिवसे भक्ष्यान्नकालो यत्र, "षष्ठान्नकालः" अप्यत्र, काचित् "षष्ठालुकालकम्" इति पाठः १ राद्धम् २ सिद्धम् ३ इति त्रीणि द्व्यन्तरत्र्यन्तरभुक्तस्य व्रतभेदस्य ॥ चारुव्रता १ मासोपवासिनी २ इति द्वे मासोपवासिन्याः ॥ ११ ॥ गायत्री १ सावित्री २ इति द्वे गायत्र्याः ॥ ब्रह्मारण्यम् १ पाठभूः २ इति द्वे वेदपाठभुवः ॥ पवित्रम् १ यज्ञोपवीतम् २ ब्रह्मसूत्रम् ३ द्विजायनी ४ इति चत्वारि यज्ञोपवीतस्य ब्रह्मप्रतिपादकस्य शारीरिकसूत्रस्य च ॥१२॥ कच्छा १ कच्छटिका २ कक्षापटी "कक्षावटी" ३ कौपीनम् ४ इति चत्वारि कौपीनस्य व्रतस्य॥ बैडालव्रतिकः १ सर्वाभिसन्धी, सर्वत्र आचरणे अभिसन्धाऽस्त्यस्य २ छद्मतापसः ३ इति त्रीणि लोकप्रतारणार्थं तापसताख्यापनाय तापसलिङ्गधारिणः छद्मतापसस्य ॥ १३ ॥ कमण्डलुः १ चैत्यमुखः २ इति द्वे कमण्डलोः॥ जोतिण्टा, "जोतिण्टाः" १ महाव्रती २ उरस्कटः, उरः कट्यते आव्रियतेऽनेन ३ पञ्चवटः ४ बालयज्ञोपवीतकम् ५ इति पञ्चोरस्कटस्य॥ १४ ॥ त्रिपुण्ड्रकम्, त्रयाणां पुण्ड्राणाम् इक्षु-

परमर्षयस्तु भेलाद्या देवर्षयः कणादयः । ब्रह्मर्षयो वसिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः ॥ १६ ॥
ऋतुपर्णादयो राजर्षयः काण्डर्षयस्त्वमी । जैमिन्याद्या नारदस्तु कपिवक्त्रो विधातृभूः ॥१७॥
देवब्रह्मा देवलश्च दुर्वासास्तु कुसारणिः । प्राचेतसस्तु वाल्मीकिः कविज्येष्ठः कुशीवशः॥१८॥
अपि वल्मीकवाल्मीकौ कृतकोटिस्तु काश्यपः । कृष्णद्वैपायनो वेदव्यासः स्यात्सत्यभारतः१९
पाराशरिः सात्यवतो माठरो बादरायणः। वसिष्ठारुन्धतीनाथौ विश्वामित्रस्तु गाधिजः ॥२०॥
गौतमस्तु शतानन्दः कणादः काश्यपः समौ। धन्वन्तरिर्दिवोदासः काशिराजः सुधोद्भवः२१॥
पालकाख्यो गणपतिकरेणुरुचिरासुतः । विष्णुगुप्तस्तु कौण्डिण्यश्चाणक्यो द्रोमिणोऽङ्गुलः२२
वात्स्यायनो मन्दनागः पक्षिलस्वामिनावपि । उपवर्षो हलभृतिः कृतकोटिरयाचितः ॥ २३ ॥
पाणिनिस्त्वाहिको दाक्षीपुत्रःशालङ्किपाणिनौ।शालोत्तुरीयोऽथ व्याडिर्विन्ध्यस्थो नन्दिनीसुतः
मेधावी चाथ मेधाजित्कात्यः कात्यायनश्च सः । पुनर्वसुर्वररुचिर्गोनर्दीयः पतञ्जलिः ॥२५॥
चूर्णिकृद्भाष्यकारश्च हरिर्भर्तृहरिः स्मृतः । रघुकारः कालिदासो मेधारुद्रश्च कोटिजित् ॥२६॥
भारविः शत्रुलुम्पः स्याद्भवभूतिस्तु विस्मृतः।भूगर्भोऽप्यथ यः प्रातः स्मर्यते शुभकाम्यया२७

बदाकाराणां समाहारः, "वक्रा ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम्" इति, "त्रिपुण्ड्रम्" अप्यत्र १ इत्येकं ललाटे तिसृणां भस्मरेखाणाम् ॥ ऋषयः १ शापास्त्राः, शाप एवास्त्रं येषाम् २ सत्यवचसः ३ इति त्रीणि ऋषीणाम् ॥ व्यासाद्याः १ इत्येकं महर्षीणाम् ॥ १५ ॥ भेलाद्याः १ इत्येकं परमऋषीणाम् ॥ कणादयः १ इत्येकं देवऋषीणाम् ॥ वसिष्ठाद्याः १ इत्येकं ब्रह्मऋषीणाम् ॥ सुश्रुताद्याः १ इत्येकं श्रुतऋषीणाम् ॥ १६ ॥ ऋतपर्णादयः, "ऋतुपर्णादयः" १ इत्येकं राजर्षीणाम् ॥ जैमिन्याद्याः १ इत्येकं काण्डर्षीणाम् ॥ नारदः १ कपिवक्त्रः २ विधातृभूः ३ इति त्रीणि नारदस्य ॥ १७ ॥ देवब्रह्मा १ देवलः २ इति द्वे "देवलः" इति ख्यातस्य ऋषेः ॥ दुर्वासाः १ कुसारणिः २ इति द्वे अत्रिपुत्रस्य दुर्वाससः॥ प्राचेतसः १ वाल्मीकिः २ कविज्येष्ठः ३ कुशीवशः ४ ॥ १८ ॥ वल्मीकः ५ वाल्मीकः, "वाल्मीकिः" अप्यत्र ६ इति षट् वाल्मीकऋषेः ॥ कृतकोटिः १ काश्यपः २ इति द्वे काश्यपऋषेः ॥ कृष्णद्वैपायनः १ वेदव्यासः २ सत्यभारतः ३ ॥ १९ ॥ पाराशरिः ४ सात्यवतः ५ माठरः ६ बादरायणः ७ इति सप्त व्यासऋषेः ॥ वसिष्ठः १ अरुन्धतीनाथः २ इति द्वे वसिष्ठऋषेः ॥ विश्वामित्रः १ गाधिजः २ इति द्वे विश्वामित्रऋषेः ॥ ॥ २० ॥ गौतमः १ शतानन्दः २ इति द्वे गौतमऋषेः ॥ कणादः १ काश्यपः २ इति द्वे कणादऋषेः ॥ धन्वन्तरिः १ दिवोदासः २ काशिराजः ३ सुधोद्भवः ४ इति चत्वारि धन्वन्तरेः ॥ २१ ॥ पालकाख्यः, "पालकाप्यः" १ गणपतिसुतः, "गणवतीसुतः" २ करेणुसुतः ३ रुचिरासुतः ४ इति चत्वारि पालकादेः ॥ विष्णुगुप्तः १ कौण्डिण्यः, "कौटिल्यः" २ चाणक्यः ३ द्रोमिणः, "द्रामिलः" ४ अंगुलः, "अङ्गुलः ५ ॥ २२ ॥ वात्स्यायनः ६ मन्दनागः, "मल्लनागः" ७ पक्षिलः ८ स्वामी ९ इति नव चाणक्यस्य ॥ उपवर्षः १ हलभृतिः, हलेन भृतिः पोषणं यस्य २ कृतकोटिः ३ अयाचितः ४ इति चत्वारि उपवर्षस्य ॥ २३ ॥ पाणिनिः १ आहिकः २ दाक्षीपुत्रः ३ शालङ्की ४ पाणी ५ शालोत्तुरीयः ६ इति षट् पाणिनिऋषेः ॥ व्याडिः १ विन्ध्यस्थः २ नन्दिनीसुतः ३ ॥ २४ ॥ मेधावी ४ इति चत्वारि व्याडेः ॥ मेधाजित् १ कात्यः २ कात्यायनः ३ पुनर्वसुः ४ वररुचिः ५ इति पञ्च कात्यायनस्य ॥ गोनर्दीयः, गोनर्दे तन्नामकपर्वतसमीपे देशे भवः, "गोनन्दीयः" १ पतञ्जलिः, पतन् अञ्जलिर्यस्मै २ ॥ २५ ॥ चूर्णिकृत्, चूर्णिं महाभाष्यं करोतीति ३ भाष्यकारः ४ इति चत्वारि पतञ्जलिमुनेः ॥ हरिः १ भर्तृहरिः २ इति द्वे भर्तृहरिकवेः ॥ रघुकारः १ कालिदासः २ मेधारुद्रः ३ कोटिजित् ४ इति चत्वारि कालिदासकवेः ॥ २६ ॥ भारविः १ शत्रुलुम्पः, "शतपुष्पः" २ इति द्वे भारविकवेः॥भवभूतिः १ विस्मृतः २ भूगर्भः ३ इति त्रीणि भवभूतिकवेः ॥ सुगृहीतनामा १ इत्येकं शुभकाम्यया प्रातः स्मरणीयस्य पूण्यकीर्तनस्य जनस्य ॥ २७ ॥

स सुगृहीतनामा स्यात्पैण्डिन्यं भैक्षजीविका । पाषाण्डकौलिकौ खञ्जनरतं यतिमैथुनम्॥२८॥
अभावादङ्गनात्यागस्तुरगब्रह्मचर्यकम् । मुखघण्टा हुलहुली नागवीटस्तु टात्करः ॥ २९ ॥
खटकस्त्यक्षरश्चाथ दारकर्म करग्रहः । वाधुक्यं च विवाहः स्यात्कुहलिः पूगपुष्पिका ॥ ३० ॥
नान्दीकस्तोरणस्तम्भः सुरतं त्वभिमानितम् । धर्षितं सम्प्रयोगो ना रतं चाब्रह्मचर्यकम् ॥
उपसृष्टं त्रिभद्रं च क्रीडारत्नं महासुखम् ॥ ३१ ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

द्विजलिङ्गी नृपः क्षत्रः क्षत्रियोऽथ प्रजेश्वरः । राजाधिपौ मण्डलेश एकजन्मा भयापहः॥१॥
स्कन्धावारस्तु कटकः शिबिरं तु बलस्थितिः । आदिराजः पृथुर्वैन्यः काकुत्स्थस्तु पुरञ्जयः॥
यौवनाश्वस्तु मान्धाता खट्वाङ्गस्तु दिलीपराट् । रामो दाशरथिः कौशल्यायनिर्दशकण्ठजित्॥
मैथिली जानकी सीता वैदेही भूमिजा च सा । रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ॥४॥
सौमित्रिर्लक्ष्मणो मेघनादजिच्चाथ रावणः । राक्षसेन्द्रो दशमुखो लङ्केशो धनदानुजः ॥ ५ ॥
मन्दोदरीशः पौलस्त्यो मेघनादस्तु शक्रजित् । हनूमान्हनुमानाञ्जनेयो योगचरानिली ॥ ६ ॥
हिडिम्बारमणो रामदूतश्चैवार्जुनध्वजः । ऐन्द्रिस्तु बाली बालिश्च सुग्रीवो रविनन्दनः ॥७॥

पैण्डिन्यम्१भैक्षजीविका २ इति द्वे भिक्षाजीविनः ॥ पाषाण्डः, "पाखण्डः" इत्यपि१ कौलिकः २ इति द्वे वेदाचारत्यागिनः पाषाण्डस्य॥ खञ्जनरतम् १ यतिमैथुनम्२ इति द्वे यतिगोप्यरतेः॥२८॥ तुरगब्रह्मचर्यकम्१ इत्येकम् अभावात् स्त्रीत्यागस्य॥मुखघण्टा १ हुलहुली २ इति द्वे मुखघण्टायाः॥ नागवीटः, "नागरीटः" १ टात्करः, "टाङ्करः" २ ॥ २९ ॥ खटकः ३ त्यक्षरः ४ इति चत्वारि नागवीटस्य ॥ दारकर्म, दारौपयिकं दारसम्पादकं कर्म १ करग्रहः, करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र २ वाधुक्यम् ३ विवाहः ४ इति चत्वारि विवाहस्य ॥ कुहलिः १ पूगपुष्पिका २ इति द्वे विवाहपुष्पादेः ॥ ३० ॥ नान्दीकः १ तोरणस्तम्भः २ इति द्वे मङ्गलस्तम्भस्य ॥ सुरतम् १ अभिमानितम् २ धर्षितम् ३ सम्प्रयोगः ४ रतम् ५ अब्रह्मचर्यकम् ६ उपसृष्टम् ७ त्रिभद्रम् ८ क्रीडारत्नम् ९ महासुखम् १० इति दश सुरतस्य ॥ ३१ ॥

इति ब्रह्मवर्गः ॥ ७ ॥

---

द्विजलिङ्गी १ नृपः २ क्षत्रः ३ क्षत्रियः ४ इति चत्वारि क्षत्रियस्य ॥ प्रजेश्वरः १ राजा २ अधिपः ३ इति त्रीणि राज्ञः ॥ मण्डलेशः १ एकजन्मा २ भयापहः ३ इति त्रीणि मण्डलेशस्य ॥ १ ॥ स्कन्धावारः १ कटकः २ इति द्वे युद्धार्थमुद्युक्तसैन्यानां स्थापनस्य ॥ शिबिरम्१ बलस्थितिः २ इति द्वे सैन्यनिवासस्थानस्य ॥ आदिराजः १ पृथुः २ वैन्यः, वेनस्य दक्षिणबाहुमन्थनेन जातः ३ इति त्रीणि सूर्यवंशस्य नृपस्य ॥ काकुत्स्थः १ पुरञ्जयः २ इति द्वे सूर्यवंशस्य काकुत्स्थस्य नृपस्य ॥ २ ॥ यौवनाश्वः, युवनाश्वस्य राज्ञः अपत्यम् १ मान्धाता, माम् इन्द्रियं धयति, "मामयं धास्यतीत्यस्मात् मान्धाताऽसौ प्रकीर्तितः" २ इति द्वे युवनाश्वराजपुत्रस्य मान्धातृनृपस्य ॥ खट्वाङ्गः, "खट्टाङ्गः" १ दिलीपराट् २ इति द्वे दिलीपस्य नृपस्य ॥ रामः १ दाशरथिः २ कौशल्यायनिः, "कौसल्यायनिः" अप्यत्र ३ दशकण्ठजित् ४ इति चत्वारि दशरथपुत्रस्य रामस्य ॥ ३ ॥ मैथिली १ जानकी २ सीता ३ वैदेही ४ भूमिजा ५ इति पञ्च सीतादेव्याः ॥ कुशः १ लवः २ इति द्वे रामपुत्रयोः प्रत्येकमेकैकमेकैकस्य ॥ कुशीलवौ, कुशश्च लवश्चेति द्वन्द्वः, निपातनात् ईकारः १ इत्येकम् एकयोक्त्या रामपुत्रयोः ॥ ४ ॥ सौमित्रिः १ लक्ष्मणः २ मेघनादजित् ३ इति त्रीणि रामभ्रातुर्लक्ष्मणस्य ॥ रावणः १ राक्षसेन्द्रः २ दशमुखः ३ लङ्केशः ४ धनदानुजः, धनदस्य कुबेरस्य अनुजः कनीयान्भ्राता ५ ॥ ५ ॥ मन्दोदरीशः ६ पौलस्त्यः ७ इति सप्त रावणस्य ॥ मेघनादः १ शक्रजित् २ इति द्वे मेघनादस्य ॥ हनूमान् १ हनुमान् २ आञ्जनेयः ३ योगचरः ४ आनिलिः ५ ॥ ६ ॥ हिडिम्बारमणः ६

ऐलः पुरूरवो बौधिरुर्वशीवल्लभश्च सः। ययातिर्नाहुषिः शाकुन्तलेयो भरतः स्मृतः ॥ ८ ॥
दौष्मन्तिः सर्वदमनोऽर्जुनो बाहुसहस्रभृत्। हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः ॥ ९ ॥
नलोऽश्वविन्नैषधश्च महाभीष्मस्तु शान्तनुः। प्रातीपोऽस्य प्रिया काली दासेयी च झषोदरी॥
विचित्रवीर्या चित्राङ्गदसूर्योजनगन्धिका। व्यासमाता सत्यवती गाङ्गेयो गान्दिनीसुतः ११॥
देवव्रतः शान्तनवो गाङ्गो गाङ्गायनिश्च सः।भीष्मः कौणपदन्तश्च स्वेच्छामृत्युः पुरावसुः १२॥
धृतराष्ट्रस्त्वाम्बिकेयः पाण्डुर्माद्रीपृथापतिः । दुर्योधनस्तु कुरुराङ्गान्धारेयः सुयोधनः ॥१३॥
धर्मपुत्रोऽजमीढः स्यात्कर्णानुजयुधिष्ठिरौ। अजातशत्रुः काङ्कोऽथ भीमसेनः कटव्रणः ॥१४॥
वीररेणुर्नागबलो गुणकारो वृकोदरः । बककीचककिर्मीरजरासन्धहिडिम्बजित् ॥ १५ ॥
पार्थः किरीटी गाण्डीवी गुडाकेशो बृहन्नलः। अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनञ्जयः १६
सव्यसाची सुभद्रेशः शब्दभेदी कपिध्वजः।वार्तघ्नश्चाऽपि बीभत्सुर्द्रौपदी पाण्डुशर्मिला१७॥
पाञ्चाली पार्वती कृष्णा चेदिजा नित्ययौवना। याज्ञसेन्यथ राधेयो वसुसेनोऽर्कनन्दनः ॥१८॥
घटोत्कचान्तकः कर्णश्चम्पेशः सूतपुत्रकः। द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः॥१९॥

रामदूतः ७ अर्जुनध्वजः ८ इत्यष्टौ हनुमतः॥ ऐन्द्रः १ वाली २ वालिः ३ क्वचित् "वाली" "वालिः" इति त्रीणि इन्द्रपुत्रस्य कपिराजस्य ॥ सुग्रीवः १ रविनन्दनः २ इति द्वे सूर्यपुत्रस्य वानरराजस्य ॥७॥ ऐलः १ पुरूरवः २ बौधिः ३ उर्वशीवल्लभः ४ इति चत्वारि "पुरूरवः" इति ख्यातस्य चन्द्रवंशीयनृपस्य ॥ ययातिः १ नाहुषिः २ इति द्वे "ययातिः" इति ख्यातस्य नृपस्य ॥ शाकुन्तलेयः १ भरतः २ ॥ ८ ॥ दौ-ष्मन्तिः, "दौष्यन्तिः" ३ सर्वदमनः ४ इति चत्वारि दुष्मन्तपुत्रस्य भरतनृपस्य॥ अर्जुनः १ बाहुसहस्रभृत् २ हैहयः, "हैहयेश्वरः" अप्यत्र ३ कार्तवीर्यः ४ इति चत्वारि "कार्तवीर्य" इति ख्यातस्य पाण्डवनृपस्य ॥ पुण्यश्लोकः १ बाहुकः २ ॥ ९ ॥ नलः ३ अश्ववित् ४ नैषधः ५ इति पञ्च चन्द्र-वंशीयनृपस्य नलस्य ॥ महाभीष्मः १ शान्तनुः २ प्रातीपः "प्रतीपः" ३ इति त्रीणि चन्द्रवंशीयप्रतीपराजपुत्रस्य शान्तनोः ॥ काली १ दासेयी २ झषोदरी ३ ॥१०॥ विचित्रवीर्या ४ चित्राङ्गदसूः ५ योजनगन्धिका ६ व्यास-माता ७ सत्यवती ८ इत्यष्टौ व्यासमातुः सत्यवत्याः ॥ गाङ्गेयः १ गान्दिनीसुतः २ ॥११॥ देवव्रतः, देवम् इन्द्रियसंयमनं व्रतमस्य ३ शान्तनवः ४ गाङ्गः ५ गाङ्गायनिः ६ भीष्मः ७ कौणपदन्तः ८ स्वेच्छामृत्युः ९ पुरावसुः १० इति दश कुरुवंश्यस्य शान्तनुसुतस्य भीष्मनृपस्य ॥ १२ ॥ धृतराष्ट्रः १ आम्बिकेयः २ इति द्वे चन्द्रवंशीयस्य दुर्योधनपितुर्धृतराष्ट्रस्य नृपस्य ॥ पाण्डुः १ माद्रीपतिः २ पृथापतिः ३ इति त्रीणि "पाण्डुः" इति ख्यातस्य चन्द्रवंशीयस्य नृपस्य ॥ दुर्योधनः १ कुरुराट् २ गान्धारेयः ३ सुयोधनः ४ इति चत्वारि धृतराष्ट्रनृपतेर्ज्येष्ठपुत्रस्य दुर्योधननृपस्य ॥ १३ ॥ धर्मपुत्रः १ अजमीढः २ कर्णानुजः ३ युधिष्ठिरः ४ अजातशत्रुः ५ काङ्कः ६ इति षट् पाण्डवश्रेष्ठस्य युधिष्ठिरनृपस्य ॥ भीमसेनः १ कटव्रणः २ ॥ १४ ॥ वीररेणुः ३ नागबलः ४ गुणकारः ५ वृकोदरः ६ बकजित्, "बकजित्" "बकान्तकः" इत्या-दयोऽप्यत्र ७ कीचकजित् ८ किर्मीरजित् ९ जरासन्धजित् १० हिडिम्बजित् ११ इत्येकादश युधिष्ठिरानुजस्य भीमसेनस्य ॥ १५ ॥ पार्थः १ किरीटी २ गाण्डीवी ३ गुडाकेशः ४ बृहन्नलः, "बृहन्नडः" अप्यत्र ५ अर्जुनः ६ फाल्गुनः ७ जिष्णुः ८ विजयः ९ धनञ्जयः १० ॥१६॥ सव्यसाची ११ सुभद्रेशः १२ शब्दभेदी १३ कपिध्वजः १४ वार्तघ्नः १५ बीभत्सुः १६ इति षोडश मध्यमपाण्डवस्य अर्जुनस्य ॥ द्रौपदी १ पाण्डुशर्मिला २ ॥ १७ ॥ पाञ्चाली ३ पार्वती ४ कृष्णा ५ चेदिजा ६ नित्ययौवना ७ याज्ञसेनी ८ इत्यष्टौ द्रुपदराजदुहितुः द्रौपद्याः ॥ राधेयः, राधायाः अपत्यं पुत्रत्वेन परिग्रहेण तत्पालितत्वात् १ वसुसेनः, "वसुषेणः" २ अर्कन-न्दनः ३ ॥१८॥ घटोत्कचान्तकः ४ कर्णः ५ चम्पेशः ६ सूतपुत्रकः ७ इति सप्त अङ्गदेशाधिपस्य पृथात्मजस्य कर्णस्य ॥ द्रोणः १ गुरुः २ आचार्यः ३ इति त्रीणि "द्रोणः" इति ख्यातस्य राजगुरुविप्रस्य॥ अश्वत्थामा १

द्रौणायनोऽथ राजर्षिर्जनेमेजयसंज्ञकः । पारीक्षितोऽप्यथ जरत्कारुर्यायावरो मतः ॥ २० ॥
प्रियाऽस्य मनसादेवी जरत्कारुरथैतयोः । आस्तीकनामा तनयो विरोचनसुतो बलिः ॥२१॥
वाणो बिन्ध्याबलिसुतस्त्वाष्ट्रो वृत्रोऽप्यहिश्च सः । दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः२२
बार्हद्रथिर्जरासन्धः कंसः स्यादुग्रसेनजः । कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः ॥ २३ ॥
मन्त्री ग्रन्थिहरोऽमात्यो द्वाःस्थितो वेत्रधारकः । द्वौःसाधिको वर्तरूको गर्वाटो दण्डवासिनिः२४
सहपांशुकिलः स्नेही वयसोऽप्यथ वार्त्तिकः । वार्त्तायनः प्रवृत्तिज्ञो मौहूर्तो दैवलेखकः ॥ २५॥
चित्तोक्तिः पुष्पशकटी दैवप्रश्न उपश्रुतिः। लेखको मसिपण्यः स्याद्बोलकः किरिकोऽपि सः२६
मासिधानी मसिमणिर्मेलान्धुर्वर्णकूपिका । मसिजलं तु मेला स्यात्पत्राञ्जनं मसिर्द्वयोः ॥ २७॥
लेखनी वर्णतूली स्याल्लेखो वाचिकहारकः । वर्णदूतः स्वस्तिमुखः काचनं तन्निबन्धनम्॥२८॥
लेखस्थानं ग्रन्थकुटी मुद्रा प्रत्ययकारिणी । यातुर्गन्तुश्च पथिको हारिः पथिकसन्ततिः ॥२९॥
सन्देशः प्राभृतं कौशल्युत्कोचस्तूपदानकम् । जनान्तिकं त्वप्रकाशो लुण्डी स्यान्न्यायसारिणी
ताम्बूलदो वाग्गुलिकः संवाहकोऽङ्गमर्दकः । चमारं रोमगुत्सं च केशरं चावचूलकम् ॥३१॥

कृपीसुतः २ ॥ १९ ॥ द्रौणायनः ३ इति त्रीणि अश्वत्थाम्नः द्रोणाचार्यपुत्रस्य ॥ राजर्षिः १ जनमेजयः, "जन्मेजयः" अप्यत्र २ पारीक्षितः ३ इति त्रीणि परीक्षितराजपुत्रस्य जनमेजयस्य नृपस्य ॥ जरत्कारुः १ यायावरः २ इति द्वे मनसादेवीवल्लभस्य मुनेर्जरत्कारोः॥२०॥ मनसादेवी१जरत्कारुः २ इति द्वे जरत्कारोः प्रियायाः मनसादेव्याः ॥ आस्तीकः १ इत्येकं जरत्कारुमनसादेव्योः पुत्रस्य ॥ विरोचनसुतः १ बलिः २ इति द्वे विरोचनपुत्रस्य बलेः॥२१॥वाणः,"वाणः" अप्यत्र१विन्ध्यासुतः,'विन्ध्यासुतः"अप्यत्र२बलिसुतः ३ इति त्रीणि बलिपुत्रस्य बाणस्य॥त्वाष्ट्रः१ वृत्रः २ अहिः ३ इति त्रीणि त्वष्टृपुत्रस्य वृत्रस्य॥दमघोषसुतः १ चैद्यः२चेदिराट्३ "शिशुपालकः, शिशुतालकः" अप्यत्र४इति चत्वारि दमघोषात्मजस्य चेदिदेशीयराजस्य शिशुपालस्य ॥२२॥ बार्हद्रथिः १ जरासन्धः, "जरायाः सन्धितो यस्मात् जरासन्धस्ततोऽभवत्" २ इति द्वे जरासन्धस्य नृपस्य ॥ कंसः १ उग्रसेनजः २ कर्णीसुतः ३ मूलदेवः ४ मूलभद्रः ५ कलाङ्कुरः ६ इति षट् उग्रसेनपुत्रस्य कंसस्य नृपस्य ॥ २३ ॥ मन्त्री १ ग्रन्थिहरः २ अमात्यः ३ इति त्रीणि अमात्यस्य ॥ द्वाःस्थितः, "द्वास्थितः" "द्वास्थः" "द्वारस्थः" "द्वाःस्थाः" इत्यादयः अप्यत्र १ वेत्रधारकः २ द्वौःसाधिकः, "दौःसाधिकः" ३ वर्तरूकः ४ गर्वाटः ५ दण्डवासिनिः, "द्वारी" "द्वारप" इत्यादयोऽप्यत्र ६ इति षट् द्वारपालस्य ॥ २४ ॥ सहपांशुकिलः १ स्नेही २ वयसः ३ इति त्रीणि वयस्यस्य ॥ वार्त्तिकः १ वार्त्तायनः २ प्रवृत्तिज्ञः, "प्रवृत्तज्ञः" ३ इति त्रीणि प्रवृत्तिविदः ॥ मौहूर्त्तः १ दैवलेखकः २ इति द्वे गणकस्य ॥ २५ ॥ चित्तोक्तिः १ पुष्पशकटी २ दैवप्रश्नः ३ उपश्रुतिः ४ इति चत्वारि आकाशवाण्याः ॥ लेखकः १ मासिपण्यः २ वोलकः, "वोरकः" ३ किरिकः ४ इति चत्वारि लेखकस्य ॥ २६ ॥ मसिधानी, "मसिधानम्" अप्यत्र १ मसिमणिः २ मेलान्धुः ३ वर्णकूपिका ४ इति चत्वारि मसिद्रव्यस्थापनभाजनस्य ॥ मसिजलम् १ मेला २ इति द्वे लेखनद्रव्यस्य ॥ पत्राञ्जनम् १ मासिः २ इति द्वे कज्जलयाः ॥ २७॥ लेखनी १ वर्णतूली २ इति द्वे लेखनसाधनस्य कलमस्य ॥ लेखः १ वाचिकहारकः २ वर्णदूतः ३ स्वस्तिमुखः ४ इति चत्वारि लेखनस्य ॥ काचनम्, "कचेलम्" १ इत्येकं पत्रनिबन्धनस्य लाक्षाद्रव्यस्य ॥ २८॥ लेखस्थानम् १ ग्रन्थकुटी २ इति द्वे लेखस्थानस्य ॥ मुद्रा १ प्रत्ययकारिणी २ इति द्वे मुद्रायाः ॥ यातुः १ गन्तुः २ पथिकः ३ इति त्रीणि देशान्तरगमनाय गृहान्निःसृत्य पथि गन्तुः ॥ हारिः १ पथिकसन्ततिः २ इति द्वे पथिकसङ्घस्य ॥ २९ ॥ सन्देशः १ प्राभृतम् २ कौशली ३ इति त्रीणि सन्देशस्य ॥ उत्कोचः १ उपदानकम् २ इति द्वे उत्कोचस्य ॥ जनान्तिकम् १ अप्रकाशः २ इति द्वे अप्रकाशस्य ॥ लुण्डी १ न्यायसारिणी, "न्यायसारणी" २ इति द्वे न्यायसारिण्याः ॥ ३० ॥ ताम्बूलदः १ वाग्गुलिकः २ इति द्वे

कुठेरुर्मन्थरुः प्रोतोत्सादनं वस्त्रकुट्टिमम् । छत्रं पुटोटजं राजशृङ्गं कनकदण्डकम् ॥ ३२ ॥
हस्ती महामृगः पीलुः सिन्धुरो दीर्घमारुतः । राजीवो जलकाङ्क्षश्च निर्झरः करटी कटी ३३॥
विलोमजिह्वान्तःस्वेदपिण्डपादलतालकाः । वराङ्गः पुष्करी शूर्पकर्णसामजपेचिलाः ॥ ३४ ॥
करिणी वासिता गम्भीरवेद्यङ्कुशदुर्धरः । चालकव्यालकौ राजवाह्यो विजयकुञ्जरः ॥ ३५ ॥
ईषादन्तो महादन्तः कर्णास्फाले झलज्झला। मदप्रयोगो व्यस्तारो विक्कस्तु करिशावकः॥३६॥
आरक्षः कुम्भसन्धिः स्यात्सन्दानोऽष्ठीवतोरधः । नासापूर्वं स्थूलहस्तं दन्तमूले करीरिका॥३७॥
शङ्खः कूटो दन्तमध्यं प्रवेष्टः पृष्ठतल्पने । आयस्कारः प्रजङ्घाग्रे प्रोहश्चरणपर्वणि ॥ ३८ ॥
न ना गात्रावरे नाली कर्णारा कर्णवेधनी । आलानं शङ्कुरक्षोभः प्रारब्धिर्गजबन्धनी ॥३९॥
प्राची तु शृङ्खला हिञ्जीरोऽस्त्री स्यादन्दुकश्च सः।पित्तज्वरःपाकलोऽस्य कूटपूर्वस्त्रिदोषजः४०॥
अश्वः किण्वी हरिक्रान्तः शालिहोत्रश्च मुद्गभुक्।श्रीपुत्रश्चामरी हेषी राजस्कन्धो मरुद्रथः४१॥
वातायनश्चैकशफो यस्तु पञ्चाङ्गपुष्पितः । स पञ्चभद्रः सूर्याश्वे वाताटहरितौ समौ ॥ ४२ ॥

ताम्बूलदातुः ॥ संवाहकः, "सवाहकः" १ अङ्गमर्दकः, "अङ्गमर्दः" अप्यत्र २ इति द्वे अङ्गमर्दकारकस्य सेवकस्य ॥ चामरम्, चमरस्य विकारं तत्पुच्छनिर्मितत्वात् १ रोमगुत्सम्, "रोमगुच्छम्" अप्यत्र २ केशरम् ३ अवचूलकम् ४ इति चत्वारि चमरपुच्छकृतस्य व्यजनस्य ॥ ३१ ॥ कुठेरुः, "कुठेरः" १ मन्थरुः, "तन्मरुः" २ इति द्वे चामरवातस्य ॥ प्रोतोत्सादनम् १ वस्त्रकुट्टिमम् २ इति द्वे वस्त्रनिर्मितस्य ॥ छत्रम् १ पुटोटजम् १ इति द्वे छत्त्रस्य ॥ राजशृङ्गम् १ कनकदण्डकम् २ इति द्वे सुवर्णदण्डच्छत्रस्य ॥ ॥ ३२ ॥ हस्ती १ महामृगः २ पीलुः ३ सिन्धुरः ४ दीर्घमारुतः ५ राजीवः ६ जलकाङ्क्षः ७ निर्झरः, "निर्जूरः" ८ करटी ९ कटी १० ॥३३॥ विलोमजिह्वः ११ अन्तःस्वेदः १२ पिण्डपादः १३ लतालकः १४ वराङ्गः १५ पुष्करी १६ शूर्पकर्णः १७ सामजः १८ पेचिलः १९ इत्येकोनविंशतिः हस्तिनः॥३४॥ करिणी १ वासिता २ इति द्वे हस्तिन्याः॥ गम्भीरवेदी, "गम्भीरवेदितः" अप्यत्र, "त्वग्भेदात् शोणितस्रावान्मांसस्य कथनादपि । आत्मानं यो न जानाति स "स्याद्गम्भीरवेदितः" इति १ अङ्कुशदुर्धरः २ चालकः ३ व्यालकः ४ इति चत्वारि अङ्कुशावेत्तुर्दुर्दान्तहस्तिनः॥ राजवाह्यः १ विजयकुञ्जरः २ इति द्वे विजयगजस्य॥३५॥ ईषादन्तः १ इत्येकम् ईषादीर्घदन्तस्य हस्तिनः ॥ महादन्तः १ इत्येकं महादन्तस्य हस्तिनः ॥ झलज्झला १ इत्येकं हस्तिकर्णचालनस्य ॥ मदप्रयोगः १ व्यस्तारः २ इति द्वे मदप्रयोगस्य ॥ विक्कः १ कारिशावकः, " कारिशाबकः " २ इति द्वे करिशावकस्य ॥ ३६ ॥ आरक्षः १ कुम्भसन्धिः २ इति द्वे कुम्भसन्धेः ॥ सन्दानः १ इत्येकं गजस्याष्ठीवतोरधोभागस्य ॥ नासापूर्वम् १ स्थूलहस्तम् २ इति द्वे नासापूर्वभागस्य ॥ करीरिका, "करीरा" अप्यत्र १ इत्येकं हस्तिदन्तमूलस्य ॥ ३७ ॥ शङ्खः १ कटः, " कूटः " २ दन्तमध्यम् ३ इति त्रीणि हस्तिदन्तमध्यस्य ॥ प्रवेष्टः १ इत्येकं गजपृष्ठतल्पनस्य ॥ आयस्कारः १ इत्येकं प्रजङ्घाग्रस्य ॥ प्रोहः १ इत्येकं चरणपर्वणः ॥ ३८ ॥ गात्रम् १ इत्येकं हस्तिनः पूर्वजङ्घादिदेशस्य ॥ अवरम् १ इत्येकं पश्चाज्जाङ्घादिदेशस्य ॥ नाली, " नीली " १ कर्णारा २ कर्णवेधनी ३ इति त्रीणि कर्णवेधन्याः ॥ आलानम् १ शङ्कुः २ अक्षोभः ३ प्रारब्धिः ४ गजबन्धनी ५ इति पञ्च हस्तिबन्धनस्तम्भस्य ॥ ३९ ॥ प्राची, " पारी " १ शृङ्खला २ हिञ्जीरः ३ इति त्रीणि शृङ्खलायाः ॥ अन्दुकः १ इत्येकं हस्तिपादबन्धननिगडस्य ॥ क्वचित् अङ्कुशः १ इत्येकं हस्तिचालनोपयोगिनः वक्राग्रलौहास्त्रस्य ॥ पाकलः १ इत्येकं हस्तिनः पित्तजज्वरस्य ॥ कूटपूर्वः १ इत्येकं हस्तिनः त्रिदोषजज्वरस्य ॥ ४० ॥ अश्वः १ किण्वी, " किल्वी " २ हरिक्रान्तः ३ शालिहोत्रः ४ मुद्गभुक् ५ श्रीपुत्रः ६ चामरी ७ हेषी ८ राजस्कन्धः ९ मरुद्रथः १०॥ ४१ ॥ वातायनः ११ एकशफः १२ इति द्वादश वाजिनः ॥ यस्य अश्वस्य पञ्चसु शरीरावयवेषु पुष्पमस्ति स पञ्चभद्रः, तथोक्तम्—"पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः" इति १ इत्येकं "पञ्चभद्र" इति ख्यातस्य वाजिनः ॥ वाताटः १ हरित् २ इति द्वे सूर्याश्वस्य ॥ ४२ ॥

यायावरोऽश्वमेधीयः पारसीकः परादनः । आरट्टजश्च चोस्कस्तु सिन्धुवारो हयोत्तमः ॥४३॥
वाताश्वंजात्याजानेयो वेशरोऽश्वतरः खरः । श्रीवृक्षोऽस्य हृदावर्तो रोचमानो गलोद्भवः॥४४॥
ऊर्ध्वस्थितिः पुरुषिकं विक्रान्तिस्तु पुलायितम् । पुलासन्नाहप्रखरौ कवियं कविकोच्यते॥४५॥
ग्रीवाघण्टा घर्घरा स्याद्रश्मिः प्रवयणं च तत् । प्रतोदोऽथ खुरो विङ्खः पुटो लुण्टनवेल्लने ४६
वल्गा दन्तालिका पल्ययनं पर्याणमस्य तु । वङ्काग्रभागः स्यादश्ववारो वल्लभपालकः॥ ४७॥
नन्दीघोषोऽर्जुनरथो नीतिघोषस्तु गीष्पतेः । चङ्कुरं धोरणं यानमात्रे चक्रं त्वरि स्मृतम् ॥
लघ्री त्वाष्ट्री रथी कालवलनं त्वङ्कवर्मणी । मेठो मेण्डो हस्तिपके जङ्घात्राणं तु मङ्खुणम्॥४९
स्यान्नायकाग्रेसरिकौ नासीरं दर्प ऊष्मणि । शस्त्रमायुधमुद्घातः स्थावरं तु धनुर्गुणी ॥५०॥
शरावापो धनुः स्त्री स्यात्तृणता त्रिणताऽपि च । व्यधस्तु प्रतिकायः स्याज्जीवा स्याद्भारवं गुणः
शस्त्राभ्यासश्च खुरली बाणः स्यादस्त्रकण्टकः । स्थूलक्ष्वेडो विपाटश्च चित्रपुङ्खः शरः सरः ५२
पत्रवाहो विकर्षोऽथ तीरं विज्जालसायके । लोहनालस्तु नाराचः प्रसरः काण्डगोचरः ॥५३॥
ऋष्टिः खड्गस्तरवारिः शस्त्रो भद्रात्मजश्च सः । धाराविषो विशसनो न्युब्जखड्गः कटीतलः ॥

यायावरः १ अश्वमेधीयः २ इति द्वे अश्वमेधाङ्गस्य अश्वस्य ॥ पारसीकः १ परादनः २ आरट्टजः, "आवट्टजः" क्वचित् "आवट्टजः" इति पाठः ३ इति त्रीणि पारसीकदेशीयाश्वस्य ॥ चोस्कः १ सिन्धुवारः २ इति द्वे सिन्धुदेशीयाश्वस्य ॥ हयोत्तमः १ ॥ ४३ ॥ वाताश्वजाती, "वाताश्वः" "वातहयः" अप्यत्र २ आजानेयः ३ इति त्रीणि कुलीनाश्वस्य ॥ वेशरः, "वसरः" अप्यत्र १ अश्वतरः २ खरः ३ इति त्रीणि अश्वतरस्य ॥ श्रीवृक्षः, "श्रीवृक्षकः" १ हृदावर्त्तः २ इति द्वे अश्वहृदयस्थस्य श्वेतरोमावर्तभेदस्य ॥ रोचमानः १ इत्येकम् अश्वगलोद्भवस्य रोमावर्तस्य ॥ ४४ ॥ पुरुषिकम् १ इत्येकम् अश्वस्योर्ध्वस्थितरोमावर्तस्य ॥ विक्रान्तिः १ पुलायितम् २ इति द्वे अश्वगतेः ॥ पुलासन्नाहः १ प्रखरः २ इति द्वे हयसज्जीकरणस्य ॥ कवियम् १ कविका २ इति द्वे अश्वमुखस्थायाः लोहमयायाः कविकायाः ॥ ४५ ॥ ग्रीवाघण्टा १ घर्घरा १ इति द्वे ग्रीवाघण्टायाः ॥ रश्मिः १ प्रवयणम्, "प्रवपणम्" २ इति द्वे अश्वादिदाम्नः ॥ प्रतोदः १ इत्येकम् अश्वादिताडनदण्डस्य ॥ खुरः १ विङ्खः २ पुटः ३ इति त्रीणि अश्वखुरस्य ॥ लुण्टनम्, "लुटनम्" अप्यत्र १ वेल्लनम् २ इति द्वे अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनः पुनरङ्गचालनस्य ॥४६॥ वल्गा १ दन्तालिका २ इति द्वे अश्वमुखस्थस्य रज्जुभेदस्य ॥ पल्ययनम् १ पर्याणम् २ वङ्काग्रभागः ३ इति त्रीणि अश्वसज्जीकरणविशेषस्य ॥ अश्ववारः १ वल्लभपालकः २ इति द्वे अश्वपालस्य ॥ ४७ ॥ नन्दीघोषः १ इत्येकमर्जुनरथस्य ॥ नीतिघोषः १ इत्येकं बृहस्पतिरथस्य ॥ चङ्कुरम् १ धोरणम् २ इति द्वे यानमात्रस्य ॥ चक्रम् १ आरि २ इति द्वे चक्रस्य ॥ ४८ ॥ लघ्री १ त्वाष्ट्री २ रथी ३ इति त्रीणि लघुरथस्य ॥ कालवलनम्, "काललवनम्" १ अङ्कम् २ वर्म्म ३ इति त्रीणि "सन्नाहः" इति ख्यातस्य वर्मणः ॥ मेठः, "मेढः" १ मेण्डः २ इति द्वे हस्तिपालस्य ॥ जङ्घात्राणम् १ मङ्खुणम् २ इति द्वे जङ्घात्राणस्य ॥ ४९ ॥ नायकः १ अग्रेसरिकः २ इति द्वे नायकस्य ॥ नासीरम् १ दर्पः २ इति द्वे दर्पस्य ॥ शस्त्रम् १ आयुधम् २ उद्घातः, "उद्धातः" ३ इति त्रीणि शस्त्रस्य ॥ स्थावरम् १ धनुः २ गुणी ३ ॥ ५० ॥ शरावापः, "शरारोपः" अप्यत्र ४ धनुः ५ तृणता ६ त्रिणता ७ इति सप्त धनुषः ॥ व्यधः, "व्यध्यः" १ प्रतिकायः २ जीवा ३ भारवम्, "मारवम्" ४ गुणः ५ इति पञ्च धनुर्गुणस्य ॥५१॥ शस्त्राभ्यासः १ खुरली २ इति द्वे शस्त्राभ्यासस्य ॥ बाणः १ अस्त्रकण्टकः २ स्थूलक्ष्वेडः ३ विपाटः ४ चित्रपुङ्खः ५ शरः ६ सरः ७ ॥ ५२ ॥ पत्रवाहः ८ विकर्षः ९ इति नव बाणस्य ॥ तीरम् १ विज्जालम् २ सायकम्, "शायकम्" अप्यत्र ३ इति त्रीणि सायकस्य ॥ लोहनालः १ नाराचः २ प्रसरः ३ काण्डगोचरः ४ इति चत्वारि नाराचस्य ॥ ५३ ॥ ऋष्टिः १ खड्गः २ तरवारिः ३ शस्त्रः ४ भद्रात्मजः ५ धारा-

स्यादट्टनं चक्रफलं पर्शुः परशुरित्यपि। दीर्घायुधं शलः कुन्तः शल्यः शङ्कुर्विषाङ्कुरः॥५५॥
शूलोऽस्त्री सीसकं लग्नाः प्रातर्गेयाः स्तुतिव्रताः। भोगावली वन्दिपाठो वसुकीटस्तु याचकः॥
वातकेतुः क्षितिकणः स्यात्पांशुर्मेदिनीद्रवः। सम्भारः सर्वपूर्णत्वं पताका व्योममण्डलम् ५७॥
कदली कन्दली चीनमक्षवाटस्तु मल्लभूः। भीरुस्तु भेलो हरिणहृदयः स्यात्पलङ्कटः ॥ ५८ ॥
विद्रवस्तु शृगाली स्यादाघातस्तु वधस्थली। कदनं मारणं मन्थः सौप्तिकं रात्रिमारणम् ५९॥
निपातो भूमिलाभश्च मृत्युरप्यथ मारकः। मरको मारिरुत्पातः शवस्तु क्षितिवर्धनः ॥ ६० ॥
पश्चावस्थः कटः स्थागः श्मशानं तु शतानकम्। रुद्राक्रीडो दाहसरः संस्क्रिया सत्क्रिया समे॥
चिता काष्ठमटी चैत्यं चिताचूडकमिष्यते। चितं चाथान्तशय्यायां खटिर्वारुठ इत्यपि।
उपग्रहस्तु ग्राहः स्याद्वन्दी करमरीत्यपि ॥ ६२ ॥

इति क्षत्रियवर्गः ॥ ८ ॥

---

तृष्णा धनपिशाची स्याद्वार्धुष्यं धान्यवर्धने। प्रामाज्र्यमृणमर्थानां प्रयोगः स्यान्मलाम्लिका १॥
ऋणमुक्तिर्विगणनं क्षेत्रं वारटमुच्यते। हलिर्बृहद्धले मुद्गो हरिनामा वनाखुकः ॥ २ ॥

त्रिपः ६ विशसनः ७ इति सप्त खड्गस्य॥ न्युब्जखड्गः १ कटीतलः २ इति द्वे वक्रखड्गस्य ॥ ५४ ॥ अट्टनम्, "अत्तनम्"१ चक्रफलम् २ इति द्वे चक्रफलस्य॥ पर्शुः १ परशुः २ इति द्वे परशोः ॥ दीर्घायुधम् १ शलः २ कुन्तः ३ शल्यः ४ शङ्कुः ५ विषाङ्कुरः ६ इति षट् "कुन्त" इति ख्यातस्य प्रासाख्यायुधस्य॥५५॥ शूलः १ सीसकम् २ इति द्वे सुतीक्ष्णस्य अयःफालस्य ॥ लग्नाः १ प्रातर्गेयाः २ स्तुतिव्रताः ३ इति त्रीणि स्तुतिपाठकानाम् ॥ भोगावली १ वन्दिपाठः २ इति द्वे स्तुतिग्रन्थस्य ॥ वसुकीटः १ याचकः, "याचितः" २ इति द्वे याचकस्य॥ ५६ ॥ वातकेतुः १ क्षितिकणः २ पांशुः ३ मेदिनीद्रवः ४ इति चत्वारि पांशोः ॥ सम्भारः १ सर्वपूर्णत्वम् २ इति द्वे सम्भारस्य ॥ पताका १ व्योममण्डलम्, क्वचित् "व्योममञ्जरम्" इति पाठः २ ॥ ५७ ॥ कदली ३ कन्दली ४ चीनम् ५ इति पञ्च पताकायाः ॥ अक्षवाटः, क्वचित् "अक्षवाटः" इति पाठः १ मल्लभूः २ इति द्वे बाहुयुद्धभूमेः ॥ भीरुः १ भेलः २ हरिणहृदयः ३ पलङ्कटः ४ इति चत्वारि भीरोः ॥ ५८ ॥ विद्रवः, "विद्रावः" अप्यत्र १ शृगाली २ इति द्वे पलायनस्य ॥ आघातः १ वधस्थली २ इति द्वे वधस्थानस्य ॥ कदनम् १ मारणम् २ मन्थः ३ इति त्रीणि मारणस्य ॥ सौप्तिकम्, सुप्तिकाले रात्रौ भवम् १ रात्रिमारणम् २ इति द्वे रात्रिमारणस्य ॥ ॥ ५९ ॥ निपातः १ भूमिलाभः २ मृत्युः, "मृत्करः" ३ इति त्रीणि मृत्योः ॥ मारकः १ मरकः, "मरणः" २ मारिः, "मारी" इत्यप्यत्र, "मारीभये राजभये" इति बटुकस्तवः ३ उत्पातः ४ इति चत्वारि मारिकभयस्य ॥ शवः १ क्षितिवर्धनः २ ॥ ६० ॥ पश्चावस्थः ३ कटः ४ स्थागः, "स्थालः"५ इति पञ्च शवस्य॥ श्मशानम् १ शतानकम् २ रुद्राक्रीडः ३ दाहसरः ४ इति चत्वारि श्मशानस्य ॥ संस्क्रिया १ सत्क्रिया २ इति द्वे संस्कारस्य ॥६१॥ चिता १ काष्ठमटी २ चैत्यम् ३ चिताचूडकम् ४ चितम् ५ इति पञ्च शवदाहार्थं कृतायाः काष्ठचुल्ल्याः ॥ खटिः १ वारुठः २ अपिशब्देन "शवरथः" "शववाहनम्" "शवयानम्" इत्यादयः सङ्गृह्यन्ते, इति द्वे शवरथस्य ॥ उपग्रहः १ ग्राहः २ वन्दी, "वन्दिः"३ करमरी ४ अपिशब्दात् "करिमरिः" अप्यत्र, इति चत्वारि कारावद्धमनुष्यादेर्वन्द्याश्च॥६२॥

इति क्षत्त्रियवर्गः ॥ ८ ॥

---

तृष्णा १ धनपिशाची २ इति द्वे तृष्णायाः ॥ वार्धुष्यम् १ इत्येकं धान्यादेर्वर्धनोपायस्य ॥ प्रामाज्र्यम्, "प्रामित्यम्" १ ऋणम् २ इति द्वे ऋणस्य ॥ मलाम्लिका, "कलाम्बिका", क्वचित् "कलम्बिका" १ इत्येकम् अर्थानां प्रयोगस्य ॥ १ ॥ ऋणमुक्तिः १ विगणनम् २ इति द्वे ऋणमुक्तेः ॥ क्षेत्रम् १ वारटम् २ इति

वासन्तश्चाथ मसुरो मसूरो व्रीहिकाश्चनः । सर्षपः स्यात्सारिषपः कटुस्नेहश्च तन्तुभः ॥ ३ ॥
प्रवेटः सितशूकः स्याद्गोधूमो म्लेच्छभोजनः।ताम्रवृन्तः कुलत्थः स्यान्निःस्नेहश्चण्डिकाऽतसी॥
मूर्खः पुरीषलो माषो राजमाषस्तु वर्वटः। फुल्लपालः शूर्पवाते न स्त्री तितउ चालनी ॥ ५ ॥
कण्डन्युदूखलं प्रस्थः पालिः सूदः प्रचेलकः। कुशूलाऽस्त्री व्रीह्यगारं कन्दुराग्निष्ठ उच्यते॥६॥
आलिञ्जरो ना नन्दा स्त्री मृत्सा भाण्डकमृष्टिका। वारासनं वाः सदनं क्वणनो हण्डिकासुतः॥७॥
कलशी गर्गरी तुल्या स्याच्छरावस्तु मार्त्तिकः। शालाजिरः पार्थिवश्च मृत्कांस्यमथ लोहिका८
खरसोल्लः खरपात्रं शिङ्घाणं काचभाजनम् । काष्ठलोही तु वातर्दिर्जीरको दीप्यकः स्मृतः९
कटुभङ्गस्तु शुण्ठी स्यात्काञ्जिकं तु तुषोदकम् । गृहाम्लं सिद्धसलिलं रक्षोघ्नं धातुनाशनम्१०
गृहिणी मधुरा हिङ्गु शूलहृत्सूपधूपनम् । घर्षिणी हेमरागिण्यो हरिद्रा पीतवालुका ११ ॥
गण्डोलं स्याद्गुडः स्वादुः पिप्यिटा गुडशर्करा । महाश्वेता तु मधुजा प्रयस्तं स्यात्सुसंस्कृतम्१२
चिपिटो धान्यचमसश्चित्रापूपश्चरुव्रणः । आलिम्पना तर्पणा दीपनं मण्डोदकं च तत् ॥१३॥
वटकः पिष्टपूरः स्याद् व्रतोपायनवायने । प्रहेणकं चाथ पोली पूपाली चर्पटी च सा ॥१४॥

द्वे क्षेत्रस्य ॥ हलिः १ इत्येकं "बृहद्धलः" इति ख्यातस्य महालाङ्गलस्य ॥ मुद्गः १ हरिनामा २ वनाखुकः, क्वचित् "वनाखुकः" इति पाठः,"वनाखाकः" अप्यत्र ३ ॥२॥ वासन्तः ४ इति चत्वारि मुद्गस्य॥ मसुरः१ मसूरः२व्रीहिकाञ्चनः ३ इति त्रीणि मसूरस्य व्रीहिभेदस्य ॥ सर्षपः१सरिषपः२कटुस्नेहः, कटुः स्नेहः तैलादि-रूपो निर्यासो यस्य, क्वचित् "कटुस्नेहा" इति पाठः ३ तन्तुभः ४ इति चत्वारि सर्षपस्य ॥३ ॥ प्रवेटः १ सितशूकः २ इति द्वे यवस्य ॥ गोधूमः १ म्लेच्छभोजनः २ इति द्वे गोधूमस्य ॥ ताम्रवृन्तः १ कुलत्थः २ इति द्वे कुलत्थस्य ॥ निःस्नेहः १ चण्डिका २ अतसी ३ इति त्रीणि अतस्याः ॥ ४ ॥ मूर्खः १ पुरीषलः, "पुरीषमः" २ माषः३ इति त्रीणि माषस्य ॥ राजमाषः १ वर्वटः २ इति द्वे राजमाषस्य ॥ फुल्लपालः १ इत्येकं शूर्पवातस्य ॥ तितउ १ चालनी २ इति द्वे चालन्याः ॥५॥ कण्डनी १ उदूखलन्, "उलूखलम्" अप्यत्र २ इति द्वे उदूखलस्य ॥ प्रस्थः१ पालिः २ सूदः ३ प्रचेलकः ४ इति चत्वारि चतुष्कुडवात्मकस्य धान्यादेः परिमाणभेदस्य ॥ कुशूलः, "कुसूलः" १ व्रीह्यगारम् २ इति द्वे इष्टकादिनिर्मितस्य धान्यादि-स्थापनार्हगृहस्य ॥ कन्दुः १ अग्निष्ठः २ इति द्वे वह्निस्थितियोग्यस्य लौहमयकटादिपात्रस्य तण्डुलादिभ-र्जनपात्रस्य स्वेदनीपात्रस्य च ॥ ६ ॥ आलिञ्जरः, नन्दा २ इति द्वे "जाला" इति ख्यातस्य मृन्मयजलपात्रभेदस्य ॥ मृत्सा, "मृत्स्ना" १ भाण्डकमृष्टिका, क्वचित् "भाण्डकमुष्टिका" इति पाठः २ इति द्वे प्रशस्तमृत्तिकायाः, "आढकी" इति ख्यातस्य भाण्डभेदस्य वा ॥ वारासनम् १ वाःसदनम् २ इति द्वे जलाधारस्य ॥ क्वणनः १ हण्डिकासुतः २ इति द्वे क्षुद्रमृत्पात्रस्य ॥ ७ ॥ कलशी, "कलशिः" "कलशि-मुदधिगुर्वीम्" इति माघः१गर्गरी २ इति द्वे कलश्याः॥ शरावः१मार्त्तिकः२शालाजिरः३पार्थिवः ४मृत्कांस्यम् ५ इति पञ्च शरावस्य॥लोहिका१॥८॥ खरसोल्लः, "खरसोन्दः"२ खरपात्रम् ३ इति त्रीणि लोहपात्रस्य ॥ शिङ्घाणम् १ काचभाजनम् २ इति द्वे काचभाजनस्य ॥ काष्ठलोही १ वातर्दिः २ इति द्वे काष्ठलोह्याः ॥ जीरकः १ दीप्यकः २ इति द्वे जीरकस्य ॥ ९ ॥ कटुभङ्गः १ शुण्ठी २ इति द्वे शुण्ठयाः॥ काञ्जिकम्, तुषोदकम् २ गृहाम्लम् ३ सिद्धसलिलम् ४ रक्षोघ्नम् ५ धातुनाशनम् ६ ॥ १० ॥ गृहिणी ७ मधुरा ८ इत्यष्टौ काञ्जिकस्य ॥ हिङ्गु १ शूलहृत् २ सूपधूपनम् ३ इति त्रीणि हिङ्गुनः ॥ घर्षिणी १ हेमरागिण्यः २ हरिद्र ३ पीतवालुका ४ इति चत्वारि हरिद्रायाः॥११॥मण्डोलम् १ गुडः २ स्वादुः ३ इति त्रीणि गुडस्य ॥ पिप्यटा, "पिप्पटा" १ गुडशर्करा २ इति द्वे गुडशर्करायाः ॥ महाश्वेता १ मधुजा २ इति द्वे सितायाः॥ प्रयस्तम् १ सुसंस्कृतम् २ इति द्वे तैलसंस्कृतस्य ॥ १२ ॥ चिपिटः १ धान्यचमसः २ इति द्वे पृथुकस्य ॥ चित्रापूपः १ चरुव्रणः २ इति द्वे पूपविशेषस्य ॥ आलिम्पना १ तर्पणा २ इति द्वे तृप्तेः ॥ दीपनम् १ मण्डोदकम् २ इति द्वे "मण्डोदकम्" इति ख्यातस्य तण्डुलचूर्णमिश्रितजलस्य॥१३॥ वटकः १ पिष्टपूरः २ इति द्वे "वटक"

सक्तुश्चूर्णक आपूप्यो भक्तं कुरुः प्रसादनः। मण्डो ज्येष्ठाम्बु खदिका लाजाः पारी तु दोहनी
निपानं स्त्री गवी तुम्बा निलिम्पा रोहिणी च सा।गव्यं श्रेष्ठं पुंसवनं स्याद्दोहापनयः पुमान्॥
अवदोहः पयः क्षीरं प्राग्गाढं श्रीधनं दधि। कद्वरं तु दधिस्नेहो जग्धिर्भोजनभक्षणे ॥ १७ ॥
देहयात्रा विष्वणनं भुक्तं प्रत्यवसानवत् । कल्यवर्तः प्रातराशः प्रातर्भोजनमित्यपि ॥ १८ ॥
अनड्वान् शाङ्करो गन्धमैथुनः शक्करिर्वृषः । ककुद्मान्पुङ्गवश्चाथ कण्ठाला जालगोणिका॥१९॥
दोग्धा शकृत्करिर्वत्सस्तेषामाटीकनं क्रमः । गवादिकं जीवधनं पलिक्नी बालगर्भिणी॥२०॥
करकं गोमयच्छत्रं गोग्रन्थिः शुष्कगोमयम्।करीषश्छगणो हम्भा रेभणं च गवां ध्वनौ॥२१॥
नैचिकं गोः शिरोदेशो वन्दनीया तु रोचना । मन्थानमन्थतक्काटाः स्यादुष्ट्रः कण्टकाशनः॥
लम्बौष्ठाध्वगवासन्तकुलनाशमरुद्विपाः। भोलिर्बहुकरो वक्रग्रीवो मेषस्तु रोमशः ॥ २३ ॥
संस्फालहुडुमेडाश्च मेषी स्याज्जालकिन्यविः। वर्करस्तु लम्बकर्णश्छागो बस्तः शिवाप्रियः २४
अल्पायुर्लघुकायश्च मेनादः पर्णभोजनः । परिक्रमसहो बुक्को देवानां प्रिय इत्यपि ॥ २५ ॥
छागी सञ्जा चुलम्पा स्याच्छङ्कुकर्णस्तु गर्दभः। स्मरस्मर्यश्चिरमेही ग्राम्याश्वो रेणुरूषितः२६
पशुश्चरिः शुद्धजङ्घो रत्नं चारुशिला मणिः। स्वाध्यायी पत्तनवणिग्घोटौबुक्कोऽश्वविक्रयी२७

इति ख्यातस्य खाद्यभेदस्य ॥ व्रतोपायनम् १ वायनम्, "वाचनम्" २ प्रहेणकम् ३ इति त्रीणि "वायने" इति प्रसिद्धस्य भक्षणभेदस्य ॥ पोली, क्वचित् "पौली" इति पाठः १ पूपाली २ चर्पटी ३ इति त्रीणि पोल्याः ईषत्पक्वस्य कलापयवादेश्च ॥ १४ ॥ सक्तुः १ चूर्णकः २ इति द्वे सक्तोः॥ आपूप्यः १ भक्तम् २ कुरुः, "कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति" इति मेदिनी, क्वचित् "कुरम्" "कूरः" इति पाठः ३ प्रसादनः ४ इति चत्वारि ओदनस्य ॥ मण्डः १ ज्येष्ठाम्बु २ इति द्वे मण्डस्य ॥ खदिकाः १ लाजाः २ इति द्वे लाजानाम् ॥ पारी १ दोहनी २ ॥ १५ ॥ निपानम् ३ गवी ४ तुम्बा ५ निलिम्पा ६ रोहिणी ७ इति सप्त दोहन्याः ॥ गव्यम् १ श्रेष्ठम् २ पुंसवनम्, "प्रस्रवणम्" ३ दोहापनयः ४ इति चत्वारि गव्यस्य ॥१६॥अवदोहः १ पयः २ क्षीरम् ३ इति त्रीणि दुग्धस्य ॥ प्राग्गाढम्, "प्राग्राटम्" १ श्रीधनम् २ इति द्वे दध्नः ॥ कद्वरम् १ दधिस्नेहः, "दधिस्वेदः" २ इति द्वे दधिस्नेहस्य ॥ जग्धिः १ भोजनम् २ भक्षणम् ३ ॥ १७ ॥ देहयात्रा ४ विष्वणनम् ५ भुक्तम् ६ प्रत्यवसानम् ७ वच्छब्देन अभ्यवहरणादयो गृह्यन्ते, इति सप्त भोजनस्य ॥ कल्यवर्तः १ प्रातराशः २ प्रातर्भोजनम् ३ इति त्रीणि प्रातर्भोजनस्य ॥ १८ ॥ अनड्वान् १ शाङ्करः, "शाकरः"२ गन्धमैथुनः ३ शक्करिः४ वृषः ५ ककुद्मान् ६ पुङ्गवः७ इति सप्त वृषस्य॥ कण्ठाला१ जालगोणिका २ इति द्वे कण्ठलायाः ॥ १९ ॥ दोग्धा १ शकृत्करिः २ वत्सः ३ इति त्रीणि वत्सस्य ॥ आटीकनम् १ इत्येकं वत्सानां गमनस्य ॥ जीवधनम् १ इत्येकम् गवादिकस्य धनस्य ॥ पलिक्नी १ बालगर्भिणी २ इति द्वे बालगर्भिण्याः गोः॥२०॥करकम्, "कवाकम्"१ इत्येकं गोमयच्छत्रस्य शिलीन्ध्रस्य॥ गोग्रन्थिः १ शुष्कगोमयम् २ इति द्वे शुष्कगोमयस्य॥करीषः१ छगणः २ इति द्वे करीषस्य॥हम्भा१ रेभणम्२ इति द्वे गवां ध्वनेः॥२१॥नैचिकम् १ इत्येकं गोशिरोदेशस्य॥वन्दनीया १रोचना २ इति द्वे गोरोचनायाः॥ मन्थानः१मन्थः२ तक्काटः३ इति त्रीणि मन्थनदण्डस्य॥उष्ट्रः१ कण्टकाशनः२ ॥२२॥लम्बौष्ठः ३ अध्वगः ४ वासन्तः ५ कुलनाशः ६ मरुद्विपः ७ भोलिः ८ बहुकरः ९ वक्रग्रीवः १० इति दश उष्ट्रस्य॥ मेषः १ रोमशः, "लोमशः" २ ॥ २३ ॥ संस्फालः ३ हुडुः ४ मेडः, "मेढ्रः" अन्यत्र ५ इति पञ्च मेषस्य ॥ मेषी १ जालकिनी २ अविः ३ इति त्रीणि मेष्याः ॥ बर्करः १ लम्बकर्णः २ छागः ३ बस्तः "वस्तः" ४ शिवाप्रियः ५ ॥ २४ ॥ अल्पायुः ६ लघुकायः ७ मेनादः, "मे" इति नादो यस्य ८ पर्णभोजनः ९ परिक्रमसहः १० बुक्कः ११ देवानांप्रियः १२ इति द्वादश छागस्य ॥ २५ ॥ छागी १ सञ्जा २ चुलम्पा ३ इति त्रीणि छाग्याः ॥ शङ्कुकर्णः १ गर्दभः २ स्मरस्मर्यः ३ चिरमेही ४ ग्राम्याश्वः ५ रेणुरूषितः ६ ॥२६॥पशुश्चरिः ७ शुद्धजङ्घः ८ इत्यष्टौ गर्दभस्य ॥ रत्नम्१ चारुशिला २ मणिः ३ इति त्रीणि रत्नस्य॥

सर्वमूल्यं द्यूतबीजं हिरण्यं च कपर्दकः । वराटकः पणास्थि स्याद्भासुरः स्फाटिकोपलः २८॥
शालिपिष्टं धौतशिलं गल्वर्कश्च सुसारवत् । अश्मसारस्त्विन्द्रनीलो वैदूर्यं बलिवायजम् २९॥
बालसूर्यमथो रक्तकन्दलो विद्रुमश्च सः । लतामणिः प्रवालः स्याद्राजपट्टो विराटजः ॥३० ॥
कुरुविन्दः पद्मरागो दधीच्यस्थि तु हीरकम् । स्वर्णं लोहवरं चाग्निबीजं चाम्पेयमित्यपि ३१॥
रूप्ये श्वेतं रङ्गबीजमिन्दुकान्ते मणीचकम् । ताम्रकं तु लोहितायः सूर्याह्वं मुनिपित्तलम् ३२
कंसे तु कंसं कंसास्थि ताम्रार्धमथ मौक्तिकम् । रसोपलं शुक्तिबीजं सिन्दूरं रक्तवालुकम् ३३
पारदः सिद्धधातुः स्याद्धरबीजं च सूतकम् । रङ्गं सुरेभं मृद्वङ्गं कुसुम्भं ग्राम्यकुङ्कुमम् ३४ ॥
हरिताले तु कर्बूरं गोदन्तो नटसंज्ञकः । दारदं तु हिङ्गुलु स्याद्धिङ्गुलं रक्तपारदम् ३५ ॥
रसगन्धो गन्धरसो गान्धारं मसिवर्धनम् । क्षारस्तु स्याद्यवक्षारो यवशूकश्च रेचकः ॥
शिलाजतु शिलाव्याधिस्तृफला त्रिफलाऽपि च ॥ ३६ ॥

इति वैश्यवर्गः ॥ ९ ॥

---

स्वाध्यायी १ पत्तनवणिक् २ इति द्वे पत्तनवणिजः ॥ घोटाबुक्कः, क्वचित् "घेडाबुक्कः" इति पाठः १ अश्वविक्रयी २ इति द्वे अश्वविक्रयिणः ॥ २७ ॥ सर्वमूल्यम् १ द्यूतबीजम् २ हिरण्यम् ३ कपर्दकः, "कपर्दिका" अप्यत्र ४ वराटकः, "वराटः" ५ पणास्थि ६ इति षट् कपर्दकस्य ॥ तत्र केचित् वराटः १ वराटकः २ इति द्वे क्षुद्रकपर्दकस्य इति वदन्ति ॥ भासुरः १ स्फाटिकोपलः २ ॥ २८ ॥ शालिपिष्टम् ३ धौतशिलम् ४ इति चत्वारि स्फटिकस्य ॥ गल्वर्कः १ इत्येकं रक्तखदिरसदृशस्य मणिविशेषस्य ॥ अश्मसारः, "मसारः" १ इन्द्रनीलः २ इति द्वे इन्द्रनीलस्य ॥ वैदूर्यम् "वैडूर्यम्" १ बलिवायजम् २ ॥ २९ ॥ बालसूर्यम् ३ इति त्रीणि वैदूर्यस्य ॥ रक्तकन्दलः १ विद्रुमः २ लतामणिः ३ प्रवालः ४ इति चत्वारि विद्रुमस्य ॥ राजपट्टः १ विराटजः २ इति द्वे विराटजस्य मणेः ॥ ३० ॥ कुरुविन्दः, "कुरुविन्नः" १ पद्मरागः, पद्मस्येव रागो रक्तवर्णो यस्य २ इति द्वे पद्मरागस्य ॥ दधीच्यस्थि, "दधीचास्थि" अप्यत्र १ हीरकम् २ इति द्वे "वज्र" इति ख्यातस्य हीरकस्य ॥ स्वर्णम् १ लोहवरम् २ अग्निबीजम्, "अग्निवीजम्" ३ चाम्पेयम् ४ अपिशब्देन चाम्पेयकं गृह्यते, इति चत्वारि स्वर्णस्य ॥ ३१ ॥ श्वेतम् १ रङ्गबीजम्, "रङ्ग-बीजम्" २ इति द्वे रूप्यस्य ॥ मणीचकम् १ इत्येकं चन्द्रकान्तमणेः ॥ केचित्तु चन्द्रवर्णरूप्यस्य इति वदन्ति ॥ ताम्रकम् १ लोहितायः २ सूर्याह्वम्, "सूर्याङ्गम्" "रविः" इत्यादयोऽप्यत्र ३ मुनिपित्तलम् ४ इति चत्वारि ताम्रस्य ॥ ३२ ॥ कंसम् १ कंसास्थि २ ताम्रार्धम् ३ इति त्रीणि "कांस" इति ख्यातस्य ताम्ररङ्गमिश्रितस्य उपधातोः ॥ यथाह—"उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः" इति ॥ मौक्तिकम् १ रसोपलम् २ शुक्तिबीजम् ३ इति त्रीणि मौक्तिकस्य ॥ सिन्दूरम् १ रक्तवालुकम्, "रक्तवालकम्" २ इति द्वे सिन्दूरस्य ॥ ३३ ॥ पारदः, "पारतः" १ सिद्धधातुः २ हरबीजम्, "धरबीजम्" ३ सूतकम् ४ इति चत्वारि पारदस्य ॥ रङ्गम् १ सुरेभम् २ मृद्वङ्गम् ३ इति त्रीणि रङ्गस्य धातुभेदस्य ॥ कुसुम्भम् १ ग्राम्यकुङ्कुमम् २ इति द्वे पुष्पप्रधानवृक्षस्य कुसुम्भस्य ॥ यथाह—"कुसुम्भं नालिकाशाकं वार्त्ताकुम्" इति स्मृतिः ॥ ३४ ॥ कर्बूरम् १ इत्येकं हरितालस्य ॥ गोदन्तः १ नटः २ इति द्वे "गोदन्तः" इति ख्यातस्य हरितालस्य ॥ दारदम् १ हिङ्गुलु २ हिङ्गुलम् ३ रक्तपारदम्, "रक्तपारदः" ४ इति चत्वारि हिङ्गुलस्य ॥ ३५ ॥ रसगन्धः, "रसगन्धकः" अप्यत्र १ गन्धरसः २ गान्धारम्, "गन्धारम्" अप्यत्र ३ मसिवर्धनम् ४ इति चत्वारि "गन्धक" इति ख्यातस्य रसगन्धस्य ॥ क्षारः १ यवक्षारः २ यवशूकः ३ रेचकः ४ इति चत्वारि यवक्षारस्य ॥ शिलाजतु १ शिलाव्याधिः २ इति द्वे "शिलाजतु" इति ख्यातस्य पर्वतजातस्य उपधातुभेदस्य ॥ तृफला १ त्रिफला, २ अपिशब्देन "त्रिफली" "फलत्रयम्" इत्यादयोऽप्यत्र गृह्यन्ते, इति द्वे त्रिफलायाः ॥ ३६ ॥

इति वैश्यवर्गः ॥ ९ ॥

शूद्रः स्यात्पादजो दासो ग्रामकूटो महत्तरः। मालिकः पुष्पलावः स्यात्कुम्भकारस्तु मृत्करः॥
दण्डभृत्पलगण्डस्तु सुधाजीवी च लेपकः। कायस्थे कूटकृत्पञ्जीकरौ चित्रकरे कृणुः ॥ २ ॥
चर्मरुः कुरटः पादुकृत्कलादस्तु गौञ्जिकः। नाडिन्धमः स्वर्णकारो वात्सीपुत्रस्तु नापितः ३॥
चान्द्रिलो नखकुट्टश्च रजकः कर्मकीलकः। कन्यापालः पालवणिग्देवलस्त्वमरद्विजः ॥ ४ ॥
अजाजीवस्तु जावालो निष्कश्चण्डाल उच्यते। कुक्कुरे दीर्घसुरतो वान्तादरसनालिहौ ॥५॥
रतव्रणो ग्राममृगस्तथेन्द्रमहकामुकः। कपिलो वक्रपुच्छश्च शयालुररतत्रपः ॥ ६ ॥
शुन्याः शुन्यं शुनीरं स्याच्चौरः शङ्कितवर्णकः। स्यात्कुम्भिलश्च प्रचुरपुरुषोऽथ कुजम्भिलः॥७॥
सुरुङ्गोऽहिविधश्चोरे वन्दीकारस्तु माचलः। प्रसह्यचोरश्चिल्लाभः स्त्रीचोरो रतहिण्डकः ॥ ८ ॥
काव्यचोरश्चन्द्ररेणुः कुडयच्छेद्यं तु खानिकम्। सन्धिः सुरङ्गा तद्भेदाः श्रीवत्सगोमुखादयः॥
कपालललासिका तर्कुस्तर्कुशाणस्तु झामकः। वर्तनी तर्कुपीठी स्यात्पिञ्जनं तूलकार्मुकम्॥१०॥
तूलः पिचुः पिचुतूलं पिञ्जिका तूलनालिका। त्रिषु द्वारापणं सूत्रपर्णं यत्तेन वेष्टयते ॥ ११ ॥
निर्वेटनं नाडिचीरमेकाष्ठी तूलशर्करा। तन्त्रकाष्ठं तुरी स्त्री स्याद् ग्रीष्महासेन्द्रतूलके ॥१२॥

शूद्रः १ पादजः, ब्रह्मणः पादाभ्यां जायते २ दासः ३ इति त्रीणि "शूद्रः" इति ख्यातस्य चतुर्थवर्णस्य ॥ ग्रामकूटः१ महत्तरः २ इति द्वे अतिशयेन वृद्धिं प्राप्तस्य ॥ मालिकः १ पुष्पलावः २ इति द्वे मालाकारस्य ॥ कुम्भकारः १ मृत्करः २ ॥ १ ॥ दण्डभृत् ३ इति त्रीणि कुम्भकारस्य ॥ पलगण्डः १ सुधाजीवी २ लेपकः ३ इति त्रीणि लेपनकरस्य ॥ कूटकृत् १ पञ्जीकरः २ इति द्वे "कायस्थः" इति ख्यातस्य लिपिकरवृत्तेः ॥ कृणुः १ इत्येकं चित्रकारस्य ॥ २ ॥ चर्मरुः १ कुरटः २ पादुकृत् ३ इति त्रीणि चर्मकारस्य ॥ कलादः १ गौञ्जिकः २ नाडिन्धमः ३ स्वर्णकारः, "स्वर्णतालः" ४ इति चत्वारि स्वर्णकारस्य ॥ वात्सीपुत्रः १ नापितः २ ॥३॥ चन्द्रिलः ३ नखकुट्टः ४ इति चत्वारि क्षुरकर्मकारकस्य॥ रजकः१ कर्मकीलकः २ इति द्वे वस्त्रादेः रागकारकस्य ॥ कन्यापालः, "कल्यपालः" १ पालवणिक्, "पाणवणिक् "२ इति द्वे कन्यापालकस्य ॥ देवलः १ अमरद्विजः २ इति द्वे देवलस्य ॥ ४ ॥ अजाजीवः १ जावालः २ इति द्वे छागपालकस्य छागक्रयविक्रयाभ्यामाजीविनश्च ॥ निष्कः १ चण्डालः, "चाण्डालः"२ इति द्वे चण्डालस्य॥ दीर्घसुरतः १ वान्तादरः २ सनालिहः ३ ॥ ५ ॥ रतव्रणः ४ ग्राममृगः ५ इन्द्रमहकामुकः ६ कपिलः ७ वक्रपुच्छः ८ शयालुः ९ अरतत्रपः, नास्ति रते मैथुने त्रपा यस्य १० इति दश कुक्कुरस्य ॥ ६ ॥ शुन्यम् १ शुनीरम् २ इति द्वे शुनीसङ्घस्य ॥ चौरः१ शङ्कितवर्णकः २ कुम्भिलः ३ प्रचुरपुरुषः ४ इति चत्वारि चौरस्य॥ कुजम्भिलः, "कुजम्भिरः"१ ॥ ७ ॥ सुरुङ्गः २ अहिविधः, "अहिरघः" ३ इति त्रीणि बधचोरस्य ॥ वन्दीकारः, "वन्दीकालः" १ माचलः २ प्रसह्यचोरः ३ चिल्लाभः ४ इति चत्वारि प्रसह्यचोरस्य ॥ स्त्रीचोरः १, रतहिण्डकः २ इति द्वे स्त्रीचोरस्य ॥ ८ ॥ काव्यचोरः १ चन्द्ररेणुः २ इति द्वे काव्यचोरस्य ॥ कुडयच्छेद्यम्, "कुडयच्छेद्यः" १ खानिकम्, क्वचित् "खानकः" इति पाठः २ संधिः ३ सुरङ्गा, क्वचित् "सुरङ्गा" "सुरङ्गम्" इति च ४ इति चत्वारि सन्धिचोरस्य ॥ श्रीवत्सः१ गोमुखः १ इत्येकैकं चोरादिकृतसन्धिभेदयोः॥ आदिना अतो विसदृशाकारा अपि गृह्यन्ते ॥९॥ कपालललासिका, "कपासनालिका", नालिकाः ॥ "कपालनालिका" १ तर्कुः२ इति द्वे "तर्कुः" इति ख्यातस्य यन्त्रभेदस्य॥ तर्कुशाणः १ झामकः २ इति द्वे तर्कुशाणस्य॥ वर्तनी १ तर्कुपीठी २ इति द्वे तर्कुपीठयाः॥ पिञ्जनम्१ तूलकार्मुकम् २ इति द्वे तूलधनुषः ॥१० ॥ तूलः १ पिचुः २ पिचुतूलम् ३ इति त्रीणि तूलस्य ॥ पिञ्जिका १ तूलनालिका २ इति द्वे पिञ्जिकायाः ॥ द्वारापणम् १ सूत्रपर्णम् २ इति द्वे सूत्रवेष्टनस्य ॥ ११ ॥ निर्वेटनम् १ नाडिचीरम् २ इति द्वे नाडिचीरस्य ॥ एकाष्ठी १ तूलशर्करा २ इति द्वे पिचुशर्करायाः ॥ तन्त्रकाष्ठम् १ तुरी, "तुरिः" २ इति द्वे वयनसाधनस्य

पन्नध्री पादुका प्राणिहिता पदरथीत्यपि। कावारी जङ्गमुकुटी भ्रमत्कुट्यथ खर्परः ॥ १३ ॥
वारित्रा मूर्धखोलं च सैव पत्रपिशाचिका। वासी तु तक्षणी न स्त्री क्रकचः पत्रदारकः १४॥
मद्यं त्वरिष्टं मैरेयं कत्तोयं कापिशायनम्। माध्वी च मधु माध्वीकं कपिशीका च मालिका ॥
वीरा दैत्या प्रसन्ना च माधवी गन्धमादनी। गौडी च वाल्कली मध्वासवपक्वरसौ नरि॥१६॥
नलिनी नारिकेलस्य सुरा तालस्य तालिनी। स्मरासवो मुखसुरं पारी स्त्री पानभाजनम् ॥
शुण्डापानं मदस्थानं द्यूतकृत्कृष्णकोहलः। देवसभ्यस्तु सभिको लग्नकस्तृणमत्कुणः ॥१८॥
चुञ्चुरी तिन्तिडी द्यूते पञ्चाली शारिशृङ्खला। अष्टकाङ्गं नयपीठी नयस्तु जतुपुत्रकः॥१९॥

इति शूद्रवर्गः ॥ १० ॥

## इति त्रिकाण्डशेषकोषस्य द्वितीयः काण्डः समाप्तः ॥ २ ॥

---

काष्ठस्य ॥ ग्रीष्महासम् १ इन्द्रतूलकम् २ इति द्वे इन्द्रतूलस्य कर्पासस्य॥१२॥पन्नध्री १ पादुका २ प्राणिहिता, "प्राणहिता" ३ पदरथी ४ इति चत्वारि पादुकायाः चर्ममयस्य पदाच्छादनस्य च ॥ अपिशब्देन "पादुः" "उपानत् "इत्यादयो गृह्यन्ते ॥ कावारी, "कारावी" १ जङ्गमुकुटी २ भ्रमत्कुटी ३ इति त्रीणि तृणादिकृतच्छत्रस्य ॥ खर्परः १ ॥ १३ ॥ वारित्रा २ मूर्धखोलम् ३ पत्रपिशाचिका ४ इति चत्वारि " वारित्राण " इति ख्यातस्य छत्रस्य ॥ वासी १ तक्षणी २ इति द्वे तक्षण्याः ॥ क्रकचः १ पत्रदारकः १ इति द्वे "क्रकचः" इति ख्यातस्य करपत्रस्य ॥ १४ ॥ मद्यम् १ अरिष्टम् २ मैरेयम् ३ कत्तोयम् ४ कापिशायनम्, "कापिशायनी"५ माध्वी ६ मधु ७ माध्वीकम्८ कपिशीका, "कपिशी" अप्यत्र९ मालिका १० ॥ १५ ॥ वीरा ११ दैत्या १२ प्रसन्ना १३ माधवी १४ गन्धमादनी १५ इति पञ्चदश मद्यस्य ॥ तानि मद्यानि द्वादशविधानि भवन्ति । यथाह—"माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम्। मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम्। मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु" इति ॥ गौडी १ वाल्कली २ इति द्वे गुडेन कृतायाः सुरायाः ॥ मध्वासवः १ पक्वरसः, "पक्षरसः" २ इति द्वे मधुद्रुमपुष्पजातस्य मद्यस्य ॥ १६ ॥ नलिनी १ इत्येकं नारिकेलजातसुरायाः॥ तालिनी, "ताली" अप्यत्र१ स्मरासवः२ मुखसुरम् ३ इति त्रीणि तालजातसुरायाः॥ पारी १ पानभाजनम् २ इति द्वे पानभाजनस्य॥१७॥ शुण्डापानम् १ मदस्थानम्२ इति द्वे मद्यपानगृहस्य॥ क्वचित् शुण्डा पानमिति पृथगपि। "शुण्डा पानगृहे मता॥ अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च" इति मेदिनी। "शुण्डाऽपि जलहस्तिन्यां मदिराकरिहस्तयोः" इति विश्वः। "पानं पीतिभाजनरक्षणे" इति मेदिनी ॥ द्यूतकृत् १ "द्यूतकारः" अप्यत्र १ कृष्णकोहलः २ इति द्वे द्यूतकृतः ॥ देवसभ्यः१ सभिकः, "सभीकः" अप्यत्र २ इति द्वे द्यूतकारकस्य ॥ लग्नकः १ तृणमत्कुणः २ इति द्वे प्रतिभुवः ॥ १८ ॥ चुंचुरी १ तिंतिडी २ इति द्वे द्यूतस्य ॥ पञ्चाली, "पञ्चनी" १ शारिशृङ्खला २ इति द्वे "शारिशृङ्खला" इति ख्यातायाः वस्त्रकृतपुत्तलिकायाः ॥ अष्टकाङ्गम् १ नयपीठी २ इति द्वे "नयपीठः" इति ख्यातस्य शारिफलकस्य ॥ नयः १ जतुपुत्रकः २ इति द्वे द्यूतक्रीडासाधनपाशकस्य ॥ १९ ॥

इति शूद्रवर्गः ॥ १० ॥

इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजविष्णुदत्तविरचितायां नामचन्द्रिकाख्यायां त्रिकाण्डशेषकोषटीकायां द्वितीयः काण्डः समाप्तः ॥ २ ॥

---

अथ

# सटीकत्रिकाण्डशेषकोषस्य

## तृतीयः काण्डः ।



क्षमङ्करोऽरिष्टतातिः स्यान्मद्रङ्करशङ्करौ । आमुष्यायणविज्ञातौ पुत्रान्नादः कुटीचकः॥ १ ॥
स्थपुटं विषमे सञ्चारजीवी शरणार्थिकः । अभिपन्नः शरणार्थी पाण्डुपृष्ठस्त्वलक्षणः ॥ २ ॥
उद्भटोड्डामरोत्ताला आविष्टः प्रेतवाहितः । प्रेङ्खोलितस्तरलितस्तृषितस्तर्षितः सतृट् ॥ ३ ॥
ऊर्ध्वस्थोर्ध्वदमौ तुल्यौ ग्राम्यो ग्रामेयकः स्मृतः । पराचीनः प्रतीपः स्यात्समीचीनः समञ्जसः
स्वस्थानस्थः परान्द्वेष्टि यः स गोष्ठश्च उच्यते । दाता तु दारुर्मुचिरः स्याद्विदग्धस्तु नागरः ॥
षिङ्गो व्यलीकः षट्प्रज्ञः कामकेलिर्विदूषकः । पीठकेलिः पीठमर्दो भविलश्छिदुरो विटः ॥६॥
प्रघटाविच्छास्त्रगण्डो मेधावी मेधिरः समौ । युक्तं परिमिते भीमं त्वाभीले प्रश्लथः श्लथः ॥७॥

शिथिलोऽवोद आर्द्रः स्याच्चिरस्थो नायकः स्मृतः ।
स्यादायःशूलिकस्तीक्ष्णकर्माऽशोचोऽनहङ्कृतिः ॥ ८ ॥

कुसृत्या विभवान्वेषी पार्श्वकः सन्धिजीवकः । वाक्याभिधायी पुरुषः पृष्ठमांसाद उच्यते ॥९॥

क्षेमङ्करः १ अरिष्टतातिः २ मद्रङ्करः, " भद्रङ्करः " ३ शङ्करः ४ इति चत्वारि निर्भयकरस्य शुभङ्करस्य वा ॥ आमुष्यायणः, अमुष्य प्रत्यक्षीकृतस्यापि सद्वंशत्वेन सच्चरितत्वेन च प्रख्यातस्यापत्यम् १ विज्ञातः, " निज्ञातः "२ इति द्वे सद्वंशोद्भवस्य ॥ पुत्रान्नादः १ कुटीचकः, " कुटिचकः " " कुटीचरः " अप्यत्र २ इति द्वे पुत्रान्नादस्य यतिभेदस्य ॥ १ ॥ स्थपुटम्, " स्थपुटगतमपि क्रव्यमव्यग्रमत्ति " इति मालतीमाधवम् १ इत्येकं विषमस्थानसञ्चारजीविनः ॥ शरणार्थकः, " शरणार्पकः " १ अभिपन्नः २ शरणार्थी ३ इति त्रीणि शरणार्थिनः, शरणगतस्य वा ॥ पाण्डुपृष्ठः १ अलक्षणः, नास्ति लक्षणमनुमापकं सुचिह्नं वा यस्य २ इति द्वे दुर्लक्षणस्य ॥ २ ॥ उद्भटः १ उड्डामरः २ उत्तालः ३ इति त्रीणि अत्यन्तप्रचण्डस्य ॥ आविष्टः १ प्रेतवाहितः २ इति द्वे भूतादिग्रस्तस्य, आवेशयुक्तस्य च ॥ प्रेङ्खोलितः १ तरलितः २ इति द्वे कम्पितस्य ॥ तृषितः १ तर्षितः २ सतृट् ३ इति त्रीणि पिपासायुक्तस्य ॥ ३ ॥ ऊर्ध्वस्थः १ ऊर्ध्वदमः २ इति द्वे ऊर्ध्वस्थितस्य ॥ ग्राम्यः १ ग्रामेयकः २ इति द्वे ग्रामजातस्य ॥ पराचीनः १ प्रतीपः २ इति द्वे पराङ्मुखस्य ॥ समीचीनः १ समञ्जसः २ इति द्वे यथार्थस्य उचितस्य वा ॥ ४ ॥ गोष्ठः, गावस्तिष्ठन्त्यत्र १ इत्येकं गवां स्थानस्य स्वस्थानस्थितस्य परद्वेष्टुश्च ॥ दाता १ दारुः २ मुचिरः ३ इति त्रीणि दानशीलस्य ॥ विदग्धः १ नागरः २ इति द्वे पण्डितस्य ॥ ५ ॥ षिङ्गः १ व्यलीकः २ षट्प्रज्ञः, " धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञा तु यस्याऽसौ षट्प्रज्ञः परिकीर्त्तितः " इति ३ कामकेलिः ४ विदूषकः ५ पीठकेलिः ६ पीठमर्दः ७ भविलः ८ छिदुरः ९ विटः इति दश कामुकस्य ॥ ६ ॥ प्रघटाविद् १ शास्त्रगण्डः २ इति द्वे शास्त्राभिसक्तचित्तस्य ॥ मेधावी १ मेधिरः २ इति द्वे मेधाविनः ॥ युक्तम् १ इत्येकं कृतपरिमाणस्य ॥ भीमम् १ इत्येकं भयानकस्य ॥ प्रश्लथः १ श्लथः २ शिथिलः ३ इति त्रीणि शिथिलस्य दुर्बलस्य वा ॥७॥ अवोदः १ आर्द्रः २ इति द्वे सजलस्य ॥ चिरस्थः १ नायकः २ इति द्वे नायकस्य ॥ आयःशूलिकः १ तीक्ष्णकर्मा २ इति द्वे तीक्ष्णोपायेनाभीष्टसाधकस्य ॥ अशोचः १ अनहङ्कृतिः २ इति द्वे अहङ्कारविरहितस्य गर्वविहीनस्य वा ॥ ८ ॥ सन्धिजीविकः १ इत्येकं शाठ्येन

भार्याटः स्वस्त्रियो दाताऽन्नार्थं दूषकपांसनौ । धृष्णुर्धृष्णुग्दधृग्धृष्टो दशेरः सुप्तघातुकः ॥१०॥
देशकः शासिता शास्ता शिक्कुरव्यवसायवान्। चकितः शङ्कितो भीतः प्रतियत्नः प्रयत्नवान्
आधार्मिकोऽधार्मिकः स्यात्प्रसृतान्तरितौ समौ । कृपणो दृढमुष्टिः स्याद्देवयुर्धार्मिकः सुकृत्॥
मनःस्मयो मनोज्ञः स्याच्चक्षुष्यः प्रियदर्शनः । लडहं भद्रकं न्युङ्खं लगडं चारुबन्धुरः ॥
भट्टारो भगवान्पूज्यः शक्तप्रतिबलौ समौ । पटुः पाटविको धूर्तः स्थगस्तीक्ष्णस्तु राजघः ॥
सम्बन्धी गुणवान्संयुङ्मित्रयुर्मित्रवत्सलः । धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि ॥१५॥
षट्सु प्रज्ञाऽस्ति यस्योच्चैः स षट्प्रज्ञ इति स्मृतः। मध्यस्थस्तु निसृष्टः स्याद्भग्नपृष्ठस्तु सम्मुखः॥
स्यात्कथङ्कथिकः प्रष्टा विचक्षुर्विमनाः स्मृतः। प्रतारितो व्यंसितः स्यात्प्रोथस्तु प्रथितो मतः॥
माशब्दिकः प्रतिषेद्धा जडमातृसुखौ समौ । प्रीणं पुराणं भिन्नं तु व्यवच्छिन्नं विशेषितम् ॥
विनाकृतं विरहितं मुक्तं निर्व्यूढमुच्यते । तिक्तः कषायः सुरभिः कक्खटो निर्भरो दृढः ॥
निःसन्धिश्च निवातश्च समूढं शोधितं समे । स्यादागन्तुकमाहार्यं समे पक्त्रिमपाकिमे ॥२०॥
कोमलं पेलवं पापे त्वधमापसदौ धवः । रोमाञ्चितो हृष्टरोमा अजानेयस्तु निर्भयः ॥ २१ ॥

परार्थहारकस्य॥पृष्ठमांसादः१इत्येकं पृष्ठमांसभक्षकस्य॥९॥भार्याटः१इत्येकम् अन्नार्थं स्वभार्यादायकस्य ॥ दूषकः १ पांसनः २ इति द्वे दूषकस्य ॥ धृष्णुः १ धृष्णुग् २ दधृग् ३ धृष्टः ४ इति चत्वारि प्रगल्भस्य निर्लज्जस्य वा ॥ दशेरः १ सुप्तघातुकः २ इति द्वे निद्रानाशकस्य ॥ १० ॥ देशकः १ शासिता २ शास्ता ३ इति त्रीणि शासनकर्तुः ॥ शिक्कुः, "शिक्नुः" १ अव्यवसायवान् २ इति द्वे उद्यमविहीनस्य ॥ चकितः १ शङ्कितः २ भीतः ३ इति त्रीणि भययुक्तस्य ॥ प्रतियत्नः १ प्रयत्नवान् २ इति द्वे उत्साहयुक्तस्य ॥ ११ ॥ आधार्मिकः १ अधार्मिकः २ इति द्वे अधर्मशीलस्य ॥ प्रसृतः १ अन्तरितः २ इति द्वे व्यवधानं गतस्य ॥ कृपणः१ दृढमुष्टिः २ इति द्वे अदानशीलस्य ॥ देवयुः १ धार्मिकः २ सुकृत् ३ इति त्रीणि धार्मिकस्य ॥ १२॥ मनःस्मयः, "मनआपः"१ मनोज्ञः २ चक्षुष्यः ३ प्रियदर्शनः ४ लडहम्, "लखण्डम्" ५ भद्रकम् ६ न्युङ्खम् ७ लगडम् ८ चारुबन्धुरः ९ इति नव प्रियदर्शनस्य ॥ १३ ॥ भट्टारः १ भगवान् २ पूज्यः ३ इति त्रीणि पूज्यस्य ॥ शक्तः १ प्रतिबलः २ इति द्वे प्रतिबलस्य ॥ पटुः १ पाटविकः २ धूर्तः ३ स्थगः ४ इति चत्वारि धूर्तस्य ॥ तीक्ष्णः १ राजघः २ इति द्वे तीक्ष्णस्य ॥ १४ ॥ सम्बन्धी १ गुणवान् २ इति द्वे सम्बन्धिनः ॥ संयुग् १ मित्रयुः २ मित्रवत्सलः ३ इति त्रीणि मित्रवत्सलस्य ॥ १५ ॥ षट्प्रज्ञः, षट्सु प्रज्ञा यस्य सः १ इत्येकं धर्मार्थाद्यभिज्ञस्य ॥ मध्यस्थः १ निसृष्टः २ इति द्वे मध्यस्थस्य ॥ भग्नपृष्ठः, "भुग्नपृष्ठः" १ सम्मुखः २ इति द्वे सम्मुखस्य ॥ १६ ॥ कथङ्कथिकः १ प्रष्टा २ इति द्वे प्रष्टुः ॥ विचक्षुः १ विमनाः २ इति द्वे विमनसः ॥ प्रतारितः १ व्यंसितः २ इति द्वे प्रतारितस्य ॥ प्रोथः १ प्रथितः २ इति द्वे प्रथितस्य ॥ १७ ॥ माशब्दिकः १ प्रतिषेद्धा २ इति द्वे प्रतिषेधकारकस्य ॥ जडः १ मातृसुखः २ इति द्वे इष्टानिष्टानभिज्ञस्य जडस्य ॥ प्राणम्, "प्रीणम्" १ पुराणम् २ इति द्वे पुराणस्य ॥ भिन्नम् १ व्यवच्छिन्नम् २ विशेषितम् ३ इति त्रीणि विशेषितस्य ॥ १८ ॥ विनाकृतम् १ विरहितम् २ मुक्तम् ३ निर्व्यूढम् ४ इति चत्वारि त्यक्तस्य ॥ तिक्तः, "तिक्तो रससुगन्धयोः" इति मेदिनी १ कषायः, "कषायो रसभेदेऽपि निर्यासे च विलेपने । अङ्गरागे च न स्त्री स्यात् सुरभौ लोहिते त्रिषु" इति मेदिनी २ सुरभिः ३ इति त्रीणि सुगन्धेः ॥ कक्खटः १ निर्भरः, "निर्वहः" २ दृढः ३ ॥१९॥ निःसन्धिः ४ निवातः ५ इति पञ्च दृढस्य ॥ समूढम् १ शोधितम् २ इति द्वे शोधितस्य ॥ आगन्तुकम् १ आहार्यम् २ इति द्वे आगन्तुकस्य ॥ पक्त्रिमम् १ पाकिमम् २ इति द्वे पाकनिर्वृत्तस्य ॥ २० ॥ कोमलम् १ पेलवम् २ इति द्वे कोमलस्य ॥ अधमः १ अपसदः २ धवः, "धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च" इति मेदिनी, क्वचित् "ध्रुवः" इति पाठः ३ इति त्रीणि पापस्य नीचस्य वा ॥ रोमाञ्चितः १

अन्यासाधारणं त्वावेशिकं प्रातिस्विकं च तत् ।भिन्नकः क्षपणोऽह्रीको बौद्धो वैनायिकः स्मृतः॥
और्ध्वश्रोतसिकः शैवः कौल आन्वयिकः स्मृतः । पञ्चार्थिकः पाशुपतश्चिद्रूपः स्फूर्तिमान्मतः
प्राज्ञ उद्घटितज्ञः स्याच्छंयुशंवंशुभंयवः । गौरवितास्त्वार्यमिश्राः श्लाघ्यास्तत्रभवन्मुखाः ॥
स्याद्देवानांप्रियः क्षेपे हतको बन्धुदग्धवत् । अणुः कनीयानल्पिष्ठः पिण्डितं गुणितं हतम्२५
खट्वारूढोऽविनीतः स्यान्मरालमसृणे समे । प्राञ्जलः प्रगुणोऽजिह्मः प्रणाय्यः साध्वनिन्दितौ॥
त्वं त्वद्भिन्नं चान्यतरदपष्ठुलमपष्ठु च । करम्बितं च खचितं रूषितं चावगुण्ठितम्॥२७॥
स पात्रेसमितोऽन्यत्र भोजनान्मिलितो न यः ॥ २८ ॥

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

---

विधिर्विधानं कर्मास्त्री क्रिया कृत्या विधा कृतिः । व्याप्यं तु साधनं कर्मयुताङ्गेय्ये तु सङ्गतम्
अङ्गारितं पलाशानां कलिकोद्गमने स्मृतम् । जलयन्त्रगृहं धीरैः समुद्रगृहमुच्यते ॥ २ ॥
जलहं तु विदुः स्वल्पे सोमालं कुसुमाकरे । स्तनाभोगः स्तनभरः परभागः सुसम्पदि ॥३॥
आलिङ्गनं त्वङ्कपालिः श्लिषा खट्टिस्त्वसद्ग्रहः । स्यादङ्गेऽनेडकः सग्धिः सहभोजनमित्यपि ॥

हृष्टरोमा २ इति द्वे रोमाञ्चितस्य ॥ अजानेयः, "आजानेयः" अपि दृश्यते, "शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे।आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः"इति१निर्भयः२इति द्वे उत्तमाश्वस्य,निर्भयस्य वा॥२१॥ आवेशिकम् १ प्रातिस्विकम् २ इति द्वे असाधारणस्य ॥ भिन्नकः १ क्षपणः, "क्षपणकः" अप्यत्र २ अह्रीकः ३ इति त्रीणि "निर्ग्रन्थः" इति ख्यातस्य तीर्थविशेषस्य ॥ बौद्धः १ वैनायकः, क्वचित्तु "वैनायिकः" इति दृश्यते २ इति द्वे बौद्धस्य ॥ २२ ॥ और्ध्वश्रोतसिकः, ऊर्ध्वमुपरि श्रोतः इन्द्रियं शिवधर्मावलम्बनज्ञानमिति यावत् अस्त्यस्य १ शैवः, शिवो देवताऽस्य २ इति द्वे शैवस्य ॥ कौलः १ आन्वयिकः २ इति द्वे प्रशस्तकुलजातस्य ॥ पञ्चार्थिकः १ पाशुपतः २ चिद्रूपः, चिदेव स्वरूपमस्य ३ स्फूर्तिमान् ४ इति चत्वारि पाशुपताख्यस्य शैवभेदस्य ॥ २३ ॥ प्राज्ञः १ उद्घटितज्ञः २ इति द्वे प्रज्ञाविशेषस्य ॥ शंयुः १ शंवः, क्वचित् "शंबः" इति पाठः २ शुभंयुः ३ इति त्रीणि शुभान्वितस्य ॥ गौरविताः १ आर्यमिश्राः २ इति द्वे पूज्यस्य ॥ श्लाघ्याः १ इत्येकं श्लाघनीयस्य ॥ २४ ॥ देवानांप्रियः १ इत्येकं क्षेपकोक्तेः मूर्खस्य वा ॥ हतकः १ इत्येकं नष्टप्रायस्य ॥ अणुः १ कनीयान् २ अल्पिष्ठः ३ इति त्रीणि अल्पतरस्य ॥ पिण्डितम्१ गुणितम्२ हतम्३ इति त्रीणि गुणितस्य ॥ २५ ॥ खट्वारूढः १ अविनीतः २ इति द्वे अविनीतस्य प्रमादितस्य वा ॥ मरालम्१ मसृणम् १ इति द्वे स्निग्धस्य ॥ प्राञ्जलः १ प्रगुणः २ अजिह्मः ३ इति त्रीणि ऋजुभावयुक्तस्य ॥ प्रणाय्यः १ साधुः २ अनिन्दितः ३ इति त्रीणि साधोः ॥ २६ ॥ त्वम् १ त्वत् २ भिन्नम् ३ अन्यतरत् ४ इति चत्वारि भिन्नस्य अन्यार्थस्य वा ॥ अपष्ठुलम् १ अपष्ठु २ इति द्वे विपरीतस्य ॥ करम्बितम् १ खाचितम् २ रूषितम् ३ अवगुण्ठितम्, "गुरुगुण्डितम्" ४ इति चत्वारि मिश्रितस्य ॥ २७ ॥ पात्रेसमितः १ इत्येकं भोजनादन्यत्र अनुपस्थितस्य कार्यदक्षस्य ॥ २८ ॥

इति विशेष्यनिघ्नवर्गः ॥ १ ॥

---

विधिः १ विधानम् २ कर्म ३ क्रिया ४ कृत्या ५ विधा ६ कृतिः७ इति सप्त कर्मणः ॥ व्याप्यम् १ साधनम् २ इति द्वे साधनस्य ॥ सङ्गतम् १ इत्येकं कर्मयुक्ताङ्गेय्यस्य मिलितस्य ॥ १ ॥ अङ्गारितम् १ इत्येकं पलाशकलिकोद्गमस्य ॥ समुद्रगृहम् १ इति एकं जलयन्त्रयुक्तगृहस्य ॥ २ ॥ जलहम् १ इत्येकं स्वल्पजलयन्त्रस्य ॥ सोमालम्, "समाली" १ इत्येकं कुसुमाकरस्य ॥ स्तनाभोगः १ स्तनभरः २ इति द्वे स्थूलस्तनभारस्य तदाभोगस्य वा ॥ परभागः १ इत्येकं सुसम्पदः ॥ ३ ॥ आलिङ्गनम् १

धार्मिकाणां तु सम्भूय भोजनं गणचक्रकम् । क्रीडाक्रीडकयोर्देश्च सेवायां सेवके च सेः॥५॥
दानं दायोऽथ दुर्जातं दुःषमं चासमञ्जसम् । कलञ्जौ तौ विषास्त्रेण हतौ यौ मृगपक्षिणौ ॥६॥
छेकोक्तिर्वक्रभणितं गोमुखं तूपलेपनम् । हर्षायणार्तं यत्पूर्णपात्रं पूर्णानकं च तत् ॥ ७ ॥
थुत्थुको विक्रियामात्रादुद्घटायनमुच्यते । बुद्धद्रव्यं स्तौपिकं स्यात्सत्त्वं द्रव्यं च वस्तु च ८॥
लेशस्तूपपदं गन्धोऽनुबन्धेषत्करावपि । छेदः खण्डोऽस्त्रियां गालिः शपनं शमनं शमः ॥९ ॥
वप्रस्तु धूलिकेदारः प्सा वीतिर्भक्षणं च सा । मैत्रेयिका मित्रयुद्धं पर्यङ्कस्त्ववसक्थिका ॥
अथ हेतुरुपादानं प्रत्ययाः सहकारिणः । अनुमा त्वनुमानं स्याद्व्याप्यं लिंगं च साधनम् ॥
प्रत्यक्षोऽपाक्षमध्यक्षं धन्धो धान्ध्यमपाटवम् । बोधो बोधिः समन्तात्तु ज्ञानं स्यात्समुदागमः ॥
ऋषिः शास्त्रकृदाचार्यः शास्त्रं तु स्मृतिरागमः। साङ्ख्यं समीक्षं स्याद्दिव्यदोहदं तूपयाचितम्
करिणो रूपमिच्छन्ति कर्णास्फाले झलज्झला । रामेण रावणवधो रामायणमथोच्चयः ॥ १४ ॥
वस्त्रग्रन्थिश्च नीवी स्यान्मणितं रतकूजितम् । श्वभ्रोऽवपातो हल्लेखस्तर्कश्चीर्णं तु शीलितम् ॥

अङ्कपालिः २ श्लिषा ३ इति त्रीणि प्रीतिपूर्वकमन्योऽन्यदेहसंश्लेषणस्य ॥ खट्टिः १ असद्ग्रहः, असति अविद्यमाने वस्तुनि ग्रहः आग्रहः २ इति द्वे बालादीनाम् "आवदार" इति ख्यातस्य आग्रह-भेदस्य ॥ अनेडकः १ इत्येकम् अज्ञस्य ॥ सग्धिः, "सन्धिः" १ सहभोजनम् २ इति द्वे एकत्रभो-जनस्य ॥ ४ ॥ गणचक्रम् १ इत्येकं धार्मिकसहभोजनस्य ॥ देः १ इत्येकं क्रीडाक्रीडकयोः ॥ सेः १ इत्येकं सेवासेवकयोः ॥ ५ ॥ दानम् १ दायः २ इति द्वे दानस्य ॥ दुर्जातम् १ दुःषमम् २ असमञ्जसम् ३ इति त्रीणि असङ्गतस्य, असमञ्जसस्य वा ॥ कलञ्जः १ इत्येकं विषास्त्रेण हतस्य मृगस्य पक्षिणश्च ॥ ॥ ६ ॥ छेकोक्तिः, छेकायाः विदग्धायाः उक्तिः, "वक्रोक्तिः" अप्यत्र, क्वचित् "छेदोक्तिः" इति पाठः १ वक्रभणितम् २ इति द्वे काकुवचनस्य ॥ गोमुखम् १ उपलेपनम् २ इति द्वे लेपनस्य ॥ पूर्णपात्रम् १ पूर्णानकम्, "पूर्णालकम्" २ इति द्वे हर्षकाले पुत्रजननोत्सवजहर्षात् आकृष्य वस्त्रादेर्ग्रहणस्य ॥७॥ थुत्थुकः १ इत्येकं विक्रियामात्रतः उद्घटायनस्य ॥ बुद्धद्रव्यम् १ स्तौपिकम् २ इति द्वे बुद्धायत्तद्रव्यस्य ॥ सत्त्वम् १ द्रव्यम् २ वस्तु ३ इति त्रीणि द्रव्यस्य ॥ ८ ॥ लेशः १ उपपदम् २ गन्धः ३ अनुबन्धः ४ ईषत्करः ५ इति पञ्च लेशस्य अणुमात्रस्य च ॥ छेदः १ खण्डः २ इति द्वे खण्डस्य ॥ गालिः १ शपनम् २ इति द्वे शापस्य, आक्रोशस्य वा ॥ शमनम् १ शमः २ इति द्वे शमनस्य ॥ ९ ॥ वप्रः १ धूलिकेदारः २ इति द्वे क्षेत्रस्य ॥ प्सा १ वीतिः २ भक्षणम् ३ इति त्रीणि भक्षणस्य ॥ मैत्रेयिका १ मित्रयुद्धम् २ इति द्वे मित्रयुद्धस्य ॥ पर्यङ्कः १ अवसक्थिका २ इति द्वे पर्यङ्कस्य ॥ १० ॥ हेतुः १ उपादानम् २ इति द्वे कार्य-जननार्थमुपादीयमानस्य कार्यान्वितस्य कारणस्य ॥ प्रत्ययाः १ सहकारिणः २ इति द्वे सहकारिणः ॥ अनुमा १ अनुमानम् २ इति द्वे व्याप्तिदर्शनेन व्यापकनिश्चयस्य अनुमानस्य ॥ व्याप्यम् १ लिङ्गम् २ साधनम् ३ इति त्रीणि अनुमितिसाधनस्य व्याप्यस्य ॥ ११ ॥ प्रत्यक्षः १ अपाक्षम् २ अध्यक्षम् ३ इति त्रीणि प्रत्यक्षस्य ॥ धन्धः १ धान्ध्यम् २ अपाटवम् ३ इति त्रीणि पटुताभिन्नस्य ॥ बोधः, "बोधकः" अप्यत्र १ बोधिः २ इति द्वे बोधकस्वरूपस्य ज्ञानस्य ॥ समुदागमः १ इत्येकं समन्तात् ज्ञानस्य ॥ क्वचित् समन्तादित्यत्र "समज्ञा" इति पाठः ॥ १२ ॥ ऋषिः १ शास्त्रकृत्, "शास्त्रकर्ता" अप्यत्र २ आचार्यः ३ इति त्रीणि शास्त्रद्रष्टुर्मुनेः ॥ शास्त्रम् १ स्मृतिः २ आगमः ३ इति त्रीणि शास्त्रस्य ॥ साङ्ख्यम् १ समीक्षम् २ इति द्वे साङ्ख्यस्य ॥ दिव्यदोहदम्, दिव्यस्य दोहदम्, "यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः" इति "दिव्यदोहनम्" १ उपयाचितम्, "उपयाचितकम्" अप्यत्र २ इति द्वे अभीष्टार्थसिद्धये देवेभ्यो देयस्य द्रव्यस्य ॥ १३ ॥ झलज्झला १ इत्येकं हस्तिकर्णास्फालनस्य ॥ रामायणम्, रामस्यायनं चरितमधिकृत्य कृतो ग्रन्थः १ इत्येकं रामचरितप्रतिपादकस्य वाल्मीकि-कृतकाव्यभेदस्य ॥ उच्चयः १ ॥ १४ ॥ वस्त्रग्रन्थिः २ नीवी, "नीवीं प्रति प्रणिहिते तु करे" इति

एकीया एकपक्षाः स्युः सहायाः सहभाविनः। कुलीराभे गविर्जानपदा राष्ट्रनिवासिनः ॥१६॥
प्रत्यक्षी व्यक्तदृष्टार्थश्चार्थे कर्तनतर्कुटे। चिरकालं दीर्घरात्रमामिक्षा मस्तु वाजिनम्॥१७॥
तदात्वं प्रमुखं राजमल्ल उत्सिक्त उद्धतः। द्वैधं विवाद आरम्भ आदराडम्बरार्थकः ॥ १८ ॥
रभसो गमकारित्वं कौमुदी कार्त्तिकोत्सवे। आवेशाटोपसंरम्भाः प्रियवाक्चटु चाटुनी॥१९॥
प्रतिरूपं प्रतिच्छन्दः संवेशनरतिक्रिये। अभ्यासः खुरली योग्या निर्वर्णननिभालने ॥ २० ॥
शालीनीकरणं न्यग्भावनं गन्धनसूचने। भावः पदार्थो धर्मः स्यात्सत्त्वं तत्त्वं च वस्तु च ॥
सन्दर्भस्तु प्रबन्धः स्याद् ग्रन्थो द्वात्रिंशदक्षरी। सर्गबन्धो महाकाव्यं महारूपकनाटके ॥२२॥
अथ वाङ्मयभेदाः स्युश्चम्पूः खण्डकथा कथा। आख्यायिका परिकथा कलापकविशेषकौ॥
सन्दानमनिरुद्धं च प्रकीर्णं गुत्सकस्तथा। सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसङ्ग्रहाः ॥
उच्छ्वासः परिवर्तश्च पटलः काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्वाह्निकं च ग्रन्थसन्धयः॥२५॥
प्रज्ञप्तिः परिभाषाशैलीसङ्केतसमयकाराश्च। प्रतिवाणी प्रतिवचनं समुदाचारस्त्वभिप्रायः ॥

साहित्यम्, "नीविः" अप्यत्र ३ इति त्रीणि कटीवस्त्रबन्धनस्य ॥ मणितम् १ रतकूजितम् २ इति द्वे रतिकाले स्त्रीणामव्यक्तशब्दभेदस्य ॥ श्वभ्रः १ अवपातः २ इति द्वे गर्तस्य छिद्रस्य वा ॥ हृल्लेखः १ तर्कः २ इति द्वे तर्कस्य ॥ चीर्णम् १ शीलितम् २ इति द्वे अभ्यस्तस्य ॥ १५ ॥ एकीयाः १ एकपक्षाः २ सहायाः ३ सहभाविनः ४ इति चत्वारि सहायानाम् ॥ गविः १ इत्येकं कुलीरशिशोः ॥ जानपदाः १ राष्ट्रनिवासिनः२ इति द्वे देशनिवासिनाम् ॥१६॥ प्रत्यक्षी, "प्रत्यक्षः"१ व्यक्तदृष्टार्थः २ इति द्वे साक्षिणः ॥ कर्तनम्, "वर्तनम्" १ तर्कुटम्, "तर्कुः" अप्यत्र २ इति द्वे छेदनयन्त्रभेदस्य ॥ चिरकालम् १ दीर्घरात्रम् २ इति द्वे चिरकालस्य ॥ आमिक्षा १ मस्तु २ वाजिनम् ३ "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतिः, इति त्रीणि दधियोगजायाः विकृतेः आमिक्षानिःसृतजलस्य च ॥ १७ ॥ तदात्वम् १ प्रमुखम् २ इति द्वे तत्कालस्य ॥ राजमल्लः १ उत्सिक्तः २ उद्धतः ३ इति त्रीणि उद्धतस्य ॥ द्वैधम् १ विवादः २ इति द्वे विवादस्य ॥ आरम्भः १ आदरः २ आडम्बरः ३ इति त्रीणि आरम्भस्य दर्पस्य च ॥ १८ ॥ रभसः १ गमकारित्वम् २ इति द्वे पौर्वापर्याविचारस्य ॥ कौमुदी १ इत्येकं कार्त्तिकोत्सवस्य ॥ आवेशः १ आटोपः २ संरम्भः ३ इति त्रीणि संरम्भस्य ॥ प्रियवाक् १ चटु२ चाटुनी ३ इति त्रीणि प्रियवाक्यस्य ॥१९॥ प्रतिरूपम् १ प्रतिच्छन्दः २ इति द्वे प्रतिरूपस्य ॥ संवेशनम् १ रतिक्रिया २ इति द्वे रतिक्रियायाः ॥ अभ्यासः १ खुरली २ योग्या ३ इति त्रीणि शास्त्राभ्यासस्य शराभ्यासस्य वा ॥निर्वर्णनम् १ निभालनम् २ इति द्वे दर्शनस्य ॥२०॥ शालीनीकरणम् १ न्यग्भावनम्२इति द्वे अधःकरणस्य ॥ गन्धनम् १ सूचनम् २ इति द्वे सूचनस्य प्रकाशनस्य ॥ भावः १ पदार्थः २ धर्मः ३ सत्त्वम् ४ तत्त्वम् ५ वस्तु ६ इति षट् वस्तुनः ॥२१॥ सन्दर्भः १ प्रबन्धः २ इति द्वे सन्दर्भस्य ॥ ग्रन्थः १ द्वात्रिंशदक्षरी २ इति द्वे ग्रन्थस्य ॥ सर्गबन्धः १ महाकाव्यम् २ इति द्वे महाकाव्यस्य ॥ महारूपकम् १ नाटकम् २इति द्वे नाटकस्य ॥ २२ ॥ चम्पूः १ खण्डकथा २ कथा ३ आख्यायिका ४ परिकथा५इति पञ्च एकैकवाङ्मयभेदस्य ॥ कलापकः १ विशेषकः २ इति द्वे कलापकस्य ॥ तल्लक्षणम्—"कलापकं चतुर्भिश्च" इति साहित्यम् ॥ २३ ॥ सन्दानम् १ अनिरुद्धम् २ इति द्वे काव्यबन्धनविशेषस्य ॥ "सन्दानितकं त्रिभिरिष्यते" इति साहित्यम् ॥ प्रकीर्णम् १ गुत्सकः २ इति द्वे मिश्रकाव्यस्य ॥ सर्गः १ वर्गः २ परिच्छेदः ३ उद्घातः, क्वचित्तु "उद्योतः" इति च ४ अध्यायः ५ अङ्कः ६ संग्रहः ७ ॥ २४ ॥ उच्छ्वासः, "उल्लासः" अप्यत्र ८ परिवर्तः ९ इति नव कथापरिच्छेदानाम् एकैकमेकैकस्य ॥ पटलः १ काण्डम् २ स्थानम् ३ प्रकरणम् ४ पर्व ५ आह्निकम् ६ इति षट् ग्रन्थसन्धीनाम् एकैकमेकैकस्य ॥ २५ ॥ प्रज्ञप्तिः १ परिभाषा २ शैली, "आचार्याणामियं शैली यत्सामान्येनाभिधाय विशेषेण विवृण्वन्ति" इति प्राञ्चः ३ सङ्केतः ४ समयकारः५ इति पञ्च सङ्केतस्य॥प्रतिवाणी, "प्रतिवाणिः"१प्रतिवचनम् २ इति द्वे प्रतिवचनस्य ॥ समुदाचारः १ अभि-

अप्रतिरूपकथा स्यात्सङ्गणिका छोरणं परित्यागः । स्यादुद्धर्धनमन्वहांसस्त्रिषु पिण्डमाहारः॥
अवसर्गः प्राकाम्यं स्वाच्छन्द्यानुमननमित्यपि च।आकल्पक उत्कण्ठा चिन्ताकर्मण्यथास्त्यानम्
आक्षेपोऽत्याकारः स्वाध्यायः स्यान्निरन्तराभ्यासः ।
हर्षस्वनः किलकिला सद्दशस्यन्दस्तु निःस्यन्दः ॥ २९ ॥
अवसानं तु विरामोऽमध्यमथो मण्डलं चक्रम् । स्यादारम्भः प्रस्तावना तदामुखमपि ज्ञेयम् ॥

इति सङ्कीर्णवर्गः ॥ २ ॥

स्वरकाद्यादिकाद्यन्तक्रमान्नानार्थसङ्ग्रहम् । विहायामरकोषोक्तमकार्षीत्पुरुषोत्तमः ॥ १ ॥
शक्रार्कपर्णयोश्चार्कोऽभीकस्त्वभयकामिनोः । रूपकान्तिकयोश्चाङ्कोऽलिमकौ भेककोकिलौ ॥
अन्तिकं निकटे चुल्ल्यां नाट्योक्तौ चाग्रजाऽन्तिका ।
अनीकोऽस्त्री रणे सैन्ये गौर्यां मातरि चाम्बिका ॥ ३ ॥

प्रायः २ इति द्वे अभिप्रायस्य ॥ २६॥ सङ्गणिका १ इत्येकम् अप्रतिरूपकथायाः॥ छोरणम् १ परित्यागः २ इति द्वे परित्यागस्य ॥ उद्धर्धनम्, "उद्धर्तनम्" १ अन्तर्हासः २ इति द्वे अन्तर्हासस्य ॥ पिण्डम् १ आहारः २ इति द्वे आहारस्य ॥ २७ ॥ अवसर्गः, क्वचित् "अध्यसर्गः" इति १ प्राकाम्यम्, "प्राकाम्यं ते विभूतिषु" इति कुमारः २ स्वाच्छन्द्यानुमननम्, अधिशब्दात् स्वाच्छन्द्यानुमतिरप्यत्र ३ इति त्रीणि स्वाधीनतानुमतेः ॥ आकल्पकः १ उत्कण्ठा २ इति द्वे "औत्सुक्य" इति ख्यातस्य चिन्ताकर्मणः ॥ आस्त्यानम् १ ॥ २८ ॥ आक्षेपः, "आक्षेपकः" अप्यत्र २ अत्याकारः ३ इति त्रीणि निन्दायाः अपवादस्य वा ॥ स्वाध्यायः, स्वः स्वकीयत्वेन विहितः अध्यायः, "स्वाध्यायोऽध्येतव्यः" इति श्रुतिः १ निरन्तराभ्यासः २ इति द्वे स्वाध्यायस्य द्विजैः पाठ्यवेदभागभेदस्य वा ॥ हर्षस्वनः१ किलकिला २ इति द्वे हर्षकारकशब्दस्य ॥ सद्दशस्यन्दः, "सद्दशस्पन्दः" १ निःस्यन्दः, "निस्पन्दः" २ इति द्वे समानक्षरणस्य ॥ २९ ॥ अवसानम् १ विरामः २ अमध्यम् ३ इति त्रीणि अवसानस्य ॥ मण्डलम् १ चक्रम् २ इति द्वे चक्रस्य ॥ आरम्भः १ प्रस्तावना २ आमुखम्, "आमुखं तद्विजानीयाद् बुधैः प्रस्तावना मता" इति साहित्यम् ३ इति त्रीणि प्रस्तावनायाः ॥ ३० ॥

इति सङ्कीर्णवर्गः ॥ २ ॥

अनन्तरमिहानेकार्थशब्दा उच्यन्ते । स्वरेत्यादि स्पष्टम् ॥ १ ॥ तत्र कान्तानाह शक्रेत्यादिना । शक्रे इन्द्रे, अर्कपर्णे मन्दारे च अर्कः इत्येकं ककारान्तं नाम वर्तते । "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" इति मेदिनी ॥ अभये निर्भये, कामिनि कामुके च अभीकः इति शब्दो वर्तते । "अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ" इति मेदिनी । "अभीको निर्भये कम्रे" इति हैमः ॥ रूपे शरीरे, कान्तिके शोभान्विते च अङ्कः इति शब्दो वर्तते ।" अङ्को रूपकभेदागश्चिह्नरेखाजिभूषणे । रूपकांशान्तिकोत्सङ्गे स्थाने" इति मेदिनी ॥ भेकः मण्डूकः, कोकिलः परभृतः, तयोश्च अलिमकशब्दः । "अलिमकः पिके भेके मधूके पद्मकेशरे" इति विश्वः ॥ २ ॥ निकटे समीपे, चुल्ल्यां पाकार्थमग्निस्थापनस्थाने च अन्तिकम् । नाट्योक्तौ नाटकविषयवचने, अग्रजायां ज्येष्ठभगिन्यां च अन्तिका । "अन्तिकं निकटे वाच्यालिङ्गं स्त्री सातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कथ्यतेऽन्तिका" इति मेदिनी । "अन्तिकं पुनः । पार्श्वेऽन्तिका तु चुल्ल्यां स्यात् सातलाख्यौषधेऽपि च ॥ नाट्योक्तौ ज्येष्ठभगिनी अन्तिका प्रोच्यतेऽपि सा" इति हैमः ॥ रणे युद्धे, सैन्ये सेनासमुदाये च अनीकः । "अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी । "अनीकं रणसैन्ययोः" इति हैमः ॥ गौर्यां पार्वत्याम्, मातरि जनन्यां च अम्बिका । "अम्बिका पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि" इति मेदिनी । "अम्बिका पार्वतीपाण्डुजनन्योरपि मातरि । अम्बिका कैतवे मिश्रे सर्षप्यामपि

**स्यादश्मन्तकमुद्धाने मल्लिकाछदनेऽपि च । आह्निकं दिननिर्वर्त्ये तत् क्लीबं नित्यकर्मणि ॥४॥ स्यादाच्छुरितकं हासविशेषे च नखक्षते । उदर्क एष्यत्कालीयफले मदनकण्टके ॥ ५ ॥ स्त्रियामुत्कलिका हेलोत्कण्ठासलिलवीचिषु । कोशज्ञे कौशिको विश्वामित्रे गौर्यां च कौशिकी कृष्णत्वे च हिमान्यां च गौरीकाल्योश्च कालिका । वर्षोपले स्त्री करका करङ्के करकोऽस्त्रियाम्॥ कुसुम्भे दाडिमे पक्षिभेदे च करकः पुमान् । करमध्याङ्गुलौ च स्यात्कर्णिका च द्रुमान्तरे ॥ द्विके धृष्टे च काकः स्यात्कौतुकं मङ्गलेच्छयोः। भोग्येऽप्यथ स्यात्कुलकं श्लोकैकार्थपटोलयोः॥ कुलकौ नाककाकेन्दू कं आत्मा च सुखं च कम्। पेचके स्त्रीजिते काकरुकः कौलेयकः शुनि॥**

कीर्त्यते''विश्वः।''अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि '' इति हैमः ॥३ ॥ उद्धाने चुल्ल्याम् मल्लिकाछदने, मल्लिकापत्रे च अश्मन्तकम्।''स्यादश्मन्तकमुद्धाने मल्लिकाछदनेऽपि च'' इत्येव मेदिनी॥दिननिर्वर्त्ये दिनसाध्ये, नित्यकर्मणि नित्यक्रियायां च आह्निकं स्यात्।''आह्निकं दिननिर्वर्त्ये त्रिलिङ्गमथ न द्वयोः।नित्यक्रियाभोजनयोर्वृन्दे प्रकरणस्य च'' इति मेदिनी ।''आह्निकं स्यात्पुनरहर्निर्वर्त्ये नित्यकर्मणि। भोजने ग्रन्थभागे च''इति हैमः ॥४॥ हासविशेषे हास्यभेदे, नखक्षते नखाघातव्रणे च आच्छुरितकम् ।''स्यादाच्छुरितकं हासनखराघातभेदयोः''इति मेदिनी । ''स्यादाच्छुरितकं हासनखाघातप्रभेदयोः'' इति विश्वः॥एष्यत्कालीयफले उत्तरकालभाविफले मदनकण्टके च उदर्कः ॥''उदर्क एष्यत्काले तत्फले मदनकण्टके''इति मेदिनी। ''उदर्कस्तूत्तरकालफले मदनकण्टके' इति हैमः ॥ ५ ॥ हेला स्त्रीणां शृङ्गारभावजा चेष्टा,तथोक्तम्--''प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे'' इति । उत्कण्ठा इष्टलाभे कालासहनरूपा, सलिलं जलम्, वीचिः तरङ्गः । तत्र उत्कलिका स्यात् । ''कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु '' इति मेदिनी ॥ कोशज्ञे कोषाध्यक्षे, विश्वामित्रे तन्नामकमुनौ च कौशिकः । गौर्यां पार्वत्यां कौशिकी । ''कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । कोशज्ञोलूकयोश्च स्याद्विश्वामित्रे मुनावपि । कौशिकी चण्डिकायां च नदीभेदे च योषिति'' इति मेदिनी । ''कौशिकः शक्रघूकयोः । कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ ॥ कौशिकी चण्डिकानद्योः'' इति हैमः ॥ ६ ॥ कृष्णत्वे कार्ष्ण्ये, हिमान्यां हिमसमूहे, गौरी पार्वती, काली तन्नामिका देवी, तयोश्च कालिका । ''कालिका चण्डिकाभेदे कार्ष्ण्यवृश्चिकपत्रयोः । क्रमदेये वस्तुमूल्ये धूसरीनवमेघयोः । पटोलशाखारोमालीमांसीकाकीशिवासु च । मेघावलौ च'' इति मेदिनी । ''कालिका योगिनीभिदि । स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे ॥ क्रमदेये वस्तुमूल्ये कार्ष्ण्यवृश्चिकपत्रयोः । रोमाल्यां धूसरीकांस्योः काकीपटोलशाखयोः'' इति हैमः ॥ वर्षोपले घनोपले करका । करङ्के नारिकेलास्थ्नि कमण्डलौ वा करकः ॥ ७ ॥ कुसुम्भे दाडिमे पक्षिभेदे च करकः ।''करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्वर्षोपले न स्त्री करङ्के च कमण्डलौ'' इति मेदिनी । ''करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करे चापि करका च घनोपले'' इति विश्वः । ''करको दाडिमे पक्षिभेदे करकमण्डलौ । लट्वाकरञ्जयोर्वर्षोपले च'' इति हैमः ॥ करमध्याङ्गुलौ हस्तस्य मध्यमाङ्गुलौ,द्रुमान्तरे वृक्षविशेषे च कर्णिका स्यात् । '' कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे '' इति मेदिनी । '' कर्णिका कर्णभूषणे । बीजकोषे सरोजस्य करमध्याङ्गुलावपि ॥ कुट्टिन्यां हस्तिहस्ताग्रे कर्णिका सूक्ष्मवस्तुनि । अग्निमन्थे '' इति हैमः ॥ ८ ॥ द्विके काके, द्वौ कौ ककारौ यत्र द्विकः, '' द्विकः काके च कोके च '' इति विश्वः, धृष्टे निर्लज्जे, प्रगल्भे च काकः स्यात् । '' काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदे दीपभेदयोः '' इति मेदिनी॥ मङ्गले प्रशस्ते अभीष्टार्थसिद्धौ वा, इच्छायाम् आभिलाषे, भोग्ये भोगार्हे च कौतुकम् ॥'' कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । तथा परम्परायाते मङ्गले च कुतूहले ॥ विवाहसूत्रगीतादिभोगयोरपि न द्वयोः '' इति मेदिनी । '' कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्याते मङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च '' इति हैमः ॥ श्लोकैकार्थः एकवाक्यतापन्नपद्यादिकश्लोकसमुदायार्थः, पटोलः स्वनामाख्यातः लताभेदः, तयोश्च कुलकम् ॥ ९ ॥ नाकः स्वर्गः, काकेन्दुः कटुतिन्दुकः, तयोः कुलकः स्यात् ॥ ''कुलकं तु पटोले स्यात्सम्बद्धश्लोकसंहतौ । पुंसि

कुलीने चाथ कनकं धुस्तूरे नागकेशरे। चम्पके किंशुके हेम्नि कृषकौ फालकर्षकौ ॥ ११ ॥
रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्। राजधान्यां नितम्बेऽद्रेर्वलये कटकोऽस्त्रियाम् १२
वेणौ ना कार्मुकं चापे गुणवृक्षेऽपि कूपकः। कल्को विभीतके तैलादिशेषे चाथ कञ्चुकः १३॥
निर्मोके चोलके वारबाणेऽथ कुशिको मुनौ। शाले किष्कुः प्रकोष्ठेऽपि व्याख्याश्लोकेऽपि कारिका
खगे यमे छद्मविप्रे कङ्कः सूच्यां च कूर्चिका। क्रमुको भद्रमुस्तेऽपि कोकश्चक्रे वृकेऽपि च १५

वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते " इति मेदिनी। " कुलकं पद्यादिश्लोकसमन्वये पटोलके। कुलकः कुलप्रधाने वल्मीके काकतिन्दुके " इति हैमः॥ आत्मा देहः, तत्र च कः। सुखं प्रसिद्धं तस्मिंश्च कम्। अत्र चकारात् ब्रह्मणि वायौ यमे दक्षप्रजापतौ सूर्ये अग्नौ विष्णौ काले कामग्रन्थौ राजनि मयूरे धने प्रकाशे शब्दे च शिरसि जले रोगे च कम्। " को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे। कामग्रन्थौ चक्रिणि च पतत्रिणि च पार्थिवे। मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम् " इति मेदिनी। "को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च। पावके च मयूरे च सुखशीर्षजलेषु कम्" इति विश्वः॥ पेचकः—उलूकः, स्त्रीजितः—स्त्रीपराजितः, तयोः काकरुकः। काकस्य रुकः ध्वनिरिव ध्वनिः यस्य। "काकरुको नग्नदम्भस्त्रीजितोलूकभीरुषु " इति मेदिनी॥ शुनि कुक्कुरे, कुलीने सत्कुलोद्भवे च कौलेयकः॥ १०॥ धुस्तूरे—तन्नामख्याते वृक्षे, नागकेशरे चम्पके, किंशुके हेम्नि स्वर्णे च कनकम्। " कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे। धुस्तूरे काञ्चनारे च कालिये चम्पकेऽपि च" इति मेदिनी। " कनकं हेम्नि कनको नागकेशरे। धूस्तूरे चम्पके काञ्चनारकिंशुकयोरपि" इति हैमः॥ फालम् लाङ्गलमुखस्थः लोहभेदः, कर्षकः कृषिबलः, तयोः कृषकः। "कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत्" इति मेदिनी॥ ११॥ रोमाञ्चे रोमहर्षे, क्षुद्रशत्रौ नीचजातिकरिपौ, द्रुमाङ्गे वृक्षावयवे च कण्टकः। "कण्टको न स्त्रियां,क्षुद्रशत्रौ मत्स्यादिकीकसे। नैयायिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः" इति मेदिनी॥ राजधान्याम्, अद्रेर्नितम्बे मेखलाख्ये पर्वतमध्यभागे, वलये च कटकः। "कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डले। सामुद्रलवणे राजधानीवलययोरपि " इति मेदिनी॥ १२॥ वेणौ वंशे, चापे धनुषि च कार्मुकम्। "कार्मुकं धनुषि स्यान्ना वेणौ कर्मक्षमेऽन्यवत्" इति मेदिनी। "अथ कार्मुकः। वंशे कार्मुकमिष्वासे कर्मठे " इति हैमः॥ गुणवृक्षे नौकाकर्षकदामाधारे काष्ठे, अपिशब्दात् जलाधारे गर्ते च कूपकः। "कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे"इति मेदिनी। "कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे। उदपाने चितायां च" इति विश्वः॥ विभीतके विभीतकवृक्षे, तैलादिशेषे घृततैलादिशेषे च कल्कः॥ आदिशब्दात् दम्भे विष्ठायां तुरुष्कनामगन्धद्रव्ये घृततैलादिपाके देये औषधिद्रव्ये च। तदुक्तम् "द्रव्यमात्रं शिलापिष्टं शुष्कं वा जलमिश्रितम्। तदेव सूरिभिः पूर्वैः कल्कमित्यभिधीयते"इति। चात् शाठ्ये पापे। "कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः" इति मेदिनी। "त्रिषु पापाशये कल्कोऽस्त्री विट्किट्टेभदन्तयोः" इति विश्वः॥ १३॥ निर्मोके सर्पकञ्चुके, चोलके स्त्रीणां कञ्चुकाख्ये आप्रपदीनवस्त्रे पुंसां वस्त्रभेदे वा, बारबाणे कवचे च कञ्चुकः॥ " कञ्चुको बारबाणे स्यान्निर्मोके कवचेऽपि च। अर्धापकग्रहीताङ्गास्थितवस्त्रे च चोलके" इति मेदिनी॥ मुनौ जमदग्निपितरि विश्वामित्रस्य पितरि च मुनिभेदे, शाले सर्जवृक्षे च कुशिकः। "कुशिकः स्यान्मुनौ तैलशेषे सर्जाक्षवृक्षयोः" इति विश्वः। "कुशिका मुनिभेदे स्यात् फाले सर्जे विभीतके" इति हैमः॥ प्रकोष्ठे कूर्परस्याधोभागस्थे मणिबन्धपर्यन्ते हस्तावयवे किष्कुः। अपिशब्दात् द्वादशाङ्गुलपरिमाणे हस्तिपरिमाणे च। "किष्कुर्वितस्तौ हस्ते च प्रकोष्ठे कुत्सितेऽपि च"इति विश्वः। "किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठे करेऽपि च" इति कोषान्तरम्॥ व्याख्याश्लोके स्वल्पाक्षरवति बहुलार्थबोधके श्लोके कारिका। अपिशब्दात् क्रियायां नटयोषिति शिल्पे च। "कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि" इति मेदिनी। "कारिका यातनानटी। कृतिर्विवरणश्लोको नापितादिककर्म च" इति हैमः॥ १४॥ खगे पक्षिभेदे, यमे कृतान्ते, छद्मविप्रे कपटब्राह्मणे लोकप्रसारणार्थं ब्राह्मणताख्यापनाय ब्राह्मणलिङ्गधारिणि च कङ्कः। "कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः" इति मेदिनी॥ सूच्यां सूचिकायाम्, सूचिरत्र तुन्नवायसाधनार्थं लोकव्यवहारिता लोहमयी सूचिका, चकारात्

पुनर्नवाकारवेल्लपर्णासेषु कठिल्लकः । कृकवाकुर्मयूरेऽपि वंशे दैत्ये च कीचकः ॥ १६ ॥
नीचेऽपि क्षुल्लको मूर्धत्राणे नाकौ च खोलकः।चौरोन्दुरू च खनकौ गोलकौ मणिजारजौ१७
खगे नग्ने च गोरङ्कुः सङ्ख्याभेदेऽपि गण्डकः।शृङ्ग्यां च ग्रामयुद्धे च ग्राममद्गुरिका स्त्रियाम्
गान्धिको लेखकेऽपि स्याद्गुह्यकश्छेकनिघ्नयोः । वेश्यायूथ्योश्च गणिका चषकं सरकेऽपि च१९
ग्रन्थिकौ पार्थदैवज्ञौ ग्रन्थिपर्णे च न द्वयोः । कण्ठालंकारखद्योतविद्युत्सु चिलिमीलिका२०॥

दुग्धविकारे तूलिकायां कुड्मले कुञ्चिकायां तृणगुच्छे च कूचिका स्यात् । "कूर्चिका सूचिकायां च तूलिकायां च कुड्मले।कवाटकुट्टके क्षीरविकृतावपि योषिति" इति मेदिनी।"कूर्चिका क्षीरविकृतौ कुञ्चिकायां च कुड्मले । आलेख्यकूर्चिकासूच्योः" इति हैमः ॥ भद्रमुस्ते नागरमुस्तके, अपिशब्दात् ब्रह्मदारुणि गुवाके पट्टिकालोध्रे च क्रमुकः । "क्रमुकः पट्टिकालोध्रे भद्रमुस्तकपूगयोः"इति विश्वः । "क्रमुको भद्रमुस्तके । गुवाके पट्टिकालोध्रे" इति हैमः ॥ चक्रे चक्रवाके वृके कुक्कुराकारे हरिणघातकव्याघ्रभेदे, अपिशब्दात् ज्यैष्ठ्यां खर्जूरीवृक्षे दर्दुरे विष्णौ च कोकः । "कोकश्चक्रवृकज्यैष्ठीखर्जूरीद्रुमदर्दुरे"इति मेदिनी।"कोकश्चक्रे वृके ज्यैष्ठ्यां खर्जूरीद्रुमभेकयोः"इति विश्वः ॥१५॥ पुनर्नवा वर्षाभूः, सा च स्वनामख्यातः शाकभेदः, कारवेल्लः लताभेदः, पर्णासः तुलसी, तत्र च कठिल्लकः । "कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः" इति मेदिनी ॥ मयूरे नीलग्रीवे, अपिशब्दात् कुक्कुटे सरटे च कृकवाकुः । "कृकवाकुर्मयूरेऽपि सरटे चरणायुधे" इति मेदिनी ॥ वंशे वेणौ, " कीचका नाम ते वंशा ये स्वनन्त्यनिलाहताः" इत्युक्ते वेणुभेदे, दैत्ये असुरे, चकारात् विराटराजश्याले केकयाधिपे नृपभेदे च कीचकः । "कीचको दैत्यभिद्वाताहतसस्वनवंशयोः" इति मेदिनी । "कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे" इति हैमः ॥ १६ ॥ नीचे निम्ने, अपिशब्दात् अल्पे पामरे च क्षुल्लकः । "क्षुल्लकस्त्रिषु नीचेऽल्पे " इति मेदिनी । क्वचित् " खुल्लकः " इति । "खुल्लकः स्वल्पनीचयोः" इति हैमः ॥ मूर्धत्राणे शिरस्त्राणे, नाकौ वल्मीके, चकारात् पाके पूगकोषे च खोलकः । "खोलकः पाकवल्मीकपूगकोषशिरस्त्रके" इति विश्वः । "खोलकः पूगकोषे स्याच्छिरस्त्रे नाकुपाकयोः" इति हैमः ॥ चौरः सन्धिचौरः, उन्दुरुः मूषिकः तयोः, चकारात् भूमिदारके च खनकः । "खनको नोन्दरौ सन्धिचोरे त्रिष्ववदारके" इति मेदिनी । "खनकः सन्धितस्करे । मूषके भूमिवित्तज्ञे" इति हैमः ॥ मणिः मणिकः, जारजः मृते भर्तरि जारजातः पुत्रः, तयोः गोलकः । "गोलको विधवापुत्रे जारात्स्यान्मणिके गुडे" इति मेदिनी । "गोलकस्तु जारतो विधवासुते । अलिञ्जरे गुडे पिण्डे" इति हैमः ॥ १७ ॥ खगे पक्षिभेदे, नग्ने विवस्त्रे, "विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च । एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः" इति, चकारात् प्रतिभुवि च गोरङ्कुः । "गोरङ्कुः स्यात्पुमान्पक्षिभेदे नग्नकवन्दिनोः" इति मेदिनी । "गोरङ्कुर्नग्नवन्दिनोः । खगे च" इति हैमः ॥ सङ्ख्याभेदे गणनाविशेषे, अपिशब्दात् स्वनामाख्याते पशौ अन्तराये अवच्छेदे च गण्डकः । "गण्डकः पुंसि खड्गे स्यात्सङ्ख्याविद्याप्रभेदयोः । अवच्छेदेऽन्तराये च" इति मेदिनी । "गण्डको विघ्ने विद्यायां सङ्ख्यावच्छेदखड्गिषु । गण्डकी तु सरिद्भेदे" इति हैमः ॥ शृङ्ग्यां शृङ्गीमत्स्ये, ग्रामयुद्धे ग्रामजातकोलाहले च ग्राममद्गुरिका । "ग्राममद्गुरिका शृङ्ग्यां ग्रामयुद्धे च कीर्त्यते" इति विश्वः । क्वचित् "ग्राममङ्गुरिका" इति पाठः । "ग्राममङ्गुरिका ग्रामयुद्धे शृङ्गिझषे स्त्रियाम्" इति मेदिनी ॥ १८ ॥ लेखके लिपिकारे, अपिशब्दात् गन्धवणिजि च गान्धिकः । "गान्धिको लेखकेऽपि स्यात्सुगन्धिव्यवहारिणि" इति मेदिनी । "गान्धिको लेखके गन्धवणिजे" इति हैमः ॥ छेकः दक्षः, निघ्नः अधीनः गुणितो वा, तयोः गुह्यकः । "गुह्यको निघ्नके छेके" इति मेदिनी ॥ वेश्या प्रसिद्धा, यूथी यूथिका पुष्पप्रधानवृक्षजातिः, तयोः गणिका । "गणिका यूथिवेश्येभीतर्कारीषु ना तु दैवज्ञे" इति मेदिनी । "गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति" इति हैमः ॥ सरके मद्यपानपात्रे, अपिशब्दात् मधुनि मद्यभेदे च चषकम् । "चषकोऽस्त्री पानपात्रे मधुमद्यप्रभेदयोः" इति मेदिनी । "चषकं तु सुरापात्रे मधुमद्यप्रभेदयोः"इति विश्वः॥१९॥पार्थः पृथापुत्रः युधिष्ठिरादिः, दैवज्ञः ज्योतिर्विद् तयोः, ग्रन्थिपर्णे चोरनामगन्धद्रव्ये, चकारात् पिप्पलीमूले गुग्गुले करीरे च ग्रन्थिकः।"ग्रन्थिकं

चारको भोजके बन्धे नाटकाङ्गेऽपि चूलिका। चित्रकं चित्रके क्लीबं व्याघ्रैरण्डौ च चित्रकौ॥२१॥ गृहासक्ते पक्षिमृगे छेको नागरिके त्रिषु। कम्बौ जलकरङ्कः स्यान्नारिकेलफलेऽपि च॥२२॥ जैवातृकः कृशे चन्द्रे दीर्घायुषि च स त्रिषु। जालिका वस्त्रभित्कूटकृत्कैवर्ते च जालिकः॥२३॥ जंघायामद्रिभित्तौ च खनित्रे ग्रावदारणे। कपित्थे चास्त्रियां टङ्कश्टुण्टुकावल्पशोणकौ॥२४॥ तिलकं चित्रके क्लोम्नि ना तरौ तिलकालके। गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च॥२५॥ तुरुष्कः सिह्लके देशे प्राण्यङ्गे त्रितये त्रिकम्। कूपाङ्गे स्त्री तिक्तशाकः खदिरे वरुणद्रुमे॥२६॥

पिप्पलीमूले गुग्गुलग्रन्थिपर्णयोः। करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे" इति मेदिनी। "ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे। ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः" इति हैमः॥ कण्ठालङ्कारः कण्ठभूषणम्, खद्योतः कीटभेदः, विद्युत् सौदामिनी, तत्र च चिलिमीलिका। क्वचित् "चिलमीलिका" इति च पाठः। "चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः" इति मेदिनी॥२०॥ भोजके भोजनकारके, बन्धे च चारकः। "चारकः पालकेऽश्वादेः स्यात्सञ्चारकबन्धयोः" इति मेदिनी। "चारकोऽश्वादिपाले स्याद्बन्धे सञ्चारकेऽपि च" इति हैमः॥ नाटकाङ्गे नाटकाङ्गभेदे, अपिशब्दात् हस्तिकर्णमूले च चूलिका। "चूलिका नाटकस्याङ्गे कर्णमूले च दन्तिनाम्" इति विश्वः। "चूलिका नाटकाङ्गके। करिणः कर्णमूले च" इति हैमः॥ चित्रके चित्रकवृक्षे, व्याघ्रः द्वीपिविशेषः, एरण्डः प्रसिद्धः तयोश्च, चकारात् लेख्ये अद्भुते तिलके आकाशे कुष्ठभेदे नानावर्णे च चित्रकम्। "चित्रकं तिलके ना तु व्याघ्रभिचञ्चुपाठिषु" इति मेदिनी। "चित्रकस्तु चित्रकारे द्रुमौषधिविशेषयोः" इति हैमः॥२१॥ गृहासक्ते गृहेषु दारेषु गेहे वा आसङ्गयुक्ते, पक्षिमृगे पक्षिणि मृगे च, नागरिके नागरे च छेकः। "छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु" इति मेदिनी। "छेको विदग्धे विश्वस्ते मृगनीडकयोरपि" इति हैमः॥ कम्बौ शङ्खे, नारिकेलफले तन्नामकफलविशेषे, अपिशब्दात् मेघे जललतायां च जलकरङ्कः। "अथो जलकरङ्कः स्यान्नालिकेरफलेऽम्बुजे। शङ्खे जललतायां च वारिवाहे च कीर्तितः" इति मेदिनी॥२२॥ कृशे अल्पे सूक्ष्मे च, चन्द्रे दीर्घायुषि दीर्घायुष्के, चकारात् औषधे कर्पूरे च जैवातृकः। "जैवातृकः पुमान् सोमे दीर्घायुःकृशयोस्त्रिषु" इति मेदिनी॥ वस्त्रभित् वस्त्रभेदः, कूटकृत् दम्भभेदः, तयोः जालिका। "आनाये दम्भभेदे च वस्त्रभेदे च जालिका" इति विश्वः॥ कैवर्ते धीवरे, चकारात् वागुरिके जालजीविनि मर्कटके च जालिकः। "जालिको वाच्यवद्ग्रामजालिजालोपजीविनोः" इति मेदिनी॥२३॥ जङ्घायाम्, अद्रिभित्तौ पर्वतभित्तौ, खनित्रे अस्त्रभेदे, ग्रावदारणे पाषाणभेदने, कपित्थे नीलकपित्थे, चकारात् कोपे कोषे खड्गे चतुर्माषकरूपे परिमाणे दर्पे च टङ्कः। "टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम्। जङ्घायां स्त्री पुमान् कोषे कोपासिग्रावदारणे" इति मेदिनी॥ अल्पः क्षुद्रः, शोणकः शोणकवृक्षः, तयोः टुण्टुकः स्यात्। "टुण्टुकः शोणकाल्पयोः" इति मेदिनी॥२४॥ चित्रके नानावर्णे, क्लोम्नि बाह्वोर्मध्ये स्थानभेदे, तदुक्तम् "अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहिशिरामूलं तृष्णास्थानं मतं बुधैः" इति, तरौ वृक्षे, तिलकालके च तिलकम्। "तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" इति मेदिनी। "तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके। तिलकं रुचके क्लोम्नि" इति हैमः॥ गृहदारौ गृहदारुणि, समासप्रायवाचि समासबहुलवाक्ये, चकारात् खञ्जने फेने तरुस्कन्धे मायाबहुले उपघातके जने परिष्कारे च तण्डकः "तण्डकः खञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायाबहुलकेष्वपि" इति मेदिनी। "तण्डकस्तु समस्तपदजातके। तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि॥ फेनखञ्जनयोश्च" इति हैमः॥२५॥ सिह्लके वृकधूपाख्ये गन्धद्रव्ये, देशे देशविशेषे च तुरुष्कः। "तुरुष्कः सिह्लके म्लेच्छजातौ देशान्तरेऽपि च" इति मेदिनी। "तुरुष्कस्तु देशे श्रीवाससिह्लयोः" इति हैमः॥ प्राण्यङ्गे पृष्ठवंशाधोभागे, कटीभागे च, त्रितये त्रित्वसङ्ख्यायाम्, कूपाङ्गे कूपस्य नेमौ च त्रिकम्। "त्रिकं पृष्ठाधरे त्रये" इति मेदिनी। "त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये" इति हैमः॥ खदिरे वरुणद्रुमे वरुणवृक्षे च तिक्तशाकः। "तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे"

**दैत्ये ना कर्णधारे च तारकं दृशि भे न ना।द्विकौ काकचक्रवाकौ पृश्न्यां कुन्दे दलाढकः२७**
**नरको निरये दैत्ये नौवाहे स्यान्नियामकः।सभ्ये गुरौ च नवफलिका नवरजस्यपि ॥ २८ ॥**
**नालीकौ पद्मनाराचौ वृन्देऽपि पेटकोऽस्त्रियाम्।सौभाग्येऽपि पताका स्यात्पंकोऽस्त्री कर्दमांहसोः**
**पञ्चालिका वस्त्रकृतपुत्रिकागीतभेदयोः । मणिदोषे शिलाभेदे पुलको लोमहर्षणे ॥ ३० ॥**
**पर्यस्त्यामपि पल्यङ्कः प्रियको मृगनीपयोः । पुष्पकं कङ्कणेऽपि स्यात्पराको व्रतखड्गयोः ॥**
**चामरे ग्रन्थभेदे च विस्तरेऽपि प्रकीर्णकम् । सितच्छत्राब्जयोः पुण्डरीकं पुंसि तु दिग्गजे ॥**
**व्याघ्रे च कोषकारे च पाकौ पचनशावकौ । पुष्पलको गन्धमृगे कीलके क्षपणेऽपि च ॥**

इति मेदिनी । "तिक्तशाकस्तु पत्रसुन्दरे । वरुणे खदिरे" इति हैमः ॥ २६ ॥ दैत्ये तन्नामके असुरे कर्णधारे नाविके, दृशि नेत्रे, भे नक्षत्रे च 'तारकम्। तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमान् त्रातरि त्रिषु'' इति मेदिनी ॥ काकः प्रसिद्धः, चक्रवाकः स्वनामाख्यातः खगः, तयोः द्विकः । "द्विकः काके च कोके च" इति विश्वः । "द्विकः स्यात्काककोकयोः" इति हैमः । पृश्न्यां खर्वदुर्बलास्थिके, कुन्दे पुष्पवृक्षभेदे च दलाढकः । "दलाढकः स्वयञ्जाततिले पृश्न्यां च गैरिके । फेनखातकयोर्नागकेशरे च महत्तरे" इति मेदिनी । "दलाढकस्तु कुन्दे स्यात्करिकर्णशिरीषयोः । स्वयञ्जाततिले फेने खातके नागकेशरे । वात्यायां पृश्निकायां च गैरिके च महत्तरे" इति विश्वः ॥ २७ ॥ निरये पापानां दुःखभोगस्थानभेदे, दैत्ये असुरे च नरकः । "नरकः पुंसि निरये देवारातिप्रभेदयोः" इति मेदिनी ॥ नौवाहे पोतवाहे, नियन्तरि च नियामकः । "नियामकः कर्णधारे पोतवाहे नियन्तरि" इति मेदिनी॥सभ्ये सामाजिके, गुरौ नवरजसि नवजातरजोऽङ्गनायाम्, अपिशब्दात् नूतने रक्तपुनर्नवायां च नवफलिका । "नवफलिका स्त्री नव्ये नवजातरजोऽङ्गनायां च" इति मेदिनी॥ २८ ॥ पद्मं पद्मषण्डम् , नाराचः शरभेदः,तयोः नालीकः। "नालीकः शरशल्यास्त्रेऽप्यब्जषण्डे नपुंसकम्"इति मेदिनी । "नालीकं शरखण्डेऽब्जे नालीकः शरशल्ययोः" इति विश्वः । "नालीकोऽङ्गे शरे शल्ये नालीकं पद्मवर्धने" इति हैमः ॥ वृन्दे समूहे, अपिशब्दात् पुस्तकादीनां स्थापनार्थं वेत्रादिनिर्मिते पदार्थे समूहे च पेटकः।"पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति विश्वमेदिन्यौ । "पेटकस्त्रिषु वृन्देऽपि " इति कोषान्तरम् ॥ सौभाग्ये प्रियत्वे, अपिशब्दात् वंशोपरि देये त्रिकोणाकारे वस्त्रखण्डे नाटकाङ्गे अङ्के केतौ छन्दोग्रन्थोक्तलघुगुरुव्यक्तिज्ञानार्थं चक्रभेदे च पताका ।"पताका वैजयन्त्यां च सौभाग्यनाटकाङ्कयोः" इति मेदिनी । "पताकाऽङ्के ध्वजे केतौ सौभाग्ये नाटकांशके" इति हैमः ॥ कर्दमः जम्बालः, अंहः पापम् , तयोः पङ्कः । "पङ्कः कर्दमपापयोः" इति विश्वः । "पङ्कोऽघे कर्दमे" इति हैमः ॥ २९ ॥ वस्त्रकृतपुत्रिका वस्त्रेण कृता पुत्तलिका, गीतभेदः गानविशेषः, तयोः पञ्चालिका । "पञ्चालिका भवेद्वस्त्रपुत्रिकागीतिभेदयोः" इति विश्वः ॥ मणिदोषे मणिजातदोषे, शिलाभेदे पर्वतभेदे, लोमहर्षणे लोमोद्गमे च पुलकः । "पुलकः कृमिभेदे प्रस्तरभेदे च मणिदोषे । रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे" इति मेदिनी ॥ ३० ॥ पर्यस्त्यां शय्यायाम्, अपिशब्दात् मञ्चे पर्यङ्के वृष्यां च पल्यङ्कः। "पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च" इति मेदिनी ॥ मृगः हरिणः, नीपः कदम्बः, तयोः प्रियकः ।"प्रियकः प्रीतशालके । नीपे चित्रमृगे चालौ प्रियङ्गौ कुसुमेऽपि च"इति मेदिनी"प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि।प्रियङ्गौ चित्रहरिणे पीतचालतरावपि"इति हैमः ॥ कङ्कणे करभूषणे भूषणमात्रे वा, अपिशब्दात् कुबेरस्य विमाने नेत्ररोगभेदे रसाञ्जने लौहकांस्ये मृदङ्गारयोः शकस्त्र्यां कासीसे च पुष्पकम् । "पुष्पकं रीतिकानेत्ररोगयो रत्नकङ्कणे । कुबेरस्य विमाने च कासीसे च रसाञ्जने । लौहकांस्ये मृदङ्गारशकस्त्र्यां च नपुंसकम् ।" इति मेदिनी ॥ व्रतं पुण्यसाधनम् उपवासादिनियमभेदः द्वादशाहोपवाससाध्यः प्रायश्चित्तरूपो व्रतभेदो वा, "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । व्रतं पराको नाम" इति, खड्गः असिः,तयोः पराकः। "पराकस्तु व्रते खड्गे"इति मेदिनी ॥३१॥ चामरे चमरपुच्छकृतव्यजने, ग्रन्थभेदे विस्तरे, अपिशब्दात् विक्षिप्ते भिन्नजातीयैर्मिश्रिते अश्वे च प्रकीर्णकम् ।"प्रकीर्णकं ग्रन्थभेदे चामरे विस्तरे हये" इति विश्वः । "प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे" इति मेदिनी ॥ सितच्छत्रं श्वेतच्छत्रम् , अब्जं पद्मम्, तयोः, दिग्गजे अग्निकोणस्थे दिग्नागे ॥ ३२ ॥ व्याघ्रे कोषकारे शब्दादिसमूहकारके च पुण्डरीकम्।

रज्जौ कपर्दे राजीवे बीजकोशे वराटकः । वृन्दारकौ सुरश्रेष्ठौ गिरिमेघौ बलाहकौ ॥ ३४ ॥
पिञ्जे ना सिकताकर्णभूषाकन्यासु बालिका । शिवमल्ल्यां बकः कह्वे राज्ञि भट्टारकः सुरे॥३५॥
भूमिका रचनायां च मूर्त्यन्तरपरिग्रहे । मधुको वल्लिभेदे च बर्हिचन्द्रे च मेचकः ॥ ३६ ॥
हारभेदे माणवको बाले कुपुरुषे वटौ । मयूरकोऽपामार्गे च हंसभेदेऽपि मल्लिकः ॥ ३७ ॥
युतकं वस्त्रभेदे च यौतके संशयेऽपि च । यमकं संयमे शब्दालङ्कारे यमजे त्रिषु ॥ ३८ ॥
याज्ञिको याजके दर्भे बिले रोकं रुचौ पुमान् । राका दृष्टरजःकन्या कच्छपूर्णेन्दुपूर्णिमाः॥३९॥

"पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिङ्नागे कोषकारान्तरेऽपि च" इति मेदिनी॥पचनम् अन्नपचनम्, शावकः।शिशुः,तयोः पाकः"पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ.पचनेऽपि च" इति मेदिनी । "पाकः पचने शिशुदैत्ययोः" इति हैमः ॥ गन्धमृगे गन्धप्रधाने मृगविशेषे, कीलके स्तम्भे, गवां दोहनार्थं बन्धनस्तम्भे, गवां कण्डूयनार्थं स्तम्भे वा, क्षपणे निर्ग्रन्थे च, अपिशब्दात् संन्यासिनि च पुष्यलकः । "अथ पुष्यलको गन्धमृगे क्षपणकीलयोः" इति मेदिनी । क्वचित्तु "पुष्कलकः" इति पाठः । " स्मृतः पुष्कलको गन्धमृगे क्षपणकीलयोः" इति विश्वः॥३३॥ रज्जुः रश्मिः, कपर्दः कपर्दकः, राजीवं पद्मम्, बीजकोशः पद्मबीजाधारः, तत्र वराटकः । "वराटकः पद्मबीजकोशे रज्जौ कपर्दके" इति मेदिनी । "वराटकः स्थूलरज्जौ पद्मबीजे कपर्दके" इति विश्वः ।"वराटकानां दशकद्वयं यत्"इति लीलावती॥सुरः देवः, श्रेष्ठः अतिशयेन प्रशस्तः मुख्यो वा, तयोः वृन्दारकः "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु" इति मेदिनी ॥ गिरिः पर्वतः, मेघः जलधरः, तयोः बलाहकः । "बलाहको गिरौ मेघे दैत्यनागविशेषयोः" इति मेदिनी ॥ ३४ ॥ पिञ्जे बले, सिकता वालुका, कर्णभूषा कर्णालङ्कारविशेषः, कन्या दशवर्षा नारी, तत्र च बालिका । "अङ्गुरीकह्वीरवलये पुंसि बालिका । बालायां वालुकापत्रकाहले कर्णभूषणे" इति मेदिनी । "बालिका कर्णभूषणे । बालिका वालुका बाला पिञ्जोलायाम्" इति हैमः ॥ शिवमल्ल्यां बकवृक्षे, कह्वे च बकः । "बकस्तु बकपुष्पे स्यात् कह्वे शौदे च रक्षसि" इति मेदिनी ॥ राज्ञि नृपे, सुरे देवे च भट्टारकः । "भट्टारको नृपे नाट्यवाचि देवे तपोधने" इति मेदिनी ॥ ३५ ॥ रचनायां मूर्त्यन्तरपरिग्रहे "अन्यरूपैर्यदन्यस्य प्रवेशस्तत्र भूमिका" इत्युक्ते नाट्ये अभिनेयपात्रादिवेशान्तरग्रहणे, चकारात् ग्रन्थे वक्तव्यकथोद्घाते कक्षायां च भूमिका । "भूमिका रचनायां स्याद्वेशान्तरपरिग्रहे" इति मेदिनी । "भूमिका तु रचनायां रूपान्तरपरिग्रहे" इति हैमः ॥ वल्लिभेदे लताविशेषे, चकारात् यष्टिमधौ मधुपर्णीवृक्षे च मधुका । "मधुका मधुपर्ण्यां स्त्री" इति मेदिनी । "मधुयष्टिश्च मधुको वल्लिश्रीवदपक्षिणोः" इति हैमः ॥ बर्हिचन्द्रे मयूरचन्द्रके चकारात् अन्धकारे स्रोतोऽञ्जने मेघे श्यामवर्णे च मेचकः।"मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् ।यदुक्ते वाच्यवत् क्लीबं स्रोतोऽञ्जनान्धकारयोः" इति मेदिनी । " मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके" इति हैमः ॥ ३६ ॥ हारभेदे मुक्तावलिविशेषे, बाले कुपुरुषे कुत्सितपुरुषे नीचजने वा, वटौ ब्रह्मचारिणि च माणवकः । "माणवको हारभेदे बाले कुपुरुषे वटौ" इति मेदिनी ॥ अपामार्गे स्वनाम्ना ख्याते वृक्षे, चकारात् मयूरशिखावृक्षे च मयूरकः ।"मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः" इति मेदिनी । " मयूरकोऽप्यपामार्गे तुत्थके तु मयूरकम्"इति विश्वः॥हंसभेदे"धृतराष्ट्रः"इति ख्याते हंसविशेषे,अपिशब्दात् मल्लिकायां च मल्लिकः।"मल्लिको हंसभिद्यदि।मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः"इति मेदिनी॥३७॥वस्त्रभेदे स्त्रीवसनाञ्चले, यौतके विवाहकाले लब्धे धने,संशये सन्देहे,अपिशब्दात् युगे चरणाग्रे मैत्रीकरणे संश्रवे शूर्पाग्रे संयुक्ते च युतकम् । "युतकं संशये युगे । नारीवस्त्राञ्चले युक्ते चरणाग्रे च यौतके"इति मेदिनी ।"युतकं तु यौतके युग्मयुक्तयोः। संशये चरणाग्रे स्त्री वस्त्रभेदे पटाञ्चले"इति हैमः॥संयमे व्रताङ्गतया पूर्वदिनकर्तव्ये नियमभेदे इन्द्रियनिग्रहे वा, शब्दालङ्कारे स्वनामख्याते अलङ्कारविशेषे, तल्लक्षणमुक्तम्—"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" इति, यमजे एकदा एकत्र गर्भजातयोश्च यमकम् । "यमकं यमजे शब्दालङ्कारे पुंसि संयमे" इति मेदिनी । " यमको यमजे व्रते । यमकं वागलङ्कारे" इति हैमः ॥ ३८ ॥ याजके यागकर्तरि, दर्भे कुशे च

नीलवस्त्रेऽक्षितारायां लोचको निर्मितौ त्रिषु । नगरीशाखयोर्लङ्का करिण्यामपि बन्धकी॥४०॥
गुरावनाथे गरुडे जिने विघ्ने विनायकः । वृषाङ्कौ शिवभल्लातौ वञ्चकौ धूर्तफेरवौ ॥ ४१ ॥
वैदेहिको वाणिजके वैश्यायामपि शूद्रजे । वैलक्ष्याकार्ययोः क्लीबं व्यलीकं त्रिषु नागरे ॥४२॥
वाह्लीकं वाह्लिकं धीरहिङ्गुनोर्नाऽश्वदेशयोः। विपाकः परिणामेऽपि तिलकेऽपि विशेषकः॥४३॥
शङ्कुः कीलकसङ्ख्यास्त्रजलजन्तुषु दृश्यते । शिशुकः शिशुमारेऽपि शुकं ग्रन्थिशिरीषयोः॥

याज्ञिकः। "याज्ञिको याजके कुशे" इति विश्वः। "याज्ञिकः याजके च कुथे च" इति मेदिनी ॥ बिले छिद्रे गर्ते वा, रुचौ दीप्तौ च रोकम्। "तन्मे रोकं च शोकं च" इति स्मृतिः। "रोको दीप्तौ बिले रोकं नौकाक्रयणभेदयोः" इति विश्वः। "रोकस्तु क्रयभिद्दीप्त्यो रोकं ना विमले बिले" इति मेदिनी। "रोकं कृपणभेदे ना विमले च बिले चरे। "रोकोंऽशौ" इति हैमः॥ दृष्टरजःकन्या नवजातरजस्का कन्या, कच्छः जलप्रान्तः, पूर्णेन्दुः प्रतिपद्युक्ता पौर्णमासी, पूर्णिमा पूर्णचन्द्रयुक्ता तिथिः, तत्र च राका। "राका नद्यन्तरे कच्छे नवजातरजःस्त्रियाम्। सम्पूर्णेन्दुतिथौ" इति मेदिनी। "राका कच्छे दृष्टरजःकन्यायां सरिदन्तरे। पूर्णेन्दुपूर्णिमायां च" इति हैमः॥ ३९॥ नीलवस्त्रे नील्या रञ्जिते वस्त्रे, अक्षितारायां नेत्रमध्यस्थकनीनिकायाम्, निर्मितौ रचनायां च लोचकः। "लोचको मांसपिण्डेऽक्षितारकायां च कज्जले। ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः। निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि" इति मेदिनी। "लोचको नीलवाससि। कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे। निर्बुद्धौ कर्णिकामोचाज्यासु प्रश्लथचर्मणि" इति हैमः॥ नगरी स्वनामाख्याता पुरी, शाखा लता, तयोः लङ्का। "लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च" इति मेदिनी॥ करिण्यां हस्तिन्याम्, अपिशब्दात् पुंश्चल्यामसत्यां स्त्रियां च बन्धकी। "पुंश्चल्यां स्यात्तु बन्धकी" इति मेदिनी॥ ४०॥ गुरौ अनाथे अशरणे गरुडे जिने बुद्धे विघ्ने, तथा चात् गणेशे विजययुक्ते च विनायकः। "विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" इति मेदिनी॥ शिवः शङ्करः, भल्लातः स्वनामाख्यातवृक्षः, तयोः वृषाङ्कः। "वृषाङ्कः शङ्करे साधौ भल्लातकमहोक्षयोः" इति मेदिनी। "वृषाङ्कः साधुभल्लातशङ्करेषु महल्लके" इति विश्वः॥ धूर्तः खलः, फेरवः शृगालः, तयोः वञ्चकः। "वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके" इति मेदिनी॥ ४१॥ वाणिजके वणिग्जने, वैश्यायां शूद्रजे, अपिशब्दात् विदेहराजे जनके नृपे च वैदेहकः। "वैदेहिकः" अप्यत्र। "वैदेहिको वाणिजके शूद्राद्वैश्यासुतेऽपि च" इति मेदिनी॥ वैलक्ष्यं लज्जास्वभाववैलक्षण्यम्, अकार्यमपराधः, तयोः, नागरे च व्यलीकम्। "व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने। ना नागरे" इति मेदिनी। "व्यलीकं व्यङ्गवैलक्ष्याप्रियाकार्येषु पीडने" इति हैमः॥ ४२॥ धीरः पण्डितः, हिङ्गु रामठम्, तयोः, अश्वः तुरङ्गमः, देशः स्वनामाख्यातदेशभेदः, तयोश्च वाह्लीकं वाह्लिकं च। "वाह्लीकं वाह्लिकं धीरहिङ्गुनोः। द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे" इति मेदिनी। "वाह्लिकः। देशभेदेऽश्वभेदे च वाह्लिकं हिङ्गुकुङ्कुमम्" इति हैमः॥ परिणामे प्रकृतेरन्यथाभावे विकारे, कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे च, अपिशब्दात् पचने खेदे अर्थालङ्कारभेदे च विपाकः। "विपाकः पचने खेदे कर्मणो विसदृक्फले" इति मेदिनी। "विपाकः परिणामे च दुर्गतिस्वादुनोरपि" इति हैमः॥ तिलके ललाटकृते तिलके, अपिशब्दात् विशेषकर्तरि, "त्रिभिर्ज्ञेयं विशेषकम्" इत्युक्तेः एकवाक्यतापन्ने श्लोकत्रये च विशेषकः। "विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु" इति मेदिनी॥ "विशेषकः स्यात्तिलके विशेषावहकेऽपि च" इति हैमः॥ ४३॥ कीलकः गवां दोहनार्थं बन्धनस्तम्भः गवां कण्डूयनार्थं निहितः स्तम्भो वा, "अर्काङ्गुला तु सूच्यग्रा काष्ठा द्व्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेत्" इति, सङ्ख्या दशकोटिसङ्ख्या, अस्त्रं शल्यास्त्रम्, जलजन्तुः जलस्थो ग्राहादिप्राणिविशेषः, मत्स्यभेदो वा, तत्र च शङ्कुः। "शङ्कुः सङ्ख्यास्त्रयादोभित्कीलेशकलुषेषु ना" इति मेदिनी। शिशुमारे जलजन्तुभेदे, अपिशब्दात् बालके स्वल्पे च शिशुकः। "शिशुकः शिशुमारे स्याद्बालकोलूपिनोरपि" इति मेदिनी। "शिशुकः पादपे बाले शिशुमारे" इति हैमः॥ ग्रन्थिः ग्रन्थिपर्णः, शिरीषः स्वनामाख्यातो वृक्षः, शोनक-

कीरे रावणपात्रे ना वचाऽपि शतपर्विका । शल्कश्चूर्णेऽपि शूकस्तु स्यादनुक्रोशशृङ्गयोः॥४५॥
शिलाटको विलेपेऽट्टे शुल्को यौतकदानयोः॥श्वाविद्वृक्षौ च शल्लक्यौ मणौ खड्गे च सस्यकः॥
शीधौ च शीधुपाने च सरकोऽस्त्र्यथ जन्मनि । सूतकं पारदेऽप्यस्त्री सूचकौ खलकुक्कुरौ
युग्मे सङ्घाटिका कुट्टन्यां च गद्येऽपि हारकः । वाद्यभेदे हुडुक्कः स्याद्दात्यूहे च मदोत्कटे ॥
इन्दुलेखा गुडूच्यां च पूः सुखं स्वन्नभश्च खम् । गोमुखं लेपने वाद्यभाण्डे सर्पेऽपि दुर्मुखः ॥
त्रिशिखं स्यात्त्रिशूलेऽपि न्युङ्खः साम्नि मनोहरे । नखं शुक्तौ कररुहे कूर्मे पञ्चनखो गजे ५०

वृक्षश्च, तयोः शुकम् ॥ ४४ ॥ कीरे कीरपक्षिणि, रावणपात्रे च शुकः । "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । ग्रन्थिपर्णे शिरीषे च शुकं स्याच्छोणके क्वचित्" इति विश्वः ॥ वचा स्वनामाख्यातं द्रव्यम्, तत्र अपिशब्दात् कटुकायां दूर्वायां च शतपर्विका । "शतपर्विका दूर्वायां वच्रायामपि योषिति" इति मेदिनी ॥ चूर्णे पेषणजाते रजसि, धूलौ वा, अपिशब्दात् खण्डे वृक्षवल्कले मत्स्यत्वचि च शल्कः । "शल्कं तु शकले वल्के" इति मेदिनी ॥ अनुक्रोशः दया, शृङ्गं तीक्ष्णाग्रः, शिखा वा, तयोः शूकः । "शूकोऽस्त्री शृङ्गदययोः" इति मेदिनी ॥ ४५ ॥ विलेपे गात्रानुलेपनद्रव्ये, अट्टे प्रासादस्योपरि गृहे, प्राचीरोपरिस्थसैन्यगृहे[1] वा, तत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते इति प्राञ्चः, तयोः शिलाटकः । "शिलाटकः पुमानट्टे विलेपे परिकीर्तितः" इति मेदिनी॥यौतकं विवाहकाले लब्धं धनम्,दानं प्रसिद्धम्,तयोः शुल्कः।"शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी ॥ श्वावित् शल्यकम्, वृक्षः प्रसिद्धः, तयोः शल्लकी । "छत्रादिकाष्ठीशरयोः शल्लकी पशुवृक्षयोः" इति मेदिनी ॥ मणौ माणिक्यभेदे, खड्गे च सस्यकः । "सस्यको मणिभेदे" इति मेदिनी ॥ ४६ ॥ शीधौ इक्षुरसजाते मद्यभेदे च, "इक्ष्वोः पक्वरसैः सिद्धः शीधुरित्यभिधीयते" इति, शीधुपाने तन्मद्यपाने तत्पात्रे च सरकः । "सरकोऽस्त्री सीधुपाने सीधुपात्रेक्षुसीधुनोः" इति मेदिनी ॥ जन्मनि प्रसूताशौचे, पारदे रसराजे च, अपिशब्दात् अशौचमात्रे च सूतकम् । क्वचित्तु "सुतकम्" इति च । "ओतौ काके सूतकोऽस्त्री पारदे न द्वयोर्जनौ" इति मेदिनी ॥ खलः दुर्जनः, कुक्कुरः प्रसिद्धः, तयोः सूचकः । "सूचकः सविनद्रव्ये बोधके पिशुने शुनि" इति मेदिनी ॥ ४७ ॥ युग्मे युगले, कुट्टन्यां परपुरुषेण सह परस्त्रियाः समागमकारयित्र्याम्, चकारेण जलकण्टके च सङ्घाटिका । "सङ्घाटिका स्त्रियां युग्मे कुट्टन्यां जलकण्टके" इति मेदिनी ॥ गद्ये कथनीये, पद्यभिन्ने कविकृते अपादे पदसमूहे वा, अपिशब्दात् चौरे कितवे शाखोटकभेदे भाजकाङ्के हरणकर्तरि च हारकः । "हारकः कितवे चौरे गद्यविज्ञानभेदयोः" इति मेदिनी ॥ वाद्यभेदे, मृदङ्गादिवादनीयविशेषे दात्यूहे कालकण्ठके पक्षिभेदे, मदोत्कटे मदोद्घटे च हुडुक्कः ॥ "हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि" इति मेदिनी ॥४८॥ इति ककारान्ताः । अथ खान्तानाह ॥ गुडूच्यां स्वनामाख्यातायां लतायाम्, चकारात् चन्द्रकलायां तदंशनाम्न्यां सोमलतायां यमानिकायां च इन्दुलेखा । "इन्दुलेखाऽमृतासोमलताशशिकलासु च" इति मेदिनी ॥ पूः पुरम्, स्वः नाकः, तत्र च सुखम् ॥ "सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः" इति मेदिनी ॥ नभः आकाशः, तत्र, चकारात् सूर्ये इन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ संवेदने देवलोके शर्मणि च खम् । "खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्" इति मेदिनी ॥ लेपने 'लेप' इति ख्याते व्यापारे वाद्यभाण्डे च गोमुखम् ।"गोमुखं कुटिलाकारे वाद्यभाण्डे च लेपने । पुंसि मातलिपुत्रे च महादेवगणान्तरे" इति मेदिनी ॥ सर्पे नागभेदे, अपिशब्दात् अश्वे वानरे दैत्यभेदे अप्रियवादिनि च दुर्मुखः । "दुर्मुखः कपिभिन्नागभिदोर्ना मुखरे त्रिषु" इति मेदिनी ॥ ४९ ॥ त्रिशूले स्वनामाख्याते अस्त्रभेदे, अपिशब्दात् बिल्वे राक्षसभेदे मण्डलान्तरे शिखात्रयवति माणवकादौ च त्रिशिखम् । "त्रिशिखो राक्षसे क्लीबं त्रिशूले मण्डलान्तरे" इति मेदिनी ॥ साम्नि सामवेदाङ्गे, मनोहरे अतिप्रिये च न्युङ्खः । "न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेऽपि च" इति मेदिनी ॥ शुक्तौ जलजन्तुभेदे शंखे वा, कररुहे

---

१ प्राचीरो नाम--"गजैरभेद्या मनुजैरलङ्घ्याः प्राचीरखण्डा नृपतेर्भवन्ति" इत्यत्रोक्तः ।

**आदौ प्रधाने प्रमुखं वैशाखो मन्थमासयोः। काण्डे ना विशिखा रथ्या विशाखा भे गुहे पुमान्**
**लेखो देवेऽपि पङ्क्तौ स्त्री शिखा चूडाग्रयोरपि। शाखा वेदविभागेऽपि सखा मित्रसहाययोः॥५२॥**
**सुमुखस्ताक्ष्यर्पुत्रे च शोभनास्यगणेशयोः। सुमुखी शोभनास्याऽथापवर्गस्त्यागमोक्षयोः ५३॥**
**शरीरोपायाप्रधानेष्वङ्गं पुंभूम्नि नीवृति। सम्बोधनेऽङ्गाव्ययं स्यादयोगो विधुरेऽपि च॥५४॥**
**शपथेऽप्यभिषङ्गः स्यादनङ्गः खे स्मरे पुमान्। पूर्णत्वयत्नावाभोगावायोगो व्यापृतावपि॥५५॥**
**जङ्गमेङ्गितयोरिङ्गो नाट्य ईहामृगो वृके। फलं पूगस्य चोद्वेगमुत्सर्गो न्यायदानयोः॥ ५६॥**

नखे च **नखम्**। "नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्" इति मेदिनी॥ कूर्मे कच्छपे, गजे हस्तिनि च **पञ्चनखः**। "शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान्पञ्चनखेष्वाहुः" इति मनुः। "पञ्चनखो गजे कूर्मे" इति विश्वः॥ ५०॥ आदौ प्रथमे, प्रधाने श्रेष्ठे च **प्रमुखम्**। "प्रमुखः प्रथमे श्रेष्ठे" इति मेदिनी। "प्रमुखं प्रथमे मुख्ये" इति हैमः॥ मन्थः मन्थनदण्डः, मासः स्वनामाख्यातो मासः, तयोश्च **वैशाखः**। "वैशाखो मासभेदे स्यान्मन्थाने च प्रकीर्तितः" इति मेदिनी॥ काण्डे शरे तोमरे वा, रथ्या वीथी, तस्यां च **विशिखा**। "विशिखा तु खनित्र्यां च रथ्यानालिकयोरपि" इति मेदिनी। "विशिखा खनित्रिकायां रथ्यायां विशिखः शरे" इति हैमः॥ भे नक्षत्रे, गुहे स्कन्दे च **विशाखा** "विशाखस्तर्कके स्कन्दे स्त्रियामृक्षे कटिल्लके" इति मेदिनी। "विशाखो यावके स्कन्दे विशाखा भे कटिल्लके" इति हैमः॥ ५१॥ देवे सुरे, पङ्क्तौ सजातीयसन्ततौ, अपिशब्दात् लेखने लेख्ये आधारे पत्रे लिपौ च **लेखः**। चूडा मयूरशिखा मस्तकमध्यस्थकेशगुच्छो वा, अग्रः प्रधानः उत्तमो वा, तयोः, अपिशब्दात् अग्निज्वालायां च **शिखा**। "शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके। चूडामात्रे शिखायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी॥ वेदविभागे वेदस्य अंशे काण्डे वा, अपिशब्दात् पक्षान्तरे बाहौ द्रुमाङ्गे च **शाखा**। "शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः" इति मेदिनी॥ मित्रे स्नेहान्वितः, सुहृद् सहायः अनुकूलः, तयोश्च **सखा**। "सखा मित्रे सहाये ना वयस्यायां सखी मता" इति मेदिनी॥ ५२॥ ताक्ष्यर्पुत्रे गरुडसुते, शोभनास्यं सुवदनम्, गणेशः स्वनामाख्यातो देवः, तयोश्च, चकारात् पण्डिते शाकभेदे नागभेदे सितार्जके वर्वरे वनवर्वरिकायां मनोहरे च **सुमुखः**। "सुमुखस्ताक्ष्यर्तनये शाकनागप्रभेदयोः" इति मेदिनी॥ शोभनास्या सुप्रसन्नमुखी, तस्यां **सुमुखी**। इति खकारान्ताः॥ अथ गान्तानाह॥ त्यागः वितरणम्, मोक्षः निर्वाणम्, तयोः **अपवर्गः**। "स्यादपवर्गस्त्यागे मोक्षे कार्यावसानासाफल्ये" इति मेदिनी॥ ५३॥ शरीरं देहः, उपायः रिपुनिराकरणादीनां हेतूनां साधनम्, अप्रधानः प्रधानभिन्नः, तत्र, नीवृति स्वनामाख्याते देशे, जनपदे वा च **अङ्गम्**। "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति। क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवाति चान्तिके" इति मेदिनी॥ सम्बोधने सम्यग्ज्ञापने **अङ्ग**। "अङ्ग सम्बोधनेऽव्ययम्" इति विश्वः॥ विधुरे विश्लेषे, चात् कूटे योगाभावे कुयोगे वियोगे कठिनोद्यमे च **अयोगः**। "अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे" इति मेदिनी॥ ५४॥ शपथे सत्यताकरणाय दिव्यभेदकरणे, यथा "एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यात्" इत्यादिशपने, अपिशब्दात् पराभवे आक्रोशे व्यसने च **अभिषङ्गः**। "अभिषङ्गः पुँल्लिङ्गः पराभवाक्रोशशपथेषु" इति मेदिनी॥ खे आकाशे, स्मरे कन्दर्पे च **अनङ्गः**। नास्ति अङ्गमाकारो यस्य। "अनङ्गो मदनेऽनङ्गमाकाशमनसोरपि" इति मेदिनी॥ पूर्णत्वं परिपूर्णता, यत्न उत्साहः, तयोः **आभोगः**। "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि" इति मेदिनी॥ व्यापृतौ व्यापारयुक्ते, अपिशब्दात् गन्धमाल्योपहारे रोधसि च **आयोगः**। "आयोगो व्यापृतौ गन्धमाल्योपहाररोधसोः" इति मेदिनी॥ ५५॥ जङ्गमः गतिशक्तियुक्तः, इङ्गितम् अभिप्रायव्यञ्जकदैहिकचेष्टा, तयोः **इङ्गः**। "इङ्गः स्याद्भुद्भुते ज्ञाने जङ्गमेङ्गितयोरपि" इति मेदिनी॥ नाट्ये अलङ्कारशास्त्रलक्षिते नाटकभेदे, वृके कुक्कुराकारे हरिणघातके, व्याघ्रभेदे च **ईहामृगः**। "ईहामृगो वृके जन्तौ प्रभेदे रूपकस्य च" इति विश्वः। "ईहामृगस्तु पुंसि स्यात्कोकरूपकभेदयोः" इति मेदिनी॥ पूगस्य फलं क्रमुकफलम्, तत्र, चकारात् व्याकुलचित्ततायां विरहजन्ये दुःखोद्गमे भये निश्चले स्तिमिते शीघ्रगामिनि च **उद्वेगम्**। "उद्वेगं क्रामुके फले। उद्वेगोऽप्युद्भ्राहुलकोद्वेजनाकोद्गमेषु च" इति

सामान्येऽप्युपरागस्तु ग्रहेऽर्केन्द्वोश्च दुर्नये । हस्तच्छेदे तु सस्यानां कटभङ्गो नृपात्यये॥५७॥
कथाप्रसङ्गो वातूले विषवैद्येऽपि वाच्यवत् । देशे कलिङ्गो धूम्याटे कलिङ्गं कौटजे फले॥५८॥
त्रिषु दक्षे विदग्धे च खड्गौ निस्त्रिंशगण्डकौ।स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौः पुमान्॥
स्त्री बाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु भूम्नि च । वैधव्ये नृपनाशे च च्छत्रभङ्गः प्रकीर्तितः ६०
अश्वगन्धाऽपि तुरगी तुङ्गौ पुन्नागसोच्छ्रयौ।दीर्घाध्वगः स्याद् उष्ट्रेऽपि निषङ्गः सङ्गतूणयोः
नागः श्रेष्ठेभसर्पेषु क्लीबं सीसकरङ्गयोः । वृक्षे स्यात्पुंसि पुन्नागः पतङ्गः शलभे रवौ ॥ ६२ ॥
काकोदुम्बरिकायां स्त्री फल्गुस्त्रिषु निरर्थके । पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम्॥६३॥
भोगः सुखे धने चाहेः शरीरफणयोरपि । भगं वैराग्ययोनीच्छाज्ञानैश्वर्येषु चेष्यते ॥ ६४ ॥

विश्वः ॥ न्यायः नयोपायः युक्तिमूलकदृष्टान्तभेदो वा, दानं त्यागः, तयोः, सामान्ये व्याकरणे सम्यगभिधाने, अपिशब्दात् योगभेदे अपानवायोर्व्यापारे च उत्सर्गः । "उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः" इति मेदिनी॥५६॥ अर्केन्द्वोः ग्रहे रविचन्द्रयोर्ग्रहणे, ग्रहणं तु राह्वाधिष्ठितभूमिच्छायया चन्द्रस्य चन्द्रमण्डलेन च रवेर्मण्डलाच्छादनमिति सिद्धान्तः, दुर्नये दुर्नीतौ, चकारात् ग्रहकल्लोले व्यसने च उपरागः ।"उपरागस्तु पुंसि स्याद्राहुग्रासेऽर्कचन्द्रयोः । दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते" इति मेदिनी ॥ सस्यानां हस्तच्छेदे धान्यानां करच्छेदने, नृपात्यये सैन्यभङ्गद्वारा राजविनाशे च कटभङ्गः ।"कटभङ्गस्तु सस्यानां हस्तच्छेदे नृपात्यये" इति मेदिनी ॥ ५७ ॥ वातूले वातरोगयुक्ते उन्मत्ते वा, विषवैद्ये, अपिशब्दात् गोष्ठिवचने च कथाप्रसङ्गः । "कथाप्रसङ्गेन जनैरुदीरितात्" इति भारविः । "कथाप्रसङ्गो वातूले विषवैद्येऽपि वाच्यवत्" इति मेदिनी ॥ देशे स्वनामाख्याते देशे, "जगन्नाथात्पूर्वभागे कृष्णातीरान्तरं शिवे । कलिङ्गदेशः संप्रोक्तः" इति, "उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ" इति रघुः, धूम्याटे पक्षिभेदे, कौटजे फले इन्द्रयवे, कुटजवृक्षे वा च कलिङ्गम्। ॥ ५८ ॥ दक्षे शूरे, विदग्धे पण्डिते निपुणे वा, चकारेण पूतिकरञ्जे प्लक्षवृक्षे शिरीषवृक्षे योषिति त्रिवृतायां च कलिङ्गः । "कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति । न द्वयोः कौटजफले महिलायां तु योषिति" इति मेदिनी ॥ निस्त्रिंशः असिः, गण्डकः गण्डकशृङ्गः, तद्वान् गण्डकपशुर्वा, तयोः खड्गः । "खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके" इति मेदिनी ॥ स्वर्गे स्वर्लोके, वज्रे हीरके, रश्मौ किरणे, बलीवर्दे वृषे ॥ ५९ ॥ बाणे, रोहिण्याम्, दृष्टौ दिशि, वाचि भूमौ अप्सु जले, चकारात् पशौ चन्द्रे वायौ सूर्ये ऋषभनामौषधे सौरभेय्यां च गौः ।"गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च" इति मेदिनी ॥ वैधव्ये पतिविरहे, नृपनाशे च, चकारात् अस्वातन्त्र्ये च छत्रभङ्गः । "छत्रभङ्गोऽपि वैधव्येऽस्वातन्त्र्यनृपनाशयोः" इति मेदिनी ॥ ६० ॥ अश्वगन्धा स्वनामाख्यातः क्षुद्रवृक्षभेदः तत्र, अपिशब्दात् हययोषिति च तुरगी । "तुरगी चाश्वगन्धायाम्" इति मेदिनी ॥ पुन्नागः स्वनामाख्यातो वृक्षः, सोच्छ्रयः उच्चतायुक्तः, तयोः तुङ्गः । "तुङ्गः पुन्नागनगयोस्तुङ्गः स्यादुन्नतेऽन्यवत्" इति विश्वः ॥ उष्ट्रे स्वनामाख्याते पशुभेदे, अपिशब्दात् लेखहारे वाह्यरथे च दीर्घाध्वगः ।"दीर्घाध्वगः पुमानुष्ट्रे लेखहारेऽपि भेद्यवत्" इति मेदिनी ॥ सङ्गः सम्बन्धः, विषयादिरागो वा, "ध्यायतो विषयान् पुंसः सङ्गस्तेषु प्रजायते" इति गीता, तूणः तुणीरः, तयोश्च निषङ्गः । "निषङ्गः सङ्गे तूणे च"इति मेदिनी ॥ ६१ ॥ श्रेष्ठः प्रधानः, इभः हस्ती, सर्पः अहिः, सीसकः स्वनामाख्यातो धातुभेदः, रङ्गः धातुभेदः, एषु नागः । "नागं नपुंसके रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूरचारिषु तोयदे ॥ नागकेशरपुन्नागनागदन्तकमुस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थिते" इति मेदिनी ॥ वृक्षे स्वनामाख्याते पुष्पप्रधाने वृक्षभेदे, पुन्नागः । "पुन्नागस्तु सितोत्पले । जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे" इति मेदिनी ॥ शलभे कीटविशेषे, रवौ सूर्ये च पतङ्गः । "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः" इति मेदिनी ॥ ६२ ॥ काकोदुम्बरिकायां स्वनामाख्यातायामौषधजात्याम्, निरर्थके निष्प्रयोजने च फल्गुः । "फल्ग्वसारेऽभिधेयवत् । नदीभेदे मलप्वां स्त्री" इति मेदिनी । "फल्गुः प्रोक्ता मलप्वां च निःसारे फल्गु वाच्यवत्" इति विश्वः ॥ पालने रक्षणे, अभ्यवहारे आहारे, पण्ययोषितां निर्वेशो वेश्यानां भाटकादिरूपे वेतने ॥ ६३ ॥ सुखे धने अहेः—शरीरफणयोः सर्पशरीरे

तरङ्गभेदयोर्भङ्गो भङ्गा सस्ये शणाह्वये । एकदेशांशयोर्भागो भृङ्गो धूम्याटकेऽपि च ॥ ६९ ॥
भुजङ्गो भुजगे षिड्गे जामदग्न्यतटौ भृगू । मृगोऽन्विष्टौ च मार्गस्तु मासान्वेषणवर्त्मसु ६६॥
योगश्चारेऽपूर्वलाभे सूत्रे विश्रब्धघातिनि । उपाये सङ्गतौ ध्यानौषधसन्नाहयुक्तिषु ॥ ६७ ॥
नृत्ये रणे खले रागे रङ्गः क्लीबे त्रपुण्यपि । रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु ॥६८॥
चक्रे रथाङ्गं कोके ना रक्ताङ्गो मङ्गलेऽपि चाऽव्यक्ते साङ्ख्ययोदिते लिङ्गं स्थाणौ शेफसि लक्षणे
पुंस्त्वादौ च वराङ्गं तु गुडत्वचि गजे पुमान् । वल्गुश्छागेऽपि वेगस्तु महाकालफलेऽपि च ॥
जलोत्क्षेपे समुत्सर्गे शृङ्गमुत्कर्षचिह्नयोः । शार्ङ्गं धनुर्विष्णुधनुः सम्भोगो रतभोगयोः ॥

सर्पफणे च, अपिशब्दात् माने ज्योतिषोक्तग्रहाणां तत्तद्राशिस्थितौ च भोगः । "भोगः सुखे धने चाहेः शरीरफणयोरपि । पालनेऽभ्यवहारे च योषिदादिभृतावपि" इति मेदिनी ॥ वैराग्यं विषयवासनाराहित्यम्, योनिः स्त्रीणामसाधारणचिह्नम् , इच्छा अभिलाषः, ज्ञानं सामान्यविशेषरूपं बुद्धिमात्रम्, ऐश्वर्यम् अणिमाद्यष्टविधम् , तेषु, चकारात् सूर्ये यशसि श्रियां माहात्म्ये यत्ने धर्मे मोक्षे सौभाग्ये कान्तौ चन्द्रे च भगम् । "भगं स्त्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । महात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ" इति मेदिनी ॥ ॥ ६४ ॥ तरङ्गः ऊर्मिः, भेदः अन्यतो विशेषः, तयोः भङ्गः । शणाह्वये सस्ये "शणः" इति ख्याते द्रव्ये भङ्गा । "भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम्" इति मेदिनी ॥ एकदेशः अवयवः प्रतीको वा, अंशः विभागः राशित्रिभागो वा, तयोः भागः । "भागो रूपार्धके भाग्यैकदेशयोः" इति मेदिनी ॥ धूम्याटके कलिङ्गविहगे, अपिशब्दात् भ्रमरे भृङ्गराजे जारे भृङ्गारे भृङ्गरोले च भृङ्गः । "भृङ्गो धूम्याटषिड्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि" इति मेदिनी ॥ ६५ ॥ भुजगे सर्पे, षिड्गे कामुके विटे वा, च भुजङ्गः । "भुजङ्गोऽहौ च षिड्गे च" इति मेदिनी ॥ जामदग्न्यः मुनिभेदः, तटं नद्यादेः कूलम्, तयोः भृगुः । "भृगुः पुमान् । मुनौ हरा तटे शुक्रे" इति मेदिनी ॥ अन्विष्टौ अन्वेषणे, चकारात् पशुमात्रे हरिणे गजभेदे अश्विन्यवधिके पञ्चमे नक्षत्रे याचने यज्ञभेदे मृगमदे मकरराशौ च मृगः । "मृगः पशौ कुरङ्गे च कारनक्षत्रभेदयोः । अन्वेषणे च याञ्चायां मृगी तु वनितान्तरे" इति मेदिनी ॥ मासः मार्गशीर्षः, अन्वेषणं पर्येषणम्, वर्त्म पथः, तत्र मार्गः । "मार्गो मृगमदे मार्गशीर्षे चान्वेषणाध्वनोः" इति मेदिनी ॥ ६६ ॥ चारे ग्रहादीनां गमने, अपूर्वलाभे अपूर्वार्थसम्प्राप्तौ, सूत्रे विश्रब्धघातिनि विश्वस्तघातके, उपाये सामादौ, सङ्गतौ मेलने, ध्याने चित्तस्यैकतानप्रवाहे, औषधे भेषजे, सन्नाहे युक्तौ न्यायादौ, च योगः । "योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगेऽपि विष्कम्भादिषु भेषजे । विश्रब्धघातके द्रव्योपायसन्नाहनेष्वपि" इति मेदिनी॥६७॥नृत्ये नाट्यस्थाने नृत्ये च, रणे युद्धभूमौ, खले दुर्जने, रागे, त्रपुणि स्वनामाख्याते धातुभेदे, अपिशब्दात् टङ्कने खदिरसारे च रङ्गः। "रङ्गो ना रागे नृत्ये रणक्षितौ। अस्त्री त्रपुणि" इति मेदिनी ॥ क्लेशादिके रागादिक्लेशवस्तुनि, रक्ते रञ्जने, मात्सर्ये परगुणद्वेषे, लोहितादिषु रक्तादिषु वर्णेषु, आदिशब्दात् तद्विशिष्टे लाक्षादौ च रागः।"रागस्तु मात्सर्ये लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी॥६८॥ चक्रे रथावयवे, कोके चक्रवाके च रथाङ्गम्।"रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे" इति मेदिनी॥मङ्गले भूमिसुते, अपिशब्दात् कुङ्कुमे कम्पिल्ले प्रवाले जीवन्त्यां मञ्जिष्ठायां च रक्ताङ्गः । "रक्ताङ्गस्तु महीसुते । कम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधरियोः" इति मेदिनी ॥ व्यक्ते स्फुटे, साङ्ख्योदित साङ्ख्योक्ते प्रधाने, स्थाणौ शिवमूर्तिभेदे, शेफसि मेहने, पुंस्त्वादौ लक्षणे पुरुषस्य असाधारणे चिह्ने च लिङ्गम्।"लिङ्गं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्" इति मेदिनी ॥ ६९ ॥ गुडत्वचि "दारचिनि" इति ख्याते, गजे हस्तिनि च वराङ्गम् । "वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि" इति मेदिनी ॥ छागे अजे, अपिशब्दात् मनोहरे चारुणि सुन्दरे च वल्गुः । "वल्गुः स्याच्छागले पुंसि सुन्दरे चाभिधेयवत्" इति मेदिनी ॥ महाकालफले स्वनामाख्याते फलविशेषे, "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इति तन्त्रम् ॥ ७० ॥ जलोत्क्षेपे समुत्सर्गे मूत्रविष्ठानिःसरणे, अपिशब्दात् प्रवाहे जीवे रेतसि न्यायोक्ते संस्कारभेदे च

ओघः स्याद् द्रुतनृत्ये च काचिघौ काञ्चनोन्दुरू । निदाघौ स्वेदतापौ च प्रतिघो रोषघातयोः ॥
परिघो योगभेदेऽपि मेघो वारिदमुस्तयोः । महार्घस्तु महामूल्ये पुंसि लावकपक्षिणि ।
पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि ॥ ७३ ॥
प्रतिमापूजयोरर्चा क्रौञ्चः पक्ष्यद्रिभेदयोः । कूर्चमस्त्री भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि ॥ ७४ ॥
इभ्यां स्त्री गुरुपुत्रे ना केशे शुष्कव्रणे कचः।देशभेदेऽपि काञ्ची स्यात्तथा स्थासकतर्कयोः ७५
चर्चिकायां च चर्चा स्यात्त्वक् स्त्री चर्मगुडत्वचोः । वामने पामरे नीचो नमुचिर्दितिजे स्मरे७६
मरीचिर्मुनिभेदेऽपि चौरवह्नी मलिम्लुचौ । कक्कोलेऽपि च मारीचो मोचा शाल्मलिरम्भयोः७७

वेगः। "वेगो जवे प्रवाहे च महाकालफलेऽपि च" इति मेदिनी ॥ उत्कर्षः अतिशयः प्रभुत्वं वा, चिह्नं लक्षणम्, तयोः शृङ्गम् । "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोः" इति मेदिनी ॥ धनुः धनुर्मात्रम्, विष्णुधनुः विष्णोश्चापम्, तत्र शार्ङ्गम् । "शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने" इति मेदिनी ॥ रतः सुरतः, भोगः धनम्, तयोः सम्भोगः। "सम्भोगस्तु पुमान् भोगे सुरते जिनशासने" इति मेदिनी ॥ ७१ ॥ इति गकारान्ताः ॥ अथ घान्तानाह ॥ द्रुतनृत्ये, चकारात् समूहे जलवेगे उपदेशे परम्परायां च ओघः । "ओघो वेगे जलस्य च । वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः" इति मेदिनी ॥ काञ्चनं स्वर्णम्, उन्दुरुः मूषिकः, तयोः काचिघः । "काचिघः काञ्चनेऽपि स्याच्छेमण्डे मूषिकेऽपि च" इति मेदिनी ॥ स्वेदः घर्मजलम्, तापः सन्तापः, तयोः, चकारात् उष्णे घर्मे घर्मकाले ( ज्येष्ठाषाढमासयोः ) च निदाघः। "निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि" इति मेदिनी ॥ रोषः क्रोधः, घातः प्रहारः मरणं वा, तयोः प्रतिघः । "प्रतिघः प्रतिघाते स्यात्क्रोधेऽपि परिकीर्तितः" इति मेदिनी ॥ ७२ ॥ योगभेदे विष्कम्भावधिके ऊनविंशतितमे योगे, अपिशब्दात् परिघातास्त्रे लोहमुद्गरादौ लोहमुखे लगुडे मुद्गरे शूले काचघटे गृहे च परिघः।"परिघो योगभेदे स्याद्विशेषेऽर्गलघातके" इति मेदिनी ॥ वारिदः जलधरः, मुस्तः मुस्तकः, तयोः मेघः। "मेघो मुस्ताजलदयोः पुमान्" इति मेदिनी ॥ महामूल्ये अनर्घमूल्ये, लावकपक्षिणि स्वनामाख्याते पक्षिभेदे च महार्घः। "महार्घस्तु महामूल्ये त्रिषु स्याल्लावके पुमान्" इति मेदिनी ॥ पृक्कायां स्वनामाख्याते औषधभेदे, शीघ्रे विलम्बाभावे, कृष्णागुरुणि कालागुरुणि, अपिशब्दात् वीरणमूले निःसारे लाघवगुणान्विते ह्रस्वे मनोहरे व्याकरणोक्ते लघुसंज्ञके अकारादौ वर्णे ज्योतिषोक्तेषु पुष्यादिनक्षत्रेषु लघ्ववस्थायां च लघुः । "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधे तु स्त्री" इति मेदिनी ॥ ७३ ॥ इति घान्ताः॥ अथ चान्तानाह ॥ प्रतिमा प्रतिरूपम्, पूजा अर्चनम्, तयोः अर्चा। "अर्चा पूजाप्रतिमयोः" इति मेदिनी ॥ पक्षी कुररपक्षी बकभेदो वा, अद्रिभेदः पर्वतविशेषः, तयोः क्रौञ्चः। "क्रौञ्चो द्वीपविशेषे स्यात्पक्षिपर्वतभेदयोः" इति मेदिनी ॥ भ्रुवोर्मध्ये भ्रूमध्यस्थिते लोमोच्चये, श्मश्रु प्रसिद्धम्, कैतवं दम्भः, तयोश्च, अपिशब्दात् मयूरपुच्छे कुशमुष्टौ अङ्घ्रौ शीर्षे आसनभेदे तन्त्रोक्ते बीजभेदे च कूर्चम् । " कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे " इति मेदिनी ॥ ७४ ॥ इभ्यां हस्तिन्याम्, गुरुपुत्रे बृहस्पतितनये, केशे चिकुरे, शुष्कव्रणे च कचः । " कचः केशे गुरोः सुते । बन्धे शुष्कव्रणे पुंसि करिण्यां तु कचा स्त्रियाम् " इति मेदिनी ॥ देशभेदे-"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका" इत्यादौ नगरविशेषे, स्थासकः स्त्रीकटीबद्धः अलङ्कारः, तर्कः, प्रसिद्धः तयोः, अपिशब्दात् गुञ्जायां च काञ्ची । " काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च " इति मेदिनी । क्वचित् " काञ्चिः " इत्यपि पाठः ॥७५॥ चर्चिकायां चन्दनादिना देहलेपने, चकारात् विचारे चिन्तायां च चर्चा । " चर्चा चिन्तास्थासकयोश्चर्चिकायां च योषिति " इति मेदिनी ॥ चर्म प्रसिद्धम्, गुडत्वक् इक्षुवल्कलम्, तयोः त्वक् । " त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषयोः " इति मेदिनी ॥ वामने ह्रस्वे, पामरे मूर्खे खले वा च नीचः । " नीचः पामरे वामनेऽपि च " इति मेदिनी ॥ दितिजे असुरभेदे, स्मरे पुष्पकार्मुके च नमुचिः । " नमुचिस्तु पुमान्दैत्यभेदे कुसुमकार्मुके"इति मेदिनी॥७६॥मुनिभेदे सप्तर्षीणामन्तरे ब्रह्मणो मानसे ज्येष्ठे पुत्रे मुनिविशेषे, अपिशब्दात्

**कुक्कुरे रतनारीचः शीत्कारे वरयोषिताम् । केतुग्रहे तु विकचो वीचिः सुखतरङ्गयोः ॥ ७८ ॥**
**स्वल्पेऽपि सारिकायां च वचा ग्रीष्मानलौ शुची । सूची नृत्यप्रभेदे च व्यधनीशिखयोरपि ७९**
**वाराही चीरिका कच्छा कच्छोऽनूपे द्रुमान्तरे। पिच्छा स्त्री भक्तमण्डेऽपि लाङ्गूले पिच्छमस्त्रियाम्**
**पद्मधन्वन्तरी चाब्जावण्डजः खगमीनयोः । निचुलेऽप्यम्बुजोऽजस्तु ब्रह्मविष्णुस्मरेष्वपि ८१**
**स्यादङ्गजः स्मरे केशे पुत्रे रक्ते नपुंसकम् । उत्साहकार्त्तिकावूर्जौ कम्बोजो देशशङ्खयोः ८२**
**नखे करञ्जे करजः कुब्जो न्युब्जे द्रुमान्तरे । खनौ सुरागृहे गञ्जो गुञ्जा पटहकृष्णले ॥ ८३॥**

कृपणे किरणे च **मरीचिः**।"मरीचिर्मुनिभेदे ना गभस्तावनपुंसके"इति मेदिनी॥चौरः प्रसिद्धः,वह्निः अग्निः, तयोः **मलिम्लुचः** ।"मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान् "इति मेदिनी॥कक्कोले गन्धद्रव्यभेदे, अपिशब्दात् तारकाराक्षसीपुत्रे रावणानुचरे राक्षसभेदे याचकब्राह्मणे च **मारीचः** ।"मारीचो राक्षसभेदो कक्कोले याजकद्विजे" इति मेदिनी॥शाल्मलिः प्रसिद्धः, रम्भा कदली, तयोः **मोचा** । "मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः" इति मेदिनी ॥ ७७ ॥ कुक्कुरे शुनि, वरयोषितां शत्कारे स्त्रीणां रतिकालवर्तिनि ध्वनिविशेषे च **रतनारीचः** । "रतनारीचो नारीणां शीत्कारे च शुनि स्मरे" इति मेदिनी ॥ केतुग्रहे स्वनामाख्याते नभश्चरे **विकचः** । "विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत्" इति मेदिनी ॥ सुखं प्रसिद्धम्, तरङ्गः ऊर्मी, तयोः स्वल्पे अत्यल्पे च, अपिशब्दात् अवकाशे किरणे च **वीचिः** । "वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः" इति मेदिनी ॥ ७८ ॥ सारिकायां स्वनामाख्याते पक्षिणि, चकारात् कीरे वचौषधे च **वचा** । "वचः कीरे वचौषधौ । सारिकायां च" इति मेदिनी ॥ ग्रीष्मः प्रसिद्धः, अनलः वह्निः, तयोः **शुचिः** । "शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी ॥ नृत्यप्रभेदे नृत्यविशेषे, व्यधनी सीवनसाधनी, शिखा प्रसिद्धा तयोश्च, अपिशब्दात् स्वनामाख्याते लौहमयपदार्थे च **सूची** । "सूचिः" अप्यत्र । "सूची तु सीवनद्रव्येऽप्यञ्जिकाभिनयान्तरे" इति मेदिनी ॥ ७९ ॥ **इति चकारान्ताः** ॥ अथ छान्तानाह ॥ वाराह्यां वराहयोषिति, चीरिकायां स्वनामाख्याते कीटभेदे च **कच्छा** । अनूपे जलप्रायदेशे, द्रुमान्तरे पुन्नागवृक्षे च **कच्छः** । "कच्छः स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरकायां च योषिति" इति मेदिनी ॥ भक्तमण्डे भक्तस्य निस्रावे, अपिशब्दात् मयूरपुच्छे चूडायां शाल्मलिवृक्षे पूगे परम्परायां कोषे मोचायां पङ्क्तौ शिंशपावृक्षे कोकिलायाम् अश्वचरणरोगे च **पिच्छा** । लाङ्गूले च **पिच्छम्** ।"पिच्छा पूगच्छटाकोशमोचशाल्मलिवेष्टके । भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये । स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हिचूडयोः" इति मेदिनी ॥ ८० ॥ **इति छान्ताः** ॥ अथ जान्तानाह ॥ पद्मं पङ्कजम्, धन्वन्तरिः विक्रमराजसभास्थः स्वनामाख्यातः पण्डितः, तयोः **अब्जः** । "अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ हिमकिरणे । क्लीबं पद्मे" इति मेदिनी ॥ खगः पक्षी, मीनः मत्स्यः, तयोः **अण्डजः** । "अण्डजो मृगनाभौ स्यात्सरटेऽहौ खगे झषे" इति मेदिनी ॥ निचुले हिज्जलवृक्षे, अपिशब्दात् वेतसे पद्मे चन्द्रे शङ्खे च **अम्बुजः** । "अम्बुजो निचुले पुंसि कमले तु नपुंसकम्" इति मेदिनी ॥ ब्रह्मा विधाता, विष्णुः हरिः, स्मरः कामदेवः, तत्र च, अपिशब्दात् हरे छागे मेषराशौ सूर्यवंशयिराजभेदे दशरथपितरि जन्मरहिते च **अजः** । "अजश्छागे हरिब्रह्मधातुस्मरहरे नृपे" इति मेदिनी ॥ ८१ ॥ स्मरे कामदेवे, केशे चिकुरे, पुत्रे रक्ते रुधिरे च **अङ्गजः**। "अङ्गजं रुधिरेऽनङ्गकेशपुत्रमदेषु ना । "इति मेदिनी ॥ उत्साहः उद्यमः, कार्त्तिकः स्वनामाख्यातो मासः, तयोः **ऊर्जः** । "ऊर्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेऽपि च" इति मेदिनी ॥ देशः स्वनाम्ना प्रसिद्धः, "पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्वतः । कम्बोजदेशः" इति, शङ्खे शङ्खभेदे च **कम्बोजः** । "कम्बोजो हस्तिभेदेऽपि शङ्खभेदविशेषयोः" इति मेदिनी ॥ ८२ ॥ नखे व्याघ्रनखादिगन्धद्रव्ये, करञ्जे स्वनामाख्याते वृक्षविशेषे च **करजः**।"करजं स्याद्व्याघ्रनखे करञ्जनखयोः पुमान्"इति मेदिनी ॥ न्युब्जे अधोमुखे कुब्जे, "हृदयं यदि वा पृष्ठमुन्नतः क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्" इत्युक्तलक्षणरोगवति, द्रुमान्तरे अपामार्गे च **कुब्जः** । खनौ आकरे भूविदारणे च, सुरागृहे मदिरागृहे च **गञ्जः** । "गञ्जः

जघन्यजोऽनुजे शूद्रे जलजं शङ्खपद्मयोः । चिह्नशेफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम् ८४
नीरजं कमले कुष्ठे पिञ्जा हिंसाहरिद्रयोः । भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्ये च पक्षिणि ॥८५॥
बुधैः ख्यातो भारद्वाजो द्रोणाचार्ये मुनावपि । भृङ्गराजः खगौषध्योर्लङ्घने मुनिभेषजम् ८६
अगस्त्ये च हरीतक्यां रुजा स्याद्रोगभङ्गयोः । मुस्तेऽपि वनजो बीजं रेतस्तत्त्वार्थहेतुषु ८७॥
व्याजः शाठ्येऽपदेशे च स्वेदरक्तात्मजाः स्वजाः।निसर्गे सहजः पुंसि सहोत्थे वाच्यलिङ्गकः॥८८
सन्नद्धसम्भृतौ सज्जौ हिमजा पार्वती शची । अज्ञस्त्रिषु जडे मूर्खे कृतज्ञः कुक्कुरेऽपि च ८९॥
संज्ञा सूर्यप्रियायां च सर्वज्ञः शङ्करे जिने । अरिष्टं सूतिकागारे तक्रेऽपि च पुमांस्त्वयस्॥९०॥

स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम्'' इति मेदिनी ॥ पटहः ढक्कावाद्यम्, कृष्णला गुञ्जा, तयोः गुञ्जा । ''गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ'' इति मेदिनी ॥ ८३ ॥ अनुजे कनिष्ठभ्रातरि, शूद्रे चतुर्थे वर्णे च जघन्यजः । ''जघन्यजः कनीयसि वृषले'' इति मेदिनी ॥ शङ्खः स्वनामाख्यातः समुद्रजातः पदार्थः, पद्मं कमलम्, तयोः जलजम् । ''जलजं कमले शङ्खे'' इति मेदिनी ॥ चिह्नं लाञ्छनम्, शेफः शिश्नम्, पताका वंशदण्डोपरिस्थितं चतुष्कोणाकारं वस्त्रखण्डम्, तासु, खट्वाङ्गे नरपञ्जरे ईशायुधविशेषे च, अपिशब्दात् शौण्डिके सर्पे च ध्वजः ॥ ''ध्वजः स्यात् शौण्डिके पुमान् । न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः'' इति मेदिनी ॥ ८४ ॥ कमले पद्मे, कुष्ठे कुष्ठौषधे च नीरजम् । ''नीरजं कुष्ठपद्मयोः'' इति मेदिनी ॥ हिंसा वधः, हरिद्रा स्वनामाख्यातः ओषधिभेदः, तयोः पिञ्जा । ''पिञ्जा तूलहरिद्रयोः । बले क्लीबे वधे पुंसि त्रिषु'' इति मेदिनी ॥ गुरोः पुत्रे बृहस्पतिपुत्रे, व्याघ्राटाख्ये पक्षिणि विघ्राटविहगे, चकारात् गोत्रप्रवर्तके मुनिभेदे च भारद्वाजः ॥ ८५ ॥ द्रोणाचार्ये अगस्त्यमुनौ च, अपिशब्दात् वनकार्पास्यां च भारद्वाजः । ''भार्द्वाजी''अप्यत्र । ''भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे । भार्द्वाजी वनकार्पास्यां ना द्रोणऋषिभेदयोः'' इति मेदिनी ॥ खगः पक्षी, ओषधी फलपाकान्तत्रीहियवादिः, तयोः भृङ्गराजः। ''अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे'' इति मेदिनी ॥ लङ्घने आहाराभावे ॥ ८६ ॥ अगस्त्ये स्वनामाख्याते मुनौ, हरीतक्यां च मुनिभेषजम् । ''मुनिभेषजमागस्त्ये हरीतक्यां च लङ्घने'' इति मेदिनी ॥ रोगः व्याधिः, भङ्गः भेदः खण्डो वा, तयोश्च रुजा । ''रुजा रोगे च भङ्गे'' इति मेदिनी ॥ मुस्ते मुस्तकभेषजे, अपिशब्दात् पद्मे वनसूरणे अश्वगन्धायां गन्धपत्रायां वनकार्पास्यां मुद्गपर्ण्यां वनजातमात्रे च वनजः। ''वनजा मुद्गपर्ण्यां ना मुस्तके क्लीबमम्बुजे'' इति मेदिनी ॥ रेतः शुक्रम्, तत्त्वार्थः तत्त्वावधानम्, हेतुः कारणम्, तत्र च बीजम् । ''बीजमङ्कुरकारणे । हेतौ तत्त्वावधाने च शुक्रे'' इति मेदिनी ॥ ८७ ॥ शाठ्ये शठतायाम्, अपदेशे कारणान्तरेण प्रवृत्तस्य कारणान्तरेणोद्भावनरूपे च व्याजः । ''व्याजः शाठ्येऽपदेशे'' इति मेदिनी । ''व्याजः शाठ्यापदेशयोः'' इति विश्वः ॥ स्वेदः घर्मजलं पाकभेदो वा, रक्तः रुधिरः, आत्मजः पुत्रः, तत्र च स्वजः ।''स्वजः प्रस्वेदपुत्रयोः । क्लीबं रक्ते'' इति मेदिनी ॥ निसर्गे स्वभावे स्वरूपे वा, सहोत्थे सहोदरे च सहजः ।''सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत्'' इति मेदिनी॥८८॥ सन्नद्धः कृतसन्नाहः, सम्भृतः सम्यक् पोषितः, तयोः सज्जः । ''सज्जः स्यात्सन्नद्धे सम्भृते त्रिषु'' इति मेदिनी॥ पार्वती दुर्गा, शची इन्द्राणी, तयोः हिमजा ।''हिमजा तु शचीगौर्योः पुंसि मैनाकपर्वते'' इति मेदिनी ॥ इति जकारान्ताः॥ अथ ञान्तानाह ॥ जडे इष्टानिष्टानभिज्ञे, मूर्खे ज्ञानशून्ये मूढे च अज्ञः । ''अज्ञस्तु जडमूर्खयोः'' इति विश्वः ॥ कुक्कुरे शुनि, अपिशब्दात् कृतोपकारज्ञातरि प्रत्युपकारे च कृतज्ञः ।''कृतज्ञः कुक्कुरे पुंसि मर्यादिन्याभिधेयवत्'' इति मेदिनी ॥ ८९ ॥ सूर्यप्रियायां सूर्यपत्न्याम्, चात् चेतनायां बुद्धौ आख्यायां हस्ताद्यैरर्थसूचने गायत्र्यां पीतकाष्ठे कालीयके गन्धद्रव्ये च संज्ञा । ''संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः । अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति'' इति मेदिनी॥ शङ्करे शिवे, जिने बुद्धे च सर्वज्ञः । ''सर्वज्ञः । शिवबुद्धयोः'' इति मेदिनी ॥ इति ञान्ताः ॥ अथ टान्तानाह ॥ सूतिकागारे सूतिकागृहे, तक्रे चतुर्थांशजलयोगेन मथिते

काके निम्बे च लशुने गर्त्ते कूपे खलेऽवटः। अत्यर्थक्षौमयोरट्टः कृताविष्टं प्रिये त्रिषु ॥ ९१ ॥
केशटः शोणके विष्णौ कूपीटमुदरे जले। पुंश्चले कुण्डकीटः स्याज्जाराच्च ब्राह्मणीसुते॥९२॥
समये च क्रियाकारे किलिञ्जशरयोः कटः। कोटिः सङ्ख्याऽपि करटो वाद्यभाण्डकुविप्रयोः॥
कुलीरे कर्कटो राशौ कृष्टिः कर्षे बुधे पुमान्।अप्रियेऽपि कटुः कुम्भे कुटो ना भवने द्वयोः९४
सुरायां स्त्री कीकटस्तु निःस्वे देशे मितम्पचे। खेटः सिङ्घाणके हीने गृष्टिर्धेन्वौषधीभिदोः९५
सूकरे पुंसि घृष्टिः स्यात्स्पर्द्धाघर्षणयोः स्त्रियाम्। घोण्टा तु बदरे पूगे देहांशे वर्णने चटुः९६॥
निःश्वासे दशनोच्छिष्टश्चुम्बे दन्तच्छदेऽपि च। परिमाणमुदोर्दिष्टिर्दिष्टः कालोपदिष्टयोः॥९७॥

दध्नि,॥९०॥काके वायसे, निम्बे स्वनामाख्याते वृक्षे,लशुने च,अपिशब्दात् निपुणे वृषभासुरे अचलभेदे कङ्कपक्षिणि फेणिलवृक्षे अशुभे मरणचिह्ने चक्षुर्जले मद्ये च अरिष्टम्। "अरिष्टो लशुने निम्बे फेणिले काककङ्कयोः। अरिष्टमशुभे तक्रे सूतिकागार आसवे॥ शुभे मरणचिह्ने चारिष्टमादेशिते त्रिषु" इति मेदिनी॥ गर्ते भूमिच्छिद्रे, कूपे स्वनामख्याते जलाधारे, खले नीचे अधमे च अवटः। "अवटः स्यात्खले गर्ते कूपे कुहकजीविनि" इति मेदिनी॥ अत्यर्थः अतिशयः, क्षौमः अतसीवल्कलजातं वस्त्रम्, तयोः अट्टः। "अट्टं भक्ते च शुष्के ना क्षौमेऽत्यर्थे गृहान्तरे" इति मेदिनी॥ कृतौ पुरुषप्रयत्ने कर्त्तृव्यापारे वा,अपरे तु"एकाग्निकर्मभवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते॥अग्निहोत्रं तपः सत्यं वेदानां चार्थपालनम्। आतिथ्यं वैश्वदेवं च प्राहुरिष्टम्" इत्युक्तलक्षणे धर्मकार्ये च वदन्ति, प्रिये वल्लभे च इष्टम्। "इष्टमाशंसनेऽपि स्यात्पूजिते प्रेयसि त्रिषु। सप्ततन्तौ पुमान् क्लीबं संस्कारे क्रतुकर्मणि" इति मेदिनी॥९१॥ शोणके शोणकवृक्षे, विष्णौ च केशटः। "केशटो हर्यजौ कणे" इति मेदिनी॥ उदरे कुक्षौ, जले तोये च कूपीटम्। "कूपीटमुदरे तोये" इति मेदिनी॥ पुंश्चले असति पुरुषे, जाराच्च ब्राह्मणीसुते जारात् ब्राह्मणीजाते पुत्रे च कुण्डकीटः। "कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे। जारजब्राह्मणीपुत्रदासीकामुकयोरपि" इति विश्वः॥ ९२॥ समये काले, क्रियाकारे क्रियाकारके, किलिञ्जः नडादिरचितम् आसनम्, शरः बाणः, तयोश्च कटः। "कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे। समये गजगण्डे च" इति मेदिनी॥ सङ्ख्या शतलक्षमितसङ्ख्या, करटो गजगण्डः काको वा, तयोः, वाद्यभाण्डः तूर्यभाण्डः, कुविप्रो गर्हितब्राह्मणः, तयोश्च, अपिशब्दात् धनुषोऽग्रभागे वस्तुमात्रस्याग्रभागे प्रकर्षे संशयस्यालम्बने वादे निर्णयार्थं कृते पूर्वपक्षे च कोटिः। "कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः" इति मेदिनी। "कोटी" इत्यप्यत्र॥ ९३॥ कुलीरे जलजन्तुभेदे, राशौ मेषादितश्चतुर्थे राशौ च कर्कटः। "कर्कटो विहगान्तरे। राशिभेदे कुलीरे स्त्री वालुङ्क्यां शाल्मलीफले" इति मेदिनी॥ कर्षे षोडशमाषके माने तन्मिते स्वर्णे वा, बुधे पण्डिते च कृष्टिः। "अथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान्" इति मेदिनी॥ अप्रिये प्रियशून्ये, अपिशब्दात् दूषणे दुष्टकार्ये रसभेदे चम्पके चीनकर्पूरे पटोले कटुकीलतायां च कटुः। "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि। नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके॥ त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च" इति मेदिनी॥ कुम्भे घटे, भवने गृहे,॥ ९४॥ सुरायां च कुटः। "कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे। कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके" इति मेदिनी॥ निःस्वे निर्धने, देशे मगधदेशे, मितम्पचे कृपणे च कीकटः। "कीकटः कृपणे निःस्वे त्रिषु पुम्भूम्नि नीवृति" इति मेदिनी॥ सिङ्घाणके कफे, हीने अधमे च खेटः। "खेटः कफे ग्रामभेदे चर्मण्यस्त्रवति त्रिषु" इति मेदिनी॥ धेनुः सकृत्प्रसूता गौः। औषधीभिद् बदरानामा औषधीविशेषः, तयोः गृष्टिः। "अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियाम्" इति मेदिनी॥ ९५॥ सूकरे वराहे, स्पर्धा पराभिभवेच्छा संहर्षो वा, घर्षणं वस्तुद्वयस्य एकतः स्पर्शः, तयोश्च घृष्टिः। "घृष्टिः स्त्री वर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ" इति मेदिनी॥ बदरे स्वनामाख्याते वृक्षभेदे, पूगे क्रमुके च घोण्टा। "घोण्टा तु बदरीपूगवृक्षयोरपि योषिति" इति मेदिनी॥ देहांशे उदरे, वर्णने प्रियवाक्ये च चटुः। "चटुश्चाटौ पिचिण्डेऽथ व्रतिनामासने पुमान्" इति मेदिनी॥ ९६॥ निःश्वासे मुखना-

धाराटौ चातकहयौ कपाटेऽपि च निष्कुटः । कोटरेऽप्यथ पट्टः स्यात्फलके नृपशासने ॥९८॥
प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम् । पर्कटी प्लक्षवृक्षे च पूगादेश्च नवे फले॥९९॥
वटी त्रिषु गुणे पुंसि न्यग्रोधे च कपर्दके । बर्बटयौ व्रीहिभिद्वेश्ये नटौ भरतकामुकौ ॥१००॥
मोरटं गोर्नवे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः । म्लिष्टं म्लाने कुवचने मर्कटी शूकशिम्ब्यपि॥१०१॥
लाटोंऽशुके च देशे च व्युष्टं कल्ये त्रिषूषिते । पथि वास्तुनि वाटः स्याद्विकटं विकृतं बृहत् ॥
वर्कराटः कटाक्षे च स्त्रीणां स्तननखक्षते । भद्रप्रेषणयोर्विष्टिर्वर्णाटौ कामिगायनौ ॥ १०३ ॥
विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च।पाश्वलौहे श्रुतिकटः प्रायश्चित्तभुजङ्गयोः॥१०४॥

साभ्यां निर्गते वायौ, चुम्बे अधरादिचुम्बने, दन्तच्छदे च दशनोच्छिष्टः । "रेवतीदशनोच्छिष्टपरिपूतपुटे" इति माघः । "दशनोच्छिष्टः पुंसि स्यान्निःश्वासाधरचुम्बयोः" इति मेदिनी ॥ परिमाणं लाङ्गूलप्रस्थादिभिर्द्रव्यस्य परिच्छेदः, मुद् हर्षः, तयोः दिष्टिः । "दिष्टिर्मुत्परिमाणयोः" इति मेदिनी ॥ कालः प्रसिद्धः, उपदिष्टः उपदेशदाता, तयोः दिष्टः।"दिष्टं दैवे पुमान्काले"इति मेदिनी॥९७॥चातकः पक्षिविशेषः,हयः अश्वः,तयोः धाराटः। "धाराटश्चातकाश्वयोः" इति मेदिनी ॥ कपाटे द्वारावरणेन वातरोधके स्वनामाख्याते काष्ठादौ, कोटरे वृक्षस्थगह्वरे, अपिशब्दात् गृहसमीपस्थे उपवने क्षेत्रे राज्ञाम् अन्तःपुरे च निष्कुटः । "निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः" इति मेदिनी ॥ फलके अस्त्रभेदे, नृपशासने राजाज्ञायां च पट्टः । "पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे तु राजादिशासनान्तरपीठयोः" इति मेदिनी ॥ ९८ ॥ प्रत्याख्याते निराकृते दूरीकृते वा, प्रेषिते कृतप्रेषणे च प्रतिसृष्टम् । "प्रतिसृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत्" इति मेदिनी ॥ प्लक्षवृक्षे स्वनामाख्याततरुभेदे, पूगादेः क्रमुकादेः नवे पले नूतने फले च पर्कटी । "पर्कटी नूतनफले पूगादेः प्लक्षपादपे" इति मेदिनी ॥ ९९ ॥ गुणे गोलाकारे पदार्थे, न्यग्रोधे वटतरौ, कपर्दके वराटके च वटी । "वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः" इति मेदिनी ॥ व्रीहिभिद् व्रीहिभेदः राजमाषो वा, वेश्या पण्ययोषित्, तयोश्च बर्बटी क्वचित् "बर्वटी" इति पाठः । "बर्बटी पण्ययोषायां व्रीहिभेदेऽपि योषिति" इति मेदिनी ॥ भरतः नाटकादिदृश्यकाव्याभिनयकर्ता मुनिः, कामुकः मैथुनकामनातिशयवान्, तयोः नटः । "नटी नलीषधौ स्त्री स्याच्छैलूषाशोकयोः पुमान्" इति मेदिनी ॥ १०० ॥ गोर्नवे सप्तरात्रोषिते क्षीरे, अङ्कोटः पीतवर्णसारः गन्धयुक्तपुष्पः दीर्घकण्टकयुक्तः "रक्तवर्णफल" इति ख्यातो वृक्षः तस्य पुष्पम्, इक्षुमूलं प्रसिद्धम्, तयोश्च मोरटम् । "मोरटं तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः । सप्तरात्रात्परक्षीरे मूर्विकायां तु मोरटा" इति मेदिनी ॥ म्लाने मलिने ग्लानियुक्ते वा, कुवचने गर्हितवचने अविस्पष्टवाक्ये वा च म्लिष्टम् । "म्लिष्टं त्रिष्वव्यक्तवाचि म्लाने" इति मेदिनी ॥ शूकशिम्बी कपिकच्छूः तस्याम्, अपिशब्दात् अपामार्गे अजमोदायां करञ्जभेदे वानरयोषिति च मर्कटी । "अथ मर्कटी । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः" इति मेदिनी ॥ १०१ ॥ अंशुके वस्त्रे, देशे स्वनामाख्याते देशभेदे, चकारात् जीर्णालङ्कारे विदग्धपुरुषे च लाटः । "लाटो देशान्तरे शुके" इति मेदिनी ॥ कल्ये प्रभाते, उषिते पर्युषिते व्युष्टम् । "व्युष्टं कल्ये त्रिषूषिते" इत्येव मेदिनी ॥ पथि मार्गे, वास्तुनि वास्तुभूमौ च वाटः। "वाटो मार्गे वृतिस्थाने स्यात्कुटीवास्तुनोः स्त्रियाम्" इति मेदिनी ॥ विकृतं विकारयुक्तम्, बृहत् विशालम् , तत्र च विकटम् । "विकटः सुन्दरे प्रोक्तो विशालविकारयोरपि" इति विश्वः ॥ १०२ ॥ कटाक्षे अपाङ्गदृष्टौ, स्त्रीणां नारीणां स्तननखक्षते पयोधरयोः भर्तुर्दन्तनखक्षते, चकारात् तरुणसूर्यकिरणे च वर्कराटः । "वर्कराटः कटाक्षे स्यात्तरुणादित्यरोचिषि । नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते" इति मेदिनी ॥ भद्रं मङ्गलम्, प्रेषणं प्रेरणम्, तयोः विष्टिः । "विष्टिः कर्मकरे भद्रे प्रेषणे वेतनेऽपि च" इति विश्वः ॥ कामी कामवान् पुरुषः, गायनः गानोपजीवी, तयोः वर्णाटः । "वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने" इति मेदिनी ॥ १०३ ॥ अद्रौ पर्वतभेदे, लवणे लवणविशेषे, षिड्गे परस्त्रीषु लोलुपे, मूषिके उन्दुरौ, खदिरे स्वनामाख्याते वृक्षे, अपिशब्दात् जारे शृङ्गाररसनायकानुचरे धूर्ते नारङ्गवृक्षे च विटः। "विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च"इत्येव मेदिनी॥

स्फुटिः स्फोटे च कर्कट्यां हृष्टः प्रतिहतेऽपि च। वैश्याद्द्विजन्मजेऽम्बष्ठः पाठायूथिकयोः स्त्रियाम्
काष्ठा कालेऽपि कोष्ठस्तु स्वकीयेऽप्यथ सुध्वनौ।ग्रीवादेशेऽपि कण्ठः स्यात्कुष्ठं रोगौषधीभिदोः॥
दात्यूहे कालकण्ठः स्याच्छिवखञ्जनयोरपि। ज्येष्ठो मासि च वृद्धे च ज्येष्ठा च गृहगोधिका॥
अम्ललोण्यां दन्तशठा ना जम्बीरकपित्थयोः। प्रकोष्ठौ बाहुगेहांशौ वरिष्ठं मरिचेऽपि च॥
ताम्रे चोरुतरे चाऽथ मध्यस्थखलयोः शठः। शोठोऽलसे च मूर्खे च सूत्रकण्ठो द्विजन्मनि॥
कपोतविहगेऽपि स्यात्प्रश्न्यां च प्रसभे हठः। प्राण्यङ्गकोषयोरण्डं कुष्माण्डौ फलभिद्गणौ॥११०

पाञ्चलौहे सुवर्ण रजतं ताम्रं रङ्गं नागं तथैव च।पाञ्चलौहमिति प्रोक्तम्" इति ख्याते,प्रायश्चित्तं पापक्षयसाधनत्वेन विधि-बोधितं कर्म चान्द्रायणादि,तथा चाहुः प्राञ्चः-"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्राय-श्चित्तमिति स्मृतम्" इति, भुजङ्गः अहिः, तयोश्च श्रुतिकटः। केचित्तु"श्रुतिकटुः"इति पठन्ति।"अथ श्रुतिकटः पाञ्चलौहेऽहौ पापशोधने " इति मेदिनी॥ १०४॥ स्फोटे पादस्फोटरोगे, कर्कट्यां स्वनामाख्यातफले च स्फुटिः। " स्फुटिर्योषित्पादस्फोटामयेऽपि च। निर्भिन्नकर्कटीसस्ये " इति मेदिनी॥ प्रतिहते प्रतिघाते, अपि-शब्दात् प्रीते जातहर्षे जातरोमाञ्चे विस्मिते च हृष्टः। " हृष्टो रोमाञ्चितेऽपि च। जातहर्षे प्रहसिते विस्मितेऽप्य-भिधेयवत् " इति मेदिनी॥ इति टकारान्ताः॥अथ ठान्तानाह॥ वैश्यायां वैश्यकन्यायां द्विजन्मजे विप्रात् जाते सङ्कीर्णवर्णे, पाठायां यूथिकायां च अम्बष्ठः। " अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च " इति मेदिनी॥ १०५॥ काले अष्टादशनिमेषात्मके काले, अपिशब्दात् दिशि दारुहरिद्रायां स्थितौ पर्यवसानभूमौ उत्कर्षे सीमायां च काष्ठा। " काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्थानमात्रे दिशि स्त्री च दारुणि स्यान्नपुंस-कम् " इति मेदिनी॥ स्वकीये आत्मीये, अपिशब्दात् गृहमध्ये उदरमध्ये धान्यादिस्थापने कुशूले च कोष्ठः। " कोष्ठः कुशूले चात्मीये मध्ये कुक्षेर्गृहस्य च " इति मेदिनी॥ सुध्वनौ सुन्दररावे, ग्रीवादेशे ग्रीवापुरोभागे, अपिशब्दात् मदनवृक्षे समीपे होमकुण्डाद्बाह्येऽङ्गुलिमितस्थाने च कण्ठः। " कण्ठो गले सन्निधाने ध्वनौ मदनपादपे " इति मेदिनी॥ रोगः स्वनामाख्यातरोगविशेषः, औषधिभिद् पुष्करम्, तयोः कुष्ठम्। " कुष्ठं रोगे पुष्करेऽस्त्री " इति मेदिनी॥ १०६॥ दात्यूहे स्वनामाख्यातपक्षिणि, शिवः नीलकण्ठः, खञ्जनः स्वना-माख्यातो विहगः तयोश्च, अपिशब्दात् पीतसारे मयूरे कलविङ्के च कालकण्ठः। "कालकण्ठस्तु दात्यूहे कल-विङ्के च खञ्जने। मयूरे पीतसारे च स्यात्खण्डपरशौ पुमान् " इति मेदिनी॥ मासि चैत्रावधिके तृतीये मासि, वृद्धे अतिवृद्धे, चकारात् श्रेष्ठे अग्रजे च ज्येष्ठः। " ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान् " इति मेदिनी॥ गृहगोधिका स्वनामाख्याता " टिकटिकी " इति प्रसिद्धा तस्याम्, चकारात् ज्येष्ठभगिन्यां वयोज्येष्ठायां ज्येष्ठस्य पत्न्यां गङ्गायाम् अलक्ष्म्याम् अश्विन्यवधिके अष्टादशे नक्षत्रे च ज्येष्ठा। " ज्येष्ठा तु गृहगोधाख्य-जन्तुनक्षत्रभेदयोः " इति मेदिनी॥ १०७॥ अम्ललोण्याम् " अमरुल " इति ख्याते लताभेदे चाङ्गेर्यां वा, जम्बीरः प्रसिद्धः,कपित्थः स्वनामाख्यातो वृक्षः, तयोश्च दन्तशठा। " स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके। नागरङ्गेऽपि च पुमान्स्याच्चाङ्गेर्यां तु योषिति " इति मेदिनी॥ बाहुः कूर्परस्याऽधोभागस्थो मणिबन्धपर्य-न्तो हस्तावयवः, गेहांशः गृहद्वारपिण्डः, तयोः प्रकोष्ठः। "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च। भूपक-क्षान्तरेऽपि स्यात् " इति मेदिनी॥ मरिचे स्वनामाख्याते वृक्षे॥ १०८॥ ताम्रे स्वनामाख्याते लोहे, उरुतरे अतिशयमहति, अपिशब्दात् तित्तिरिविहगे च वरिष्ठम्। " वरिष्ठं मरिचेऽपि च। ताम्रे क्लीबं तित्तिरौ ना वरोरुतरयोरपि " इति मेदिनी॥ मध्यस्थः मध्यस्थपुरुषः, खलः धूर्तः, तयोः शठः। " शठो मध्यस्थ-पुरुषे धूर्तधुस्तूरयोरपि " इति मेदिनी॥ अलसे क्रियामन्दे, मूर्खे ज्ञानविरहिते च शोठः। " शोठो मूर्खेऽलसे ऽपि च " इति मेदिनी॥ द्विजन्मनि विप्रे॥ १०९॥ कपोतविहगे स्वनामाख्यातपक्षिणि, अपिशब्दात् खञ्ज-रीटे च सूत्रकण्ठः। " सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः " इति मेदिनी॥ प्रश्न्यां कुम्भिकायाम्, प्रसभे बलात्कारे च हठः। " हठः स्यात्प्रसभे प्रश्न्याम् " इति मेदिनी॥ इति ठकारान्ताः॥

कुण्डं खातोखयोर्जारजे ना कुण्डी कमण्डलौ । सिंहोक्तौ स्त्री विषे क्ष्वेडः पशौ क्रोडो न नोरसि खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः । गण्डः कपोले पिटके श्रेष्ठे गण्डकयोगयोः ११२ चण्डौषधिः खरश्चण्डो दण्डौ सैन्यार्कपार्श्वगौ । व्यथा कृपा च पीडे द्वे पाण्डुः कुन्तीपतौ सिते पिण्डः सान्द्रे गृहांशेऽङ्गे पण्डः षण्डे मतौ स्त्रियामू। स्तम्बे शस्ते प्रकाण्डोऽस्त्री वरण्डो वदनामये समूहे चान्तरावेद्यां मण्डः स्यात्सारपिच्छयोः । एरण्डे मस्तुनि क्लीबे मार्तण्डौ खगदंष्ट्रिणौ ॥ राहौ दैत्यान्तरे मुडो मूर्ध्न्यस्त्री मुण्डिते त्रिषु । रण्डा स्याद्विधवौषध्योर्वितण्डा शाकभिद्यपि ॥

अथ डान्तानाह ॥ प्राण्यङ्गं पुंसोऽवयवः, कोषः पाक्षिडिम्बः, तयोः अण्डम् । फलभिद् स्वनामाख्यातफलविशेषः, गणः शिवस्य गणदेवताभेदः, तयोः कुष्माण्डः । "कुष्माण्डकः" अप्यत्र "कुष्माण्डी" अप्यत्र । "कुष्माण्डयुमायां स्त्री पुंसि कर्कारौ च गणान्तरे । भ्रूणान्तरे" इति मेदिनी ॥ ११० ॥ खातः गर्तः जलाशयो वा, उखा स्थाली, तयोः कुण्डम् । "कुण्डमग्न्यालये मानभेदे देवजलाशये" इति मेदिनी ॥ जारजे जीवति भर्तरि जारात् जाते पुत्रे कुण्डः । कमण्डलौ संन्यासिनां जलपात्रभेदे च कुण्डी । "कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्" इति मेदिनी ॥ सिंहोक्तौ सिंहनादे, विषे वत्सनाभविषे गरलमात्रे वा च क्ष्वेडः । "क्ष्वेडो ध्वनौ कर्णामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति" इति मेदिनी ॥ पशौ शूकरे, उरसि अश्वानामुरसि भुजान्तरे वा क्रोडः । "क्रोडः शनौ शूकरे ना नं पुमानङ्करक्षसोः" इति मेदिनी ॥ १११ ॥ शकले एकभागे, इक्षुविकारः खण्डशर्करा, मणिदोषः माणिक्यसञ्जातदोषः, तयोश्च खण्डः । "खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः" इति मेदिनी ॥ कपोले हस्तिकपोले कपोलमात्रे वा, पिटके वंशपत्रादिनिर्मिते पात्रभेदे, श्रेष्ठे गण्डकः स्वनामाख्यातः पशुः अवच्छेदो वा, योगः ज्योतिषोक्तविष्कम्भादियोगभेदः तयोश्च गण्डः ।"गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे" इति मेदिनी॥ ११२ ॥ चण्डौषधिः तिन्तिडीवृक्षः, खरः तीक्ष्णः तयोः चण्डः । "चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः" इति मेदिनी ॥ सैन्यः सेनासमुदायः, अर्कपार्श्वगः सूर्यानुचरः, तयोः दण्डः । "दण्डोऽस्त्री लगुडे पुमान् । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थनयोरपि । सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्विके" इति मेदिनी ॥ व्यथा दुःखम्, कृपा दया, तयोः पीडा । "पीडा कृपाशिरोमालापमर्दसरलद्रुषु" इति मेदिनी ॥ कुन्तीपतौ कुन्ती युधिष्ठिरादिमाता शूरसेनराजस्य पृथुनाम्नी कन्या तस्याः पतिः चन्द्रवंशीयनृपतिः तत्र, सिते श्वेतवर्णे च पाण्डुः । "पाण्डुर्ना नृपतौ सिते" इति मेदिनी ॥ ११३ ॥ सान्द्रे संहते, गृहांशे गृहैकदेशे च, अङ्गे देहैकदेशे च पिण्डः ।"पिण्डो गोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि ॥ ओड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनामयोः" इति मेदिनी ॥ षण्डे नपुंसके, मतौ बुद्धौ च पण्डः । "पण्डः षण्डे धियि स्त्री स्यात्" इति मेदिनी ॥ स्तम्बे वृक्षस्य मूलादारभ्य शाखान्ते भागे, शस्ते शंसनीये च प्रकाण्डः । "प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः । शस्ते" इति मेदिनी ॥ वदनामये मुखरोगभेदे ॥ ११४ ॥ समूहे राशौ, अन्तरावेद्यां मातङ्गयुद्धार्थं मध्यवेदौ च वरण्डः । "वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः" इति मेदिनी ॥ सारं नवनीतं जलं वा, पिच्छः मयूरपुच्छः, तयोः, एरण्डे स्वनाम्ना ख्याते वृक्षे, मस्तुनि दधिमण्डे च मण्डः । "मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाऽस्थास्त्रियां सारपिच्छयोः" इति मेदिनी ॥ खगः सूर्यः विहगो वा, दंष्ट्री शूकरः, तयोः मार्तण्डः । "मार्तण्डस्तपने क्रोडे" इति विश्वः । "मार्तण्डः क्रोडसूर्ययोः" इति मेदिनी ॥ ११५ ॥ राहौ राहुग्रहे, दैत्यान्तरे दैत्यभेदे, मूर्ध्नि मस्तके, मुण्डिते केशच्छेदिते च मुण्डः । "मुण्डो दैत्यान्तरे राहौ मूर्धमुण्डितयोरपि" इति विश्वः । "मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु । मुण्डा मुण्डीरिकायां स्यात् स्त्रियामस्त्री तु मूर्धनि" इति मेदिनी ॥ विधवा मृतपतिका स्त्री, ओषधी मूषिकपर्णी, तयोः रण्डा । "रण्डा मूषिकपर्ण्यां च विधवायां च योषिति" इति मेदिनी ॥ शाकभिदि कलम्बीशाके, अपिशब्दात् स्वपक्षाव्यवस्थापनेन परपक्षमात्रनिराकरणे

**शिखण्डौ तु शिखाबर्हौ शुंडा करिकरः सुरा। आषाढो व्रतिनां दंडे मासे मलयपर्वते ॥११७॥**
**विचेष्टबालिशौ मूढौ राढा स्याद्दीप्तिदेशयोः।षण्डकञ्चुकिनौ षण्ढौ समूढः पुञ्जिते नवे॥११८॥**
**भुग्नेऽनुपप्लुतेऽप्येष वाच्यलिङ्ग उदीर्यते। अरुणो भास्करेऽनूरौ माञ्जिष्ठाऽतिविषाऽरुणा ११९**
**त्रिष्वारक्ते व्याकुलेऽथ सूक्ष्मे व्रीह्यन्तरेऽप्यणुः।कीलकाग्राश्रिसीमासु स्यादाणिवदणिर्द्वयोः ॥**
**अभीक्ष्णं तु भृशे नित्ये स्यादिन्द्राणीन्द्रयोषिति। स्त्रीबन्धे सिन्धुवारे च चक्षुर्दर्शनमीक्षणम्॥**
**उन्मूलनेऽप्युद्धरणमुष्णं दक्षेऽपि नाऽऽतपे। साधने गीतनृत्यप्रभेदे कायस्थकर्मणि ॥ १२२ ॥**
**करणं पुंसि सङ्कीर्णे कल्याणं काञ्चने शुभे। कृष्णो वर्णे हरौ व्यासे कृष्णं मरिचलोहयोः॥**

कथाभेदे शिलाह्वये करवीर्यां च वितण्डा। "वितण्डा वादभेदे स्यात्कचीशाके शिलाह्वये। करवीर्यामपि स्त्री स्यात्" इति मेदिनी ॥ ११६ ॥ शिखा चूडा, बर्हः मयूरपिच्छम्, तयोः शिखण्डः। "शिखण्डो बर्हचूडयोः" इति मेदिनी ॥ करिकरः हस्तिशुण्डः, सुरा मद्यम्, तयोः शुण्डा। "शुण्डा पानगृहे मता। अप्यम्बुहस्तिनी-वेश्याहस्तिहस्तसुरासु च" इति मेदिनी ॥ इति डकारान्ताः ॥ अथ ढान्तानाह ॥ व्रतिनां दण्डे व्रतधारिणां दण्डे, मासे स्वनामाख्याते चतुर्थे मासे, मलयपर्वते दक्षिणस्थे पर्वतभेदे च आषाढः। "असाढो व्रतिनां दण्डे मासे मलयपर्वते" इत्येव मेदिनी ॥ ११७ ॥ विचेष्टः बालः, बालिशः मूर्खः शिशुर्वा, तयोः मूढः। "मूढस्तु तन्द्रिते बाले" इति मेदिनी ॥ दीप्तिः शोभा, देशः "राढा" इति ख्यातदेशभेदः, तयोः राढा। "राढा स्त्री सूक्ष्मशोभयोः" इति मेदिनी ॥ पण्डः नपुंसकम्, कञ्चुकी राज्ञामन्तःपुराधिकारी द्वारपालो वा, तयोः षण्ढः। "शण्ढः" इति क्वचित् पाठः। "षण्ढः स्यात्पुंसि गोपतौ। आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि" इति मेदिनी॥ पुञ्जिते राशीकृते, नवे सद्योजाते ॥ ११८ ॥ भुग्ने रोगादिना कुटिलीकृते, अनुपप्लुते अनुपद्रुते च समूढः। "समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते" इति मेदिनी ॥ इति ढकारान्ताः ॥ अथ णान्तानाह ॥ भास्करे सूर्ये, अनूरौ सूर्यसारथौ च अरुणः। मञ्जिष्ठायाम् अतिविषायाम् ॥ ११९ ॥ आरक्ते कृष्णमिश्रितरक्ते वर्णे व्याकुले च अरुणा। "अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु। अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च" इति मेदिनी ॥ सूक्ष्मे सूक्ष्मपरिमाणवति, व्रीह्यन्तरे चिनाका-ङनीश्यामाप्रभृतिसूक्ष्मधान्ये, अपिशब्दात् क्षुद्रे लेशे च अणुः। "अणुर्व्रीहिविशेषे स्यात्पुंसि सूक्ष्मेऽभिधेयवत्" इति मेदिनी॥कीलकः 'आरा' इति ख्यातः रथचक्राग्रस्थितः कीलकः, अग्रः अग्रभागः कोटिः, आश्रिः आश्रयः, सीमा अण्डकोषः मर्यादा वा, तत्र आणिः, अणिश्च। "अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः" इति मेदिनी॥ ॥१२०॥भृशे अतिशये, नित्ये सतते च अभीक्ष्णम्।"अभीक्ष्णं भृशे नित्येऽथ तद्युक्तक्रिययोरपि"इति मेदिनी ॥ इन्द्रयोषिति शचीनाम्न्यामिन्द्रपत्न्याम्, स्त्रीबन्धे स्त्रीकरणे, सिन्धुवारे स्वनामाख्याते वृक्षे, चकारात् स्थूलैलायां सूक्ष्मैलायां गौर्यादिषु षोडशमातृकासु मध्ये आद्यायां मातृकायां च इन्द्राणी। "इन्द्राणी करणे स्त्रीणां पौलो-मीसिन्धुवारयोः" इति मेदिनी ॥ चक्षुर्नेत्रम्, दर्शनं चक्षुःपथसम्मुखीकरणम्, तयोः ईक्षणम्। "ईक्षणं दर्शने दृशि" इति मेदिनी ॥ १२१ ॥ उन्मूलने उत्पाटने उद्धृतमूलकरणे वा, अपिशब्दात् मुक्तौ वमने ऋणशुद्धौ वान्तेऽन्नादौ च उद्धरणम्। "स्यादुद्धरणमुद्धारवान्तान्नोन्मूलनेष्वपि" इति मेदिनी ॥ दक्षे आलस्यरहिते कुशले वा, आतपे सूर्याद्यालोके, अपिशब्दात् ग्रीष्मे ऋतौ पलाण्डौ नरकभेदे शीतभिन्ने स्पर्शे च उष्णम्। "उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः" इति मेदिनी ॥ साधने क्रियानिष्पत्तौ साक्षात् अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे वा, गीतं गानम्, नृत्यं नर्तनम्, तयोः प्रभेदे, कायस्थकर्म्मणि कायकर्मादौ ॥ १२२ ॥ संकीर्णे शूद्राविशोः सुते शूद्रायामुत्पादिते जातिभेदे वा च करणम्। "करणं हेतुकर्मणोः। बाल-वादौ हस्तलेपे नृत्यगीतप्रभेदयोः। क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च। कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते" इति मेदिनी ॥ काञ्चने स्वर्णे, शुभे मङ्गले च कल्याणम्। "कल्याणमक्षये स्वर्णे मङ्गलेऽपि नपुं-सकम्" इति मेदिनी ॥ वर्णे कालवर्णे, हरौ वासुदेवे, व्यासे वेदव्यासे च कृष्णः। मरिचः प्रसिद्धः, लोहः

**पिप्पली द्रौपदी कृष्णा हस्तसूत्रेऽपि कङ्कणम्।श्रुतिराधेययोः कर्णः पिप्पल्यां जीरके कणा॥
कोणोऽश्रौ वाद्यलगुडे वधे हेतौ च कारणम्। ग्रहणं स्वीकृतौ हस्ते गुणः स्याद्रज्जुसूदयोः ॥
अङ्गुष्ठानामिकोन्माने गोकर्णोऽहौ मृगेऽपि च। नासिकाघ्रातयोर्घ्राणं चूर्णं गन्धयुतावपि१२६
वेदांशे बह्वृचादौ च ब्रध्ने पादेऽपि चास्त्रियाम् । चरणश्चीर्णपर्णस्तु खर्जूरपिचुमन्दयोः॥१२७॥
जेतरीन्द्रेऽर्जुने जिष्णुर्झूणिः कठिनपूगयोः । तरुणः कुब्जपुष्पेऽपि त्राणं रक्षितरक्षयोः॥१२८॥
दुर्वर्णं रजकेऽपि स्याद् द्रुणोऽलिः कच्छपी द्रुणी।द्युमणौ तरणिः पुंसि कुमारीनौकयोः स्त्रियाम्
काष्ठागारेऽम्बुवाहिन्यां शैलसन्धौ च योषिति । द्रोणी न स्त्री मानभेदे द्राणः काके कृपीपतौ॥**

धातुभेदः, तयोः कृष्णम् ॥ १२३ ॥ पिप्पली कणा, द्रौपदी द्रुपदराजात्मजा, तयोः कृष्णा । "कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ मेचके वाच्यलिङ्गः स्यात्क्लीबं मरिचलोहयोः" इति मेदिनी ॥ हस्तसूत्रे करभूषणे, अपिशब्दात् भूषणमात्रे मण्डले च **कङ्कणम्** । "कङ्कणं करभूषायां सूत्रमण्डलयोरपि" इति मेदिनी ॥ श्रुतिः श्रोत्रेन्द्रियम्, राधेयः राधया पुत्रत्वेन पालितः अङ्गदेशाधिपः पृथासुतः, तयोः **कर्णः** । "कर्णः पृथाज्येष्ठपुत्रे सुवर्णालौ श्रुतावपि" इति मेदिनी ॥ पिप्पल्यां स्वनामख्यातायाम्, जीरके धान्यादेरतिसूक्ष्मांशे लेशे च **कणा** ।"कणा जीरककुम्भीरमक्षिकापिप्पलीषु च"इति मेदिनी ॥ १२४ ॥ अश्रौ वस्त्रादेरग्रभागे गृहादिकोणे वा, वाद्ये येन धनुराकृतिना काष्ठेन वीणादयो वाद्यन्ते तस्मिन् वादनसाधने काष्ठे च **कोणः** ।"कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने । एकदेशे गृहादीनामश्रौ च लगुडेऽपि च" इति मेदिनी ॥ वधे नाशे, हेतौ कारणे, चकारात् साधने इन्द्रिये देहे कर्मणि वाद्यभेदे हिंसायां यातनायां च **कारणम्** । "कारणं करणे हेतुवधयोश्च नपुंसकम् । स्त्री यातनायाम्" इति मेदिनी ॥ स्वीकृते अङ्गीकृते, हस्ते करे च **ग्रहणम्** । "ग्रहणं स्वीकारादरकरोपरागोपलब्धिबन्दिषु" इति मेदिनी ॥ रज्जुः बन्धनसाधनं दाम, सूदः सूपकारकः, तयोः **गुणः** । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये" इति मेदिनी ॥ १२५ ॥ अङ्गुष्ठानामिकोन्माने अनामिकायुतविस्तृताङ्गुष्ठमाने, अहौ सर्पे, मृगे मृगभेदे, अपिशब्दात् अश्वतरे गणदेवताभेदे शैवे तीर्थभेदे च **गोकर्णः** । "गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णो मूर्विकौषधौ" इति मेदिनी ॥ नासिका प्रसिद्धा, आघ्रातः आक्रान्तः गृहीतगन्धो वा, तयोः **घ्राणम्** । "घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम्" इति मेदिनी ॥ गन्धयुतौ गन्धवति द्रव्ये, अपिशब्दात् पेषणजाते रजसि धूलौ ताम्बूलचर्वणोपयोगिद्रव्ये कपर्दके च **चूर्णम्** । "चूर्णः कपर्दके । चूर्णो धूलौ क्षारभेदे चूर्णा निवासयुक्तिषु" इति मेदिनी ॥ १२६ ॥ वेदांशे वेदैकदेशे शाखारूपे ग्रन्थे, बह्वृचादौ ऋग्वेदे ब्रध्ने वृक्षमूले, पादे च,अपिशब्दात् वेदाध्येतरि जने गोत्रे गतौ भक्षणे आचारे शीले च **चरणः** । "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुंसक उदाहृतः" इति मेदिनी ॥ खर्जूरः द्रुमभेदः, पिचुमन्दः निम्बः, तयोः **चीर्णपर्णः** । "चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान्" इति मेदिनी ॥ १२७ ॥ जेतरि जित्वरे, इन्द्रे शक्रे, अर्जुने स्वनामाख्याते वृक्षे च **जिष्णुः** । 'जिष्णुर्ना वासवेऽर्जुने । जित्वरे वाच्यवत्" इति मेदिनी ॥ कठिनः क्रूरः, पूगः क्रमुकः, तयोः **झूणिः** । क्वचित् "जूर्णिः" "झणिः" इति पाठः । "झूणिः क्रमुकभेदेऽपि दुष्टदैवप्रतावपि" इति विश्वः । कुब्जपुष्पे महासहपुष्पे, अपिशब्दात् एरण्डवृक्षे स्थलजीरके नूतने यूनि दन्तीवृक्षे च **तरुणः** ।"तरुणं कुब्जपुष्पे ना रुवुके यूनि तु त्रिषु"इति मेदिनी॥ रक्षितः पालितः, रक्षा पालनम्, तयोः **त्राणम्** ।"त्राणं तु त्रायमाणायां रक्षणे रक्षितेऽपि च" इति मेदिनी ॥१२८ ॥ रजके रागकारके जातिभेदे, क्वचित्तु "रजते" इति पाठः, रजते रूप्ये, अपिशब्दात् एलवालुके मलिने दुष्टवर्णवति च **दुर्वर्णम्** । "दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः" इति मेदिनी॥ आलिः भ्रमरः,तस्मिन् **द्रुणः** । "अलिनि द्रुणः" इति मेदिनी ॥ कच्छपी प्रसिद्धा, तस्याम् **द्रुणी** । "द्रुण्यम्बुद्रोणीकच्छप्योः" इति मेदिनी ॥ द्युमणौ सूर्ये, कुमारी घृतकुमारी, नौका प्रसिद्धा, तयोश्च **तरणिः** ।"तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्" इत्येव मेदिनी ॥ १२९ ॥ काष्ठागारेऽम्बुवाहिन्यां काष्ठादिरचिते नौकाजलसेचनीपात्रे, शैलसंधौ शैलजनामगन्ध-

**दक्षिणा दिशि दाने च दक्षिणः सरलेऽपि च। असती स्याद्धर्षणी च धर्षणं निकृतौ रते१३१॥**
**बुद्धमन्त्रे नाडिकायां धारणाऽथ च मज्जने । निर्वाणं निर्वृतौ मोक्षे प्रघणोऽस्त्रगृहांशयोः१३२**
**बोले वाते बले प्राणः पूर्णे पुंभूम्नि चासुषु । पर्णं पक्षे च पत्रे च प्रोक्षणं सेचने वधे ॥१३३ ॥**
**ग्रन्थे कार्षापणे चास्त्री पुराणमनवे त्रिषु।पार्ष्णिः पादे व्यूहपृष्ठे वाणी व्यूतिश्च भारती १३४**
**मन्त्रान्यवेदे विप्रौघे क्लीबं ना ब्राह्मणो द्विजे। लिंगाग्रेऽलिञ्जरे मौक्तिकादौ स्त्रीपुंसयोर्मणिः१३५**
**अजागलस्तने चापि मसृणौ मृद्वकर्कशौ।।निःश्मश्रुपुरुषोद्दंशौ मत्कुणावथ रोहिणी ॥ १३६॥**
**नक्षत्रे रोहितायां च रणः क्वणनयुद्धयोः।लक्ष्मणा सारसी दाशरथिः श्रीमांश्च लक्ष्मणः १३७**

द्रव्ये च द्रोणी । "द्रोणी काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ" इति मेदिनी॥मानभेदे आढकचतुष्टये परिमाणे, काके द्रोणाख्ये वायसे, कृपीपतौ द्रोणाचार्ये च द्रोणः।"द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये । पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे" इति मेदिनी ॥ १३० ॥ दिशि याम्यदिशि, दाने यज्ञशेषे कर्मणः साङ्गतार्थं देये द्रव्ये, चकारात् यज्ञपत्न्यां प्रतिष्ठायां दक्षिणकालिकायां रुचिप्रजापतेः कन्यायां परिक्रयद्रव्ये नायिकाभेदे च दक्षिणा । सरले स्वनामाख्याते वृक्षे, अपिशब्दात् सर्वनायिकासु समानुरागे नायकभेदे मध्यदेशाद्दक्षिणे देशे शरीरस्य दक्षिणभागे अनुत्तरे परच्छन्दानुवर्तिनि अवामभागस्थे औदार्यवति च दक्षिणः । "दक्षिणो दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । आरामे त्रिषु यज्ञादिविविधदाने दिशि स्त्रियाम्" इति मेदिनी ॥ असती भिन्नपतिव्रता अभिसारिका स्त्री,तस्यां धर्षणी । निकृतौ वञ्चनायाम् ,रते रमणे च धर्षणम् । "धर्षणं स्यात्परिभवे रतेऽसत्यां तु धर्षणी" इति मेदिनी ॥ १३१ ॥ बुद्धमन्त्रे संसारमुक्तिसाधनार्थं भगवता शाक्यमुनिना उक्ते धर्मविशेषे "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इत्युक्तायामात्मनि चित्तस्य स्थितौ वा, नाडिकायां कलम्बीशाके, पट्टशाके वा च धारणा । "धारणा नाडिकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि।धारणाऽङ्गे च योगस्य न पुंसि स्याद्विधारणे"इति मेदिनी॥मज्जने गजमज्जने,निर्वृतौ निर्वृत्ते,मोक्षे मुक्तौ निर्वाणम् ।"निर्वाणमस्तङ्गमने निर्वृतौ गजमज्जने । सङ्गमे चापवर्गे च"इति मेदिनी।।अस्त्रे लोहमुद्गरम् ,गृहांशः बहिर्द्वारप्रकोष्ठकः अलिन्दः, तयोश्च प्रघणः । "प्रघनः" अप्यत्र ।"प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे"इति मेदिनी ॥ १३२ ॥ बोले गन्धरसे गन्धरसद्रव्यभेदे वा, वाते वायुमात्रे, बले देहजे सामर्थ्ये, पूर्णे पूरिते, असुषु हृदयस्थे नासाग्रवर्तिनि वायौ, पञ्चवृत्तके देहस्थे वायुभेदे वा च प्राणः । "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु" इति मेदिनी ॥ पक्षे पक्षिणां पक्षपत्रे, पत्रे लेखनाधारे द्रव्ये च पर्णम् ।"पर्णः पत्रं किंशुके ना" इति मेदिनी ॥ सेचने समन्तात् सेचने, वधे यज्ञार्थं पशूनां हनने च प्रोक्षणम् ।"प्रोक्षणं सेचने वधे" इति मेदिनी॥१३३॥ग्रन्थे व्यासादिप्रणीते शास्त्रभेदे, तत्तु—"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम्" इत्युक्तम् , कार्षापणे पणे षोडशसु पणेषु वा, अनवे अनूतने च पुराणम् ।"पुराणम् पञ्चलक्षणम् । पणे पुंसि त्रिषु प्रत्ने" इति मेदिनी ॥ पादे पादग्रन्थे गुल्फस्याधोभागे वा, व्यूहपृष्ठे सैन्यपृष्ठे च पार्ष्णिः ।"पार्ष्णिः स्यादुन्मदास्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च" इति मेदिनी ॥ व्यूतिः वस्त्रादिवयनकर्म, भारती वाक्यम् , तयोः, चात्तथा वायदण्डे वेश्नि सरस्वत्यां च वाणिः ।"वाणिः स्याद् व्यूतिभारत्योर्वाणिर्मूले बलाहके" इति विश्वः ॥ १३४ ॥ मन्त्रान्यवेदे वेदभागविशेषे, विप्रौघे ब्रह्मसङ्घाते, द्विजे विप्रे च ब्राह्मणः । "ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम् । भूमिदेवे तु पुँल्लिङ्गः फञ्जिकापृक्कयोः स्त्रियाम्" इति मेदिनी ॥ लिङ्गाग्रे लिङ्गकोटयाम्, अलिञ्जरे मृन्मयपात्रभेदे मौक्तिकादौ रत्ने ॥ १३५ ॥ अजागलस्तने अविग्रीवास्तने, अपिशब्दात् नागभेदे मणिबन्धे च मणिः । "मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च । कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च" इति मेदिनी ॥ मृदुः स्निग्धः, अकर्कशः कोमलः, तयोः मसृणः ।"मसृणोऽकर्कशे स्निग्धे त्रिभूमायां तु योषिति" इति मेदिनी ॥ निःश्मश्रुपुरुषः श्मश्रुरहितपुरुषः, उद्दंशः मस्तकदंशकः, तयोः मत्कुणः । "मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेऽपि च । उद्दंशे नारिकेले च" इति मेदिनी ॥ १३६ ॥ नक्षत्रे अश्विन्यवधिके चतुर्थे नक्षत्रे, रोहितायां रक्तवर्णवत्यां

**छागेऽपि लम्बकर्णः स्याद्वेणुर्वंशे नृपान्तरे।वाणा झिण्ट्यां शरे वाणो वृष्णिर्यादवमेषयोः१३८**
**कर्णे श्रुतौ च श्रवणं शरणं मारणेऽपि च। श्रेणिः पङ्क्तौ सेकपात्रे न क्लीबं कारुसंहतौ१३९**
**कषे मासचतुष्के च शाणः शोणो नदेऽरुणे। पक्के श्राणं यवाग्वां स्त्री श्रीपर्णं गणिकारिका१४०**
**पद्मं च श्रमणा भिक्षुक्यां मुण्डीर्यां च दृश्यते। सुवर्णं मानभेदेऽपि स्थूणा शूर्मी च दारु च॥**
**स्थाणू शङ्कुशिवौ विष्णौ सुषेणः करमर्दके। कपिवैद्यौ चाथ हृतौ हरणं यौतकेऽपि च १४२**
**मोक्षः सुधा यज्ञशेषो याचितं वारि चामृतम्।अमृता तु गुडूची स्याद्धरीतक्यामलक्यपि १४३**

स्त्रियाम् , चकारात् विद्युति स्त्रगिव्यां कटुतुम्ब्यां लतायां सोमवल्के हरीतक्यां काश्मर्यां मञ्जिष्ठायां च **रोहिणी**। "रोहिणी कण्ठरुग्भिदि। तडित्कटुम्भरासोमवल्केषु लोहिता गवेः" इति मेदिनी॥ क्वणनं नादः, युद्धः समरः, तयोः **रणः**। " रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम् " इति मेदिनी॥ सारसी सारसपक्षिणी, तस्यां **लक्ष्मणा**। दाशरथिः दशरथपत्न्याः सुमित्रायाः स्वनामाख्यातः पुत्रः, श्रीमान् श्रीयुक्तः, तयोश्च, चकारात् चिह्ने प्रधाने श्वेतकण्टकार्यां च **लक्ष्मणः**।"**लक्ष्मणा** त्वोषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्" इति मेदिनी॥ १३७॥ छागे अजे, अपिशब्दात् हस्तिनि राक्षसे श्येनपक्षिणि अङ्कोटवृक्षे लम्बश्रोत्रवति च **लम्बकर्णः**। " **लम्बकर्णः** स्मृतोऽङ्कोटपादपे युगलेऽपि च" इति मेदिनी॥ वंशे त्वक्सारे तृणजातिभेदे वा, नृपान्तरे राजभेदे च **वेणुः**। "वेणुर्नृपान्तरे। त्वक्सारेऽपि च पुंसि स्यात्" इति मेदिनी॥ झिण्ट्या नीलझिण्ट्यां **वाणा**॥ शरे काण्डे, **वाणः**। "वाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः। वाणा तु वाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः" इति मेदिनी॥ यादवः यादववंशीयः श्रीविष्णुः, मेषः एडकः तयोश्च **वृष्णिः**। " वृष्णिः पाषण्डचण्डयोः। त्रिषु ना यादवे मेषे" इति मेदिनी॥ १३८॥ कर्णे शब्दग्राहकेन्द्रियभेदे, श्रुतौ श्रवणेन्द्रियजन्ये ज्ञाने, चकारात् अश्विन्यादिषु द्वाविंशे नक्षत्रे मुण्डरिकावृक्षे च **श्रवणम्**। " श्रवणं स्याच्छ्रुतौ कर्णे नक्षत्रे न नपुंसकम् " इति मेदिनी॥ मारणे घातके, अपिशब्दात् गृहे रक्षके रक्षणे वधे प्रसारण्यां च **शरणम्**। " शरणं गृहरक्षित्रोर्वधरक्षणयोरपि " इति मेदिनी॥ पङ्क्तौ छिद्रसहितायां पङ्क्तौ, सेकपात्रे जलसेचकपात्रभेदे, कारुसंहतौ समानशिल्पिसमूहे च **श्रेणिः**। " श्रेणी " इति क्वचित् पाठः। " श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ " इति मेदिनी॥ १३९॥ कषे कषपाषाणे शस्त्रादीनां निकर्षणेन तीक्ष्णीकरणयन्त्रभेदे, मासचतुष्के मासचतुष्टये च **शाणः**। " **शाणो** मासचतुष्टये। लोहादीनां च निकषे " इति मेदिनी॥ नदे नदभेदे, अरुणे ईषत् रक्तवर्णे च **शोणः**। " शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान्। त्रिषु कोकनदच्छाये " इति मेदिनी॥ पक्वे कृतपाके परिणते वा, यवाग्वां षड्गुणजलपक्वे द्रवभेदे च **श्राणम्**। " **श्राणं** पक्के यवाग्वां स्त्री " इति मेदिनी॥ गणिकारिका गणिकारी द्रुमः अग्निमन्थवृक्षः, पद्मं कमलम्, तत्र च **श्रीपर्णम्**। " **श्रीपर्णी** काश्मरीकुम्भे क्लीबे पद्माग्निमन्थयोः " इति मेदिनी॥ १४०॥ भिक्षुक्यां भिक्षोपजीविन्याम्, मुण्डीर्यां केशच्छेदिन्याम्, चात् जटामांस्यां सुदर्शनायां च **श्रमणा**। "**श्रमणो** यतिभेदे ना निन्द्यजीविनि तु त्रिषु। स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः " इति मेदिनी॥ मानभेदे परिमाणविशेषे, अपिशब्दात् स्वनामाख्याते धातुभेदे हरिचन्दने स्वर्णगैरिके धने नागकेशरे यज्ञभेदे धुस्तूरे कणगुग्गुलौ सुरूपे सुन्दराक्षरयुक्ते च **सुवर्णम्**। "सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे। स्त्री कृष्णागुरुणि क्लीबं काञ्चने हरिचन्दने " इति मेदिनी॥ शूर्मी लौहप्रतिमा, दारु गृहस्तम्भः, तयोः **स्थूणा**। " अथ **स्थूणा** स्याच्छूर्म्यां स्तम्भे गृहस्य च " इति मेदिनी॥ १४१॥ शङ्कुः शाखाशून्यवृक्षः कीलो वा, शिवः महादेवः, तयोः **स्थाणुः**। " **स्थाणुः** कीले हरे पुमान्। अस्त्री ध्रुवे" इति मेदिनी॥ विष्णौ हरौ, करमर्दके करञ्जवृक्षे, कपिः वानरभेदः सुग्रीवो वा, वैद्यः चिकित्सकः, तयोश्च **सुषेणः**।"सुषेणः करमर्दे स्याद्विष्णौ सुग्रीववैद्ययोः"इति मेदिनी॥हृतौ स्थानान्तरकरणे,यौतके विवाहकाले लब्धे धन,अपिशब्दात् विभाजने च **हरणम्**।"**हरणं** यौतकादीनां द्रव्ये भुजे हृतावपि"इति मेदिनी॥१४२॥ **इति णकारान्ताः**॥ अथ तान्तानाह॥ मोक्षः मुक्तिः, सुधा पीयूषम् , यज्ञशेषः होमावशिष्टद्रव्यम् , अयाचितम्

शेषे विष्णावनन्तो ना गुडूचीदूर्वयोः स्त्रियाम्।क्लीबं खे त्रिष्वनवधावस्वन्तं मरणे शुभे १४४
चुल्ल्यां च पूर्णिमाभेदेऽनुमतिः सम्मतावपि।स्वरूपेऽन्तं विनाशे ना न स्त्री शेषेऽन्तिके त्रिषु।।
गते ज्ञातेऽप्यवसितमर्वन्तावश्वकुत्सितौ। अर्वती कुम्भदास्यश्वाऽथार्दितं प्रार्थिते हते ॥ १४६॥
क्षिप्ताद्रिभेदयोरस्तः स्याल्लाजेष्वपि चाक्षतम् । कृषावसत्ये प्यनृतमाकृतिर्जातिरूपयोः॥१४७॥
आप्तौ लब्धहितौ दैर्घ्ये भाविकालेऽपि चायतिः । आचितः शकटोन्मेये व्यावर्तश्चिन्तनेऽपि च॥
आयस्तस्तेजिते क्षिप्तेऽथाख्यातं तिङि भाषिते।भ्रंशे तदात्वे चापात आहतं गुणिते हत १४९
मृषोक्ते चाथ दग्धे स्याद्रुषितं स्थितवत्यपि। व्यसनार्ते चोपरक्त उदितं प्रोक्त उद्गते ॥१५०॥

अयाचितलब्धम्,वारि जलम्,तत्र च **अमृतम्** ।"अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" इति मेदिनी॥गुडूची स्वनामाख्याता लता,हरीतकी हरीतकीफलम्,आमलकी धात्रीफलम्,तत्र च अपिशब्दात् मागध्यां च **अमृता** ।"अमृता मागधीपथ्यागुडूच्यामलकीषु च" इति मेदिनी॥१४३॥ शेषे अनन्तनागराजे, विष्णौ श्रीकृष्णे,गुडूची अमृता,दूर्वा स्वनामाख्यातो घासभेदः,तयोः, खे आकाशे,अनवधौ अवधिशून्ये च **अनन्तः** । "अनन्तः केशवे शेषे पुमाननवधौ त्रिषु । अनन्ता च विशल्यायां शारिवादूर्वयोरपि" इति मेदिनी ॥ मरणे मृत्यौ, अशुभे शुभशून्ये ॥ १४४ ॥ चुल्ल्यां च **अस्वन्तम्** ॥ "अस्वन्तमशुभे चुल्ल्यां मरणेऽनवधावपि" इति विश्वः ॥ पूर्णिमाभेदे कलाहीनचन्द्रवत्यां शुक्लचतुर्दशीयुतपूर्णिमातिथौ सम्मतौ च, अपिशब्दात् अनुज्ञाते च **अनुमतिः** । "अथानुमतिरूनेन्दुपूर्णिमानुज्ञयोरपि" इति मेदिनी ॥ स्वरूपे स्वभावे, विनाशे शेषे अन्तिके निकटे च **अन्तम्** । "अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति मेदिनी । "अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे" इति विश्वः ॥ १४५ ॥ गते गमने, ज्ञाते अवगते, अपिशब्दात् ऋद्धे समाप्ते परिपक्वे निश्चिते मर्दितधान्ये च **अवसितम्** । "अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिङ्गं स्यात्" इति मेदिनी ॥ अश्वः घोटकः, कुत्सितः निन्दितः, तयोः च **अर्वा** । "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः" इति मेदिनी ॥ कुम्भदासी कुट्टनी, अश्वा बडवा, तयोः **अर्वती** । "अर्वती कुम्भदास्यां च वडवायां च योषिति" इति मेदिनी ॥ प्रार्थिते याचिते, हते पीडिते च **अर्दितम्** ।" अर्दितं याचितेऽपि स्याद्वातव्याधौ च हिंसिते" इति मेदिनी ॥ १४६ ॥ क्षिप्तः त्यक्तः विकीर्णो वा, अद्रिभेदः पश्चिमाचलः, तयोः **अस्तः** । "अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले " इति मेदिनी ॥ लाजेषु भृष्टधान्येषु अपिशब्दात् यवे शतरहिते च **अक्षतम्** । "अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते" इति मेदिनी ॥ कृषौ वैश्यवृत्तिभेदे भूमिकर्षणरूपे, सस्योत्पादनव्यापारे वा, असत्ये सत्यभिन्ने अयथार्थे, अपिशब्दात् वाणिज्ये च **अनृतम्** । "अनृतं कृषावसत्येऽपि" इति मेदिनी ॥ जातिः जन्म, रूपं वपुः, तयोः **आकृतिः** । "आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि" इति मेदिनी ॥ १४७ ॥ लब्धः प्राप्तः, हितः इष्टसाधनः, तयोः **आप्तः** । "आप्तो लब्धे स्वसत्ययोः" इति मेदिनी ॥ दैर्घ्ये दीर्घकालभाविनि, भाविकाले उत्तरकालफलदाने, अपिशब्दात् सङ्गमे प्रापणे च **आयतिः** । क्वचित्तु "आयती" इत्यपि । "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी ॥ शकटोन्मेये शकटपरिमाणे, अपिशब्दात् सङ्गृहीते वाक्ये ग्रथिते दशभारमितपरिमाणे छन्ने च **आचितः** । "आचितः शकटोन्मेये पलानामयुतद्वये । पुँल्लिङ्गः सङ्गृहीतेऽपि च्छन्नेऽपि स्यात्त्रिलिङ्गकः" इति मेदिनी ॥ चिन्तने संस्कारोद्बोधे पूर्वदृष्टपदार्थस्मरणे च, अपिशब्दात् चक्राकारेण जलस्य स्वये भ्रमणे ध्रुवाख्ये रोगसंस्थानभेदे घोटकचिह्ने वामावर्तनामके मणौ आवर्तने मेघाधिपभेदे माक्षिकधातौ च **आवर्तः** । "आवर्त्तश्चिन्तने वारिभ्रमे चावर्त्तने पुमान्" इति मेदिनी ॥ १४८ ॥ तेजिते तीक्ष्णीकृते, क्षिप्ते त्यक्ते च **आयस्तः** । "आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते" इति मेदिनी ॥ तिङि व्याकरणप्रसिद्धे तिङन्ते पदे, भाषिते कथिते च **आख्यातम्** । "आख्यातं भाषिते तिङि" इति मेदिनी ॥ भ्रंशे सहसा पतने, तदात्वे तत्काले, चकारात् मार्गे च **आपातः** । "अहिंसितेऽपि चापातस्तदात्वे पतनेऽपि च" इति विश्वः ॥ गुणिते पूरिते वर्धिते वा, हते ताडिते ॥ १४९ ॥ मृषोक्ते वन्ध्यासुतोऽसीत्यादौ मृषार्थके वाक्ये, चकारात् ढक्कायां पुरातने

स्याद्धुस्तूरेऽपि चोन्मत्तः क्षिप्ते सृष्टेऽपि चोद्धृतम्। उत्तप्तं शुष्कमांसेऽपि वह्न्युत्पातेऽप्युपाहितः॥
उदास्थितश्चरे द्वाःस्थे स्यादूतिः स्यूतिरक्षयोः। ऋतमुञ्छशिले सत्ये एतावागतकर्बुरौ ॥१५२॥
ऐरावतो नागरङ्गेऽप्यथ कान्तिर्द्युतीच्छयोः। किरातौ म्लेच्छभूनिम्बौ कान्तस्तु प्रियरम्ययोः॥
केतुर्ग्रहोत्पातचिह्ने कलितं विदिताप्तयोः । कपोतः पक्षिमात्रेऽपि गुप्तं रक्षितगूढयोः ॥ १५४ ॥
गतिर्यात्रादशोपायाः शण्डः सूर्यश्च गोपतिः। गृही सत्री गृहपतिर्गीतं शब्दितगानयोः॥१५५॥
गर्जितं स्तनिते नेभे ग्रस्तं वाग्भेदभुक्तयोः। चर्मण्वत्यौ नदीरम्भे जातं व्यक्तौघजन्मसु॥१५६॥

नूतनवस्त्रे च आहतम्। "आहतं गुणिते चापि ताडिते च मृषार्थके। स्यात्पुरातनवस्त्रेऽपि नववस्त्रे च नाऽनके" इति मेदिनी ॥ दग्धे भस्मीकृते, स्थितवति कृतास्थितौ अपिशब्दात् पर्युषिते च उषितम्। "उषितं व्युषिते दग्धे" इति मेदिनी॥व्यसनार्ते व्यसनपीडिते व्यसनेष्वासक्ते वा,चकारात् राहुग्रस्ते सूर्ये चन्द्रे च रञ्जनद्रव्येण रक्ते च उपरक्तः। "उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः" इति मेदिनी ॥ उद्गते उदिते, प्रोक्ते कथिते च उदितम्। "उत्तुङ्गे मुद्गरेऽपि स्यादुदितं तूक्त उद्गते" इति मेदिनी ॥१५०॥ धुस्तूरे स्वनामाख्याते वृक्षे, अपिशब्दात् मुचुकुन्दवृक्षे उन्मादवति ग्रहावेशवति च उन्मत्तः। "उन्मत्त उन्मादवति धुस्तूरमुचुकुन्दयोः" इति मेदिनी ॥ क्षिप्ते उत्क्षिप्ते, सृष्टे त्यक्ते, अपिशब्दात् भुक्तोज्झिते कृतोद्धारे पृथक्कृते उच्छेदिते च उद्धृतम्। "उद्धृतं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च" इति मेदिनी । शुष्कमांसे आतपादिना कृतशोषणे मांसे, अपिशब्दात् संतप्ते स्नाते च उत्तप्तम्। "उत्तप्तं शुष्कमांसेऽथ त्रिषु तप्ते परिप्लुते" इति मेदिनी ॥ वह्न्युत्पाते अग्न्युत्पातरूपे उपद्रवे, अपिशब्दात् उल्कापातादौ आरोपिते योजिते च उपाहितः। "उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु" इति मेदिनी ॥ १५१ ॥ चरे स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्तरि चारे, द्वाःस्थे द्वारपाले च उदास्थितः। "उदास्थितः प्रतीहारे प्रव्रज्यावसिते चरे" इति मेदिनी ॥ स्यूतिः सूच्यादिना वस्त्रादिसीवनम्, रक्षा रक्षणम्, तयोः ऊतिः। "ऊतिः स्त्री रक्षणे स्यूतौ" इति मेदिनी ॥ उञ्छशिले—"ऋतमुञ्छशिलं ज्ञेयम्" इत्युक्तेः ब्राह्मणस्य उपजीव्यवृत्तौ, सत्ये सत्यवचने च ऋतम्। "ऋतमुञ्छशिले जले । सत्ये दीप्ते पूजिते स्यात्" इति मेदिनी ॥ आगतः उपस्थितः आयातो वा, कर्बुरः वर्णविशेषः, तयोः एतः। "एतः कर्बुर आगते" इति मेदिनी ॥ १५२ ॥ नागरङ्गे स्वनामाख्याते जम्बीरभेदे, अपिशब्दात् समुद्रजाते इन्द्रगजे लकुचद्रुमे च ऐरावतः। "ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे । नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम्" इति मेदिनी ॥ द्युतिः शोभा, इच्छा अभिलाषः, तयोः कान्तिः। "कान्तिः शोभेच्छयोः स्त्रियाम्" इति मेदिनी ॥ म्लेच्छः जातिभेदः पर्यन्तदेशाश्रयी, भूनिम्बः अरिष्टः तयोः किरातः। "किरातो म्लेच्छदेशे स्याद्भूनिम्बेऽल्पतनावपि । स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि" इति मेदिनी ॥ प्रियः भर्ता, रम्यः रमणीयः, तयोः कान्तः। "कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु माधवे । लोहे च चन्द्रसूर्यायःपर्य्यायान्तः शिलासु च" इति मेदिनी ॥ १५३ ॥ ग्रहोत्पाते चिह्नं लक्षणम्, तस्मिंश्च केतुः "केतुर्ना रुक्पताकाऽरिग्रहोत्पातेषु लक्षणे" इति मेदिनी ॥ विदितः ज्ञातः, आप्तः प्राप्तः तयोः कलितम्। "कलितं विदिताप्तयोः" इति मेदिनी॥ पक्षिमात्रे पक्षिसाकल्ये, अपिशब्दात् पारावते च कपोतः। "कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः" इति मेदिनी ॥ रक्षितं त्राणम्, गूढं संवृतम्, तयोः गुप्तम्। "गुप्तं स्याद्रक्षिते गूढे" इति मेदिनी ॥ १५४ ॥ यात्रा गमनम्, दशा अवस्था, उपायः राज्ञां रिपुनिराकरणहेतुः तेषु गतिः। "गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः। नाडीव्रणे सरण्यां च" इति मेदिनी ॥ शण्डः गवां पतिर्वृषः, सूर्यः किरणपतिः, तत्र च, चकारात् शिवे भूमिपतौ नृपे श्रीकृष्णे स्वर्गपतौ शक्रे ऋषभनामौषधौ च गोपतिः। "गोपतिः शिवशण्डयोः। नृपभास्करयोः पुंसि" इति मेदिनी ॥ गृही गृहस्थः, सत्री गृहस्वामी, तयोः गृहपतिः "भवेद्गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी ॥ शब्दितं नादितम्, गानं गीतकर्म, तयोः गीतम्। "गीतं शब्दितगानयोः" इत्येव मेदिनी ॥ १५५ ॥ स्तनिते मेघशब्दे, इभे मत्तहस्तिनि च गर्जितम्। "गर्जितं वारिवाहादिध्वनौ ना मत्त-

सूर्यावर्तेऽपि जामाता ना वाते विष्टपे जगत्। जातिश्छन्दसि मालत्यां चुल्ल्यां जातीफले कुले॥
व्याप्तविस्तृतवाद्येषु ततं तिक्तं सुगन्ध्यपि। चापे तृणत्वे तृणता तातः पित्रनुकम्पयोः॥१५८॥
दुर्गतिर्नरके नैःस्व्ये दुर्जातं व्यसनेऽपि च। दिवाभीत उलूके स्यात्कुम्भिले कुमुदाकरे॥१५९॥
विसृष्टे रक्षिते दत्तं द्रुतं शीघ्रविलीनयोः। दशने शैलशृङ्गे च दन्तः स्यादौषधे स्त्रियाम्॥१६०॥
दितौ खण्डनदैत्याम्बे धृतिस्तुष्टौ क्रतावपि। राशौ च धातुनिर्वाणे सुस्थितत्वे च निर्वृतिः१६१
अस्वाध्याये कुरूपे च प्रत्युक्तौ स्त्री निराकृतिः।जम्ब्वां स्त्री ना नदीकान्तः सिन्धुवारजलाब्धिषु
निमित्तं हेतुचिह्नाङ्गशकुनोद्देश्यपर्वसु। प्रसृतः कुब्जिते पाणौ जङ्घायां स्त्री गते त्रिषु॥१६३॥

कुञ्जरे" इति मेदिनी ॥ वाग्भेदः लुप्तवर्णपदो वाग्विशेषः, भुक्तः भक्षितः तयोः **ग्रस्तम्**। "ग्रस्तो ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदोदिते" इति मेदिनी ॥ नदी गङ्गाभेदः, रम्भा कदलीपादपः, तयोः **चर्मण्वती**। "चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्" इति मेदिनी ॥ व्यक्तः स्फुटः प्रकाशितो वा, ओघः समूहः, जन्म उत्पन्नम्, तेषु **जातम्**। "जातं व्यक्तौघजन्मसु। क्लीबं त्रिलिङ्गमुत्पन्ने" इति मेदिनी ॥ १५६ ॥ सूर्यावर्ते क्षुपभेदे शाके वा, अपिशब्दात् दुहितृपतौ वल्लभे स्वामिनि च **जामाता**। "जामाता दुहितुः पत्यौ सूर्यावर्ते धवे पुमान्" इति मेदिनी ॥ वाते वायौ, विष्टपे भुवने च **जगत्**। "जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु" इति मेदिनी ॥ छन्दसि उक्तादिछन्दोभेदे, मालत्यां जातिलतायाम्, चुल्ल्यां पाकार्थमग्निस्थापनस्थाने, जातीफले स्वनामाख्याते फले, कुले पौत्राद्यपत्यात्मके गोत्रे च **जातिः**। "जातिः स्त्री गोत्रजन्मनोः। अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम्" इति मेदिनी ॥१५७॥ व्याप्तं पूर्णम्, विस्तृतं विस्तारयुक्तम्, वाद्यं वादनीयं मृदङ्गादिकं वीणावाद्यं वा तेषु **ततम्**। "ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात्पुँल्लिङ्गस्तु सदागतौ" इति मेदिनी ॥ सुगन्धि इष्टगन्धि सुरभि वा तत्र च, अपिशब्दात् वरुणद्रुमे कुटजे रसभेदे पर्पटौषधौ कटुकायां पाठायां छिक्कण्यां च **तिक्तम्**।"तिक्तो रससुगन्धयोः। तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम्" इति मेदिनी ॥ चापे धनुषि। तृणत्वे तृणभावे च **तृणता** "तृणता धनुषि तृणत्वे" इति मेदिनी ॥ पिता जनकः, अनुकम्पा दया, तयोः **तातः**। तातोऽनुकम्पा जनकः" इति मेदिनी ॥ १५८ ॥ नरके रौरवप्रभृते पापिनां दुःखभोगस्थानभेदे, नैःस्व्ये दारिद्रे च **दुर्गतिः**। "दुर्गतिर्नरके नैःस्व्ये" इत्येव मेदिनी ॥ व्यसने विपत्तौ, अपिशब्दात् आपदादौ असम्यग्जाते अनुचिते च **दुर्जातम्**। "दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्" इति मेदिनी ॥ उलूके पेचके, कुम्भिले चौरे, कुमुदाकरे चन्द्रे च **दिवाभीतः**। "दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे" इति मेदिनी ॥ १५९ ॥ विसृष्टे त्यक्ते प्रेरिते वा, रक्षिते गोपिते च **दत्तम्**। "दत्तं विश्राणितेऽविते" इति मेदिनी ॥ शीघ्रं त्वरितम्, विलीनं द्रवीभूतम् तयोः **द्रुतम्**,। "अथ द्रुतं त्रिषु। शीघ्रे निलीने विद्रावे" इति मेदिनी ॥ दशने चर्वणसाधनेऽस्थिभेदे, शैलशृङ्गे पर्वतनितम्बे, औषधे स्वनामाख्याते भेषजद्रव्ये, चकारात् कुञ्जे सानुनि द्वात्रिंशत्सङ्ख्यायां च **दन्तः**। "दन्तोऽद्रिकटके कुञ्जे दशने नौषधौ स्त्रियाम्" इति मेदिनी ॥ १६० ॥ खण्डनं भञ्जनं भेदनं वा, दैत्याम्बा दैत्यमाता, तयोः **दितिः**। "दितिर्दैत्यजनन्यां च खण्डनेऽपि च योषिति" इति मेदिनी ॥ तुष्टौ सन्तोषे, क्रतौ यागे, अपिशब्दात् विष्कम्भावधिके अष्टमे योगे धारणे सुखे धारणायाम् अवसादेऽपि शरीरादेः स्तम्भनशक्तौ अष्टादशाक्षरे छन्दोभेदे अष्टादशसङ्ख्यायां च **धृतिः**। "धृतिर्नेष्टौ स्त्रियां तुष्टौ योगिभिर्धैर्यधारणे" इति मेदिनी ॥ राशौ धान्यादिपुञ्जे मेषादिराशौ वा, धातुः स्वर्णादिः, निर्वाणं मोक्षः, तत्र च, सुस्थितत्वे सुखे आरोग्यत्वे वा चकारात् अस्तङ्गमने मृत्यौ च **निर्वृतिः**। "निर्वृतिः स्वस्थितावस्तङ्गमने च सुखे स्त्रियाम्" इति मेदिनी ॥१६१॥ अस्वाध्याये स्वाध्यायविरहिते, कुरूपे गर्हितरूपे, प्रत्युक्तौ विरुद्धवाक्ये, चकारात् वारणे च **निराकृतिः**।"निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे" इति मेदिनी॥जम्ब्वां जम्बूवृक्षे, सिन्धुवारः निर्गुण्डिवृक्षः, जलं तोयम्, अब्धिः समुद्रः तेषु च **नदीकान्तः**। "नदीकान्तः समुद्रे स्याद्विज्जले सिन्धुवारके" इति मेदिनी॥ ॥ १६२ ॥ हेतुः कारणम्, चिह्नं लक्षणम्, अङ्गम् अवयवः, शकुनं भाविशुभाशुभसूचकः ज्योतिषाद्युक्तः

प्रकृतिर्गुणसाम्ये स्यात्स्वभावामात्ययोरपि।प्रतीकारे प्रतिकृतिः प्रतिबिम्बेऽथ पद्धतिः॥१६४॥
पङ्क्तौ मार्गेऽपि पूतं तु पवित्रे बहुलीकृते। श्रेणिदशे च पङ्क्तिः स्यात्प्रसूतिर्जन्मतोकयोः॥
प्रतिपत्तिश्चित्प्रवृत्तिः प्राप्तिः प्रागल्भ्यगौरवे।पारावती गोपगीतिलवलीफलयोरपि ॥ १६६ ॥
पलितं कर्दमेऽपि स्याद्विधौ भूपे प्रजापतिः।शक्ते निवारणे वृत्तौ पर्याप्तं स्याद्यथेप्सिते॥१६७॥
प्रेतो मृते प्राणिभेदे पित्सन्पातेच्छुपक्षिणोः। क्लीबं बिन्दौ पृषन्नैणे पृषतोऽप्यनयोर्नरि १६८॥
खातादौ पूरिते पूर्तं पातो भ्रंशे च रक्षिते।प्रेषिते च प्रतिक्षिप्तं प्रतीतः सादरेऽपि च ॥१६९॥

पक्षी, उद्देश्यम् अनुसन्धानम् अन्वेषणं वा, पर्व ग्रन्थिः उत्सवो वा, तेषु **निमित्तम्** । "निमित्तं हेतुलक्ष्मणोः" इति मेदिनी ॥ कुब्जिते पाणौ कुब्जहस्तवति, जङ्घायां गुल्फजान्वोरन्तराले अवयवे, गते गमने च **प्रसृतः** । "प्रसृतः सम्प्रचारे स्याद्विनीते वेगिते त्रिषु । अर्द्धाञ्जलौ तु पुँल्लिङ्गो जङ्घायां **प्रसृता** मता । **प्रसृतं** कुसुमे क्लीबं त्रिषु सञ्जातसूतयोः" इति मेदिनी ॥ १६३ ॥ गुणसाम्ये सत्त्वरजस्तमोरूपगुणत्रयात्मके साम्ये, स्वभावः प्रसिद्धः, अमात्यः मन्त्री तयोश्च, अपिशब्दात् उपादानकारणे लिङ्गे स्वामिनि अज्ञाने सुहृदि कोषे राष्ट्रे पौरश्रेणौ दुर्गे बले शिल्पिनि शक्तौ योषिति परमात्मनि पञ्चभूतेषु करणे गुह्ये जन्तौ एकविंशत्यक्षरपादके छन्दोभेदे मातरि व्याकरणोक्ते प्रत्ययोत्पत्तिनिमित्ते शब्दभेदे च **प्रकृतिः** । "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे" इति मेदिनी ॥ प्रतीकारे वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन शोधने रोगादेश्चिकित्सायां वा, प्रतिबिम्बे प्रतिमायां च **प्रतिकृतिः** । "प्रतिकृतिरर्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री" इति मेदिनी॥१६४॥ पङ्क्तौ श्रेणौ, मार्गे पथि, अपिशब्दात् पूजादिज्ञापकग्रन्थभेदे च **पद्धतिः** "**पद्धती**" अप्यत्र ।"**पद्धतिः** पङ्क्ति-वर्त्मनोः" इति मेदिनी ॥ पवित्रे व्रतादिना शुद्धे, बहुलीकृते राशीकृतमात्रे बुसस्यापसारणेन राशीकृते खलस्थे धान्ये च **पूतम्** । "पूतं त्रिषु पवित्रे च शटिते बहुलीकृते" इति मेदिनी ॥ श्रेणिः सजातीयसन्ततिः, दश दशसङ्ख्या, तयोः **पङ्क्तिः** । "**पङ्क्तिः** स्याद्गौरवे पाके" इति मेदिनी । "**पङ्क्तिर्द**शाक्षरच्छन्दोदशसङ्ख्या-वलीष्वपि" इति विश्वः ॥ जन्म प्रसवम्, तोकम् अपत्यम् , तयोः **प्रसूतिः** । "प्रसूतिरुद्भवेऽपि स्यात्तनये दुहित-र्यपि" इति मेदिनी ॥ १६५ ॥ चित्प्रवृत्तिः चेतनाप्रयत्नभेदः, प्राप्तिः पदवृद्धिः, प्रागल्भ्यं प्रतिभान्वितत्वम् , गौरवं गुरुत्वम् , तेषु **प्रतिपत्तिः** ।"**प्रतिपत्तिः** प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति" इति मेदिनी ॥ गोपगीतिः गोपालगीतिका, लवलीफलं लवली स्वनामाख्यातवृक्षः तत्फलम् , तयोः, अपिशब्दात् नदीभेदे च **पारावती** । "**पारावती** गोपगीतिर्नदीभिल्लवलीफले" इति मेदिनी ॥ १६६ ॥ कर्दमे पङ्के, अपिशब्दात् केशादौ जरया जातायां श्वेततायां मांसादेर्वलीपलितमात्रे शैलजे तापे वृद्धे च **पलितम्** । "पलितं शैलजे तापे केशपाके च कर्दमे" इति मेदिनी ॥ विधौ चतुर्मुखे ब्रह्मणि, भूपे भूपाले च **प्रजापतिः** । "प्रजापतिर्ना दक्षादौ महीपाले विधातरि"इति मेदिनी॥शक्ते सामर्थ्ये,निवारणे निषेधे, वृत्तौ वर्तने,यथेप्सिते यथेष्टे **पर्याप्तम्** । " पर्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे " इति मेदिनी ॥ १६७ ॥ मृते परासौ प्राणिभेदे नर-कस्थे जीवे पिशाचभेदे वा च **प्रेतः** । " प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः " इति मेदिनी ॥ पाते-च्छुः पतनेच्छावान्, पक्षी विहङ्गमः, तयोः **पित्सन्** । " पित्सन्विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिषु " इति मेदिनी ॥ बिन्दौ अल्पेंऽशे, एणे शुभ्रबिन्दुमति मृगभेदे च **पृषत्** । अनयोः बिन्दुशुभ्रबिन्दुमन्मृगभेदयोः **पृषतः** । " पृषन्मृगे पुमान्बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽङ्गुभावपि " इति मेदिनी ॥ १६८ ॥ खातादौ खातादिकर्मणि विश्वजनोद्देशेन जलाशयदानादौ, पूरिते पूर्णे च **पूर्तम्** । " पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि " इति मेदिनी ॥ भ्रंशे पतने, रक्षिते पालिते, चकारात् ज्योतिषोक्ते कान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे च **पातः** । " पातो ना पतने त्राते " इति मेदिनी ॥ प्रेषिते प्रेरिते, चकारात् अभिक्षिते बाधिते तिरस्कृते च **प्रतिक्षिप्तम्** । " प्रतिक्षिप्तं वारिते स्यात्प्रेषिते पत्रके त्रिषु " इति मेदिनी ॥ " प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते " इति विश्वः ॥ सादरे आदरान्विते, अपिशब्दात् खाते

प्लुतः स्वरे चाभियुक्तहतौ च प्रार्थितौ स्मृतौ । द्विष्टेऽपि च प्रतिहतः पिण्डितं गुणिते घने ॥
प्राप्ते ज्ञाते परिगतं प्रपातौ भृगुनिर्झरौ।लोकायते कच्छपे च पञ्चगुप्तः स्मृतो बुधैः ॥ १७१ ॥
लब्धे समञ्जसे प्राप्तं पक्तिर्गौरवपाकयोः । पारिजातो देवतरौ मन्दारे पारिजातके ॥ १७२ ॥
वृत्तिवार्ताप्रवाहेषु प्रवृत्तिरथ घोटके । पाने च प्रीतिः सिक्ते तु प्रोक्षितं निहतेऽपि च ॥१७३॥
रामानुजे नाट्यशास्त्रे दौष्मन्तौ भरतो नटे।जिने पूज्ये च भगवान्भोगवानाढ्यनागयोः १७४
सेवाविभागयोर्भक्तिर्भवद्युष्मत्सदर्थयोः।पक्षिण्यां वाचि वृत्तौ च भारती भारतं पुनः ॥ १७५॥
जम्बूद्वीपे व्यासकृतौ भूतिर्भरणमूल्ययोः।कुड्यभेदनयोर्भित्तिर्भास्वन्तौ सूर्यभास्वरौ ॥ १७६॥
पृथिवीजननीगावो ब्रह्माण्याद्याश्च मातरः।मूर्धाभिषिक्तोऽमात्येऽपि मुक्तौ निर्वृतमोचितौ १७७

ज्ञाते हृष्टे च प्रतीतः । "प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु" इति मेदिनी ॥ १६९ ॥ स्वरे नादे, चकारात् तिर्यग्गतौ झम्पेन गतौ अश्वगतिभेदे च प्लुतः । "प्लुतं तुरङ्गमगतौ क्लीबं पुंसि त्रिमात्रके" इति मेदिनी । अभियुक्तः अभिहितः, हतः प्रसिद्धः, तयोः, चकारात् चालिते शत्रुसंरुद्धे च प्रार्थितः ।"प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहिते त्रिषु" इति मेदिनी ॥ द्विष्टे शत्रौ, अपिशब्दात् रुद्धे निरस्ते प्रतिस्खलिते च प्रतिहतम् । "भवेत्प्रतिहतं द्विष्टे प्रतिस्खलितरुद्धयोः" इति मेदिनी ॥ गुणिते गुणीकृते, घने घनीभूते च पिण्डितम् । "पिण्डितं गुणिते घने" इत्येव मेदिनी ॥ १७० ॥ प्राप्ते प्रयाते, ज्ञाते प्रसिद्धे च परिगतम् । "स्त्रियां परिगतं प्राप्ते विस्मृतज्ञातचेष्टिते" इति मेदिनी ॥ भृगुर्मुनिभेदः, निर्झरः पर्वतान्निःसृतजलप्रवाहः, तयोः प्रपातः । "देवमुन्यन्तरे शैले प्रपातो निर्झरे तटे इति मेदिनी" ॥ लोकायते चार्वाकमते कच्छपे कमठे च पञ्चगुप्तः । "पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान्" इति मेदिनी ॥ १७१ ॥ लब्धे लाभे, समञ्जसे उचिते युक्ते वा च प्राप्तम् । गौरवं गौरवणीयम्, पाकः पचनम्, तयोः पक्तिः । "पक्तिः स्त्री गौरवे पाके" इति मेदिनी ॥ देवतरौ सुरद्रुमभेदे, मन्दारे स्वनामाख्याते वृक्षे, पारिजातके पारिभद्रवृक्षे च पारिजातः । "पारिजातः सुरतरौ पारिभद्रतरावपि" इति मेदिनी ॥ १७२ ॥ वृत्तिर्निवर्त्तनम्, वार्ता वृत्तान्तः, प्रवाहः जलस्रोतः, तेषु प्रवृत्तिः । "प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्तने । अवन्त्यादौ च" इति मेदिनी ॥ घोटके अश्वे, पाने द्रवद्रव्यस्य गलाधःसंयोजने, चकारात् गतौ शुण्डायां च पीतिः । "पीतिर्नाऽश्वे स्त्रियां पाने" इति मेदिनी ॥ सिक्ते सेचनकर्मणि, निहते नाशिते, अपिशब्दात् हिते यज्ञार्थं संस्कृते मांसादौ च प्रोक्षितम् । "प्रोक्षितं निहते सिक्ते" इति मेदिनी ॥ १७३ ॥ रामानुजे दशरथकनिष्ठपुत्रे, नाट्यशास्त्रे भरतमुनिकृते नाटकशास्त्रे, दौष्मन्तौ चन्द्रवंशीये भरतराजपुत्रे, नटे नाटके च भरतः "भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्मन्तौ" इति मेदिनी ॥ जिने सर्वज्ञे, पूज्ये पूजनीये च भगवान् । "भगवान्ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यकम्" इति मेदिनी ॥ आढ्यः भोगयुक्तः, नागः सर्पः, तयोः भोगवान् । "अथ भोगवती नागपुरीनद्योरहौ पुमान्" इति मेदिनी ॥ १७४ ॥ सेवा आसेवनक्रिया आराधना वा, विभागः प्रसिद्धः, तयोः भक्तिः।"भक्तिर्विभागे सेवायां स्त्रियाम्" इति मेदिनी॥युष्मदर्थे युष्मच्छब्दस्य अर्थे, सदर्थे स्वार्थे विद्यमानार्थे च भवत् । "भवद्युष्मत्सतोस्त्रिषु" इति मेदिनी ॥ पक्षिण्यां विहङ्गयोषिति, वाचि सरस्वत्याम्, वृत्तौ अलङ्कारोक्ते वृत्तिभेदे च भारती "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः" इति साहित्यम् । "भारती । वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः" इति मेदिनी ॥१७५ ॥ जम्बूद्वीपे जम्बूवृक्षचिह्निते द्वीपे, व्यासकृतौ वेदव्यासरचनायां च भारतम् । "भारतं ग्रन्थभेदे स्याद्वर्षभेदे" इति मेदिनी । भरणं पोषणं, वा मूल्यं वेतनम्, तयोः भूतिः । "भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनी । कुड्यं गृहादेः कुड्यम्, भेदनं विदारणम्, तयोः भित्तिः । "भित्तिः कुड्यप्रदेशयोः" इति मेदिनी ॥ सूर्यः अर्कः, भास्वरः दीप्तियुक्तः अर्कवृक्षो वा, तयोः भास्वान् । "भास्वान्भास्वरसूर्ययोः" इति मेदिनी ॥ १७६ ॥ पृथिवी भूमिः, जननी अम्बा, गौः वृषः तेषु, ब्रह्माणी ब्राह्मी, आदिपदात् माहेश्वरी चण्डी वाराही वैष्णवी कौमारी

मूर्तं स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि।मतिरिच्छाप्यथ यतिः पाठच्छेदे मुनौ पुमान्॥१७८
न्याययोजनयोर्युक्तिः पाश्यब्धी यादसाम्पती। रेवती हलिपत्न्यां भे स्मरपत्न्यां रते रतिः१७९
रिक्तं वनेऽपि रीतिस्तु लोहकिट्टारकूटयोः । रोहितमृजुशक्रास्त्रे रक्ते ना मृगमीनयोः॥१८०॥
शैलभेदे सुवर्णालौ शङ्करेऽपि च रैवतः। स्वर्णाद्यक्तेऽपि रसितं कस्तूरीपृक्कयोर्लता ॥ १८१ ॥
वर्तुलाधीतयोर्वृत्तं वार्तं कुशलनीरुजोः । वासेऽपि वसतिर्वृक्षमात्रेऽपि च वनस्पतिः॥ १८२ ॥
वर्तने विवृतौ वृत्तिर्वर्तिर्दीपदशास्वपि।लाभसम्बन्धयोर्व्याप्तिर्विश्वस्ता विधवापि च ॥ १८३ ॥

चामुण्डा चार्चिका चात्र सङ्गृह्यन्ते, तथोक्तम्—"ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा । कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः" इति । तत्र च माता । "माता गौर्यादिजननी गोब्रह्माण्यादिभूमिषु" इति मेदिनी ॥ अमात्ये मन्त्रिणि, अपिशब्दात् भूपाले क्षत्रिये च मूर्धाभिषिक्तः । "मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च" इति मेदिनी ॥ निर्वृतः प्राप्तमोक्षः, मोचितः त्यक्तः, तयोः मुक्तः । "मुक्तः प्राप्तमोक्षे च मोचिते । त्रिषु स्त्री मौक्तिके" इति मेदिनी ॥ १७७ ॥ मूर्च्छाले मूर्च्छान्विते मूर्च्छाविशिष्टे वा, कठिने कर्कशे, मूर्तिमति देहे आकारयुक्ते वा, अपिशब्दात् न्यायोक्तेषु क्षितिजलपावकपवनमनःसु च मूर्तम् । "मूर्तं स्यात्त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि" इति मेदिनी ॥ इच्छा अभिलाषा तत्र, अपिशब्दात् ज्ञाने स्मृतौ च मतिः । "मतिः स्त्रीच्छाधियोः स्मृता"इति मेदिनी॥पाठच्छेदे उच्चारणकालविच्छेदे,छन्दोग्रन्थविख्याते जिह्वाया विश्रामस्थाने वा, मुनौ परिव्राजके संन्यासिनि बौद्धभिक्षौ वा च यतिः । "यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्" इति मेदिनी ॥१७८॥ न्यायः नयोपायः उचितो वा, योजनं संयोगः, तयोः युक्तिः ।"युक्तिः स्त्री न्याययोगयोः" इति मेदिनी॥पाशी पश्चिमदिशाधिपतिः वरुणः, अब्धिः समुद्रः, तयोः यादसाम्पतिः ।"यादसाम्पतिरम्भोधौ पश्चिमाशापतौ पुमान्" इति मेदिनी॥हलिपत्न्यां बलदेवपत्न्यां रेवतराजकन्यायाम्,भे अश्विन्यवधितः सप्तविंशतिसङ्ख्याते नक्षत्रे च रेवती । "रेवती हलिपत्न्यां स्यात्ताराभिन्मातृभेदयोः"इति मेदिनी॥स्मरपत्न्यां कामपत्न्याम्,रते रमणी च रतिः। "रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः" इति मेदिनी ॥ १७९ ॥ वने दावे, अपिशब्दात् शून्ये निरर्थके च रिक्तम् । "रिक्तं शून्ये वने" इति मेदिनी ॥ लोहकिट्टं लौहमलम्, आरकूटः पित्तलम्, तयोः तुकारात् प्रस्रावे क्षरणे सीमायां गतौ स्वभावे अलङ्कारोक्ते गौडयादिरचनाभेदे च रीतिः । "रीतिः स्त्रियां स्यन्दप्रचारयोः । पित्तले लोहकिट्टे च" इति मेदिनी ॥ ऋजुशक्रास्त्रे सरलेन्द्रचापे, रक्ते रुधिरे, मृगः स्वनामाख्यातः मृगविशेषः, मीनः स्वनामाख्यातो मत्स्यभेदः तयोश्च रोहितम् । "रोहितं रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे" इति मेदिनी ॥ १८० ॥ शैलभेदे द्वारिकासमीपस्थे पर्वतभेदे, सुवर्णालौ स्वर्णालुवृक्षे, शङ्करे शिवे, अपिशब्दात् दैत्यभेदे चतुर्दशसु मनुषु मनुभेदे च रैवतः । "रैवतस्तु सुवर्णालौ शैलभेदेऽपि शङ्करे" इति मेदिनी ॥ स्वर्णाद्यक्ते सुवर्णादिलेपने, अपिशब्दात् मेघादिशब्दे विहगादिशब्दे शब्दवति आस्वादिते च । रसितम् । "रसितः पुनः । रुतस्तनितयोः क्लीबं स्वर्णादिखचिते त्रिषु" इति मेदिनी ॥ कस्तूरी मृगनाभः, पृक्का शाकभेदः, तयोः लता । "लता प्रियङ्गुशाखयोः । पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च" इति मेदिनी ॥ १८१ ॥ वर्तुलं गोलाकारः पदार्थः, अधीतम् अध्ययनं पठितं वा, तयोः वृत्तम् । "वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि वृते मृते । दृढेऽन्यलिङ्गवान्क्लीबं छन्दश्चारित्रवृत्तिषु" इति मेदिनी ॥ कुशलम् आरोग्यम्, नीरुक् निरामयम्, तयोः वार्तम् । "वार्ता तु वर्तने वातिङ्गणे कृष्णाद्युदन्तयोः । निःसारारोग्ययोः क्लीबं वृत्तिमन्नीरुजोस्त्रिषु" इति मेदिनी ॥ वासे गृहे, अपिशब्दात् यामिन्यां निकेतने स्थाने च वसतिः । "वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने" इति मेदिनी ॥ वृक्षमात्रे द्रुममात्रके पुष्पं विना जायमानफले अश्वत्थादौ वृक्षे, अपिशब्दात् वनज्येष्ठवृक्षे च वनस्पतिः । "वनस्पतिर्ना द्रुमात्रे विना पुष्पे फलिद्रुमे" इति मेदिनी ॥ १८२ ॥ वर्तने वृत्तौ, विवृतौ विवरणे, च वृत्तिः । "वृत्तिर्विवरणाजीवकौशिकादिप्रवर्तनम्" इति मेदिनी ॥ दीपः, प्रदीपः, दशा दीपदशा, अथवा दीपदशा प्रदीपदशा, तासु अपिशब्दात् नयनाञ्जने लेखे

छेदे विनाशे विच्छित्तिर्विगतौ वीतनिष्प्रभौ।असाराश्वेभयोर्वीतं वीतमङ्कुशकर्मणि ॥१८४॥
अभ्युद्गते विकासिते चेष्टिते च विजृम्भितम्।विकृतौ रोगिबीभत्सौ वित्तं ख्याते धनेऽपि च ॥
दृढेऽपि व्यायतं शुक्तिर्मुक्तास्फोटाश्वलक्षमणोः।अस्त्रभेदेऽपि शक्तिःस्याच्छान्तिःस्यान्मङ्गले शमे
वेतसेऽपि च शीतो ना शुक्तं पूताम्लनिष्ठुरम्।शितिर्भूर्जे सिते कृष्णे श्रीमन्तौ तिलकेश्वरौ१८७
ब्रह्मशक्रौ शतधृती वार्तायां श्रवणे श्रुतिः । दुर्बले निशिते स्यातां शितशातावथो वचः१८८
सरस्वती सरिद्गोश्च सूतो वन्दिनि पारदे।स्मृतिः स्याद्धर्मशास्त्रेऽपि प्रवाहेऽपि च सन्ततिः१८९

गात्रानुलेपने भेषजनिर्माणवर्तौ च वर्तिः । "वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीषु योषिति" इति मेदिनी ॥ लाभः प्रसिद्धः, सम्बन्धः समृद्धिः, तयोः व्याप्तिः । "व्याप्तिर्व्यापनलम्भयोः" इति मेदिनी ॥ विधवा मृतपतिका तस्याम्, अपिशब्दात् जातविश्वासायां स्त्रियां च विश्वस्ता । "विश्वस्ता विधवा स्त्रियाम्" इति मेदिनी ॥ १८३ ॥ छेदे छेदने, विनाशे ध्वंसे अदर्शने वा च विच्छित्तिः । "विच्छित्तिरङ्गरागे विच्छेदे हारभेदके च स्त्री" इति मेदिनी ॥ वीतो गतः शान्तो वा, निष्प्रभाः दीप्तिरहितः, तयोः विगतः॥असारौ साररहितौ युद्धाय असमर्थौ वा, अश्वः हयः, इभः हस्ती, तयोः, अङ्कुशकर्मणि अङ्कुशक्रियायां च वीतम् । "वीतमसारगजे स्यादङ्कुशकर्मण्यसारतुरगे च" इति मेदिनी ॥१८४॥ अभ्युद्गते प्रकाशे,विकसिते विकासयुक्ते,चेष्टिते कायिके व्यापारे च विजृम्भितम् ।"विजृम्भितं तु चेष्टायां क्लीबं त्रिषु विकस्वरे"इति मेदिनी॥ रोगी रोगयुक्तः, बीभत्सःपापी जुगुप्सितो वा, तयोः विकृतम् ।"विकृतं त्रिषु बीभत्से रोगिते संस्कृतेऽपि च" इति मेदिनी॥ख्याते प्रसिद्धे, धने वसुनि, अपिशब्दात् विचारिते ज्ञाते लब्धे च वित्तम् ।"वित्तं क्लीबं धने वाच्यलिङ्गं ख्याते विचारिते" इति मेदिनी ॥१८५॥ दृढे प्रगाढे बलवति वा, अपिशब्दात् दीर्घे आयते दूरे अतिशये च व्यायतम् । "व्यायतं व्यावृते दीर्घे दृढे चातिशयेऽन्यवत्" इति विश्वः ॥ मुक्तास्फोटो मुक्तायै स्फोटः शुक्तिरेव, अश्वलक्ष्म अश्वावर्तकः, तयोः शुक्तिः ।"शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च । नख्यश्वावर्तदुर्नामुक्तास्फोटेषु च स्त्रियाम्" इति मेदिनी ॥ अस्त्रभेदे आयुधविशेषे अपिशब्दात् सामर्थ्ये स्त्रीदेवतायां न्यायायुक्ते कारणनिष्ठे कार्योत्पादनयोग्ये धर्मभेदे शब्दनिष्ठे अर्थबोधकतारूपे वृत्तिभेदे च शक्तिः । "शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्" इति मेदिनी ॥ मङ्गले प्रशस्ते अभीष्टार्थसिद्धौ वा, शमे अन्तरिन्द्रियदमने च शान्तिः ॥ १८६ ॥ वेतसे बहुवारवृक्षे असनवृक्षे वा, अपिशब्दात् शीतले जले हिमे शीतस्पर्शवति च शीतः । "शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु । वानीरे बहुवारे ना" इति मेदिनी ॥ पूतम् अपनीतबुसम् ; आम्लतक्रम् आम्लरसो वा, निष्ठुरं कर्कशम्, तेषु शुक्तम् । "शुक्तं पूताम्लनिष्ठुरे" इति मेदिनी ॥ भूर्जे भूर्जपत्रवृक्षे, सिते शुभ्रवर्णे, कृष्णे कालवर्णे च शितिः। "निशिते च शितिर्भूर्जे ना सितासितयोस्त्रिषु" इति मेदिनी ॥ तिलकः तिलकवृक्षः, ईश्वरः शिवः, तयोः श्रीमान् । "श्रीमांस्तिलकवृक्षे ना मनोज्ञ धनिके त्रिषु" इति मेदिनी॥ ॥१८७॥ब्रह्मा प्रजापतिः,शक्रः इन्द्रः, तयोः शतधृतिः।"भवेच्छतधृतिः पुंसि शक्रे च परमेष्ठिनि"इति मेदिनी॥ वार्तायां वृत्तान्ते, श्रवणे कर्णे च श्रुतिः । " श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम् " इति मेदिनी ॥ दुर्बले बलहीने, निशिते तीक्ष्णीकरणे शाणिते वा च शितशातौ । " शातं शितं च दुर्बले निशिते च " इति मेदिनी ॥ वचः वचनम्, तत्र ॥ १८८ ॥ सरित् नदी, गौः प्रसिद्धः, तत्र च सरस्वती । " सरस्वांस्तु नदे चाब्धौ नान्यवद्रसिके स्त्रियाम् । वाणीस्त्रीरत्नवाग्देवगोनदीषु नदीभिदि " इति मेदिनी ॥ बन्दिनि राजादेः स्तुतिपाठके, पारदे रसराजे च सूतः । "सूतस्तु सारथौ तक्षिण क्षत्त्रियाद्ब्राह्मणीसुते । बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु " इति मेदिनी ॥ धर्मशास्त्रे धर्मशासनशास्त्रे वेदार्थानुभवजन्ये वेदार्थानुवादके मुनिप्रणीते वाक्यरूपे शास्त्रे वा, अपिशब्दात् अनुभूतवस्तुनि उद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे च स्मृतिः । "ना त्रिपूते स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम् " इति मेदिनी ॥ प्रवाहे अविच्छिन्नजलधारायाम्, अपिशब्दात् गोत्रे पुत्रे कन्यायां विस्तारे पङ्क्तौ च सन्ततिः । " सन्ततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रयोः " इति मेदिनी ॥ १८९ ॥

**रणे सभायां समितिः स्तिमितौ क्लिन्ननिश्चलौ । स्थपतिः कञ्चुकी कारुभेदो गीर्पतियागकृत् सम्बन्धेऽपि च संवित्तिर्मर्यादायामपि स्थितिः । सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी सूनृतं कुशले सत्ये सुदोहा गौश्च सुव्रता।शर्कराऽपि सिताऽथोर्ध्वे सत्प्रतिज्ञेऽपि च स्थितः॥१९२ सती कात्यायनीसाध्व्योः सङ्घातो नरके चये । हरीतकी हैमवती गौरी शुक्लवचे अपि॥१९३ स्त्री हरिद्दिशि वर्णे ना दूर्वाऽपि हरिता मता।अतिथिः कुशपुत्रेऽपि हरीतक्यपि चाव्यथा १९४ अपेक्षाऽऽलम्बनं चास्था स्यादर्थो विषयेऽपि च । भटे पुंस्यप्रतिरथं यात्रामङ्गलसाम्नि च॥१९५॥ उन्माथः कूटयन्त्रेऽपि कुथः कम्बलबर्हिषोः। काशे क्षुते च क्षवथुर्ग्रन्थो द्वात्रिंशदक्षरे॥१९६॥**

रणे युद्धे, सभायां बहूनां समावेशनस्थाने च समितिः । " समितिः सम्पराये स्यात्सभायां सङ्गमेऽपि च " इति मेदिनी ॥ क्लिन्नः आर्द्रः, निश्चलः चञ्चलरहितः, तयोः स्तिमितः । " स्तिमितो निश्चलार्द्रयोः" इति मेदिनी । " स्तिमितोऽचञ्चले क्लिन्ने' इति विश्वः ॥ कञ्चुकी राज्ञामन्तःपुराधिकारी, द्वारपालो वा, कारुभेदः, शिल्पिभेदः, गीर्पतियागकृत् बृहस्पतिनामकयागकर्ता, तत्र स्थपतिः । "स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु " इति मेदिनी ॥ १९० ॥ सम्बन्धे जनस्याविवादे, अपिशब्दात् ज्ञाने प्रतिपत्तौ बुद्धौ अङ्गीकारे च संवित्तिः । "संवित्तिः प्रतिपत्तौ स्यादविवादे जनस्य च" इति मेदिनी ॥ मर्यादायां सीमायाम्, अपिशब्दात् न्यायपथावस्थाने स्थाने च स्थितिः । " स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि " इति मेदिनी ॥ लाङ्गलरेखा लाङ्गलपद्धती, व्योमगङ्गा भद्राश्ववर्षस्थितगङ्गा, जानकी जनकराजदुहिता, तासु सीता । " सीता लाङ्गलपद्धती । वैदेहीस्वर्गगङ्गे च " इति मेदिनी ॥१९१॥ कुशले मङ्गले सत्ये सत्यवचने च सूनृतम् । " सूनृतं मङ्गलेऽपि स्यात्प्रियसत्यवचस्यपि " इति मेदिनी ॥ सुदोहा गौः सुशीला गौः तस्याम्, चकारात् सुन्दरव्रतयुक्तायां च सुव्रता । " सुव्रता सुखसंदोहशोभनव्रतयोरपि " इति मेदिनी ॥ शर्करा खण्डविकारः तत्र, अपिशब्दात् धवलास्त्रियां च सिता । " सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री " इति मेदिनी ॥ ऊर्ध्वे ऊर्ध्वस्थतया दण्डायमाने, सत्प्रतिज्ञे शोभनस्वीकारे, अपिशब्दात् स्थिते निश्चले स्थितिशालिनि च स्थितः । स्थितं प्रतिज्ञातवति चोर्ध्वनिश्चलयोस्त्रिषु " इति मेदिनी ॥ १९२ ॥ कात्यायनी दक्षकन्या, साध्वी पतिव्रता, तयोः सती । " सन्साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम्" इति मेदिनी ॥ नरके नरकभेदे, चये समूहे च सङ्घातः । " सङ्घातः स्यात्पुंसि घाते संहतौ नरकान्तरे " इति मेदिनी ॥ हरीतकी स्वनामाख्यातवृक्षः तत्फलं च तत्र, गौरी पार्वती, शुक्लवचा श्वेतवचा, तयोश्च अपिशब्दात् हैमवती । "हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः" इति मेदिनी ॥ १९३ ॥ दिशि दिशायाम्, वर्णे नीलपीतमिश्रितवर्णे पलाशवर्णे वा, च हरित् ।"हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः" इति मेदिनी ॥ दूर्वा स्वनामाख्यातः घासभेदः, तत्र अपिशब्दात् जयन्त्यां हरिद्रायां कपिलद्राक्षायां नीलदूर्वायां च हरिता ।"हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्" इति मेदिनी ॥ इति तकारान्ताः ॥ अथ थान्तानाह ॥ कुशपुत्रे कुशराजसूनौ, अपिशब्दात् अध्वयोगेन आगन्तुके गृहागते विप्रे च अतिथिः । "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु" इति मेदिनी ॥ हरीतकी स्वनामाख्यातवृक्षः तत्फलं च तत्र, अपिशब्दात् शुण्ठ्यां च अव्यथा । "अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम्" इति मेदिनी ॥ १९४ ॥ अपेक्षा आकाङ्क्षा कार्यकारणयोरवश्यसम्बन्धः, आलम्बनम् आश्रयः, तयोः चकारात् श्रद्धायां स्थितौ प्रयत्ने प्रतिष्ठायां स्थाने च आस्था । "आस्था त्वालम्बनस्थानयत्नापेक्षासु योषिति" इति मेदिनी ॥ विषये इन्द्रियगोचरे शब्दादौ, अपिशब्दात् अभिधेये धने वस्तुनि प्रयोजने निवृत्तौ हेतौ प्रकारे अभिलाषे उद्देशे च अर्थः । "अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी ॥ भटे योधे, यात्रामङ्गलं युद्धसमये यात्राकृतमङ्गलम्, साम सामावयवभेदः, तत्र च, चकारात् अतुल्ये विष्णौ युद्धार्थयाने च अप्रतिरथम् । ॥ १९५ ॥ कूटयन्त्रे आमिषप्रदानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे, अपिशब्दात् बिलौकयोत्थापने हिंसने च उन्माथः । "उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्" इति मेदिनी ॥ कम्बलः

धनं च ग्रन्थना चाऽपि तीर्थं तूपाययोगयोः । कटचंशघोणयोः प्रोथो वीथिः पङ्क्तौ गृहांशके॥
वानप्रस्थो मधूकेऽपि स्यात्तृतीयेऽपि चाश्रमे।काकोल्यामलकी ब्राह्मी वयःस्था तरुणे त्रिषु१९८
सूर्यमन्थानयोर्मन्थः साक्तवेऽप्यथ मन्मथः । कपित्थे कामदेवेऽपि रथः पौरुषदेहयोः ॥१९९॥
पुंसि स्त्रियां च षड्ग्रन्थः करञ्जवचयोः क्रमात्।सिद्धार्थः सर्षपे बुद्धे संस्था स्थितिविनाशयोः॥
संस्थः समाप्तिक्रतुषु वरूथो निजराष्ट्रकः। सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्२०१॥
अष्टापदं शारिफले सुवर्णोऽस्त्री पशौ पुमान्।वामनेभ्यां स्त्रियां क्लीबं केयूर नाऽङ्गदः कपौ२०२
अर्बुदो रुजि सङ्ख्यायामामोदो गन्धहर्षयोः । रहस्ये स्यादुपनिषत्सप्रीपसदनेऽपि च॥२०३॥

हस्तिपृष्ठस्थश्चित्रकम्बलः, बर्हिर्मयूरः, तयोः कुथः । "कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि" इति मेदिनी ॥ काशे रोगभेदे, क्षुते नासातः वायुनिःसरणजे शब्दे च क्षवथुः । "क्षवथुर्ना क्षुते काशे" इति मेदिनी ॥ द्वात्रिंशदक्षरे अनुष्टुप्छन्दस्के पद्ये ॥ १९६ ॥ धने मूल्ये, ग्रन्थनायां गुम्फने, अपिशब्दात् शास्त्रे च ग्रन्थः । "ग्रन्थो ग्रन्थनाधनयोः स्याच्छास्त्राक्षरसङ्ख्ययोः"इति मेदिनी।।उपायः राज्ञां रिपुनिराकरणहेतुः सामादिः साधनो वा, योगः ध्यानम् , तयोः, तुग्रहणात् शास्त्रे यज्ञे क्षेत्रे स्त्रीरजसि, घट्टादौ नद्यादेरवतरेण विद्यादिगुणयुतपात्रे उपाध्याये मन्त्रिणि योनौ दर्शने ब्राह्मणे आगमे निदाने अग्नौ उपकूपजलाजये दैहिके मानसिके भौमिके त्रैविधे पवित्रस्थाने च तीर्थम् । "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च" इति मेदिनी ॥ कटचंशः कटीभागः, घोणा अश्वनासिका नासिकामात्रं वा, तयोः प्रोथः।"प्रोथोऽस्त्री हयघोणायां ना कटयामध्वगे त्रिषु" इति मेदिनी ॥ पङ्क्तौ श्रेणौ, गृहांशके गृहाङ्गे च वीथिः । "वीथी" अप्यत्र । "वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तारवर्त्मनोः" इति मेदिनी ॥ १९७ ॥ मधूके मधूकवृक्षे, तृतीये आश्रमे वानप्रस्थाश्रमे च, अपिशब्दात् पलाशवृक्षे च वानप्रस्थः । "वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान्" इति मेदिनी।।काकोली स्वनामाख्यातः औषधभेदः , आमलकी धात्री, ब्राह्मी शाकभेदः तत्र च, तरुणे यौवने च वयःस्थाः । "वयःस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु" इति मेदिनी ॥ १९८ ॥ सूर्यः अर्कः अर्कवृक्षो वा, मन्थानः मन्थनदण्डः तयोः, साक्तवे सक्तुभिः कृतपेयभेदे च, अपिशब्दात् नेत्रमले किरणे आलोडनादौ च मन्थः ।"मन्थः स्यात्पुंसि मन्थाने साक्तवे च दिवाकरे" इति मेदिनी ॥ कपित्थे स्वनामाख्यातवृक्षे, कामदेवे कन्दर्पे, अपिशब्दात् कामचिन्तायां च मन्मथः । "मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे" इति मेदिनी ॥ पौरुषं पुरुषनिवृत्तः स्वनामाख्यातयानभेदः विक्रमो वा, देहं शरीरम् , तयोः, रथः । "रथः पुमानावयवे स्यन्दने वेतसेऽपि च" इति मेदिनी ॥ १९९ ॥ करञ्जः स्वनामख्यातवृक्षभेदः, वचा औषधविशेषः, तयोः षड्ग्रन्थः ।"षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान्" इति मेदिनी ॥ सर्षपे श्वेतसर्षपे, बुद्धे गौतमबुद्धे च सिद्धार्थः । "सिद्धार्थस्तु पुमाञ्छाक्यसिंहे च सितसर्षपे" इति मेदिनी ॥ स्थितिः स्थानम्, विनाशः नाशः, तयोः संस्था ॥ २०० ॥ समाप्तिः निष्ठा, क्रतवो यज्ञभेदाः, तेषु संस्थः । "संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः" इति मेदिनी ॥ निजराष्ट्रकः स्वजनपदः तत्र, वरूथः । "वरूथो रथगुप्तौ स्याद्वरूथं चर्मवरमनोः" इति मेदिनी ॥ भक्तपुलाके अन्नगुलिकायाम् , मधूच्छिष्टे मधुनः उच्छिष्टे अवशिष्टे वा च सिक्थः । "सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्" इत्येव मेदिनी ॥ २०१ ॥ इति थकारान्ताः ॥ अथ दान्तानाह ॥ शारिफले शारिफलके सुवर्णे, कनके, पशौ शरभे च अष्टापदम । "अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च । अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान्" इति मेदिनी ॥ वामनेभ्यां दक्षिणांदिग्गजकारिण्याम् , केयूरे बाहुभूषणे, कपौ वालिपुत्रे वानरे च अङ्गदः । "अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् । अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति" इति मेदिनी॥२०२॥ रुजि रोगभेदे, सङ्ख्यायां दशकोटिसङ्ख्यायाम् अर्बुदः । "अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम् । महीधरविशेषे ना" इति मेदिनी ॥ गन्धः अतिदूरव्यापी गन्धः गन्धमात्रं वा, हर्षः सुखम् इष्टाधिगमजन्यानन्दो वा, तयोः आमोदः। "आमोदो गन्धहर्षयोः" इत्येव मेदिनी ॥

कन्दोऽस्त्री शूरणे मूले राजलिङ्गविषाणयोः । स्त्री ककुत्कटुकन्दस्तु शृङ्गवेररसोनयोः ॥२०४॥
स्त्री गम्भार्यां क्लीबमब्जे दिङ्नागे कुमुदः कपौ । पुष्पे क्लीबं भ्रमौ कुन्दः क्षोदो रजसि पेषणे॥
शिवजूटे वराटेऽपि कपर्दोऽथाऽमये गदः।विष्णोर्भ्रातरि चास्त्रे स्त्री पलाशे गरुति च्छदः २०६
देशे जने जनपदो निषादौ श्वपचस्वरौ । वाक्ये शब्दे प्रदेशेऽपि पदं पादस्तु न द्वयोः॥२०७॥
मूले प्रत्यन्तशैले च प्रसादस्त्वनुरोधने।स्वास्थ्ये काव्यगुणे चाथ प्रतिपत्तिथिसंविदोः २०८॥
विप्रुट् ज्ञाता च बिन्दुः स्यान्मन्दौ स्वैरशनैश्चरौ।हस्तिभेदश्चाथ मदःस्यात्कस्तूरीभदानयोः२०९
गर्वे शुक्रेऽथ माकन्द्यामलक्यां नाम्रपादपे । मर्यादा धारणासीम्नोर्महानादो गजेऽपि च २१०॥

रहस्ये गोप्ये, समीपसदने आसन्नगृहे, अपिशब्दात् ब्रह्मविद्यायां तत्प्रतिपादके वेदशिरोभागे वेदान्ते च उपनिषद् । "भवेदुपनिषद्धर्मेवेदान्ते विजने स्त्रियाम्" इति मेदिनी ॥ २०३ ॥ शूरणे स्वनामाख्याते मूलभेदे, मूले शस्यमात्रमूले च कन्दः । "कन्दोऽस्त्री शूरणे शस्यमूले जलधरे पुमान्" इति मेदिनी ॥ राजलिङ्गं श्वेतच्छत्रादिनृपचिह्नम् , विषाणं वृषाङ्गम् , तयोः ककुद् । "ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राड्ध्वजे वरे" इति मेदिनी ॥ शृङ्गवेरम् आर्द्रकम् , रसोनः लशुनम्, तयोः कटुकन्दः।"कटुकन्दः पुमाञ्छिग्रौ शृङ्गवेररसोनयोः"इति मेदिनी॥ ॥२०४॥ गम्भार्यां द्रुमभेदे, अब्जे पद्मे, दिङ्नागे दिग्गजे, कपौ वानरभेदे च कुमुदः । "कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ । गम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे" इति मेदिनी ॥ पुष्पे पुष्पवृक्षभेदे माघ्यकुसुमे वा, भ्रमौ भ्रमियन्त्रे च कुन्दः ।"कुन्दो माघ्ये स्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना" इति मेदिनी॥रजसि धूलौ, पेषणे चूर्णने च क्षोदः।"क्षोदः स्यात्पुंसि रजसि पेषणे च प्रकीर्तितः"इति मेदिनी॥२०५॥शिवजूटे हरजटायाम् ,वराटे कपर्दके, अपिशब्दात् तुलामानभेदे च कपर्दः ।"कपर्दः खण्डपरशोर्जटाजूटे वराटके"इति मेदिनी॥आमये रोगे, विष्णोर्भ्रातरि श्रीकृष्णानुजे,अस्त्रे स्वनामाख्याते लौहादिकीलिते आयुधे च गदः ।"गदो भ्रातरि विष्णोः स्यादामये नाऽयुधे गदे"इति मेदिनी॥पलाशे पत्रे,गरुति पक्षिणां पक्षे च छदः ।"छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः" इति मेदिनी॥२०६॥देशे भूगोलविभागमात्रे कुरुपञ्चालादिषु प्रसिद्धजनपदेषु स्थानमात्रे, जने लोके च जनपदः । अत्र "जानपदः" इत्यपि पाठः । "भवेज्जनपदो जानपदोऽपि जनदेशयोः " इति मेदिनी ॥ श्वपचः चण्डालः ब्राह्मणात् शूद्रायामुत्पन्नः पारशवाख्यो वर्णसङ्करश्च, स्वरः ध्वनिभेदः, तयोः निषादः।"निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे" इति मेदिनी॥ वाक्ये स्वार्थबोधसमाप्ते पदसमुदाये, "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" इति, शब्दे सुप्तिङन्तरूपे शब्दभेदे, प्रदेशे एकदेशे, अपिशब्दात् चिह्ने स्थाने उद्यमे त्राणे वस्तुनि श्लोकपादे च पदम् । "पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः । श्लोकपादेऽपि च क्लीबं पुंल्लिङ्गः किरणे पुनः" इति मेदिनी ॥ मूले वृक्षादेर्मूले, प्रत्यन्तशैले बृहत्पर्वतसमीपस्थे पर्वते, चकारात् चरणे चतुर्थांशे च पादः । "पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते" इति मेदिनी ॥ २०७ ॥ अनुरोधने आराध्यादेरिष्टसम्पादनेच्छायाम् अनुग्रहे वा, स्वास्थ्ये आरोग्ये काव्यगुणे अलङ्कारशास्त्रोक्ते प्रसादगुणे, चकारात् प्रसक्ते गुरुजनभुक्तावशिष्टे च प्रसादः । "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसक्तिषु" इति मेदिनी ॥ तिथिः पक्षारम्भकः तिथिः, संविद् बुद्धिः प्रतिपत्तिर्वा, तयोः प्रतिपद् । "प्रतिपत्स्त्री तिथौ मता" इति मेदिनी ॥ २०८ ॥ विप्रुट् वेदपाठकाले मुखनिर्गतजलबिन्दुः, ज्ञाता वेदिता, तयोः चकारात् अल्पांशे च बिन्दुः । "विन्दुः" इति वा पाठः । "बिन्दुर्दन्तक्षतान्तरे । भ्रुवोर्मध्ये रूपकार्थप्रकृतौ पृषते पुमान्" इति मेदिनी । स्वैरं स्वेच्छा स्वतन्त्रं वा, शनैश्चरः शनिग्रहः, तयोः, हस्तिभेदः हस्तिनां जातिविशेषः, तत्र च मन्दः । "मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे च भाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ" इति मेदिनी ॥ कस्तूरी मृगनाभिजातं गन्धद्रव्यम्, इभादानं हस्तिगण्डजलम्, तयोः ॥ २०९ ॥ गर्वे अहङ्कारे, शुक्रे रेतसि च मदः । "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति मेदिनी ॥ आमलक्यां धात्रीवृक्षे, आम्रपादपे सहकारवृक्षे च माकन्दी । "माकन्दः सहकारे स्त्री धात्रीनगरभेदयोः" इति मेदिनी ॥ धारणा आत्मनिचित्तस्य स्थितिः, "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इति, सीमा प्रसिद्धा,

**मेनादास्तु त्रयश्छागमार्जारकशिखण्डिनः । विशदः पाण्डरे व्यक्ते शारदो जलदेऽपि च २११ स्त्रियां च शारदी तोयपिप्पलीसप्तपर्णयोः । संवित्सङ्केतकेऽपि स्यात्समर्यादोऽन्तिके स्थिरे २१२॥ व्यञ्जने सूपकारे च सूदः सूपवदिष्यते । घर्मस्वेदनयोः स्वेदः सम्पल्लक्ष्म्यां समुच्चये॥२१३॥ खण्डे ना समभागेऽर्धमवधिः सीमकालयोः । आविद्धं प्रहतं वक्रमानद्धं वाद्यबद्धयोः ॥२१४॥ अलङ्कारेऽपि चाबद्धः प्रत्याशाऽप्याधिरुच्यते । कुटुम्बव्यापृते धर्मचिन्तायां च विशेषणे २१५ उपाधिरुग्रगन्धस्तु वचा क्षेत्रयमानिके । उपलब्धिर्मतिप्राप्त्योर्ऋद्धिः सम्पदि चौषधे ॥२१६ ॥ राहौ शिरःशून्यकाये कबन्धः क्लीबमम्बुनि।गोधा तले निहाकायां गन्धो गर्वे लवेऽपि च २१७**

तयोः मर्यादा । "मर्यादा सीमनि स्थितौ" इति, मेदिनी ॥ गजे हस्तिनि, अपिशब्दात् सिंहे उष्ट्रे गर्जन्मेघे च महानादः । "महानादः कुञ्जरे स्याद्वर्षुकाब्दे महास्वने" इति मेदिनी ॥ २१० ॥ छागः अजः, मार्जारकः बिडालः, शिखण्डी मयूरः, एतेषु त्रिष्वर्थेषु मेनादः । "मेनादस्तु पुमान्केकिमार्जारच्छागलेषु च" इति मेदिनी ॥ पाण्डरे शुभ्रवर्णे, व्यक्ते स्फुटे प्राज्ञे वा च विशदः । "विशदः पाण्डरे व्यक्ते" इत्येव मेदिनी ॥ जलदे मेघे, अपिशब्दात् श्वेतपद्मे काशे वकुले हरिन्मुद्गे च शारदः । "शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः । सस्ये क्लीबं शरज्जाते नूतनाप्रतिभे त्रिषु" इति मेदिनी ॥ २११ ॥ तोयपिप्पली शाकभेदः लाङ्गली वा, सप्तपर्णः स्वनामख्यातवृक्षः, तयोः शारदी । "जलपिप्पल्यां सप्तपर्णे च शारदी" इति विश्वः ॥ सङ्केतके मनोगतभाव-व्यञ्जनाय कृते हस्तादिचालनरूपे व्यापारे, अपिशब्दात् ज्ञाने प्रतिपत्तौ बुद्धौ अङ्गीकारे समाधौ नाम्नि आचारे युद्धे तोषे च संविद् । "संवित् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे । सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे" इति मेदिनी ॥ अन्तिके समीपे, स्थिरे सीमायां पर्वते वा च समर्यादः । "समर्यादः समीपे ना मार्यादास-हिते त्रिषु" इति मेदिनी॥२१२॥व्यञ्जने सूपशाकादौ व्यञ्जनभेदे, सूपकारे सूपकारके च सूदः। "सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे"इति मेदिनी॥घर्मः श्रमार्तस्य गात्रान्निस्यन्दि जलम्,आतपो वा, स्वेदनं गात्रादितो घर्मादे-र्निस्सारणव्यापारः, तयोः स्वेदः । "स्वेदस्तु स्वेदने घर्मे " इति मेदिनी ॥ लक्ष्म्यां विभवे, समुच्चये राशीकरणे च सम्पद् । "सम्पद्भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम्" इति मेदिनी ॥२१३॥ इति दकारान्ताः ॥ अथ धान्तानाह ॥ खण्डे भेदे, समभागे तुल्यांशे अर्धम्॥ "अर्धं समांशे खण्डने" इति मेदिनी॥ सीमा मर्यादा, कालः क्षणदण्डादिसमयः, तयोः अवधिः ॥ " अवधिस्त्ववधाने स्यात्सीम्नि काले बिले पुमान् " इति मेदिनी ॥ प्रहतं पराहतम्, वक्रं कुटिलम्, तत्र आविद्धम् । " आविद्धो वाच्यलिङ्गः स्यात्कुटिले च पराहते " इति मेदिनी ॥ वाद्यं चर्मणा बद्धमुखं पटहमुरजादि, बद्धः कृतबन्धनः, तयोः आनद्धम् । " आनद्धं मुरजादौ च क्लीबं स्यात्सन्दिते त्रिषु " इति मेदिनी ॥ २१४ ॥ अलङ्कारे भूषणविशेषे, अपिशब्दात् दृढबन्धने प्रेम्णि योक्त्रे बद्धे आप्ते प्रतिरुद्धे च आबद्धः। " आबद्धो दृढबन्धे स्यात्प्रेम्ण्यलङ्कारयोक्त्रयोः " इति मेदिनी ॥ प्रत्याशा प्रतीच्छा तत्र अपिशब्दात् मानसदुःखे अधिष्ठाने बन्धके व्यसने च आधिः । " आधिः पुमांश्चित्तपीडा प्रत्या-शाबन्धकेषु च " इति मेदिनी ॥ कुटुम्बव्यापृते सन्ततिव्यापारयुक्ते, धर्मचिन्तायां धर्मसम्बन्धवितर्के च ॥ ॥ २१५ ॥ उपाधिः । " उपाधिर्धर्मचिन्तायां कुटुम्बव्यापृते छले । विशेषणे " इति मेदिनी ॥ वचा स्वना-माख्यातं गन्धद्रव्यम्, क्षेत्रं प्रसिद्धम्, यमानिका हिङ्गु तत्र च तुकारात् चम्पके कट्फले अर्जवृक्षे लशुने उत्कटगन्धाढ्ये अजमोदायां च उग्रगन्धः । " उग्रगन्धाऽजमोदायां वचायां छिक्कौषधौ " इति मेदिनी ॥ मतिर्ज्ञानम्, प्राप्तिर्लाभः, तयोः उपलब्धिः। " उपलब्धिमतौ प्राप्तावपि ज्ञाने च योषिति " इति मेदिनी ॥ सम्पदि सम्पत्तौ, औषधे ओषधिभेदे, चकारात् वृद्धौ देवभेदे च ऋद्धिः । " ऋद्धिः स्यादोषधीभेदे समृद्धा-वपि योषिति " इति मेदिनी ॥ २१६ ॥ राहौ स्वनामके ग्रहे, शिरःशून्यकाये मस्तकशून्यक्रियायुक्तदेहे, "मनु-ष्याणां सहस्रेषु हतेषु हृतमूर्धसु । तदावेशात्कबन्धः स्यादेको मूर्धा क्रियान्वितः" इत्युक्ते, अम्बुनि जले च कबन्धः।"कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे।क्लीबं जले पुंस्युदरे राहुरक्षोविशेषयोः"इति मेदिनी॥तले स्वरूपे,

दोग्धा गोपे कवौ वत्से दुग्धं क्षीरे प्रपूरिते। दिग्धं लिप्ते विषाक्ते च दुर्विधौ खलदुर्गतौ २१८
रोधे निरोधो नाशे च बुद्धो ज्ञाते जिने बुधे। निषेधबुद्धयोर्बाधो रौहिणेये कवौ बुधः२१९॥
दैत्यचैत्रवसन्तेषु द्रुमभेदे च ना मधुः। मिद्धं चिन्तातिसंक्षेपे निद्रायां चाऽथ मागधी२२०॥
पिप्पल्यां यूथिकायां ना लग्ने मगधजे त्रिषु।लशुनेऽतिविषायां च शुण्ठ्यामपि महौषधम्२२१
सीता योजनगन्धा स्यात्कस्तूरी व्याससूरपि। विधिर्ब्रह्मणि काले च प्रकारे वेधने विधा २२२
पृक्का महिला च वधूर्विश्वस्तोऽनुद्धतश्च विश्रब्धः।विश्रब्धं बाढार्थे शुद्धं त्रिषु पूतकेवलयोः२२३
श्राद्धं निवापे श्रद्धालौ त्रिषु साधुर्धनिन्यपि। स्कन्धः सङ्घेऽपि सिद्धस्तु नित्यनिष्पन्दनाकिषु

निहाकायां गोधिकायां च गोधा। "गोधा तलनिहाकयोः" इति मेदिनी॥ गर्वे अहङ्कारे, लवे लेशे, अपिशब्दात् सम्बन्धे गन्धके शोभाञ्जने घृष्टचन्दनादीनां घ्राणग्राह्ये गुणभेदे च गन्धः। "गन्धः प्रतिवेश्यामोदलेशसम्बन्धगन्धके" इति मेदिनी॥ २१७॥ गोपे गोपाले, कवौ सूक्ष्मदर्शिनि पण्डिते काव्यकर्त्तरि वा, वत्से गवादिशिशौ च दोग्धा। "दोग्धाऽर्थोपजीविकवौ वत्सगोपालयोः पुमान्" इति मेदिनी॥ क्षीरे पयसि, प्रपूरिते प्रकर्षेण पूर्णे च दुग्धम्॥ "दुग्धं प्रपूरिते क्षीरे दुग्धी क्षीराविकौषधौ" इति मेदिनी॥ लिप्ते लेपने, विषाक्ते विषपीते बाणे, चकारात् वह्नौ प्रबन्धे स्नेहे च दिग्धम्। "दिग्धो विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गकः" इति मेदिनी॥ खलः दुर्जनः मूर्खो वा, दुर्गतः दरिद्रः, तयोः दुर्विधः। "दुर्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च" इति मेदिनी॥ २१८॥ रोधे आवरणे, नाशे विनाशे, चकारात् प्रलये प्रतिरोधे च निरोधः। "निरोधो नाशरोधयोः" इति मेदिनी॥ ज्ञाते ज्ञातरि, जिने सर्वज्ञे, बुधे पण्डिते च बुद्धः। "बुद्धो जिने लब्धवर्णे पुंसि स्याद् बुधितेऽन्यवत्" इति मेदिनी॥ निषेधः प्रतिरोधः, बुद्धः बोधप्रतिबन्धः, तयोः बाधः। "बाधा दुःखे निषेधे च" इति मेदिनी॥ रौहिणेये बृहस्पतिभार्यायां तारायां चन्द्रेण जनिते पुत्रे ग्रहभेदे सौम्ये, कवौ पण्डिते च बुधः। "बुधः सौम्ये च पण्डिते" इति मेदिनी॥ २१९॥ दैत्यः कुम्भीनस्याः भर्ता दैत्यभेदः, चैत्रः मासविशेषः, वसन्तः ऋतुभेदः तेषु, द्रुमभेदे वृक्षभेदे च मधुः। "मधु पुष्परसक्षौद्रमद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति मेदिनी॥ चिन्तातिसंक्षेपे चिन्ता प्रागनुभूतज्ञानजन्यसंस्कारोद्बोधः पूर्वदृष्टपदार्थस्मरणं वा, तस्याः अतिसंक्षेपः अल्पवाक्यादिना प्रकाशनम्, तत्र निद्रायां च मिद्धम्। "मिद्धं चिन्तातिसंक्षेपे क्लीबमालस्यनिद्रयोः" इति मेदिनी॥ २२०॥ पिप्पल्यां कणायाम्, यूथिकायां पुष्पप्रधानवृक्षे, लग्ने स्तुतिपाठके, मगधजे मगधदेशजाते च मागधी। "मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे। पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकबन्दिनोः" इति मेदिनी॥ लशुने स्वनामाख्याते भेषजे, अतिविषायाम्, शुण्ठ्यां स्वनामाख्यातायाम्, अपिशब्दात् वाराहीकन्दे वत्सनाभे विषे पिप्पल्यां वीर्याद्योषधमात्रे च महौषधम्। "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति मेदिनी॥ २२१॥ सीता जनकराजदुहिता तस्याम्, कस्तूरी मृगनाभिः, व्याससूः व्यासमाता सत्यवती, तयोश्च, अपिशब्दात् तद्वति च योजनगन्धा। "योजनगन्धा कस्तूर्यां सीतायां व्यासमातरि" इति मेदिनी॥ ब्रह्मणि प्रजापतौ, काले, चकारात् भाग्ये क्रमे प्रवर्तनारूपे नियोगे वाक्ये विष्णौ कर्मणि गजभक्ष्यान्ने वैद्ये अप्राप्तप्रापकरूपे वाक्यभेदे "संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" इत्युक्ते सूत्रभेदे च विधिः। "विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी॥ प्रकारे भेदे, वेधने वेधनकर्मणि च विधा। "विधा गजान्ने ऋद्धौ च प्रकारे वेधने विधौ" इति मेदिनी॥ ॥ २२२॥ पृक्का शाकभेदः, महिला योषित् भर्या वा, तयोः, चकारात् नवोढायां पुत्रजायायां शट्यां च वधूः। "वधूः स्त्री शारिवौषधौ। स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च" इति मेदिनी॥ विश्वस्तः जातविश्वासः, अनुद्धतः वाक्याद्यचञ्चलः विनीतो वा, तयोः बाढार्थे, चकारात् शान्ते च विश्रब्धः। "विश्रब्धोऽनुद्धटेऽपि स्याद्गाढविश्वस्तयोस्त्रिषु" इति मेदिनी॥ पूतं पवित्रम्, केवल मेकं कृत्स्नं वा, तयोः शुद्धम्। "शुद्धं स्यात्त्रिषु केवले। निर्दोषे च पावित्रे च" इति मेदिनी॥ २२३॥ निवापे पितृुद्देशेन दाने, पित्रादिभ्यः श्रद्धया देये द्रव्ये च, "श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते" इत्युक्ते, श्रद्धायुक्ते च श्राद्धम्। "श्राद्धं

**सन्धिः पुमान्सुरङ्गायां भेदे संघट्टने भगे । कुले ख्यातौ चाभिजनः स्यादध्वा कालवर्त्मनोः २२५**
**अतिवृत्तेऽवदानं स्यात्कर्मखण्डनयोरपि । अग्रजन्माऽग्रजे विप्रे स्यादन्नं भक्तभुक्तयोः॥२२६॥**
**विनीते विप्रभेदे चानूचानोऽर्थी विवाद्यपि । अन्तावसायी चाण्डाले मुनिभेदे च नापिते२२७**
**अश्वकुत्सितयोरर्वा वज्रे विद्युति चाशनिः । वर्णमात्रे विसर्गे चाभिनिष्णानोऽथ हैहये २२८**
**पार्थे द्रुमे मयूरे ना अर्जुनस्त्रिषु पाण्डरे । अर्जुनी गव्युषायां च भृङ्गवृश्चिकयोरली ॥ २२९ ॥**
**आत्मा मनस्याकलनं विबन्धपरिसङ्ख्ययोः । आवेशनं शिल्पगेहे भूतावेशेऽथ गेन्दुके २३०॥**

श्रद्धान्विते त्रिषु'' इति मेदिनी ॥ धनिनि धनस्वामिनि, अपिशब्दात् उत्तमकुलजाते सुन्दरे मनोहरे उचिते मुनौ जिने च "न प्रहृष्यति सम्माने नावमानेन कुप्यति । न क्रुद्धः परुषं ब्रूयादेताद्धि साधुलक्षणम्'' इत्याद्युक्तधर्मवति जने वार्धुषिके च **साधुः** ।"साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्'' इति मेदिनी ॥ सङ्घे समूहे, अपिशब्दात् अंशे वृक्षस्य काण्डे नृपे कार्ये भद्रादौ छन्दोभेदे सौगतमतसिद्धेषु विज्ञानादिषु पञ्चसु पथि ग्रन्थपरिच्छेदे च **स्कन्धः**।"स्कन्धः स्यान्नृपतावंशे सम्परायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसां भिदि'' इति मेदिनी॥ नित्यं निरन्तरम्, निष्पन्दं निश्चलम्, नाकी देवयोनिभेदः, तेषु **सिद्धः** ।"सिद्धो व्यासादौ भेदे योगस्य देवयोनेश्च त्रिषु निष्पन्दे'' इति मेदिनी ॥ २२४ ॥ सुरङ्गायां चौरादिकृतसुरङ्गायाम्, भेदे व्याकरणोक्ते वर्णद्वयपठितवर्णविकारभेदे, सङ्घट्टने नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे, भगे योनौ च **सन्धिः** । "सन्धिः पुमान्सुरङ्गायां भगे सङ्घट्टनेऽपि च'' इति मेदिनी ॥ इति **धकारान्ताः** ॥ अथ नान्तानाह ॥ कुले वंशे, ख्यातौ प्रसिद्धौ च **अभिजनः** । "भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे । कुलेऽपि च'' इति मेदिनी ॥ कालः प्रसिद्धः, वर्त्म मार्गः, तयोः **अध्वा** ॥ २२५ ॥ अतिवृत्ते अतिक्रमे, कर्म शुद्धीकरणम्, खण्डनं भेदनम्, तयोश्च, अपिशब्दात् पराक्रमे वीरणमूले च **अवदानम्** । "अवदानं खण्डने स्यादतिवृत्ते च कर्मणि'' इति मेदिनी ॥ अग्रजे ज्येष्ठभ्रातरि, विप्रे ब्राह्मणे च **अग्रजन्मा** । "अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतः'' इति मेदिनी ॥ भक्तम् ओदनम्, भुक्तं भक्षितम्, तयोः **अन्नम्** । "अन्नं भुक्ते च भक्ते स्यात्'' इति मेदिनी ॥ २२६ ॥ विनीते विनययुक्ते सुशिक्षिते च, विप्रभेदे ब्राह्मणविशेषे, चकारात् शिक्षादिषडङ्गसहितवेदाध्ययनकारिणि वेदार्थानुवचनसमर्थे च **अनूचानः** । "अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे'' इति मेदिनी ॥ विवादी विरुद्धवादी, अपिशब्दात् याचके सेवके असन्निहितधने धनस्वामिनि च **अर्थी** ॥ चाण्डाले श्वपचे, मुनिभेदे मुनिविशेषे, नापिते क्षुरकर्मकारके च **अन्तावसायी** । "अन्तावसायी श्वपचे मुनिभेदे च नापिते'' इति मेदिनी ॥ २२७ ॥ अश्वः घोटकः, कुत्सितः निन्दितः, तयोः **अर्वा** । "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः'' इति मेदिनी ॥ वज्रे मेघोत्पन्ने ज्योतिषि पवौ, विद्युति तडिति च **अशनिः** । "अशनिः स्त्रीपुंसयोः स्याच्च चञ्चलायां पवावपि'' इति मेदिनी ॥ वर्णमात्रे अक्षरमात्रे, विसर्गे विसर्जनीये च **अभिनिष्णानः** । "अभिनिष्ठानः'' इति च पाठः । "अभिनिष्णानोऽप्यक्षरमात्रे विसर्जनीयेऽपि च'' इति मेदिनी ॥ हैहये हैहयाधिपे कार्तवीर्ये ॥ २२८ ॥ पार्थे पृथापुत्रे युधिष्ठिरादौ च, द्रुमे स्वनामाख्याते वृक्षे, मयूरे स्वनामाख्याते खगभेदे, पाण्डरे शुभ्रवर्णवति च **अर्जुनः** । "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः'' इति मेदिनी ॥ गवि नवप्रसूतायां धेन्वाम्, उषायां स्वनामख्याते काले, चकारात् बाहुदायां नद्यां कुट्टिन्यां च **अर्जुनी** । "अर्जुनी गवि । उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्'' इति मेदिनी ॥ भृङ्गः भ्रमरः, वृश्चिकः कीटभेदः, तयोः **अली** । "अली स्याद्वृश्चिके भ्रमरेऽपि च'' इति मेदिनी ॥ २२९ ॥ मनसि चित्ते **आत्मा** । "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि'' इति मेदिनी ॥ विबन्धः अनुसन्धानः रोगभेदो वा, परिसङ्ख्या गणनम्, तयोः **आकलनम्** ।'आकलनं विबन्धे स्यादाकाङ्क्षापरिसङ्ख्ययोः'' इति विश्वः ॥ शिल्पगेहे शिल्पशालायाम्, भूतावेशे अमनुष्याधिष्ठिते रोगे च **आवेशनम्** । "आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः'' इति मेदिनी ॥ गेन्दुके वस्त्रनिर्मितगोलाकारे क्रीडनके कन्दुके च

विशेषे चोपधानं स्याच्चुल्ल्यामुद्धानमुद्गमे । अगम्भीरेऽपि चोत्तानः शराभ्यासेऽप्युपासनम्॥
स्यात्कात्यायन्यर्धवृद्धागौर्योर्वररुचौ नरि । शिरीषाम्रातकाश्वत्थगर्दभाण्डे कपीतनः ॥२३२॥
चीरेऽपि कौपीनमश्वे पुन्नागेऽपि च केशरी । कुलीनत्वे च गुह्ये च कौलीनमथ कञ्चुकी २३३
स्थापत्ये वर्मिते सर्पे क्लृप्तौ छेदे च कल्पनम्।कामिनौ स्त्रैणचक्रौ च कृतिनौ योग्यपण्डितौ॥
काञ्चनं तु हेम्नि नागकेशरे काञ्चनी निशा । धातुवादरते कांस्यकारे कारन्धमी नरि ॥२३५॥
चर्चिकाचिल्लदयिते खकामिन्यौ प्रकीर्तिते । विषदिग्धपशोर्मांसे गृञ्जनं ना रसोनके ॥ २३६॥
गहनं गह्वरे दुःखे वनेऽथाम्बुदमुस्तयोः । घनः पुंसि घनं वाद्यं चर्म स्यात्फलकत्वचोः॥२३७॥
चीनौ वस्त्रव्रीहिभेदौ चिह्नं लक्ष्मपताकयोः । चक्रिणो विष्णुभुजगकुलालग्रामजालिनः २३८

॥ २३० ॥ विशेषे व्रतभेदे, चकारात् शिरोधाने प्रणये विषे च उपधानम् । "उपधानं विषे गण्डे प्रणयेऽपि नपुंसकम्" इति मेदिनी ॥ चुल्ल्यां पाकार्थमग्निस्थापनस्थाने, उद्गमे ऊर्द्ध्वगमने च उद्धानम् । "उद्धानमुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंसकम्" इति मेदिनी ॥ अगम्भीरे निम्नरहितस्थाने, अपिशब्दात् विस्तारशून्ये भूमिलग्नपृष्ठतया ऊर्द्ध्वभावेन स्थिते ऊर्द्ध्वमुखे वा च उत्तानः । "उत्तानमगंभीरे स्यादुदास्यशयिते त्रिषु" इति मेदिनी ॥ शराभ्यासे बाणमोचनशिक्षायाम्, अपिशब्दात् सेवने देवताद्याराधने च उपासनम् । "उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च" इति मेदिनी ॥ २३१ ॥ अर्धवृद्धा अर्धवयस्का, गौरी दुर्गा, तयोः, वररुचौ स्वनामाख्याते कवौ च कात्यायनी । "कात्यायनो वररुचौ विशेषे च मुनेः पुमान् । कषायवस्त्रे विधवार्धजरत्युमयोः स्त्रियाम्" इति मेदिनी ॥ शिरीषः स्वनामाख्यातो वृक्षः, आम्रातकः स्वनामाख्यातो वृक्षः, अश्वत्थः बोधिवृक्षः, गर्दभाण्डः पत्रादिष्वश्वत्थतुल्याकारो वृक्षः, तेषु कपीतनः । "कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च" इति मेदिनी ॥ ॥ २३२ ॥ चीरे मेखलानिबद्धे वस्त्रखण्डे, अपिशब्दात् पापे काकार्ये च कौपीनम् । "कौपीनं स्यादकार्ये च गुह्यचीरप्रदेशयोः" इति विश्वः ॥ अश्वे तुरगे, पुन्नागे स्वनामाख्याते वृक्षे, अपिशब्दात् सिंहे नागकेशरवृक्षे, बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च केशरी । "केसरी" अप्यत्र । "केशरी तुरगे सिंहे पुन्नागे नागकेशरे" इति मेदिनी ॥ कुलीनत्वे कुलीनभावे कुलीनकर्मणि वा, गुह्ये लिङ्गे, चकारात् परीवादे दुष्टकार्ये प्राणिभिर्द्यूते च कौलीनम् । "कौलीनं गुह्यजन्यन्योः । कुकर्मणि कुलीनत्वे युद्धे पश्वहिपक्षिणाम्" इति मेदिनी ॥ २३३ ॥ स्थापत्ये राज्ञामन्तःपुररक्षके द्वारपाले,वर्मिते कृतसन्नाहे,सर्पे भुजगे च कञ्चुकी ।"कञ्चुक्यन्तःपुराध्यक्षेऽभिद्गेऽहौ जेङ्गकद्रुमे". इति मेदिनी ॥ क्लृप्तौ कृतौ, छेदे छेदने, चकारात् न्यायोक्ते अनुमितिभेदे च कल्पनम् । "कल्पना । करिणः सज्जनायां स्त्री क्लीबं क्लृप्तौ च"इति मेदिनी॥स्त्रैणः स्त्रीसम्बधी, चक्रः चक्रवाकपक्षी, तयोः, चकारात् पारावते चटके सारसपक्षिणि दारुहरिद्रायां मदिरायां कामवति च कामी । "कामी तु कामुके चक्रवाके पारावतेऽपि च" इति मेदिनी ॥ योग्यः उचितः,पण्डितः शास्त्रतत्त्वज्ञः, तयोः कृती । "कृती स्यात्पण्डिते योग्ये" इति मेदिनी ॥ २३४ ॥ हेम्नि स्वर्णे, नागकेशरे स्वनामाख्याते पुष्पवृक्षे च काञ्चनम् । निशा हरिद्रा, तस्यां काञ्चनी । "काञ्चनः काञ्चनारे स्याचम्पके नागकेशरे । उदुम्बरे च धुस्तूरे हरिद्रायां च काञ्चनी" इति मेदिनी॥धातुवादरते धातवो हि वातादिवशाद्बहुविधाः,तत्सम्बन्धवादानुरक्ते,कांस्यकारे स्वनामाख्याते जातिभेदे च कारन्धमी ।"कारन्धमी कांस्यकारे धातुवादरतेऽपि च"इति मेदिनी॥२३५॥चर्चिका चन्दनादिना गात्रलेपनम्, चिल्लदयिता पक्षिप्रिया क्लिन्ननेत्रा वा, तयोः खकामिनी । विषदिग्धपशोर्मांसे विषेण लिप्तमृगादेर्मांसे, रसोनके लशुने च गृञ्जनम् । "अथ गृञ्जनम् । विषदिग्धपशोर्मांसे क्लीबं पुंसि रसोनके" इति मेदिनी॥२३६॥ गह्वरे निकुञ्जे,दुःखे पीडायाम्, वने कानने च गहनम् ।"गहनं कलिले त्रिषु । नपुंसकं गह्वरे स्याद् दुःखकाननयोरपि" इति मेदिनी ॥ अम्बुदः मेघः, मुस्ता स्वनामाख्यात औषधभेदः, तयोः च घनः । वाद्ये कांस्यतालादिवाद्यम्, तत्र च घनम् । "घनं स्यात्कांस्यतालादिवाद्यमध्यप्रनृत्ययोः । ना मुस्ताद्योघदार्ढ्येषु विस्तारे लोहमुद्गरे । त्रिषु सान्द्रे दृढे च" इति मेदिनी ॥ फलके स्वनामाख्यातमस्त्रम्, त्वक् वल्कलम्,तयोः चर्म । "चर्म स्याद्वल्कलत्वचोः" इति विश्वः ॥२३७॥ वस्त्रे चीनदेशोद्भववसनम्, व्रीहिभेदः कङ्गुधान्यविशेषः,तयोः चीनः । "चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे" इति मेदिनी ॥ लक्ष्म लक्षणम्, पताका वंशोपरि देयं त्रिकोणाकारं

कम्प्रे ना चलनं कम्पे चलनी वस्त्रघर्घरी। भूर्जे फलकपाणौ च चर्म्यथालम्बुषे पुमान्२३९
निम्बेऽपि च्छर्दनं वान्तौ जवनो देशवेगिनोः।बुद्धे जिनो जित्वरे च जीवनं वर्तनाम्भसोः२४०
शूरे दातरि च त्यागी व्रतिशोच्यौ तपस्विनौ । तपनो नरके भानौ विरलेऽल्पे कृशे तनुः२४१
क्रीडादौ देवनं नाऽक्षे द्विजन्मा दन्तविप्रयोः । दानं गजमदे त्यागे खण्डने रक्षणेऽपि च२४२॥
दर्शनं वर्णमुकुरचक्षुःशास्त्रोपलब्धिषु । स्त्री दीर्घकोष्यां दुर्नामाऽर्शसि द्युम्नं बले धने॥२४३॥
धन्वामरौ धन्वचापे धावनं गतिशौचयोः । निर्भर्त्सनं खलीकारालक्तयोरथ नन्दनम् ॥२४४॥
देवोद्याने सुते पुंसि नग्नौ क्षपणवन्दिनौ । श्रुतौ दृष्ट्यां निशमनं खगङ्गाऽपि नालिन्यथ२४५॥

वस्त्रखण्डम् , तयोः चिह्नम् । "चिह्नं लक्ष्मपताकयोः" इत्येव मेदिनी ॥ विष्णुः श्रीकृष्णः, भुजगः सर्पः, कुलालः कुम्भकारः,ग्रामजाली ग्रामजालिकः, तेषु चक्री ।"चक्री तैलिकभित्कोककुलालाजाभिसूचके"इति मेदिनी ॥ २३८ ॥ कम्प्रे कम्पान्विते, कम्पे गात्रादिकम्पे वेपथौ च चलनम् । "चलनं भ्रमणे कम्पे कम्प्रे तु वाच्य-लिङ्गकम्"इति मेदिनी॥वस्त्रघर्घरी वस्त्रैः कृतघण्टिका तस्यां चलनी।"चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्" इति मेदिनी ॥ भूर्जे भूर्जवृक्षे, फलकपाणौ फलकास्त्रवति च चर्मी । "चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गरिटावपि" इति मेदिनी ॥ अलम्बुषे लज्जालुवृक्षे ॥ २३९ ॥ निम्बे अरिष्टवृक्षे, वान्तौ वमने, अपिशब्दात् मदनवृक्षे च छर्दनम् । "छर्दनं वमने क्लीबं निम्बालम्बुषयोः पुमान्" इति मेदिनी ॥ देशः देशविशेषः, वेगी वेगवान् शीघ्रगः, तयोः जवनः ।"जवनं स्यात्तु वेगेऽपि हये ना वेगिनि त्रिषु"इति मेदिनी॥बुद्धे सम्यक्सम्बुद्धे, जित्वरे जयशीले, चकारात् विष्णौ अर्हति च जिनः । "जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु" इति मेदिनी । वर्तनं वृत्तिः प्राणधारणम्, अम्भः जलम्, तयोः जीवनम् । "जीवनं वर्तने जीवप्राणधारणयोर्जले" इति मेदिनी ॥ २४० ॥ शूरे वीरे विक्रमवति वा, दातरि दानशीले, चकारात् वर्जनशीले कर्मफलत्यागिनि च त्यागी । "यस्तु कर्मफलत्यागी स त्यागी त्वभिधीयते" इति । "त्यागी दातरि शूरे च" इति मेदिनी ॥ व्रती चान्द्रायणादिव्रत-धारणः, शोध्यः अनुकम्पनीयः, तयोः तपस्वी । "तपस्वी तापसे चानुकम्प्ये त्रिषु" इति मेदिनी ॥ नरके स्व-नामाख्याते निरयभेदे, भानौ सूर्ये च तपनः । "तपनोऽरुष्करेऽपि स्याद्भास्करे निरयान्तरे" इति मेदिनी॥ विरले अनिबिडे,अल्पे क्षुद्रे ईषदर्थे वा,कृशे अल्पे सूक्ष्मे वा च तनुः।"तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे"इति मेदिनी॥२४१॥क्रीडादौ परिहासादौ खेलने वा,अक्षे पाशके च देवनम्।"देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । देवनोऽक्षेषु पुंसि स्यात्" इति मेदिनी॥ दन्तः दशनः, द्विजः ब्राह्मणः, तयोः द्विजन्मा।"द्विजन्मा दशने विप्रे" इति मेदिनी ॥ गजमदे हस्तिमदजले, त्यागे वर्जने, खण्डने छेदने, रक्षणे पालने, अपिशब्दात् शुद्धौ च दानम् । "दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी ॥ २४२ ॥ वर्णः शुक्लादिरूपभेदः, मुकुरः दर्पणम् , चक्षुः नेत्रम् , शास्त्रं हितानुशासनम् आध्यात्मज्ञानोपायं न्यायादिशास्त्रं वा, उपलब्धिर्ज्ञानं प्राप्तिर्वा, तेषु दर्शनम् ।" दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु । शास्त्रदर्शनयोश्च" इति मेदिनी ॥ दीर्घकोष्यां दीर्घकोषिकायाम्, अर्शसि गुदस्थरोगभेदे च दुर्नामा । "दुर्नामा क्लीबमर्शसि । स्याद्दीर्घकोषायां स्त्री" इति मेदिनी ॥ बले शक्तौ, धने वित्ते च द्युम्नम् । "द्युम्नं वित्ते बलेऽपि च " इति मेदिनी ॥ २४३ ॥ मरौ मरुदेशे चापे धनुषि च धन्वा । "धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च" इति मेदिनी ॥ गतिः शीघ्रगमनम् , शौचं शोधनम् , तयोः धावनम् । "धावनं गमने शुद्धौ पृश्निपर्ण्यां तु धावनी" इति मेदिनी ॥ खलीकारः अपकारः, अपकारवचनं वा, अलक्तः लाक्षारसः , तयोः निर्भर्त्सनम् ।"निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुं-सकम्" इति मेदिनी ॥ २४४ ॥ देवोद्याने नन्दनोद्याने, सुते पुत्रे च नन्दनम् । "नन्दनं वासवोद्याने नन्दनो हर्षके सुते" इति मेदिनी॥क्षपणः निर्ग्रन्थः संन्यासिभेदः, बन्दी स्तुतिपाठकः, तयोः नग्नः।"नग्नो बन्दिक्षपणयोः पुंसि त्रिषु विवाससि"इति मेदिनी ॥ श्रुतौ श्रवणे, दृष्ट्यां दर्शने च निशमनम् । " निशामनम् " अप्यत्र । 'निशमनमुक्तं दृष्टौ श्रुतौ" इति मेदिनी ॥ खगङ्गा आकाशगङ्गा तस्याम् अपिशब्दात् पद्मसङ्घे

ग्रन्थिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि । प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ॥२४६॥
पाकस्थाने कुलालस्य वाते च पवनः पुमान् । हरीतकी राक्षसी च पूतनाऽथ वदालके॥२४७॥
पाठीनो गुग्गुलुद्रौ च रक्षोवृक्षौ पलाशिनौ।फाल्गुनो मासि पार्थे च स्त्री विदग्धा च वाणिनी
वर्धमानः प्रश्नभेदशरावैरण्डविष्णुषु । सेना नदी च वाहिन्यौ छेदे वृद्धौ च वर्धनम् ॥ २४९॥
भुवनं विष्टपे तोये भिन्नं दीर्णे विशेषिते । जन्माश्रययश्च भवनं भाजनं पात्रयोग्ययोः ॥२५० ॥
भृतिकाञ्चनयोर्भर्म मलिनं दूषितेऽसिते । मानं प्रमाणे तौल्ये च मीनो राश्यन्तरे झषे॥ २५१ ॥
मदनाः सिक्थधुस्तूरतरुभेदमनोभवाः । मुनिर्वाचंयमे बुद्धे छन्दश्चरूपा च मालिनी ॥२५२॥

पद्मयुक्तदेशे नलिकायां च नलिनी । "नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे । नपुंसकं नीलिकायां न पुंसि सरसीरुहे"इति मेदिनी॥२४५॥ ग्रन्थिः वंशादिसन्धिः बन्धनं वा,प्रस्तावः अवसरः प्रसङ्गो वा, तयोः,विषुवत् समरात्रिदिनकालकः अयनांशक्रमेण रवेः तुलामेषादिराशिसङ्क्रान्तिभेदः, समरात्रिदिनं प्रभृति येषां तेषु पञ्चसु कालेषु "चतुर्दश्यष्टमी चैव अमावस्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च " इत्युक्तेषु, अपिशब्दात् उत्सवे लक्षणभेदे प्रस्तारे ग्रन्थविच्छेदनस्थाने च पर्वः । "पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि" इति मेदिनी ॥ प्रतिच्छाया प्रतिमा तत्र, गजदन्तौ हस्तिदशनौ तयोरन्तराले च प्रतिमानम् । "प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः" इत्येव मेदिनी ॥ २४६ ॥ कुलालस्य कुम्भकारस्य पाकस्थाने आमघटादिपाकस्थाने, वाते वायौ, चकारात् धान्यादेः शोधने बहुलीकरणे व्यापारे च पवनः । "पवनं कुम्भकारस्य पाकस्थाने नपुंसकम् । निष्पावमरुतोः पुंसि" इति मेदिनी ॥ हरीतकी स्वनामाख्यातः औषधभेदः, तत्र, राक्षसी बालकमातृकाभेदः, तयोः, चकारात् गन्धमांस्यां बकासुरभगिन्यां रोगभेदे च पूतना । "पूतना तु हरीतक्यां दानवीरोगभेदयोः " इति मेदिनी ॥ वदालके मत्स्यभेदे ॥ २४७ ॥ गुग्गुलुद्रौ स्वनामाख्याते वृक्षे, चकारात् पाठके पण्यवीथ्यां हट्टे च पाठीनः । " पाठीनो मीनभेदे स्यात्पाठके गुग्गुलुद्रुमे " इति मेदिनी ॥ रक्षः राक्षसः, वृक्षः द्रुमः, तयोः पलाशी । "पलाशी वृक्षरक्षसोः" इति मेदिनी॥ मासि चैत्रावधिके द्वादशे मासे, पार्थे अर्जुनवृक्षे, चकारात् मध्यमपाण्डवे अश्विन्यवधिके एकादशे द्वादशे नक्षत्रे च फाल्गुनः । "फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे" इति मेदिनी ॥ विदग्धा निपुणा पण्डिता वा, तस्याम् ,चकारात् वाक्ये तद्देवतायां च वाणिनी । "वाणिनी नर्तकीमत्तविदग्धवनितासु च" इति विश्वः ॥ २४८ ॥ प्रश्नभेदः प्रश्नविशेषः, शरावः मृन्मयः पात्रभेदः, एरण्डः स्वनामाख्यातो वृक्षः, विष्णुः श्रीकृष्णः, तेषु वर्धमानः । "वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु"इति मेदिनी।।सेना सैन्यम् , नदी गङ्गा, तयोः,चकारात् तरङ्गिण्यां च वाहिनी।"वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः" इति मेदिनी॥ छेदे छेदने, वृद्धौ वृद्धिकारके, चकारात् पूरणे वृद्धियुक्ते च वर्धनम् । "वर्धनं छेदने वृद्धौ वारिधान्यां तु वर्धनी" इति विश्वः ॥ २४९ ॥ विष्टपे जगति, तोये सलिले च भुवनम् । "भुवनं विष्टपेऽपि स्यात्सलिले गगने जने" इति मेदिनी ॥ दीर्णे विदारिते, विशेषिते भेदिते च भिन्नम् । "भिन्नमन्यार्थवचने सङ्गते दारिते स्फुटे" इति विश्वः ॥ जन्म उत्पत्तिः, आश्रयः गृहम् , तयोः, चकारात् भावे सत्तायां च भवनम् । "भवनं स्याद्गृहे भावे"इति मेदिनी॥पात्रं भोजनयोग्यममत्रम्, योग्यः योगार्हः उचितो वा, तयोः भाजनम् । "भाजनं पात्रयोग्ययोः" इति मेदिनी ॥ २५० ॥ भृतिर्भरणं पोषणं वा, काञ्चनं स्वर्णम् , तयोः भर्म । "भर्म स्वर्णे भृतौ भारे" इति विश्वः ॥ दूषिते मलयुक्ते, असिते कृष्णे च मलिनम् । "मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति" इति मेदिनी ॥ प्रमाणे परिमाणे, तौल्ये हस्ततुलाप्रस्थाद्यैर्द्रव्यपरिच्छेदे, चकारात् गानाङ्गे कालक्रियायां तालविरामोपलक्षिते कालव्यापारे च मानम् । "मानश्चित्तोन्नतग्रहे । क्लीबं प्रमाणे प्रस्थादौ" इति मेदिनी ॥ राश्यन्तरे मेषादितो द्वादशे राशौ, झषे मत्स्ये च मीनः । "मीनो मत्स्ये राश्यन्तरे झषे" इति मेदिनी ॥ २५१ ॥ सिक्थः मधूच्छिष्टम्, धुस्तूरः स्वनामाख्यातो वृक्षः, तरुभेदः द्रुमविशेषः, मनोभवः कामदेवः, तेषु मदनः । "मदनः स्मरवसन्तद्रुभेदधुस्तूरसिक्थके" इति मेदिनी ॥ वाचंयमे मितभाषिणि मौनावल-

मातुलानी तु भङ्गायां मातृभ्रातृस्त्रियामपि । राशौ युग्मे च मिथुनं विष्णवली मधुसूदनौ२५३
यापनं स्यान्निरसने कालक्षेपे च वर्तने । चतुष्क्रोश्यां च योगे च योजनं स्यात्तु वाहने२५४॥
गतौ च यानं योनिस्तूत्पत्तिस्थाने भगेऽपि च। रसनं तु ध्वनौ स्वादे रसज्ञाराम्नयोः स्त्रियाम् ॥
यक्षे चन्द्रे च राजा स्याद्रक्तः कामी च रागिणौ।गोपित्ते रोचना कूटशाल्मलौ रोचनः पुमान्
निशा हरिद्रा रजनी छर्दे भूर्जे च लेखनम् । राशीनामुदये लग्नं सक्तलज्जितयोस्त्रिषु ॥२५७॥
योषिज्जिह्वा च ललना लाञ्छनं नामचिह्नयोः । रक्ते वितानमुल्लोचे विलग्नं मध्यलग्नयोः२५८
दैवानिष्टफले सक्तौ व्यसनं निष्फलोद्यमे।स्वतन्त्रता च व्युत्थानं वामनौ विष्णुदिग्गजौ२५९

म्बिनि च, बुद्धे सम्यक्संबुद्धे च मुनिः । "मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने" इति मेदिनी ॥ छन्दः पञ्चदशाक्षरपादकः छन्दोभेदः, चम्पा स्वनामाख्याता पुरी, तयोः मालिनी। "मालिनी मातृकावृत्तभिदोर्मालिकयोषिति" इति मेदिनी ॥ २५२ ॥ भङ्गायां मातुल्याम्, मातृभ्रातृस्त्रियाम्, अपिशब्दात् कलापे च मातुलानी । "मातुलानी कलापे स्याद्भङ्गायां मातुलस्त्रियाम्" इति मेदिनी ॥ राशौ मेषादितस्तृतीये राशौ, युग्मे स्त्रीपुंसयोश्च मिथुनम् । "मिथुनं राशिभेदे स्यान्मिथुनं दम्पती इति" इति विश्वः । विष्णुः श्रीकृष्णः, अलिर्भ्रमरः, तयोः मधुसूदनः । "मधुसूदनसंज्ञा च भ्रमरे वनमालिनि" इति विश्वः । "मधुसूदनस्तु पुंसि भ्रमरे वनमालिनि" इति मेदिनी ॥ २५३ ॥ निरसने प्रतिक्षेपे, कालक्षेपे कालयापने, वर्तने च यापनम् । "यापनं वर्तने कालक्षेपे निरसनेऽपि च" इति मेदिनी ॥ चतुष्क्रोश्यां क्रोशचतुष्टयात्मके, योगे संयोगे, चकारात् संयोगकरणे च योजनम् । "योजनं परमात्मनि । चतुष्क्रोश्यां च योगे" इति मेदिनी ॥ वाहने गमनसाधने रथादौ ॥ २५४ ॥ गतौ गमने, चकारात् उपचितशक्तेः राज्ञः मूलराष्ट्रादिरक्षां कृत्वा रिपोरास्कन्दनाय गमने च यानम् । "यानं स्याद्वाहने गतौ" इति मेदिनी ॥ उत्पत्तिस्थाने मण्यादीनामुत्पत्तिस्थाने आकरे, भगे स्त्रीणामसाधारणचिह्ने, अपिशब्दात् कारणे जले तद्देवताके पूर्वफल्गुनिनक्षत्रे च योनिः । "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे" इति मेदिनी ॥ ध्वनौ नादे, स्वादे रसानुभवे, रसज्ञा जिह्वा, रास्ना स्वनामाख्याता लता, तयोश्च रसनम् । "रसनं स्वादने ध्वनौ । जिह्वायां च न पुंसि स्याद् रास्नायां रसना स्त्रियाम्" इति मेदिनी ॥ २५५ ॥ यक्षे कुबेरे, चन्द्रे शीतरश्मौ, चकारात् नृपे शुचौ क्षत्रिये इन्द्रे च राजा ।"राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्"इति मेदिनी ॥ रक्तः अनुरक्तः, कामी कामुकः, तयोः, चकारात् रागवति रतियुक्ते गीत्यङ्गे स्वरभेदे च रागी। "रागी रक्ते च कामुके" इति मेदिनी ॥ गोपित्ते गोरोचनायां रोचना । "रोचना रक्तकह्लारे गोपित्ते वारयोषिति" इति मेदिनी ॥ कूटशाल्मलौ कूटशाल्मलिवृक्षे रोचनः ।" रोचनः कूटशाल्मल्यां पुंसि स्याद् रोचके त्रिषु"इति मेदिनी ॥ २५६ ॥ निशा रात्री, हरिद्रा स्वनामाख्यातः औषधिभेदः, तयोः रजनी । "रजनिः" अप्यत्र । "रजनी नीलिनीरात्रिहरिद्राजतुकासु च" इति मेदिनी ॥ छर्दे छर्दने, भूर्जे भूर्जपत्रे, चकारात् पत्रादौ वर्णादिविन्यासे लेखनसाधने च लेखनम् । "लेखनं छर्दने भूर्जे लिपिन्यासे" इति मेदिनी ॥ राशीनामुदये मेषादीनां राशीनाम् उदयरूपे, सक्तः संसक्तः, लज्जितः जातलज्जः, तयोश्च लग्नम् । "लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रिषु" इति मेदिनी ॥ २५७ ॥ योषित् नारी, जिह्वा रसना, तयोः ललना । "ललना कामिनीनारीभेदजिह्वासु योषिति" इति मेदिनी ॥ नामनि चिह्ने च लाञ्छनम् । "लाञ्छनं नामचिह्नयोः" इत्येव मेदिनी ॥ रक्ते लोहितवर्णे, उल्लोचे विताने च वितानम् । "वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुंसकम् । क्लीबं वृत्तविशेषे स्यात् त्रिलिङ्गो मन्दतुच्छयोः" इति मेदिनी ॥ मध्यं मध्यभागः, लग्नं मेषादिराशीनामुदयः, तयोः विलग्नम् । "विलग्नं न स्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके" इति मेदिनी ॥ २५८ ॥ दैवानिष्टफले दैवादिकृते उपद्रवे, सक्तौ कामजाते कोपे, निष्फलोद्यमे निरर्थकव्यायामे च व्यसनम् । "व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी ॥ स्वतन्त्रता स्वाधीनत्वम्, तस्मिन्,

खर्व्वश्चाथ फले शुष्के वानं स्यूते कटे गतौ। वृषपर्वा शिवे दैत्ये वेष्टनं मुकुटे वृतौ ॥२६०॥
वर्ष्माकारेऽपि विषयी कामिनि क्लीबमिन्द्रिये। वृक्षादनी स्याद्वन्दायां स्त्रियां कुठारके पुमान्॥
समालब्धे विभक्ते च विच्छिन्नं वाच्यलिङ्गकम्। लब्धे ज्ञाते स्थिते विन्नं वेदना ज्ञानपीडयोः
वर्त्तनी तर्कुपीठेऽपि स्त्रियां वर्त्तनवर्त्मनोः। वनश्वा जम्बुके व्याघ्रे विपन्नोऽहौ विपद्गते॥२६३॥
दैवशंसिनिमित्ते च शकुनं पुंसि पक्षिणि। चूडावान् कुक्कुटश्चापि शिखी शृङ्गारिणौ त्विमौ॥
क्रमुकश्च सुवेशश्च पार्थेन्द्वोः श्वेतवाहनः। मयूरे भीष्मशत्रौ च शिखण्डयथ विहेठनम् २६५॥
विहिंसायां विडम्बे च यमे ना शमनं वधे। श्येनः शुक्ले पक्षिभेदे शकुनिः सौबले खगे २६६॥

चकारात् विरोधकरणे प्रतिरोधने नृत्यभेदे विशेषेण उत्थाने च व्युत्थानम्। "व्युत्थानं स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च" इति मेदिनी॥ विष्णुर्हरिः, दिग्गजः दक्षिणदिङ्नागः, तयोः ॥ २५९ ॥ खर्वः कुब्जः तस्मिंश्च, चकारात् अङ्कोटवृक्षे पाणिनिसूत्रस्य काशिकावृत्तिकारके पण्डितभेदे ह्रस्वे च वामनः। "वामनो नीचे खर्वे च त्रिषु पुंसि तु दिग्गजे। हराबङ्कोटवृक्षे" इति मेदिनी॥ फले शुष्कफले, शुष्के आतपादिना कृतशोषणे, स्यूते स्यूतिकर्मणि, कटे नडादिरचिते, गतौ गमने च वानम्। "वानं शुष्कफले शुष्के सूतिकर्मकटे गतौ" इति मेदिनी॥ शिवे महादेवे, दैत्ये असुरभेदे च वृषपर्व्वा। "वृषपर्व्वा पुमान् दैत्यभेदेऽप्यन्धकसूदने" इति मेदिनी॥ मुकुटे शिरोभूषणे, वृतौ वेष्टने च वेष्टनम्। "वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे वृतौ" इति मेदिनी॥ २६०॥ वर्ष्माकारे सुन्दराकारे देहाकारे वा, कामिनि विषयासक्ते, इन्द्रिये आत्मनो विषयोपलब्धिकरणे चक्षुरादौ, अपिशब्दात् ज्ञाने राशि कामदेवे ध्वनौ च विषयी। "विषयी विषयासक्ते वाच्यवत् क्लीबमिन्द्रिये। पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च" इति मेदिनी॥ वन्दायां लताभेदे, कुठारके कुठारास्त्रे वृक्षादनी। "वृक्षादनी तु वन्दायां विदारीकन्दकेऽपि च" इति मेदिनी॥२६१॥ समालब्धे कुङ्कुमादिना कृतगात्रलेपने, विभक्ते कृतविभागे च विच्छिन्नम्। "विच्छिन्नं च समालब्धे विभक्ते चाभिधेयवत्" इति मेदिनी॥ लब्धे प्राप्ते, ज्ञाते अवगते, स्थिते कृतस्थाने च विन्नम्। "विन्नं विचारिते लब्धे" इति मेदिनी॥ ज्ञानं सुखदुःखाद्यनुभवः, पीडा व्यथा, तयोः वेदना। "वेदना ज्ञानदुःखयोः" इति मेदिनी॥ २६२॥ तर्कुपीठे स्वनामाख्याते यन्त्रपीठभेदे, वर्तनं प्रवृत्तिः, वर्त्म मार्गः, तयोः, अपिशब्दात् वृत्तिमति वर्त्तिष्णौ वायसे च वर्त्तनी। "वर्त्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः। न पुंसि तुलनालायां तर्कुपीठे च जीवने। वर्तिष्णौ त्रिषु" इति मेदिनी॥ जम्बुके शृगाले स्वनामाख्याते वृक्षे श्योनाके वा, व्याघ्रे शार्दूले च वनश्वा। "वनश्वा गन्धमार्जारे वञ्चकव्याघ्रयोः पुमान्" इति मेदिनी॥ अहौ सर्पे, विपद्गते विपद्युक्ते च विपन्नः। "विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे" इति मेदिनी॥ ॥२६३॥ दैवशंसिनिमित्ते शुभाशुभसूचकनिमित्ते बाहुस्पन्दनकाकादिदर्शनादौ पक्षिणि पक्षिमात्रे पक्षिभेदे च, चकारात् गृध्रे च शकुनम्। "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी॥ चूडावान् शिखान्वितः, कुक्कुटः ताम्रचूडः, तयोः, अपिशब्दात् मयूरे अश्वे केतुग्रहे चित्रकवृक्षे वृक्षे वह्नौ अजलोम्नि पर्वते ब्राह्मणे मेथिकायां मयूरशिखावृक्षे च शिखी। "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गके" इति मेदिनी॥ २६४॥ क्रमुकः पूगः, सुवेशः सुन्दरवेशयुक्तः, तयोः शृङ्गारी। "शृङ्गारी पूगगजयोः सशृङ्गारसुवेशयोः" इति मेदिनी॥ पार्थः अर्ज्जुनः, इन्दुश्चन्द्रः, तयोः श्वेतवाहनः। "श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये" इति मेदिनी॥ मयूरे स्वनामाख्याते खगभेदे, भीष्मशत्रौ गाङ्गेयरिपौ, चकारात् विष्णौ यूथिकायां गुञ्जायां च शिखण्डी। "शिखण्डी ना कलापे स्याद्गाङ्गेयारिमयूरयोः। शिखण्डिनी यूथिकायां गुञ्जायामपि योषिति" इति मेदिनी॥ २६५॥ विहिंसायां विघातने, विडम्बे तिरस्कारे, चकारात् मर्दने च विहेठनम्। "विहेठनं तु हिंसायां मर्दने च विडम्बने" इति मेदिनी॥ यमे लोकानां पुण्यापुण्यफलदातृत्वेन दण्डकारके, वधे नाशे च शमनम्। "शमनं शांतिवधयोः शमनः श्राद्धदैवते" इति मेदिनी॥ शुक्ले पाण्डुरवर्णे, पक्षिभेदे विहङ्गविशेषे च श्येनः। "श्येनः

धान्यभेदे पुमान् षष्टिहायनः कुञ्जरेऽपि च।ना साधौ सज्जनं क्लृप्तौ साधनं सिद्धमेढ्रयोः २६७
समानो देहवायौ च संस्थानं मृत्युरूपयोः । सन्तानः सन्ततौ देववृक्षे चापत्यगोत्रयोः २६८॥
क्रतौ स्नाने च सवनं मारणेऽपि समापनम् । स्यन्दनं स्रवणे ना तु रथे तिनिशपादपे ॥२६९॥
सुप्तज्ञाने च शयने स्वप्नोऽथ स्पर्शदानयोः । स्पर्शनं स्पर्शनो वाते सूनं पुष्पे वधालये २७०
सेवनं सीवनोपास्त्योः शाश्वताजौ सनातनौ । पुत्रे रवौ च सूनुः स्याद् भ्रातर्यपि कनीयसि ॥
सीमाऽऽघाटे स्थितौ क्षेत्रे स्वामी भर्तरि षण्मुखे। धूमवंशशरामर्त्याः सुपर्वाणः प्रकीर्तिताः२७२
हनुर्हट्टविलासिन्यां कपोलावयवेऽपि च । सजले महिषेऽनूपोऽवलेपः सङ्गगर्वयोः ॥ २७३ ॥

पक्षिणि पाण्डुरे" इति मेदिनी ॥ सौबले सुबलराजपुत्रे दुर्योधनमातुले, खगे पक्षिमात्रे च शकुनिः । "शकुनिः पुंसि विहगे सौबले करणान्तरे" इति मेदिनी ॥ २६६ ॥ धान्यभेदे षष्टिकधान्ये, कुञ्जरे षष्टिवयस्के गजे, अपिशब्दात् षष्टिसंवत्सरवति च षष्टिहायनः । "स्यात् षष्टिहायनो धान्यविशेषे कुञ्जरे पुमान्" इति मेदिनी ॥ साधौ सत्पुरुषे, क्लृप्तौ नृपादीनामारोहणार्थं गजभूषाकरणादौ च सज्जनम् । "सज्जनं तु भवेत् क्लीबमुपरक्षणघट्टयोः । वाच्यलिङ्गं कुलीने स्यात् कल्पनायां तु योषिति" इति मेदिनी ॥ सिद्धः निष्पादनः, मेढ्रः पुंश्चिह्नम्, तयोः साधनम् । "साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ । निवर्त्तनोपायमेढ्रदापनेऽनुगमे धने" इति मेदिनी ॥ २६७ ॥ देहवायौ शरीरस्थे वाते, चकारात् तुल्ये साधौ एकस्मिन्नित्यर्थे च समानः । "समानः स्यात् सत्येकेषु त्रिषु ना नाभिमारुते" इति मेदिनी ॥ मृत्युः मरणम्, रूपमाकृतिः, तयोः संस्थानम् । "संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" इति मेदिनी ॥ सन्ततौ वंशे, देववृक्षे तन्नामकदेवतरौ, अपत्यं पुत्रदुहितृरूपम्, गोत्रं सजातीयगणः, तयोश्च, चकारात् विस्तारे च सन्तानः । "सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे" इति मेदिनी ॥ २६८ ॥ क्रतौ स्नाने यज्ञाङ्गे स्नाने, चकारात् प्रसवे यज्ञे सोमपाने सोमनिष्पादनव्यापारे सोमनिष्पीडने च सवनम् । "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति मेदिनी ॥ मारणे वधे, अपिशब्दात् समाप्तौ परिच्छेदे । शेषे च समापनम् । "समापनं परिच्छेदे समाप्तिवधयोरपि" इति मेदिनी ॥ स्रवणे मूत्रजले, रथे स्वनामाख्याते यानभेदे, तिनिशपादपे स्वनामाख्याते वृक्षे च स्यन्दनम् । "स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्" इति मेदिनी ॥ २६९ ॥ सुप्तज्ञाने सुप्तस्य मानसिकज्ञानभेदे, शयने निद्रायाम्, चकारात् दर्शने च स्वप्नः । "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी ॥ स्पर्शः न्यायोक्तः त्वगिन्द्रियग्राह्यो गुणभेदः, दानं वितरणम्, तयोः, वाते वायौ च स्पर्शनम् । "स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्"इति मेदिनी॥ पुष्पे कुसुमे, वधालये प्राणिवधस्थाने च सूनम् । "सूनं प्रसवपुष्पयोः" इति मेदिनी ॥२७०॥ सीवनं सूच्यादिना वस्त्रादेर्योजनम्, उपास्तिः उपासना, तयोः सेवनम् ।"सेवनं सीवनोपास्त्योः" इत्येव मेदिनी॥शाश्वतं सदाभवं वस्तु, अजः ब्रह्मा, तयोः सनातनः ।"सनातनः शाश्वतेऽजे पितृतिथ्यन्तरे हरे"इति मेदिनी॥पुत्रे तनये,रवौ,सूर्ये,कनीयसि भ्रातरि अनुजे, अपिशब्दात् अर्कवृक्षे कन्यायां च सूनुः। "सूनुः पुत्रेऽनुजेऽर्के ना" इति मेदिनी॥२७१॥आघाटे सीमायाम्, स्थितौ स्थानकरणे, क्षेत्रे सस्याद्युत्पत्तिस्थाने केदारे च सीमा ।"सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्"इति मेदिनी॥भर्त्तरि प्रिये,षण्मुखे कार्त्तिकेये च स्वामी । "स्वामी प्रभौ विशाखे च" इति विश्वः ॥ धूमः प्रसिद्धः, वंशः वेणुः, शरः बाणः, अमर्त्यः देवः, तेषु सुपर्वा।"सुपर्वा ना शरे वंशे पर्वधूमसुरेष्वपि"इति मेदिनी॥२७२॥हट्टविलासिन्यां गन्धद्रव्यभेदे हरिद्रायां वा, कपोलावयवे कपोलद्वयोपरिस्थे मुखभागे, अपिशब्दात् रोगे अस्त्रभेदे मृतौ च हनुः । " हनुर्हट्टविलासिन्यां मृत्यास्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे" इति मेदिनी ॥ इति नकारान्ताः ॥ अथ पान्तानाह ॥ सजले जलप्राये देशे, महिषे जलस्थले सर्वदावासिनि स्वनामाख्याते पशुभेदे च अनूपः । "अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्" इति मेदिनी ॥ "अनूपं महिषे विद्याज्जलप्राये तु वाच्यवत्" इति विश्वः ॥ सङ्गः सम्बन्धः, गर्वः अहङ्कारः, तयोः अवलेपः । "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति मेदिनी ॥ २७३ ॥

आक्षेपो भर्त्सनाकृष्टयोराकल्पौ वेशकल्पने। तृणभिद्गुल्मिन्युलपश्चन्द्रे ना स्युडुपः प्लवे २७४
कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने। धान्ये कुशेऽष्टमांशेऽह्नः कुतपश्छागकम्बले २७५
गुणवृक्षेऽपि कूपो विट्सार्य्यां स्त्री कुणपः शवे। जिह्वापः शुनि मार्ज्जारे त्रपुसीसकरङ्गयोः २७६
पादुकायां स्त्रियां वृक्षे पादपीठे च पादपः। पिण्डपुष्पौ जवाशोकौ पुष्पं कुसुम आर्त्तवे २७७
ग्रन्थावृत्तौ पशौ शब्दे स्वभावे नाटकादिषु। रूपमाकारसौन्दर्यनामकेष्वपि दृश्यते ॥ २७८ ॥
शररोपणयो रोपो लेपो लेपनभोजने। विटपः पल्लवे स्तम्बे षिङ्गे मेदोबिले वपा ॥ २७९ ॥
आक्रोशे शपथे शापः स्वापः शयननिद्रयोः। त्रिषु स्यात्कुत्सिते रेफो रवर्णे तु पुमानयम् २८०
गजे ग्रीवालके कम्बुः कलम्बः शरनालयोः। वृन्दे कदम्बं नीपे ना कादम्बौ शरपक्षिणौ॥

भर्त्सनम् अपकारवचनम्, आकृष्टिः आकर्षणम्, तयोः आक्षेपः। "आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः" इति मेदिनी॥ वेशः वेशरचना, कल्पना न्यायोक्तः अनुमितिभेदः, तयोः आकल्पः। "आकल्पः कल्पने वेशे" इति मेदिनी॥ तृणभिद् कोमलस्तृणविशेषः, गुल्मिनी शाखापत्रप्रचययुता लता, तयोः, उलपः। "उलपस्तृणभेदे स्याद्गुल्मिन्यामुलपः स्मृतः" इति विश्वः। "पुंस्युलपो न स्त्री गुल्मिन्यां ना तृणान्तरे" इति मेदिनी॥ चन्द्रे नक्षत्रपतौ, प्लवे भेलके च उडुपः। "उडुपस्तु प्लवे चन्द्रे" इति विश्वः। "उडुपं तु प्लवे स्त्रियां चन्द्रे" इति मेदिनी॥ २७४॥ शास्त्रे यज्ञक्रियाणामुपदेशके शिक्षाकल्पव्याकरणादीनामन्यतमे वेदाङ्गभेदे च, विधौ ब्रह्मणि, न्याये संवर्त्ते प्रलये, ब्रह्मणो दिने ब्रह्मदिवसे च कल्पः। "कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने" इत्येव मेदिनी॥ धान्ये व्रीहिविशेषे, कुशे कुशतृणम्, अह्नः अष्टमांशे पञ्चदशधाविभक्तदिनस्याष्टमांशे काले, छागकम्बले नेपालकम्बले च कुतपः। "कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले। कुशे दिनस्याष्टमांशे ना सूर्ये" इति मेदिनी॥२७५॥गुणवृक्षे काष्ठमये वृक्षे, अपिशब्दात् स्वनामाख्याते जलाधारे गर्ते च कूपः।"कूपं कूपकमृन्माने गर्त्ताम्बुगुणवृक्षके"इति मेदिनी॥विट्सार्य्यां विट्सारिकायाम्, शवे त्यक्तप्राणे मृतदेहे च कुणपः।"कुणपः पूतिगन्धे शवेऽपि इति मेदिनी॥शुनि कुक्कुरे, मार्जारे बिडाले, त्रपुसीसः स्वनामाख्यातो धातुभेदः,रङ्गः स्वनामाख्यातो धातुभेदः, तयोश्च जिह्वापः।"जिह्वापः शुनि मार्ज्जारे"इत्येव मेदिनी॥२७६॥पादुकायां चर्म्ममये पादाच्छादने पदार्थे, वृक्षे द्रुमे, पादपीठे पादस्थापनासने च पादपः। "पादपः पादपीठेऽद्रौ पादुकायां तु पादपा" इति मेदिनी॥ जवा जवापुष्पम्, अशोकः अशोकपुष्पम्, तयोः पिण्डपुष्पम्। "पिण्डपुष्पमशोके च जवायां च कुशेशये" इति मेदिनी॥ कुसुमे, आर्त्तवे स्त्रीरजसि च पुष्पम्। "पुष्पं विकाशकुसुमस्त्रीरजःसु नपुंसकम्" इति मेदिनी॥ ॥ २७७॥ ग्रन्थावृत्तौ, पशौ मृगादौ लोमवल्लाङ्गुलवति जन्तुभेदे च, शब्दे शब्दधातूनां विभक्तियोगेन निष्पन्नशब्दे, स्वभावे, नाटकादिषु दृश्यकाव्ये नाटकादौ, आकारः अवयवसंस्थानविशेषः, सौन्दर्य्यं चारुता, "अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्। सुश्लिष्टसन्धिबन्धः स्यात् तत्सौन्दर्य्यमुदाहृतम्" इति, नामकः अभिधानम्, तेषु, अपिशब्दात् शुक्लादिवर्णे श्लोके सदृशार्थे एकसंख्यान्विते च रूपम्। "रूपं स्वभावे सौन्दर्य्ये नामके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि" इति मेदिनी॥२७८॥ शरः बाणः, रोपणः धान्यादेर्जननाय अङ्कुरादेरारोपणम्, तयोः रोपः। "रोपो रोपणबाणयोः" इति मेदिनी॥ लेपनं प्रलेपः, भोजनं कठिनद्रव्यस्य गलबिलाधःसंयोजनम्, तयोः लेपः। "लेपः प्रलेपने जग्धौ" इति मेदिनी॥ पल्लवे अभिनवे पत्रविस्तारे, स्तम्बे तृणादौ गुच्छे च विटपः। "विटपो ना स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना" इति मेदिनी॥ षिङ्गे कामुके, मेदः मांसजन्यो धातुभेदः, बिलं छिद्रम्, तयोश्च वपा। "वपा विवरमेदसोः" इति मेदिनी॥ २७९॥ आक्रोशे अनिष्टं भूयादिति एवं विरुद्धचिन्तने, शपथे सत्यताकरणाय दिव्यभेदकरणे च शापः। "शापः आक्रोशदिव्ययोः" इति मेदिनी॥ शयनं प्रसिद्धम्, निद्रा स्वप्नः तयोः स्वापः। "स्वापः शयननिद्रयोः" इत्येव मेदिनी॥ इति पकारान्ताः॥ अथ फान्तानाह॥ कुत्सिते निन्दिते, रवर्णे रकारात्मके वर्णे, तुकारात् क्रूरे अधमे दुष्टे कृपणे च रेफः। "रेफः स्यान्निन्दिते क्रूरे" इति मेदिनी॥ २८०॥ इति फकारान्ताः॥ अथ बान्तानाह॥ गजे हस्तिनि, ग्रीवालके सुवर्णालिसन्निभायां ग्रीवायां च कम्बुः। "कम्बुः

प्लीहविप्लवयोर्डिम्बः प्रलम्बो दैत्यशाखयोः। बिम्बं बिम्बीफले रूपे शम्बस्तु मुशलानने॥
कल्याणवति वज्रे च हेरम्बो महिषेऽपि च। स्वर्णारम्भावष्टम्भौ वाणी छन्दोऽप्यनुष्टुभौ॥२८३
आरम्भे उद्यमे दर्पे कामे ब्रह्मणि चात्मभूः। ऋषभौ श्रेष्ठवृषभौ करभोऽधःकरोष्ट्रयोः २८४॥
कुम्भो वारस्त्रियाः कान्ते रक्षोराशिप्रभेदयोः। वीणा प्रसेवे ककुभो रागभेदेऽर्जुनद्रुमे॥२८५॥
गर्दभं शुक्लकुमुदे खरे पुंस्यथ दानवे। जम्बीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते ॥२८६॥
दुन्दुभिर्दैत्यभेदेऽपि दम्भः कैतवकल्कयोः। दुर्लभः कर्चूरेऽकाम्ये सदृशव्याजयोर्निभः २८७॥
मुख्यराट्क्षत्त्रयोः पुंसि नाभिः प्राण्यङ्कके द्वयोः। चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे॥

शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे'' इति मेदिनी ॥ शरः बाणः, नालः नालिकाशाकः, तयोः कलम्बः। "कलम्बः सायके नीपे नालिशाके कलम्ब्यपि'' इति विश्वः। वृन्दे समूहे, नीपे कदम्बवृक्षे च कदम्बम्। "कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्'' इति मेदिनी ॥ शरः बाणः, पक्षी कलहंसः, तयोः कादम्बः। "कादम्बः स्यात् पुमान् पक्षिविशेषे सायकेऽपि च'' इति मेदिनी ॥ २८१ ॥ प्लीहा वामकुक्षिपार्श्वस्थः मांसकखण्डः, विप्लवः राष्ट्रोपद्रवः, तयोः डिम्बः। "डिम्बो भयध्वनावण्डे फुप्फुसप्लीहविप्लवे'' इति मेदिनी ॥ दैत्यः स्वनामाख्यातः असुरविशेषः, शाखा वृक्षस्यावयवः, तयोः प्रलम्बः। "प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे'' इति मेदिनी ॥ बिम्बीफले बिम्बिकाफले, रूपे दर्शनादौ च बिम्बम्। "बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुन्नपुंसकम्। बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्'' इति मेदिनी ॥ मुशलानने मुशलाग्रस्थितलोहे, कल्याणवति गुणान्विते, वज्रे हीरके च शम्बः। "शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ। शुभान्विते त्रिषु'' इति मेदिनी ॥ २८२ ॥ महिषे स्वनामाख्याते पशुभेदे, अपिशब्दात् गणेशे शौर्ये गर्विते च हेरम्बः। "हेरम्बो विघ्नराजे स्यान्महिषे शौर्यगर्विते'' इति मेदिनी ॥ इति वकारान्ताः ॥ अथ भान्तानाह ॥ स्वर्णं कनकम्, आरम्भः प्रारम्भः, तयोः अवष्टम्भः। "अवष्टम्भः सुवर्णे च स्यात्स्तम्भारम्भयोरपि''इति मेदिनी॥वाणी सरस्वती, छन्दः अष्टाक्षरपादकश्छन्दोभेदः, तयोः अनुष्टुप्। "अनुष्टुप् स्यात् सरस्वत्यां छन्दोभेदे च योषिति''इति मेदिनी ॥२८३॥ आरम्भे उद्यमे उद्योगे, दर्पे अहङ्कारे, कामे ब्रह्मणि चतुर्मुखे च आत्मभूः। "आत्मभूर्ना विधौ कामे''इति मेदिनी॥श्रेष्ठः अतिशयेन प्रशस्तः,वृषभः प्रसिद्धः,तयोः ऋषभः। "ऋषभस्त्वौषधान्तरे'' इति मेदिनी ॥ अधःकरः मणिबन्धात् कनिष्ठापर्यन्तः करस्य बाह्यदेशः, उष्ट्रः प्रसिद्धः, तयोः करभः। "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते'' इति मेदिनी ॥ २८४ ॥ वारस्त्रियाः कान्ते वेश्यायाः पतौ,रक्षःप्रभेदः कुम्भकर्णस्य पुत्रः,राशिप्रभेदः मेषावधिकः एकादशराशिः, तयोश्च कुम्भः। "कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे। कामुके वारनार्य्यां च घटे क्लीबं तु गुग्गुलौ'' इति मेदिनी ॥ वीणाप्रसेवे वीणाङ्गे वीणायाः प्रान्तबद्धे काष्ठे, रागभेदे रागिणो विशेषे, अर्जुनद्रुमे अर्जुनवृक्षे च ककुभः। "ककुभो रागभेदेऽपि वीणाङ्गेऽर्जुनपादपे'' इति मेदिनी ॥ २८५ ॥ शुक्लकुमुदे श्वेतकैरवे, खरे स्वनामाख्याते पशौ च गर्दभः। "गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभो क्षुद्ररोगजन्तुविशेषयोः'' इति मेदिनी ॥ दानवे दैत्यभेदे, जम्बीरे स्वनामाख्याते वृक्षे, व्यवहारे, दन्ते दशने, अपिशब्दात् अंशे हनौ तूणे च जम्भः। "जम्भो दैत्यविशेषे ना दन्ते जम्बीरभक्षयोः'' इति मेदिनी ॥ २८६ ॥ दैत्यभेदे असुरविशेषे, अपिशब्दात् राक्षसभेदे विषे ढक्कायां भेर्य्यां वरुणे वत्सरभेदे पाशके च दुन्दुभिः। "दुन्दुभिः पुमान्। वरुणे दैत्यभेर्य्योश्च'' इति मेदिनी ॥ कैतवं शाठ्यम्, कल्कः कपटः, तयोः दम्भः। "दम्भस्तु कैतवे कल्के'' इति मेदिनी ॥ कर्चूरे गन्धद्रव्ये, अकामे दुष्प्रापे च दुर्लभः "दुर्लभस्त्रिषु दुष्प्रापे कचूरे'' इति मेदिनी। "दुर्लभः कर्चूरे ज्ञेयो दुष्प्रापे वल्लभेऽपि च'' इति विश्वः ॥ सदृशः तुल्यः, व्याजः कपटः, तयोः निभः। "निभस्तु कथितो व्याजे पुँल्लिङ्गः सदृशे त्रिषु'' इति मेदिनी ॥ २८७ ॥ मुख्यराट् प्रधाननृपः, क्षत्रं

भूर्भूमौ स्थानमात्रे च भमृक्षे भृगुजे पुमान् । रम्भा कदल्यप्सरसोर्विभुः स्यात्स्वामिनित्ययोः॥
पुनर्नवायां वर्षाभूः स्त्री ना किञ्चुलुके प्लवे।विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च २९०
सुरभिः स्याद्वसन्तेऽपि सभा द्यूतालयेऽपि च । अभ्यागमो विरोधे च शास्त्रमायातमागमः२९१
मठादौ ब्रह्मचर्य्यादिचतुष्के चाऽऽश्रमोऽस्त्रियाम् । अङ्गीकृतावुपगमः समीपगमनेऽपि च २९२
उमा दुर्गाऽतसी चाऽथ पीडायां वीचिवेगयोः।वस्त्रसूक्ष्मे च रेखायां चोर्म्मिः स्त्रीपुंसयोर्मतः२९३
कुसुमं स्त्रीरजः पुष्पं क्षेमं कल्याणरक्षयोः । क्षेमा चण्डाऽथ कलमा लेखनीचौरशालयः२९४॥
रेतोनिकामकाम्येषु कामं पुंसि स्मरेच्छयोः । क्षौममट्टे दुकूले च ग्रामः संवसथे स्वरे ॥२९५॥

क्षत्रियः तयोः, प्राण्यङ्गके प्राण्यङ्गभेदे, चक्रमध्ये द्वादशनृपचक्रस्य मध्ये, प्रधाने मुखे, कस्तूरिकामदे मृगमदे च नाभिः । " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे " इति मेदिनी ॥ २८८ ॥ भूमौ पृथिव्याम्, स्थानमात्रे च भूः ।" भूः स्थानमात्रे कथिता धरण्यामपि योषिति " इति मेदिनी ॥ ऋक्षे नक्षत्रे, भृगुजे भृगुनन्दने च भम् । " भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद् भृगुनन्दने " इति मेदिनी ॥ कदली वृक्षविशेषः, अप्सराः मेनकादिस्वर्वेश्याजातिः, तयोः रम्भा । "रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे " इति मेदिनी ॥ स्वामी प्रभुः, नित्यं ब्रह्म, तयोः विभुः । " विभुः प्रभौ सर्वगते शङ्करब्रह्मणोस्तु ना " इति मेदिनी ॥२८९॥ पुनर्नवायाम् , किञ्चुलके महीलताख्ये कीटभेदे, प्लवे भेके च वर्षाभूः । " वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान् " इति मेदिनी ॥ केलिकलहे परिहासाय कृतकलहे, विश्वासे, प्रणये प्रीतौ स्नेहे वा, अपिशब्दात् वधे च विश्रम्भः । " विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च " इत्येव मेदिनी । "विश्रम्भः केलिकलहे विश्वासे प्रणये वधे " इति विश्वः ॥२९०॥ वसन्ते स्वनामाख्याते ऋतौ, अपिशब्दात् स्वर्णे चम्पके गन्धाश्मनि सुन्दरे जातीफलवृक्षे सुगन्धे शमीवृक्षे कदम्बे कणगुग्गुलौ गन्धतृणे बकुलवृक्षे राले चैत्रे मासि पण्डिते गन्धफले शल्लक्यां रुद्रजटायां मातृकाभेदे गवि सुरायां नवमालिकायां तुलस्यां पृथिव्यां गवां मातरि च सुरभिः । "सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातिफले पुमान् ॥ स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम् " इति मेदिनी ॥ द्यूतालयः पाशकक्रीडामन्दिरम् , तस्मिन्, अपिशब्दात् बहूनां समावेशनस्थाने तदधिष्ठायिजनसमूहे च सभा । "सभा सामाजिके गोष्ठीद्यूतमन्दिरयोरपि" इति मेदिनी ॥ इति भकारान्ताः॥ अथ मान्तानाह ॥ विरोधे विरुद्धतायाम्, चकारात् समरे अभिगमने भोगे अन्तिके स्वीकारे फलसम्बन्धे च अभ्यागमः । "अभ्यागमो विरोधाजिघाताभ्युद्गमनान्तिके"इति मेदिनी ॥ शास्त्रं शास्त्रमात्रम्, "सिद्धः सिद्धैः प्रमाणैस्तु हितं वाऽत्र परत्र च । आगमं शास्त्रमाप्तानाम् " इत्युक्तलक्षणं तस्मिन्, आयातम् आगतिः, तस्यां च आगमः । " आगमः शास्त्र आगतौ " इति मेदिनी ॥ २९१ ॥ मठादौ मुनीनां वासस्थानादौ, ब्रह्मचर्य्यादिचतुष्के ब्रह्मचर्य्यादिकेषु चतुर्ष्वाश्रमेषु च आश्रमः । " आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने " इति मेदिनी ॥ अङ्गीकृतौ स्वीकारे, समीपगमने, अपिशब्दात् ज्ञाने च उपगमः ।" उपगमः स्वीकारेऽन्तिकसर्पणे" इति मेदिनी ॥ २९२ ॥ दुर्गा प्रसिद्धा तस्याम्, अतसी स्वनामाख्यातो वृक्षः, तस्मिंश्च उमा । " उमाऽतसी हैमवतीहरिद्राकीर्तिकान्तिषु " इति मेदिनी ॥ पीडायाम्, वीचिस्तरङ्गः, वेगः जवः अश्वगतिर्वा, तयोश्च, वस्त्रसूक्ष्मे रेखायां वस्त्रसङ्कोचरेखायाम्, चकारात् प्रकाशे उत्कण्ठायां बुभुक्षादिषु षट्सु च ऊर्म्मिः । "ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः" इति मेदिनी ॥ २९३ ॥ स्त्रीरजः स्त्रिया आर्त्तवः, पुष्पं प्रसिद्धम्, तत्र कुसुमम् । "कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः" इति मेदिनी ॥ कल्याणं कुशलम्, रक्षा लब्धवस्तुनो रक्षणम्, तयोः, चण्डा चोरनामगन्धद्रव्यम् , तस्यां च क्षेमम् । "क्षेमः स्याल्लब्धरक्षणे । चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति" इति मेदिनी ॥ लेखनी लेखनसाधनी, चौरः तस्करः, शालिः धान्यविशेषः, तेषु कलमः । "कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च" इति मेदिनी ॥ २९४ ॥ रेतः शुक्रं, निकामः इष्टानतिक्रमः, काम्यः कमनीयः, तेषु, स्मरः अनङ्गः, इच्छा अभिलाषः, तयोश्च कामः ।

**गुल्मः स्तम्बे घट्टभेदे घर्मः स्वेदातपोष्मसु । जिह्मः स्यात्कुटिले मन्दे तलिमं तल्पकुट्टिमे॥२९६ तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे । द्रुमो यक्षेश्वरे वृक्षे दमो दमथुदण्डयोः ॥ २९७ ॥ धर्मोऽहिंसोपमायागोपनिषत्सु धनुष्यपि । कटे पुर्यां च निगमो नियमो निश्चये व्रते ॥ २९८॥ यन्त्रणाबन्धयोश्चाथ पञ्चमः स्वरसङ्ख्ययोः। पद्मोऽस्त्री बिन्दुजालेऽब्जे व्यूहे सङ्ख्यान्तरे निधौ गजानां दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि । भूमिः स्थानेऽपि कुन्दाम्बुनिर्गमभ्रान्तिषु भ्रमः॥ गाङ्गेयभीषणौ भीष्मौ भीमः शम्भौ च पाण्डवे । नरके मङ्गले भौमः स्वरे मध्ये च मध्यमः ॥**

"वाच्यवच्छक्तिहतयोः कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" इति मेदिनी ॥ अट्टे प्रासादस्योपरिगृहे, दुकूले क्षौमवस्त्रे सूक्ष्मवस्त्रे वा, चकारात् अतसीवल्कलजातवस्त्रे शणजे वस्त्रे च क्षौमम् । "क्षौममट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसीजे" इति मेदिनी ॥ संवसथे विप्रादीनां वासस्थाने जनसमूहनिवासस्थाने च, स्वरे स्वरभेदे च ग्रामः । "ग्रामः स्वरे संवसथे" इति मेदिनी ॥ ॥ २९५ ॥ स्तम्बे अप्रकाण्डे लताप्रतानादौ वृक्षे, घट्टभेदे घट्टदेशे रक्षणार्थं स्थापिते सैन्ये च गुल्मः । "गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तम्बे स्त्रियामामलक्येलावनविस्रवेश्मसु" इति मेदिनी ॥ स्वेदः श्रमार्तस्य गात्रात् निष्यन्दि जलम् , आतपः सूर्याद्यालोकः, उष्मः ग्रीष्मः, तेषु घर्मः । "घर्म्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपि" इति मेदिनी ॥ कुटिले वक्रे, मन्दे च जिह्मः । "जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे" इति मेदिनी ॥ तल्पः शय्या अट्टालिका वा, कुट्टिमः प्रसिद्धः, तयोः तलिमम् । "तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके" इति मेदिनी ॥ २९६ ॥ कर्णमले श्रोत्रयोर्जाते मले, हरिते हरिद्वर्णे, हरिद्यवे हरिद्वर्णे यवे च तोक्मम् । "तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे" इत्येव मेदिनी ॥ यक्षेश्वरे कुबेरे, वृक्षे च द्रुमः । "द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे" इति मेदिनी ॥ दमथुर्दमनम् , दण्डः दण्डनम् , तयोः दमः । "दमस्तु दमथौ दण्डे कर्दमे दमने पुमान्" इति मेदिनी ॥ २९७ ॥ अहिंसा वधविरहिता, उपमा सादृश्यम्, यागः यज्ञः, उपनिषद् ब्रह्मविद्या तत्प्रतिपादको वेदशिरोभागो वेदान्तश्च, तेषु, धनुषि चापे, अपिशब्दात् शास्त्रविहितकर्मानुष्ठानजन्ये भाविफलसाधनरूपे शुभादृष्टे आत्मनि जीवे वस्तुगुणरूपे आचारे स्वभावे न्याये यमे सत्सङ्गे दानादौ च धर्म्मः।"धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ।अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति मेदिनी ॥ कटे कटभेदे, पुर्यां पुरभेदे, चकारात् वणिक्पथे वाणिजे निश्चये अध्वनि प्रतिज्ञायां पर्य्यायकथनेन, वेदार्थबोधके ग्रन्थभेदे न्यायमतसिद्धे पञ्चावयवन्यायमध्ये चरमावयवे न्यायशास्त्रे तन्त्रभेदे वेदे च निगमः । "निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे" इति मेदिनी ॥ निश्चये निर्णये, व्रते पुण्यसाधने उपवासादिनियमभेदे ॥ २९८ ॥ यन्त्रणं नियमनम् , आबन्धः दृढबन्धः, तयोः, चकारात् प्रतिज्ञायां शौचादिषु च नियमः । "नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते" इति मेदिनी ॥ स्वरः पिकानां नादः, सङ्ख्या पञ्चसङ्ख्यायाः पूरणम्, तयोः पंचमः ।"पञ्चमो रागभेदे स्यात्स्वरभेदेऽथ पञ्चमी । पाण्डवानां च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु" इति मेदिनी ॥ बिन्दुजाले गजमुखादिस्थे बिन्दुसमूहे, अब्जे कमले, व्यूहे कमलाकारेण सैन्यादेरभिवेशनरूपे व्यूहभेदे, सङ्ख्यान्तरे "अर्बुदमब्जम्" इति पर्यायनाम्नोक्तायां दशार्बुदसङ्ख्यायाम्, निधौ निधिभेदे च पद्मः । "पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे" इति मेदिनी ॥ २९९ ॥ गजानां दन्तबन्धे हस्तिदन्तस्य बन्धने, अनुकृतौ सदृशीकरणे, अपिशब्दात् सदृशमृत्तिकाशिलादिमूर्त्तौ, सदृशे च प्रतिमा । "प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि"इति मेदिनी॥स्थाने स्थानमात्रे, अपिशब्दात् पृथिव्यां जिह्वायां योगशास्त्रोक्ते योगिनां चित्तस्यावस्थाभेदे एकसङ्ख्यायां च भूमिः । "भूमी" अप्यत्र । "भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्" इति मेदिनी ॥ कुन्दः भ्रमियन्त्रम्, अम्बुनिर्गमः जलनिर्गमस्थानम्, भ्रान्तिर्भ्रमणम्, तेषु भ्रमः । "भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि" इति मेदिनी॥३०० ॥ गाङ्गेयः गङ्गागर्भजातः शन्तनुसुतः स्वनामाख्यातः कुरुवंशसम्भवः क्षत्रियः, भीषणः भयानकरसः भयहेतुर्वा,

यमः संयमकीनाशयुग्मजेष्वथ राघवेरामः पशौ भार्गवे च रुक्मं लोहसुवर्णयोः ॥ ३०२ ॥
सम्पत्कमलयोर्लक्ष्मीर्विभ्रमो भ्रमहावयोः । श्यामा गुन्द्रा कोकिला च श्रामो मण्डपकालयोः॥
सार्वभौमो गजे राज्ञि सम्भ्रमौ साध्वसादरौ।कण्टकेऽल्पे च सूक्ष्मं स्यात्साधौ तुल्येऽखिले समः
सीमा वाटे स्थितौ क्षेत्रे हिमं शीतलशीतयोः।भिन्नासमानयोरन्यः स्यादभिख्या यशस्यपि ॥
आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ । आशयश्छन्द आधार आदित्यो भास्करे सुरे॥
वेदोपदेशावाम्नायौ हृषीके चेतसीन्द्रियम् । इज्या स्त्रात्सङ्गमे दाने यागेऽर्चायां गुरौ पुमान्॥

तयोः भीष्मः । "भीष्मो गाङ्गेयघोरयोः" इति मेदिनी ॥ शम्भौ महादेवे, पाण्डवे भीमसेने, चकारात् भयहेतौ भयानकरसे आम्लवेतसे दुर्गायां च भीमः । "भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे" इति मेदिनी ॥ नरके नरकासुरे, मङ्गले मङ्गलग्रहे च भौमः । "भौमः कुजे च नरके पुंसि भूमिभवे त्रिषु" इति मेदिनी ॥ स्वरे सप्तस्वरमध्ये क्रौञ्चस्वरतुल्ये पञ्चमे स्वरे, मध्यजे मध्यभवे, चकारात् मध्यदेशे च मध्यमः । "मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशे" इति मेदिनी ॥ ३०१ ॥ संयमः इन्द्रियादीनां संयमनम्, कीनाशः यमः, युग्मजः एकगर्भजायमानो यमजः, तेषु यमः । "यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ । शरीरसाधनापेक्षनित्यकर्म्माणि संयमे" इति मेदिनी ॥ राघवे दशरथज्येष्ठपुत्रे श्रीरामे, पशौ पशुभेदे, भार्गवे परशुरामे, चकारात् बलरामे मनोहरे शुभे वास्तूके कुष्ठे तमालपत्रे च रामः । "रामा योषा हिङ्गुनद्योः क्लीबं वास्तूककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे" इति मेदिनी । "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासितश्वेतमनोज्ञेषु च वाच्यवत्" इति विश्वः ॥ लोहं प्रसिद्धम्, सुवर्णं काञ्चनम्, तयोः रुक्मम् । "रुक्मं च काञ्चने लोहे" इति मेदिनी ॥ ३०२ ॥ सम्पत् सम्पत्तिः, कमलं स्थलपद्मम्, तयोः लक्ष्मीः । "लक्ष्मीः सम्पत्तिशोभयोः । ऋद्धौषधे च पद्मायां वृद्धिनामौषधेऽपि च । फलिन्यां स्त्री" इति मेदिनी ॥ भ्रमः भ्रमणम्, हावः स्त्रीणां शृङ्गाराङ्गचेष्टाभेदः, तयोः विभ्रमः । "विभ्रमो भ्रान्तिहावयोः" इत्येव मेदिनी ॥ गुन्द्रा प्रियङ्गुः, कोकिला स्वनामाख्यातो विहगभेदः, तयोः, चकारात् कृष्णात्रिवृति गुडूच्यां कस्तूर्यां शारिवायां निशायां वल्गुलौ नील्यां स्त्रीविशेषे च श्यामा । "श्यामा तु वल्गुलौ । अप्रसूताङ्गनायां च तथा सोमलतौषधौ । त्रिवृताशारिवागुन्द्रानिशाकृष्णाप्रियङ्गुषु । श्यामा नील्यां पिके" इति विश्वः ॥ मण्डपः तापाद्यसनादिना श्रमनिवारणं जनविश्रामस्थानं वा, कालः प्रसिद्धः, तयोः श्रामः । "श्रामो मासे मण्डपकालयोः" इति मेदिनी ॥ ३०३ ॥ गजे उत्तरदिक्स्थे हस्तिनि, राज्ञि चक्रवर्तिनि नृपे च सार्वभौमः। सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि" इति मेदिनी ॥ साध्वसं भयम्, आदरः समादरः सम्मानो वा, तयोः सम्भ्रमः । "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी ॥ कण्टके सूच्यग्रे, अल्पे, चकारात् कैतवे अध्यात्मपदार्थे अलङ्कारभेदे कतकवृक्षे अणुपरिमाणवति च सूक्ष्मम् । "सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके" इति मेदिनी ॥ साधौ सज्जने, तुल्ये सदृशे, अखिले सर्वे च समः । "समा संवत्सरे स्त्रियाम् । सर्वसाधुसमानेषु समं स्यादभिधेयवत्" इति मेदिनी ॥ ३०४ ॥ वाटे वृतिस्थाने, स्थितौ, क्षेत्रे केदारे च सीमा । "सीमाऽऽवाटे स्थितौ क्षेत्रे मर्यादावेलयोरपि" इति विश्वः ॥ शीतलः शीतस्पर्शः, शीतं तुषारम्, तयोः हिमम् । "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गम्" इति मेदिनी ॥ इति मकारान्ताः ॥ अथ यान्तानाह ॥ भिन्नः अपरः, असमानः असदृशः, तयोः अन्यः । "अन्योऽसदृशेतरयोः" इति मेदिनी ॥ यशसि कीर्त्तौ, अपिशब्दात् अभिधाने शोभायां च अभिख्या । "अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि" इति मेदिनी ॥ ३०५ ॥ पुष्पवत्याम् ऋतुवत्याम्, नदीभेदे नदीविशेषे, मुनौ स्वनामाख्याते ऋषिभेदे च आत्रेयी । "आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ" इत्येव मेदिनी ॥ छन्दे अभिप्राये, आधारे च आशयः । "आशयः स्यादभिप्राये पनसाधारयोरपि" इति मेदिनी ॥ भास्करे सूर्य्ये, सुरे देवे च आदित्यः । "आदित्यो भास्करे देवे" इति मेदिनी ॥ ३०६ ॥ वेदः प्रसिद्धः, उपदेशः सदुपदेशः, तयोः आम्नायः । "आम्नायो निगमेऽपि च । उपदेशेऽपि" इति मेदिनी ॥ हृषीके

उदयोऽद्रावुन्नतौ च कषायः सुरभौ रसे। कायः स्वभावे लक्ष्ये च सङ्घे मूर्तौ कदैवते ३०८॥
कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च । कश्यं कशार्हे मद्ये च काद्रवेयोऽहिरङ्गयोः ॥३०९॥
काव्यं प्रबन्धे शुक्रे ना कुलायः स्थाननीडयोः।गव्यं गोहितदुग्धादौ ज्यायां गव्या तु गोकुले॥
भीष्मे ना हेम्नि गाङ्गेयं गोप्यौ गोप्तव्यचेटकौ।गातव्यगायनौ गेयौ गृह्यमस्वैरिपक्षयोः ३११
चैत्यमायतने बुद्धबिम्बोद्देशकवृक्षयोः । चक्षुष्यं सुभगे चक्षुर्हिते स्त्री केतकेऽपि च ॥ ३१२॥
युद्धे हट्टे च जन्यं स्याज्ज्या स्यान्मौर्व्यां क्षितावपि।जटायुर्गुग्गुलद्रौ च त्रिवेद्यां त्रितये त्रयी ॥

विषयग्राहके चक्षुरादौ, चेतसि चित्ते च, " रेतासि " इति क्वचित्पाठः इन्द्रियम् । "इन्द्रियं तु हृषिके चेतासि स्मृतम्" इति मेदिनी ॥ सङ्गमे सङ्गतौ, दाने विवरणे, यागे क्रतौ, अर्चायां पूजायाम्, गुरौ च इज्या । "इज्या दानेऽध्वरेऽर्चायां सङ्गमे स्त्री गुरौ त्रिषु" इति मेदिनी ॥ ३०७ ॥ अद्रौ उदयाचले, उन्नतौ समुन्नतौ, चकारात् राशेरुदयरूपे लग्ने प्रथमदर्शनयोग्यभवने वृद्धौ उत्पत्तौ च उदयः।"उदयस्तु पुमान् पूर्वपर्वते च समुन्नतौ" इति मेदिनी॥ सुरभौ श्योनाकवृक्षे जातिफलवृक्षे वा, रसे रसभेदे कषायः ।"कषायो रसभेदेऽपि निर्यासे च विलेपने। अङ्गरागे च न स्त्री स्यात्सुरभौ लोहिते त्रिषु" इति मेदिनी ॥ स्वभावे निसर्गे,लक्ष्ये वेधार्थमुद्दिश्यमाने शरव्ये लक्षणया बोध्येऽर्थे च, सङ्घे राशौ,मूर्तौ देहे, कदैवते प्रजापतिदेवताके चरौ च कायः ।"कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः" इति मेदिनी ॥ ३०८ ॥ अनुतापे इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ज्ञानेन पश्चात्तापे, अयुक्तकरणे अनुचितकरणे, अपिशब्दात् दुष्कर्त्तव्ये च कौकृत्यम् । "कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च" इत्येव मेदिनी ॥ कशार्हे कशया ताड्ये अदन्तेऽश्वादौ, मद्ये मद्यभेदे, चकारात् अश्वमध्यभागे च कश्यम् । "कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययोः" इति मेदिनी ॥ अहिर्नराकारः कणालाङ्गूलवान् देवयोनिभेदो नागः सर्पो वा, रङ्गः धातुभेदः, तयोः काद्रवेयः ॥ ३०९ ॥ प्रबन्धे कवेः कर्म्मणि ग्रन्थभेदे वा, शुक्रे असुराचार्ये च काव्यम् । "काव्यं ग्रन्थे पुमान् शुक्रे" इति मेदिनी॥स्थानं स्थानमात्रम्, नीडः पक्षिनिलयः, तयोः कुलायः । "कुलायस्तु पुमान् स्थानमात्रे स्यात्पक्षिवासके" इति मेदिनी ॥ गोहितं गोर्हितादि, दुग्धादि गोसम्बन्धि क्षीरादि, तयोः, ज्यायां गोकुले च गव्यम् । "गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गं तु दुग्धादौ चापि गोहिते" इति मेदिनी ॥ ३१० ॥ भीष्मे गङ्गागर्भजे शन्तनुसुते स्वनामाख्याते कुरुवंश्ये क्षत्त्रिये, हेम्नि "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्ते स्वर्णे च गाङ्गेयम् । "गाङ्गेयः स्यात्पुमान् भीष्मे क्लीबं स्वर्णकशेरुणि" इति मेदिनी ॥ गोप्तव्यं रक्ष्यम्, चेकटः दासीपुत्रः, तयोः गोप्यः ।"गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्" इति मेदिनी ॥ गातव्यः, गायनं गायनकर्म्म,तयोः गेयः । "गेयं तु गीते गेयः स्याद्गातव्ये गायने त्रिषु" इति मेदिनी ॥ अस्वैरी स्वैरभावरहितः, पक्षः स्वपक्षः, तयोः गृह्यम् । "गृह्यं गुदे ग्रन्थभेदे क्लीबं शाखापुरे स्त्रियाम् । गृहासक्ते मृगादौ ना त्रिषु चास्वैरिपक्षयोः"इति मेदिनी॥३११॥आयतने बुद्धादिवन्दनस्थाने, बुद्धबिम्बं बुद्धप्रतिमा बुद्धविशेषो वा,उद्देशकः यज्ञस्थानं तत्रत्यो यो वृक्षः ग्रामादिप्रसिद्धो महावृक्षः देवावासवृक्षो वा, तयोश्च चैत्यम्।"चैत्यमायतने बुद्धबिम्बे चोद्देशपादपे"इति मेदिनी॥सुभगे प्रियदर्शने,चक्षुर्हिते नयनयार्हिते,केतके केतकीवृक्षे, अपिशब्दात् पुण्डरीकवृक्षे रसाञ्जने शोभाञ्जने सौवीराञ्जने स्थलपद्मे खर्परीतुत्थे कुलत्थिकायां सुभगायां अजशृङ्ग्यां वनकुलत्थिकायां च चक्षुष्यम् । "चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे । कुलत्थिकासुभगयोः स्त्रियामक्षिहितेऽन्यवत्" इति मेदिनी ॥ ३१२ ॥ युद्धे संग्रामे, हट्टे क्रयविक्रयस्थाने, चकारात् जायमाने जनके उत्पाद्ये नवोढाज्ञातिमित्रभृत्यास्निग्धेषु परीवादे प्रीतौ देहे जनने मातृवयस्यायां च जन्यम् । "जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्" इति मेदिनी ॥ मौर्व्यां धनुषो गुणे, क्षितौ भूमौ, अपिशब्दात् मातरि च ज्या । "ज्या मातरि वसुधायां मौर्व्याम्" इति मेदिनी ॥ गुग्गुलद्रौ गुग्गुलुतरौ, चकारात् स्वनामाख्याते खगभेदे च जटायुः ।"जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ"इति मेदिनी॥त्रिवेद्याम् ऋगादिवेदत्रये,त्रितये त्रित्वस-

निन्द्ये वस्त्रगृहे दूष्यं दस्युस्तस्करवैरिणोः । भेषजे द्रुविकारे च द्रव्यं भव्ये च पित्तले॥३१४॥
द्वितीया तिथिभित्पत्न्योः पार्थेऽग्नौ च धनञ्जयः।निकायौ सङ्घनिलयौ नित्ये सततशाश्वते ॥
पर्य्यायः स्यात्प्रकारेऽपि प्रायो ना भूयतुल्ययोः। पथ्यं हितेऽभया पथ्या पानीयं पेयनीरयोः॥
पौलस्त्यौ रावणश्रीदौ स्वर्गलाभौ फलोदयौ । ब्राह्मण्यं ब्रह्मसङ्घेऽपि बालेयौ मृदुगर्दभौ ॥
वीर्य्यं प्रधानधातौ च भयं भीकुब्जपुष्पयोः । अनधीने सहाये च भुजिष्यो हस्तसूत्रके३१८॥
स्यान्माया शाम्बरीबुद्धयोर्दैत्यशिल्प्युष्ट्रयोर्मयः । ययुरश्वे क्रतुहये रूप्यं त्रिषु सुरूपके ३१९॥
आहतस्वर्णरजते रजते च नपुंसकम् । वत्से बले बुधे रौहिणेयोऽथ श्लेषवाद्ययोः ॥ ३२० ॥

ङ्ख्यायां च त्रयी । "त्रयी त्रिवेद्यां त्रितये च" इति मेदिनी ॥ ३१३ ॥ निन्द्ये निन्दनीये, वस्त्रगृहे वस्त्रनिर्मिते गृहे च दूष्यम् । "दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे" इति मेदिनी॥ तस्करः चौरः, वैरी रिपुः, तयोः दस्युः । "दस्युश्चौरे रिपौ पुंसि" इति मेदिनी ॥ भेषजे औषधे, द्रुविकारे वृक्षविकारे, भव्ये योग्ये भाविनि च, पित्तले ताम्रादिजाते धातुभेदे, चकारात् वित्ते जतुनि विनये मद्ये न्यायोक्तेषु पृथिव्यादिषु गुणवत्सु नवसु व्याकरणोक्ते लिङ्गसङ्ख्यान्वयिनि पदार्थे विलेपने तत्सम्बन्धिनि च द्रव्यम् । "द्रव्यं तु पित्तले वित्ते पृथिव्यादौ विलेपने । क्लीबे च भेषजे भव्ये द्रुविकारे च वाच्यवत्" इति मेदिनी ॥ ३१४ ॥ तिथिभिद् चन्द्रस्य द्वितीयकलाक्रियारूपस्थितिविशेषः, पत्नी ऊढा योषित्, तयोः द्वितीया । "द्वितीया तिथिभित्पत्न्योः पूरणे तूभयोस्त्रिषु" इति मेदिनी ॥ पार्थे अर्जुने, अग्नौ, चकारात् नागभेदे पोषणकरे देहव्यापिवायौ ककुभवृक्षे चित्रकवृक्षे च धनञ्जयः । "धनञ्जयोऽर्ज्जुने वह्निनागभिद्देहमारुते" इति मेदिनी ॥ सङ्घः समानधर्मप्राणिसमूहः, निलयः निवासः, तयोः निकायः । "निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणसंहतौ" इति मेदिनी ॥ सततं निरन्तरम्, शाश्वतमन्वहम् तयोः नित्यम् । "नित्यं स्यात्सततेऽपि च । शाश्वते त्रिषु" इति मेदिनी ॥ ३१५ ॥ प्रकारे सादृश्ये द्रव्यधर्म्मभेदे वा,अपिशब्दात् अनुक्रमे अवसरे निर्माणे समानार्थबोधके शब्दे च पर्यायः ।"अथ पर्यायः प्रकारेऽवसरे क्रमे" इति मेदिनी ॥ भूयः बाहुल्यम्, तुल्यः सादृश्यम् ,तयोः प्रायः । "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी ॥ हिते हितकारके, अभया हरीतकी तद्वृक्षो वा, तत्र च पथ्यम् । "पथ्या स्त्री हरीतक्यां हिते त्रिषु" इति मेदिनी ॥ पेयं पातव्यम् , नीरं जलम्, तयोः पानीयम् । पानीयं तु जले क्लीबं पातव्ये वाच्यलिङ्गकम्" इति मेदिनी॥ ३१६॥ रावणः प्रसिद्धः, श्रीदः। कुबेरः, तयोः पौलस्त्यः । "पौलस्त्यस्तु कुबेरे स्याद्दशग्रीवेऽपि पुंस्ययम्"इति मेदिनी।।स्वर्गः देवलोकः, लाभः फलोत्पत्तिः,तयोः फलोदयः।"फलोदयः पुमान् लाभे त्रिदिवेशालयेऽपि च"इति मेदिनी॥ब्रह्मसङ्घे विप्रसमूहे, अपिशब्दात् ब्राह्मणधर्मे विप्रत्वे च ब्राह्मण्यम्।"ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम्" इति मेदिनी॥मृदुः कोमलः,गर्दभः रासभः तयोः बालेयः। "बालेयो गर्दभे पुंसि मृदौ बालहिते त्रिषु" इति मेदिनी ॥३१७॥प्रधानधातौ देहस्थे चरमधातौ शुक्रे, चकारात् बले पराक्रमे प्रभावे तेजसि दीप्तौ च वीर्य्यम् । "वीर्य्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि" इति मेदिनी ॥ भीर्भीतिः, कुब्जपुष्पं कुब्जकप्रसूनम्, तयोः भयम् । "भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च" इति मेदिनी ॥ अनधीने स्वतन्त्रे,असहाये दासे, हस्तसूत्रके करसूत्रे,चकारात् रोगे दास्यां च वेश्यायां भुजिष्यः।"भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः" इति मेदिनी॥३१८॥शाम्बरी माया, बुद्धी बुद्धमाता शुद्धोदनराज्ञः महिषी, तयोः माया। "माया स्यात् शाम्बरीबुद्धयोः" इति मेदिनी॥ दैत्यशिल्पी दानवभेदः, उष्ट्रः करभः, तयोः मयः।"मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि" इति मेदिनी ॥ अश्वे हयमात्रे, क्रतुहये अश्वमेधीये तुरङ्गमे च ययुः । "ययुः पुमानश्वमेधतुरङ्गे च तुरङ्गमे" इति मेदिनी ॥ सुरूपके सुन्दरे ॥ ३१९ ॥ आहतस्वर्णरजते अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च, रजते रजतमात्रे च रूप्यम् । "रूप्यं स्यात् सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम्" इति मेदिनी ॥ वत्से गोवत्से, बले बलरामे, बुधे बुधग्रहे च रौहिणेयः । "रौहिणेयोऽन्यवद्वत्से ना बुधे च हलायुधे" इति मेदिनी ॥ श्लेषः संश्लेषः वाद्यं नृत्यगीतवाद्यानामेकतारूपं साम्यम् , तयोः लयः ।

लयो युक्ते च लभ्यं स्याद्विषयौ देशगोचरौ । वर्गप्रस्थानयोर्व्रज्या वदान्यस्त्यागवान् सुवाक् ॥
स्त्री मल्यां निर्जने शून्यं शौर्य्यं चारभटी बलम्।शाण्डिल्यौ मुनिमालूरौ सौरभ्यं चारुताऽपि च
सौम्यो बुधग्रहे पुंसि वाच्यवन्नीचबोधने।साध्या देवाः फलं साध्यं स्थेयौ नेतृपुरोहितौ३२३॥
ना शैले सह्यमारोग्ये सामर्थ्यं शक्तियोग्यते। एकद्व्यादौ विचारे च सङ्ख्या क्लीबे च संयुगे॥
हिरण्यं रेतसि स्वर्णे मानभेदवराटयोः । उरस्यपि च बुक्कायां हृदयं मानसेऽपि च ॥ ३२५॥
अङ्कुरो रोम्णि रुधिरे वारिण्यभिनवोद्भिदि ।अमरा नाभिनालायां गुडूच्यामप्यथाम्बरम् ॥
नाकेऽतिगन्धद्रव्ये च स्यादस्रं रुधिराश्रुणोः। प्रस्तावेऽवसरो वर्षे चौष्ठे नीचेऽपि चाधरः३२७

"लयो विनाशे संश्लेषे साम्ये तौर्यत्रिके मतम्" इति मेदिनी ॥ ३२० ॥ युक्ते उचिते मिलिते वा, चकारात् लब्धव्ये च लभ्यम् । "लभ्यं युक्ते च लब्धव्ये" इति मेदिनी ॥ देशः कुरुपञ्चालादयः प्रसिद्धजनपदाः स्थानमात्रं वा, गोचरः इन्द्रियगोचरः शब्दादिः, तयोः विषयः । "विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी ॥ वर्गः समानधर्मसमूहः, प्रस्थानं गमनम् , तयोः व्रज्या । "नृत्ये च व्रज्या प्रस्थाने वर्गे पर्यटनेऽपि च" इति मेदिनी ॥ त्यागवान् भूरिदानशीलः, सुवाक् सुन्दरवाची, तयोः वदान्यः । "वदान्यो दानशौण्डे च चारुवादिनि वाच्यवत्" इति मेदिनी ॥ ३२१ ॥ मल्ल्यां मल्लिकायाम् , निर्जने जनाभावस्थाने च शून्यम् । "शून्यं स्यान्निर्जने वाच्यलिङ्गं मल्ल्यां तु योषिति" इति मेदिनी ॥ आरभटी नाट्यरचनाभेदः, बलं शक्तिः, तयोः शौर्यम् । "शौर्यमारभटीशक्त्योः" इति मेदिनी ।। मुनिः गोत्रप्रवर्त्तकभक्तिशास्त्रकारको मुनिभेदः, मालूरः बिल्वः, तयोः शाण्डिल्यः ।"शाण्डिल्यः पावकान्तरे । मुनिभेदे च मालूरे" इति मेदिनी ॥ चारुता मनोहरता तत्र, अपिशब्दात् सौगन्ध्ये गुणगौरवे च सौरभ्यम् ।"सौरभ्यं तु मनोज्ञत्वे सौगन्ध्ये गुणगौरवे" इति मेदिनी ॥ ३२२ ॥ बुधग्रहे बुधे, नीचबोधने च सौम्यः । "सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते" इति मेदिनी।।देवाः द्वादशसङ्ख्याकाः गणदेवताः,फलं साधनीयम्, तत्र।साध्यः।"साध्यो योगान्तरे शरे।गणदेवविशेषे च साधनीये तु वाच्यवत्"इति मेदिनी।।नेता विवादे संशयनिर्णायकः, पुरोहितः प्रसिद्धः, तयोः स्थेयः ।"स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते" इति मेदिनी ॥ ३२३ ॥ शैले पूनाख्यदेशसमीपस्थपर्वतभेदे, आरोग्ये । च सह्यम् । "सह्यं शैलान्तरे पुमान् । सोढव्ये वाच्यलिङ्गं स्यादारोग्ये तु नपुंसकम्" इति मेदिनी ॥ शक्तिः देहजं बलम् , योग्यता उचितत्वम् , तयोः सामर्थ्यम् ।"सामर्थ्यं योग्यतायां स्याच्छक्तावपि नपुंसकम्" इति मेदिनी ॥ एकद्व्यादौ द्रव्याश्रिते एकत्वद्वित्वादौ गुणभेदे, विचारे तत्त्वनिर्णये, संयुगे युद्धे, चकारात् बुद्धौ च सङ्ख्या । "सङ्ख्यं समिति सङ्ख्या स्यादेकद्व्यादिविचारयोः" इति मेदिनी ॥ ३२४ ॥ रेतसि शुक्रे, स्वर्णे कनके, मानभेदः परिमाणविशेषः, वराटः खर्परः, तयोश्च हिरण्यम् । "हिरण्यं रेतसि द्रव्ये, शातकुम्भवराटयोः । अक्षये मानभेदे च स्यादकुप्ये नपुंसकम्" इति मेदिनी ॥ उरसि, वक्षसि बुक्कायां हृदयस्थे मांसपिण्डे, मानसे मनसि, अपिशब्दात् परब्रह्मणि च हृदयम् । "हृदयं मानसे बुक्कोरसोरपि नपुंसकम्" इति मेदिनी ॥ ३२५ ॥ इति यकारान्ताः ॥ अथ रान्तानाह ॥ रोम्णि देहजाते अङ्कुराकारे केशतुल्ये पदार्थे लोम्नि, रुधिरे शरीरस्थे रसपाकजन्ये धातुभेदे, वारिणि जले, अभिनवोद्भिदि च अङ्कुरः । "अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि" इति मेदिनी ॥ नाभिनालायां जरायौ, गुडूच्यां छिन्नरुहायाम् , अपिशब्दात् स्थूणायां देवनगर्याममरावत्यां घृतकुमार्यां वटवृक्षे च अमरा । "अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे । स्त्री गुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु" इति मेदिनी॥३२६॥ नाके स्वर्गे आकाशे वा, अतिगन्धद्रव्ये, स्वनामाख्यातगन्धद्रव्ये, चकारात् मर्म्मरशब्दयुक्ते वस्त्रे अभ्रकधातौ च अम्बरम्।"अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः" इति मेदिनी॥ रुधिरं रक्तम्, अश्रु चक्षुर्जलम्, तयोः अस्रम् । "अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते"इति मेदिनी ॥ प्रस्तावे प्रसङ्गे, वर्षे वत्सरे, चकारात् जिज्ञासानिवृत्तये अवश्यवक्तव्ये वर्षणे मन्त्रभेदे क्रियास्थितियोग्यतासम्पादकरूपे कालिकेऽवकाशे च अवसरः । "अथाऽवसरः पुमान् । प्रस्तावे मन्त्रभेदे च वर्षणे चापि कीर्तितः" इति मेदिनी ॥ ओष्ठे दशनच्छदे, नीचे, अपिशब्दात् हीने ऊर्ध्वे तले च अधरः । "अधरस्तु

श्रेष्ठेऽप्यग्रोऽवतारस्तु तीर्थेऽवतरणेऽपि च । गलहस्तेऽप्यर्धचन्द्रोऽकूपारः कमठेऽम्बुधौ॥३२८॥
अलाते स्त्री कुजेऽङ्गारः श्रेष्ठावाच्यावनुत्तरौ । नक्रे चौरे चावहारः स्यादभ्रं व्योममेघयोः३२९
हविर्वह्नी चाग्निहोत्रौ वृक्षे लघुनि चागुरुः । शक्तौ निरण्डश्चाण्डीरावङ्घ्रिः स्यात्पादमूलयोः॥
आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले । आरः शनैश्चरे भौमे इन्द्र आत्मनि वासवे ॥ ३३१॥
गौरीश्वरी शिवस्वामिकन्दर्पेष्वीश्वरः पुमान् । उदारौ दक्षिणस्थूलौ द्रुमे मेढ्रेऽप्युदुम्बरः३३२॥
उग्रोऽन्त्यजे शिवेऽत्युच्चे उस्रो दीप्तौ गवि स्त्रियाम्।सिंहजटासु पुन्नागे बकुले नागकेशरे३३३॥
केशरः पुंसि किञ्जल्के न स्त्री हिङ्गुनि न द्वयोः।मक्षिकायामपि क्षुद्रा क्षुद्रः स्यात्कृपणे त्रिषु३३४

पुमानोष्ठे हीनेऽनूर्ध्वे तु वाच्यवत् '' इति मेदिनी ॥ ३२७ ॥ श्रेष्ठे अतिशयप्रशस्ते, अपिशब्दात् प्रधाने अधिके उपरिभागे शेषभागे आलम्बने पूर्वभागे पलपरिमाणे समूहे प्रथमे च अग्रः।"अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्" इति मेदिनी ॥ तीर्थे पुष्करिण्यादेः सोपानपद्धतौ, अवतरणे नद्यादेरवरोहणे, अपिशब्दात् देवानामंशावेशवशेन प्रादुर्भावे च अवतारः । "अवतारोऽवतरणे पुष्करिण्यादितीर्थयोः"इति मेदिनी॥गलहस्ते अपसारणार्थं गलेऽर्पिते हस्ते,अपिशब्दात् चन्द्रस्यार्द्धे तदाकारे नखक्षते बाणभेदे स्त्रीणां तिलकभेदे कृष्णत्रिवृति च अर्द्धचन्द्रः । "अर्द्धचन्द्रो नखक्षते । गलहस्ते बाणभेदे कृष्णात्रिवृति तु स्त्रियाम्"इति मेदिनी ॥ कमठे कच्छपे, अम्बुधौ समुद्रे च अकूपारः ।"उपलादावकूपारः कूर्म्मराजे महोदधौ" इति मेदिनी ॥३२८ ॥ अलाते अर्द्धदग्धे अग्निसङ्क्रान्ते अग्निशून्ये वा काष्ठखण्डे, कुजे मङ्गलग्रहे च अङ्गारः । "अङ्गारमुल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते" इति मेदिनी ॥ श्रेष्ठः अत्यन्तप्रशस्तः, अवाच्यः उत्तरवाक्यरहितः, तयोः अनुत्तरः । "अनुत्तरं त्रिषु श्रेष्ठे प्रतिजल्पाविवर्जिते" इति मेदिनी ॥ नक्रे ग्राहनामके जलजन्तुभेदे, चौरे तस्करे, चकारात् युद्धादिविश्रामे निमन्त्रितविप्रादिभ्यो देये द्रव्ये च अवहारः । "अवहारः पुमान् चौरे द्यूतयुद्धादिविश्रमे" इति मेदिनी ॥ व्योम आकाशः, मेघो जलधरः, तयोः अभ्रम् । "अभ्रं मेघे च गगने धातुभेदे च काञ्चने" इति मेदिनी ॥ ३२९ ॥ हविर्मन्त्रकरणकवह्निस्थापनपूर्वकहोमादिः, वह्निः अग्निः, तयोः अग्निहोत्रः ।"अग्निहोत्रोऽग्निहविषोः" इति मेदिनी ॥ वृक्षे स्वनामाख्याते अगुरुचन्दने, लघुनि गुरुभिन्ने, चकारात् उपदेशकशून्ये च अगुरुः । "अगुरु क्लीबं जोङ्गकाशिंशपयोर्वाच्यवल्लघुनि" इति मेदिनी ॥ शक्तः समर्थः, निरण्डः पुरुषः, तयोः, अपिशब्दात् पुरुषावयवे च अण्डीरः । "अण्डीरः पुरुषे शक्ते" इति मेदिनी । "अण्डीरः शक्तनरयोः" इति हैमः ॥ पादश्चरणम्, मूलं वृक्षादेर्मूलम्, तयोः अङ्घ्रिः । "अङ्घ्रिर्ना पादमूलयोः" इति मेदिनी ॥ ३३० ॥ प्रसरणे प्रकृष्टगमने, वेगवृष्टौ धारासम्पाते, सुहृद्बले मित्ररूपे सैन्ये च आसारः। "आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले" इत्येव मेदिनी ॥ शनैश्चरे शनिग्रहे, भौमे मङ्गलग्रहे च आरः । "आरा चर्म्मप्रभेदिन्यां पुंसि भौमे शनैश्चरे " इति मेदिनी ॥ आत्मनि मनसि देहे वा, वासवे देवाधिपे च इन्द्रः । "इन्द्रः शक्रादित्यभेदे योगभेदेऽन्तरात्मनि" इति मेदिनी ॥ ३३१ ॥ ईश्वरी पार्वती, तत्र गौरी । "गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः " इति मेदिनी ॥ शिवः महादेवः, स्वामी पतिः, कन्दर्पः अनङ्गः, तेषु ईश्वरः । "ईश्वरो मन्मथे शम्भौ नाऽऽढ्ये स्वामिनि वाच्यवत्" इति मेदिनी ॥ दक्षिणः सर्वनायिकासु समानुरागो नायकभेदः, स्थूलः महान्, तयोः उदारः । "उदारो दातृमहतोर्दक्षिणे चाभिधेयवत्" इति मेदिनी ॥ द्रुमे यज्ञाङ्गे वृक्षे, मेढ्रे पण्डके, अपिशब्दात् ताम्रे देहल्यां कुष्ठभेदे च उदुम्बरः । "उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमान् ताम्रे तु स्यान्नपुंसकम्" इति मेदिनी ॥ ३३२ ॥ अन्त्यजे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने संकीर्णवर्णे, शिवे महादेवे च उग्रः । "उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचाक्षुद्रयोः" इति मेदिनी ॥ अत्युच्चे उच्चतरे, दीप्तौ किरणे, गवि वृषे च उस्रः । "उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः" इति मेदिनी ॥ सिंहजटासु सिंहस्कन्धस्थायां जटायाम्, बहुवचनप्रयोगात् अश्वस्कन्धस्थेषु केशेषु च, पुन्नागे स्वनामख्याते वृक्षे, बकुले बकुलवृक्षे, नागकेशरे स्वनामाख्याते पुष्पवृक्षे ॥ ३३३ ॥ किञ्जल्के, हिङ्गुनि रामठे च केशरः । दन्त्यसकारान्तशब्दोऽपि एतेष्वर्थेषु दृश्यते । " केशरं हिङ्गुले

कद्रुस्त्रिषु कडारे स्यात्कद्रुः स्त्री नागमातरि। नापितस्योपकरणे कोकिलाक्षेऽपि च क्षुरः ३३५॥
भस्मकाचरसाः क्षाराः कारुः कारकशिल्पिनोः। कँर्बुरो राक्षसे पापे कँर्बुरं शबले जले ३३६॥
कारे पीडाबन्धशाले क्रूरौ कठिनभीषणौ। जम्बुद्वीपसहाकन्याः कुमार्योऽथाश्ववारके॥३३७॥
बालके कार्त्तिकेये च कुमारो भर्तृदारके। कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके॥३३८॥
सिद्धस्थानेऽपि च क्षेत्रं कर्करौ दृढदर्पणौ। शिंशपायां कृष्णसारः स्नुह्यां चाथोत्पलेऽपि च॥
कर्णपूरः कुबेरस्तु नन्दीवृक्षैकपिङ्गयोः। शट्यां च शूकशिम्ब्यां च कच्छूरा पामने त्रिषु ३४०
कन्दरः स्याद्गुहासृण्योः कोट्टारौ कूपनागरौ। क्रदरः क्रकचे रोगे कदरः खदिरे सिते॥३४१॥

क्लीबं किञ्जल्के न स्त्रियां पुमान्। सिंहसटायां पुन्नागे बकुले नागकेशरे" इति मेदिनी॥ मक्षिकायां मक्षिकामात्रे, अपिशब्दात् वेश्यायां कण्टकार्यां सरघायां चाङ्गेर्यां हिंसायां गवेधुकायां च क्षुद्रा। "क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च। चाङ्गेरीवेश्ययोर्हिंसामक्षिकामात्रयोरपि" इति मेदिनी॥ कृपणे व्ययकुण्ठे क्षुद्रः। "क्षुद्रः स्यादधमे क्रूरकृपणाल्पेषु वाच्यवत्" इति मेदिनी॥ ३३४॥ कडारे पिङ्गलवर्णे, नागमातरि च कद्रुः। "कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम्" इति मेदिनी॥ नापितस्य क्षुरकर्म्मकारकस्य उपकरणे क्षुरकर्म्मादिभाण्डसमूहे अस्त्रे च, कोकिलाक्षे स्वनामाख्याते वृक्षभेदे, अपिशब्दात् गोक्षुरे महापिण्डीतके बाणे पश्वादीनां शफे च क्षुरः। "क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे" इति मेदिनी॥३३५॥ भस्म दग्धगोमयादिविकारः, काचः क्षारजातमृत्तिकाभेदः, रसः "क्षार" इति नाम्ना ख्यातो रसः, तेषु क्षारः। "क्षारो रसान्तरे धूर्त्ते लवणे काचभस्मनोः" इति मेदिनी॥ कारकः करणशीलः, शिल्पी चित्रादिकर्म्मकरः, तयोः कारुः। "विश्वकर्म्मणि कारुर्ना त्रिषु कारकशिल्पिनोः" इति मेदिनी॥ राक्षसे, पापे शट्याम्, शबले कर्बुरवर्णे,जले सलिले च कर्बुरः। "कर्बुरः सलिले हेम्नि कर्ब्बुरः पापरक्षसोः" इति मेदिनी॥ क्वचित् "कर्बूरः" इति दीर्घोकारान्तपाठो दृश्यते। तस्यार्थोऽप्येवम्॥ ३३६॥ पीडा व्यथा, बन्धशाला बन्धनागारम्, तयोः कारा। "कारा दूत्यां प्रसेवके। बन्धने बन्धनागारे हेमकारिकयोरपि" इति विश्वः॥ कठिनः निष्ठुरः, भीषणः निर्दयः घोरो वा, तयोः क्रूरः। "क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्" इति मेदिनी॥ जम्बुद्वीपः प्रसिद्धः, सहा घृतकुमारी, कन्या अनूढा, तत्र कुमारी। "कुमारी शैलतनयानवमल्ल्योर्नदीभिदि। सहाऽपराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम्" इति मेदिनी॥ अश्ववारके अश्वारोहिणि॥ ३३७॥ बालके पञ्चवर्षीये बालके, कार्त्तिकेये स्कन्दे, भर्तृदारके नाट्योक्तौ राजकुमारे युवराजे वा, चकारात् शुके पक्षिणि सिन्धुनदे वरुणवृक्षे च कुमारः। "कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने" इति मेदिनी॥ धूम्याटे स्वनामाख्याते पक्षिणि, करञ्जे पूतिकरञ्जे, पीतमस्तके पीतवर्णमस्तकयुक्ते च कलिकारः। "कलिकारस्तु धूम्याटे करञ्जे पीतमस्तके" इत्येव मेदिनी॥ ३३८॥ सिद्धस्थाने पुण्यफलसाधनयोग्यस्थाने, अपिशब्दात् इन्द्रिये देहे अन्तःकरणे इन्द्रियादिसङ्घाते सस्याद्युत्पत्तिस्थाने केदारे कलत्रे मेषादिद्वादशराशिषु च क्षेत्रम्। "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी॥ दृढः कठिनः, दर्पणः आदर्शः, तयोः कर्करः। "कर्करो भाण्डभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी॥ शिंशपायां शिंशपावृक्षे, स्नुह्यां स्नुहीवृक्षे, चकारात् मृगविशेषे च कृष्णसारः। "कृष्णसारा शिंशपायां पुंसि स्नुह्यां मृगान्तरे" इति मेदिनी॥ उत्पले नीलोत्पले, अपिशब्दात् कर्णाभरणे शिरीषवृक्षे अशोकवृक्षे च कर्णपूरः। "कर्णपूरः शिरीषे स्यान्नीलोत्पलवतंसयोः" इति मेदिनी॥ ३३९॥ नन्दीवृक्षः, एकपिङ्गः यक्षराजः तयोः कुबेरः। "कुबेरः स्यात् पुंसि नन्दीवृक्षे पुण्यजनेश्वरे" इति मेदिनी॥ शट्यां स्वनामाख्याते औषधभेदे गन्धशट्यां वा, शूकशिम्ब्यां कापिकच्छ्वाम्, पामने पामनरोगवति च कच्छूरा। "कच्छूरा शूकाशिम्ब्यां च शटीदुःस्पर्शयोरपि" इति मेदिनी॥ ३४०॥ गुहा गह्वरम्, सृणिः अङ्कुशः, तयोः कन्दरः। "कन्दरस्त्वङ्कुशे पुंसि गुहायां तु नपुंसकम्" इति मेदिनी॥ कूपः स्वनामाख्यातो जलाधारगर्त्तः, नागरः प्रसिद्धः, तयोः कोट्टारः। "कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके" इति मेदिनी॥ क्रकचे ग्रन्थिलाख्ये,

कट्वरं कुत्सिते तक्रे किर्म्मीरो शबलासुरौ। कपाले च कटाहे च शस्त्रभेदे च कर्परः ॥३४२॥
भिक्षापात्रे कपाले च खर्परस्तस्करेऽपि च। देवताडे खरा स्त्री स्यात्खरो गर्दभतीक्ष्णयोः ३४३
भद्रमुस्ते गुवाके च खपुरोऽथ द्रुमे पुमान्। रूप्ये खले च खर्ज्जूरः खुरः कोलदले शफे ३४४॥
खरुरश्वे हरे दर्पे दन्ते श्वेते तु वाच्यवत्। गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि ॥३४५॥
गायत्री खदिरे स्त्री स्याच्छन्दस्यपि षडक्षरे । गुन्द्रस्तेजनके गुन्द्रा प्रियङ्ग्वां भद्रमुस्तके ॥
गह्वरे द्वे गुहाकुञ्जे पूर्द्वारि द्वारि गोपुरम्। नग्नकन्योमयोर्गौरी गौरः स्यादुज्ज्वलेऽपि च॥३४७॥
गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियाम्।स्वरे रणे च गान्धारो गृध्रः स्याल्लोभिपक्षिणोः

वृक्षे करपत्रे वा, रोगे रोगभेदे, सिते खदिरे श्वेतखदिरे च कदरः। "कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः" इति मेदिनी ॥ ३४१ ॥ कुत्सिते मलिने, तक्रे चतुर्थांशजलयोगेन मथिते दध्नि च कट्वरम्। क्वचित् "कच्चरम्" इति पाठः। "कच्चरं कुत्सिते तक्रे" इति विश्वः। "कच्चरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्" इति मेदिनी ॥ शबलः कर्बुरवर्णः चित्रवर्णो वा, असुरः राक्षसभेदः, तयोः किर्म्मीरः। "किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे" इति मेदिनी ॥ कपाले शीर्षोर्द्ध्वास्थिन, कटाहे तैलादेः पाकसाधनपात्रे, शस्त्रभेदे अस्त्रविशेषे च कर्परः। "कर्परः स्यात्कपाले च शस्त्रभेदकटाहयोः" इति मेदिनी ॥ ३४२ ॥ भिक्षापात्रे भिक्षाभाण्डे, कपाले शिरोऽस्थनि, तस्करे चौरे, अपिशब्दात् धूर्ते भिन्नमृन्मयखण्डे धातुभेदे तुत्थाञ्जनभेदे च खर्परः। "खर्परस्तस्करे धूर्ते भिक्षाभाण्डकपालयोः" इति मेदिनी ॥ देवताडे स्वनामाख्याते वृक्षे खरा। गर्दभः प्रसिद्धः, तीक्ष्णः उग्रः, तयोः खरः। "खरः स्यात्तीक्ष्णघर्मयोः। गर्दभे स्त्री देवताडे" इति मेदिनी ॥ ३४३ ॥ भद्रमुस्ते नागरमुस्तके, गुवाके क्रमुकवृक्षे, चकारात् व्याघ्रनखे ऊर्द्ध्वगते पुरोघटे अलसे च खपुरः। "खपुरः क्रमुके भद्रमुस्तकेऽप्यलसेऽपि च" इति मेदिनी ॥ द्रुमे वृक्षभेदे, रूप्ये रजते, खले, चकारात् स्पर्शने कीटभेदे च खर्ज्जूरः। "खर्ज्जूरं रूप्यखलयोर्वृश्चिके ना द्रुमे द्वयोः" इति मेदिनी ॥ कोलदले बदरीपत्रे, शफे स्वनामाख्याते पशूनां शफे च खुरः। "खुरः कोलदले शफे" इत्येव मेदिनी ॥ ३४४ ॥ अश्वे हये,हरे महादेवे, दर्पे गर्वे,दन्ते चर्वणसाधनेऽस्थिभेदे, श्वेते श्वेतवर्णवति च, तुकारात् निषिद्धरुचौ निर्बोधे क्रूरे च पतिंवरायां कन्यायां च खरुः।"खरुर्दर्पे हरे हये।दन्ते पुंसि ।त्रिषु श्वेते"इति मेदिनी॥महति बलवति, दुर्जरः दुःखेन जीर्य्यन्पदार्थः, अलघुः गुरुत्ववान्, तयोश्च अपिशब्दात् मनूक्ते निषेकादिकर्त्तरि पित्रादौ आचार्ये सम्प्रदायप्रवर्त्तके उपाध्याये तान्त्रिकशास्त्रोपदेष्टरि बृहस्पतौ तदधिदैवे पुष्ये द्विमात्रे दीर्घस्वरवर्णे विन्दुविसर्गयुक्ते एकमात्रे संयुक्तवर्णात् पूर्वस्थिते एकमात्रेऽपि वर्णे द्रोणाचार्ये कपिकच्छ्वां पूज्ये च गुरुः।"गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि" इति मेदिनी ॥ ३४५ ॥ खदिरे स्वनामाख्याते वृक्षे, छन्दसि वेदोक्ते, षडक्षरे षडक्षरपादके छन्दोभेदे, अपिशब्दात् मन्त्रभेदे च गायत्री। "गायत्री त्रिपदादेवीछन्दोभित्खदिरेषु च" इति मेदिनी ॥ तेजनके वंशे, प्रियङ्ग्वाम्, भद्रमुस्तके नागरमुस्तके च गुन्द्रः। "गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके" इति मेदिनी ॥ ३४६ ॥ गुहा अकृत्रिमः पर्वतगर्त्तः, कुञ्जं निकुञ्जम्, तयोः गह्वरम्। "अथ गह्वरम्। गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्" इति मेदिनी ॥ पूर्द्वारि नगरद्वारे, द्वारे च गोपुरम्। "गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च" इति मेदिनी ॥ नग्नकन्या असञ्जातरजस्का कन्या, उमा पार्वती, तयोः गौरी। "गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः" इति मेदिनी ॥ उज्ज्वले स्वर्णे, अपिशब्दात् श्वेतसर्षपे चन्द्रे धववृक्षे अरुणवर्णे श्वेतवर्णे तत्तद्वर्णवति विशुद्धे पद्मकेशरे पङ्कजे कुङ्कुमे च गौरः। "गौरः श्वेतेऽरुणे पीते विशुद्धे चाऽभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेशरे" इति मेदिनी ॥३४७॥ नाम्नि आख्यायाम्, कुले पौत्राद्यपत्ये वंशे, शैले पर्वते, भूः पृथिवी, गव्या गोसम्बन्धिनी, तयोश्च गोत्रम्। "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः" इति मेदिनी ॥ स्वरे स्वरभेदे, रणे गीतिविषये, चकारात् सिन्दूरे रागभेदे "कन्दार" इति ख्याते देशोद्भवे गन्धके च गान्धारः। "गान्धारः पुंसि सिन्दूरे रागदेशप्रभेदयोः" इति मेदिनी ॥ लोभी लोभशीलः, पक्षी खगभेदः, तयोः गृध्रः। "गृध्रः खगा-

कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियाम्।चन्द्रः शशिनि कर्पूरे चारो बन्धापसर्पयोः ॥
मृते देवकुले चैत्रं ना भूभृन्मासभेदयोः । सर्पे विष्णौ चक्रधरश्चिकुरौ वृक्षभित्कचौ ॥३५० ॥
चक्रः कोके व्रजे पुंसि क्लीबे सैन्यरथाङ्गयोः । ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते ॥
नदप्रभेदे वाद्ये च झर्झरोऽथ गुणध्वनौ । प्रसिद्धावपि टङ्कारस्तारोऽत्युच्चस्वरे त्रिषु ॥ ३५२ ॥
तारिण्यङ्गदमात्रोः स्त्री न ना ऋक्षाक्षिमध्ययोः । दृग्रोगे तिमिरं ध्वान्ते तोत्त्रं प्राजनवेणुके ॥
धान्याके तुम्बरी शुन्यां ताम्रं शुल्वेऽरुणे त्रिषु । पेटके नावि च तरी तुषारः शीकरे हिमे॥
इतिकर्त्तव्यता तन्त्रमुपायश्च द्विसाधकः । तीव्रं कटुनितान्तं च दर्दरः शैलभुग्नयोः ॥ ३५५॥

न्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके" इति मेदिनी ॥ ३४८ ॥ कर्बुरे चित्रवर्णे, तिलके स्वनामाख्याते नासादौ धार्य्ये चन्दनादिविशेषके च चित्रम् । सुभद्रा प्रसिद्धा, तारा तारका अक्षितारका वा, तयोः चित्रा "चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि" इति मेदिनी ॥ शशिनि हिमांशौ, कर्पूरे स्वनामाख्याते गन्धद्रव्ये च चन्द्रः । "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी ॥ बन्धः बन्धनम्, अपसर्पः गुप्तचरः अपसरणं वा, तयोः चारः । "चारः प्रियालवृक्षे स्याद् गतौ गन्धापसर्पयोः" इति मेदिनी ॥ ३४९ ॥ मृते, देवकुले देववंशे, भूभृत्पर्वतभेदः, मासभेदः स्वनामाख्यातः शुक्लप्रतिपदादिदर्शान्तरूपो मासः, तयोश्च चैत्रम् । "चैत्रं मृते देवकुले ना भूभृन्मासभेदयोः" इत्येव मेदिनी ॥ सर्पे भुजङ्गमे, विष्णौ श्रीकृष्णे च चक्रधरः । "अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि" इति मेदिनी॥ वृक्षभिद् वृक्षभेदः, कचः केशः, तयोः चिकुरः ।"चिकुरस्तरलागयोः । पक्षिवृक्षभिदोः केशे गृहबभ्रौ सरीसृपे"इति मेदिनी॥३५०॥कोके चक्रवाके पक्षिणि,व्रजे समुदाये,सैन्यं सेनासमुदायः, रथाङ्गः प्रसिद्धः, तयोश्च,ग्रामजाले,कुम्भकारकभाण्डे कुम्भकारस्य उपकरणे,राष्ट्रे,चकारात् व्यूहभेदे अस्त्रभेदे पुटभेदे जलावर्त्ते तगरपुष्पे अलङ्कारोक्ते काव्यबन्धविशेषे वीरादिचक्रेषु तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु पद्मेषु च चक्रः । "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्त्ते" इति मेदिनी ॥ ३५१ ॥ नदप्रभेदे नदविशेषे, वाद्ये वाद्यभेदे पटहे, चकारात् कलियुगे च झर्झरः । 'झर्झरः स्यात् कलियुगे वाद्यभाण्डे नदान्तरे" इति मेदिनी ॥ गुणध्वनौ धनुर्ज्याकर्षणजे शब्दे, प्रसिद्धौ, अपिशब्दात् विस्मयहेतुके शब्दे ध्वनिभेदे च टङ्कारः । "टङ्कारो विस्मये पुंसि प्रसिद्धौ शिञ्जिनीध्वनौ" इति मेदिनी ॥ अत्युच्चस्वरे अत्युच्चनादे ॥ ३५२ ॥ तारिणी तरणकर्त्री, अङ्गदमाता वालिपत्नी, तयोश्च, ऋक्षं नक्षत्रम्, अक्षिमध्यः नेत्रमध्यस्थकनीनिका, तयोश्च तारः । "तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम् " इति मेदिनी ॥ दृग्रोगे नेत्ररोगे, ध्वान्ते अन्धकारे च तिमिरम् । "तिमिरं ध्वान्ते नेत्रामयान्तरे " इति मेदिनी ॥ प्राजनं गवादिताडनदण्डः, वेणुकं गजादिपालनार्थं लौहमुखो वंशदण्डः, तयोः तोत्रम् ।"पुंसि त्रपुणि तोत्रं तु प्राजने वेणुकेऽपि च"इति मेदिनी॥३५३॥धान्याके औषधविशेषे, शुन्यां कुक्कुरयोषिति च तुम्बरी ।"तुम्बरी कुक्कुरास्त्रियाम् । धान्याकेऽपि" इति मेदिनी ॥ शुल्वे धातुभेदे, अरुणे अरुणप्रभायां च ताम्रम् । "ताम्रं शुल्वेऽरुणेऽपि च " इति मेदिनी ॥ पेटके वसनपेटके, नावि नौकायां च तरी ।"तरिः"इति ह्रस्वेकारान्तपाठोऽपि युज्यते । "तरिस्तु तरणे पुंसि कृशानौ पेटके तरी" इति मेदिनी॥शीकरे जलकणे, हिमे च तुषारः ।"तुषारस्तु शीतले शीकरे हिमे" इति मेदिनी॥३५४॥इतिकर्त्तव्यता इदं कृत्वा इदं कुर्यादित्येवं पारिपाटीरूपः कर्म्मानुष्ठानक्रमः, उपायः साधनम्, द्विसाधकः उभयार्थः, तयोः, चकारात् सिद्धान्ते औषधे कुटुम्बकार्य्ये प्रधाने तन्तुवाये परिच्छेदे हेतौ सकृत्प्रवृत्तौ तन्तौ स्वराष्ट्रचिन्तायां परिजन तन्तुवायशलाकायां प्रबन्धे शपथे धने गृहे वपनसाधने करणे कुले वेदशाखाभेदे वेदादिशास्त्रे स्वनामाख्याते शिवाद्युक्ते शास्त्रे च तन्त्रम् । "तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे । प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे । श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके । इतिकर्त्तव्यतायां च" इति मेदिनी ॥ कटु तीक्ष्णम्, नितान्तम् अत्यन्तम्,

उपाये निर्गमे द्वारं दारुः स्याद्देवदारु च । दासीसुतोष्ट्रौ दासेरौ देवयात्राऽशने मृतौ ३५६॥
दिगम्बरोऽन्धकारे च वाद्यमेघौ च दर्दुरौ।धात्री भुव्यामलक्यां च हरिशैलौ धराधरौ॥३५७॥
धारा हरिद्राश्वगतिनिशाम्बुस्रुतिराजिषु।धाराधरो खड्गमेघौ धीरः पण्डितमन्दयोः॥ ३५८॥
धीरं च कुङ्कुममथो धरा पृथ्वी धरो गिरिः। नेत्रो नेतरि नेत्रं च गुणे मूले विलोचने३५९॥
ना शिङ्गे नागरं शुण्ठ्यां नरोऽजे मनुजेऽर्जुने। नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपि दृश्यते ॥
धान्योत्क्षेपे निकारः स्याद्गुडूच्यामपि निर्जरा।नभश्वरौ पक्षिदेवौ पांशुला च निशाचरी३६१॥
वलीकवनयोर्नीध्रं पूरः खाद्ये पयश्चये।यत्नारम्भौ परिकरौ खड्गफलेऽपि पुष्करम्॥ ३६२॥

तयोः, चकारात् शिवे लोहे सीसके दुःसहे अत्युग्रे कटुरोहिण्यां राजिकायां गण्डदूर्वायां महाज्योतिष्मत्यां नदीभेदे च तीव्रम्। "तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः। त्रिष्वत्युष्णे नितान्ते च" इति मेदिनी ॥ शैलः पर्वतः, सुभ्रम् ईषद्भ्रभाजनम् , तयोः दर्दरः । "दर्दरः पर्वते पुंसि त्रिष्वीषद्भ्रभाजने" इति मेदिनी ॥ ॥ ३५५ ॥ उपाये, निर्गमने गृहादिनिर्गमनस्थाने च द्वारम् । "द्वारं निर्गमनेऽपि स्यादभ्युपाये" इति मेदिनी॥ देवदारु स्वनामाख्यातो वृक्षः, तत्र च, चकारात् काष्ठे पित्तले शिल्पिनि दारके च दारुः । "दारुः स्यात् पित्तले काष्ठे देवदारौ नपुंसकम् " इति मेदिनी ॥ दासीसुतः दासीपुत्रः, उष्ट्रः प्रसिद्धः, तयोः दासेरः । "दासेरो दासिकापत्ये त्रिषु पुंसि क्रमेलके" इति मेदिनी ॥ अशने भोजने, मृतौ यमपुरगमने च देवयात्रा । "देवयात्रा यमपुरीगमने भोजनेऽपि च" इति मेदिनी ॥ ३५६ ॥ अन्धकारे तमसि, चकारात् शिवे क्षपणकभेदे नग्ने कलिकायां च दिगम्बरः। "दिगम्बरः स्यात् क्षपणे नग्ने तमसि शङ्करे" इति मेदिनी ॥ वाद्यः वाद्यभेदः, मेघः जलधरः, तयोः, चकारात् भेके पर्वतभेदे मृन्मयपात्रभेदे ग्रामजाले च दर्दुरः । " दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद् ग्रामजाले नपुंसकम् " इति मेदिनी ॥ भुवि पृथिव्याम् , आमलक्याम्, चकारात् मातरि उपमातरि च धात्री । " धात्री जनन्यामलकीवसुमत्युपमातृषु" इति मेदिनी ॥ हरिः वराहरूपो विष्णुः, शैलः भूधरः, तयोः धराधरः । "धराधरो हरौ शैले " इति मेदिनी ॥ ३५७ ॥ हरिद्रा स्वनामाख्यात औषधभेदः, अश्वगतिः अश्वानां गतिपञ्चकम्, निशा तीक्ष्णा, अम्बु मेघस्यासारवर्षणम्, स्रुतिः द्रवद्रव्यस्य सन्तत्या पतनम्, राजिः समूहः, एतेषु धारा। "धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके । घटादिच्छिद्रसन्तत्योः प्रपाते स्याद् द्रवस्य च" इति मेदिनी॥खड्गः असिः, मेघः जलधरः, तयोः धाराधरः । ""धाराधरोऽसिमेघयोः" इति मेदिनी॥ पण्डितः बुधः, मन्दः मूर्खः, तयोः ॥३५८॥ कुङ्कुमं प्रसिद्धम्, तत्र च, चकारात् नायिकाभेदे परमेश्वरे काकोल्यां महाज्योतिष्मत्यां स्थिरायां चित्तवृत्तौ च धीरः । "धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे"इति मेदिनी॥ पृथ्वी भूमिः, तत्र धरा । गिरिः शैलः, तत्र धरः । "धरो गिरौ । कर्पासतूलके कूर्मराजे वस्वन्तरेऽपि च " इति मेदिनी ॥ नेतरि नायके प्रापके च, गुणे, मूले, विलोचने नयने, चकारात् मन्थदामनि प्रवर्त्तके च नेत्रः । "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां च" इति मेदिनी ॥ ३५९ ॥ शिङ्गे प्रसिद्धे, शुण्ठ्यां स्वनामाख्याते औषधे, च नागरम् । "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" इति मेदिनी ॥ अजे परमात्मनि, मनुजे मनुष्ये, अर्ज्जुने अर्जुनवृक्षे च नरः । "नरोऽजे मनुजेऽर्जुने" इत्येव मेदिनी ॥ वार्त्तिके सूत्रानुक्तार्थविस्तारे ग्रन्थभेदे, राज्ञि राजनि, विषवैद्ये, अपिशब्दात् एकविंशत्यक्षरपादके छन्दोभेदे च नरेन्द्रः । "नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी ॥ ३६० ॥ धान्योत्क्षेपे व्रीह्यादिधान्यादेरूर्ध्वक्षेपे निकारः । "निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च" इति मेदिनी ॥ गुडूच्यां स्वनामाख्यातायां लतायाम् , अपिशब्दात् तालपर्ण्यां च निर्जरा। "निर्जरा तु गुडूच्यां च तालपर्ण्यामपि स्त्रियाम्" इति मेदिनी ॥ पक्षी खगः, देवः अमरः, तयोः नभश्वरः। "नभश्वरो विहङ्गमे । विद्याधरे घने वाते" इति मेदिनी ॥ पांशुला पुंश्चली कुलटा वा, तस्याम्, चकारात् राक्षस्यां शृगाल्यां पिशाच्यां च निशाचरी । "पांशुलायां निशाचरी" इति मेदिनी ॥ ३६१ ॥ वलीकः पटलान्तभागः, वनं वृक्षसमुदायात्मकम् अरण्यम्, तयोः

नद्यन्तराले पात्रं स्याद्भाण्डे चाथ निशापतौ । पृथक्चारिगजे यूथभ्रष्टे पक्षचरः स्मृतः॥ ३६३॥
स्थाल्यां मन्थेऽपि पिठरं पवित्रं कुशमेध्ययोः । देहे पाटलिपुत्रे च पुरं स्याद् गुग्गुलौ पुरः ॥
वरो जामातरि वृतौ कुङ्कुमे च नपुंसकम् । वक्रः शनैश्चरे क्रूरे पुटभेदे तथाऽनृजौ ॥३६५॥
कुब्जवृक्षे हरे वारो बन्धुरं रम्यनम्रयोः । भ्रमरः कामुके भृङ्गे भरोऽतिशयभारयोः ॥ ३६६ ॥
विषे स्वादौ च मधुरं मल्लिकायां च माधुरम्। मखाग्नौ च महावीरो मक्षिकायां च मत्सरः३६७

नीध्रम् । क्वचित् "नीव्रम्" इति पाठः । "नीध्रं नेमौ वलीकेन्द्वो रेवतीभे च कानने". इति विश्वः । "नीव्रं नेमौ वलीकेन्द्वो रेवतीभेऽपि कानने" इति मेदिनी ॥ खाद्ये खादनीये, पयश्चये जलसमूहे च पूरः । "पूरो जलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः" इति मेदिनी ॥ यत्नः उद्योगः, आरम्भः प्रसिद्धः, तयोः परिकरः । "भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः"इति मेदिनी॥खड्गफले असिफलके, अपिशब्दात् गजकराग्रे मुखे जले वाद्यभाण्डे आपणे पद्मे तीर्थभेदे,कुष्ठौषधौ पद्मकोशे द्वीपभेदे युद्धे नृपभेदे रोगभेदे नागभेदे सारसपक्षिणि च पुष्करम् "पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हास्तिहस्ताग्रकाण्डयोः ॥ कुष्ठौषधौ द्वीपतर्थिभेदयोश्च नपुंसकम्" इति मेदिनी ॥ ३६२ ॥ नद्यन्तराले तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, भाण्डे जलाद्याधारे भोजनयोग्ये अमत्रे, चकरात् विद्यादियुक्ते दानयोग्ये ब्राह्मणे यज्ञीये स्रुवादौ नाटकेऽभिनेये नायकादौ च पात्रम् । "पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि " इति मेदिनी ॥ निशापतौ चन्द्रे यूथभ्रष्टे सजातीयसमुदायच्युते पृथक्चारिणि गजे हस्तिनि च पक्षचरः । "अथ पक्षचरश्चन्द्रे पृथक्चारिगजेऽपि च " इति मेदिनी ॥३६३॥ स्थाल्यां पाकपात्रे, मन्थे मन्थानदण्डे, अपिशब्दात् ग्रहभेदे मुस्तायां च पिठरम् । " पिठरः स्थाल्यां ना क्लीबं मुस्तामन्थनदण्डयोः " इति मेदिनी ॥ कुशः स्वनामाख्याततृणः, मेध्यं शुचि, तयोः पवित्रम् । " पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत् " इति मेदिनी ॥ देहे शरीरे, पाटलिपुत्रे स्वनामाख्याते नगरे, गुग्गुलौ स्वनामाख्याते निर्यासे च पुरम् । " पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः । पुष्पादीनां दलावृत्तौ ना गुग्गुलौ न ना पुरि " इति मेदिनी ॥ ३६४ ॥ जामातरि दुहितृपतौ, वृतौ आवरणे, कुङ्कुमे स्वनामाख्याते औषधे, चकारात् इच्छायां याचने वेष्टने अभीष्टे श्रेष्ठे जारे गुग्गुलौ पत्यौ च वरः । " वरो जामातरि वृतौ देवतादेरभीप्सिते । षिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् " इति मेदिनी ॥ शनैश्चरे शनिग्रहे, क्रूरे रुद्रे, पुटभेदे नगरे, अनृजौ कुटिलगतौ च वक्रः ।"वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे च " इति विश्वः । "वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् । त्रिषु क्रूरे च कुटिले " इति मेदिनी ॥ ३६५ ॥ कुब्जवृक्षे स्वनामाख्याते द्रुमभेदे, हरे शिवे, वारः । " वारः सूर्यादिदिवसे वारोऽवसरवृक्षयोः । कुब्जवृक्षे हरे वारं द्वारे मद्यस्य भाजने " इति विश्वः । " वारः सूर्यादिवासरे । द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे " इति मेदिनी ॥ रम्यं रमणीयम्, नम्रं नमनम् , तयोः बन्धुरम् । " बन्धुरं मुकुटे पुंसि स्त्री चिह्ने तैलकल्कयोः । बन्धुके बधिरे हंसे त्रिषु स्याद्रम्यनम्रयोः " इति मेदिनी ॥ कामुके मैथुनकामनातिशयवति, भृङ्गे मधुकरे च भ्रमरः ।" भ्रमरः कामुके भृङ्गे " इत्येव मेदिनी ॥ अतिशयः आधिक्यम्, भारः गुरुत्वपरिमाणम् अष्टसहस्रतोलकपरिमाणं वा, तयोः भरः । " भरोऽतिशयभारयोः " इत्येव मेदिनी ॥ ३६६ ॥ विषे, स्वादौ गुडादिस्थे मिष्टरसे माधुर्यरसवति च, चकारात् इक्ष्वादौ मनोहरे रक्तशिग्रौ राजाम्रे रक्तेक्षौ गुडे शालौ जीरके वङ्गे सीसे शतपुष्प्यां यष्टिमधौ काकोल्यां शतावर्यां वृहज्जीवन्त्यां मधुकर्कटिकायां मधूल्यां भेदायां पालङ्कशाके च मधुरम् । " मधुरा शतपुष्पायां मिश्रेयानगरीभिदोः । मधुकर्कटिकाभेदमधुलीयष्टिकासु च । क्लीबं विषे पुंसि रसे तद्वत् स्वादुप्रियेऽन्यवत् " इति मेदिनी ॥ मल्लिकायां मल्लिकापुष्पे, चकारात् मदिरायां च माधुरम् ॥ मखाग्नौ यज्ञाग्नौ, चकारात् हनुमति गरुडे सिंहे वज्रे श्वेततुरङ्गे कोकिले धनुर्धरे एकवीरवृक्षे महाशूरे क्षीरकाकोलीवृक्षे च महावीरः। 'महावीरस्तु गरुडे शूरे सिंहे मखानले । वज्रे श्वेततुरङ्गे च सञ्चानविहगेऽपि च" इति मेदिनी ॥ मक्षिकायां कीटभेदे, चकारात् अन्यशुभद्वेषे परमसम्पत्त्यसहने क्रोधे कृपणे च मत्सरः । "मत्सरा मक्षिकायां स्यान्मात्स-

महेन्द्रो भूधरे शक्रे मन्दे वक्रे च मन्थरः । विघ्नमन्मथयोर्मारो मकरो राशियादसोः ॥ ३६८॥
गमनोत्सवयोर्यात्रा रुधिरं कुङ्कुमेऽपि च । वृक्षभित्पापयो रोध्रो दैत्यभेदे मृगे रुरुः॥३६९॥
लम्बोदरः स्यादुद्धाने गणानामधिपेऽपि च। लक्ष्मीपुत्रौ स्मरहयौ विस्तारौ स्तम्बविस्तृती ॥
वप्रस्तातेऽस्त्रियां क्षेत्रे चये रेणौ च रोधसि । स्यादूषरे वनक्षेत्रे वल्लुरं गहनेऽपि च ॥३७१॥
वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः । वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु ॥३७२॥
विकारो विकृतौ रोगे विश्वकद्रू श्वभित्खलौ । बेरोऽङ्गे कुङ्कुमे बेरं वठरः शठमन्दयोः॥३७३॥
अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः । पर्याणेऽक्षोपकरणे शारिः शकुनिकान्तरे ॥३७४॥
श्रीर्लक्ष्मीवेशसम्पत्सु भारतीशोभयोरपि । शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु ॥ ३७५ ॥

र्यक्रोधयोः पुमान् । असह्यपरसम्पत्तौ कृपणे चाभिधेयवत्'' इति मेदिनी ॥ ३६७ ॥ भूधरे जम्बूद्वीपस्थ-पर्वतभेदे, शक्रे इन्द्रे च महेन्द्रः । ''महेन्द्रः पर्वते शक्रे'' इति मेदिनी ॥ मन्दे, वक्रे, चकारात् कोषे फले कुसुम्भ्यां नीचे जडे कैकेय्याः दास्यां च मन्थरः। ''मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्'' इति मेदिनी ॥ विघ्नः व्याघातः, मन्मथः कामदेवः, तयोः मारः । ''मारो मृत्यौ स्मरे विघ्ने'' इति मेदिनी ॥ राशिः मकराकारत्वात् मेषादितो दशमो राशिः, यादः जलजन्तुभेदः, तयोः मकरः। ''मकरो यादसो भेदे निधिराशिप्रभेदयोः'' इति मेदिनी ॥ ३६८ ॥ गमनं जिगीषया राज्ञां गमनम्, उत्सवः देवोद्देशेन उत्सवभेदो रथयात्रादिः, तयोः यात्रा । ''यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्'' इति मेदिनी ॥ कुङ्कुमे स्वनामाख्याते औषधभेदे, अपिशब्दात् शरीरस्थे रसपाकजन्ये धातु-भेदे मङ्गलग्रहे रक्तवर्णे तद्वर्णवति च रुधिरम । ''रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः '' इति मेदिनी ॥ वृक्षभिद् लोध्रवृक्षः, पापं किल्बिषम् , तयोः रोध्रः । ''रोध्रो ना सावरे क्लीबमपराधे च किल्बिषे'' इति मेदिनी ॥ दैत्यभेदे असुरविशेषे, मृगे मृगभेदे च रुरुः । ''रुरुर्ना मृगदैत्ययोः'' इति मेदिनी ॥३६९॥ उद्धाने दुष्पूरोदरवति, गणानामधिपे गणेशे, अपिशब्दात् तारानाम्न्यां देव्यां च लम्बोदरः । ''लम्बोदरः स्यादुद्धाने गणानामधिपेऽपि च'' इत्येव मेदिनी ॥ स्मरः कामदेवः, हयः अश्वः, तयोः लक्ष्मीपुत्रः । ''लक्ष्मी-पुत्रस्तु पुँल्लिङ्गः कामदेवे तुरङ्गमे'' इति मेदिनी ॥ स्तम्बः विटपः, विस्तृतिः विस्तीर्णता, तयोः विस्तारः । ''विस्तारो विस्तृतौ स्तम्बे'' इति मेदिनी ॥ ३७० ॥ ताते जनके, क्षेत्रे केदारे, चये दुर्गनगरादौ परि-खया उद्धृतमृत्तिकास्तूपे, रेणौ धूलौ, रोधसि तटे, चकारात् सीसके प्राचीरे प्रजापतौ मञ्जिष्ठायां च वप्रः । ''वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे'' इति मेदिनी ॥ ऊषरे क्षारमृत्तिकायुक्ते देशे, वनक्षेत्रे वनकेदारे, गहने कुञ्जे, अपिशब्दात् मञ्जर्यां निर्जनस्थाने शाद्वले च वल्लुरम् । ''वल्लुरः स्याद्वनक्षेत्रे गहनोषरयोरपि'' इति मेदिनी ॥ ३७१ ॥ संशुष्कमांसः आतपादिना शुष्कमांसः, सूकरमांसः स्वनामाख्यातस्य पशोर्मांसः, तयोः वल्लूरा । ''वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः'' इत्येव मेदिनी॥वैकल्ये विकलत्वे, विश्लेषे, विश्लिष्टे, विकले स्वभावहीने, अपिशब्दात् विह्वले च विधुरम् । ''विधुरं स्यात्प्रविश्लेषे न द्वयोर्विकले त्रिषु'' इति मेदिनी ॥३७२॥ विकृतौ प्रकृतेरन्यरूपे, रोगे रुजावति च विकारः । श्वभिद् श्वानभेदः, खलः दुर्जनः; तयोः विश्व-कद्रुः । ''विश्वकद्रुस्त्रिषु खले ध्वानाखेटशुनोः पुमान्'' इति मेदिनी ॥ ''विश्वकद्रुः खले ध्वाने स्यादाखेट-ककुक्कुरे'' इति विश्वः ॥ अङ्गे कलेवरे, कुङ्कुमे स्वनामाख्याते औषधभेदे च बेरम् । ''बेरं कलेवरे क्लीबं वार्त्ताकौ कुङ्कुमेऽपि च''इति मेदिनी॥शठः धूर्त्तः,मन्दः मूर्खः, तयोः वठरः। ''वठरः कुक्कुटे वस्त्रे शठे'' इति मेदिनी ॥ व्यसनं विपत्तिः, व्यतिषङ्गः परस्परमेलनम् , तयोः व्यतिकरः । ''अथ व्यतिकरः पुंसि व्यसनव्य-तिषङ्गयोः'' इत्येव मेदिनी ॥ ''व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः'' इति विश्वः ॥ पर्याणे, युद्धार्थे हस्तिपर्याणे, अक्षोपकरणे पाशकादिगुटिकायाम्, शकुनिकान्तरे पक्षिभेदे, च शारिः । ''शारी'' अप्यत्र । ''शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे'' इति मेदिनी ॥ ३७४ ॥ लक्ष्मीः प्रसिद्धा, वेशः वेशरचना

पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च । शुक्रं रेतोऽक्षिरुक् शुक्रो ना काव्यज्यैष्ठवह्निषु ३७६
गजभूषा च शृङ्गारः शुषिरं गर्तवाद्ययोः । कुटजे वासवे शक्रो वरीशच्योः शतावरी ॥ ३७७ ॥
शक्वरी मेखला छन्दः शवरः सलिले शिवे। स्थिरा महीशालपर्ण्योः शम्बरं संयमे जले ॥ ३७८ ॥
शम्बरौ दैत्यहरिणौ सत्रं स्यात्कैतवे वने । स्रोतोञ्जने च सौवीरं काञ्जिके बदरेऽपि च ॥ ३७९ ॥
हलतिग्मकरौ सीरौ सान्द्रं मृदौ घने वने । तन्त्वादिग्रन्थयोः सूत्रं कारणेऽपि च दृश्यते ३८० ॥
शैलेऽचलोऽचला भूमावरालः सर्जवक्रयोः । अलिः सुरापुष्पलिहाः कल्लोलेऽप्याकुलं त्रिषु ॥
आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके ॥ ३८१ ॥

सम्पत् धर्मार्थकामसम्पत्तिः, एतासु, भारती वाणी, शोभा दीप्तिः, तयोश्च, अपिशब्दात् लवङ्गे प्रकारे उपकरणे बुद्धौ विभूतौ अधिकारे प्रभायां कीर्तौ वृद्धौ सिद्धौ कमले बिल्ववृक्षे वृद्धिनामौषधौ रागभेदे च श्रीः । "श्रीर्वेश-रचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च । विभूतौ च मतौ च स्त्री" इति मेदिनी ॥ शैलः पर्वतः, वृक्षः तरुः, तयोः, अग्रम् उपरिभागः, कक्षा शुष्कतृणादिः, पुलकः रोमाञ्चः, कोटिः अन्तमात्रम्, एतासु ॥ ३७५ ॥ पक्वदाडिमबीजाभं परिणतदाडिमफलबीजवर्णं माणिक्यं रत्नभेदः, तस्य शकलं खण्डम् एक-भागो वा, तत्र अपिशब्दात् मूर्वायां च शिखरम् । "शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः । पक्वदाडिम-बीजाभमाणिक्यशकलाग्रयोः" इति मेदिनी ॥ रेतः मज्जजातश्वरमधातुः, अक्षिरुक् नेत्ररोगभेदः, काव्यः शुक्रा-चार्यः, ज्येष्ठः ज्येष्ठानक्षत्रयुक्तपौर्णमासीसम्बद्धः स्वनामाख्यातश्चान्द्रमासः, वह्निः दहनः, एतेषु शुक्रम् । "शुक्रः स्याद्भार्गवे ज्यैष्ठमासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबम्" इति मेदिनी ॥ ३६६ ॥ गजभूषा हस्त्यलङ्कारः तत्र, चकारात् नाट्योक्ते रसभेदे लवङ्गे सिन्दूरे चूर्णे कालागुरुणि आर्द्रके भूषणे च शृङ्गारः । "शृङ्गारः सुरते नाट्यरसे च गजमण्डने । नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयोः" इति मेदिनी ॥ गर्त्तं भूमि-च्छिद्रम्, वाद्यं वंशादिवाद्यम्, तयोः शुषिरम् । "शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम् । मूषिके ना स्त्रियां नल्यौषधौ रन्ध्रान्विते त्रिषु" इति मेदिनी ॥ कुटजे कुटजवृक्षे, वासवे इन्द्रे च शक्रः । "शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः" इति मेदिनी ॥ वरी शतमूली, शची इन्द्रभार्या, तयोः शतावरी । "शतावरी तु शच्यां स्यादिन्दीवर्यामपि स्त्रियाम्" इति मेदिनी ॥ ३७७ ॥ मेखला स्त्रीकट्याभूषणम्, उपनयनकाले ब्रह्मचारिधार्यं कटिसूत्रं वा, छन्दः चतुर्दशाक्षरपादकः छन्दोभेदः, तयोः शक्वरी । "शक्वरी छन्दसो भेदे नदीमेखलयोरपि" इति मेदिनी ॥ सलिले जले, शिवे महादेवे च शवरः । "शवरो म्लेच्छभेदे च पानीये शङ्करेऽपि च" इति मेदिनी ॥ मही पृथिवी, शालपर्णी स्वनामाख्यात औषधभेदः, तयोः स्थिरा । "स्थिरा भूशालपर्ण्योः" इति मेदिनी ॥ संयमे व्रताङ्गतया पूर्वदिनकर्त्तव्ये नियमभेदे इन्द्रियनिग्रहे वा, जले पानीये ॥ ३७८ ॥ दैत्यः असुर-भेदः, हरिणः मृगभेदः, तयोश्च शम्बरः । "शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः । शम्बरी चाखुपर्ण्यां स्यात्" इति मेदिनी ॥ कैतवे कपटतायाम्, वने अरण्ये च सत्रम् । "सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे" इति मेदिनी ॥ स्रोतोऽञ्जने सौवीरदेशजाते अञ्जने, काञ्जिके, बदरे कोलिवृक्षे, अपिशब्दात् काञ्जिकभेदे च सौवीरम् । "सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले" इति मेदिनी ॥ ३७९ ॥ हलः लाङ्गलः, तिग्म-करः सूर्यः, तयोः सीरः । "सीरोऽर्कहलयोः पुंसि" इति मेदिनी ॥ मृदौ कोमले, घने निबिडे, वने अरण्ये च सान्द्रम् । "सान्द्रं वने घने मृदौ" इति मेदिनी ॥ तन्त्वादिः वस्त्रसाधनतन्तुः, ग्रन्थः रचनाविशेषः शास्त्र-भेदो वा, तयोः, कारणे च, अपिशब्दात् व्यवस्थायां नाटकसाधने प्रस्तावे च सूत्रम् । "सूत्रं तन्तौ व्यवस्थायां शास्त्रादिसूत्रग्रन्थने" इति मेदिनी॥ ३८० ॥ इति रकारान्ताः ॥ अथ लान्तानाह ॥ शैले पर्वते, भूमौ पृथिव्यां च अचलः । "अचला वसुधायां स्यादचलः शैलकीलयोः" इति मेदिनी ॥ सर्जः सर्जरसः, वक्रः कुटिलः, तयोः अरालः । "अरालः कुटिले सर्जरसे समदवन्तिनि" इति मेदिनी ॥ सुरा मद्यम्, पुष्पलिट् भ्रमरः, तयोः अलिः । "अलिः सुरापुष्पलिहोः" इत्येव मेदिनी ॥ कल्लोले महातरङ्गे, अपिशब्दात् व्याकुले च आकुलम् ॥ गलन्तिकायां स्वल्पवारिधारायुतायां कर्कर्यां वा, मूले स्वनामाख्याते कन्दभेदे, भेलके नद्यादितारणार्थे प्लवे,

आलिः सेतुः सखी यज्वा शौण्डिकश्चासुतीवलः। आभीलं भीषणे कृच्छ्रे इला भूवाग्बुधाङ्गनाः
आर्द्रशूरणयोरोलः कालः स्यान्मृत्युकृष्णयोः। अंशे वृद्धावपि कला कदली ध्वजरम्भयोः॥
कफोणिघाते ज्वाले च कीलावत्कील इष्यते। शिरसोऽस्थ्नि कपालोऽस्त्री घटादेः शकले व्रजे॥
काको विषं च काकोलौ सास्नायामपि कम्बलः। धूनकेऽपि कलकलः कामलः कामुके मधौ॥
कुलं गोत्रे गणे देहे न ना ज्ञाने च केवलम्। कपिला शिंशपाकौन्त्योः कपिलोऽग्नौ मुनौ शुनि॥
कोलोऽङ्कपालावुत्संगे वराहे भेलकेऽपि च। पिप्पल्यापि च कोला स्यात्कोलं च बदरीफले३८७

चकारात् पेचकपक्षिणि क्षुद्रघण्टिकायां च आलुः। "आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके" इत्येव मेदिनी ॥ ३८१ ॥ सेतुः आगन्तुकजलवारणार्थं सस्यसेकजलवारणार्थं च कृतो वृतिरूपः सेतुः, सखी वयस्या, तयोः आलिः। "आली" अप्यत्र। "आलिर्विशदाशयोः। त्रिषु स्त्रियां वयस्यायां सेतौ पङ्क्तौ प्रकीर्त्तिता" इति मेदिनी ॥ यज्वा सोमाभिषवशाली याज्ञिकः, शौण्डिकः मद्यविक्रेता, तयोः, चकारात् कन्यापालके च आसुतीवलः। "आसुतीवल आख्यातः कन्यापालकयज्वनोः" इति मेदिनी ॥ भीषणे भयानके, कृच्छ्रे कष्टे च आभीलम्। "आभीलं न द्वयोः कृच्छ्रे वाच्यलिङ्गं भयानके" इति मेदिनी ॥ भूः पृथ्वी, वाक् वचनम्, बुधाङ्गना वैवस्वतमनुकन्या बुधपत्नी, एतासु इला। "इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च" इति मेदिनी ॥ ३८२ ॥ आर्द्रः आर्द्रायां भूमौ जातः स्वनामाख्यातो मूलभेदः, शूरणं कन्दविशेषः, तयोः ओलः। क्वचित् "ओल्लः" इति पाठः। "ओल्लस्तु शूरणे पुंसि स्यादार्द्रे वाच्यलिङ्गकः" इति मेदिनी ॥ मृत्युर्मरणम्, कृष्णः कालवर्णः, तयोः कालः।"कालो मृत्यौ महाकाले समये यमकृष्णयोः"इति मेदिनी ॥ अंशे चन्द्रमण्डलस्य षोडशे भागे, वृद्धौ दत्तधनस्याधिकलभ्यांशे, अपिशब्दात् कालपरिमाणे ज्यौतिषोक्ते राशेस्त्रिंशद्भागस्य षष्टिभागे, नौकायाम् कपटे विभूतौ सामर्थ्ये सङ्ख्यायाम् मरीचिपत्न्यां चतुःषष्टिप्रकारेषु गीतवाद्यादिषु च कला। "कला मूलविवृद्धौ स्याच्छिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोः"इति मेदिनी॥ध्वजः पताका,रम्भा रम्भावृक्षः,तयोः कदली।"कदली पताकामृगभेदयोः"इति मेदिनी॥३८३॥कफोणिः भुजमध्यग्रन्थिः कूर्परः, घातः शङ्कुः,तयोः,ज्वाले अग्निशिखायाम्, चकारात् शस्त्रे स्तम्भे लेशे च कीला कीलः च।"कीलो लेशे द्वयोः स्तम्भे ज्वालाकफोणिशङ्कुषु" इति मेदिनी ॥ शिरसोऽस्थ्नि मस्तकास्थ्नि, घटादेः शकले कलशादेरवयवे, व्रजे समूहे च कपालः। "कपालोऽस्त्री शिरोऽस्थ्नि स्याद् घटादेः शकले व्रजे" इति मेदिनी ॥ ३८४ ॥ काकः द्रोणकाकः, विषं विषभेदः, तयोः, चकारात् सर्पे सूकरभेदे नरकभेदे वायस्याम् अश्वगन्धायां च काकोलः। "काकोलं नरकान्तरे। ना कुलाले द्रोणकाके विषभेदे तु न स्त्रियाम्"इति मेदिनी ॥ सास्नायां गोगलस्थिते लोमसङ्घातात्मके कम्बले, अपिशब्दात् प्रावारे नागभेदे कृमौ स्वनामाख्याते मेषलोमनिर्मिते वस्त्रासनादौ जले च कम्बलः।"कम्बलो नागराजे स्यात् सास्नाप्रावारयोरपि।कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्"इति मेदिनी॥धूनके यक्षधूपे अपिशब्दात् कोलाहले च कलकलः। "कलकल उक्तः कोलाहले तथा शालनिर्यासे"इति मेदिनी ॥कामुके कामयुक्ते, मधौ वसन्तकाले च कामलः। "कामला रोगभेदे वा न ना मरुवसन्तयोः। कामुके वाच्यलिङ्गः" इति मेदिनी ॥ ३८५ ॥ गोत्रे वंशे, गणे सजातीयगणे, देहे शरीरे च कुलम्। "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबं कण्टकार्यौषधौ कुली" इति मेदिनी ॥ ज्ञाने ज्ञानभेदे, चकारात् शुद्धे निश्चिते कृत्स्ने एके च केवलम् ॥ शिंशपा रक्तपुष्पयोगा शिंशपा, कौन्ती भस्मगन्धिनी ओषधी, तयोः, अग्नौ ज्वलने, मुनौ साङ्ख्यशास्त्रकारे मुनिभेदे, शुनि कुक्कुरे च कपिला। "कपिला रेणुकायां च शिंशपागोविशेषयोः। पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे" इति मेदिनी ॥ ३८६ ॥ अङ्कपालौ क्रोडप्रान्ते, उत्संगे क्रोडे, वराहे सूकरे, भेलके नद्यादेस्तरणार्थे प्लवे, पिप्पली स्वनामाख्यात औषधविशेषः, तत्र च, बदरीफले स्वनामाख्याते फले, अपिशब्दात् शनिग्रहे उडुपे भुजान्तरे चित्रायाम् अस्त्रभेदे टङ्कद्वयमाने जातिभेदे देशभेदे चव्ये मरिचे तोलकमाने च कोलः। "कोलं कोलिफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्। नाऽङ्कपालौ शनौ चित्रे वराहोत्सङ्गभेलके" इति

**मृगे जले च कमलं कुवले बदरोत्पले।कल्लोलौ शात्रवोल्लोलौ पर्कट्यां च कमण्डलुः॥३८८॥**
**कर्म्मरंगतरौ कर्म्मफलं दुःखे सुखेऽपि च । करालो धूनतैलेऽपि देशे केशे च कुन्तलः३८९॥**
**कुतूहलं प्रशस्तेऽपि खल्लश्चर्म्मणि चातके । वस्त्रे निम्ने चाथ खलं सस्यस्थाने शठे त्रिषु ३९०**
**मण्डले मणिके गोला गोलं गोदावरी सखी । गोपो भूपश्च गोपालौ चपलः पारदेऽपि च३९१**
**चपलाः पिप्पलीलक्ष्मीपुंश्चलीविद्युतः स्मृताः । छलं छद्मस्खलितयोर्जम्बालौ पङ्कशैवलौ३९२**
**जंगलो निर्ज्जने देशे त्रिलिंगः पिशितेऽस्त्रियाम् । जालं दंभेऽपि जम्बीरे देवभेदेऽपि जम्भलः॥**
**झलाऽऽतपोर्म्मिर्दुहिता तलं मूलचपेटयोः । तालो गीतक्रियामाने हरिताले द्रुमान्तरे ॥३९४॥**

मेदिनी॥३८७॥मृगे मृगभेदे, जले, कुवले मुक्ताफले, बदरः कोलिफलम् , उत्पलं नीलपद्मम्, तयोश्च कमलम् । "कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरास्त्रियोः" इति मेदिनी ॥ शात्रवः वैरी, उल्लोलः महातरङ्गः, तयोः कल्लोलः । "कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि" इति मेदिनी ॥ पर्कट्यां प्लक्षवृक्षे, चकारात् करङ्के संन्यासिनां जलपात्रभेदे चतुष्पादजातौ च कमण्डलुः । "कमण्डलुः स्यात्करके न स्त्री ना प्लक्षपादपे" इति मेदिनी ॥ ३८८ ॥ कर्मरङ्गतरौ कामरङ्गवृक्षे तत्फले च, दुःखे कर्म्मविपाकजनिते प्रतिवेदनीये चित्तधर्म्मभेदे दुःसाधने वा, सुखे कर्म्मविपाकजनिते अनुकूलवेदनीये चित्तधर्म्मभेदे सुखिनि सुखकारके वा,अपिशब्दात् कर्म्मविपाकजन्ये च कर्म्मफलम्।"अथ कर्म्मफलः कर्म्मरङ्गकर्म्मविपाकयोः" इति मेदिनी ॥ धूनतैले सर्जरसयुक्ततैले, अपिशब्दात् तैलभेदे विकटे भयानके दन्तुरे उच्चे वृक्षभेदे च करालः । "करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्। ससर्ज्जरसतैले ना क्लीबं कृष्णकुठेरके"इति मेदिनी॥देशे देशभेदे,केशे चिकुरे, चकारात् पानपात्रे जवे हस्ते जनपदभेदे च कुन्तलः । "कुन्तलश्चषके वाले यवे पुंभूम्नि नीवृति" इति मेदिनी ॥ ३८९ ॥ प्रशस्ते प्रशंसनीये, अपिशब्दात् अपूर्ववस्तुदिदृक्षातिशये चेष्टाभेदे फलनिरपेक्षतया चिकीर्षिते कौतुके अद्भुते च कुतूहलम् । "कुतूहलं कौतुके स्यात् प्रशस्तेऽपि च दृश्यते" इति मेदिनी ॥ चर्म्मणि इन्द्रियभेदे, चातके स्वनामाख्याते पक्षिभेदे, वस्त्रे वसनभेदे, निम्ने गर्त्ते, चकारात् वृत्तौ औषधमर्दनपात्रे च खल्लः । "खल्लो वस्त्रप्रभेदे स्याद् गर्त्ते चर्म्मणि चातके" इति मेदिनी ॥ सस्यस्थाने धान्यमर्दनस्थाने, शठे अधमे च खलम् । "खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु" इति मेदिनी ॥३९० ॥ मण्डले चक्राकारेण वेष्टने मण्डलाकारेण विहिते पदार्थे वा, मणिके मृन्मयपात्रभेदे अलिञ्जरे, गोदावरी स्वनामाख्याता नदी, सखी सहचरी वयस्या वा, तयोश्च गोलम् । "गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम् । पत्राञ्जने मण्डले चालिञ्जरे बालखेलने" इति मेदिनी ॥ "गोला सखीवर्त्तुलयोर्गोलं लक्ष्यानुसारतः । पत्राञ्जने कुनट्यां च गोदावर्यां च मण्डले" इति विश्वः ॥ गोपः कृष्णः, भूपः नृपतिः तयोः, चात् गोपार्थे च गोपालः । "गोपालो नृपगोपेशे" इति मेदिनी ॥ पारदे रसराजे ॥ ३९१ ॥ पिप्पल्याम् , लक्ष्म्याम् , पुंश्चल्याम् , विद्युति, अपिशब्दात् विजयायां मदिरायां जिह्वायाम् आर्याभेदे च चपलः । "चपलः पारदे मीने चौरके प्रस्तरान्तरे । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले" इति मेदिनी ॥ छद्म स्वरूपाच्छादनः कपटः, स्खलितं कूटयुद्धादौ प्रवृत्त्या वीरमर्य्यादातः पतनं स्खलनमात्रं वा, तयोः छलम् । "छलं स्खलितशाठ्ययोः" इति मेदिनी ॥ पङ्कः कर्दमः, शैवलः जलजातपदार्थभेदः, तयोः जम्बालः । "जम्बालः शैवले पङ्के" इति मेदिनी ॥ ३९२ ॥ निर्जने देशे जनशून्ये वने रहसि वा, पिशिते मांसे च जङ्गलः । "जङ्गलं निर्जनस्थाने त्रिलिङ्ग्यां पिशितेऽस्त्रियाम्" इति मेदिनी ॥ दम्भे कपटे, अपिशब्दात् कदम्बवृक्षे गवाक्षच्छिद्रे मत्स्यधारणार्थे शणसूत्रनिर्म्मिते स्वनामाख्याते आनाये अस्फुटकलिकायां क्षुद्रफले:मृगपक्ष्यादिधारणार्थे पाशे शाठ्ये समूहे इन्द्रजाले मोचकफले नवकलिकासमूहे क्षारके च जालम् । "जालं गवाक्ष आनाये क्षारके दन्तवृन्दयोः" इति मेदिनी ॥ जम्बीरे स्वनामाख्याते वृक्षे, देवभेदे बुद्धदेवान्तरे, अपिशब्दात् राक्षसीभेदे च जम्भलः । " जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च" इति मेदिनी ॥ ३९३ ॥ आतपोर्म्मिः सूर्य्याद्यालोकस्य प्रकाशः, दुहिता पुत्री, तयोः झला । "झला स्यादातपस्योर्मौ दुहितर्यपि च

लोहे हारमणौ पुंसि यवाग्वां तरला स्त्रियाम् । ब्रह्मदारौ पिचौ तूलं स्थूणासादृश्ययोस्तुला ॥
तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च । गुवाकेऽपि च ताम्बूलं विडङ्गेऽपि च तण्डुलः॥
दुकूलं श्लक्ष्णवस्त्रेऽपि चार्द्धे पत्रे छदे दलम् । धवला गवि ना शण्डे शुक्लसुन्दरयोस्त्रिषु ३९७॥
परमाणौ च पीलुः स्याद्देहे चात्मनि पुद्गलः॥शस्ताकारेऽप्यथ तरौ पिप्पलः पिप्पलं जले ॥
शाल्मली शिंशपा चैव पोतिका चापि पिच्छिला॥सश्मश्रुयुवती पालिः पङ्क्तिः कर्णलताऽपि च
वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे । नले काशे पोटगलः पित्तयुक्ते च पित्तलः ॥४००॥

स्त्रियाम्" इति मेदिनी ॥ मूलं स्वरूपम्, चपेटः विस्तृताङ्गुलिको हस्तः, तयोः तलम् । "तलं स्वरूपेऽनूर्द्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना" इति मेदिनी ॥ गीतक्रियामाने गीतादौ द्विमात्रादिकालक्रियामाने, हरिताले पीतवर्णे उपधातुभेदे, द्रुमान्तरे स्वनामाख्याते वृक्षभेदे च तालः । "तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते । गतिकालक्रियामाने करास्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कांस्यस्य त्सरौ तालयजटौषधौ । क्लीबं तु हरिताले स्यात्"इति मेदिनी॥३९४॥लोहे धातुभेदे, हारमणौ हारमध्यस्थे मणौ, यवाग्वां षड्गुणजलपक्वे द्रवभेदे च तरलः।"तरलं चञ्चले षिङ्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्"इति मेदिनी॥ ब्रह्मदारौ अश्वत्थाकारे वृक्षभेदे, पिचौ कार्पासतूले च तूलम् । "राशौ पलशते भाण्डे तूलं स्याद् ब्रह्मदारुणि । आकाशे च पिचौ न स्त्री" इति मेदिनी ॥ स्थूणा गृहस्तम्भः, सादृश्यं समानता, तयोः तुला । "तुला सादृश्यमानयोः । गृहाणां दारुबन्धे च पीठिकायामपीष्यते" इति मेदिनी ॥ ३९५ ॥ वरुणे वरुणवृक्षे, खड्गे असिपत्रे, तापिच्छे स्वनामाख्याते वृक्षे, तिलके तिलकवृक्षे, अपिशब्दात् कृष्णखदिरे वंशत्वचि ताम्बूलवल्ल्यां च तमालः । "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" इति मेदिनी ॥ गुवाके क्रमुके, अपिशब्दात् नागवल्लीदले च ताम्बूलम् । "ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्" इति मेदिनी॥ विडङ्गे स्वनामाख्याते औषधभेदे, अपिशब्दात् धान्यादिसारे निस्तुषे धान्यादौ तण्डुलीयशाके च तण्डुलः । "तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान्" इति मेदिनी ॥ ३९६ ॥ श्लक्ष्णवस्त्रे अल्पघनवस्त्रे, अपिशब्दात् क्षौमाम्बरे सूक्ष्मवस्त्रे च दुकूलम् । "दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च" इति मेदिनी ॥ अर्द्धे खण्डे, पत्रे पलाशे, छदे तमालपत्रे, चकारात् शस्त्रच्छेदे अपकृष्टद्रव्ये उच्चतायां पङ्के उत्सेधवस्तुनि च दलम् । "दलमुत्सेधखण्डयोः। शस्त्रच्छेदेऽप्यपद्रव्ये पत्रे"इति मेदिनी॥गवि वृषे,शण्डे वृषश्रेष्ठे,शुक्लः,श्वेतवर्णः,सुन्दरः मनोहरः,तयोश्च धवला । "धवला गवि । वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे" इति मेदिनी ॥ ३९७ ॥ परमाणौ वैशेषिकसिद्धे पृथिव्यादीनां चतुर्णां भूतानां द्व्यणुकरूपावयवारम्भके सूक्ष्मभूते, चकारात् गजे अस्थिखण्डे तालकाण्डे वासे कृमौ कोङ्कणदेशख्याते गुणफले वृक्षे कुसुमे च पीलुः । "पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः" इति मेदिनी ॥ देहे शरीरे, आत्मनि रूपादिविशिष्टे द्रव्ये, शस्ताकारे उत्कृष्टाकारे, चकारात् द्व्यणुकादिस्थानीये बौद्धाद्युक्ते पदार्थे च पुद्गलः । "पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः"इति मेदिनी॥ तरौ अश्वत्थवृक्षे, जले पानीये च पिप्पलम् । "पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ । निरंशुके पक्षिभेदे कणायां पिप्पली मता" इति मेदिनी ॥ ३९८ ॥ शाल्मली स्वनामाख्यातो वृक्षः, शिंशपा स्वनामाख्यातो वृक्षः, पोतिका श्लेष्मातकवृक्षः, एतेषु पिच्छिला । "पिच्छिलो विजिलेऽन्यवत् । स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयोः" इति मेदिनी ॥ सश्मश्रुयुवती श्मश्रुयुक्ता तरुणी, पङ्क्तिः सजातीयसन्ततिः,कर्णलता कर्णपत्रम्,एतासु, अपिशब्दात् कोणे यूकायां सेतौ प्रान्तभागे प्रशंसायां क्रोडे च पालिः ।"पाली"अप्यत्र ।"पालिः कर्णलताग्रेऽश्रौ पङ्क्तावङ्कप्रभेदयोः।छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितोः" इति मेदिनी ॥ ३९९ ॥ वीणादण्डे वीणावाद्यस्थितालाबूपरिस्थे काष्ठदण्डे, विद्रुमे रक्त-

पिङ्गलः स्यात् कपावग्नावाशुव्रीहिश्च पाटलः।फलं जातिफले लाभे बाणाग्रे फलकेऽपि च४०१
फेनिलं बदरेऽरिष्टे बालो ह्रीवेरकेशयोः। बलिर्जराश्लथत्वे स्त्री गृहदार्वसुरौ बली ॥ ४०२ ॥
बलं गन्धरसे रूपे क्लीबं वाट्यालके स्त्रियाम् । बहुलः कृष्णपक्षेऽपि मेलानन्दापि बार्दलः ॥
दुर्दिनेऽप्यथ वेला स्यात्सिन्धोः कूले च भोजने । ऋषिभेदे प्लवे पुंसि भेलं भीरुहृदि त्रिषु ॥
मेखलाऽद्रिनितम्बेऽपि ग्रहे ना मङ्गलं शुभे।निकटेऽपि च मूलं स्याद्धुस्तूरेऽपि च मातुलः४०५

वर्णमणिभेदे, नवपल्लवे नूतनकिसलये च प्रवालः। "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इति मेदिनी॥ नले तृणभेदे, काशे काशाख्ये तृणे च पोटगलः। "अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदिनी ॥ पित्तयुक्ते पित्तबलवति पित्तरोगवति च, चकारात् ताम्रादिजाते धातुभेदे तोयपिप्पल्यां च पित्तलः । "पित्तला तोयपिप्पल्यां स्त्र्यन्यवत् पित्तसंयुते" इति मेदिनी ॥ ४०० ॥ कपौ वानरे, अग्नौ वैश्वानरे च पिङ्गलः । "पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके । निधिभेदे कपावग्नौ पुंसि स्यात् कपिलेऽन्यवत् । स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च " इति मेदिनी ॥ आशुव्रीहिः आशुधान्यम्, तत्र, चकारात् श्वेतरक्तवर्णे तद्वति स्वनामाख्याते वृक्षे तत्पुष्पे च पाटलः । "पाटला पाटलोऽस्त्री स्यादस्य पुष्पे पुनर्न ना । आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्" इति मेदिनी ॥ जातिफले स्वनामाख्याते फले, लाभे, बाणाग्रे, फलके, अपिशब्दात् वृक्षादीनां सस्ये कार्ये उद्देश्ये प्रयोजने त्रिफलायां कक्कोले फाले दाने मुष्के कुटजवृक्षे सामर्थ्यादौ चर्ममये अस्त्रप्रतिघातानिवारणे पदार्थे अस्थिखण्डे नागकेशरे काष्ठादिपट्टके च फलम् । "फलं जातिफले सस्ये हेतूत्थे व्युष्टिलाभयोः । त्रिफलायां च कक्कोले" इति मेदिनी ॥ ४०१ ॥ बदरे बदरवृक्षे, अरिष्टे निम्बवृक्षे च फेणिलम् । अत्र "फेनिलः" इति दन्त्यनकारमध्यपाठोऽपि युज्यते । "फेणिलोऽरिष्टपादपे । ना सफेने त्रिषु क्लीबं कोलीमदनयोः फले" इति मेदिनी ॥ ह्रीवेरः गन्धद्रव्यभेदः, केशः चिकुरः, तयोः बालः । "बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ । नारिकेले हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुन्नपुंसकम्" इति मेदिनी ॥ जराश्लथत्वे जरया श्लथचर्मणि, गृहदारु गेहदारुप्रभेदः, असुरः दैत्यभेदः विरोचनपुत्रो वा, तयोः बलिः । "बलिर्दैत्यप्रभेदे च करिचामरदण्डयोः । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च" इति मेदिनी ॥ ॥ ४०२ ॥ गन्धरसे, रूपे, वाट्यालके क्षुपभेदे च बलम् । "बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः । पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च" इति मेदिनी ॥ कृष्णपक्षे कालपक्षे, अपिशब्दात् अनेकसङ्ख्यान्विते प्रचुरे अग्नौ कृष्णवर्णे तद्वति आकाशे नीलिकायां नीलवर्णायां गवि प्रचुरे कृत्तिकानक्षत्रे च बहुलः । "बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंस्यग्नौ कृष्णपक्षे च वाच्यवत् प्राच्यकृष्णयोः" इति मेदिनी ॥ मेलानन्दा ( दोआत ) इति प्रसिद्धः मस्याधारः तत्र, दुर्दिने मेघाच्छन्ने दिवसे, अपिशब्दात् दक्षिणावर्त्तशङ्खे काकचिञ्च्यां कृष्णलाबीजे कृमिजे आम्रबीजे च बार्दलः । क्वचित्तु "बार्दरः" इति पाठः । "बार्दलं दुर्दिने मेलानन्दायां बार्दलः स्मृतः" इति मेदिनी ॥ ४०३ ॥ सिन्धोः कूले समुद्रकूले, भोजने ईश्वरस्य भोजने च वेला । "वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रागे ईश्वरस्य च भोजने" इति मेदिनी ॥ ऋषिभेदे मुनिविशेषे, प्लवे नद्यादितारणार्थे प्लवे, भीरुहृदि भयशीलिनि चित्ते च भेलम् । "भेलः प्लवे मुनौ पुंसि भीरावज्ञे च वाच्यवत्" इति मेदिनी ॥ ४०४ ॥ अद्रिनितम्बे पर्वतनितम्बे, अपिशब्दात् स्त्रीकट्या भूषणे उपनयनकाले ब्रह्मचारिधार्ये कटीसूत्रे खड्गादेर्मुष्ट्या धारणार्थे उपर्यधोभागेन बन्धे नर्मदायां पृश्निपर्ण्यां होमकुण्डोपरिस्थे मृत्कृते वेष्टनभेदे च मेखला । "मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः" इति मेदिनी ॥ ग्रहे भूमिसुते, शुभे प्रशस्ते च मङ्गलम् । "मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थरक्षणेऽपि च" इति मेदिनी ॥ निकटे अन्तिके, अपिशब्दात् शिफायाम् आद्ये निकुञ्जे वाणिज्याद्युपयोगिनि मूलधने निजे चरणे शूरणे पिप्पलीमूले टीकादिना

**मौलिः कङ्केलिवृक्षेऽपि मल्लः पात्रे कपालिनि । बलीयसि च मत्स्ये च मण्डलं परिधौ गणे ४०६**
**बिम्बे देशे ना च शुनि रसालस्त्विक्षुचूतयोः । जिह्वाकमलयोर्लोला शाला स्याद्गृहशाखयोः ॥**
**तरुजातौ मत्स्यभेदे शालो हाले नृपेऽपि च । निगडे पुंस्कटीबद्धवस्त्रे च शृङ्खलं त्रिषु ४०८**
**शालिर्गन्धमृगे धान्ये शयालुः कुक्कुरेऽलसे । शकलं वल्कले खण्डे शीतलः शिशिरेऽनिले ॥**
**षण्डाली तैलमाने स्यात्सारसीकामुकस्त्रियोः ।सिध्मला शुष्कमीने स्त्री त्रिलिङ्ग्यां तु किलासिनि**
**ऋजौ वृक्षे च सरलः सालो वरणसर्जयोः।हस्तिमल्लो गजास्ये च हेलाऽवज्ञाविलासयोः ४११॥**
**यागे च मद्यसन्धाने स्नाने चाभिषवः पुमान्।मृताववसत्त्वे चाभावः स्याद्रजः पुष्पमार्तवम् ४१२**

व्याख्येयग्रन्थे अश्विन्यवधिके ऊनविंशे नक्षत्रे च **मूलम्** । "**मूलं** शिफाद्ययोः । मूलवित्तेऽन्तिके वा ना भे" इति मेदिनी ॥ धुस्तूरे मदनवृक्षे, अपिशब्दात् मातृभ्रातरि सर्पभेदे च **मातुलः** । "**मातुलो** व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धुस्तूरे **मातुलो** बन्दिचौरे च ग्राहरोगयोः" इति मेदिनी ॥ ४०५ ॥ कङ्केलिवृक्षे अशोकद्रुमे, अपिशब्दात् चूडायां किरिटे संयतकेशेषु भूमौ च **मौलिः** । "**मौलिः** किरीटे धम्मिल्ले चूडायामनपुंसकम् । नाऽशोकद्रौ स्त्रियां भूमौ" इति मेदिनी ॥ पात्रे दीपाधारे पात्रे, कपालिनि, बलीयसि, मत्स्यभेदे च **मल्लः** । "**मल्लः** पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी ॥ परिधौ चन्द्रसूर्यसमीपस्थे मेघादिसन्निकर्षात् जायमाने वेष्टनाकारे चक्राकारेण वेष्टने वा, गणे समूहे ॥ ४०६ ॥ बिम्बे दर्पणादौ भासमानप्रतिबिम्बाश्रये, देशे चतुःशतयोजनामिते देशभेदे, शुनि कुक्कुरे च **मण्डलम्** । "**मण्डलं** परिधौ कोटे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे" इति मेदिनी ॥ इक्षुः स्वनामाख्यातो वृक्षः, चूतः आम्रः, तयोः **रसालः** । "**रसालं** सिह्लके बोले **रसाल**श्चेक्षुचूतयोः" इति मेदिनी॥जिह्वा रसना, कमलं पद्मम् , तयोः **लोला** । "सतृष्णे चञ्चले **लोला** जिह्वाकमलयोः स्त्रियाम्" इति मेदिनी ॥ गृहं सदनम्, शाखा वृक्षस्य स्कन्धशाखा, तयोः **शाला** । "**शाला** द्रुस्कन्धशाखायां गृहगेहैकदेशयोः । ना झषे" इति मेदिनी ॥ ४०७ ॥ तरुजातौ स्वनामाख्याते वृक्षभेदे, मत्स्यभेदे झषविशेषे, हाले लाङ्गले, नृपे राजनि, क्वचित् "हालनृपे" इति पाठो दृश्यते, एवं सति तन्नामके राजनीत्यर्थः, अपिशब्दात् प्राकारे वृक्षमात्रे दन्त्यादिस्तु वृक्षमात्रे च **शालः** । "**शालो** हाले नृपे मत्स्यप्रभेदे सर्ज्जपादपे" इति विश्वः ॥ निगडे अन्दुके लौहमये पादबन्धने च, पुंस्कटीबद्धवस्त्रे गर्भसंस्कारकाले श्रोणिदेशे बद्धवस्त्रे च **शृङ्खलम्** । "**शृङ्खला** पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी ॥ ४०८ ॥ गन्धमृगे गन्धमार्ज्जारे, धान्ये कलमादिधान्ये च **शालिः** । "**शालि**स्तु कलमादौ च गन्धमार्ज्जारके पुमान्" इति मेदिनी ॥ कुक्कुरे शुनि, अलसे निद्राशीले च **शयालुः** । "**शयालुः** स्यादजगरे निद्राशीले च कुक्कुरे" इति मेदिनी ॥ वल्कले वृक्षत्वचि, खण्डे एकभागे च **शकलम्** । "**शकलं** त्वचि खण्डे स्याद् रागवस्तुनि वल्कले" इति विश्वमेदिन्यौ ॥ शिशिरे शीतस्पर्शे, अनिले वायौ च **शीतलः** । "**शीतलं** पुष्पकाशीशे शैलजे मलयोद्भवे । पुमानशनपर्ण्यां स्याच्छिशिरे वाच्यलिङ्गकम्" इति मेदिनी ॥ ४०९ ॥ तैलमाने तैलस्य मानयोग्ये, सारसी सारसपक्षिणी, कामुकस्त्री कामाभिलाषवती, एतयोश्च **षण्डाली** । "**षण्डाली** तैलमाने च सारसीकामुकस्त्रियोः" इति मेदिनी ॥ शुष्कमीने आतपशुष्कमत्स्ये, किलासिनि किलासरोगवति च **सिध्मला** । "**सिध्मला** मत्स्यविकृतौ वाच्यवत्तु किलासिनि" इति मेदिनी ॥४१०॥ ऋजौ अवक्रे, वृक्षे पीतदारुणि धूपकाष्ठभेदे, चकारात् उदारे त्रिपुटायां च **सरलः** । "**सरलः** पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु" इति मेदिनी ॥ वरणः प्राकारः, सर्ज्जः स्वनामाख्यातो वृक्षः, तयोः **सालः** । "**सालः** पादपमात्रे स्यात् प्राकारे सर्जपादपे" इति मेदिनी ॥ गजास्ये गणेशे, चकारात् अभ्रमातङ्गे शङ्खनाभे च **हस्तिमल्लः** । "**हस्तिमल्लो**ऽभ्रमातङ्गे शङ्खनाभे विनायके" इति मेदिनी ॥ अवज्ञा निन्दा, विलासः स्त्रीणां शृङ्गारभावजः चेष्टाविशेषः, "प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैर्**हेला** सा परिकीर्त्तिता" इति, तयोश्च **हेला** । "**हेला** स्त्रियामवज्ञायां विलासे वरयोषिताम्" इति मेदिनी ॥ ॥ ४११ ॥ इति लकारान्ताः ॥ अथ वान्तानाह ॥ यागे यज्ञे, मद्यसन्धाने सुरोत्पादनादिव्यापारे, स्नाने, चात् पीडने सोम-

आश्रवोऽङ्गीकृतौ वश्ये आहवौ यागसङ्गरौ । उपप्लवौ राहूत्पातौ कितवौ मत्तवञ्चकौ ॥४१३॥
खलीने स्त्री कविः पुंसि काव्यकृच्छुक्रसूरिषु । कैतवं तु छले द्यूते राजिकायां क्षुते क्षवः ४१४॥
केशवः केशवी विष्णुर्गालवो मुनिलोध्रयोः । जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रियां गुणे॥
तत्त्वं विलम्बिते नृत्ये स्वरूपे परमात्मनि । मेघे राज्ञि सुरे देवो द्विजिह्वौ व्यालसूचकौ४१६॥
ध्रुवो वटे स्मरारौ च गीतिस्रुग्भेदयोर्ध्रुवा । धवो धूर्त्तेऽप्यथ नवो नूतने वासवे स्तुतौ ४१७॥
प्लवो निषादे पर्कट्यां भेके भेले गतौ कपौ । पल्लवो विस्तरे षिड्गे किसले विटपे वने४१८॥
घटादौ पार्थिवो राज्ञि वल्लवः सूदगोपयोः । गजे धन्विनि शुक्रे च पर्शुरामे च भार्गवः ॥४१९

लतापाने तत्कण्डने च अभिषवः । "भवेदभिषवः स्नाने मद्यसन्धानयज्ञयोः" इति मेदिनी ॥ मृतौ मरणे, असत्त्वे अविद्यमानतायाम्, चकारात् न्यायमते द्रव्यादिषट्कभिन्ने च अभावः । "अभावो मरणेऽसत्त्वे" इति मेदिनी ॥ रजः स्त्रीपुष्पम्, पुष्पं कुसुमम्, तयोः आर्त्तवम् । "आर्त्तवं स्त्रीरजःपुष्पे क्लीबं स्यादृतुजे त्रिषु" इति मेदिनी ॥ ४१२ ॥ अङ्गीकृतौ स्वीकृतौ, वश्ये आयत्ते च आश्रवः । "आश्रवोऽङ्गीकृतौ क्लेशे नाऽन्यवद्वचनस्थिते" इति मेदिनी ॥ यागः यज्ञः, सङ्गरः युद्धम्, तयोः आहवः । "आहवो युद्धयज्ञयोः" इति मेदिनी ॥ राहुः ज्योतिश्चक्रस्थः सूर्यकिरणसम्पर्काभावेन जायमानः पृथिवीच्छायाधिष्ठाता ग्रहभेदः सिंहिका-सुतः, उत्पातः गगनादुल्कापातादिरूप उपद्रवः, तयोः उपप्लवः । "उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि" इति मेदिनी॥ मत्तः धुस्तूरवृक्षः, वञ्चकः मायाकारः, तयोः कितवः ।"कितवस्तु पुमान् मत्ते वञ्चके कनकाह्वये" इति मेदिनी॥४१३॥ खलीने अश्वमुखस्थायां कविकायाम्, काव्यकृत् काव्यनिर्म्माता, शुक्रः असुराचार्यः,सूरिः भास्करः, एतेषु च कविः ॥ " कविर्वाल्मीकिशुक्रयोः । सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति " इति मेदिनी ॥ छले कपटतायाम्, द्यूते अक्षधूर्त्ते च कैतवम् । " कैतवं तु छले द्यूते " इत्येव मेदिनी ॥ राजिकायां राजस-र्षपे, क्षुते नासातः वायुनिःसरणजे शब्दे च क्षवः । " क्षवः क्षुते राजिकायाम् " इति मेदिनी ॥ ४१४ ॥ केशवी प्रशस्तकेशवान् , विष्णुः हरिः, तयोः केशवः । " केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु " इति मेदिनी ॥ मुनिः मुनिभेदः, लोध्रः लोध्रवृक्षः, तयोः गालवः । " गालवस्तु मुनौ लोध्रे " इति मेदिनी ॥ जीविते प्राणधारणे, गुरुः बृहस्पतिः, जन्तुः प्राणी, तयोश्च, गुणे धनुषो मौर्व्यां च जीवः । " जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ । जीवा जीवन्तिकामौर्वीवचाशिञ्जिनभूमिषु । न स्त्री तु जीविते " इति मेदिनी ॥ ॥ ४१५ ॥ विलम्बिते अशीघ्रे मन्दे वा, नृत्ये नृत्यवाद्यादौ, स्वरूपे याथार्थ्ये, परमात्मनि ब्रह्मणि च तत्त्वम् । " तत्त्वं स्वरूपे परमात्मनि । स्याद्विलम्बितनृत्ये च " इति मेदिनी ॥ मेघे जलधरे, राज्ञि नाट्योक्तौ राजनि, सुरे अमरे च देवः । " देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये " इति मेदिनी ॥ व्यालः सर्पः, सूचकः पिशुनः, तयोः द्विजिह्वः । " द्विजिह्वौ सर्पसूचकौ " इत्यमरः ॥ ४१६ ॥ वटे स्वनामाख्याते वृक्षे, स्मरारौ महादेवे,गीतिः गायना, स्रुक् वटपत्राकारविकङ्कतकाष्ठजं बाहुपात्रं यज्ञपात्रम्,तयोर्भेदयोर्विशेषयोः,चकारात् शङ्कौ विष्णौ उत्तानपादनृपपुत्रे वसुभेदे ज्यौतिषोक्तयोगभेदे नासाग्रे स्थाणौ ललाटस्थे आवर्त्तभेदे भूगोलस्थोत्तरदक्षिणके-न्द्रद्वयोपरिस्थे स्थिरे ताराभेदे निश्चिते तर्के आकाशे उत्तरात्रयरोहिणीनक्षत्रेषु सन्तते अपरिणामिनि नित्ये स्थिरे मूर्वायां शालपर्ण्यां शरारिपक्षिणि च ध्रुवः । " ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि क्लीबे निश्चिततर्कयोः । स्त्री मूर्वायां शालपर्ण्यां गीतिस्रुग्भेदयोस्त्रिषु । सन्तते शाश्वते च " इति मेदिनी ॥ धूर्ते वञ्चके, द्यूतकारे च, अपिशब्दात् पत्यौ नरे स्वनामाख्याते वृक्षे कम्पने च धवः । " धवः पुमान् नरे धूर्त्ते पत्यौ वृक्षान्तरेऽपि च " इति मेदिनी ॥ नूतने नव्ये, वासवे इन्द्रे, स्तुतौ स्तवे च नवः । " नवं नव्ये पुमान् स्तुतौ" इति मेदिनी ॥ ४१७ ॥ निषादे चण्डाले, पर्कट्यां पर्कटीकवृक्षे, भेके जन्तुभेदे भेले नद्यादितरणार्थं कृते प्लवे, गतौ प्लुतगमने, कपौ वानरे च प्लवः । " प्लवः स्यात् प्लवने भेले भेकेऽवौ श्वपचेऽपि च । शाखामृगे च कुलके प्रवणे पर्कटीद्रुमे । कारण्डवाख्यविहगे शब्दे प्लुतगतौ पुमान् । कैवर्त्तिमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्" इति मेदिनी ॥ विस्तरे अभिनवपत्रयुक्तशाखाविस्तारे, षिङ्गे विटे, किसले पल्लवे, विटपे शाखायाम्, वने अरण्ये च पल्लवः। "पल्लवोऽस्त्री किसलये विटपे विस्तरे वने । शृङ्गारेऽलक्तरागे च"इति मेदिनी॥४१८॥घटादौ कलशादौ,

दूर्वा गौरी च भार्गव्यौ सत्तासंसारयोर्भवः । भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे ॥४२०
माधवौ हरिवैशाखौ राजीवो मृगमीनयोः । रौरवौ घोरनरकौ लवश्छेदनलेशयोः ॥ ४२१ ॥
करञ्जभित्फले लट्वा वाद्यपक्षिप्रभेदयोः । विश्वं शुण्ठयां समस्ते च निर्वाणे विभवो धने४२२॥
अश्वौघे वाडवं न स्त्री पाताले ना द्विजौर्वयोः । वडवाऽश्वाकुम्भदास्योर्योगे कीले हरे शिवः४२३
सुखं क्षेमं शिवं शम्यामलकी चाभया शिवा । षाडवस्तु रसे रागे सैन्धवो लवणाश्वयोः४२४
स्वोऽस्त्रियां ज्ञातिधनयोः स्वमात्मनि नपुंसकम् । आधेयधारणे सत्त्वे मेलकेऽपि च सम्भवः ॥

राज्ञि राजनि च पार्थिवः । "पार्थिवो नृपे । सीतायां पार्थिवी तु स्त्री पृथिव्या विकृतौ त्रिषु" इति मेदिनी ॥ सूदः पाचकः, गोपः गोपालः, तयोः वल्लवः । "वल्लवः सूपकारे स्याद्भीमसेने च गोदुहि" इति मेदिनी ॥ गजे हस्तिनि, धन्विनि धनुर्द्धरे, शुक्रे शुक्राचार्ये, पर्शुरामे परशुरामे ॥४१९॥ दूर्वा प्रसिद्धा, गौरी पार्वती, तयोश्च, चकारात् वेदप्रसिद्धे विद्याभेदे लक्ष्म्यां च भार्गवः । "भार्गवो गजधन्विनोः । शुक्रे परशुरामे च भार्गवी पार्वतीश्रियोः । दूर्वायाम्" इति मेदिनी ॥ सत्ता द्रव्यगुणकर्मवृत्तिः विद्यमानता वा, संसारः जातितो जातिसंसरणम्, मिथ्याज्ञानजन्यसंस्काररूपवासना वा, तयोः भवः । "भवः क्षेमेशसंसारे सत्तायां प्रातिजन्मनोः" इति मेदिनी ॥ "भवः संसारसम्प्राप्तिश्रेयःशङ्करजन्मसु" इति विश्वः ॥ गौरविते जन्तौ नाट्योक्तौ नानापदार्थचिन्तके पण्डिते, पदार्थे साध्यरूपे सिद्धरूपे क्रियारूपे धातोरर्थे वा अभिनयान्तरे हृद्गतावस्थावेदके मानसविकारे स्वेदकम्पादौ च भावः । "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु । रत्यादौ" इति मेदिनी ॥ ४२० ॥ हरिः विष्णुः, वैशाखः स्वनामाख्यातो वर्षमध्ये द्वितीयश्चान्द्रमासः, तयोः माधवः । "माधवोऽजे मधौ राध्ये यादवे ना स्त्रियामसौ । मधुशर्करवासन्तीकुट्टिनीमादिरासु च" इति मेदिनी ॥ मृगः हरिणविशेषः, मीनः मत्स्यभेदः, तयोः राजीवः । "राजीवं नलिने ना तु भेदे हरिणमीनयोः" इति मेदिनी ॥ घोरं दारुणं भयानकं वा, नरकः पापिनां दुःखभोगस्थानभेदः, तयोः रौरवः । "रौरवो नरके घोरे" इति मेदिनी ॥ छेदनः छेदकः, लेशः अल्पः, तयोः लवः । "लवो लेशे विनाशे च छेदने रामनन्दने" इति मेदिनी ॥ ४२१ ॥ करञ्जभित् करञ्जभेदः, फलं वृक्षादीनां सस्यम्, तयोः, वाद्यं वादनीयं मृदङ्गादि, पक्षी खगः, तयोर्भेदयोर्विशेषयोश्च लट्वा । "लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी ॥ शुण्ठयां स्वनामाख्याते औषधविशेषे, समस्ते सकले, चकारात् जगति संसारे तदभिमानिनि जीवे च विश्वम् । "विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठयां पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी ॥ निर्वाणे मोक्षे, धने वित्ते च विभवः । "विभवो रैमोक्षैश्वर्येषु" इति मेदिनी ॥ ४२२ ॥ अश्वौघे घोटकसमूहे, पाताले धरायास्तलस्थे भुवने, द्विजः ब्राह्मणः, और्वः समुद्रस्थो वडवानलः, तयोश्च वाडवम् । "वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले" इति मेदिनी ॥ अश्वा घोटकी, कुम्भदासी वृक्षविशेषः, तयोः वडवा । "वडवा द्विजयोषिति । अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि च" इति मेदिनी ॥ योगे विष्कम्भादिषु मध्ये विंशतितमयोगे, कीले गवां गात्रकण्डूयनार्थे गोष्ठे निखाते काष्ठे, हरे महादेवे ॥४२३ ॥ मङ्गले, सुखे, शमीवृक्षे, आमलक्याम्, अभयायां चकारात् जले सैन्धवे सामुद्रे लवणे श्वेतटङ्कणे मङ्गलवति वालग्रहे वालुके गुग्गुलौ वेदे पुण्डरीकवृक्षे कृष्णधुस्तूरे पारदे देवे लिङ्गे च शिवः । "शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् । सुखक्षेमजले क्लीबम्" इति मेदिनी ॥ रसे रसभेदे, रागे रक्तवर्णे च षाडवः । क्वचित्तु "पाडवः" इति पाठो दृश्यते । "षाडवो गानरसयोः" इति मेदिनी ॥ लवणः सिन्धुनदीसमीपदेशे भवः लवणभेदः, अश्वः घोटकः, तयोः सैन्धवः । "सैन्धवोऽस्त्री माणिमन्थे नाऽश्वे सिन्धुभवे त्रिषु" इति मेदिनी ॥ ४२४ ॥ ज्ञातिर्बन्धुः, धनं वित्तं तयोः आत्मनि च स्वः । "स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम्" इति मेदिनी ॥ आधेयधारणे आधेयस्याधारे, सत्त्वे उत्पत्तौ, मेलके सङ्गे विवाहे वा, अपिशब्दात् समावेशनयोग्यत्वरूपे व्यापारे उत्कटसन्देहे हेतौ च सम्भवः । "सहाये सम्भवो हेतावुत्पत्तौ मेलकेऽपि च" इति मेदिनी ॥ ४२५॥ इति विकारान्ताः॥

**अपभ्रंशो दुष्पतने भाषाभेदापशब्दयोः । टीकादर्पणवादर्शोवाशा तृष्णादिशोः स्त्रियाम्॥४२६**
**प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके । दिगम्बरे कपौ कीशः केशो वालप्रचेतसोः॥४२७॥**
**जीवितेशो यमे नाथे दंशः संहननेऽपि च । सर्पक्षतेऽथ ज्ञाने च लोचने दर्शने च दृक् ४२८**
**नाशः पलायने मृत्यौ निस्त्रिंशौ खड्गनिर्दयौ । निशा रात्रिर्हरिद्रा च मृगादौ प्रमथे पशुः ॥**
**पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्त्यते ॥ ४३० ॥**
**पाशः कचान्ते संघार्थः कर्णान्ते शोभनार्थकः । छात्राद्यन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने॥**
**वार्त्ताहरे पुरोगे च सहाये च प्रतिस्पशः । लोमशो मेढ्रकेऽपि स्याद्विवशावश्वविह्वलौ॥४३२॥**
**वंशो वर्गे च पृष्ठांशे वेशो वेश्यागृहेऽपि च । आयत्तत्वाप्रभुत्वे द्वे वशः परवशं त्रिषु॥४३३ ॥**

अथ शकारान्तानाह ॥ दुष्पतने अशोभनाकारपतने, भाषाभेदः भाषाविशेषः, अपशब्दः साधुशब्दभिन्नः, तयोश्च **अपभ्रंशः** । "अपभ्रंशस्तु पतने भाषाभेदापशब्दयोः" इति मेदिनी ॥ टीका विषयपद्याख्या रूपाकृतिः, दर्पणः रूपप्रतिबिम्बदर्शनाधारः, तयोः **आदर्शः** । "आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" इति मेदिनी ॥ तृष्णा अप्राप्ताभिलाषः, दिशा दिक्, तयोः **आशा** । "आशा तृष्णादिशोः स्त्रियाम्" इत्येव मेदिनी ॥ ४२६ ॥ प्रभुः स्वामी, शङ्करः महादेवः तयोः, लाङ्गलदण्डके लाङ्गलमध्यस्थे काष्ठमये दण्डे च **ईशः** । "ईशा लाङ्गलदण्डके । ईशः प्रभौ महादेवे" इति मेदिनी ॥ दिगम्बरे शिवे क्षपणकभेदे च, कपौ वानरे च **कीशः** । "कीशा दिगम्बरे कपौ" इति मेदिनी॥वालश्चिकुरः,प्रचेता वरुणः,तयोः **केशः** । "केशः स्यात् पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि च"इति मेदिनी॥४२७॥यमे प्राणस्वामिनि,नाथे प्रियनाथे च **जीवितेशः**।"जीवितेशो यमे पुंसि त्रिषु स्याज्जीवितेश्वरे"इति मेदिनी॥संहनने सङ्घाते,सर्पक्षते सर्पाघाते,अपिशब्दात् वनमक्षिकायां वर्म्मणि मर्म्मणि दोषखण्डने दन्ते च **दंशः**।"दंशः कीटविशेषे च वर्मदंशनयोः पुमान्"इति मेदिनी॥ज्ञाने सामान्यविशेषरूपे बुद्धिमात्रे, लोचने नेत्रे, दर्शने, चकारात् द्वित्वसङ्ख्यायां साक्षिणि द्रष्टरि ज्ञातरि च **दृक्** ।"दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके" इति मेदिनी ॥ ४२८ ॥ पलायने भयादिना स्थानत्यागेनान्यस्थानगमने, मृत्यौ मरणे च **नाशः** । "नाशः पलायनेऽपि स्यान्निधनानुपलम्भयोः"इति मेदिनी॥खड्गः असिः, निर्दयः दयारहितः,तयोः **निस्त्रिंशः** । "अथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु' इति मेदिनी ॥ रात्रिः रजनी, हरिद्रा पीतवर्णः स्वनामाख्यात औषधभेदः, तयोः, चकारात् दारुहरिद्रायां ज्यौतिषोक्तेषु मेषादिराशिषु च **निशा** । "निशा दारुहरिद्रायां स्यात्त्रियामाहरिद्रयोः" इति मेदिनी॥मृगादौ लोमवल्लांगूलवति जन्तुभेदे, प्रमथे शिवानुचरे अश्वे वा च **पशुः** । "पशुर्मृगादिदेवाजे नाऽव्ययं पशुदर्शने" इति मेदिनी॥४२९॥ हविर्भेदे यागाविशेषे, पिष्टकस्य चमस्यां पिष्टकखाद्यभेदे, सोमलतायाः रसे सोमरसमात्रे,हुतशेषे यज्ञशेषे, चकारात् हविषि याज्ञियद्रव्ये च **पुरोडाशः** ।"पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । हुतशेषे च" इति मेदिनी ॥ ४३० ॥ कचान्ते केशादुत्तरं सङ्घार्थः । यथा केशपाशः । कर्णान्ते कर्णात्परं शोभनार्थकः । यथा कर्णपाशः, शोभनकर्ण इत्यर्थः । छात्राद्यन्ते निन्दार्थः । यथा छात्रपाशः । गर्हितशिष्य इत्यर्थः । आदिना भिषक्पाशः । कुत्सितभिषगित्यर्थः । "याप्ये पाशप्" इत्यादिपाणिनीयसूत्रेण छात्रादिभ्यः पाशप् प्रत्ययः । पक्ष्यादिबन्धने मृगविहगादिबन्धने रज्जुभेदे, रज्जुमात्रे च **पाशः** । "पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः । सुकर्णे च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने" इति मेदिनी ॥ ४३१ ॥ वार्ताहरे वृत्तान्तहारके, पुरोगे अग्रगामिनि प्रधाने वा, सहाये सहचरे अनुकूले वा च **प्रतिस्पशः** । "प्रतिस्पशः सहाये स्याद्वार्त्ताहरपुरोगयोः" इति मेदिनी ॥ क्वचित् "प्रतिष्कशः" इति पाठः । "प्रतिष्कशः सहाये स्याद्वार्त्ताहरपुरोगयोः" इति विश्वः ॥ मेढ्रके मेषे, अपिशब्दात् मुनिभेदे लोमयुक्ते काकजङ्घायां जटामांस्यां वचायां शूकशिम्ब्यां महामेदायां बालायां च **लोमशः** । "लोमशो मुनिमेषयोः । लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च । शूकशिम्बीमहामेदाकाशीशे शाकिनीभिदि" इति मेदिनी ॥ अवशः अस्वतन्त्रः, विह्वलः भयादिना व्याकुलः, तयोः **विवशः** । "विवशस्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि" इति मेदिनी ॥ ४३२ ॥ वर्गे पुत्रपौत्राद्यपत्यवर्गे, पृष्ठांशे पृष्ठावयवे, चकारात् वर्गे तृणजातिभेदे इक्षौ सालवृक्षे वाद्यभेदे च **वंशः** । "वंशः पुंसि कुले वेणौ पृष्ठावयववर्गयोः" इति मेदिनी ॥ वेश्यागृहे गणिकागृहे, अपिशब्दात् प्रवेशे गृहमात्रे अलङ्कारादिना

दाने रोगेऽपि च स्पर्शः सदृशं तूचिते समे । भ्राष्ट्रे युध्यम्बरीषं ना किशोरहरिशम्भुषु ४३४॥
अभिलाषेऽनुतर्षः स्यात्पानेच्छायामथामिषम् । सम्भोगोत्कोचमांसेषु उषा बाणात्मजा निशा॥
भल्लूके शोणके चर्क्षो नक्षत्रे पुंनपुंसकम् । ऋषिर्वेदेऽपि कक्षस्तु दोर्मूले शुष्ककानने ४३६ ॥
कक्षा वरत्रा प्रकोष्ठस्पर्द्धोद्ग्रहणिकासु च । कुल्माषं काञ्जिके ना तु यवके स्यादथाऽविले ॥
पापे च कलुषं घोषः शब्दाभीरनिवासयोः । शुचौ दक्षे च चोक्षः स्यात्तर्षो लिप्सापिपासयोः
दक्षः प्रजापतौ ताम्रचूडे हरवृषे पटौ । पौरुषं मानभेदे च पुन्नागे पुरुषो नरे ॥ ४३९ ॥

कृतरूपान्तरे नेपथ्यकर्म्मणि च वेशः । "वेशो वेश्यागृहे गृहे । नेपथ्ये च" इति मेदिनी ॥ आयत्तत्वम् अधीनता, अप्रभुत्वम् अस्वामित्वम्, तयोः, परवशे पराधीने च वशः । "वशमायत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः। वशा बन्ध्यासुतायोषास्त्रीगवीकरिणीषु च" इति विश्वः॥४३३॥ दाने त्यागे, रोगे धातुवैषम्यजाते व्याधौ, अपिशब्दात् न्यायोक्ते त्वगिन्द्रियग्राह्ये गुणभेदे युद्धे ग्रहणे गुप्तचरे उपतापके वायौ स्पर्शके कादिषु मावसानेषु वर्गवर्णेषु च स्पर्शः । "स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेऽपि च । स्पर्शः स्यात्सम्पराये च प्रणिधावपि पुंस्ययम्" इति मेदिनी॥उचिते युक्ते परिचिते वा, समे तुल्यरूपे च सदृशम् । "सदृशं समे उचिते च" इति मेदिनी ॥ इति शकारान्ताः॥अथ षान्तानाह॥भ्राष्ट्रे भर्जनपात्रे, युधि सङ्ग्रामे, किशोरः बालकः, हरिर्विष्णुः, शम्भुः ईश्वरः, एतेषु च अम्बरीषम् ।"अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे" इति मेदिनी॥४३४॥ अभिलाषे इच्छायाम्, पानेच्छा मद्यपानेच्छा तत्र, अपिशब्दात् सुरापानपात्रे मद्ये मद्यपाने च अनुतर्षम् ।"अनुतर्षः सुरापानपात्रे तृष्णाभिलाषयोः" इति मेदिनी ॥ सम्भोगः कामगुणः, उत्कोचः अन्याय्यकर्मकरणार्थं वादिप्रतिवादिभ्योऽर्थग्रहणम्, मांसं पिशितम्, एतेषु आमिषम् । "आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च" इति मेदिनी ॥ बाणात्मजा बाणराजसुता, निशा रात्री, तयोः उषा । "उषा । बाणराजसुतारात्र्योः" इति मेदिनी ॥ ॥ ४३५ ॥ भल्लूके स्वनामाख्याते जन्तुभेदे, शोणके शोणकवृक्षे नक्षत्रे, चकारात् मेघादौ पर्वतभेदे च ऋक्षः । "ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गो नक्षत्रे पुंनपुंसकम्" इति मेदिनी ॥ वेदे धर्मब्रह्मप्रतिपादके संहिताब्राह्मणात्मके ग्रन्थभेदे, अपिशब्दात् मन्त्रद्रष्टरि मुनौ अनुष्ठेयकर्मज्ञापकसूत्रकृदाचार्ये गोत्रप्रवरप्रवर्त्तके मुनौ च ऋषिः । "ऋषिर्वेदे वशिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी ॥ दोर्मूले बाहुमूले, शुष्ककानने शुष्कवने ॥ ४३६ ॥ वरत्रा हस्तिबन्धनरज्जुः, प्रकोष्ठः कूर्परस्याधोभागस्थो मणिबन्धपर्यन्तो हस्तावयवः, स्पर्द्धा साम्या, उद्ग्रहणिका कक्षरोगभेदः, एतेषु च, चकारात् स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले लतायां शुष्कतृणे पार्श्वभागे राजान्तःपुरे पृष्ठप्रदेशनिहितार्धांशुकस्यैकदेशे वस्त्राञ्चले काञ्च्यां गृहभित्तौ च कक्षा । "कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धास्पदे ना दोर्मूले कच्छवीरुत्तृणेषु च" इति मेदिनी ॥ काञ्जिके आरनाले, यवके यवादौ, तुकारात् अर्धस्विन्नगोधूमादिषु सूर्यस्य पारिपार्श्विकभेदे शूकधान्ये च कुल्माषम् । "कुल्माषं काञ्जिके याचके पुमान्" इति मेदिनी ॥ आविले अच्छरहिते आकुलिते ॥ ४३७ ॥ पापे नरकहेतौ दुरदृष्टे, चकारात् महिषे च कलुषम् । "कलुषं त्वाविले पापे" इति मेदिनी ॥शब्दः ध्वनिः, आभीरनिवासः आभीरपल्ली, तयोः घोषः।"घोष आभीरपल्ल्यां स्याद्गोपालध्वनिघोषके । कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधी" इति मेदिनी॥शुचौ शुद्धाचरणे पवित्रे वा, दक्षे कार्यकुशले, चकारात् गीते तीक्ष्णे मनोहरे च चोक्षः । क्वचित्तु "नोक्षः" इति पाठः। "चोक्षो गीते शुचौ दक्षे तथा तीक्ष्णमनोज्ञयोः" इति मेदिनी ॥ लिप्सा अभिलाषः, पिपासा तृष्णा, तयोः तर्षः । "तर्षो लिप्सोदन्ययोः" इति मेदिनी ॥ ४३८ ॥ प्रजापतौ ब्रह्मणः दक्षाङ्गुष्ठाज्जाते प्रजापतिभेदे, ताम्रचूडे कुक्कुटे, हरवृषे शिववृषभे, पटौ निपुणे च दक्षः।"दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ । मुनिभेदे हरवृषे द्रुमभेदे स्त्रियां भुवि" इति मेदिनी॥मानभेदे उर्ध्वविस्तृतबाहुपाणिकमनुष्यपरिमाणे, चकारात् पुरुषत्वे विक्रमे उद्यमे च पौरुषम् ।"पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्द्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत्" इति मेदिनी ॥ पुन्नागे स्वनामाख्याते वृक्षे, नरे पुरुषे च पुरुषः । "पुरुषः परवे

**पक्षौ मासार्द्धपार्श्वौ च महिषी राजपत्न्यपि । मूर्खे माने फले माषो मेषौ राश्यन्तरोरणौ४४०
सङ्ख्यायां तु न ना लक्षा क्लीबं व्याजशरव्ययोः।हरताक्ष्यौं विशालाक्षौ शेषो नाऽनन्तसीरिणोः
उपयुक्तेतरे त्वस्त्री शैलूषो नटबिल्वयोः ।शुश्रूषा परिचर्य्या च संहर्षः स्पर्द्धने मुदि ॥४४२॥
योग्यायामन्तिकेऽभ्यासोऽधिवासौ स्थानसंस्क्रिये।आख्यायिकापरिच्छेदे चाऽश्वासो निर्वृतावपि
उदर्चिरुत्प्रभे वह्नावेनः पापापराधयोः। कनीयाननुजेऽल्पे च कंसो मानेऽसुरान्तरे ॥ ४४४ ॥
तैजसे कंस्यपात्रे च गुत्सः स्तबकहारयोः । छन्दः पद्यश्रुतीच्छासु तरो वेगे बलेऽपि च ४४५**

साङ्ख्यज्ञे च पुन्नागपादपे" इति मेदिनी ॥ ४३९ ॥ मासार्द्धः शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथ्यात्मकः कालः,पार्श्वः कक्षाधोभागः,तयोः,चकारात् खगानां पतत्रे शरस्य पुङ्खस्थे पत्रे समूहे केशात्परः समूहार्थे गृहे न्यायोक्ते संदिग्धसाध्यवति पदार्थे विरोधे बले सहाये सख्यौ चुल्लीरन्ध्रे राजकुञ्जरे खगे वलये पिच्छे देहार्द्धे च पक्षः । "**पक्षो** मासार्द्धके पार्ष्णिग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः" इति मेदिनी ॥ राजपत्नी राज्ञः कृताभिषेका स्त्री तस्याम्, अपिशब्दात् महिषजातिस्त्रियाम् ओषधीभेदे च **महिषी** । "**महिषी** कृताभिषेकासैरिभ्योरोषधीभिदि" इति मेदिनी ॥ मूर्खे अज्ञाने, माने परिमाणभेदे, फले व्रीहिभेदे च **माषः** । "**माषो** व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः" इति मेदिनी ॥ राश्यन्तरं ज्योतिश्चक्रस्य द्वादशांशः अश्विनीभरणीकृत्तिकानक्षत्रपादात्मकः राशिभेदः, उरणः एडकः, तयोः **मेषः** । "**मेषो** राश्यन्तरे हुडे" इति मेदिनी ॥ ४४० ॥ सङ्ख्यायां दशायुतसङ्ख्यायाम्, व्याजः कपटः, शरव्यं लक्ष्यं शरेण वेधनायोद्देश्यम्, तयोश्च **लक्षा** । "**लक्षा** न पुंसि सङ्ख्यायां क्लीबं व्याजशरव्ययोः" इति मेदिनी ॥ हरः महादेवः, तार्क्ष्यः गरुडः, तयोः **विशालाक्षः** । "**विशालाक्षो** हरे तार्क्ष्ये ना सुनेत्रेऽभिधेयवत्" इति मेदिनी॥ अनन्तः शेषनागः, सीरी बलरामः,तयोः, उपयुक्तेतरे अवशेषे च **शेषः** । "**शेषः** संकर्षणे वधे । अनन्ते ना प्रसादे ना स्वनिर्माल्यार्पणेऽस्त्रियाम्" इति मेदिनी ॥ ४४१ ॥ नटः नृत्यकारी, बिल्वः बिल्ववृक्षः, तयोः **शैलूषः** । "**शैलूषो** नटबिल्वयोः" इत्येव मेदिनी ॥ परिचर्या उपासना तत्र, चकारात् श्रवणेच्छायां च **शुश्रूषा** । "**शुश्रूषा** स्यादुपासने । कथने श्रोतुमिच्छायाम्" इति मेदिनी ॥ स्पर्द्धने पराभिभवेच्छायाम्, मुदि आनन्दे च **संहर्षः** । "**संहर्षस्तु** प्रमोदेऽपि स्पर्द्धायां च प्रभञ्जने" इति मेदिनी ॥ ४४२॥ **इति षकारान्ताः**॥अथ सकारान्तानाह॥योग्यायां शास्त्राभ्यासे शिष्येभ्यो दानामित्येवंरूपशास्त्राभ्यासे वा,अन्तिके च सामीप्ये **अभ्यासः** । "**अभ्यासोऽ**भ्यसनेऽन्तिके"इति मेदिनी ॥ स्थानं यज्ञारम्भपूर्वदिवसे देवतास्थापनादिकर्म, संस्क्रिया गन्धमाल्यैः संस्कारः, तयोः **अधिवासः** । "**अधिवासो** निवासे स्यात्संस्कारे धूपनादिभिः" इति मेदिनी ॥ आख्यायिकापरिच्छेदे गद्यपद्यमयप्रबन्धस्य विच्छेदे, निर्वृतौ सुस्थितौ, अपिशब्दात् आश्रयदाने भीतस्य भयनिवारणार्थे सान्त्वने च **आश्वासः** । "**आश्वासः** पुंसि निर्वृतौ । आख्यायिकापरिच्छेदे च" इति मेदिनी ॥ ४४३ ॥ उत्प्रभे उद्गतकान्तौ, वह्नौ दहने च **उदर्चिः** । "**उदर्चिरुत्प्रभे** वाच्यलिङ्गः पुंसि हुताशने" इति मेदिनी ॥ पापं नरकहेतुर्दुरदृष्टम्, अपराधः अकार्यादिकरणरूपो दोषः, तयोः **एनः**। "**एनः** पापापराधयोः" इत्येव मेदिनी ॥ अनुजे कनिष्ठे, अल्पे द्वयोर्मध्ये अल्पतरे, चकारात् युवतरे च **कनीयान्** । "**कनीयानतियूनि** स्यादत्यल्पानुजयोस्त्रिषु"इति मेदिनी ॥ माने"आढक"इति प्रसिद्धे परिमाणे, असुरान्तरे श्रीकृष्णमातुले ॥४४४॥ तैजसे तैजसद्रव्ये, कंस्यपात्रे स्वर्णरजतादिनिर्मिते पानपात्रे, चकारात् ताम्ररङ्गमिश्रणजनितधातुद्रव्ये कांस्ये च **कंसः** । "**कंसोऽस्त्री** तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना" इति मेदिनी ॥ स्तबकः कलिकाकुसुमादिसमूहवान् गुच्छः, काण्डशून्यः मूलत एव शाखाप्रधानसङ्घात्मको धान्यमल्लिकादिस्तम्बो वा, हारः द्वात्रिंशद्यष्टिको हारभेदः, तयोः **गुत्सः**। "**गुच्छः**" अप्यत्र। क्वचित् "**कुत्सः**"इति च। "**गुत्सः** स्यात् स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः" इति मेदिनी ॥ पद्यं कविकृतं चतुश्चरणात्मकम्, श्रुतिर्वेदः, इच्छा अभिलाषः, एतेषु **छन्दः** । "**छन्दः** पद्ये च वेदे च स्वैराचाराभिलाषयोः" इति मेदिनी ॥ वेगे जवे, बले सैन्ये, अपिशब्दात् जले रोगे तीरे वानरे

तमः शोकेऽप्यथ हिमर्त्तौ ना धर्म्मे व्रते तपः । पद्मे स्वर्णे तामरसं निशा दुर्गा च तामसी ॥
मणिदोषे दरे त्रासो दासो वित्तात्मचेटयोः।झिण्टयां च दासी दीर्घायुर्ऋषिः काकश्च शाल्मलिः
योक्त्रे च वसुराख्याने स्वान्ते सरसि मानसम् । माश्चन्द्रमासयोः पुंसि खर्जूरेक्ष्वोर्महारसः ॥
राजहंसो नृपाग्र्ये च जिह्वा भूः शल्लकी रसा । जले शरीरधातौ च पारदस्वादयो रसः ४४९॥
भाषाशृङ्खलके रासः क्रीडायामपि गोदुहाम् । रहो रते च गुह्ये च रभसो हर्षवेगयोः:४५०॥
विहायाः शकुने पुंसि विहायः खे नपुंसकम् । पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि४५१॥
रसे क्रूरे च विकृतौ बीभत्सस्त्रिषु नाऽर्जुने । व्यासो मुनौ च विस्तारे बर्हिर्ना कुशशुष्मणोः॥

च तरः । "तरो बले च वेगे च" इति मेदिनी ॥ ४४५ ॥ शोके चित्तवृत्तिभेदे इष्टवियोगजाते दुःखानुगुणे वा, अपिशब्दात् नेत्रवृत्तिरोधके नैशादिध्वान्ते पापे कार्याकार्याविवेके विशेषदर्शनविरोधिदोषे साङ्ख्योक्ते गुरुवरणकमेव तम इत्युक्ते गुणभेदे राहौ च तमः । "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे" इति मेदिनी ॥ हिमर्तौ शिशिरे ऋतौ, धर्मे स्वाश्रमविहितधर्मे, व्रते वैधे चान्द्रायणादौ कर्मणि च तपः । "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः" इति मेदिनी ॥ पद्मे कमले, स्वर्णे कनके च तामरसम् ।"अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि"इति मेदिनी॥निशा रात्री,दुर्गा स्वनामाख्याता देवी, चकारात् जटायां तमोऽधिकायां स्त्रियां च तामसी । "तामसी निशि दुर्गायाम्" इति मेदिनी ॥ ४४६ ॥ मणिदोषे मणिजाते दोषे, दरे भये च त्रासः । "त्रासो भये मणेर्दोषे" इति मेदिनी ॥ वित्तात्मा ज्ञातात्मा, चेटः दासः, तयोः, झिण्टयाम् , चकारात् काकजङ्घायां नीलझिण्टयां चेटयां दासपत्न्यां क्षुद्रपत्न्यां कैवर्त्तभार्य्यायां शूद्रे धीवरे दानपात्रे शूद्रस्योपाधौ सेवके च दासः।"दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे"इति मेदिनी॥"दासी चेटयां च झिण्टयां च" इति विश्वः ॥ ऋषिः, मार्कण्डेयः, काकः वायसः, शाल्मलिः शाल्मलीवृक्षः, एतेषु दीर्घायुः । "दीर्घायुः शाल्मलीवृक्षे वायसे जीवकद्रुमे । मार्कण्डेये च पुंसि स्याच्चिरजीविनि वाच्यवत्" इति मेदिनी ॥ ॥ ४४७ ॥ योक्त्रे ईषादण्डादौ युगबन्धनार्थे दाम्नि च, आख्याते प्रसिद्धे इतिवृत्तकथने, चकारात् धने रत्ने श्यामे स्वर्णे जले वृद्धौषधे बकवृक्षे सूर्ये वह्नौ रश्मौ गणदेवताभेदे अष्टसङ्ख्यायां वसुदेवताके धनिष्ठानक्षत्रे मधुरे शुष्के दीप्तौ वृद्धौषधौ च वसुः । "वसुर्ना देवभेदाग्निभायोक्त्रबकराजसु । क्लीबं वृद्धौषधे श्यामरैरत्ने मधुरे त्रिषु" इति मेदिनी ॥ स्वान्ते चित्ते, सरसि सरोवरे च मानसम् । "मानसं सरसि स्वान्ते" इति मेदिनी ॥ चन्द्रः प्रसिद्धः, मासः त्रिंशद्दिनात्मकः कालः, तयोः माः । "माश्चन्द्रमासयोः पुमान्" इति मेदिनी ॥ खर्जूरे स्वनामाख्याते वृक्षे, इक्षुर्मधुररसयुक्तः स्वनामाख्यातवृक्षः, तयोः महारसः । "महारसः स्यात् खर्जूरे कोशकारकशेरुणोः" इति मेदिनी ॥ ४४८ ॥ नृपाग्र्ये नृपश्रेष्ठे, चकारात् रक्तवर्णचञ्चुचरणयुक्ते श्वेतवर्णे हंसभेदे कलहंसे च राजहंसः ।"राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी॥जिह्वा रसना, भूः पृथिवी, शल्लकी मदनतरुः, एतेषु रसा ॥ जले सलिले, शरीरधातौ देहस्थे धातुभेदे, पारदः रसराजः, स्वादः रसनेन्द्रियग्राह्यः माधुर्यादिगुणभेदः,तयोश्च,चकारात् आस्वाद्ये गुडादौ पुष्पस्य मधुनि वीर्य्ये रागे द्रवे च रसः।"रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान्" इति मेदिनी ॥ ॥४४९॥ भाषाशृङ्खलके शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदे, गोदुहां गोपानां क्रीडायां च रासः । "रासः कोलाहले ध्वाने भाषाशृङ्खलकेऽपि च । क्रीडाभेदे च गोपानाम्" इति मेदिनी ॥ रते रमणे, गुह्ये गोप्ये, चकारात् निर्जने याथार्थ्ये च रहः । "रहस्तत्त्वे रते गुह्ये" इति मेदिनी ॥ हर्षः इष्टाधिगमजन्य आनन्दः, वेगः जवः औत्सुक्यं वा, तयोः रभसः । "रभसो वेगहर्षयोः" इति मेदिनी ॥ ४५० ॥ शकुने पक्षिणि, खे आकाशे च विहायाः । "विहायसम्" अप्यत्र । "विहायाः शकुने पुंसि गगने पुन्नपुंसकम्" इति मेदिनी ॥ पुत्रादौ शिशौ, तर्णके गवादीनां वत्से, वर्षे संवत्सरे, वक्षसि वक्षःस्थले च वत्सः । "वत्सः पुत्रादिहर्षयोः । तर्णके नोरसि क्लीबम्" इति मेदिनी ॥ ४५१ ॥ रसे नाट्यादौ प्रसिद्धे जुगुप्सास्थायिभावके रसभेदे, क्रूरे कर्कशे, विकृतौ तद्रसविषये विकृतमांसादौ, अर्जुने अर्जुनवृक्षे च बीभत्सः ।

**अग्रे प्रधाने च शिरः श्रीवासो विष्णुधूपयोः । सुमनाः पुष्पमालत्योः स्त्रियां ना देवधीरयोः॥**
**वीणाभेदे सर्जरसो धूनकेऽप्यथ सारसम् । पद्मे ना पक्षिणीन्दौ च सरो नीरतडागयोः ४५४॥**
**हविः सर्पिषि हव्ये च हंसस्तु खगसूर्ययोः । निर्लोभे नृपतौ विष्णावन्तरात्मनि चेष्यते४५५॥**
**अवग्रहः स्यात्प्रकृतिभाववृष्टिविबन्धयोः । अवरोहोऽवतरणे त्रिदिवे च लतोद्गमे ॥ ४५६ ॥**
**आरोहस्तु नितम्बे स्याद्दीर्घत्वे च समुच्छ्रये । शक्तौ स्नेहे चाग्रहः स्यादीहा तूद्यमवाञ्छयोः ॥**
**सूपे च पाकपात्रे च कटाहो महिषीशिशौ । खड्गकोषे च कलहो दात्यूहश्चातकेऽपि च ॥**
**समारम्भे च पटहो ब्रह्मण्यपि पितामहः । प्रवाहो व्यवहारे च बहुर्विपुलसङ्ख्ययोः ॥ ४५९॥**

"वीभत्सो नाऽर्जुने क्रूरघृणात्मविकृते त्रिषु" इति मेदिनी ॥ मुनौ पराशरसुते मुनिभेदे, विस्तारे विस्तीर्णतायाम्, चकारात् समासादिसमार्थके विग्रहवाक्ये गोलवृत्तक्षेत्रस्य मध्यस्थरेखायां पुराणपाठके विप्रे च व्यासः । "व्यासो ना विस्तृतौ मुनौ" इति मेदिनी ॥ कुशं स्वनामाख्यातं तृणम्, शुष्मा वह्निः, तयोः बर्हिः । "बर्हिः पुंसि हुताशने । न स्त्री कुशे" इति मेदिनी ॥ ४५२ ॥ अग्रे उपरिभागे, प्रधाने सेनाग्रे चकारात् मस्तके शिखरे च शिरः । "शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च" इति मेदिनी ॥ विष्णुः श्रीरामः, धूपः वृकधूपः सालवृक्षरसः, तयोः श्रीवासः । "श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने" इति मेदिनी ॥ पुष्पं कुसुमम्, मालती स्वनामाख्याता लता, तयोः, देवः सुरः, धीरः पण्डितः, तयोश्च सुमनाः । "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" इति मेदिनी ॥ ४५३ ॥ वीणाभेदे वाद्यभाण्डभेदे, धूनके यक्षधूपे च सर्जरसः ॥ पद्मे सरसीरुहे, पक्षिणि स्वनामाख्याते खगे, इन्दौ चन्द्रे, चकारात् पक्षिण्यां सरोवरसम्बन्धिनि च सारसम् । "सारसः पक्षिभेदेन्द्वोः क्लीबं तु सरसीरुहे" इति मेदिनी ॥ नीरं जलम्, तडागः सरोवरः, तयोः सरः । "सरो नीरतडागयोः" इति मेदिनी ॥ ४५४ ॥ सर्पिषि घृते, हव्ये हवनीयद्रव्यमात्रे, चकारात् होमे च हविः । "हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्" इति मेदिनी ॥ खगः स्वनामाख्यातः पक्षी, सूर्यः दिनकरः, तयोः, निर्लोभे नृपतौ निर्लोभराजनि, विष्णौ श्रीकृष्णे, अन्तरात्मनि परमात्मनि, चकारात् मत्सरे यतिभेदे देहस्थवायुचेष्टाभेदे मन्त्रभेदे अश्वभेदे सुमेरुपर्वते शिवे अग्रस्थिते श्रेष्ठे विशुद्धे अजपामन्त्ररूपे वर्णे च हंसः । "हंसः स्यान्मानसौकसि । निर्लोभनृपविष्णवर्के परमात्मनि मत्सरे । योगभेदे मन्त्रभेदे शरीरमरुदन्तरे । तुरङ्गमप्रभेदेऽपि" इति मेदिनी ॥ ४५५ ॥ इति सकरान्ताः अथ हकारान्तानाह ॥ प्रकृतिभावः, वृष्टिविबन्धः वर्षाजलप्रतिघातः, तयोः अवग्रहः । "अवग्राहः" इति क्वचित् । "अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी ॥ अवतरणे ऊर्ध्वदेशात् निम्नदेशागमने, त्रिदिवे स्वर्गे, लतोद्गमे तरोर्मूलादग्रपर्यन्तमारूढायां गुडूच्यादिलतायाम्, चकारात् आरोहे च अवरोहः । "अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे" इति मेदिनी ॥ ॥ ४५६ ॥ नितम्बे उत्तमस्त्रीणां कटितटे, दीर्घत्वे दीर्घतायाम्, समुच्छ्रये अत्युन्नतौ, चकारात् आरोहणे गजारोहे परिमाणभेदे च आरोहः । "आरोहस्त्ववरोहे च वरारोहाकटावपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये" इति मेदिनी ॥ शक्तौ सामर्थ्ये, स्नेहे प्रेम्णि, चकारात् अनुग्रहे आक्रमणे ग्रहणे च आग्रहः । "आग्रहोऽनुग्रहे शक्तावाक्रमे ग्रहणेऽपि च" इति मेदिनी ॥ उद्यमः उत्साहः, वाञ्छा अभिलाषः, तयोः ईहा । "ईहोद्यमवाञ्छयोः" इति मेदिनी ॥ ४५७ ॥ सूपे पाचके, पाकपात्रे तैलादेः पाकसाधनपात्रे, महिषीशिशौ लुलायीशावके, चकारात् खर्परे नरके च कटाहः । "कटाहः कूर्मखर्परे । द्वीपस्य च प्रभेदे स्यात् तैलादेः पाकभाजने । जायमानविषाणाग्रमहिषीशावकेऽपि च" इति मेदिनी ॥ खड्गकोषे असिकोशे, चकारात् विवादे युद्धे च कलहः । "कलहं युधि चाटे ना खड्गकोषे च मण्डने" इति मेदिनी ॥ चातके स्वनामाख्याते पक्षिभेदे, अपिशब्दात् कालकण्ठके च दात्यूहः । "दात्यूहस्तु पुमान् कालकण्ठचातकपक्षिणोः" इति मेदिनी॥४५८॥समारम्भे उद्यमे दर्पे वा, चकारात् ढक्कावाद्ये च पटहः । "पटहो ना समारम्भे आनके पुन्नपुंसकम्" इति मेदिनी ॥ ब्रह्मणि विरिञ्चौ, अपिशब्दात् पितुः पितरि च पितामहः । "पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च" इति मेदिनी ॥ व्यवहारे अर्थविशेषबोधनाय शब्दविशेषप्रयोगे सहा-

**वराहः सूकरे मेघे मुस्तकेऽप्यथ मूर्च्छने । अविद्यायां च मोहः स्याद् वृषस्कन्धेऽनिले वहः ॥**
**देहनिर्माणसैन्येषु व्यूहः स्यादथ विग्रहः । सङ्ग्रामे प्रविभागे च देहविस्तारयोरपि ॥ ४६१॥**
**वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि । संक्षेपेऽपि सङ्ग्रहः स्यात् सिंह्यौ वार्त्ताकुवासकौ॥**
**राशिभेदे हरौ सिंहः श्रेष्ठार्थे चोत्तरस्थितः । सौहृदे घृततैलादौ स्यात्स्नेहोऽतोऽव्ययाः परे ॥**
**नञभावे निषेधे च तद्विरुद्धतदन्ययोः । सादृश्ये चेषदर्थे च हिरुङ्मध्यविलासयोः ॥ ४६४॥**
**पुनरर्थेऽङ्ग भोर्थे च सुष्ठ्वत्यर्थप्रशंसयोः । च पादपूरणे पक्षान्तरे हेतौ विनिश्चये ॥ ४६५ ॥**

सनभोजनादौ वा, चकारात् प्रवृत्तौ जलस्रोतसि उत्तमाश्वे च प्रवाहः । "प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः" इति मेदिनी ॥ विपुलः विस्तीर्णः, सङ्ख्या द्विप्रभृत्यनेकसङ्ख्यान्विता, तयोः बहुः । "बहुः स्यात् त्र्यादिसङ्ख्यासु विपुलेऽप्यभिधेयवत् " इति मेदिनी ॥ ४५९ ॥ सूकरे स्वनामाख्याते पशौ, मेघे जलधरे, मुस्तके स्थावरविषभेदे, अपिशब्दात् यज्ञवराहाख्ये विष्णोरवतारभेदे पर्वतभेदे शिशुमारे वाराहीकन्दे द्वीपभेदे च वराहः । "वराहः सूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः" इति मेदिनी । मूर्च्छने मूर्च्छायाम् , अविद्यायाम् अज्ञाने, चकारात् भ्रान्तिसाधने वेदान्तोक्ते अविद्यावृत्तिभेदे दुःखे देहादिष्वात्माभिमाने च मोहः । "अथ मोहः पुंलिङ्गः स्यादविद्यायां च मूर्च्छने" इति मेदिनी ॥ वृषस्कन्धे वृषभस्य स्कन्धदेशे, अनिले वायौ च वहः । "वहः स्यात् वृषभस्कन्धे वाहे गन्धवहेऽपि च" इति मेदिनी ॥ ४६० ॥ देहः कायः, निर्माणं रचना, सैन्यं सेनासमूहः, एतेषु व्यूहः । "व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः" इति मेदिनी ॥ सङ्ग्रामे युद्धे, प्रविभागे प्रकृष्टविभागे, देहः शरीरम् , विस्तारः विस्तीर्णः, तयोः, अपिशब्दात् समासादिवृत्तिसमानार्थकवाक्यभेदे विशेषज्ञाने च विग्रहः । "विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी ॥ ४६१॥ पिप्पली प्रसिद्धा, सीता जनकात्मजा, वणिक्स्त्री वणिजयोषित् रोचना गोरोचना, एतासु, अपिशब्दात् हरिद्रायां च वैदेही । "वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च" इति मेदिनी ॥ संक्षेपे संक्षिप्तकरणे, अपिशब्दात् संचये बह्वर्थकवाक्यानामेकत्र सङ्कलने च सङ्ग्रहः । "सङ्ग्रहो बृहदुत्तुङ्गे ग्रहसंक्षेपयोरपि " इति मेदिनी ॥ वार्त्ताकुः स्वनामाख्यातः लताविशेषः, वासकः स्वनामाख्यातो वृक्षः, तयोः सिंही । "सिंही तु कण्टकार्यां स्याद्वार्त्ताकौ वासकेऽपि च" इति मेदिनी ॥ ४६२ ॥ राशिभेदे, मेषादितः पञ्चमे राशौ, हरौ स्वनामाख्याते पशुभेदे, उत्तरस्थितः उत्तरपदान्तस्थः श्रेष्ठार्थे उत्तमार्थे, चकारात् रक्तशोभाञ्जने च सिंहः । "सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः" इति मेदिनी ॥ सौहृदे सुहृद्भावे प्रेम्णि च, घृततैलादौ सर्पिस्तैलादिरसभेदे, अपिशब्दात् न्यायोक्ते गुणभेदे च स्नेहः । "स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे" इति मेदिनी ॥४६३॥ इति हकारान्ताः ॥ अथ अनेकार्थाः अव्ययाः उच्यन्ते ॥ अस्मिन् वर्गे तेषामुपन्यासस्तु पूर्ववन्नानार्थत्वादेव । तल्लक्षणं तु'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्' इति । नञित्यव्ययम् अभावादावर्थषट्के वर्तते । अभावे यथा—अपापम् । पापस्याभाव इत्यर्थः। एवमकुशलम् अनुत्तरः अनुपलम्भः इत्यादि । निषेधे यथा—नैकधा न । एकप्रकारेणेत्यर्थः । एवमसंस्कृताः अकुर्वन् अकृत्वा अगम्यः इत्यादि । तद्विरुद्धे यथा—असुरः । सुरविरुद्ध इत्यर्थः । एवमलोभः अमित्रमित्यादि । तदन्ये यथा—अघटः घटभिन्न इत्यर्थः । एवमव्याकृता धर्माः । अपर्याप्ता इत्यादि । सादृश्ये यथा-अब्राह्मणः ब्राह्मणसदृश इत्यर्थः । एवमश्रमणः अमनुष्यः अपुत्र इत्यादि । ईषदर्थे यथा । अनुदरी । अल्पोदरीत्यर्थः । कृशाङ्गीति यावत् । एवमनुदिता इत्यादि । एवमेतेष्वर्थेषु नञ् अव्ययम् । तथा चाहुः प्राञ्चः । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति । "नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः" इति ॥ मध्यः अन्तरम् , विलासः दीप्तिः, तयोः हिरुक् । मध्ये यथा—"कृष्णो हिरुग्ब्रह्मशम्भ्वोः" । ब्रह्मणः शम्भोश्च मध्ये कृष्ण इत्यर्थः । विलासे यथा-"हिरुक् वह्नेरजायत" अग्नेर्दीप्तिरभवदित्यर्थः । "हिरुक्शब्दो विनार्थे च मध्यार्थेऽपि च दृश्यते " इति मेदिनी । "हिरुङ्मध्यविनार्थयोः" इति विश्वः ॥ ४६४ ॥ पुनरर्थे भोर्थे सम्बोधने च अङ्ग । पुनरर्थे

ही विस्मये प्रमोदे च ओमेवं प्रणवार्थयोः। युक्तार्थे चाधुनार्थे च साम्प्रतं तद्विदो विदुः॥
हुं वितर्के चानुमतौ वार्त्तायामरुचौ किल। प्रातर्दिने च पूर्वत्रेत्यर्थे पूर्वेद्युरिष्यते॥ ४६७॥

इति नानार्थवर्गः॥ ३॥

---

यथा—"मूर्खोऽपि नावमन्यते किमङ्ग विद्वान्" अज्ञोऽपि नावमन्यते पण्डितोऽपि किं पुनरवमन्यते नेत्यर्थः। सम्बोधनार्थे यथा—"अङ्ग भीम! यज्ञं रक्षस्व"भो भीम। तं क्रतुं पालयेत्यर्थः।"अङ्ग। सम्बोधने हर्षे सम्भ्रमासूययोरपि" इति मेदिनी॥ अत्यर्थे अतिशये, प्रशंसायां च सुष्ठु। अतिशये यथा—"सुष्ठु पीतं मया घृतम्" मयाऽतिशयेन सर्पिः प्रीतमित्यर्थः। प्रशंसायां यथा—"विद्वज्जनमनोहारि सुष्ठु काव्यं प्रजायते"। पण्डितानां मनोरञ्जनयोग्यं काव्यं सुष्ठु प्रशंसनीयं भवतीत्यर्थः। "सुष्ठु प्रशंसनेऽपि स्यादत्यर्थे च निगद्यते"इति मेदिनी॥पादपूरणाद्यर्थचतुष्के च। तत्र पादपूरणे यथा—"स च प्राह च राजानम्"। स राजानं न्यवेदयदित्यर्थः। पक्षान्तरे यथा—" सत्यं चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्" यदि सत्यं भवेत् तपः कर्मणा किम्। यदि पवित्रं चित्तं स्यात् तीर्थेन तीर्थचरणेन किं प्रयोजनमित्यर्थः। "पिबत्यसौ पाययते च सिन्धुः" असौ समुद्रः स्वयं नदीः पिबति तरङ्गाधरं, पाययते च इत्यर्थः। हेतौ यथा—"यच्च पुत्रः अजायत"। अत्र चकारो हेत्वर्थबोधकः। यस्मात् हेतोः तस्य पुत्रः अजायत इत्यर्थः। निश्चये यथा—"ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः" ससैन्यो भरतः राममन्वगाच्चेत्यर्थः। "चान्वाचये समाहारेऽप्यन्यान्यार्थे समुच्चये। पक्षान्तरे तथा पादपूरणेऽप्यवधारणे इति मेदिनी॥ ४६५॥ विस्मये आश्चर्ये अद्भुते वा, प्रमोदे हर्षे, चकारात् विषादे शोके दुःखे पीडायां च ही। तेषु विस्मये यथा—"ही चित्रम्" चित्रमाश्चर्यमित्यर्थः। प्रमोदे यथा—"ही पुत्रजन्म पितुः"पुत्रस्योत्पत्तिः जनकस्य प्रमोद इत्यर्थः। दुःखे यथा—"ही कान्तारगमनम्"। कान्तारमार्गे गमनं दुःखमित्यर्थः। हेतौ यथा—"धनप्राप्तेर्ही" धनलाभस्य हेतोरित्यर्थः। "ही दुःखे हेतावाख्यातो विषादे विस्मयेऽपि च" इति मेदिनी॥ एष्वर्थेषु हाकारोऽपि दृश्यते। यथा—"हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः"। अत्र हाकारः विस्मये। प्रमोदे यथा—"हा कान्त मैवं वद मेऽनुरागम्"। अत्र हाकारः हर्षे। विषादे यथा—"हा तातेति क्रन्दितमाकर्ण्य निषण्णः" "हा हन्त हन्त नलिनीं गज उज्जहार" "हा प्रियङ्कर! हा पुत्र! क नु पश्यामि ते मुखम्" इत्यादौ हाकारः खेदे। शोके यथा—"हा रमणीयो गतः कालः" "हा राम! वनं गतोऽसि।" अत्र हाकारः शोके। पीडायां यथा—"हा हतोऽस्मि"। अत्र हाकारः पीडायाम्। कुत्सितार्थेऽपि हाकारो दृश्यते। यथा—"हा वृषल त्वमेवं मा भाषिष्ठाः"। वृषल! त्वम् एवंरूपं कुत्सितवचनं न कथयेत्यर्थः। तथा खेदसूचको हाहाशब्दः हहाशब्दश्च स्यात्। यथा—"तदा जनसमूहस्य हाहाकारो महानभूत्" "वैदेही तु कथं भविष्यति हहा हा देवि! धीरा भव" इत्यादि। "हा विषादे च शोके च कुत्सादुःखार्थयोरपि" इति मेदिनी॥ प्रणवः ओङ्कारः वेदादौ पाठ्यः शब्दभेदः, अर्थः आरम्भः, तयोः तथा अङ्गीकारे मङ्गले शुभे ज्ञेये ब्रह्मणि सादृश्ये इत्थम्प्रकारे अवधारणे स्वीकारे प्रश्ने च ओमेवङ्कारौ। अङ्गीकारे यथा—"ओमित्युक्तवतोऽथ शार्ङ्गिणः" इति। मङ्गले यथा—"ओं नमो रत्नत्रयाय"। शुभे यथा—"ओं भगवते त्रिलोकीनाथाय"। ज्ञेये यथा—"ओं नमः शिवाय"। ब्रह्मणि यथा—"ओं तत्सत्"। सादृश्ये यथा—"एवम्भूतः"। इत्थम्प्रकारे यथा—"एवं मया श्रुतम्" "एवं यदाह भगवान्"। अवधारणे यथा—"एवमेवम्"। स्वीकारे यथा—"एवं कुर्मो वयम्"। प्रश्ने यथा—"एवं त्वं करोषि।" "ओमित्यनुमतौ प्रोक्तं प्रणवे चाप्युपक्रमे" इति, "एवम्प्रकारोपमयोरङ्गीकारेऽवधारणे" इति च विश्वः॥ युक्तार्थे अधुनार्थे च साम्प्रतम्। तत्र युक्तार्थे यथा—"विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्"। विषद्रुमः अपि आदरेण वर्द्धयित्वा आत्मना छेत्तुं न युक्तमित्यर्थः। तथा "प्रयोक्तुं साम साम्प्रतम्"। अधुनार्थे यथा—"क्रमशो वच्मि साम्प्रतम्"। तथा—"तत्रास्ते साम्प्रतं मुनिः" इति च। "साम्प्रतं चाधुनार्थे स्यादुचितार्थे च दृश्यते" इति मेदिनी॥ ४६६॥ वितर्के अनुमतौ चात् प्रश्ने क्रोधे भये निन्दायाम् अवज्ञायां च हुङ्कारः। वितर्के यथा—"हुं जलं मृगतृष्णा हुं स्याच्चेत् किं हुं प्रपद्यते"। अनुमतौ यथा—"हुं त्वं गच्छ गृहं पुत्र!"। "हुं बाले! इमं कुरु"। प्रश्ने यथा—"हुं दवे-

**आनन्देऽस्तु शुभं दिष्ट्या कटरे कटराऽद्भुते। भूर्भुवः स्वस्त्रिभुवने मनागर्थे दरं स्मृतम् ॥१॥**
**आमाङमभ्युपगमे नवरं केवलार्थकम्। प्रातरर्थेऽनपयाति क्षणमात्रे क्षणंक्षणम् ॥ २ ॥**
**क्षेमे पुण्ये च स्वस्ति स्यादुच्चैरर्थेऽट्ट कीर्त्तितम्। वारंवारं शश्वदर्थे वारं वारेण चेष्यते ॥ ३ ॥**

दत्तोऽयम्" । क्रोधे यथा—"हुं हुं नाहर चेटिके" । भये यथा—"हुं राक्षस आगतः" । निन्दायां यथा—"हुं पुत्र मैवं कुरु" । अवज्ञायां यथा—"हुं साधवोऽप्येवं न कुर्वन्ति" इति । "हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु" इति विश्वः । "हुं वितर्के परिप्रश्ने हुं लज्जायां निवारणे" इति हैमः । वार्तायाम् अरुचौ च तथा अनुशयार्थे निश्चये सम्भाव्ये सम्भावनीये, प्रसिद्धप्रमाणद्योतके वा सत्ये हेतौ अलीके तिरस्कारे अनुनये ऐतिह्ये ईषदसमाप्ते च किल । तत्र वार्तायां यथा—"जघान कंसं किल वासुदेवः" । "त्वं किलानुचितपूर्वभक्षणः" । अरुचौ यथा—"यूयं किल मा भणत माणवाः" । अनुशयार्थे यथा—"समाधिनीतेन किलोपनीतः" । निश्चये यथा—"न किलानुययुस्तस्य" । सम्भाव्ये यथा—"गुरून् किलातिशेते शिष्यः" । "समदृश्या किल स्वयम्" । सत्ये यथा—"पूतात्मनामत्र किलाभिषेकात्" इति । हेतौ यथा—तत्किल एवमाहुः" । अलीके यथा—"प्रसह्य सिंहः किल तां चकर्ष" । तिरस्कारे यथा—"जहार शक्रः किल गूढविग्रहः" । अनुनये यथा—"अमूं किल त्वं त्रिदिवादवातरः" इति । ऐतिह्यः पारम्पर्योपदेशः । तत्र यथा—"विनीतनागः किल सूत्रकारैः" । ईषदसमाप्ते यथा—"ब्राह्मे मुहूर्त्ते किल तस्य देवी" । "किलशब्दस्तु वार्तायां सम्भावनानुनयार्थयोः" इति विश्वः । "किल सम्भाव्यवार्तयोः । हेतुरुच्योरलीके च" इति हैमः ॥ प्रातः प्रभातकाले, पूर्वत्र दिने पूर्वस्मिन् दिवसे इत्यर्थे च **पूर्वेद्युः** "पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे" इति रुद्रः । "**पूर्वेद्युः** प्रातःकाले स्यात् तथैव धर्मवासरे" इति मेदिनी । "पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे" इति विश्वः ॥ ४६७ ॥

इति नानार्थवर्गः समाप्तः ॥ ३ ॥

---

**अस्तु शुभं दिष्ट्या** इति त्रयम् आनन्दे । यथा—'साधयाम्यहमविघ्नमस्तु ते" तव अविघ्नं निरुपद्रवम् अस्त्वित्यर्थः । "दिष्ट्या ते दर्शनं कान्ते" । हे कान्ते ! तव दर्शनं सन्तोष इत्यर्थः । "दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्" "अनेन सम्बन्धमुपेत्य दिष्ट्या" इति ॥ **कटरे कटरा** इति निपातद्वयम् अद्भुते च स्यात् । क्वचित् "**कटवे**" "**कटवा**" इति "**कदरे**" "**कदरा**" इति च पाठौ ॥ **भूः भुवः स्वः** इति त्रयं त्रिभुवने । यथा—"निष्प्रभश्च रिपुरास भूभृताम्" । "न परं भूपतिमाश्रयामहे" इति । अत्र भूशब्दः जगद्वाची । "भक्तिर्भुवश्चन्दनकल्पितेव" "भर्त्ता भुवोभानुनिभः प्रभावैः" "भावितात्मा भुवोभर्त्तुरर्थेनं प्रत्यबोधयत्" इति । अत्र भुवःशब्दोऽपि जगद्वाची । "स्वर्गतस्य क्रिया कार्या पुत्रैः परमभक्तितः" इति । अत्र स्वःशब्दः परलोकवाची ॥ **दरं** मनागर्थे । यथा—"दरादराभ्यां दरकम्पिता" इति ॥ "दरहसितलीलाञ्छितमुखः" । "तनुस्पर्शोदस्या दरमुकुलिते हन्त नयने" । दरमुकुलिते ईषन्मुकुलभावं प्राप्नुत इत्यर्थः । "**दराव्ययं** मनागर्थे" इति मेदिनी ॥ १ ॥ **आम् आङ् अम्** इति त्रयं यथा—"आं कुर्मः सम्प्रति वयम्" "आ एवं किल तत्" आ एवं मन्यसे" इति । तथा आङ्शब्दः ईषदर्थे अभिव्याप्तौ सीमार्थे अभिविधौ क्रियायोगे च वर्त्तते । तत्र ईषदर्थे यथा । "आ पिङ्गलः" ईषत्पिङ्गलमित्यर्थः । अभिव्याप्तौ यथा "आसंसारं न दीप्यते" सीमार्थे यथा—आसमुद्रं राजदण्डः" । अभिविधौ यथा । "आजन्मशुद्धानाम्" जन्म आरभ्य निषेकादिसर्वसंस्कारसम्पन्नानामित्यर्थः । "आफलोदयकर्मणाम्" । आफलसिद्धेः प्रारब्धकर्मान्तगानामित्यर्थः । "आसमुद्रक्षितीशानाम्" । सार्वभौमानामित्यर्थः । "आनाकरथवर्त्मनाम्" । इन्द्रसहचारिणामित्यर्थः । अत्र सर्वत्र आङोऽभिविध्यर्थत्वं द्रष्टव्यम् । क्रियायोगे यथा—"आहरति । आक्रमत" इत्यादि । "आङ् सीमायामभिव्याप्तौ क्रियायोगेषदर्थयोः" इति मेदिनी ॥ "आ स्मरणेऽपाकरणे कोपसन्तापयोरपि" इति कोषान्तरम् ॥ **नवरम्** इत्येकं केवलार्थकं निश्चितार्थम् । **अनपयाति** इत्येकं प्रातरर्थे प्रातःकालार्थे । **क्षणंक्षणम्** इत्येकं **क्षणक्षणम्** इति च क्षणमात्रे दशपलपरिमिते काले निमेषक्रियाचतुर्थभागे काले च । स विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणंक्षणम्" "क्षणंक्षणं साधु समेधमानः" । क्षणंक्षणमित्यत्र प्रतिक्षणमित्यर्थः ॥ २ ॥ **स्वस्ति** इत्येकं क्षेमे निरुपद्रवे, पुण्ये चात् मङ्गले आशंसायां च । क्वचित् "**स्वस्तिना**" इति पाठः । क्षेमे यथा—"स्वस्ति

उताहो यदिवा यद्वा किं वा नेति समा इमे । किन्त्वर्थेऽपितु यद्यर्थे सचेत्प्राक्त्वादिवाचकम् ४॥
अस्त्याह कालसामान्ये तिङन्तप्रतिरूपकम् । सज्जं सहार्थे नेत्याह निषेधे यदि शेषगीः ॥५॥
विभाषाऽन्यतरस्यां वा विकल्पार्थाः प्रकीर्त्तिताः । ते इति स्यात्त्वयेत्यर्थे मयेत्यर्थे च मे इति ॥

इत्यव्ययवर्गः ॥ ४ ॥

---

प्रजाभ्यः सततं स्वास्ति राज्ञे च मन्त्रिणे " इति । पुण्ये यथा—" स्वस्तिमान् स्वर्गमश्नुते" । मङ्गले यथा—" स्वस्ति श्रीभोजराजस्त्रिभुवनविजयी धार्मिकः सत्यवादी "। आशंसा अप्राप्तस्य प्राप्तीच्छा आशीर्वादो वा । तत्र यथा । " स्वस्ति ते भूयान्महीपते " इति । " स्वस्ति स्यान्मङ्गले पुण्येऽप्याशंसायामपि क्वचित् " इति मेदिनी ॥ अट्ट इत्येकम् उच्चैरर्थे अत्युच्चतरे । यथा—" स्फुटमट्टहासमिव सौधपङ्क्तयः "। **वारंवारं वारं वारेण** इति निपातत्रयं शश्वदर्थे, नैरन्तर्यार्थे चात् पुनः पुनरित्यर्थे च । शश्वदर्थे यथा—" वारंवारं शशिन्यपगते"। " वारं दत्त्वा दिवं ययौ " । "वारेणासौ जगति विलसत्कीर्तिपीयूषसिन्धुः " इति ॥ ३ ॥ **उताहो यदिवा यद्वा किं वा न** इति षडिमे निपाताः विकल्पार्थे । तेषां क्रमेणोदाहरणानि । उताहोशब्दस्य यथा—"उताहो ब्रह्म चोच्यते""उताहो घटादिवत् स्वत उत्पद्यन्ताम्"इति । तथा **उत**शब्दोऽपि विकल्पे । यथा—"स्वविकल्पसम्भूता नरकाः उत स्वभावसम्भूताः"। "एको धर्मः सत्त्वस्थितये यदुत चत्वार आहाराः"।"एतद्धि भिक्षवः परमं सत्यं यदुताऽमोघधर्मो निर्वाणः"। "यदिवाशब्दो यथा—"भये वा यदिवा हर्षे सम्प्राप्ते यो विमर्शयेत् " । "स गन्ता संस्तवान् न गतीः प्राप्नोति यदिवा न करोति " । " यदि लक्ष्यं यादिवा लक्षणम् " । " पिता वा यदिवा भ्राता पुत्रो वा यदिवा सुहृत् " । "सन्धाय युवराजेन यदिवा मुख्यमन्त्रिणा " इति ॥ यद्वाशब्दो यथा—" यद्वा गङ्गायां घोष इतिवत् " ।"यद्वा समाहारद्वन्द्वः " । " यद्वा मीयतेऽनेनेति मानम् " इति । किंशब्दो यथा— "बिभर्ति किं परिम्लानरक्तोत्पलवनाश्रियम्" । "तत्प्रभावोपमादाय किं स्वसत्यं वदाम्यहम्" । "गर्भस्थितमपत्यं यत् किंरूपं तद्भविष्यति" । "किमपि काम्यगिरा परपुष्टया" । "किमिव न शक्तिपरं ससाध्वसानाम्" । "किमपि रसेन रसान्तरं भवन्ति" । "किं वितर्के परिप्रश्ने क्षेपनिन्दाप्रकारयोः" इति विश्वः । वाशब्दो यथा—"जयो भवति पराजयो वा" । "शिवं वा यदि वा विष्णुम्"। "प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम्"। "एकं हन्यान्न वा हन्यात्" । "दिवा वा यदि वा रात्रौ" इति । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः । नशब्दो यथा । "न च सर्वमस्मि न वा नास्ति पुनः" । " कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः" ॥ **अपितु**शब्दः किन्त्वर्थे किञ्चशब्दार्थे । यथा—"अपितु धर्मा एव शून्याः" । "अपितु धर्मा एवानिमित्ताः" । "तत् किं मन्यसे काश्यप ! अपितु स पुरुषः" । **सचेत्**शब्दो यद्यर्थे पक्षान्तरार्थे । यथा—"सचेत्ते कल्पजानीयो यथा जानाति नायकः" । "सचेत् कुलपुत्र ! निर्वाणादप्यधिरूढो नान्यो धर्मोऽभविष्यत्" । अत्र सचेत्शब्दः चेत्यादिशब्दवत् पक्षान्तरार्थद्योतकः ॥ **प्राक्** इति अव्ययमादिवाचकम् । यथा—'धर्मः प्रागेव चिन्त्यः" । " प्रपेदिरे प्राक्तनजन्मविद्याः" इति । "प्राक् पूर्वस्मिन्नवान्तरे । अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि" इति मेदिनी ॥ ४ ॥ कालसामान्ये कालभूते सादृश्यप्रयोजकधर्मे च **अस्ति आह** इति द्वौ निपातौ । तौ चात्र तिङन्तप्रतिरूपकं क्रियापदस्वरूपं भजतः। काले यथा—"अस्ति नास्ति न जानाति" । "अस्ति न स्तुतिवचोऽनृतं तव"। आहानिपातः सामान्ये भवति । यथा—"अथाह वर्णी विदितो महेश्वरः" इति । सहार्थे सहशब्दस्यार्थे **सज्जम्** इति निपातः। यथा—"ओ सृष्टा यैवाज्ञा नरपतिना सज्जम् एव कृत्वा तत्र सकुशलं राजानमुपेत्य इदमावहः" इति । क्वचित् "**सजुः**" "**सजूः**" इति । "सजुःकृत्य रतिं वसेत्" इति भट्टिः॥ निषेधे निवृत्तौ प्रतिषेधे वा **न** इति । यथा—"न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य" । "न खलु दूरगतोऽप्यतिवर्त्तते" । "न महता महताः क्वचनारयः" इत्यादि ॥ **यदि** इति निपातः शेषगीः अवशेषवाक्यं पक्षान्तरं च भवति । यथा—"यदि सन्धित्सुरसौ सहामुना" । "यदि सन्धत्स्व पुरा न नश्यति" । "रेवां यदि प्रेक्षितुमस्ति कामः" । "लज्जा तिरश्चां यदि चेतसि स्यात्" । "मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः" इत्यादि ॥ ५ ॥ **विभाषा अन्यतरस्याम् वा** इति त्रयो विकल्पार्थाः। तेषां क्रमेणोदाहरणानि । यथा—"विभाषा

लिङ्गादिसङ्ग्रहेऽनुक्तममरेणाभिदध्महे। स्त्रियामाजिर्दरज्जातिः पूरुभा द्वाः समाः शरत्।
सिकताद्या बहुत्वेऽपि विंशत्याद्येकवागपि ॥ १ ॥
पुंस्त्वे हाहा हूहूर्ग्रन्थिः पाणिः कलिर्दृतिर्मौलिः। अञ्जलिरङ्घ्रिः कुक्षिर्लावकलोकोत्तरासङ्गाः॥
अवटव्रातसङ्केतपोतगर्तगरुच्छदाः। श्लेष्मोष्मपापयक्ष्माश्मात्मानो वातायनः स्तनः॥ ३ ॥

समीपे" एवंरूपो नियमो वा स्यादित्यर्थः। "युष्मदस्मदोरन्यतरस्यां खञ्च" युवयोर्युष्माकं वा अयं युष्मदीयः अस्मदीय इत्यर्थः। "समर्थानां प्रथमाद्वा" समर्थानां मध्ये सूत्रे प्रथमोपात्तात्प्रत्ययो वेदितव्यः। स च वेत्यर्थः। एषु च सर्वेषु पाणिनीयसूत्रेषु विभाषा अन्यतरस्यां वेति त्रयो निपाताः विकल्पार्थवाचका एव स्युः। ते इति निपातः त्वया इत्यर्थे। मे इति निपातो मया इत्यर्थे च स्यात्। क्रमेणोदाहरणानि। यथा--"विचित्रं ते कृतं तात सतां वर्त्मानि वर्तिना"। "अर्चितास्ते महर्षयः"। अत्र ते इति त्वयेत्यर्थः। "विलङ्घ्य वाणी न कदापि मे श्रुता"। "विदितं तप्यमानं च तेन मे भुवनत्रयम्"। अत्र मे इति मया इत्यर्थः॥ ६॥

इति अव्ययवर्गः ॥ ४ ॥

अथ लिङ्गादिसङ्ग्रहवर्गमाह॥ **लिङ्गेत्यादिना**॥अत्र स्त्रियामित्ययमधिकारः शरच्छब्दपर्यन्तं ज्ञेयः। आज्यादिशरत्पर्यन्तानां यदभिधानं तत् स्त्रियां स्यात्। यथा--**आजिः** रणभूमिः। "अथाजिः स्त्री समभूमौ च संग्रामे" इति मेदिनी। "समे क्ष्मांशे रणेऽप्याजिः" इत्यमरः॥ **दरत्** प्रपातः। "दरत् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि" इति मेदिनी। दरत् म्लेच्छजातिर्वा॥ **जातिः** जन्म। "जातिः स्त्री गोत्रजन्मनोः" इति मेदिनी॥ **पूः** पुरी। क्वचित् पूः पुरौ इति रेफान्तः पर्शब्दः। "पूः स्त्री पुरीनगर्यौ वा" इत्यमरात्॥ **उरुः** महती। "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्। वड्रोरुविपुलम्" इत्यमरः॥ **भाः** दीप्तिः। "भाः प्रभावे मयूखे स्त्री" इति मेदिनी॥ **द्वाः** गृहादिनिर्गमनस्थानम्। "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः॥ **समाः** वत्सरः। "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः। "समा संवत्सरे स्त्रियाम्" इति मेदिनी॥ **शरत्** संवत्सरः आश्विनकार्त्तिकमासात्मकः ऋतुर्वा। "शरत् स्त्री वत्सरेऽप्यृतौ" इति मेदिनी॥ **सिकताः** वालुकाः। "सिकताः स्युर्वालुकाऽपि" इत्यमरः। "सिकता स्त्री सिकतिले वालुकायां तु भूमनि" इति मेदिनी। आदिपदात् आपः, जलानि, लाजाः भर्जितव्रीहयः, पुँल्लिङ्गत्वमप्यत्र, अक्षताः क्षतरहिताः, टाबन्तो दाराशब्दोऽपि। "क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्। क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः" इति हेमचन्द्रात्। "लाजः स्यादार्द्रतण्डुले। नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षताः" इति मेदिनी। "अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते। यवेऽपि क्वचित्" इति मेदिनी॥ **विंशतिः** द्विदशकसङ्ख्या। आदिपदात् एकविंशतिः द्वाविंशतिः त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टिः सप्ततिः अशीतिः नवतिश्च एकवागपि स्त्रीलिङ्गैकवचनं भवेदित्यर्थः॥ १॥ इति स्त्रीलिङ्गसङ्ग्रहः॥ अथ पुँल्लिङ्गसङ्ग्रहमाह॥ पुंस्त्वे पुँल्लिङ्गे स्यादित्यधिकारः। **हाहाः** गन्धर्वभेदः देवानां गायकः॥ **हूहूः**गन्धर्वविशेष एव। "हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्" इत्यमरः। "हाहाः सान्तोऽपि गन्धर्वो हाहासि प्रोक्तः" इति रत्नकोषः। अत्र "हहाः" इत्यादि ह्रस्वः "हुहुः" इत्युभयह्रस्वश्च दृश्यते। "गीतमाधुर्यसम्पन्नौ विख्यातौ च हहाहुहू" इति व्यासोक्तेः॥ **ग्रन्थिः** वंशादिसन्धौ ख्यातः कौटिल्यः। "ग्रन्थग्रन्थिरिह क्वचित्" इति नैषधम्॥ **पाणिः** करः। "पञ्चशाखः शयः पाणिः" इत्यमरः। ॥**कलिः**र्विभीतकवृक्षः कलहश्च। "कलिः स्त्री कलिकायां ना सराजिकलहे युगे" इति मेदिनी॥ **दृतिः** चर्मनिर्मितोदकपात्रं चर्मपुटको वा। "दृतिश्चर्मपुटे ना" इति मेदिनी॥ **मौलिः** चूडा किरीटो वा। "मौलिः किरीटे धम्मिले चूडायामनपुंसकम्। नाऽशोकद्रौ स्त्रियां भूमौ" इति मेदिनी॥ **अञ्जलिः** संयुतकरपुटः। "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी॥ **अङ्घ्रिः** चरणम्॥ **कुक्षिः** उदरम्॥ **लावकः** पक्षिभेदः। क्वचित् "मारकः" इति पाठः॥**लोकोत्तरः** अत्युत्तमः॥ **असङ्गः** सङ्गरहितः॥ २॥ **अवटः** गर्त्तः कूपो वा। क्वचित् "यवकः" इति पाठः। क्वचित्तु "स्यान्मौनः" इति पाठः॥ **व्रातः** समूहः। क्वचित् व्रात इति पाठः॥ **सङ्केतः** मनोगतभावव्यञ्जनाय कृतः हस्तादिचालनरूपो व्यापारः॥

फेणाभिजनकलापनिकाया हारोच्चारोपलकल्लोलाः ।
फालचषालकीलनलतण्डुलशैवलखलविभवप्रसवाश्च ॥ ४ ॥
आनापजननाडीभ्यो युगमङ्गं पदं व्रणम् । अनक्षे दुन्दुभिरथ बहुत्वेऽप्यसवो ग्रहाः ।
सक्तवो वल्कजा लाजा दाराः प्राणा दशा इति ॥ ५ ॥

पोतः बालकः, नौकारूपं यानं वा । "यानपात्रे शिशौ पोतः" इत्यमरः । "पोतः शिशौ वहित्रे च गृहस्थाने च वाससि " इति मेदिनी ॥ गर्त्तः भूमिच्छिद्रः, रोगभेदो वा ॥ गरुत् खगानां नभोगतिहेतुः पक्षः ॥ छदः पत्रम्, पक्षिणां पक्षो वा । " छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः " इति मेदिनी ॥ श्लेष्मा कफः ॥ उष्मा निदाघः, ग्रीष्मऋतुश्च । " ऊष्मा " अप्यत्र ॥ पाप्मा ॥ दुरदृष्टः, दुराचारश्च ॥ यक्ष्मा रोगभेदः ॥ अश्मा पाषाणः ॥ आत्मा स्वरूपः, देहः, चित्तं च । " आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि " इति मेदिनी ॥ वातायनः गवाक्षः, अश्वश्च ॥ स्तनः स्त्रीणामङ्गभेदः ॥ ३ ॥ फेणः दुग्धजलादेरुपर्युपरिस्थो बुद्बुदाकारः पदार्थः हिमश्च ।"फेनः" इति दन्त्यनकारयुक्तोऽप्यत्र ॥ अभिजनः कुलं जन्मभूमिश्च । "अभिजनः कुले ख्यातो जन्मभूम्यां कुलध्वजे" इति विश्वः ॥ कलापः समूहः, मयूरपिच्छो वा । "कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः" इति मेदिनी ॥ निकायः समानधर्मप्राणिसमूहः, निवासश्च । "निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ" इति मेदिनी ॥ आहारः द्रव्यमात्रस्य गलाधःकरणरूपं भोजनम् । "आहारः स्यादाहरणे भोजने च पुमानयम्" इति मेदिनी ॥ उच्चारः उच्चारणं विष्ठा च । "उच्चारावस्करौ शमलं शकृत्" इत्यमरः ॥ उपलः प्रस्तरः । "उपलः प्रस्तरे रत्ने शर्करायां तु योषिति" इति मेदिनी ॥ कल्लोलः महातरङ्गः । "कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि" इति मेदिनी ॥ फालः बलदेवः, महादेवश्च, जम्बीरबीजादिर्वा । "फालः पुंसि महादेवे कालिन्दीभेदनेऽपि च" इति मेदिनी । "निरीशं कुटकं फालः कृषको लाङ्गलं हलम् " इत्यमरः ॥ चषालः यज्ञियपशुबन्धनार्थं यूपमध्ये देयः वलयाकारः काष्ठमयो लौहमयो वा पदार्थः ॥ कीलः शङ्कुः कफोणिर्वा । "कीलः कफोणौ निर्घाते शङ्कौ ज्वाले तु कीलवत् " इति विश्वः॥नलः तृणभेदः नृपभेदश्च । "नलः पोटगले राशि पितृदेवे कपीश्वरे" इति मेदिनी॥तण्डुलः धान्यादिसारः निस्तुषः धान्यादिः, विडङ्गो वा । "तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान् " इति मेदिनी॥ शैवलः पद्मकाष्ठम् , जलजातः पदार्थविशेषश्च । "शैवलः पद्मकाष्ठे स्यात् शैवालेऽपि पुमानयम् " इति मेदिनी ॥ खलः क्रूरः, नीचः, अधमश्च । " खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु"इति मेदिनी॥विभवः ऐश्वर्यं धनं मोक्षश्च षष्टिसंवत्सरमध्ये वत्सरविशेषश्च । "हृष्टाः पुष्टा जनाः सर्वे विभवेऽब्दे वरानने" इति॥प्रसवः गर्भमोचनम् उत्पत्तिश्च ।"अदश्चराचरं विश्वं प्रसवस्तस्य गीयते" इति कुमारः । "प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च"इति मेदिनी॥ क्वचित्तु "प्रभवः" इति पाठः॥४॥आनश्च अपश्च जनश्च नाडी चेति द्वन्द्वः, तेभ्यः आनापजननाडीशब्देभ्यः परे युगम् अङ्गं पदं व्रणम् इति इमे शब्दाः पुँल्लिङ्गे स्युरित्यर्थः॥यथा—आनयुगः नासिकापुटः। "आन"इति ख्यातस्य अन्तःस्थितस्य प्राणवायोर्नासिकयोच्छ्वासः॥अपाङ्गः नेत्रप्रान्तः अङ्गहीनश्च, तिलको वा । "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति मेदिनी ॥ जनपदः देशः "भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति विश्वमेदिन्यौ ॥ नाडीव्रणः यो व्रणः सदा गलति स तु नाडीव्रणः देहस्थः शिरायुक्तो व्रणविशेषः । "नाडीव्रणः पुमान्" इत्यमरः । "नालीव्रणः" इत्यपि पाठः ॥ अनक्षे चक्रशून्ये चक्षुरादीन्द्रियशून्ये च दुन्दुभिः । यथा "प्रणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि" इति । "दुन्दुभिः पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षबिन्दुत्रिकद्वये" इति मेदिनी॥अथ पुँल्लिङ्गैकवचनानन्तरं नियतपुँल्लिङ्गबहुवचनान्तशब्दानाह—बहुत्वेऽपि इत्यादिना ॥ असवः वायुभेदः । "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः ॥ ग्रहाः सूर्यादयो नवग्रहाः ।"ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः" इति विश्वः ॥ सक्तवः भृष्टयवादिचूर्णाः । "मेषादौ सक्तवो देयाः " इति स्मृतिः ॥ वल्कजाः वृक्षत्वक्कृताः वस्त्रविशेषाः ॥ लाजाः भृष्टधान्यानि । " लाजः स्यादार्द्रतण्डुले । नपुंसकं तूषिरे च स्त्रियां पुंभूम्नि वाऽक्षते " इति मेदिनी ॥ दाराः पत्नी ॥

क्लीबे कलत्रविषबीजकुटुम्बरत्नतल्पोक्थकुङ्कुमप्रवीणतृणाक्षराणि ।
शृङ्गाटपीठगृहभेषजपृष्ठकिण्वदैवाण्डभाण्डचिबुकोडुपसाहसानि ॥ ६ ॥
यकृत्कुहकसिध्मानि तीरं कशिपु जानु च । धामार्द्धसारमित्राण्यङ्गदलन्यायबन्धुषु ॥ ७ ॥
पुन्नपुंसकयोर्दारुजीवातुस्थाणुसीधवः । स्याद्वास्तु हिङ्गु तितउ सानु कम्बु कमण्डलु ॥ ८ ॥

प्राणाः पञ्चवृत्तयो देहस्थवायुभेदाः । "प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले । पुँल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चात्मसु" इति मेदिनी ॥ दशाः अवस्थाः, दीपवर्त्ती च । "दशाऽवस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति" इति मेदिनी ॥ "दशा वर्त्तावस्थायां वस्त्रान्ते स्युर्दशा अपि" इति ॥ ५ ॥ इति पुँल्लिङ्गसङ्ग्रहः ॥ अथ नपुंसकलिङ्गसङ्ग्रहमाह ॥ क्लीबे इत्यादिना ॥ कलत्रं नितम्बम्, भार्या च । "कलत्रं श्रोणिभार्ययोः" इति अमरमेदिन्यौ । "दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः" इति रभसः ॥ विषं जलं पद्मकेशरं मृणालं गन्धरसः वत्सनाभश्च । "विषं जलेऽतिविषायाम्" इति मेदिनी ॥ बीजं धान्यादेः फलादि ॥ " बीजमङ्कुरकारणे । हेतुतत्त्वाधानशुक्रे" इति मेदिनी ॥ कुटुम्बं पोष्यवर्गः ॥ रत्नं माणिक्यादिप्रस्तरः स्वस्वजातिषु श्रेष्ठं हीरकं च । "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी ॥ तल्पं शय्या अट्टालिका दाराश्च । "तल्पमट्टे कलत्रे च शयनीये च न द्वयोः" इति मेदिनी ॥ उक्थं नवविधात्मकसाम्नोऽवयवभेदः ॥ कुङ्कुमं काश्मीरदेशजं स्वनामाख्यातं गन्धद्रव्यम् । "सङ्कोचे मीनभेदे च बन्धे क्लीबं तु कुङ्कुमम्" इति विश्वमेदिन्यौ॥ प्रवीणं निपुणम् । "प्रवीणो निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः ॥ तृणं नडादि खटश्च । "तृणमर्जुनम्" इत्यमरः ॥ अक्षरं नाशशून्यं मोक्षं ब्रह्म च । "अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः । गगने धर्मतपसोरम्बरे मूलकारणे" इति हैमः ॥ शृङ्गाटं फलकण्टको जलवृक्षः तत्फलं च ॥ पीठं व्रतोक्तमासनम् आसनभेदश्च । "पीठमासनम्" इत्यमरः ॥ गृहम् इष्टकामृत्तिकादिरचितं गेहं कलत्रं च । " न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मृतिः । "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी ॥ भेषजम् औषधम् । "भेषजौषधभैषज्यान्यगदो जायुरित्यपि" इत्यमरः ॥ " पृष्ठं तनोः पश्चाद्भागः वेदप्रसिद्धः स्तोत्रभेदश्च । "पृष्ठं तु चरमं तनोः" इत्यमरः । "पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे" इति मेदिनी ॥ किण्वं सुराबीजं द्रव्यम् । "किण्वं बीजे च सीधुनः । पापे क्लीबं समाख्यातं षण्डेऽन्यवदविक्रमे" इति मेदिनी ॥ दैवं भाग्यं फलोन्मुखं शुभाशुभकर्म च । "प्राग्जन्मनि कृतं कर्म शुभं वा यदि वाऽशुभम् । दैवशब्देन निर्दिष्टमिह जन्मनि तद् बुधैः" इति । " दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः । "अङ्गुल्यग्रे तीर्थं दैवम्" इत्यमरः ॥ अण्डं पुंसोऽण्डावयवः पक्षिडिम्बः वीर्यं च । "अण्डं मुष्के च पेश्यां स्यात्" इति मेदिनी ॥ भाण्डं पात्रं तैलाद्याधारः गृहभेदः वणिजां मूलधनं च । "भांण्डं पात्रे वणिङ्मूलधने मूषाश्वभूषयोः"इति मेदिनी ॥ चिबुकम् अधराधोभागः । "अधस्तात्चिबुकम्" इत्यमरः । उडुपं प्लवः क्षुद्रनौका च । "उडुपं तु प्लवेऽस्त्रियाम् । चन्द्रे पुंसि" इति मेदिनी॥साहसं बलेन कृतं चौर्यस्त्रीसङ्ग्रहादिदुष्टकर्म । "सहसा क्रियते यत्तु तत्साहसमिति स्मृतम्"इति । "साहसं तु बलात्कारकृतकार्ये दमेऽपि च" इति मेदिनी ॥ "साहसं तु दमो दण्डः" इत्यमरः॥६॥यकृत् कुक्षौ दक्षिणभागस्थं मांसपिण्डं तद्वृद्धरोगश्च । "कालखण्डयकृती"इत्यमरः ॥कुहकं कृतपापप्रतिच्छादनलक्षणा माया, इन्द्रजालमाया वा ॥ सिध्म किलासरोगः तद्रोगवांश्च । "किलासिसिध्मे"इत्यमरः॥ तीरं नद्यादेः कूलम्, सायकं च । "कूलं रोधश्च तीरं च" इत्यमरः । "तीरं तु रोधसि"इति मेदिनी ॥ कशिपु अन्नम्, वस्त्रं च । "कशिपु त्वन्नमाच्छादनं द्वयम्"इत्यमरः॥जानु ऊरुजङ्घयोर्मध्यभागः । "जानूरुपर्वाष्ठीवदस्त्रियाम्"इत्यमरः । अङ्गे देहे धाम॥दले समांशे खण्डे च अर्द्धशब्दः ॥ न्याये गौतमोक्ते शास्त्रभेदे च सारशब्दः ॥ बन्धौ बान्धवे ज्ञातिजने च मित्रशब्दः ॥७॥ इति नपुंसकलिङ्गसंग्रहः ॥ अथ पुन्नपुंसकलिङ्गसंग्रमाह ॥ पुमित्यादिना ॥ दारुः काष्ठं देवदारुः पित्तलं च ॥ जीवातुः अन्नं जीवितं जीवनौषधं च । "जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे" इति मेदिनी ॥ "जीवातुर्जीवनौषधम्" इत्यमरः ॥ स्थाणुः शिवः, शाखाशून्यवृक्षश्च । "स्थाणुः कीले

**गोमयकुमुदबिम्बशङ्खाश्रमशूलसुवर्णतोरणाः। नूपुरशिखरतूर्यनिर्यासगृहाङ्कुशबर्हिपल्लवाः व्रतदिनमासवर्षदलवल्कलकोटरषण्डचामराः । चन्दनपद्मधर्मकोलाहलकिसलयदेहदोहदाः ॥**

हरे पुमान्। अग्नौ ध्रुवे" इति मेदिनी ॥ **सीधुः** मद्यम्, "इक्षोः पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्तो मद्यभेदश्च ॥ **वास्तु**र्वासयोग्यभूमिः स्वनामाख्यातः शाकश्च । "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः ॥ **हिंगुः** रामठदेशभवस्य वृक्षस्य निर्यासः। "सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम्" इत्यमरः ॥ **तितउः** "चालन" इति प्रसिद्धः । "चालनी तितउः पुमान्" इत्यमरः ॥ **सानुः** पर्वतस्थसमभूमिदेशप्रस्थः वनं वातसमूहश्च । "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । "सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे" इति मेदिनी ॥ **कम्बुः** शङ्खम् , गजश्च । "कम्बुः शङ्खेऽस्त्रियां पुंसि शम्बूके वलये गजे" इति मेदिनी ॥ **कमण्डलुः** संन्यासिनां जलपात्रभेदः । करङ्कः प्लक्षवृक्षश्च । "कमण्डलुः स्यात् करके न स्त्री ना प्लक्षपादपे" इति मेदिनी ॥ ८ ॥ **गोमयं** गोपुरीषम् । " गोविट् गोमयमस्त्रियाम्" इत्यमरः ॥ **कुमुदः** कैरवं कह्लारं श्वेतोत्पलं वानरभेदश्च।"कुमुदं कैरवे रक्तपद्मेऽस्त्री कुम्भिकौषधौ । गाम्भार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे" इति मेदिनी ॥ **बिम्बं** दर्पणादौ भासमानप्रतिबिम्बाश्रयं सूर्यादिमण्डलं च। "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः । "बिम्बस्तु प्रतिबिम्बे स्यात्मण्डले पुन्नपुंसकम् । बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्" इति मेदिनी ॥ **शङ्खः** स्वनामाख्यातः समुद्रजातः पदार्थः ललाटास्थि निधिभेदश्च । " शङ्खो निधौ ललाटास्थ्नि कम्बौ" इत्यमरः । " शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे" इति मेदिनी ॥ **आश्रमः** ब्रह्मचर्यादिकः शास्त्रोक्तो धर्मभेदः मुनीनां वासस्थानं च "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने । अस्त्रियाम्" इति मेदिनी॥**शूलः** रोगभेदः व्यवायः सुतीक्ष्णम् अयः फालः त्रिशूलश्च।"शूलोऽस्त्री रोग आयुधे" इति मेदिनी॥ **सुवर्णः** स्वनामाख्यातो धातुभेदः हरिचन्दनं स्वर्णगैरिकः कर्षमितं काञ्चनं च।"ककर्ष सुवर्णस्य सुवर्णसंज्ञम्"इति । **सुवर्णो** ना स्वर्णकर्षे सुवर्णाख्यमखान्तरे । स्त्री कृष्णागुरुणि क्लीबं काञ्चने हरिचन्दने" इति मेदिनी ॥ **तोरणः** बहिर्द्वारं स्तम्भोपरिस्थं सिंहाकारकाष्ठं द्वारबाह्यभागश्च।"तोरणोऽस्त्री बहिर्द्वारम्"इत्यमरः। **नूपुरः** पादाङ्गदः । "पादाङ्गदं तुलाकोटिर्मञ्जीरे नूपुरोऽस्त्रियाम्"इत्यमरः॥ **शिखरः** वृक्षाग्रः पर्वताग्रः रत्नमात्रं च । "शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोः । पक्वदाडिमबीजाभमाणिक्यशकलाग्रयोः" इति मेदिनी ॥ **तूर्य्यः** वाद्यभेदः ॥ **निर्यासः** वृक्षात् तरलतया निर्गतः कालेन कठिनतां प्राप्तो रसः वृक्षरसः क्वाथश्चः। **गृहम्** इष्टकामृत्तिकादिरचितं गेहं कलत्रं च । "न गृहं गृहमित्याहुर्गृहिणीगृहमुच्यते" इति स्मृतिः ॥ पुँल्लिङ्गस्तु बहुवचनान्त एव।"तत्रागारं धनपतिगृहान्"इति मेघदूतम्। कलत्रेऽपि दाराशब्दवद्बहुवचनम्। "गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि" इति मेदिनी ॥ **अङ्कुशः** हस्तिपालनोपयोगी वक्राग्रो लौहमयास्त्रभेदः॥**बर्हिः** कुशः । "बर्हिर्देवसदनम्" इति श्रुतिः॥**पल्लवः** नवपत्रविस्तारः,शाखाविस्तारश्च।" पल्लवोऽस्त्री किसलयं विस्तारो विटपेऽस्त्रियाम्" इत्यमरः।"पुंसि क्लीबे च पल्लवः"इति तु व्याडिः॥९॥**व्रतः** पुण्यसाधनार्थम् उपवासादिनियमभेदः भक्षणभेदश्च "नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्" इत्यमरः ॥ **दिनं** सूर्यकिरणोपलक्षितं षष्टिदण्डात्मकं तद्विशिष्टं वा चतुर्यामात्मकः कालश्च । "घस्रो दिनाहनी वा तु" इत्यमरः ॥ **मासः** त्रिंशद्दिनात्मकः कालः । "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ" इत्यमरः ॥ **वर्षः** द्वादशमासात्मकः कालः जम्बुद्वीपः जम्बुद्वीपांशभेदश्च । "वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्दवृष्टिषु" इति मेदिनी ॥ "स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्" इत्यमरः॥**दलः** शस्त्रच्छेदः, अपकृष्टद्रव्यम् , पत्रं तमालपत्रं वा । "अथ पिचौ न स्त्री दलमुत्सेधखण्डयोः । शस्त्रच्छेदेऽप्यपद्रव्ये पत्रे" इति मेदिनी ॥ **वल्कलः** वृक्षत्वक् । "वल्कं वल्कलमस्त्रियाम्" इत्यमरः ॥ **कोटरः** वृक्षस्थगह्वरम्।"निष्कुहः कोटरं वा ना"इत्यमरः॥**षण्डः** वृषः,नपुंसकम्,कमलादिसमूहश्च।"षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान्"इति मेदिनी॥"शण्डः"इत्यपि पाठः॥**चामरः** चमरपुच्छकृतव्यजनम्।"चक्रगण्डौ च पुंसि स्याच्चामरं चमराऽपि च । दण्डे च वालव्यजने " इति मेदिनी ॥ **चन्दनः** मलयजातो गन्धसारः, रक्तचन्दनम्, वानरभेदः, ओषधिभेदश्च । " चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् " इति मेदिनी ॥

कुलिशध्वजकार्षापणपिनाकमुस्तान्धकारशृङ्गवलयाः ।
पटलप्रवालचषकोपवासकासारकटकसन्तानाः ॥ ११ ॥
आकाशकुञ्जकुतपौदनवारवाणप्रस्थावतंसनखमण्डपकच्छपुच्छाः ।
कान्तारकङ्कणतडागकिरीटराष्ट्रतीर्थव्रणस्तबकसङ्क्रमपीठकानि ॥ १२ ॥

पद्मः कमलं गजमुखादिस्थः बिन्दुसमुदायः कमलाकारेण सैन्यादेरभिनिवेशनरूपो व्यूहभेदः निधिभेदश्च । " पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे " इति मेदिनी ॥ धर्मः स्वभावः, " विहितक्रियया साध्यो धर्मः पुंसां गुणो मतः " इत्युक्तः कर्मजन्यः अदृष्टः, शास्त्रविहितकर्मानुष्ठानजन्यः भाविफलसाधनभूतः शुभादृष्टश्च । " धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे " इति मेदिनी ॥ कोलाहलः बहुविधो दूरगामी अव्यक्तशब्दः, बहुभिः कृतोऽस्पष्टशब्दश्च । "कोलाहलः कलकलः" इत्यमरः ॥ किसलयः किशलय इति तालुजशकारमध्यो वा पत्रादियुक्तशाखापर्वा पल्लवश्च । "पल्लवोऽस्त्री किसलयम्" इत्यमरः ॥ देहः स्थूलसूक्ष्मकार्यकारणरूपं शरीरम् । " कायो देहः क्लीबपुंसोः " इत्यमरः ॥ दोहदः गर्भः गर्भिण्याभिलाषः लालसा च । " अथ दोहदम् । इच्छाऽऽकाङ्क्षा स्पृहेहा " इत्यमरः ॥ १० ॥ कुलिशः वज्रः अस्थिसंहारवृक्षः मत्स्यभेदश्च । " ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः " इत्यमरः ॥ " यमे ना कुलिशो न स्त्री दम्भोलौ ना झषान्तरे " इति मेदिनी ॥ ध्वजः चतुष्कोणाकारः वंशदण्डोपरिस्थः वस्त्रखण्डः । खट्वाङ्गः मेढ्रश्च । "पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्" इत्यमरः । "ध्वजः स्याच्छौण्डिके पुमान् । न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः" इति मेदिनी ॥ कार्षापणः षोडश पणाः, पणश्च । "कार्षापणः कार्षिकः स्यात्" इत्यमरः । "कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च" इति मेदिनी ॥ पिनाकः शिवधनुः तच्छूलास्त्रं पांशुवर्षणं च । "पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः" इति मेदिनी ॥ मुस्तः मुस्तकः स्थावराविषभेदश्च । "कुरुविन्दो मेघनामा मुस्ता मुस्तकमास्त्रियाम्" इत्यमरः ॥ अन्धकारः तेजोऽभावः । "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः ॥ शृङ्गः पर्वतोपरिभागः प्राधान्यं कामोद्रेकः पश्वादेर्विषाणं च । "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कर्मशीर्षके" इति मेदिनी ॥ वलयः हस्तपादकटकादिः गोलश्च । "आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्" इति मेदिनी ॥ पटलः छदिः वृक्षः ग्रन्थभेदश्च ॥ "छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना" इत्यमरः । "अथ पटलं पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं वृन्दे पुनर्न ना" इति मेदिनी॥ प्रवालः नवपल्लवः रक्तवर्णमणिभेदः वीणादण्डश्च । " प्रवालमङ्कुरेऽप्यस्त्री" इत्यमरः । "प्रवालोऽस्त्री किसलयं वीणादण्डे च विद्रुमे " इति मेदिनी ॥ चषकः मद्यपानपात्रम् । "चषकोऽस्त्री पानपात्रम् " इत्यमरः । " चषकोऽस्त्री पानपात्रे मधुमद्यप्रभेदयोः " इति मेदिनी ॥ उपवासः अनाहारः । "तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवास इति ख्यातः" इति स्मृतिः । "औपवस्तं तूपवासः" इत्यमरः ॥ कासारः सरोवरं सपद्मः निष्पद्मो वा महाजलाशयश्च । " पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः " इत्यमरः ॥ कटकः मेखलाख्यपर्वतमध्यभागः बाहुभूषणवलयः हस्तिदन्तमण्डलं च । " आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् " इत्यमरः । " कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिनां दन्तमण्डले । सामुद्रलवणे राजधानीवलययोरपि " इति मेदिनी ॥ सन्तानं वंशः विस्तारः अपत्यं कल्पवृक्षश्च । " सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे " इति मेदिनी ॥ " वंशोऽन्ववायः सन्तानो वर्णाः स्युर्ब्राह्मणादयः " इत्यमरः ॥ ११ ॥ आकाशः गगनम् । "वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्यमरः ॥ कुञ्जः समन्ताल्लतादिभिराच्छादितो मध्यशून्यः पर्वतादेः स्थानभेदः हस्तिहनुश्च । "कुञ्जो दन्तेऽपि न स्त्रियाम्" इत्यमरः । "कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्" इति मेदिनी ॥ कुतपः पञ्चदशधा विभक्तदिनस्याष्टमांशः कालः । "अष्टमोऽह्नः कुतपोऽस्त्रियाम्" इत्यमरः।"कुतुपः" इति द्व्युकारशब्दोऽपि शब्दरत्नावल्यामागतः । "कुतुपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले । कुशे दिनस्याष्टमांशे ना सूर्ये" इति मेदिनी ॥ओदनः भक्तम् । "भिःसा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः"

**समरसरकरणविटपाङ्गारगैरिकदैवतकूटागाराः ।**
**प्रोथमुहूर्त्तदिवसफलकानि काशनिदाघमुषलतिलकानि ॥ १३ ॥**

इत्यमरः । "ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम्" इति मेदिनी ॥ **वारवाणः** कवचः । "कञ्चुको वारवाणोऽस्त्री" इत्यमरः ।"क्लीबे तु वारवाणम्" इति च॥प्रस्थः पर्वतस्य वासयोग्यभूमी मानभेदश्च । "प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि" इति मेदिनी॥**अवतंसः** कर्णपूरः शिरोभूषणभेदश्च । "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे" इत्यमरः। "अवतंसो न स्त्रियां स्यात् कर्णपूरे च शेखरे" इति मेदिनी ॥ **नखः** करजः । "पुनर्भवः कररुहो नखोऽस्त्री" इत्यमरः । "नखी स्त्रीक्लीबयोः शुक्तौ नखेर पुन्नपुंसकम्" इति मेदिनी ॥ **मण्डपः** जनविश्रामस्थानं देवादिगृहं च "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः ॥ **कच्छः** जलप्रायो देशः तटः पुन्नागद्रुमश्च । "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः" इत्यमरः । "अथ कच्छः स्यादनूपे तुन्नकद्रुमे । नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति" इति मेदिनी ॥ **पुच्छः** पश्चाद्भागः लाङ्गूलं च । "पुच्छोऽस्त्री लूमलाङ्गूले" इत्यमरः । "पुच्छः पश्चात्प्रदेशेऽपि लाङ्गूले पुच्छमस्त्रियाम्" इति मेदिनी ॥ **कान्तारं** कोविदारवृक्षः इक्षुभेदः उपद्रवः काननं दुर्गवर्त्म गर्त्त च । "महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्" इत्यमरः.॥ **कङ्कणं** करभूषणं भूषणमात्रं च । "कङ्कणं करभूषणम्" इत्यमरः ॥ "कङ्कणो ना प्रतिसरः" इति रत्नकोषः । "कङ्कणं करभूषायां सूत्रमण्डलयोरपि" इति मेदिनी ॥ **तडागं** जलाशयः । "प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तडागः स्यात्" इति । "पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः" इत्यमरः । क्वचित् "तटाकः" इत्यपि पाठः। "तडाकोऽस्त्री जलाधारविशेषे यन्त्रकूटके" इति मेदिनी ॥ **किरीटं** मुकुटः शिरोवेष्टनं च ।"अथ मुकुटं किरीटं पुन्नपुंसकम्" इत्यमरः।"मकुटम्" इत्यपि पाठः । **राष्ट्रं** जनपदः उपद्रवश्चः । "अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे" इत्यमरः । " राष्ट्रं स्यादुपवर्त्तने । उपद्रवे क्लीबपुंसोः" इति मेदिनी ॥ **तीर्थं** शास्त्रं यशः क्षेत्रम् उपायः स्त्रीरजः नद्यादेरवतरणं घट्टादिश्च । "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ" इत्यमरः । "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी॥ **व्रणं** क्षतम् ।"व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः॥**स्तबकं** गुच्छः।"स्याद्गुच्छकस्तु स्तबकः"इत्यमरः॥**सङ्क्रमं** जलबन्धनस्थानं रव्यादेः राश्यन्तरसञ्चारश्च।"अस्त्री तु सङ्क्रमो दुर्गसञ्चरः" इत्यमरः। "सङ्क्रमः क्रमणे पुंसि न स्त्री स्याद् दुर्गसञ्चरे" इति मेदिनी ॥ **पीठकम्** आसनभेदः व्रतिनामासनं च । "पीठः" इत्यपि पाठः।"पीठमासनम्" इत्यमरः।"विष्टरः पीठमस्त्रियाम्" इति त्रिकाण्डशेषः॥१२॥ **समरः** युद्धम् ।"अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः॥**सरकः** मद्यपानपात्रं मद्यपरिवेषणम् इक्षुजमद्यं तत्पात्रं च ।"सरकोऽप्यनुतर्पणम्"इत्यमरः।"सरकं वा नाऽनुतर्षो ना।"इति रत्नकोषः। "सरकः सीधु पानेक्षुसीधुनोर्मद्यभाजने" इत्यजयः । "सरकोऽस्त्री सीधुपाने सीधुपात्रेक्षुसीधुनोः" इति मेदिनी ॥ **रणः** युद्धं शब्दः गतिश्च । "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः । "रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम्" इति मेदिनी ॥ **विटपः** शाखा पल्लवविस्तारः स्तम्बः पल्लवश्च । "स्तम्बेऽपि विटपोऽस्त्रियाम्" इत्यमरः ॥ "विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे" इति मेदिनी ॥ **अङ्गारः** अर्धदग्धः अग्निसंक्रान्तः अग्निशून्यो वा काष्ठखण्डः मङ्गलग्रहः रक्तवर्णश्च । "अथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्" इत्यमरः । "अङ्गारमुल्मुके न स्त्री पुँल्लिङ्गस्तु महीसुते" इति मेदिनी ॥ **गैरिकः** पर्वतजात उपधातुभेदः स्वर्णं च । "स्वर्णेऽपि गैरिकम्" इत्यमरः । "गैरिकं धातुरुक्मयोः" इति मेदिनी ॥ **दैवतः** देवः देवतानां समूहश्च । "वृन्दारका दैवतानि पुंसि वा" इत्यमरः । **कूटागारः** मृषागारं चन्द्रशालिका क्रीडागृहं च ॥ **प्रोथम्** अश्वनासिका कटी शाठकं स्त्रीगर्भः भीषणं स्थितिश्च । "घोणा तु प्रोथमस्त्रियाम्" इत्यमरः । "प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु" इति मेदिनी ॥ **मुहूर्तः** द्वादशक्षणमितः कालः । "तास्तु त्रिंशत्क्षणस्ते तु मुहूर्त्तो द्वादशास्त्रियाम्" इत्यमरः । **दिवसं** दिनम् । "नाडी षष्टितमस्तत्र सावनो दिवसः स्मृतः । त्रिंशद्भागोऽर्कराशेस्तु दिवसः सौर उच्यते । चन्द्रस्य तिथ्यवच्छिन्नो भौमो भूपरिधेर्मतः" इति॥ **फलकः** चर्म वृक्षादीनां सस्यं

वल्मीकवृषणद्रोणगाण्डीवनिगडानि च । मुकुलादि च विज्ञेयं शिष्टसन्दर्भतोऽपरम् ॥ १४ ॥

अथ स्त्रीपुंसयोः केलिर्मणिर्योनिर्मसिर्मुनिः ।

मरीचिः शाल्मलिः स्वातिः श्रेणिर्मुष्टिस्तिथिः सृणिः ॥ १५ ॥

लाभः कार्यं दानं मुष्कं च ।"फलः" अप्यत्र ।"फलकोऽस्त्री फलं चर्म" इत्यमरः । "फलं जातिफले सस्ये हेतूत्थे व्युष्टिलाभयोः । त्रिफलायां च कक्कोले प्रियङ्गौ तु फली स्मृता" इति मेदिनी ॥ काशः रोगभेदः क्षुतः तृणभेदः तत्पुष्पं च । "काशकः" अप्यत्र । "काशमस्त्रियाम्" इत्यमरः । "काशस्तृणे स्यात्क्षवथौ" इति विश्वः॥ निदाघम् उष्णं घर्मः घर्मकालः घर्म्मजलं च । "घर्मो निदाघः स्वेदः स्यात्"इत्यमरः ।"निदाघो ग्रीष्मकाले स्यादुष्मस्वेदाम्बुनोरपि" इति मेदिनी ॥ मुषलम् अयोग्रं स्वनामाख्यातः धान्यादिखण्डनसाधनः पदार्थश्च । "मुसलम्" "मुशलम्" इति दान्त्यतालुजसशकारयुक्तौ पाठावपि । "अयोग्रं मुषलोऽस्त्री स्यात् " इत्यमरः ॥ "मुषलं स्यादयोग्रे च पुन्नपुंसकयोः" इति मेदिनी ॥ तिलकं स्वनामाख्यातः नासादिधार्यश्चन्दनादिविशेषकः क्लोम च ।"तिलकं क्लोम" इत्यमरः । "तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके" इति मेदिनी ॥ १३ ॥ वल्मीकं स्तूपम् । "वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् " इत्यमरः । " वल्मीको रोगभेदे च नाकौ च पुन्नपुंसकम् " इति मेदिनी । "वल्मीको वामलूरे स्यान्मुनिरोगविशेषयोः" इति विश्वः ॥ वृषणम् अण्डकोषः । " मुष्कोऽण्डकोषो वृषणः " इत्यमरः ॥ द्रोणः भारतप्रसिद्धः स्वनामाख्यातो योद्धृभेदः वृश्चिकः मेघभेदः वृक्षभेदः आढकचतुष्टयरूपपरिमाणश्च । " अस्त्रियामाढकद्रोणौ " इत्यमरः । " द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये । पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे । तथा काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते" इति मेदिनी ॥ गाण्डीवम् अर्ज्जुनचापः चापमात्रं च । " कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकौ" इत्यमरः । "गाण्डीवो गाण्डिवश्चास्त्री कार्मुकेऽर्जुनकार्मुके" इति मेदिनी ॥ निगडं शृङ्खला लोहमयो हस्तिपादबन्धनः अन्दुकश्च । "अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः ॥ मुकुलः ईषद्विकसितकलिका । " कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः ॥ अत्रादिपदात् मृणालपणामिषादि अन्यच्च शिष्टसन्दर्भतः शिष्टानां स्थिरबुद्धीनाम्, "न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपलः" इत्युक्तलक्षणवतां महेश्वरेन्द्रचन्द्रपाणिनिवररुचिप्रभृतीनां सन्दर्भतः काव्यादिरचनाविशेषतः, "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा । नानार्थकत्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्तलक्षणात् सन्दर्भविशेषाद्वा विज्ञेयं बोद्धव्यम् ॥ १४ ॥ इति पुन्नपुंसकलिङ्गसङ्ग्रहः ॥ अथ स्त्रीपुँलिङ्गसङ्ग्रहमाह—अथ इत्यादिना ॥ केलिः परिहासः क्रीडा पृथिवी च। "द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च" इत्यमरः ॥ मणिः मुक्तादिरत्नम् । "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च" इत्यमरः । "मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च । कण्ठदेशस्तनेऽजाया लिङ्गाग्रेऽलिञ्जरेऽपि च" इति मेदिनी ॥ योनिः मण्यादीनामुत्पत्तिस्थानमाकरः कारणं स्त्रीणामसाधारणचिह्नं च ।"भगो योनिर्द्वयोः" इत्यमरः । "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे"इति मेदिनी॥मसिः पत्रलेखनद्रवः कज्जलं नीलशेफालिकावृन्तं च । "मशिः" इति पाठोऽपि॥मुनिः स्थिरचित्तो वीतरागादिश्च । "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" इति गीतायाम् । "मुनीन्द्रः श्रीघनः शास्ता मुनिः" इत्यमरः । "मुनिः पुंसि वशिष्ठादौ वङ्कसेनतरौ जिने" इति मेदिनी ॥ मरीचिः किरणः । "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः । "मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्" इति मेदिनी ॥ शाल्मलिः स्वनामाख्यातो वृक्षः । "स्थिरायुः शाल्मलिर्द्वयोः" इत्यमरः । "शाल्मलिस्तरुभेदे स्याद् द्वीपभेदेऽपि च द्वयोः" इति मेदिनी ॥ स्वातिः अश्विन्यादिषु पञ्चदशं नक्षत्रम् ॥ श्रेणिः छिद्ररहिता पङ्क्तिः । "द्वयोः श्रेणिः सजातिभिः" इत्यमरः ।"श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ" इति मेदिनी ॥ मुष्टिः बद्धपाणिः पलपरिमाणं कुञ्च्यष्टभागः मोषणं च । "मुष्टिर्द्वयोः पले बद्धपाणौ त्सरौ" इति मेदिनी ॥ तिथिः पञ्चदशचन्द्रकलाक्रियारूपा प्रतिपदादिः ॥ सृणिः शत्रुः अङ्कुशास्त्रं च । अत्र तालुजशकारादिश्च ।

**ऊर्म्मिगर्भस्तिरशनिर्वै पार्ष्णीषुधिराशयः। वस्तिश्च किष्कुः कन्दुश्च रेणुतन्वीशबाहवः॥ १६ ॥**
**गण्डूषगर्जजागरभुजकीलज्वालवर्त्तकव्रीडाः । उत्कण्ठशटवराटकरभसाः स्त्रीत्वे तु टावन्ताः ॥**
**शल्को वृश्चिकः कीटः शारस्तूणो घटः कटः । शफरो वेतसश्चामी स्त्रियां ङचन्ताः प्रकीर्त्तिताः॥**

"अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । "शृणिरङ्कुशवाची च काशश्च तृणवाचकः" इति शकारभेदः ॥ १५ ॥ **ऊर्मिः** तरङ्गः प्रकाशः वेगः वस्त्रसङ्कोचरेखा पीडा उत्कण्ठा बुभुक्षादयः षट् च । "**ऊर्मिः** स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि" इति मेदिनी ॥ **गभस्तिः** किरणः सूर्यः स्वाहा च । "किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः" इत्यमरः । "**गभस्तिः** किरणे सूर्ये ना स्वाहायां तु योषिति" इति मेदिनी ॥ **अशनिः** मेघोत्पन्नं ज्योतिः वज्रं प्रस्तरवर्षी उल्काविशेषः विद्युच्च । "**शतकोटिः** स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः । "**अशनिः** स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि" इति मेदिनी ॥ **पार्ष्णिः** पादग्रन्थिः गुल्फस्याधोभागः पृष्ठश्च । "पुमान् **पार्ष्णिस्**तयोरधः" इत्यमरः । "**पार्ष्णिः** स्त्रीपुंसयोः पादमूले स्याद्धुजिनीकटौ" इति रन्तिदेवः । "**पार्ष्णिः** स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च" इति मेदिनी ॥ **इषुः** बाणः । "कलम्बमार्गणशराः पत्री रोप **इषुर्**द्वयोः" इत्यमरः ॥ **धिः** ज्ञानभेदः बुद्धिश्च । अत्र "धी"शब्दोऽपि । "धीः प्रज्ञा शेमुषी मतिः" इत्यमरः । "धिर्ज्ञानभेदे बुद्धौ च" इति मेदिनी ॥ **राशिः** धान्यादीनां पुञ्जः ज्योतिश्चक्रस्य द्वादशांशो मेषादिः व्यक्ताव्यक्तगणभेदश्च । "द्वौ राशी पुञ्जमेषादौ" इत्यमरः । "**राशिर्**मेषादिपुञ्जयोः" इति मेदिनी ॥ **वस्तिः** नाभेरधोभागः मूत्राधारस्थानं वासः वसनदशा च । "**वस्तिर्**नाभेरधो द्वयोः" इत्यमरः । "**वस्तिर्**द्वयोर्निरूहे नाभ्यधोभूम्नि दशासु च" इति मेदिनी ॥ **किष्कुः** द्वादशाङ्गुलपरिमाणं प्रकोष्ठदेशः हस्तपरिमाणं च । "**किष्कुर्**हस्ते वितस्तौ च" इत्यमरः । "**किष्कुर्**द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च" इति मेदिनी ॥ **कन्दुः** स्वेदनीपात्रम् । "**कन्दुर्**वा स्वेदनी स्त्रियाम्" इत्यमरः ॥ **रेणुः** परागः । "**रेणुः** स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः" इति मेदिनी ॥ **तनुः** देहः अल्पं विरलश्च । "**तनुः** काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति मेदिनी ॥ **ईशः** महादेवः शिवपत्नी च । "**ईशः** प्रभौ महादेवे" इति मेदिनी॥ "**ईशः** प्रभौ शङ्करे स्यादीशा लाङ्गलदण्डके" इति विश्वः॥ **बाहुः** भुजः। "द्वौ परौ द्वयोः। भुजबाहू" इत्यमरः॥ १६ ॥ **गण्डूषः** मुखपूरणयोग्यं जलं करिहस्तः प्रसृत्या प्रमितं जलं कराङ्गुलिश्च । "**गण्डूषो** मुखपूर्त्तौ स्याद्गजहस्तेऽङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात्" इति हैमः॥ "**गण्डूषो** मुखपूर्त्तीभपुष्करप्रसृतोन्मिते" इति मेदिनी ॥ **गर्जः** मेघनादः मत्तकरी च ॥ **जागरः** निद्राभावः कवचश्च । "जागर्या **जागरा** द्वयोः" इत्यमरः ॥ **भुजः** बाहुः करः त्रिकोणचतुष्कोणादिक्षेत्रस्थरेखाविशेषश्च । "अस्त्री द्वौ परौ द्वयोः । भुजबाहू" इत्यमरः । "**भुजा** द्वयोर्बाहौ करे" इति मेदिनी ॥ **कीलः** शङ्कुः शस्त्रम् अग्निशिखा कफोणी स्तम्भः लेशश्च । "शङ्कावपि द्वयोः **कीलः**" इत्यमरः । "**कीलो**ऽग्नितेजसि । कफोणिस्तम्भयोः शङ्कौ" इति हैमः । "**कीलो** लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु" इति मेदिनी ॥ **ज्वालः** अग्निशिखा दग्धान्नं दाहश्च । "वह्नेर्द्वयोर्ज्वालकीलौ" इत्यमरः ॥ **वर्त्तकः** पक्षिभेदः अश्वखुरश्च । "खुरेऽप्यश्वस्य **वर्त्तकः**" इत्यमरः । "**वर्तकस्**तु खुरेऽश्वस्य विहगे" इति मेदिनी ॥ **व्रीडा** लज्जा । "मन्दाक्षं ह्रीस्त्रपा **व्रीडा** लज्जा" इत्यमरः । तथा रभसकोषे स्त्रीपुँल्लिङ्गशब्दानां निर्देशे "गण्डूषगर्जभुजजागरहारकीलज्वालाझटारभसवर्त्तकगद्धशृङ्गाः । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समामयाश्च" इत्युक्तम् ॥ **उत्कण्ठः** इष्टलाभे कालासहनरूपम् औत्सुक्यम् । "**उत्कण्ठो**त्कलिके समे" इत्यमरः ॥ "चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि" इति शब्दार्णवः॥ **शटः** अम्बलः सिंहकेशरः जटा च । "**शटा** जटाकेशरयोः" इति मेदिनी॥ क्वचित् "**शठः**" "**सठः**" इति पाठौ च॥ **वराटकः** कपर्दः॥ **रभसः** वेगः हर्षः औत्सुक्यं पौर्वापर्याविचारश्च । "**रभसो** वेगहर्षयोः" इति मेदिनी। "**रभसो** हर्षवेगयोः" इति विश्वः॥ इमे शब्दाः स्त्रीत्वे स्त्रीलिङ्गभावे तु टावन्ताः टाप्प्रत्ययान्ता एवेति ज्ञेयाः । न तु ईबन्ता इत्यर्थः ॥ १७ ॥ **शल्कः** त्वक् भेकः शाणवृक्षः पक्षिभेदश्च । "छत्रादिकाष्ठिशरयोः **शल्कः** पशुवृक्षयोः" इति मेदिनी ॥ **वृश्चिकः** कीटभेदः शुक्रकीटः मेषादितः अष्टमो राशिः औषधिभेदः मदनवृक्षः कर्कटः गोमयकीटश्च । "**वृश्चिकः** शुक्रकीटः स्याद्

**स्त्रीक्लीबयोरुडुदामा छर्दिर्ज्योतिःसदोऽर्चिषः । सुखं लक्षं वणिज्यं च वडिशक्रोडपाटलम् १९॥**
**तारकं रसनं नीडमेते टाबन्तकाः स्त्रियाम् । ङ्यन्तास्तु नगरास्थानस्थलानि पाटलं पुरम् ॥**
**त्रिलिङ्ग्यां तु प्रतिसरस्फुलिङ्गनखरार्गलाः । कन्दरं शृङ्खलं नालं वल्लूरफलमुस्तकाः २१॥**

लिद्रुणौ तु वृश्चिके'' इत्यमरः । ''वृश्चिको द्रुण आलिः स्यात्'' इति बोपालितः । ''वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः'' इति मेदिनी ॥ कीटः कृमिभ्यः स्थूलं क्षुद्रजन्तुमात्रं मगधजातिश्च ॥ शारः कर्बुरवर्णः वायुश्च ।''शारो वायौ स तु त्रिषु । कर्बुरे'' इत्यमरः। ''शारः स्याच्छैवले वाच्यलिङ्गः पुंसि समीरणे''इति मेदिनी॥ तूणः बाणाधारः स्वनामाख्यातः इषुधिश्च । ''तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः'' इत्यमरः । ''तूणेषुधी उपासङ्गः'' इति रत्नकोषः ॥ घटः कलशः परिमाणभेदश्च । ''कलशस्तु त्रिषु द्वयोः । घटः कुटनिपावस्त्री'' इत्यमरः । ''घटः समाधिभेदेभशिरःकूटकुटेषु च'' इति मेदिनी ॥ कटः हस्तिगण्डस्थलं कटिपार्श्वः नडादिरचितमासनम् अतिशयः कालः तृणं शवः शवरथः ओषधिः श्मशानं च । ''कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे । शवे च गजगण्डे च'' इति मेदिनी ॥ शफरः मत्स्यभेदः ॥ वेतसः वृक्षभेदः । ''अथ वेतसः । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः'' इत्यमरः ॥ अमी इमे शब्दाः स्त्रियां स्त्रीलिङ्गे ङ्यन्ताः ङीष्प्रत्ययान्ताः प्रकीर्त्तिताः कथिताः । न टाप्प्रत्ययान्ता इत्यर्थः ॥ १८ ॥ इति **स्त्रीपुँल्लिङ्गसङ्ग्रहः** ॥ अथ स्त्रीनपुंसकलिङ्गसङ्ग्रहमाह-**स्त्रीत्यादिना** ॥ उडुः नक्षत्रं जलं च । ''नक्षत्रमृक्षं भं तारं तारकाऽप्युडु वा स्त्रियाम्'' इत्यमरः ॥ **दामा** दोहनकाले पशुबन्धनरज्जुः रज्जुमात्रं माला च । ''न पुंसि दाम सन्दानं पशुरज्जुस्तु दामनि'' इत्यमरः ॥ **छर्दिः** वमनरोगः ॥ **ज्योतिः** सूर्यः अग्निः मेथिकावृक्षः नेत्रकनीनिकामध्यस्थं दर्शनसाधनं पदार्थः नक्षत्रं च । ''ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु'' इत्यमरः ॥ **सदः** सभा । ''समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः'' इत्यमरः ॥ **अर्चिर्वह्न्यादिशिखा मयूखश्च''** ''ज्वालाभासौ न पुंस्यर्चिः'' इत्यमरः । ''अर्चिर्मयूखशिखयोर्न ना'' इति मेदिनी ॥ **सुखं** पुण्यजन्यो गुणभेदः । ''सुखं शर्मणि नाके च सुखा पुर्यां प्रचेसतः''इति मेदिनी ॥ **लक्षं** दशायुतसङ्ख्या । ''लक्षा न पुंसि सङ्ख्यायां क्लीबं व्याजशरव्ययोः'' इति मेदिनी ॥ **वणिज्यं** वणिज्यकर्म । ''वाणिज्यम्'' अप्यत्र ।''वाणिज्यं तु वणिज्या स्यात्'' इत्यमरः॥ **वडिशं** मत्स्यधारणार्थं वक्रलौहकयुक्तः पदार्थः ॥ **क्रोडम्** अश्वानामुरः भुजान्तरम् अङ्कं राक्षसः सूकरश्च । ''न ना क्रोडं भुजान्तरम्'' इत्यमरः । ''क्रोडः शनौ सूकरे ना न पुमानङ्करक्षसोः'' इति मेदिनी ॥ **पाटलं** स्वनामाख्यातो वृक्षः तत्पुष्पम् आशुधान्यं च । ''आशुर्व्रीहिः पाटलः स्यात्'' इत्यमरः । ''आशुर्व्रीहौ पाटलो ना श्वेतरक्तेऽन्यवान्'' इति रुद्रः । ''पाटला पाटलौ स्त्री स्यादस्य पुष्पे पुनर्न ना । आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्'' इति मेदिनी॥१९॥**तारकं** नक्षत्रम् ॥ **रसनं** जिह्वा ॥ **नीडं** स्थानं कुलायश्च । ''नीडं स्थानकुलाययोः'' इति मेदिनी ॥ एते शब्दाः स्त्रियां स्त्रीलिङ्गे टाबन्तकाः टाप्प्रत्ययान्ताः ॥ **नगरं** पुरम् ॥ **आस्थानं** विश्रामस्थानं सभा च ॥ **स्थलं** जलशून्यः अकृत्रिमः भूभागः ॥ **पाटलम्** आशुधान्यम् ॥ **पुरं** नगरम् ॥ इमे शब्दा अपि स्त्रीलिङ्गे ङ्यन्ताः भवन्ति॥२०॥ इति **स्त्रीनपुंसकलिङ्गसङ्ग्रहः**॥अथ त्रिलिंगानाह-**त्रिलिंग्यामित्यादिना** ॥ **प्रतिसरः** सैन्यपश्चाद्भागः हस्तसूत्रं च । ''ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्'' इत्यमरः । ''भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे । व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिंगकः'' इति मेदिनी ॥ **स्फुलिंगः** अग्निकणः । ''त्रिषु स्फुलिंगोऽग्निकणः'' इत्यमरः ॥ **नखरः** नखः।''पुनर्भवःकररुहो नखोऽस्त्री नखरोऽस्त्रियाम्''इत्यमरः।''नखरं पुंसि क्लीबे च नखनं त्रिषु''इति अमरमाला॥ **अर्गलः**कपाटमध्यस्थः रोधकः काष्ठादिदण्डः सप्तशतीस्तोत्रस्यादिपाठ्यः स्तोत्रविशेषः कल्लोलःकपाटःक्षुद्रार्गलश्च । ''तद्विष्कम्भोऽर्गलं न ना''इत्यमरः।''अर्गला त्रिषु कल्लोलेऽन्तर्दण्डातारयोर्न ना''इति मेदिनी ॥**कन्दरं** गृहाकारं गिरिनितम्बदेशःगुहा अंकुशःआर्द्रकं च।''दरी तु कन्दरो वा स्त्री देवखातबिले गुहा''इत्यमरः।''कन्दरस्त्वङ्कुशे पुंसि गुहायां तु नपुंसकम्''इति मेदिनी॥**शृंखलं** निगडः लौहमयं पादबन्धनं च।''पुँस्कट्यां शृङ्खलं त्रिषु''इत्यमरः। ''शृंखला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु''इति मेदिनी॥**नालं** काण्डः उत्पलादिदण्डः मृणालश्च । ''नाडी नालं

जृम्भश्च टाबन्ता एते स्त्रियामथ विभीतकः । हरीतकाढकतटकवाटाश्च गुणो वटः ॥ २२ ॥
मण्डलं शलभं भल्लातकं कलशकन्दलौ । मृणालामलकौ दाडिमश्च ङचन्ताः स्त्रियामिमे ॥ २३ ॥
करणे ल्युट् त्रिषु यथा "तस्य व्याख्यानः" इत्यदः ।
सूत्रकृद्भाष्यकृत् "कोऽसावनुमान" इतीच्छति ॥ २४ ॥

इति लिङ्गादिसङ्ग्रहवर्गः ॥५॥

---

च काण्डोऽस्य" इत्यमरः।"नलो न ना पद्मदण्डे नालो शाककदम्बके" इति मेदिनी॥वल्लूरः आतपादिना शुष्कमांसः सूकरमांसः वनक्षेत्रं वाहनम् ऊषरभूमिश्च ।"उत्तप्तं शुष्कमांसं स्यात् तद्वल्लूरं त्रिलिंगकम्" इत्यमरः।"वल्लुरः" इति ह्रस्वोकारः अप्यत्र।"वल्लुरं स्याद्वनक्षेत्रे गहनोषरयोरपि।वल्लूरा त्रिषु संशुष्कमांससूकरमांसयोः" इतिमेदिनी॥फलः अस्थिखण्डः नागकेशरः काष्ठादिपट्टकः वृक्षादीनां सस्यं फलकं कार्यं च।"फलं जातिफले सस्ये हेतूत्थे व्युष्टिलाभयोः। त्रिफलायां च कक्कोले प्रियंगौ तु फली मता" इति मेदिनी ॥ मुस्तकः स्थावरविषभेदः । "कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्" इत्यमरः॥२१॥जृम्भः मुखविकाशः जृम्भणं च क्वचित् "जम्भ" इति पाठः।"जृम्भा विकाशजृम्भणयोस्त्रिषु" इति मेदिनी॥एते शब्दाः। स्त्रियां टाप्प्रत्ययान्ताः भवन्ति न तु ङीबन्ता इत्यर्थः॥विभीतकः स्वनामाख्यातवृक्षः अक्षश्च।"त्रिलिंगस्तु विभीतकः" इत्यमरः॥हरीतकः स्वनामाख्यातः वृक्षः तत्फलं च।स्त्रियां हरीतकी।"हरीतकी हैमवती चेतकी श्रेयसी शिवा" इत्यमरः॥"कदाचित्कुपिता माता नोदरस्था हरीतकी" इति वैद्यकम्॥आढकः सर्वतो दशाङ्गुलमानं प्रस्थचतुष्टयपरिमितं धान्यमानपात्रं पुष्कलचतुष्टयमितं षट्पञ्चाशदधिकद्विशतमुष्टिपरिमाणं द्रोणस्य चतुर्थभागश्च।"आढकी तु तुवर्य्यां स्त्री परिमाणान्तरे त्रिषु" इति मेदिनी॥क्वचित् "आटकः" इति पाठः॥तटः नद्यादेस्तीरम्। "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इत्यमरः । "तटं नपुंसकं क्षेत्रे प्रतीरे तु तटं त्रिषु" इति मेदिनी॥कवाटः द्वाररोधकः काष्ठखंडः ।"कपाटी" अप्यत्र ।"कवाटश्च कपाटश्च त्रिषु स्यादरं न ना" इति वाचस्पतिः॥गुणः धनुषो मौर्वी रज्जुमात्रं ज्ञानविनयादयश्च।"मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः" इत्यमरः। "गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये।त्यागे शौर्यादि सत्त्वादि सन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि वट्यां च" इति मेदिनी॥वटः स्वनामाख्यातो वृक्षः शणनिर्मिततन्तुश्च।"न्यग्रोधो बहुपात्" इत्यमरः॥२२॥मण्डलं बिम्बं चक्राकारेण वेष्टनं द्वादशनृपचक्रं गोलं समूहश्च। "मण्डलं परिवेशश्च परिधिश्चापसूर्यकम्" इति भागुरिः । "मण्डलं परिधौ कोठे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे" इति मेदिनी॥शलभं कीटभेदः पतङ्गश्च । "समौ पतङ्गशलभौ" इत्यमरः ॥ भल्लातकं वृक्षभेदः । "भल्लातकी" अप्यत्र । "वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु" इत्यमरः ॥ कलशः घटः । "कलसः" इति दन्त्यसकारान्तोऽपि । "कलशस्तु त्रिषु द्वयोः घटः कुटनिपौ" इत्यमरः ॥ कन्दलः कपालः नवाङ्कुरः करध्वनिः अपवादः लतापुष्पं कनकं युद्धं कलापश्च । "कन्दलं त्रिषु कपालेऽप्युपरागे नराङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः" इति मेदिनी ॥ मृणालः पद्मादेर्नालस्थं सूत्रं वीरणमूलं च । "मृणाली" इत्यपि । "मृणालं बिसम्" इत्यमरः । "मृणालं नलदे क्लीबम्" इति विश्वमेदिन्यौ ॥ आमलकः वासकवृक्षः धात्री तिष्यफला धात्रीफलं च॥ दाडिमः दाडिम्बवृक्षः । अत्र "दालिमः डालिमः दाडिम्बः" इत्यपि पाठः । "समौ करकदाडिमौ" इत्यमरः । "दाडिम्बसारपिण्डीरस्वाद्वम्लशुकवल्लभाः" इति रभसः । "दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु" इति मेदिनी ॥ इमे शब्दाः स्त्रीलिङ्गे ङचन्ताः स्युः ॥ २३ ॥ करणे करणकारके । ल्युट् ल्युट्प्रत्ययान्तं पदम् । त्रिषु स्त्रीपुंनपुंसकेषु लिङ्गेषु । स्यादिति शेषः । यथा—तस्य व्याख्यान इति "तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः (४ । ३ । ६६ )" इति अदः पाणिनीयसूत्रमुदाहरणं भवति । सूत्रकृत् सूत्रकारकः पाणिनिः । भाष्यकृत् भाष्यकारकः पतञ्जलिश्च "कोऽसावनुमानः" "इति" "भूवादयो धातवः । १ । ३ । १" इति सूत्रे भाष्ये अनुमानशब्दं पुँल्लिङ्गं प्रायुङ्क्त ॥ २४ ॥

इति लिङ्गादिसङ्ग्रहवर्गः समाप्तः ॥ ५ ॥

---

दृष्टप्रयोगा ये शब्दाः प्रायस्त इह कीर्त्तिताः । अप्रयुक्तास्तूत्पलिन्यादिदृष्टा अप्युपेक्षिताः॥२५॥

इति सटीकत्रिकाण्डशेषकोषस्य तृतीयः काण्डः समाप्तः ॥३॥

## इति श्रीपुरुषोत्तमदेवविरचितस्त्रिकाण्डशेषाभिधानकोषः समाप्तः ॥

अनन्तरं शब्दप्रयोगनियमं दर्शयन्नाह । ये शब्दाः दृष्टप्रयोगाः शिशुपालवधादिषु महाकविकृतेषु, उत्तरीयाणां बौद्धधर्म्मग्रन्थेषु, वैदिकग्रन्थेषु च स्वचक्षुषा प्रयोगाः वीक्षिताः। ते शब्दाः प्रायः भूयिष्ठम् । इह अस्मिन् त्रिकाण्डशेषकोषे कीर्तिताः कथिताः। प्रकाशिता इत्यर्थः। ये शब्दाः अप्रयुक्ताः इह ऋषिप्रणीतेषु महाकाव्यादिषु, धर्म्मविषयेषु च अप्रयोगीकृताः । उत्पलिन्यादिषु प्राचीनकोषेषु । आदिपदात् अग्निपुराणादिषु पुराणेषु च दृष्टा वीक्षिता अपि ते शब्दाः । उपेक्षिताः अनपेक्षिताः औदासीन्यादकृता इत्यर्थः । मयेति शेषः । अत्र कोषे महाकाव्यादिषु आगताः शब्दा एव प्रायेण प्रयुक्ता इति भावः ॥ २५ ॥ इति श्रीदाधिमथकुदालमहामहोपाध्यायपण्डितशिवदत्ततनूजविष्णुशर्मकृतायां त्रिकाण्डशेषकोषव्याख्यायां नामचन्द्रिकाख्यायां तृतीयः काण्डः समाप्तः ॥ ३ ॥

# समाप्तश्चायं सटीकस्त्रिकाण्डशेषकोषः ।

शिवमस्तु ।



श्रीगणेशाय नमः ।

# अथ हारावली ।

—⊳○⊰⊱○⊲—

अथ श्लोकावधिः ।

भुजगपतिविमुक्तस्वच्छनिर्मोकवल्लीविलसितमनुकुर्वन्यस्य गङ्गाप्रवाहः ।
शिरसि सरसभास्वन्मालतीदामलक्ष्मीं लपयति हिमगौरः सोऽस्तु वः साध्यसिद्ध्यै॥ १॥
कल्पावसानसमये स्थितये कवीनां देहान्तरं किमपि या सृजति प्रसन्ना ।
यस्याः प्रसादपरमाणुरपि प्रतिष्ठामभ्येति कामपि नमामि सरस्वतीं ताम् ॥ २ ॥
निर्मत्सराः सुकृतिनः खलु ये विविच्य कर्णे गुणस्य कणमप्यवतंसयन्ति ।
येषां मनो न रमते परदोषवादे ते केचिदेव विरला भुवि संचरन्ति ॥ ३ ॥
मुक्तामयाऽतिमधुरा मसृणाऽवदातच्छायाऽधिरागतरलाऽमलसद्गुणश्रीः ।
साध्वी सतां भजतु कण्ठमसौ प्रियेव हारावली विरचिता पुरुषोत्तमेन ॥ ४ ॥
किं नैव सन्ति सुधियामभिधानकोशाः किन्तु प्रसिद्धविषयव्यवहारभाजः ।
गोष्ठीषु वादपरमोहफलासु केषां हारावली न विदधाति विदग्धिमानम् ॥ ५ ॥
एकं तमेव गणयन्ति परं विदग्धा वाचां विदग्धिमनि मज्जति यस्य लोकः ।
गोष्ठीषु यः परमशाब्दिकदुर्गमासु दुर्बोधशब्दगतसंशयमुच्छिनत्ति ॥ ६ ॥
आ व्याधशब्दतः श्लोकैर्धैरा तलिनात्ततः। शब्दाः पादैर्विबोद्धव्याः प्रागनेकार्थतस्ततः॥ ७ ॥
विषमनयनशङ्कू चन्द्रमौलिर्भगाली वृषभपतिगणेशौ रेरिहाणो वृषाङ्कः ।
त्रिपुरदहनशूलिस्थाणुखट्वाङ्गिहिण्डिप्रियतमाशितिकण्ठा भर्ग्यकल्माषकण्ठौ ॥१६॥८॥
शतधामा चतुष्पाणिःपृश्निगर्भो गदाग्रजः।गदी कौस्तुभवक्षाश्च पाञ्चजन्यधरोऽच्युतः८।
वैनतेयः पक्षिसिंहः शाल्मली हरिवाहनः । अमृताहरणस्तार्क्ष्यो नागाशनखगेश्वरौ८।१०
खगपतङ्गवियन्मणिभानवो हरिभगेननिदाघकराद्रयः ।
किरणमालिविरोचनहेलयो दिनमणिस्तरणिश्च दिनप्रणीः ॥ १५ ॥ ११ ॥
श्रुतश्रवोऽनुजः क्रोडो मन्दश्छायासुतः शनिः।सप्तार्चिर्नीलवसनःपाताङ्गिःक्रूरलोचनः९॥१२॥
दाक्षायणीपतिबलक्षगुपक्षजन्मतुङ्गीशरात्रिमणिदर्शविपत्सुधाङ्गाः ।
राजा समुद्रनवनीततमोनुदौ मा ग्लौरिन्दुरेणतिलको हरिरोहिणीशौ ॥ १६॥ १३ ॥
महामृगः पुष्करिदीर्घमारुतौ विलोमजिह्वो जलकाङ्क्षिसिन्धुरौ ।
द्विपायिसूर्पश्रुतिकुम्भिसामजा महामदः पेचकिपद्मिपीलवः ॥ १४॥ १४ ॥
दर्वीकरो विषधरः श्वसनाशनोऽहिश्चक्री फणाभरविषायुधदीर्घपृष्ठाः ।
कुम्भीनसद्विरसनौ समकोलदंष्ट्रिगोकर्णकुण्डलिलतारसना विषास्यः ॥ १६ ॥ १५ ॥
मयाऽस्योपकृतं पूर्वमयं चोपकरिष्याति । इति यः क्रियते संधिःप्रतीहारः स उच्यते१।१६

शिवस्य १६ । ८ । विष्णोः ८ । ९ । गरुडस्य ८ । १० । सूर्यस्य १५ । ११ । शनैश्चरस्य ९ । १२।
चन्द्रमसः १६ । १३ । गजस्य १४ । १४ । सर्पस्य १६ । १५ । प्रत्युपकारार्थं कृतसन्धेः १ । १६ ।

शेषमक्षरमादाय प्रतिश्लोकं क्रमेण यत् । अन्योऽन्यं पठ्यते श्लोकः प्रतिमालेति सा मता १॥१७
नभश्चरो वायुदारुर्वनदो गगनध्वजः । व्योमधूमो जलमसिः खतमालः पयोधरः ॥८॥१८ ॥
हर्षाद्युत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् २॥१९॥
सुरते कर्णदेशेषु यच्च देशीयभाषया । दम्पत्योर्जल्पितं मन्दं मन्मनं तद्विदुर्बुधाः ॥१॥ २० ॥
यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः ॥२॥२१॥
नक्तं निर्गत्य यत्किंचिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥२॥ २२ ॥
वृद्धसूत्रकमित्याहुरिन्द्रतूलं मनीषिणः । ग्रीष्महासं वंशकफं वाततूलं मरुद्ध्वजम्॥६॥ २३ ॥
दशेन्धनो गृहमणिः स्नेहाशः कज्जलध्वजः।जटाज्वालो दशाकर्षी कथितो बहुदस्वभिः६॥२४॥
गोमयच्छत्रिकामाहुर्दिलीरं च शिलीन्ध्रकम् । उर्व्यङ्गं च वशारोहं गोलासमपरे विदुः६॥२५॥
हिमवान्१हेमकूटश्च२निषधो३मेरु४ रेव च । चैत्रः५कर्णी ६ च शृङ्गी७च सप्तैते वर्षपर्वताः२६

इति श्लोकावधिः ।

व्याधो मृगवधाजीवो निषादः पुल्कसः प्लवः५।बालवायजमिच्छन्ति वैदूर्यमणिमुत्तमाः२॥२७
कालग्रन्थिः समाः संवत्सरमानो युगांसकः५।मासो वर्षांशकःश्रामो वर्षाङ्गःस्यादहर्गणः५॥२८
मदयोगविधानं तु व्यस्तारं १ करिणां विदुः । पृष्ठवंशस्य यन्मांसं तल्पनं १ तत्प्रचक्षते २९
कर्णवेधनिका प्रोक्ता नालिके१ति विषाणिनाम् । प्रवेष्ट१मन्तःस्वेदानां दन्तमांसं विदुर्बुधाः३०
कुमारभृत्या १ गर्भिण्याः परिचर्याऽभिधीयते । नवोढा वस्त्रमानन्दपट२ मिच्छन्ति सूरयः३१
कर्णीसुतो मूलदेवो मूलभद्रः कुलाङ्कुरः । ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् १॥३२॥
नित्यकर्मसमाचारनिष्ठुरत्वे कडुङ्कता १ ।वैरानुबन्धो धीमद्भिरुपनाहो२ऽभिधीयते ॥ ३३॥
स्यात्पालिका कुन्तलिका २ दध्यादिच्छेदनी तु या ।
वैशाखो दधिचारः स्यात्तक्राटः करघर्षणः ॥ ४ ॥ ३४ ॥
स्यादाषाढभवो भौमो नवार्चिर्गगनोल्मुकः४।पञ्चार्चिश्च श्रविष्ठाजो ज्ञ एकाङ्गः प्रहर्षणः ५॥३५
दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीभवः ४ ।
काव्यो दैत्यपुरोधाः स्यात्षोडशार्चिर्मघाभवः ॥ ४ ॥ ३६ ॥
उपप्लवोऽकचः केतुराश्लेषाभव आहिकः ५। ज्योतीरथो ग्रहाधारो ध्रुव उत्तानपादजः४ ॥३७॥
स्वर्भानुं ग्रहकल्लोलं विदुरभ्रपिशाचकम् ३।वनीयको याचनको वसुकीटो मुखम्पचः ॥४॥३८॥
जायमानविषाणाग्रे कटाहो १ महिषीशिशौ । छेदो हस्तेन सस्यानां कटभङ्ग१ उदाहृतः॥३९॥

अन्त्याक्षरक्रमेण श्लोकपाठस्य १ । १७ । मेघस्य ८ । १८ । हर्षे वस्त्राद्याकर्षणस्य २ । १९ । दम्पत्योः शनैः कथनस्य १ । २० । इष्टार्थं देवेभ्यो दीयमानद्रव्यस्य २ । २१ । आकाशवाण्याः २ । २२ । आकाशे उड्डीयमानसूत्रस्य ६ । २३ । प्रदीपस्य ६ । २४ । गोमयच्छात्रिकायाः ६ ।२५ । सप्तवर्षपर्वतानां प्रत्येकमेकैकम्।२६। व्याधस्य ५वैदूर्यस्य २।२७ । संवत्सरस्य५ मासस्य ५ ।२८।करिणां मदयोगविधानस्य १ गजपृष्ठमांसस्य१ ।२९। गजकर्णवेधिन्याः १ गजदन्तमांसस्य १ । ३० । गर्भिणीपरिचर्यायाः १ नवोढावस्त्रस्य २ । ३१ । ग्रामप्रधानदेवतायाः ४ ज्येष्ठमासस्य १ । ३२ । नित्यकर्माशक्ततायाः १ वैरानुबन्धस्य २ । ३३ । दध्यादिच्छेदन्याः २ । दधिमन्थनदण्डस्य ४ । ३४ । मङ्गलस्य ४ बुधस्य ५ । ३५ । बृहस्पतेः ४ शुक्रस्य ४ । ३६ । केतोः ५ ध्रुवस्य ४ । ३७ । राहोः ३ याचकस्य ४ । ३८ । जातशृङ्गस्य महिषीशिशोः १ हस्तेन सस्यच्छेदस्य १।३९।

जलत्रा जङ्गमकुटी कावारी मूर्द्धकर्परी ४ । उष्णवारणमुत्कूटश्चक्राङ्गं च पुटोटजम् ॥४॥४०॥
मुनीनां च चिताकुट्यां पर्णोटजसहोटजौ२।कारोत्तरश्च वीनाही प्रहिरन्धुर्जलाम्बिका५॥४१॥
जलकूपी जलाष्ठीली तलकं पुष्करिण्यपि४।आसन्नास्तमयः काश्चिदुपधूपित१ इष्यते ॥४२॥
तत्क्षणादित्यमुक्तां तु वदन्त्यङ्गारिणीं१दिशम्।अङ्गारितं१पलाशानां कलिकानिर्गमो भवेत्४३॥
गान्धारं रक्तचूर्णं तु सिन्दूरं रक्तबालुकम्४।कुसृत्या विभवान्वेषी पार्श्विकः सन्धिजीवकः२।४४
अधश्चरो भवेच्चौरः कुसुमालः कुजम्भलः २। प्रोक्तः करिकुसुम्भस्तु नागकेसरचूर्णके२ ॥४५॥
बर्बरं बर्बरीकं च बर्बरी३त्यपि चेष्यते । अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकम् १ ॥४६ ॥
यमिनां यद्व्रतं गोप्यं तत्त्वञ्जनतरं विदुः१।स्यादाचामनकः प्रोण्ठः कटकोलः पतद्ग्रहः४॥४७
मेला मन्दा मसिमणिर्मसिधानी मसिप्रसूः ५।बालोपरीतं तु विदुः पञ्चावटमुरस्कटम् ३॥४८॥
नारीणां मण्डलीनृत्यं बुधा हल्लीषकं१विदुः।मारीचो याजकगजो राजहस्ती मदोत्कटः ४॥४९
अलङ्कारसुवर्णं यत्तच्छृङ्गीकनकं १ मतम् । रतिलक्षं निधुवनं संयोजन ३ मिति स्मृतम् ॥५०॥
जीमूतकुटकुट्टीरकुट्टाराः कन्दराकरः ४ । उद्देशो १ गण्डकूपस्तु पर्वतस्याभिधीयते ॥ ५१ ॥
वासिता धेनुका चैव वशा च करिणी४ मता।ब्रह्माग्रभूः क्रतुपशुः सिंहविक्रान्तवाजिनौ४॥५२

समुद्रगा निर्झरिणी तलोदा जवालिनी शैवलिनी तरङ्गिणी ६ ।
विपाठकादम्बकपत्रवाहाः पत्री खगो वीरतरोऽस्त्रकण्टकः ॥ ७ ॥ ५३ ॥

वर्णदूतः स्वस्तिमुखो लेखो वाचिकहारकः४।लेखो निबध्यते येन तत्र काचनकाऽभिधा१॥५४
क्षाराढ्यं मणिमन्थं च विदुः सिन्धूपलं बुधाः३। पिशितं पललं मांसं क्रव्यमामिषमुद्धसम्६॥५५
पारावारमहाकच्छौ महीप्राचीरदारदौ४ । जिह्वादरः कीकशास्यश्चञ्चुमत्तरुशायिनौ ॥४॥५६॥
इन्द्रक्रीडासरः प्राज्ञैर्नन्दीसर १ इति स्मृतम् । धूमोर्णापतिरुद्दिष्टो यमो महिषवाहनः३॥५७॥

पयोघनो मेघकफो घनोपलो मेघास्थिबीजोदकतोयडिम्भाः ६ ।
शम्पाऽचिराभा चपला छटाभा ह्रादिन्यधीरा घनवल्लिका च ॥ ७ ॥ ५८ ॥

पादालिन्दी तरण्डा नौस्तरणिस्तारणिस्तरिः६।किलाटः शोषितक्षीरपिण्डः२सूरिभिरिष्यते ५९
कालायसमयस्तीक्ष्णं गिरिसारं च शस्तकम्५। हय्यङ्गवीनं रसजं मन्थजं च कलम्बुटम्४॥६०
एकशफाङ्घ्रिकं बन्धमाहुर्दामाञ्चलं बुधाः२। वेत्ता स्त्रीपुंसयोश्चिह्नं सामुद्रिक १ उदाहृतः ६१
तिन्तिलीकाऽस्थिभिर्द्यूतक्रीडायां चुञ्चुलि२र्भवेत्।वक्रा ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम्१

हाला कामालिका मण्डा धीरा स्यान्मदनी च माध्वी च ६ ।
आहुश्चषकं तु पानपात्रं पारीमप्यनुतर्षणं कवीन्द्राः ४ ॥ ६३ ॥

जलत्रायाः ४ छत्रस्य ४ ।४०। मुनिचिताकुट्याः २ कूपस्य ५ । ४१ । पुष्करिण्याः ४आसन्नास्तमयस्य १।४२। तत्क्षणादित्यमुक्तदिशः १ पलाशकालिकायाः १ । ४३ । सिन्दूरस्य ४ पिशुनस्य २ । ४४ । दिवाचौरस्य २ नागकेसरचूर्णस्य २ । ४५ । बर्बरस्य ३ अभावात् स्त्रीपरित्यागस्य १ । ४६ । यतीनां गोप्यमैथुनस्य १ पतद्ग्रहस्य ४ । ४७ । मसिधान्याः ५ बालकपरिधानवस्त्रस्य ३ । ४८ । स्त्रीनृत्यस्य १ राजहस्तिनः ४ । ४९ । अलंकारसुवर्णस्य १ मैथुनस्य ३ । ५० । पर्वतस्य ४ पर्वतोच्चस्थलस्य १ । ५१ । हस्तिन्याः ४ अश्वस्य ४।५२। नद्याः ६ शरस्य ७ । ५३ । लिखनपत्रस्य ४ पत्रीबन्धनस्य १ । ५४ । सैन्धवलवणस्य ३ मांसस्य ६ । ५५ । समुद्रस्य ४ पक्षिणः ४ । ५६ । इन्द्रक्रीडासरसः १ यमस्य ३ । ५७ । मेघप्रस्तरस्य ६ विद्युतः ७ । ५८ । नौकायाः ६ शोषितक्षीरपिण्डस्य २।५९। लोहस्य ५ नवनीतस्य ४ । ६० । एकखुरयुक्तचरणबन्धनस्य २ स्त्रीपुरुषचिह्नवेत्तुः१ ।६१। अस्थिभिर्द्यूतक्रीडायाः२ ललाटस्थभस्मरेखायाः१।६२। सुरायाः६ पानपात्रस्य ४ ।६३।

कुसुम्भः करकश्चैत्यमुखः कमण्डलुः४ स्मृतः । असहायो नर्तकस्तु तालावचर१ इष्यते६४॥
कथितः कौमुदीवृक्षो दीपवृक्षः शिखातरुः३। कोजागरे तथा सद्भिः कौमुदीचार २ इष्यते६५
समुद्रगृहमित्याहुर्जलयन्त्रनिकेतनम्२। प्रेतादिभिर्गृहीतो यः स आविष्टो१ऽयमन्वहिः ॥ ६६ ॥
हिममिन्द्राग्निधूमश्च खबाष्पो रजनीजलम्४। ये शिवायतनोत्सृष्टास्ते सन्ध्याबलयो१वृषाः६७॥
विषाक्तास्त्रहतस्याहुः पशोर्मांसं तु गृञ्जनम्१।धूमिका धूममहिषी हिमझण्टिः कुहेलिका४ ६८॥
पोताच्छादनमाहुरस्तस्तुवरकमथवस्त्रकुट्टिमं कवयः३।तन्त्राविमुक्तं वासो निष्प्रवणि निष्प्रवाणि२च
महाघोषं क्रयारोहं हट्टं पण्याजिरं ४ विदुः । बहुमानुषसंकीर्णं निर्घटं च कराङ्गणम्॥२॥७०॥
शालभञ्जी दारुगर्भा कुरण्टी दारुपुत्रिका४।कादम्बिनी नवो मेघः काली स्यात्कालिका३ऽपि च॥
क्रोशध्वनिः क्रोशतालो ढक्का विजयमर्दलः४।स्यात्प्रतिपत्तिः पटहो लम्पापटह३इत्यपि ॥७२॥
कुकूलं कायवलनं तनुत्रं दंशनं४विदुः । शिरस्त्रं शीर्षरक्षं च शीर्षण्यं शीर्षकं४च तत् ॥ ७३ ॥
स्याज्जालिका लोहमयी जालप्रायाऽङ्गरक्षिणी२।पन्नद्धी पादविरजाः कोशी पादरथी४भवेत्७४
रुचकं लवणं क्षारं तीक्ष्णं जलरसं३विदुः।ज्योतिर्बीजं च खद्योतं ध्वान्तोन्मेषं तमोमणिः४॥७५
जलशूकरजलाजिह्वौजलकण्टकवार्भटौ तथा नक्रे५।जलनकुलजलाविडालौ नीराखुजलप्लवावुद्रे५
शिशुमारो जलकपिश्चपलाङ्गोऽसिपुच्छकः४।ग्राहो जलकिराटश्च नक्रराजो जलाण्टकः४॥७७॥
मृतकान्तकश्चभीरुर्वृकधूर्तशयालुवश्वकाभरुजः७शालामृगोऽस्थिभक्षोग्राममृगोमण्डलःकपिलः५
उल्कामुखी शृगाली या दीप्तजिह्वे१ति सा मता।स्कन्धवाहस्तु शङ्कश्च शृङ्गी गौरक्षधूर्तिलः५॥
हेरम्बः कासरश्चैव रक्ताक्षः सैरिभ४स्तथा । रोमशो बहुरोमा स्यादुरणश्च पृथूदरः ४ ॥ ८०॥
इडिकस्तु वालवाह्यो वनच्छागोऽतिरोमशः४।वरणो धूम्रशूकः स्यादुष्ट्रः शृङ्खलक४स्तथा८१
चक्रमुखः सूचिरोमा वराहः स्थूलनासिकः४।कण्ठीरवस्तु पारीन्द्रः केसरी गजमाचलः४॥८२॥
नेत्रपिण्डो वृषाहारो मेनादः कुन्दमः४स्मृतः।गन्धाखुर्गन्धनकुलश्चुञ्चुः पुंवृष४उच्यते ॥८३॥
द्रोणोऽरिष्टो नालिजङ्घ आत्मघोषस्तु मौद्गलिः५।गोभण्डीरः पङ्ककीरो हापुत्री राजभट्टिका४
गङ्गाचिल्ली तु देवट्टी विश्वका जलकुक्कुटी४।विट्सारिका तु कुणपी गोराटी गोकिराटिका४॥८५
मृगेन्द्रचटको घातिपक्षी ग्राहकमारकौ४।कुलालं कुक्कुटं प्राहुः कुक्कुभं कुहकस्वरम् ४॥८६॥
कर्कराक्षः कलाटीनः खञ्जलेखस्तु खञ्जनः४।प्रासादकुक्कुटो झल्लकण्ठो गृहकपोतकः३॥८७॥
ध्वाङ्क्षपुष्टः कलकण्ठो मधुकण्ठः कुहूमुखः४।झम्पाशी मत्स्यरङ्कः स्याज्जलमद्गुर्मणीचकः४॥८८
कलविङ्कश्चित्रपृष्ठो गृहनीडो वृषायणः४।वरण्डा चित्रपादा च चित्रनेत्रा च सारिका४॥८९

कमण्डलोः ४ असहायनर्तकस्य १ । ६४ । दीपवृक्षस्य ३ कोजागरायाः २ । ६५ । जलयन्त्रार्थगृहस्य २ प्रेतादिगृहीतस्य १ । ६६ । हिमस्य ४ शिवालयोत्सृष्टवृषस्य १ । ६७ । विषाक्तास्त्राहतपशुमांसस्य १ कुहेलिकायाः ४ । ६८ । पोताच्छादनस्य ३ तन्त्राविमुक्तवाससः २ । ६९ । हट्टस्य ४ बहुनरसंकीर्णहट्टस्य २ ।७०। काष्ठपुत्तलिकायाः ४ नूतनमेघजालस्य ३ । ७१ । ढक्कायाः ४ पटहस्य ३ । ७२ । वस्त्राङ्गरक्षिण्याः ४ शिरस्त्राणस्य ४ । ७३ । लौहवर्मणः २ उपानहः ४ । ७४ । क्षारलवणस्य ३ खद्योतस्य ४ । ७५ । नक्रस्य ५ उद्रस्य ५ । ७६ । शिशुमारस्य ४ ग्राहस्य ४ । ७७ । शृगालस्य ७ शुनः ५ ।७८। उल्कामुख्याः शृगाल्याः१ शकटादिवाहकवृषभस्य ५ ।७९। महिषस्य ४ मेषस्य ४ ।८०। बृहद्वानरस्य ४ उष्ट्रस्य ४ । ८१ । वराहस्य ४ सिंहस्य ४ । ८२ । विडालस्य ४ छुछुन्दर्याः ४ । ८३ । दग्धकाकस्य ५ हापुत्र्याख्यपक्षिणः ४ । ८४ । गङ्गाचिल्ल्याः ४ विट्सारिकायाः ४ । ८५ । श्येनस्य ४ वनकुक्कुटस्य ४ । ८६। खञ्जरीटस्य ४ कपोतस्य ३ । ८७ । कोकिलस्य ४ मत्स्यरङ्कस्य ४ । ८८ । कलविङ्कस्य ४ सारिकायाः४ ।८९

मयूरचटको दक्षः कृकवाकुर्निशाकरः४। शतपत्रः सितापाङ्गः प्रचलाकी च चन्द्रकी ४॥९०॥
किसलयमपि तरुरागं विद्रुलतायावकं प्रवालं च ४।
कण्टकसंज्ञास्तरुनखसिताग्रदलसूचिराङ्किलद्रुमराः ६ ॥ ९१ ॥
द्रोणीदलः सूचिपुष्पो जम्बूलः क्रकचच्छन्दः४।मण्डा तिष्यफला धात्री वल्या पञ्चरसा शिवा६
सहस्रवीर्या विरजा भार्गवी मण्डली रुहा५।महर्षिणी निशाह्वा च लसा गन्धपलाशिका ४॥९३
मृदुपुष्पः शूकतरुः शिरीषो विषनाशनः४।वराहकाली कथितः सूर्यावर्तश्स्तु शाब्दिकैः॥९४॥
वज्रवल्ल्यस्थिसंहारो हस्तिशुण्डी वनालिका४।वनतिक्तस्त्रियां ग्रीष्मा तिरीटः पक्षसुन्दरः३॥९५
मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः४। वृत्तपुष्पः प्रावृषेण्यो हारिद्रस्तु हलिप्रियः ४॥९६॥
एला त्वचिसुगन्धा च पुटिका चर्मसंभवा४।कूष्माण्डकः पुष्यफलो घनवासश्च वेष्टकः४॥९७॥
वेषणः कासमर्दश्च पत्रोपस्कर३इत्यपि।ओको दशाली प्राचीरमोघोलिखहालिका॥५॥९८॥
कल्यवर्त्तः प्रातराशःप्रातर्भोजनमिष्यते३। शृगालिका च डिम्बं च डमरं विद्रवो४ऽपि च९९॥
स्कन्धफलः स्रुतुङ्गश्च नारिकेलः पुटोदकः४।गुडदारुर्मधुतृणमसिपत्रो महारसः ४ ॥ १०० ॥
राजालुको महाकन्दो मूलको हस्तिदन्तकः४। क्षुद्ररसा तिक्तगुञ्जा सरघा विद्धपर्कटी४ ॥१॥
क्षुद्रपत्रा च चाङ्गेरी क्षुद्राम्ला चाम्ललोणिका४। प्राचीनामलकं रक्तं बदरामलकं३तथा॥२॥
पिष्टसौरभमेकाङ्गं श्रीखण्डं मालयं४विदुः। मृगनाभिर्मृगमदो गन्धशेखर ३ मित्यपि ॥ ३ ॥
सिताभ्रं तरुसारं च वेरकं रसकेसरम्४। कालेयं वंशकं जोङ्गं कालीयं वरचन्दनम् ५ ॥ ४ ॥
तृणसारा मृत्युफला रम्भा च कदली४भवेत्।ऊर्ध्वासितः परारुः स्यात्तथा राजपटोलकः३॥५॥
कुङ्कुमं पीतकावेरं घुसृणं कुसुमात्मकम् ४। अरको जलकेशश्च कावारं शैवलं ४ विदुः॥६॥
उन्मत्तकाहलापुष्पौ बृहत्पाटलिघाण्टिकौ ४। किंशुकः करकः पर्णी लाक्षावृक्षः सुभीरवः ५॥७॥
अमण्डपञ्चाङ्गुलवर्धमाना गन्धर्वहस्तास्त्रिपुटीफल ५ श्च।
रेणुः सतीलस्तृणकेतुमृत्युबीजौ किलाटी च ततः सुपर्वा ६ ॥ ८ ॥
कचमालो मरुद्वाहो धूमो मम्भः शिखिध्वजः५। शाखानगर १माहुस्तद्यदभ्यर्णं पुरान्तरम्॥९॥
आहुर्जलकरङ्कं च जलजं सूचिकामुखम्३।उपजिह्विकोत्पादिका च वटिरुद्देहिका दिवी५॥१०
शुल्बमौदुम्बरं रक्तं म्लेच्छास्यं ताम्रकं५विदुः।दुर्नामा दीर्घकोषी स्यात्पङ्कशुक्तिःसितालिका४
आकाशमूली कुतृणं कुम्भिका जलवल्कलम्४।शम्बूको जलडिम्बःस्याद् दुश्चरःपङ्कमण्डुकः४
आटीलकं१तर्णकानां स्थलीषु क्रीडनं मतम्। यष्टिः शब्दवती धीरैः खेखीरक१ इति स्मृता॥
लेखात्रयाङ्कितं भालं त्रिपताकं१विदुर्बुधाः। अर्धचन्द्रं कर्करेटं विदुरङ्गुलितोरणम्३॥१४॥

ग्रामकुक्कुटस्य ४ मयूरस्य ४। ९०। नूतनपल्लवस्य ४ वृक्षकण्टकस्य ६। ९१। केतकस्य ४ धात्र्याः ६। ९२। दूर्वायाः ५ गन्धपलाशिकायाः ४। ९३। शिरीषस्य ४ सूर्यावर्तस्य २। ९४। अस्थिसंहारस्य ४ लोध्रस्य ३। ९५ ॥ मधूकवृक्षस्य ४ कदम्बस्य ४। ९६। एलायाः ४ कूष्माण्डस्य ४। ९७। कासमर्दस्य ३ भित्तेः ५। ९८। प्रातर्भोजनस्य ३ भीत्या पलायनस्य ४। ९९। नारिकेलस्य ४ इक्षोः ४।१००। मूलस्य ४ करञ्जस्य ४। १। आम्ललोणिकायाः ४ प्राचीनामलकस्य ३। २। श्रीखण्डस्य ४ कस्तूर्याः ३। ३। कर्पूरस्य ४ “ अगुरु ” इति ख्यातस्य ५। ४। कदल्याः ४ पटोलस्य ३। ५। कुङ्कुमस्य ४ शैवलस्य ४। ६। धुस्तूरस्य ४ पलाशस्य ५। ७। एरण्डस्य ५ वंशस्य ६। ८। धूमस्य ५ नगरान्तिकपुरस्य १। ९। शङ्खस्य ३ उपजिह्विकायाः ५। १०। ताम्रस्य ५ पङ्कशुक्तेः ४। ११। कुम्भिकायाः ४ शम्बूकस्य ४। १२। तर्णकक्रीडनस्य १ शब्दवत्या यष्ट्याः १।१३॥ लेखात्रयाङ्कितभालस्य १ गले हस्ताधानस्य ३।१४।

